| अ० प० | विषयाः |
|---|---|
| १४०—१४५ | साभ्रमतीहिरण्यासंगममाहात्म्यवर्णनम् । श्लो० १६ । |
| १४१—१४५ | मधुरादित्यमाहात्म्यवर्णनम् । श्लो० ४५ । |
| १४२—१४६ | कपितीर्थमाहात्म्यवर्णनम् । श्लो० १३ । |
| १४३—१४७ | सप्तधारतीर्थमाहात्म्यवर्णनम् । श्लो० २६ । |
| १४४—१४७ | ब्रह्मवल्लीतीर्थवृषतीर्थखण्डहृद्गोहृदमाहात्म्यवर्णनम् । श्लो० ३० । |
| १४५—१४८ | साभ्रमतीहस्तिमतीसंगमेश्वरतीर्थमाहात्म्यवर्णनम्, तत्र सोमेश्वरमाहात्म्यकथनं च । श्लो० १६ । |
| १४६—१४८ | रुद्रमहालयतीर्थमाहात्म्यवर्णनम् । श्लो० ८ । |
| १४७—१४८ | खड्गतीर्थखड्गधारेश्वरमाहात्म्यवर्णनम् । श्लो० ७ । |
| १४८—१४८ | मालार्कतीर्थमाहात्म्यवर्णनम् । श्लो० ९ । |
| १४९—१४८ | चन्दनेश्वरमाहात्म्यवर्णनम् । श्लो० ११ । |
| १५०—१४९ | जाम्बवनतीर्थमाहात्म्यवर्णनम् । श्लो० १४ । |
| १५१—१४९ | इन्द्रग्रामतीर्थधवलेश्वरतीर्थमाहात्म्यवर्णनम् । श्लो० १०१ । |
| १५२—१५१ | बालापेन्द्रतीर्थमाहात्म्यवर्णनम् । श्लो० ४५ । |
| १५३—१५१ | दुर्धर्षेश्वरतीर्थमाहात्म्यवर्णनम् । श्लो० २३ । |
| १५४—१५२ | खड्गधारेश्वरतीर्थमाहात्म्यवर्णनम् । श्लो० ७२ । |
| १५५—१५३ | दुग्धेश्वरतीर्थमाहात्म्यवर्णनम् । श्लो० । ४० |
| १५६—१५४ | चन्द्रभागानदीवर्तिचन्द्रेश्वरमाहात्म्यवर्णनम् । श्लो० २५ । |
| १५७—१५४ | पिप्पलादतीर्थमाहात्म्यवर्णनम् । श्लो० । ११ । |
| १५८—१५५ | पिचुमन्दार्कतीर्थमाहात्म्यवर्णनम् । श्लो० १४ । |
| १५९—१५५ | सिद्धक्षेत्रकोटराक्षीतीर्थमाहात्म्यवर्णनम् । श्लो० १३ । |
| १६०—१५५ | वामनतीर्थराजमाहात्म्यवर्णनम् । श्लो० ५ । |
| १६१—१५५ | सोमतीर्थमाहात्म्यवर्णनम् । श्लो० १७ । |
| १६२—१५५ | कापोतिकतीर्थमाहात्म्यवर्णनम् । श्लो० १८ । |
| १६३—१५६ | गोतीर्थमाहात्म्यवर्णनम् । श्लो० ५ । |

| अ० प० | विषयाः |
|---|---|
| १६४-१५६ | कश्यपहृदमाहात्म्यवर्णनम् । श्लो० ९ । |
| १६५-१५६ | भूतेश्वरतीर्थघटेश्वरतीर्थवैद्यनाथतीर्थविजयीतीर्थमाहात्म्यवर्णनम् । श्लो० १० । |
| १६६-१५६ | पाण्डुरार्यातीर्थमाहात्म्यवर्णनम् । श्लो० ८ । |
| १६७-१५६ | चण्डेशतीर्थगाणपत्यतीर्थमाहात्म्यवर्णनम् । श्लो० ८ । |
| १६८-१५७ | वार्त्रघ्नीनदीमाहात्म्यवृत्तान्तवर्णनम् । श्लो० ७१ । |
| १६९-१५८ | वाराहतीर्थमाहात्म्यवर्णनम् । श्लो० ११ । |
| १७०-१५८ | साभ्रमतीसंगमतीर्थमाहात्म्यवर्णनम् । श्लो० ५ । |
| १७१-१५८ | संगमस्थंसत्तीर्थमाहात्म्यवर्णनम् । श्लो० ४ । |
| १७२-१५८ | नीलकण्ठतीर्थमाहात्म्यवर्णनम् । श्लो० ४ । |
| १७३-१५८ | दुर्गासाभ्रमतीसमुद्रसंगमतीर्थमाहात्म्यवर्णनम् । श्लो० ६ । |
| १७४-१५९ | श्रीनृसिंहव्रतनृसिंहतीर्थमाहात्म्यवर्णनम् । श्लो० ९८ । |
| १७५-१६० | भगवद्गीताप्रथमाध्यायमाहात्म्यवर्णनम्, तत्र विष्णुलक्ष्मीसंवादे सुशर्मवृत्तान्तवर्णनम् । श्लो० ५४ । |
| १७६-१६१ | गीताद्वितीयाध्यायमाहात्म्यम्, तत्र देवशर्मवृत्तान्तवर्णनम् । श्लो० ६२ । |
| १७७-१६३ | गीतातृतीयाध्यायमाहात्म्यवर्णने जडब्राह्मणवृत्तान्तवर्णनम् । श्लो० ६३ । |
| १७८-१६४ | गीताचतुर्थाध्यायमाहात्म्यवर्णने वाराणसीस्थभरतकृतावलम्बनतो बदर्योः कन्यात्वप्राप्तिवृत्तान्तवर्णनम् । श्लो० ३८ । |
| १७९-१६५ | गीतापञ्चमाध्यायमाहात्म्यवर्णने पुरुकुत्सपुरस्थपिंगलब्राह्मणतत्पत्नीवृत्तान्तवर्णनम् । श्लो० २४ । |
| १८०-१६५ | गीताषष्ठाध्यायमाहात्म्यवर्णने गोदावरीतीरवर्तिप्रतिष्ठानपुरस्थज्ञानश्रुतिराजरैक्यमहार्षवृत्तान्तवर्णनम् । श्लो० १०५ । |
| १८१-१६७ | गीतासप्तमाध्यायमाहात्म्यवर्णने पाटलिपुत्रस्थशंकुकर्णब्राह्मणवृत्तान्तवर्णनम् । श्लो० ३४ । |
| १८२-१६८ | गीताष्टमाध्यायमाहात्म्यवर्णने आमर्दकपुरस्थभावशर्मब्राह्मणवृत्तान्तवर्णनम् । श्लो० ३२ । |

| अ० प० | विषयाः |
|---|---|
| १८३–१६८ | गीतानवमाध्यायमाहात्म्यवर्णने माहिष्मतीपुरीस्थमाधवब्राह्मणवृत्तान्तवर्णनम्। श्लो० ६०। |
| १८४–१६९ | गीतादशमाध्यायमाहात्म्यवर्णने काशीपुरीस्थधीरधीविप्रवृत्तान्तवर्णनम्। श्लो० ९९। |
| १८५–१७१ | गीतैकादशाध्यायमाहात्म्यवर्णने मेघकरनगरस्थसुनन्दब्राह्मणवृत्तान्तवर्णनम्। श्लो० ११५। |
| १८६–१७३ | गीताद्वादशाध्यायमाहात्म्यवर्णने कोल्हापुरस्थसिद्धसमाधिवृत्तान्तवर्णनम्। श्लो० ६२। |
| १८७–१७४ | गीतात्रयोदशाध्यायमाहात्म्यवर्णने तुङ्गभद्रानदीतीरवर्तिहरिपुरस्थहरिदीक्षितब्राह्मणपत्न्या दुराचाराया वृत्तान्तवर्णनम्। श्लो० ६३। |
| १८८–१७६ | गीताचतुर्दशाध्यायमाहात्म्यवर्णने शशशुनीवृत्तान्तवर्णनम्। श्लो० ४५। |
| १८९–१७६ | गीतापञ्चदशाध्यायमाहात्म्यवर्णने गौडदेशीयनरसिंहराजस्य तत्सैनिकस्य सरभभेरुण्डस्य च वृत्तान्तवर्णनम्। श्लो० ४८। |
| १९०–१७७ | गीताषोडशाध्यायमाहात्म्यवर्णने गुर्जरमण्डलान्तर्गतसौराष्ट्रिकपुरस्थखड्गबाहुराजवृत्तान्तवर्णनम्। श्लो० ३२। |
| १९१–१७८ | गीतासप्तदशाध्यायमाहात्म्यवर्णने खड्गबाहुनृपसुतभृत्यस्य दुःशासनस्य वृत्तान्तवर्णनम्। श्लो० २७। |
| १९२–१७८ | गीताष्टादशाध्यायमाहात्म्यवर्णने इन्द्रवृत्तान्तवर्णनम्। श्लो० ६३। |
| १९३–१८० | श्रीमद्भागवतमाहात्म्यवर्णनम्, तत्र सूतशौनकसंवादे नारदसनत्कुमारसंवादः, नारदेन भक्तिज्ञानवैराग्यवृत्तान्तकथनम्, तत्र कलिदोषेण ज्ञानवैराग्ययोर्वार्द्धक्यम्, भक्त्याश्च वृन्दावनप्रभावेण यौवनम्, भक्तिनारदसमागमे भक्त्या नारदाग्रे स्वदुःखवृत्तान्तनिवेदनम्। श्लो० ८४। |
| १९४–१८१ | नारदेन भक्तिं सान्त्वयित्वा तद्दुःखनिवारणार्थमुपायं चिन्तयित्वा नारदस्य सनकादिसमीपं प्रत्यागमनम्, सनकादिभिर्ज्ञानवैराग्ययोर्बलप्राप्तये भागवतालापकरणोपदेशकरणम्, तत्र भागवतस्य श्रैष्ठ्यवर्णनम्। श्लो० ७५। |
| १९५–१८२ | कुमाराणामुपदेशान्नारदस्य गङ्गाद्वारसमीपस्थकामदापुरे भृग्वादिभिः सह गमनम्, कुमारैर्भागवतमाहात्म्यवर्णनम्, भागवतसप्ताहपठनमाहात्म्यवर्णनम्, भगवतोद्धवाय भागवतोपदेशकरणम्, नारदाद्यैर्भागवतसप्ताहकरणम्, तत्र भक्तेरागमनम्, कुमारैर्भक्तेः स्थानदानम्। श्लो० ७८। |
| १९६–१८४ | भागवतमाहात्म्यवर्णने गोकर्णवृत्तान्तवर्णनम्, तत्र तुङ्गभद्रानदीतीरवर्तिकोहलपुरस्थस्यात्मदेवब्राह्मणस्य पुत्राप्राप्तिखिन्नतया वनं गतस्य सिद्धेन सह संमागमः, सिद्धेन तस्मै पुत्रप्राप्त्यर्थं फलदानम्, आत्मदेवेन धुन्धुलीनाम्न्यै स्वपत्न्यै फलसमर्पणम्, धुन्धुल्या प्रसूतिदुःखभीतया पतिं वञ्चयित्वा गुर्विणीवेषं विधाय अङ्गणस्थाया गोः फलदानम्, स्वभगिन्यां प्रसुतायां तस्याः पुत्रमादाय स्वस्याः प्रसूतिप्रसिद्धीकरणम्, तस्य पुत्रस्य धुन्धुकारिनामकरणम्, मासत्रयानन्तरं धेनोः सकाशाद्गोकर्णपुत्रप्रसूतिः, धुन्धुकारिणा पितृपीडनम्, गोकर्णपुत्रेणात्मदेवस्य सान्त्वनम्, गोकर्णोपदेशादात्मदेवस्य वनं गत्वा सत्सङ्गेन मुक्तिप्राप्तिः। श्लो० ८७। |
| १९७–१८६ | धुन्धुकारिपीडिताया धुन्धुल्याः कूपे पतित्वा मरणम्, गोकर्णस्य तां निर्हृत्य तीर्थयात्रार्थं गमनम्, धुन्धुकारिणो वेश्याभिर्धनलोभेन वधकरणम्, तस्य पैशाच्यप्राप्तिश्च, कदाचित्तीर्थयात्रां विधाय गृहं प्रत्यागतेन गोकर्णेन स्वभ्रातुः पैशाच्यावस्थानिरीक्षणम्, तदुपरि गोकर्णेन तीर्थजलप्रक्षेपात्तस्य वागुत्पत्तौ पिशाचेनात्मवृत्तान्तवर्णनम्, धुन्धुकारिणो मुक्त्युपायार्थं गोकर्णेन ब्राह्मणविज्ञापनम्, ब्राह्मणस्तन्मुक्त्युपायचिन्तनाय सूर्यस्तुतिकरणम्, सूर्येण द्विजान्प्रति धुन्धुकारिणो विमुक्तये भागवतसप्ताहाज्ञाकरणम्, सूर्याज्ञया गोकर्णद्वारा भागवतसप्ताहे संपूर्णे धुन्धुकारिणो मोक्षप्राप्तिः, भागवतसप्ताहश्रवणायागतानामन्येषां द्विजानां विष्णुसारूप्यमुक्तिप्राप्तिपुरःसरं गोलोकप्राप्तिवर्णनम्। श्लो० ११६। |
| १९८–१८८ | सप्ताहपठनश्रवणविधिवर्णनम्, नारदसनत्कुमारादिसंवादे प्रचलति सत्यकस्मात्तत्र शुकागमनम्, शुकागमनोत्तरं विष्णुशङ्करादीनामागमनम्, प्रह्लादादिकृतनृत्यगीतादिसमारम्भः, तत्र भक्तिज्ञानवैराग्याणां नवरूपप्राप्तिपुरःसरं नर्तनम्, |

| अ० प० | विषयाः |
|---|---|
| | सप्ताहयज्ञेन प्रसन्नेन भगवता वरप्रदानम्, शौनकस्य भागवतस्य निर्माणत आरभ्य सप्ताहप्रवृत्तिकालविषयकशङ्कायां निर्माणकालावधिसप्ताहप्रवृत्तिकालंकथनम्, नैमिषारण्ये शौनकमहासत्रे तीर्थयात्रां पर्यटतो बलरामस्यागमनम्, बलरामेणोच्चासनस्थस्य सूतस्याविचार्य वधकरणम्, मुनीनां वचनमाकर्ण्य बलरामेण सूतपुत्रस्योग्रश्रवसः शास्त्रकथनविषयकसूचनम्, बलरामेण मुनीनां सुखाय बल्वलासुरस्य वधकरणम्, रोमहर्षणपुत्रेणोग्रश्रवसा सूतेनावशिष्टपुराणकथनम्, व्यासेन सप्तदशपुराणानि विरच्य्याप्यतुष्यद्धृदयेन नारदोपदेशाद्भागवतपुराणनिर्माणम्, भागवतमाहात्म्यवर्णनम् । श्लो० १२२ । |
| १९९—१९० | कालिन्दीमाहात्म्यवर्णने नारदपर्वतयोः शिबिराजस्य संवादे नारदेनेन्द्रकृतयज्ञवृत्तान्तवर्णनम् । श्लो० ४६ । |
| २००—१९१ | इन्द्रयागसमाप्तिवर्णनपूर्वकं शिवशर्मब्राह्मणगृहे इन्द्रजन्मवर्णनम्, तस्य विष्णुनामकरणम्, तस्य विष्णुशर्मणः पित्रा सहेन्द्रप्रस्थमागत्य तत्र पूर्वजन्मनि कृतस्य यागस्य स्मरणम्, पित्रे सर्वपूर्ववृत्तान्तं निवेद्य तत्रत्यतीर्थदर्शनम्, इन्द्रवाक्याच्छिवशर्मणा निगमोद्बोधकतीर्थे स्नानार्थमुद्योगकरणम्, तत्र भिल्लसिंहयोर्मुक्तिदर्शनम्, इन्द्रप्रस्थक्षेत्रमाहात्म्यम् । श्लो० ११७ । |
| २०१—१९३ | शिवशर्मणो निगमोद्बोधकतीर्थे स्नानमात्रेण जातिस्मरत्वप्राप्तिः, शिवशर्मणाऽऽत्मनः पूर्वजन्मवृत्तान्तवर्णनम्, तत्र शरभवैश्यस्य गृहे देवलर्षिगमनम्, देवलेन शरभं प्रति पुत्रप्राप्त्युपायकथनम् । श्लो० १०४ । |
| २०२—१९५ | दिलीपसुदक्षिणाभ्यां पुत्रप्राप्त्युपायजिज्ञासया वसिष्ठाश्रमं प्रति गमनम्, वसिष्ठेन तस्मै गोसेवाज्ञाकरणम् । श्लो० ५८ । |
| २०३—१९६ | दिलीपेन गोसेवाकरणम्, तत्कृतां सेवां गवा मायया सिंहमुत्पाद्य परीक्ष्य तस्मै पुत्रप्राप्तिकरवरप्रदानवर्णनम् । श्लो० ६९ । |
| २०४—१९८ | शरभस्य चण्डिकाराधनम्, चण्डिकावचनाच्छरभस्येन्द्रप्रस्थं प्रत्यागत्य निगमोद्बोधकतीर्थे स्नानदानादिना पुत्रप्राप्तिः, वार्द्धक्ये शरभस्येन्द्रप्रस्थं प्रति गमनम्, तत्र तस्य ज्वरप्राप्तौ केनचित्पान्थेन शिबिकामानाय्य तस्यामारुह्य तेनैव सह स्वगृहं प्रत्यागमने मध्येमार्गं केनचिद्राक्षसेन सह समागमः, तेन राक्षसेन तदीयवाहभक्षणम्, शरभसमीपवर्तिनिगमोद्बोधकतीर्थजलप्राशनेन तस्य राक्षसस्य पूर्वजन्मवृत्तान्तस्मरणम्, शरभराक्षसयोः संवादः, वाहानां पथिकस्य च कुबेरलोकावाप्तिः, राक्षसेन शरभं पृष्ठमारोप्येन्द्रप्रस्थं प्रति प्रत्यावृत्त्यागमनम्, इन्द्रप्रस्थे शरभं प्रति पुत्रस्यागमनम्, तत्र तीर्थे शरभवैश्यस्य मरणाद्वैकुण्ठलोकावाप्तिः, पुत्रस्य च रक्षसा सहेन्द्रप्रस्थे स्थितिकरणम् । श्लो० १४४ । |
| २०५—२०० | इन्द्रप्रस्थे निगमोद्बोधकतीर्थपङ्कनिमग्नाया गोरुद्धरणं कुर्वतो राक्षसस्याम्बुहस्तिना जलमध्ये नयनान्मृत्युप्राप्त्यनन्तरं मुक्तिः, शरभपुत्रस्य तत्र तीर्थे वासवर्णनम्, दुर्वासःशापाच्छरभपुत्रस्य शिवशर्मत्वप्राप्तिः शिवशर्मणो निगमोद्बोधकतीर्थे देहत्यागान्मुक्तिप्राप्तिः । श्लो० ५१ । |
| २०६—२०१ | इन्द्रप्रस्थस्थद्वारकामाहात्म्यवर्णनम्, तत्र काम्पिल्यनगरवासिपुष्पेषुब्राह्मणचरित्रम्, तद्रूपमुग्धपौरस्त्रीणां विषभक्षणात्पैशाच्यप्राप्त्यनन्तरं राक्षसीत्वप्राप्तिः । श्लो० ६३ । |
| २०७—२०२ | तासामुद्धारवर्णनप्रसङ्गेन विमलविप्रवृत्तान्तवर्णनम्, विमलस्येन्द्रप्रस्थस्थनिगमोद्बोधकतीर्थस्नानात्पुत्रवरप्राप्तिः, तत्तीर्थादाश्रमं जिगमिषोर्मध्येमार्गं मित्रप्राप्तिः । श्लो० ६८ । |
| २०८—२०४ | विमलस्य तेन मित्रेण सह पुनरिन्द्रप्रस्थस्थद्वारकां प्रति गत्वा स्नानेन विष्णुभक्तिप्राप्तिवर्णनम्, मार्गे व्रजतो विमलस्य कमण्डलुगतजलपानाद्राक्षसीनां मुक्तिवर्णनम् । श्लो० ६९ । |
| २०९—२०५ | इन्द्रप्रस्थस्थकोशलामाहात्म्यवर्णने मुकुन्दद्विजवृत्तान्तवर्णनम्, तत्र मुकुन्दस्य नापितचौरेण वधे कृते वेदायनस्य गुरोरागमनम्, वेदायनेन तन्मातुः शोकापनोदनायात्मस्वरूपवर्णनम् । श्लो० ५९ । |
| २१०—२०६ | मुकुन्दस्य कोशलातीर्थेऽस्थिपतनाद्विमानमारुह्य मार्गप्रसुप्तयोर्वेदायनगुरुकनिष्ठभ्रात्रोः समीपं प्रत्यागमनम्, गुरुप्रश्ने सति मुकुन्देन स्वानुभूतयमयातनावर्णनम्, कोशलातीर्थेऽस्थिपतनकारणवर्णनम् । श्लो० ७० । |

| अ० प० | विषयाः |
| --- | --- |
| २११—२०७ | चण्डकनामकचौरनाम्पितस्य ब्राह्मणवधाद्राजाज्ञया शिरश्छेदोत्तरं सर्पत्वप्राप्तिः, मातृपितृस्थिपेटकं गृहीत्वा गच्छतः कस्यचिद्ब्राह्मणस्य सर्पत्राणदेशस्थितौ सर्पेणास्थिपेटके प्रवेशकरणम्, ब्राह्मणेन कोशलायामस्थिविसर्जने कृते सति तत्साहचर्येण सर्पस्यापि विसर्जनम्, कोशलाप्रभावेण सर्पस्य मोक्षावाप्तिः। श्लो० ५०। |
| २१२—२०८ | नारायणाश्रमगामिबटूनां तत्रैव वासः, कस्यचिद्बटोर्नारायणाश्रमं गच्छतो नारायणेन विप्रवेषं धृत्वा निवर्तनम्, तस्य विष्णुवचनात्कोशलातीर्थं परावृत्त्यागमनम्, तत्र तनुत्यजां तेषां भगवत्प्रसादान्मुक्तिप्राप्तिवर्णनम्। श्लो० ५५। |
| २१३—२०९ | मधुवनस्थविश्रान्तितीर्थमाहात्म्यवर्णनम्, तत्र किरातनगरस्थकुशलब्राह्मणपत्नीवृत्तान्तवर्णनम्, तत्र तस्या दुश्चरित्रेण गोधात्वप्राप्तिः, तत्पुत्रस्य तदुद्धरणार्थं पितुराज्ञाग्रहणम्। श्लो० ८२। |
| २१४—२११ | पितृवाक्यात्पुत्रेण मातरमुद्दिश्य श्राद्धकरणम्, तेन तस्य मातुः पितामहादीनां च मुक्तिप्राप्तिः, तस्य पितुर्विष्णुलोकगमनम्। श्लो० १११। |
| २१५—२१३ | तस्य मुनिपुत्रस्य स्वैरिण्या जन्मग्रहणकारणवर्णनम्, तत्र चन्द्रकृतबृहस्पतिभार्याहरणवृत्तान्तवर्णनम्, तत्र बुधेन तस्य कुण्डत्वप्राप्तिरूपशापदानम्। श्लो० ५८। |
| २१६—२१४ | मधुवनस्थबदरिकाश्रममाहात्म्यवर्णनम्, तत्र मगधदेशस्थदेवदासब्राह्मणचरित्रवर्णनम्, तत्र कलिङ्गराजवृत्तान्तवर्णनम्। श्लो० १०१। |
| २१७—२१६ | इन्द्रप्रस्थान्तर्गतहरिद्वारमाहात्म्यम्, तत्र कालिङ्गश्वपचवृत्तान्तवर्णनम्। श्लो० ४९। |
| २१८—२१७ | इन्द्रप्रस्थस्थपुष्करमाहात्म्यवर्णनम्, तत्र पुण्डरीकवृत्तान्तवर्णनम्, तद्भ्रातुर्भरतस्य पुष्करसेवया विमानावाप्तिवर्णनम्। श्लो० ५४। |
| २१९—२१८ | भरतपुण्डरीकयोः संवादे भरतेनात्मपुण्यं वर्णयित्वा स्वर्गं प्रति गमनम्, पुण्डरीकस्य पुष्करसेवनप्रभावेण तद्गृहे विष्णोः स्थितिः, पुण्डरीकस्य मुक्तिप्राप्तिवर्णनम्। श्लो० ५२। |
| २२०—२१९ | इन्द्रप्रस्थस्थप्रयागतीर्थमाहात्म्यवर्णने नर्मदातीरवर्त्तिमाहिष्मतीस्थमोहिनीवेश्यावृत्तान्तवर्णनम्, तस्याश्च मरणावसरे प्रयागजलपानाद् द्रविडदेशराजस्य वीरवर्मणो भार्यात्वप्राप्तिः। श्लो० ५४। |
| २२१—२२० | सखीगृहस्थितपुस्तकनिरीक्षणात्तस्याः पूर्वजन्मस्मृतौ भर्त्रा सहेन्द्रप्रस्थस्थप्रयागतीर्थगमनम्, तत्र वीरवर्मतत्पत्नीभ्यां हरिहरस्तोत्रकरणम्, तत्प्रभावात्तयोर्वैकुण्ठावाप्तिवर्णनम्। श्लो० ५३। |
| २२२—२२१ | इन्द्रप्रस्थस्थकाशीमाहात्म्यवर्णनम्, तत्रत्यशिंशपातरुस्थितकाकसर्पयोर्वृत्तान्तवर्णनम्, इन्द्रप्रस्थस्थगोकर्णतीर्थमाहात्म्यवर्णने कर्कटभिल्लभार्याया जरानाम्न्याश्चरित्रकथनम्, इन्द्रप्रस्थस्थशिवकाञ्चीमाहात्म्यवर्णने हेरम्बनामकब्राह्मणवृत्तान्तवर्णनम् नारदस्य शिबिं प्रति शक्रप्रस्थमाहात्म्यमुक्त्वा स्वर्गे गमनम् इन्द्रप्रस्थमाहात्म्यश्रवणफलम्, युधिष्ठिरेणेन्द्रप्रस्थं गत्वा तत्र राजसूययज्ञकरणम्, भीमकुण्डमाहात्म्यकथनम्। श्लो० ९०। |
| २२३—२२३ | नारायणमहामन्त्ररत्नोपदेशवर्णनम् श्लो० ८०। |
| २२४-२२४ | शिवपार्वतीसंवादे भगवद्भक्तिमाहात्म्ये सुदर्शनादिमाहात्म्यवर्णनपूर्वकमङ्कनमाहात्म्यकथनम्। श्लो० ८१। |
| २२५-२२५ | ऊर्ध्वपुण्ड्रमाहात्म्यविधिवर्णनम्। श्लो० ५९। |
| २२६-२२६ | मन्त्रतदर्थोपदेशविधिमाहात्म्यवर्णनम्। श्लो ९३। |
| २२७-२२८ | सविस्तरं मन्त्रार्थोपदेशवर्णने त्रिपाद्विभूतिवर्णनम्। श्लो० ८१। |
| २२८-२३० | सविस्तरं मन्त्रार्थोपदेशवर्णने परमव्योमादिवर्णनम्। श्लो० १०७। |
| २२९-२३२ | देवसर्गवर्णने विष्णुव्यूहभेदवर्णनम्। श्लो० १८६। |
| २३०-२३५ | विष्णोर्मत्स्यावतारकथावर्णनम्। श्लो० ३३। |
| २३१-२३५ | कूर्मावतारकथावर्णनम्, तत्र दुर्वाससः शापादिन्द्रलक्ष्मीविनाशे विष्णुना देवान्प्रति समुद्रमथनायाज्ञाकरणम्। श्लो० ५१। |
| २३२-२३६ | विष्णोराज्ञया देवदानवैर्मथने समारब्धे सति समुद्रान्महाविषप्रभृतिलक्ष्म्यन्तरत्नोत्पत्तिवर्णनम्। श्लो० ७५। |
| २३३-२३८ | देवादिभिरेकादश्युपवासकरणवर्णनम्। श्लो० २२। |
| २३४-२३८ | द्वादशीमाहात्म्यवर्णनम्। श्लो० ४३। |

| अ० प० | विषयाः |
| --- | --- |
| २३५—२३९ | पाषण्डिलक्षणवर्णनम्, शिवस्य कपालभस्मास्थिधारणकारणवर्णनम्। श्लो० ६९। |
| २३६—२४० | तामसादिशास्त्रपरिगणनम्। श्लो० २७। |
| २३७—२४१ | वराहावतारकथावर्णनम्। श्लो० ३१। |
| २३८—२४७ | नृसिंहप्रादुर्भावकथावर्णनम्। श्लो० १५७। |
| २३९—२४४ | वामनप्रादुर्भाववर्णनम्, तत्र बलिदैत्यपराभूतदेवप्रार्थनया भगवतोऽदितिगर्भप्रवेशः। श्लो० ३१। |
| २४०—२४५ | वामनेन बलेर्भूग्रहणादिवृत्तान्तवर्णनम्। श्लो० ६१। |
| २४१—२४६ | जामदग्न्यावतारकथावर्णनम्। श्लो० ८२। |
| २४२—२४७ | श्रीरामावताररामायणकथावर्णनम्, तत्र रामस्य जन्मप्रभृतिरावणवधोत्तरकालिकायोध्याप्रवेशान्तकथावर्णनम्। श्लो० ३७०। |
| २४३—२५४ | रामस्य राज्याभिषेकादिविश्वरूपदर्शनान्तचरित्रवर्णनम्। श्लो० ५२। |
| २४४—२५५ | रामस्य राज्योपभोगपूर्वकसंपूर्णचरित्रवर्णनम्। श्लो० १००। |
| २४५—२५७ | श्रीकृष्णावतारकथावर्णनम्, तत्र श्रीकृष्णस्य जन्मादिकंसवधान्तकथावर्णनम्। श्लो० ३९२। |
| २४६—२६४ | कृष्णस्योपनयनादिवृत्तवर्णनपूर्वकं मुचुकुन्दमोक्षणान्तकथावर्णनम्। श्लो० ७१। |
| २४७—२६५ | द्वारकाप्रवेशरुक्मिण्यादिहरणवैदर्भसेनाविध्वंसनवर्णनम्। श्लो० ४३। |
| २४८—२६६ | रुक्मिणीविवाहवर्णनम्। श्लो० १९। |
| २४९—२६६ | सत्यापरिणयनवृत्तान्तवर्णनम्। श्लो० ११०। |
| २५०—२६८ | अनिरुद्धविवाहप्रसङ्गेन बाणासुरसङ्ग्रामवर्णनम्। श्लो० ६६। |
| २५१—२७० | पौण्ड्रकवासुदेवनिग्रहणम्, तत्सुतस्य दण्डपाणेः कृष्णमुद्दिश्य कृत्यापचारे सति कृष्णप्रेरितचक्रदर्शनेन कृत्यया परावृत्त्य वाराणसीनामकदण्डपाणिपुरीदहनम्। श्लो० ४। |
| २५२—२७१ | जरासन्धं भीमद्वारा निहत्य तेन बन्दीकृतानां पार्थिवानां मोचनम्, इन्द्रप्रस्थे शिशुपालवधः, दन्तवक्त्रस्य युद्धे वधानन्तरं कृष्णस्य नन्दगोकुले सर्वेषां संगमः, पश्चाद्द्वारकायां प्रवेशः, सुदामसत्कारकरणम्, भारतयुद्धवृत्तान्तः, ब्राह्मणबालकसंजीवनम्, कृष्णसन्तानवर्णनम्, मौसलवृत्तान्तवर्णनम्, कृष्णस्य स्वधामगमनम्, कृष्णपत्नीनां चौरैर्हरणम् कृष्णमाहात्म्यवर्णनम्। श्लो० २२। |
| २५३—२७३ | विष्णुपूजाविधानवैष्णवाचारवर्णनम्। श्लो० १८०। |
| २५४—२७६ | रामनाममाहात्म्यवर्णनेऽष्टोत्तरशतनामस्तोत्रवर्णनम्। श्लो० ७२। |
| २५५—२७८ | श्रेष्ठदेवपरीक्षासमये भृगुशापेन महादेवस्य योनिलिङ्गस्वरूपप्राप्तिवर्णनम्, ब्रह्मणोऽपूज्यत्वप्राप्तिवर्णनं च, सर्वदेवेषु विष्णोः श्रैष्ठ्यवर्णनम्, भृगुकृतभगवत्स्तुतिः, पद्मपुराणपठनफलवर्णनम्। श्लो० १३३। |

इति पाद्मपुराणान्तर्गतोत्तरखण्डस्थविषयानुक्रमणिका संपूर्णा।


## अथ क्रियायोगसारखण्डम्।


| अ० प० | विषयाः |
| --- | --- |
| १—१ | सूतशौनकसंवादे कलिकालिकलोकोद्दिधीर्षया प्रश्ने जैमिनिव्याससंवादवर्णनम्, व्यासेन जैमिनये क्रियायोगसारवर्णनोपक्रमवर्णनम्। श्लो० ३८। |
| २—१० | भगवद्भक्तिवर्णने सृष्ट्यादिवर्णनम्, ब्रह्मकृतविष्णुस्तुतिः, भगवता ब्रह्मणे वैष्णवलक्षणकथनम्। श्लो० ११०। |
| ३—३ | गङ्गाद्वारमाहात्म्यवर्णने मनोभद्रराजपुत्रयोर्वृत्तान्तवर्णनम्, तत्र गृध्रेणागत्य तयोः पूर्वजन्मवृत्तान्तवर्णनम्। श्लो० ९८। |
| ४—५ | प्रयागमाहात्म्ये प्रणिधिवैश्यवृत्तान्तवर्णनम्, तत्र धनप्रशंसा, प्रणिधिवैश्यभार्याप्राप्तिकामस्य कस्यचिच्छ्वपचस्य प्रयागे स्नानात्प्रणिधिवैश्यरूपावाप्तिः, विष्णोराज्ञया पद्मावत्या एकाकारपतिद्वयेन सह वैकुण्ठगमनम्, तत्र पद्मावतीविष्णुदूतसंवादे बृहद्ध्वजराक्षसभीमकेशराजपत्न्योर्वृत्तान्तः। श्लो० ११४। |
| ५—७ | विक्रमराजपुत्रमाधववृत्तान्तवर्णनम्, माधवस्य मृगयार्थं वने गतस्य चन्द्रकलादर्शनम्, चन्द्रकलया प्लक्षद्वीपस्थगुणाकरराजपुत्रीसुलोचनवृत्तान्तवर्णनम्, चन्द्रकलावचनान्माधवस्य श्रेष्ठहयमारुह्य जलधिमुल्लङ्घ्य प्लक्षद्वीपं गत्वा तत्र गन्धिनीगृहेऽवस्थितिकरणम्, मालापुष्पेषु निजकार्यं विलिख्य गन्धिनीद्वारा सुलोचनायै साङ्गुलीयमालाप्रेषणम्, सुलोचनया राजपुत्रवृत्तान्तं पठित्वा स्वप्राप्तिसङ्केतं |

| अ० प० | विषयाः |
| --- | --- |
| | विलिख्य प्रेषणम्, स्नानव्याजेन मन्धिनीगृहमागत्य तत्र माधवदर्शनम्, सुलोचनाया यक्षप्रदक्षिणसङ्केतकाले माधवस्य निद्राप्राप्तिः, प्रचेष्टेन तयोः सङ्केतं विज्ञाय तस्मिन्काले तस्याः सुलोचनाया हरणम्, सुलोचनया प्रचेष्टं प्रति छलेन वञ्चनम्, प्रचेष्टस्य तत्करकङ्कणं गृहीत्वा स्वगृहं प्रति गमनम्, सुलोचनाया गङ्गासागरसंगमे गमनम्, तत्र सुषेणराजसभायां पुरुषवेषं विधाय सुलोचनाया गमनम्, तत्र वीरवरनाम्ना प्रसिद्धिकरणपूर्वकं तस्य सेवाकरणवर्णनम्। श्लो० २०४। |
| ६—११ | तत्र वीरवरेण भीमनादनामकगण्डकनाशनम्, गण्डकस्य गङ्गासागरतीर्थे देहपाताद्दिव्यरूपावाप्तिः, वीरवरपृष्टेन गण्डकेन स्वकीयपूर्वजन्मवृत्तान्तं वर्णयित्वा स्वर्गगमनम्, राज्ञा सुषेणेन वीरवरेण गण्डको हत इति श्रुत्वा तस्मै जयन्तीनामस्वकन्यादानम्, जयन्त्या सह वीरवरवेषधारिण्याः सुलोचनायास्तपःकरणम्, गङ्गायां तनुत्यागोद्यतस्य प्रचेष्टस्य वीरवराज्ञया कारायां स्थापनम्, गुणाकरेण राज्ञा कन्याहरणं दृष्ट्वा तत्कृते शोककरणम्, विद्याधरस्य सुलोचनाप्राप्तये गङ्गाब्धिसंगमे तनुत्यागोद्यतस्य वीरवरेण निवारणम्, तस्य तत्रैव स्थितिः, माधवस्य निद्रोत्थितस्य शोकपूर्वकं तदर्थं गङ्गासागरसंगमे तनुत्यागोद्यतस्य वीरवरेण सह संभाषणम्, पश्चात्तं तनुत्यागान्निवर्त्यान्तःपुरं गत्वा स्त्रीवेषं विधायात्मनो दर्शनम्, माधवेन तया सह गान्धर्वविवाहकरणम्, तेन सह सुलोचनायाः सुषेणसभां प्रति गमनम्, सुषेणेन माधवाय विवाहविधिना जयन्तीकन्यादानम्, तत्र माधवस्य किंचित्कालं स्थितिः, प्रचेष्टस्य दोषं विचार्य निरसनम्, माधवस्य सांसारिकभोगाननुपभुज्य विरागोत्पत्तौ विश्वकर्मतः शिलामयीं विष्णुमूर्तिं निर्माय तद्भक्तिकरणम्, माधवकृतविष्णुस्तुतिवर्णनम्, माधवस्य मोक्षप्राप्तिवर्णनम्। श्लो० २०४। |
| ७—१५ | गङ्गामाहात्म्यवर्णने धर्मस्वब्राह्मणवृत्तान्तवर्णनम्, तत्र धर्मस्वेन गङ्गाजलं गृहीत्वा पथि गच्छता बलीवर्दविषाणविदारितस्य कालकल्पस्य मरणं दृष्ट्वा तस्योपरि गङ्गाजलसेचनम्, अग्रे गत्वा यमदूतनिरीक्षणम्, तैः सह धर्मस्वस्य संवादः, यमदूतैर्निजवृत्तान्तनिवेदनम्, विष्णुदूतसंवादवर्णनपूर्वकगङ्गामाहात्म्यवर्णनम्, धर्मस्वेन गङ्गास्तोत्रकरणम्, गङ्गयाविर्भूय धर्मस्वाय वरप्रदानम्, धर्मस्वस्य मोक्षप्राप्तिः। श्लो० १२८। |
| ८—१७ | गङ्गामाहात्म्यवर्णने शक्रप्रियायाः पद्मगन्धाया वृत्तान्तवर्णनम्, गङ्गायामस्थिपतनात्तस्याः शक्रप्रियत्वकथनम्। श्लो० ११०। |
| ९—१९ | गङ्गामाहात्म्यवर्णने यात्राविधिवर्णनम्, तत्र सत्यधर्मराजविजयाराज्ञ्योर्वृत्तान्तवर्णनम्, तयोर्भक्तत्वप्राप्तौ सर्पेण भक्षणेऽपि गङ्गानामग्रहणमात्रेण मुक्तिवर्णनम्। श्लो० १६१। |
| १०—२२ | विष्णुपूजामाहात्म्यवर्णनम्, तत्र पूजाविधानवर्णनम्, तत्रार्यावर्तस्थसुवर्णभूपचरित्रवर्णनम्, वेश्यादत्तं भूपतच्चम्पकपुष्पं निरीक्ष्येश्वरार्पणबुद्ध्या विमुञ्चतो मरणसमये विष्णुदूतैः सुवर्णस्य वैकुण्ठं प्रति नयनम्। श्लो० ७८। |
| ११—२३ | विष्णुपूजाविधिवर्णनम्। श्लो० १७०। |
| १२—२६ | फाल्गुनादिवैशाखान्तमासेषु श्रीकृष्णपूजाविधिमाहात्म्यवर्णनम्, अश्वत्थमाहात्म्यवर्णने धनञ्जयनामब्राह्मणवृत्तान्तवर्णनम्। श्लो० १२०। |
| १३—२९ | ज्येष्ठादिकार्तिकान्तमासेषु भगवत्पूजाविधिमाहात्म्यवर्णनम्, कार्त्तिके पद्मपुष्पमाहात्म्यवर्णने प्रजानामकब्राह्मणवृत्तान्तवर्णनम्। श्लो० १६९। |
| १४—३२ | मार्गशीर्षादिमाघान्तमासेषु भवत्पूजाविधिमाहात्म्यवर्णनम्। श्लो० ४१। |
| १५—३२ | भगवन्नाममाहात्म्यवर्णने परशुवैश्यपत्न्या जीवन्त्याख्यायाश्चरित्रवर्णनम्, शुकपाठितरामनामप्रभावात्तस्या मुक्तिः, सर्वनामापेक्षया रामनाम्नो महत्त्ववर्णनम्। श्लो० १०७। |
| १६—३४ | हरिभक्तिमाहात्म्यवर्णने चक्रिकनामकशबरवृत्तान्तवर्णनम्, तस्य हस्ते मुखस्थफलसमर्पणतीव्रभक्त्या हरिप्रसादान्मुक्तिप्राप्तिवर्णनम्। श्लो० ५८। |
| १७—३५ | भगवद्भक्तिमाहात्म्यवर्णने भद्रतनुब्राह्मणवृत्तान्तवर्णनम्, तत्र तस्य वेश्यारक्तत्वम्, वेश्योपदेशेन वैराग्योत्पत्तौ मार्कण्डेयं प्रति शरणगमनम्, मार्कण्डेयेन दान्तसमीपे तस्य प्रेषणम्, दान्तेन भद्रतनोर्मोहादिलक्षणवर्णनम्, विष्णोरष्टोत्तरशतनामकथनं च, दान्तानुज्ञया भद्रतनुना हरिभक्तिकरणाद्धरेः प्रादु |

| अ० प० | विषयाः |
|---|---|
| | भीवः, भद्रतनुना भगवत्स्तुतिकरणम्, भगवता भद्रतनोः सख्यकरणम्, दान्तेन गुरुणा भद्रतनोर्भर्त्सनायां कृतायां भद्रतनुना दान्ताय गुरवे भगवतो दर्शनकरणम्, भक्तिफलार्थं देवकृतभारतवर्षप्रशंसा । श्लो० २६५ । |
| १८—४० | पुरुषोत्तमजगन्नाथक्षेत्रमाहात्म्यवर्णनम्, कृष्णबलरामसुभद्रादर्शनमहिमा । श्लो० ५५ । |
| १९—४१ | भगवदर्थे वस्तुसमर्पणमाहात्म्यवर्णने दस्युवृत्तेरुर्वीशुब्राह्मणस्य वृत्तान्तवर्णनम्, विष्णुनैवेद्यमाहात्म्यवर्णने सर्वजनिनामकब्राह्मणवृत्तान्तवर्णनम्, सर्वजनिना स्वप्ने विष्णुं दृष्ट्वा स्तोत्रकरणम्, भगवता सर्वजनेः पूर्वजन्मवृत्तान्तवर्णनम्, भगवता सर्वजनये स्वस्य रोषकराणां तोषकराणां च वर्णनम्, हरिपूजाकर्तृमाहात्म्यवर्णनम् । श्लो० ११७ । |
| २०—४३ | दानमाहात्म्यवर्णने हास्तिनपुरस्थरतिविदग्धावेश्याक्षेमङ्करीब्राह्मणीहरिशर्मब्राह्मणानां वृत्तान्तवर्णनम्, दानप्रभावात्तेषामुत्तमलोकावाप्तिः, हरिशर्मणोऽन्नदानाभावात्क्षुत्प्राप्तौ विष्णुना तस्य ब्रह्मसमीपे प्रेषणम्, ब्रह्मणा तस्मै विविधदानमाहात्म्यवर्णनम् । श्लो० १६० । |
| २१—४६ | ब्रह्मणा हरिशर्मणे विविधदानपात्रवर्णनम्, ब्राह्मणपादोदकमाहात्म्यवर्णने भद्रक्रियब्राह्मणचरणोदकस्पर्शात्कस्यचिच्छुनो मुक्तिवर्णनम्, तेन शुना भद्रक्रियायात्मनः पूर्वजन्मवृत्तान्तवर्णनम्, तत्र राजनीतिवर्णनम्, ब्रह्माज्ञया भद्रक्रियस्य दीक्षितं पुत्रं प्रति स्वप्न आविर्भूय दानानुज्ञाकरणम्, दीक्षितेन पुत्रेणान्नजलदानाद्भद्रक्रियस्य मुक्तिः, अन्नजलदानमाहात्म्यवर्णनम् । श्लो० १३४ । |
| २२—४९ | एकादशीमाहात्म्यवर्णनम्, तत्र पापपुरुषाङ्गविभागवर्णनम्, विष्णुनैकादशीं निर्माय यमलोकस्थपापिजनोद्धरणम्, पापपुरुषायैकादशीदिने निवासायान्नरूपस्थलदानम्, एकादशीव्रतस्य सर्वव्रतापेक्षया श्रेष्ठत्ववर्णनम्, संक्षेपेणैकादशीव्रतविधिवर्णनम् । श्लो० १४८ । |
| २३—५१ | एकादशीव्रतमाहात्म्यवर्णने कोचरशनामकभूपतिसुमाज्ञानामकतत्पत्न्योर्वृत्तान्तवर्णनम्, तत्र शौरिब्राह्मणपृष्टया सुमाज्ञाराज्ञ्या तस्मै स्वस्या राज्ञश्च पूर्वजन्मवृत्तान्तवर्णनम्, पूर्वजन्मनि वेश्यायाः सुमाज्ञाया जारस्य च कोचरशस्यैकादशीप्रभावाद्यमलोकं गत्वा यमेन सत्कारकरणम्, यमलोकस्थसुकृतिदुष्कृतिजनानुभूतसुखदुःखावस्थावर्णनम्, कोचरशसुमाज्ञयोरेकादशीव्रतप्रभावाद्वैकुण्ठावाप्तिवर्णनम् । श्लो० १७७ । |
| २४—५५ | तुलसीवृक्षधात्रीवृक्षमाहात्म्यवर्णनम् । श्लो० ६७ । |
| २५—५६ | तुलसीमाहात्म्यवर्णने पवित्रब्राह्मणतत्पत्नीब्राह्मणयोश्चरित्रवर्णनम्, तयोर्गृहे लोमशमुनेरागमनम्, ताभ्यां तस्यातिथ्यसत्कारकरणम् लोमशेनातिथिसपर्यामाहात्म्यकथनं, तत्र ज्ञानभद्रयोमिवृत्तान्तवर्णनम्, लोमशस्यपुरो बिलान्निर्गत्यागच्छतः कस्यचिन्मूषिकस्य पवित्रेण घातनम्, तदा लोमशेन तस्य मुखे कर्णयोः शीर्षे च तुलसीस्पर्शनम्, तेन तस्य मूषिकस्य मोक्षप्राप्तिः । श्लो० ८६ । |
| २६—५८ | कलियुगे वर्तमानानां जनानामवस्थावर्णनम्, कलौ मनःशुद्ध्या भगवते सर्वकर्मसमर्पणवर्णनम्, पाद्मपुराणमाहात्म्यवर्णनम् । श्लो० ५५ । |


इति पाद्मपुराणान्तर्गतक्रियायोगसारखण्डस्थविषयानुक्रमणिका संपूर्णा ।

# सृष्टिखंडाचीं चित्रें.


सूत
शौनकादि ऋ०
समुद्रमंथन
गायरूपी पृथ्वी
पृथु
हिमा०
पुष्करक्षेत्र
सरस्वतीनदी
बली
वामन
ऋ
राम
घुबड
गिधाड
विष्णु
ब्रम्हदेव
नव ग्रह
ब्रम्हदेव
देव.
गंगा नदी
गणपतिपूजा
देव (युद्ध) दैत्य
पुलस्त्य
भीष्म
बुध व इळासमागम
पुरूरवा

अथ श्रीपाद्मे महापुराणे प्रथमं सृष्टिखण्डं प्रारभ्यते ।

ॐश्रीविष्णवेनमः ॥ ॐस्वच्छंचंद्रावदातंकरिकरमकरक्षोभसंजातफेनं ब्रह्मोद्भूतिप्रसक्तैर्व्रतनियमपरैःसेवितंविप्रमुख्यैः ॥ ॐकारालंकृतेनत्रिभुवनगुरु
णाब्रह्मणादृष्टिपूतं संभोगाभोगरम्यंजलमशुभहरंपौष्करं वः पुनातु ॥ १ ॥ सूतमेकांतमासीनंव्यासशिष्यंमहामतिः॥लोमहर्षणनामावाउग्रश्रवसमाह
तत् ॥२॥ ऋषीणामाश्रमांस्तांतगत्वाधर्मान्समासतः ॥ पृच्छतांविस्तराद्ब्रूहियन्मत्तःश्रुतवानसि॥३॥ वेदव्यासान्मयापुत्रपुराणान्यखिलानिच॥ तवा
ख्यातानिप्राप्तानिमुनिभ्योवदविस्तरात्॥४॥प्रयागेमुनिवर्यैश्चयथापृष्टःस्वयंप्रभुः॥ पृष्टेनचानुशिष्टास्तेमुनयोधर्मकांक्षिणः ॥५॥देशंपुण्यमभीप्संतो
विभुनाचहितैषिणा॥सुनाभंदिव्यरूपंचसत्यगंशुभविक्रमम् ॥६॥ अनौपम्यमिदंचक्रंवर्तमानमतंद्रिताः॥पृष्ठतोयातनियमात्पदंप्राप्स्यथयद्धितम्॥७॥
गच्छतोधर्मचक्रस्ययत्रनेमिर्विशीर्यते ॥ पुण्यःसदेशोमंतव्यइत्युवाचस्वयंप्रभुः ॥ ८ ॥ उक्त्वाचैवमृषीन्सर्वानदृश्यत्वमगात्पुनः ॥ गंगावर्तसमाहारो
नेमिर्यत्रव्यशीर्यत ॥९॥ ईजिरेदीर्घसत्रेणऋषयोनैमिषेतदा ॥ तत्रगत्वातुतान्ब्रूहिपृच्छतोधर्मसंशयान् ॥ १० ॥ उग्रश्रवास्ततोगत्वाज्ञानविन्मुनिपुंगवा
न् ॥ अभिगम्योपसंगृह्यनमस्कृत्वाकृतांजलिः ॥ ११ ॥ तोषयामासमेधावीप्रणिपातेनतानृषीन् ॥ तंचापिसत्रिणःप्रीताःससदस्यामहात्मने ॥ १२ ॥
तस्मैसमेत्यपूजांचयथावत्प्रतिपेदिरे ॥ ऋषयऊचुः ॥ कुतस्त्वमागतःसूतकस्माद्देशादिहागतः ॥ १३ ॥ कारणंचागमेब्रूहिवृंदारकसमद्युते ॥ सूत
उवाच ॥ पित्राहंतुसमादिष्टोव्यासशिष्येणधीमता ॥ १४ ॥ शुश्रूषस्वमुनीन्गत्वायत्तेपृच्छंतितद्वद ॥ वदंतुभगवंतोमांकंथयामिकथांतुयाम् ॥१५॥
पुराणंचेतिहासंवाधर्मानथपृथग्विधान् ॥ तांगिरंमधुरांतस्यशुश्रुवुर्ऋषिसत्तमाः ॥ १६ ॥ अथतेषांपुराणस्यशुश्रूषासमपद्यत ॥ दृष्ट्वातमतिविश्वस्तं
विद्वांसंलोमहर्षणिम् ॥ १७ ॥ तस्मिन्सत्रेकुलपतिस्सर्वशास्त्रविशारदः ॥ शौनकोनाममेधावीविज्ञानारण्यकेगुरुः ॥ १८ ॥ इत्थंतद्भावमालंब्यधर्मा
ञ्छुश्रूषुराहतम् ॥ त्वयासूतमहाबुद्धेभगवान्ब्रह्मवित्तमः ॥ १९ ॥ इतिहासपुराणार्थंव्यासःसम्यगुपासितः ॥ दुदोहिथमतिंतस्यत्वंपुराणाश्रयांशु
भांम् ॥ २० ॥ अमीषांविप्रमुख्यानांपुराणंप्रतिसम्प्रति ॥ शुश्रूषाऽस्तेमहाबुद्धेतच्छ्रावयितुमर्हसि ॥२१॥ सर्वेहीमेमहात्मानोनानागोत्राःसमागताः ॥
स्वान्स्वानंशान्पुराणोक्ताञ्छृण्वन्तुब्रह्मवादिनः ॥ २२ ॥ संपूर्णेदीर्घसत्रेस्मिंस्तांस्त्वंश्रावयवैमुनीन् ॥ पाद्मंपुराणंसर्वेषांकथयस्वमहामते ॥ २३ ॥
कथंपद्मंसमुद्भूतंब्रह्मातत्रकथंन्वभूत् ॥ प्रोद्भूतेनकथंसृष्टिःकृतातांतुतथावद ॥२४॥ एवंपृष्टस्ततस्तांस्तुप्रत्युवाचशुभांगिरम् ॥ सूक्ष्मंचन्यायसंयुक्तं
प्राब्रवील्लौमहर्षणिः ॥ २५ ॥ प्रीतोऽस्म्यनुगृहीतोऽस्मिभवद्भिरिहचोदनात् ॥ पुराणार्थंपुराणज्ञैःसर्वधर्मपरायणैः ॥२६॥ यथाश्रुतंसुविख्यातंतत्सर्वं
कथयामिवः ॥ धर्मएषतुसूतस्यसद्भिर्दृष्टः सनातनः ॥ २७ ॥ देवतानामृषीणांचराज्ञांचामिततेजसाम् ॥ वंशानांधारणंकार्यंस्तुतीनांचमहात्मनाम्

॥ २८ ॥ इतिहासपुराणेषुदृष्टायेब्रह्मवादिनः ॥ नहिवेदेष्वधीकारः कश्चित्सूतस्यदृश्यते ॥ २९ ॥ वैन्यस्यहिपृथोर्यज्ञवर्त्तमानेमहात्मनः ॥
मागधश्चैवसूतश्चतमस्तौतांनरेश्वरम् ॥ ३० ॥ तुष्टेनाथतयोर्दत्तोवरोराज्ञामहात्मना ॥ सूतायसूतविषयोमगधोमागधायच ॥ ३१ ॥ तत्रसूत्यांस
मुत्पन्नः सूतोनामेहजायते ॥ ऐन्द्रेसत्रेप्रवृत्तेतुग्रहयुक्तेबृहस्पतौ ॥३२॥ तमेवेंद्रंबार्हस्पत्यतत्रसूतोव्यजायत ॥ शिष्यहस्तेनयत्पृक्तमभिभूतंगुरोर्हविः
॥ ३३ ॥ अधरोत्तरधारेणजज्ञेतद्वर्णसंकरम् ॥ येऽत्रक्षत्रात्समभवन्ब्राह्मण्याश्चैवयोनितः ॥ ३४ ॥ पूर्वेणैवतुसाधर्म्याद्वैधर्मास्तेप्रकीर्तिताः ॥
मध्यमोह्येषसूतस्यधर्मः क्षेत्रोपजीविनः ॥ ३५ ॥ पुराणेष्वधिकारोमेविहितोब्राह्मणैरिह ॥ दृष्ट्वाधर्ममहंपृष्टोभवद्भिर्ब्रह्मवादिभिः ॥ ३६ ॥
तस्मात्सम्यग्भुविब्रूयांपुराणमृषिपूजितम् ॥ पितॄणांमानसीकन्यावासवंसमपद्यत ॥ ३७ ॥ अपध्याताचपितृभिर्मत्स्यगर्भेबभूवसा ॥ अरणीवद्धुताश
स्यनिमित्तंपुण्यजन्मनः ॥ ३८ ॥ तस्यांबभूवपूतात्मामहर्षिस्तुपराशरात् ॥ तस्मैभगवतेकृत्वानमः सत्याय वेधसे ॥ ३९ ॥ पुरुषायपुराणायब्रह्म
वाक्यानुवर्तिने ॥ मानवच्छद्मरूपायविष्णवेशंसितात्मने ॥ ४० ॥ जातमात्रंचयंवेदउपतस्थेससंग्रहः ॥ मतिमंथानमाविध्ययेनासौश्रुतिसागरात् ॥
॥ ४१ ॥ प्रकाशोजनितोलोकेमहाभारतचंद्रमाः ॥ भारतंभानुमान्विष्णुर्यदिनस्युरमीत्रयः ॥ ४२ ॥ ततोऽज्ञानतमोंधस्यकावस्थाजगतोभवेत् ॥
कृष्णद्वैपायनंव्यासंविद्धिनारायणंप्रभुम् ॥ ४३ ॥ कोह्यन्यः पुंडरीकाक्षान्महाभारतकृद्भवेत् ॥ तस्मादहमुपाश्रौषंपुराणंब्रह्मवादिनः ॥ ४४ ॥
सर्वज्ञात्सर्वलोकेषुपूजितादीप्ततेजसः ॥ पुराणंसर्वशास्त्राणांप्रथमंब्रह्मणास्मृतम् ॥ ४५ ॥ उत्तमंसर्वलोकानांसर्वज्ञानोपपादकम् ॥ त्रिवर्गसाधनंपु
ण्यंशतकोटिप्रविस्तरम् ॥ ४६ ॥ निःशेषेषुचलोकेषुवाजिरूपेणकेशवः ॥ ब्रह्मणस्तुसमादेशाद्वेदानाहृतवानसौ ॥ ४७ ॥ अंगानिचतुरोवेदान्पुरा
णन्यायविस्तरम् ॥ असुरेणाखिलंशास्त्रमपहृत्यात्मसात्कृतम् ॥ ४८ ॥ मत्स्यरूपेणाजहारंकल्पादावुदकार्णवे ॥ अशेषमेतदवददुदकांतर्गतो
विभुः ॥ ४९ ॥ श्रुत्वाजगादचमुनीन्प्रतिवेदांश्चतुर्मुखः ॥ प्रवृत्तिस्सर्वशास्त्राणांपुराणस्याभवत्तदा ॥ ५० ॥ कालेनाग्रहणंदृष्ट्वापुराणस्यतदाविभुः ॥
व्यासरूपस्तदाब्रह्मासंग्रहार्थंयुगेयुगे ॥ ५१ ॥ चतुर्लक्षप्रमाणेनद्वापरेद्वापरेजगौ ॥ तदाष्टादशधाकृत्वाभूलोकेऽस्मिन्प्रकाशितम् ॥ ५२ ॥ अद्या
पिदेवलोकेषुशतकोटिप्रविस्तरम् ॥ तदेवात्रचतुर्लक्षंसंक्षेपेणनिवेशितम् ॥ ५३ ॥ प्रवक्ष्यामिमहापुण्यंपुराणंपाद्मसंज्ञितम् ॥ सहस्रंपञ्चपञ्चाशत्पंच
खण्डैस्समन्वितम् ॥ ५४॥ तत्रादौसृष्टिखण्डंस्याद्भूमिखण्डंततः परम् ॥स्वर्गखण्डंततः पश्चात्ततः पातालखण्डकम् ॥ ५५ ॥ पञ्चमंचततः ख्यात
मुत्तरंखण्डमुत्तमम ॥ एतदेवमहापद्ममुद्भूतंयन्मयंजगत ॥५६ ॥ तद्वृत्तान्ताश्रयंयस्मात्पाद्ममित्युच्यतेततः ॥ एतत्पुराणममलंविष्णुमाहात्म्यनिर्मलम्

॥ ५७ ॥ देवदेवोहरिर्यद्वैब्रह्मणेप्रोक्तवान्पुरा ॥ ब्रह्मणाभिहितंपूर्वयावन्मात्रंमरीचये ॥ ५८ ॥ एतदेवचवैब्रह्मापाद्मंलोकेजगादवै ॥ सर्वभूताश्रयंतच्चपाद्म
मित्युच्यतेबुधैः ॥ ५९ ॥ पाद्मंतत्पंचपंचाशत्सहस्राणीहपठ्यते ॥ पंचभिःपर्वभिःप्रोक्तंसंक्षेपाद्व्यासकारितात् ॥ ६० ॥ पौष्करंप्रथमंपर्वयत्रो
त्पन्नः स्वयंविराट् ॥ द्वितीयंतीर्थपर्वस्यात्सर्वग्रहगणाश्रयम् ॥ ६१ ॥ तृतीयपर्वग्रहणाराजानोभूरिदक्षिणाः ॥ वंशानुचरितंचैवचतुर्थेपरिकीर्तितम्
॥ ६२ ॥ पंचमेमोक्षतत्वंचसर्वतत्वंनिगद्यते ॥ पौष्करेनवधासृष्टिः सर्वेषांब्रह्मकारिता ॥ ६३ ॥ देवतानांमुनीनांचपितृसर्गस्तथापरः ॥ द्वितीयेपर्व
ताश्चैवद्वीपाः सप्तससागराः ॥ ६४ ॥ तृतीयरुद्रसर्गस्तुदक्षशापस्तथैवच ॥ चतुर्थेसंभवोराज्ञांसर्ववंशानुकीर्त्तनम् ॥६५॥ अन्त्येऽपवर्गसंस्थानंमोक्ष
शास्त्रानुकीर्त्तनम्॥सर्वमेतत्पुराणेऽस्मिन्कथयिष्यामिवोद्विजाः॥६६॥इदंपवित्रंयशसोनिधानमिदंपितृणामतिवल्लभंस्यात्॥ इदंचदेवस्यसुखायनित्य
मिदंमहापातकभिच्चपुंसाम् ॥६७॥ इतिश्रीपद्मपुराणेप्रथमेसृष्टिखंडेपुराणावतारेप्रथमोऽध्यायः ॥१॥ सूतउवाच ॥ नमस्येसर्वलोकानांविश्वस्यजगतः
पतिम्॥मइमंकुरुतेभावंसृष्टिरूपंप्रधानवित्॥१॥लोककृल्लोकतत्वज्ञोयोगमास्थाययोगवित् ॥ असृजत्सर्वभूतानिस्थावराणिचराणिच॥२॥तमजंविश्व
कर्माणंचित्पतिंलोकसाक्षिणम्॥पुराणाख्यानजिज्ञासुर्व्रजामिशरणंविभुम्॥३॥ ब्रह्मविष्णुगिरीशेभ्योनमस्कृत्वासमाहितः॥इंद्रायलोकपालेभ्यः सवित्रे
चसमाधिना ॥४॥ मुनीनांचवरिष्ठायवसिष्ठायमहात्मने॥तद्वक्रे भाततपसेजातूकर्ण्यायचाक्षुषे ॥५॥ तस्मैभगवतेनत्वावेदव्यासायवेधसे ॥ पुरुषाय
पुराणायभृगुवाक्यानुवर्तिने ॥६॥ तस्मादहमुपाश्रौषंपुराणंब्रह्मवादिनः ॥ सर्वज्ञात्सर्वलोकेषुपूजितादीप्ततेजसः॥७॥अव्यक्तंकारणंयत्तन्नित्यंसदसदा
त्मकम् ॥ महदादिविशेषांतंसृजतीतिविनिश्चयः ॥८॥ अण्डेहिरण्मयेपूर्वंब्रह्मणः मूर्तिरुत्तमा ॥अंडस्यावरणंचाद्भिरपामपिचतेजसा ॥९॥वायुनातस्य
वायोः खात्तद्भूतादितआवृतम् ॥ भूतादिर्महताचापिअव्यक्तेनावृतोमहान् ॥१०॥प्रादुर्भावश्चलोकानामंडएवोपवर्णितः॥नदीनांपर्वतानांचप्रादुर्भावो
ऽनुवर्ण्यते ॥ ११ ॥ मन्वंतराणांसंक्षेपात्कल्पानांचोपवर्णनम् ॥ ब्रह्मवृक्षलयब्रह्मप्रजासर्गोपवर्णनम् ॥ १२ ॥ कल्पानांसंचरश्चैवजगतःस्थापनंतथा॥
शयनंचहरेरप्सुपृथिव्युद्धरणंपुनः ॥१३ ॥ दशधाजन्मसंचारोभृगुशापेनकेशवे ॥ सन्निवेशोयुगादीनांसर्वाश्रमविभाजनम् ॥ १४ ॥ स्वर्गस्थानविभा
गश्चमर्त्यानांस्वर्गचारिणाम् ॥ पशूनांपक्षिणांचैवसंभवः परिकीर्त्तितः ॥ १५ ॥ तथानिर्वचनंकल्पंस्वाध्यायस्यपरिग्रहः ॥ प्रतिसर्गाः पुनः प्रो
क्ता ब्रह्मणोबुद्धिपूर्वकाः ॥ १६ ॥ त्रयोऽन्येबुद्धिपूर्वास्तेतथालोकानकल्पयत् ॥ ब्रह्मणोवदनेभ्यश्चभृग्वादीनांसमुद्भवः ॥ १७ ॥ कल्पयोरंतरंप्रोक्तं
प्रतिसंधिश्चसर्गयोः ॥ भृग्वादीनामृषीणांचप्रजासर्गोपवर्णनम् ॥ १८ ॥ वसिष्ठस्यचब्रह्मर्षेर्ब्रह्मत्त्वंपरिकीर्तितम् ॥ स्वायंभुवस्यचमनोस्ततश्चाप्यनुकी

तनम् ॥ १९ ॥ उक्तोनाभेर्विसर्गश्चरजसश्चमहात्मनः ॥ द्वीपानांचसमुद्राणांपर्वतानांचकीर्तनम् ॥ २० ॥ द्वीपभेदसमुद्राणामन्तर्भावश्चसप्तसु ॥
कीर्त्यन्तेयोजनाग्रेणयेचतत्रनिवासिमः ॥ २१ ॥ तदीयानिचवर्षाणिनदीभिःपर्वतैःसह ॥ जंबूद्वीपादयोद्वीपाःसमुद्रैःसप्तभिर्वृताः ॥२२॥ अंडस्यां
तस्त्विमेलोकाः सप्तद्वीपाचमेदिनी ॥ सूर्याचंद्रमसोश्चारोग्रहाणां ज्योतिषांतथा ॥ २३ ॥ कीर्त्यतेध्रुवसामर्थ्यात्प्रजानांचशुभाशुभम् ॥ ब्रह्मणानि
र्मितःसौरःस्यंदनोऽर्थवशात्स्वयम् ॥२४॥ कल्पितो भगवांस्तेनप्रसर्पति दिवाकरः ॥ सूर्यादीनांस्यंदनानांध्रुवादेवप्रवर्त्तनम् ॥२५॥ कल्पितःशिशु
मारश्चयस्यपुच्छेध्रुवःस्थितः॥संभवांतेचसंहारःसंहारांतेचसंभवः॥२६॥देवतानामृषीणांचमनोःपितृगणस्यच ॥नशक्यंविस्तराद्वक्तुमित्युक्तंचसमास
तः ॥२७॥ अतीतानागतानांवैसमंस्वायंभुवेनतु ॥ मन्वंतरेषुदेवानांप्रजेशानांचकीर्तनम् ॥२८॥ नैमित्तिकःप्राकृतिकस्तथैवात्यंतिकः स्मृतः॥त्रिविधः
सर्वभूतानांकल्पितःप्रतिसंचरः ॥ २९ ॥ अनावृष्टिर्भास्कराच्च घोरः संवर्त्तकानलः ॥ मेघाश्चैकार्णवायेतुतथारात्रिर्महात्मनः ॥३०॥ संध्यालक्षणमु
द्दिष्टंतथाब्राह्मंविशेषतः ॥ भूतानांचापिलोकानांसप्तानामनुवर्णनम् ॥३१॥ संकीर्त्यंतमयाचात्रपापानांरौरवादयः ॥ सर्वेषामेवसत्वानांपरिणामविनि
र्णयः ॥३२॥ ब्रह्मणःप्रतिसर्गश्चसर्वसंहारवर्णनम् ॥ कल्पेकल्पेचभूतानांमहतामपिसंक्षयः ॥३३॥ सुसंख्यायचवुद्धावैब्रह्मणश्चाप्यनित्यताम् ॥ दौरात्म्यं
चैवभोगानांसंसारस्यचकष्टताम् ॥३४॥ दुर्ल्लभत्वंचमोक्षस्यवैराग्याद्दोपदर्शनम् ॥ व्यक्ताव्यक्तंपरित्यज्य सत्त्वंब्रह्मणिसंस्थितम् ॥३५॥ नानात्वदर्श
नात्सुस्थस्ततस्तदभिवर्त्तते ॥ ततस्तापत्रयातीतोविरूपाख्योनिरंजनः ॥३६॥ यहांविचारणीयहै आनंदंब्रह्मणःप्राप्तोनबिभेतिकुतश्चन॥इतिकृत्यसमुद्द
शःप्रमाणस्योपवर्णितः ॥३७॥ कीर्त्यतेजगतोयत्रसर्गप्रलयविक्रियाः ॥ प्रवृत्तिश्चापिभूतानांनिवृत्तीनांफलानिच ॥३८॥ प्रादुर्भावोवसिष्ठस्वशक्तेर्ज
न्मतथैवच ॥ सौदासान्निग्रहस्तस्यविश्वामित्रकृतेनच ॥ ३९ ॥ पराशरस्यचोत्पत्तिरदृश्यन्त्यांयथाविभोः ॥ जज्ञेपितृणांकन्यायांव्यासश्चापियथा
मुनिः ॥४०॥ शुकस्यचयथाजन्मपुत्रस्यसहधीमतः ॥ पराशरस्यविद्वेपोविश्वामित्रकृतोयथा ॥४१॥ वसिष्ठसंभृतश्चाग्निर्विश्वामित्रजिघांसया ॥ संधा
नहेतोर्विभुनाजीर्णःकण्वेनधीमता ॥४२॥ देवेनविप्राविप्राणांविश्वामित्रहितैषिणा॥एकंवेदंचतुःपादंचतुर्धापुनरीश्वरः ॥४३॥ यथाबिभेदभगवान्व्या
सःसर्वेष्वनुग्रहात् तस्यशिष्यप्रशिष्यैश्चशाखाभेदाः पुनः कृताः ॥ ४४ ॥ प्रयागेमुनिवर्यैश्चयथापृष्टः स्वयंप्रभुः ॥ कृष्णेनचानुशिष्टास्ते
मुनयोधर्मकांक्षिणः ॥ ४५ ॥ एतत्सर्वंयथातत्वमाख्यातंद्विजसत्तमाः ॥ मुनीनांधर्मनित्यानांलोकतंत्रमनुत्तमम् ॥४६॥ ब्रह्मणायत्पुराप्रोक्तंपुलस्त्या
यमहात्मने ॥ पुलस्त्येनाथभीष्मायगंगाद्वारेप्रभाषितम् ॥ ४७ ॥ धन्यंयशस्यमायुष्यंसर्व्वपापप्रणाशनम् ॥ कीर्तनंश्रवणंचास्यधारणंचविशेषतः

॥ ४८ ॥ सूतेनानुक्रमेणेदंपुराणंसंप्रकाशितम् ॥ ब्राह्मणेषुपुरायच्चब्रह्मणोक्तंसविस्तरम् ॥ ४९ ॥ पादमस्यविपन्सम्यग्योऽधीयीतजितेंद्रियः ॥
तेनाधीतंपुराणंस्यात्सर्वंनास्त्यत्रसंशयः ॥ ५० ॥ योविद्याच्चतुरोवेदान्सांगोपनिषदोद्विजः ॥ पुराणंचविजानाति यः सतस्माद्विचक्षणः ॥ ५१ ॥
इतिहासपुराणाभ्यांवेदंसमुपबृंहयेत्॥बिभेत्यल्पश्रुताद्वेदोमामयंप्रतरिष्यति ॥ ५२ ॥ अधीत्यचैकमध्यायंस्वयंप्रोक्तंस्वयंभुवा॥आपदःप्राप्यमुच्येतय
थेष्टांप्राप्नुयाद्गतिम् ॥ ५३ ॥ पुरापरंपरांवक्तिपुराणंतेनवैस्मृतम् ॥ निरुक्तिमस्ययोवेदसर्वपापैःप्रमुच्यते ॥ ५४ ॥ ऋषयोह्यब्रुवन्सूतंकथंभीष्मेणस
ङ्गतः ॥ ब्रह्मणोमानसःपुत्रः पुलस्त्योभगवानृषिः ॥ ५५ ॥ दुर्लभंदर्शनंयस्यनरैः पापसमन्वितैः ॥ अत्याश्चर्यमिदंसूतक्षत्रियेणकथंमुनिः ॥ ५६ ॥
आराधितोबृहद्भूतस्तन्नोवदमहामते ॥ कीदृशंवातपस्तेनकोवान्योनियमः कृतः ॥ ५७ ॥ येनतुष्टोमुनिर्ब्रह्मस्तथातेनप्रभाषितः॥पर्ववाप्यथपर्वार्धं
समग्रंवाप्रभाषितम् ॥ ५८ ॥ यस्मिन्स्थानेयथादृष्टःपुलस्त्योभगवानृषिः ॥ तन्नोवदमहाभाग कल्याः स्मश्रवणेवयम् ॥ ५९ ॥ ॥ सूतउवाच ॥
यत्रगंगामहाभागासाधूनांहितकारिणी ॥ विभिद्यपर्वतंवेगान्निःसृतालोकपावनी ॥ ६० ॥ गंगाद्वारेमहातीर्थे भीष्मः पितृपरायणः ॥ शुश्रूषुःसुचि
रंकालंमहतांनियमेस्थितः ॥ ६१ ॥ यावद्वर्षशतंसाग्रंपरमेणसमाधिना ॥ ध्यायमानः परंब्रह्मत्रिकालंस्नानमाचरत् ॥ ६२ ॥ पितॄन्देवांस्तर्पयतः
स्वाध्यायेनमहात्मनः ॥ आत्मानंकर्षतश्चास्यतुष्टोदेवःपितामहः ॥ ६३ ॥ उवाचततनयंब्रह्मापुलस्त्यमृषिसत्तमम् ॥ सत्वंदेवव्रतंभीष्मंवीरंकुरुकु
लोद्भवम् ॥ ६४ ॥ तपसःसंनिवर्तस्वकारणंचास्यकीर्त्तय ॥ पितॄन्भक्त्यामहाभागेध्यायमानस्समास्थितः ॥ ६५ ॥ योह्यस्यमनसःकामस्तंसंपादय
माचिरम् ॥ पितामहवचः श्रुत्वा पुलस्त्योमुनिसत्तमः ॥ ६६ ॥ गंगाद्वारमथागत्यभीष्मंवचनमब्रवीत् ॥ वरंवरयभद्रंतेयत्तेमनसिवर्तते ॥ ६७ ॥
तुष्टस्तेतपसावीरसाक्षाद्देवःपितामहः ॥ ब्रह्मणाप्रेषितस्तेऽहंवरान्दास्यामिकांक्षितान् ॥ ६८ ॥भीष्मोऽपितद्वचःश्रुत्वामनःश्रोत्रसुखावहम् ॥ उन्मील्य
नयनेदृष्ट्वापुलस्त्यंपुरतः स्थितम् ॥ ६९ ॥ अष्टांगप्रणिपातेननत्वातंमुनिसत्तमम् ॥ उवाचप्रणतोभूत्वासर्वांगालिंगितावनिः ॥ ७० ॥ अद्यमेसफ
लंजन्मदिनंचेदंसुशोभनम् ॥ भवतश्चरणौदृष्टौजगद्वंद्यौमयात्विह ॥ ७१ ॥ तपसश्चफलंप्राप्तंयद्दृष्टोभगवान्मया ॥ वरप्रदोविशेषेणसंप्राप्तश्चनदी
तटे ॥ ७२ ॥ इयंब्रसीमयाक्लृप्ताआस्यतां सुखदाकृता ॥ अर्घ्यपात्रेतुपालाशेदूर्वाक्षतशुभैःकुशैः ॥ ७३ ॥ सर्षपैश्चदधिक्षौद्रैर्यवैश्चपयसासह ॥ अष्टां
गोह्येषनिर्दिष्टोह्यर्घोहिमुनिभिःपुरा ॥ ७४ ॥ श्रुत्वैतद्वचनंतस्यभीष्मस्यामिततेजसः ॥ उपविष्टोब्रह्मसुतःपुलस्त्योभगवानृषिः ॥ ७५ ॥ विष्टरं
सहपाद्येनअर्घपात्रंमुदान्वितः ॥ जुजोषभगवान्प्रीतःसदाचारेणतेनतु ॥ ७६ ॥ पुलस्त्य उवाच ॥ सत्यवान्दानशीलोऽसिसत्यसंधिर्नरेश्वरः ॥ ह्री

मान्मैत्रःक्षमाशीलोविक्रांतःशत्रुशासने ॥ ७७ ॥ धर्मज्ञस्त्वंकृतज्ञस्त्वंदयावान्प्रियभाषिता ॥ मान्यमानयिताविज्ञोब्रह्मण्यःसाधुवत्सलः ॥ ७८ ॥
तुष्टस्तेहंसदावत्सप्रणिपातपरस्यवै ॥ प्रब्रूहित्वंमहाभागकथनंतेवदाम्यहम् ॥७९॥ भीष्म उवाच ॥ भगवन्भगवान्ब्रह्माकस्मिन्कालेस्थितोविभुः ॥
सृष्टिंचकारवैपूर्वंदेवादीनांवदस्वमे ॥ ८० ॥ स्थितिंवाभगवान्विष्णुःकथंरुद्रस्तुनिर्मितः ॥ कथंवाऋषयोदेवास्सृष्टास्तेनमहात्मना ॥ ८१ ॥ कथं
पृथ्वीकथंव्योमकथंचेमेतुसागराः ॥ कथंद्वीपाःपर्वताश्चग्रामारण्यपुराणिच ॥८२॥ मुनीन्प्रजापतींश्चैवसप्तर्षीन्प्रवरानपि ॥ वर्णान्वायुंपुरास्थानंगं
धर्वान्यक्षराक्षसान् ॥८३॥ तीर्थानिसरितोवाथसूर्यादीन्ग्रहतारकान् ॥ यथाससर्जभगवांस्तथमेत्वंवदस्वह ॥८४ ॥ पुलस्त्य उवाच ॥ परःपराणां
परमःपरमात्मापितामहः ॥ रूपवर्णादिरहितोविशेषणंविवर्जितः ॥ ८५ ॥ अपक्षयविनाशाभ्यांपरिणामर्द्धिजन्मभिः ॥ गुणैर्विवर्जितःसर्वैःसभाती
तिहिकेवलम् ॥ ८६ ॥ सर्वत्रासौसमश्चाप्यिवसन्ननुपमोमतः ॥ भावयन्ब्रह्मरूपेणविद्वद्भिःपरिपठ्यते ॥ ८७ ॥ तंगुह्यंपरमंनित्यमजमक्षयमव्ययम् ॥
तथापुरुषरूपेणकालरूपेणसंस्थितम् ॥ ८८ ॥ तंनत्वाहंप्रवक्ष्यामियथासृष्टिंचकारह ॥ पूर्वंतुपद्मशयनादुत्थायजगतःप्रभुः ॥ ८९ ॥ गुणव्यंजनसं
भूतःसर्गकालेनराधिप ॥ सात्विकोराजसश्चैवतामसश्चत्रिधामहान् ॥ ९० ॥ प्रधानतत्वेनसमंतथाबीजादिभिर्वृतः ॥ वैकारिकस्तैजसश्चभूतादिश्चैव
तामसः ॥ ९१ ॥ त्रिविधोयमहंकारोमहत्तत्त्वादजायत ॥ भूतेंद्रियाणांपंचानांतथाकर्मेंद्रियैःसह ॥ ९२ ॥ पृथिव्यापस्तथातेजोवायुराकाशमेवच॥एकै
कशःस्वरूपेणकथयामियथोत्तरम् ॥९३॥ शब्दमात्रमथाकाशंभूतादिःखंसमावृणोत् ॥ अथाकाशंविकुर्वाणंस्पर्शमात्रंससर्जह ॥ ९४ ॥ बलवानेषवै
वायुस्तस्यस्पर्शोगुणोमतः॥आकाशंशब्दमात्रंतुस्पर्शमात्रंसमावृणोत् ॥ ९५ ॥ ततोवायुर्विकुर्वाणोरूपमात्रंससर्जह ॥ ज्योतीरूपन्तुतद्वायुस्तद्रूपगुणमु
च्यते ॥९६॥ स्पर्शरूपस्तुवैवायूरूपमात्रंसमावृणोत् ॥ ज्योतिश्चापिविकुर्वाणंरसमात्रंससर्जह ॥९७॥ संभवंतिततोंभांसिरूपमात्रंसमावृणोत् ॥ विकु
र्वाणानिचांभांसिगंधमात्रंससर्जिरे ॥ ९८ ॥ संघातोजायतेतस्मात्तस्यगंधोमतोगुणः ॥ तैजसानींद्रियाण्याहुर्देवावैकारिकादश ॥९९॥ एकादशम्मन
श्चात्रदेवावैकारिकाःस्मृताः॥त्वक्चक्षुर्नासिकाजिह्वाश्रोत्रमत्रचपंचमम् ॥१००॥एतेषांतुमतंकृत्यंशब्दादिग्रहणंपुनः ॥ वाक्पाणिपादपायूनिचोपस्थं
तत्रपञ्चमम्॥१०१॥विसर्गशिल्पगत्युक्तिर्गुणाएषांविपर्ययात्॥आकाशवायुतेजांसिसलिलंपृथिवीतथा १०२ शब्दादिभिर्गुणैर्वीरयुक्तानीत्युत्तरोत्तरैः
शांताघोराश्चमूढाश्चविशेषास्तेनतेस्मृताः ॥१०३॥ नानावीर्याःपृथग्भूतास्ततस्तेसंहतिंविना ॥ नाशक्नुवन्प्रजाःस्रष्टुमसमागम्यकृत्स्नशः ॥१०४॥
समेत्यान्योन्यसंयोगात्परस्परसमाश्रयात्॥एकसंघातलक्षाश्चसंप्राप्यैक्यमशेषतः॥१०५॥पुरुषाधिष्ठितत्वाच्चव्यक्तानुग्रहणेतथा॥महदादयोविशेषां

ताद्यंडमुत्पादयंतिवै॥ १०६॥तत्क्रमेणविवृत्तंतुजलबुद्बुदवत्समम्॥तत्राव्यक्तस्वरूपोऽसौव्यक्तरूपीजनार्दनः॥ १०७॥ब्रह्माब्रह्मस्वरूपेणस्वयमेवव्यव
स्थितः ॥ मेरुरुल्वमभूत्तस्यजरायुश्चमहीधराः॥ १०८॥गर्भोदकंसमुद्राश्चतस्यासंश्चमहात्मनः॥तत्रद्वीपास्समुद्राश्चसज्योतिर्लोकसंग्रहः ॥ १०९ ॥
तस्मिन्नंडेऽभवन्वीरसदेवासुरमानुषाः ॥ वारिवह्न्यनिलाकाशैर्वृतैर्भूतादिनाबहिः ॥११०॥ वृतंदशगुणैरंडंभूतादिर्महतातथा ॥ अव्यक्तेनावृतोराजंस्तैः
सर्वैःसहितोमहान् ॥ १११ ॥ एभिरावरणैःसर्वैःसर्वभूतैश्चसंयुतम् ॥ नारिकेलफलंयद्वद्बीजंबाह्यदलैरिव ॥ ११२ ॥ ब्रह्मास्वयंचजगतोविसृष्टौसंप्रवर्त्तते
॥ सृष्टिंचपात्यनुयुगंयावत्कल्पविकल्पना ॥ ११३॥ ससंज्ञांयातिभगवानेकएवजनार्दनः ॥ सत्वभुग्गुणवान्देवोह्यप्रमेयपराक्रमः ॥११४॥ तमोद्रेकंचक
ल्पांतेरूपंरौद्रंकरोतिच ॥ राजेंद्राखिलभूतानिभक्षयत्यतिभीषणः ॥ ११५ ॥ भक्षयित्वाचभूतानिजगत्येकार्णवीकृते ॥ नागपर्यंकशयनेशेतेसर्वस्व
रूपधृक् ॥ ११६ ॥ प्रबुद्धश्च पुनः सृष्टिंप्रकरोतिचरूपधृक् ॥ सृष्टिस्थित्यंतकरणाद्ब्रह्मविष्णुशिवात्मकः ॥ ११७ ॥ स्रष्टासृजतिचात्मानंविष्णुःपाल्यं
चपातिच ॥ उपसंह्रियतेचापिसंहर्त्ताचस्वयं प्रभुः ॥ ११८ ॥ पृथिव्यापस्तथातेजोवायुराकाशमेवच ॥ सएवसर्वभूतेशोविश्वरूपोयतोऽव्ययः॥
॥ ११९ ॥ सर्गादिकंततोऽस्यैवंभूतस्थमुपकारकम् ॥ सएवसृज्यःसचसर्गकर्त्तासएवपाल्यंप्रतिपाल्यतेयतः ॥ ब्रह्माद्यवस्थाभिरशेषमूर्त्तिर्ब्रह्मावरिष्ठो
वरदोवरेण्यः ॥ १२० ॥ इतिंश्रीपद्मपुराणेप्रथमेसृष्टिखंडे पुराणावतारेद्वितीयोऽध्यायः ॥२॥ भीष्म उवाच ॥ निर्गुणस्याप्रमेयस्यशुद्धस्याथमहा
त्मनः ॥ कथंसर्गादिकर्तृत्वंब्रह्मणोह्युपपद्यते ॥ १ ॥ पुलस्त्यउवाच ॥ शक्तयः सर्वभावानामचिंत्या ज्ञानगोचराः ॥ यत्ततोब्रह्मणस्तास्तुसर्गाद्या
भावशक्तयः ॥ २ ॥ उत्पन्नःप्रोच्यतेविद्वान्नित्यएवोपचारतः ॥ निजेनतस्यमानेनआयुर्वर्षशतं स्मृतम् ॥ ३ ॥ तत्पराख्यंपरार्द्धंचतदर्द्धंपरिकीर्ति
तम् ॥ काष्ठापंचदशाख्यातानिमेषानृपसत्तम ॥ ४ ॥ काष्ठास्त्रिंशत्कलात्रिंशत्कलामौहूर्त्तिकोविधिः ॥ तावत्संख्यैरहोरात्रंमुहूर्त्तैर्मानुषंस्मृतम् ॥
॥ ५ ॥ अहोरात्राणितावंति मासः पक्षद्वयात्मकः ॥ तैःषड्भिरयनंवर्षमयनेदक्षिणोत्तरे ॥ ६ ॥ अयनंदक्षिणंरात्रिर्देवानामुत्तरं दिनम् ॥ दिव्यैर्व
र्षसहस्रैस्तुकृतत्रेतादिसंज्ञितम् ॥ ७ ॥ चतुर्युगंद्वादशभिस्तद्विभागंनिबोधमे ॥ चत्वारित्रीणिद्वेचैकंकृतादिषुयथाक्रमम् ॥ ८ ॥ दिव्याब्दानांसहस्राणि
युगेष्वाहुःपुराविदः ॥ तत्प्रमाणैःशतैःसंध्या पूर्वातत्राभिधीयते ॥ ९ ॥ संध्यांशकश्चतत्तुल्योयुगस्यानंतरोहियः ॥ संध्यासंध्यांशयोरंतःकालोयो
नृपसत्तम ॥ १० ॥ युगाख्यःसतुविज्ञेयःकृतत्रेतादिसंज्ञितः ॥ कृतंत्रेताद्वापरंचकलिश्चैवचतुर्युगम् ॥ ११ ॥ प्रोच्यतेतत्सहस्रंतुब्रह्मणोदिवसंनृप ॥ ब्रह्मणोदिव
सेराजन्मनवश्चचतुर्दश ॥ १२ ॥ भवंतिपरिमाणंचतेषांकालकृतंशृणु ॥ सप्तर्षयःसुराःशक्रोमनुस्तत्सूनवोनृप ॥ १३ ॥ एककालेहिसृज्यंतेसंह्रियंतेचपूर्ववत् ॥

चतुर्युगानांसंख्यातासाधिकाह्येकसप्ततिः ॥ १४ ॥ मन्वंतरंमनोःकालःसुरादीनांचपार्थिव ॥ अष्टौशतसहस्राणिंदिव्ययासंख्यया स्मृतः ॥ १५ ॥
द्विपंचाशत्तथान्यानिसहस्राण्यधिकानिच ॥ त्रिंशत्कोट्यस्तुसंपूर्णाःसंख्याताःसंख्ययानृप ॥ १६ ॥ सप्तषष्टिस्तथान्यानिनियुतानिमहामते ॥ विं
शतिश्चसहस्राणिकालोयमधिकंविना ॥ १७ ॥ मन्वंतरस्यसंख्येयंमानुषैरिहवत्सरैः ॥ चतुर्दशगुणोह्येषकालोब्राह्ममहःस्मृतम् ॥ १८ ॥ ब्राह्मोनैमि
त्तिको नाम तस्यांतेप्रतिसंचरः ॥ तदाहिदह्यतेसर्वंत्रैलोक्यंभूर्भुवादिकम् ॥ १९ ॥ जनंप्रयांतितापार्त्तामहर्लोकनिवासिनः ॥ एकार्णवेतुत्रैलोक्येब्र
ह्माब्रह्मविदांवरः ॥२०॥ भोगिशय्यागतःशेतेत्रैलोक्यग्रासबृंहितः ॥ जनस्थैर्योगिभिर्देवश्चिंत्यमानोजगद्विभुः ॥ २१ ॥ तत्प्रमाणांहितांरात्रिंतदंतेसृ
जतेपुनः ॥ एवंतुब्रह्मणोवर्षमेवंवर्षशतंचतत् ॥ २२ ॥ शतंहितस्यवर्षाणांपरमायुर्महात्मनः ॥ एकमस्यव्यतीतंतुपरार्धंब्रह्मणोऽनघ ॥ २३ ॥ तस्या
न्तेऽभून्महाकल्पः पाद्म इत्यभिविश्रुतः ॥ द्वितीयस्यपरार्धस्यवर्तमानस्यवैनृप॥ २४ ॥वाराहइतिकल्पोऽयंप्रथमःपरिकल्पितः ॥ ब्रह्मानारायणाख्यो
ऽसौकल्पादौभगवान्यथा ॥ २५ ॥ ससर्जसर्वभूतानितदाचक्ष्वमहामुने ॥ पुलस्त्यउवाच ॥ प्रजाःससर्जभगवाननादिस्सर्वसंभवः ॥ २६ ॥ अ
तीतकल्पावसानेनिशासुप्तोत्थितःप्रभुः ॥ सत्वोद्रिक्तस्तथाब्रह्माशून्यंलोकमवैक्षत ॥ २७ ॥ तोयान्तस्समहींज्ञात्वानिमग्नांवारिसंप्लवे ॥ प्रवि
चिंत्यतदुद्धारंकर्तुकामःप्रजापतिः ॥ २८ ॥ विष्णुरूपंतदाज्ञात्वापृथ्वींवोढुंस्वतेजसा ॥ मत्स्यकूर्मादिकांचान्यांवाराहींतनुमाविशत् ॥ २९ ॥ वे
दयज्ञमयंरूपमाश्रित्यजगतःस्थितौ ॥ स्थितःस्थिरात्मासर्वात्मा परमात्माप्रजापतिः ॥ ३० ॥ प्रविवेशतदातोयंतोयाधारेधराधरः ॥ निरीक्ष्यतं
तदादेवीपातालतलमागतम् ॥ ३१ ॥ तुष्टावप्रणताभूत्वाभक्तिनम्रावसुंधरा ॥ पृथिव्युवाच ॥ नमस्तेसर्वभूतायनमस्तेपरमात्मने ॥ ३२ ॥ मामु
द्धरास्मादद्यत्वंत्वत्तोऽहंपूर्वमुत्थिता ॥ परमात्मन्नमस्तेस्तुपुरुषात्मन्नमोस्तुते ॥ ३३ ॥ प्रधानव्यक्तरूपायकालभूतायतेनमः ॥ त्वंकर्त्तासर्वभूता
नांत्वंपातात्वंविनाशकृत् ॥ ३४ ॥ सर्गादौ यः परोब्रह्माविष्णुरुद्रात्मरूपधृक् ॥ भक्षयित्वाचसकलंजगत्येकार्णवीकृते ॥ ३५ ॥ शेषेत्व
मेवगोविन्दचिन्त्यमानोमनीषिभिः ॥ भवतोयत्परंरूपंतन्नजानातिकश्चन ॥ ३६ ॥ अवतारेषुयद्रूपंतदर्चन्तिदिवौकसः ॥ त्वामाराध्य परंब्रह्मायाा
ता मुक्तिंमुमुक्षवः ॥३७॥ वासुदेवमनाराध्यकोहिमोक्षमवाप्स्यति ॥ यद्रूपंमनसाग्राह्यंयद्ग्राह्यंचक्षुरादिभिः ॥३८॥ बुद्ध्याचयत्परिछेद्यंतद्रूपमखिलंत
व ॥ त्वन्मय्यहंत्वदाधारात्वत्सृष्टात्वामुपाश्रिता ॥ ३९ ॥ माधवीमितिलोकोऽयमभिधत्तेततोहिमाम् ॥ एवंसंस्तूयमानस्तुपृथिव्यापृथिवीधरः ॥४०॥
सामस्वरध्वनिः श्रीमान्जगर्जपरिघर्घरम्॥ ततःसमुत्क्षिप्यधरांस्वदंष्ट्रयामहावराहःस्फुटपद्मलोचनः ॥ रसातलादुत्पलपत्रसन्निभःसमुत्थितोनीलइवा

चलोमहान्॥४१॥ उत्तिष्ठतातेनमुखानिलाहतंतदाप्लवांभोजनलोकसंश्रयान्॥सनंदनादीनपकल्मषान्मुनींश्चकारभूयोऽपिपवित्रतास्पदम् ॥४२॥प्रयां
तितोयानिखुराग्रविक्षतेरसातलेऽधः कृतशब्दसंततिः॥बलाहकानांचतविस्तुतस्यश्वासानिलास्तेपरितःप्रयांति ॥ ४३ ॥उत्तिष्ठतस्तस्यजलार्द्रकुक्षेर्महा
वराहस्यमहींविदार्य॥ विधून्वतोवेदमयंशरीररोंमांतरस्थामुनयोजुषंति॥४४॥जनेश्वराणांपरमेशकेशवप्रभुर्गदाशंखदरासिचक्रधृक्॥प्रभूतिनाशस्थिति
हेतुरीश्वरस्त्वमेवनान्यत्परमंचयत्पदम् ॥४५॥पादेषुवेदास्तवयूपदंष्ट्रादन्तेषुयज्ञाःश्रुतयश्चवक्रे ॥हुताशजिह्वोसितनूरुहाणिदर्भाःप्रभोयज्ञपुमांस्त्वमेव
॥४६॥ द्यावापृथिव्योरतुलप्रभावयदंतरंतद्वपुपातवैव ॥ व्याप्तंजगद्वापिसमस्तमेतद्धितायविश्वस्यविभोभवत्वम्॥४७॥परमात्मात्वमेवैकोनान्योऽस्ति
जगतःपते ॥४८॥ तवैषमहिमायेनव्याप्तमेतच्चराचर ॥ ज्ञानस्वरूपमखिलंजगदेतदबुद्धयः ॥ ४९ ॥ अर्थस्वरूपंपश्यंतोभ्राम्यंतेतमसःप्लुवे ॥ येतुज्ञान
विदश्शुद्धचेतसस्तेऽखिलंजगत् ॥ ५० ॥ ज्ञानात्मकंप्रपश्यंतित्वद्रूपंपरमेश्वर ॥ प्रसीदसर्वभूतात्मन्भवायजगतस्त्विमाम् ॥५१ ॥ उद्धरोर्वीममेयात्मन्नि
मग्नामब्जलोचन ॥ सत्वोद्रिक्तोऽसिभगवन्गोविंदपृथिवीमिमाम् ॥५२ ॥ समुद्धरभवायेशकुरुसर्वजगद्धितं॥एवंसंस्तूयमानश्चपरमात्मामहीधरः॥५३॥
उज्जहारक्षितिंक्षिप्रंन्यस्तवान्समहार्णवे ॥ तस्योपरिजलौघेऽस्यमहतीनौरिवस्थिता ॥५४॥ ततःक्षितिंसमांकृत्वापृथिव्यामचिनोद्गिरीन्॥यथाविभा
गंभगवाननादिःपुरुषोत्तमः ॥ ५५ ॥ भूविभागंततःकृत्वासप्तद्वीपान्यथातथम् ॥ भूराद्यांश्चतुरोलोकान्पूर्ववत्समकल्पयत् ॥५६॥ ॥ ब्रह्मणेविष्णुनापूर्व
मेतदेवप्रदर्शितम्॥तुष्टेनदेवदेवेनत्वंदेवःपुरुषोत्तमः ॥५७॥ त्वयामयाजगच्चेदंधार्यंपाल्यंचयत्नतः॥येषांत्वसुरमुख्यानांवरोदत्तोमयाधुना ॥ ५८ ॥
देवानांहितकामेन हंतव्यास्तेत्वयाविभो ॥ अहंसृष्टिंकरिष्यामिसाचपाल्यात्वयाविभो ५९ ॥ एवमुक्तोगतोविष्णुर्देवादीनसृजद्विभुः ॥ अबुद्धिपूर्व
कस्तस्यप्रादुर्भूतस्तमोमयः ॥ ६० ॥ तमोमोहोमहामोहस्तामिस्रोह्यन्धसंज्ञकः ॥ पंचधावस्थितःसर्गोध्यायतस्तुमहात्मनः ॥ ६१ ॥ बहिरंतश्चाप्र
काशःसंवृतात्मानगात्मकः ॥ मुख्यानागायतश्चोक्तामुख्यसर्गस्ततस्त्वयम् ॥६२॥ तंदृष्ट्वासाधकंसर्गममन्यदपरंप्रभुः ॥ तस्याभिध्यायतस्सर्गस्तिर्य
क्स्रोतोऽभ्यवर्तत ॥ ६३ ॥ यस्मात्तिर्यक्प्रवृत्तिःस्यात्तिर्यक्स्रोतस्ततःस्मृतः ॥ पश्वादयस्तेविख्यातास्तमःप्रायाह्यवेदिनः ॥ ६४ ॥ उत्पथग्राहिण
श्चैवतेज्ञानेज्ञानमानिनः॥अहंकृतास्त्वहंमानाअष्टाविंशतिधात्मकाः ॥अंतःप्रकाशास्तेसर्वआवृतास्तेपरस्परम् ॥६५॥ तमप्यसाधकंमत्वाध्यायतोन्य
स्ततोऽभवत् ॥ ऊर्द्ध्वस्रोतस्तृतीयस्तुसात्विकोर्ध्वमवर्तत ॥६६॥ तेसुखप्रीतिबहुलाबहिरंतरनावृताः॥प्रकाशाबहिरंतश्चऊर्द्ध्वस्रोतास्ततःस्मृताः ॥६७॥
तुष्टात्मनस्तृतीयस्तुदेवसर्गस्तुसंस्मृतः ॥ तस्मिन्सर्गेभवत्प्रीतिर्निष्पन्नेब्रह्मणस्तदा ॥ ६८ ॥ ततोऽन्यंसतदादध्यौसाधकंसर्गमुत्तमम् ॥ असाधकां

स्तुतान्ज्ञात्वामुख्यसर्गादिसंभवान् ॥ ६९ ॥ तथाभिध्यायतस्तस्यसत्याभिध्यायिनस्ततः ॥ प्रादुर्भूतस्तदाव्यक्तादर्वाक्स्रोतस्तुसाधकः ॥ ७० ॥
यस्मादर्वाक्प्रवर्ततेततोऽर्वाक्स्रोतसस्तुते ॥ तेचप्रकाशबहुलास्तमोद्रिक्तारजोऽधिकाः ॥ ७१ ॥ तस्मात्तेदुःखबहुलाभूयोभूयश्चकारिणः ॥ प्रकाशा
बहिरंतश्चमनुष्याःसाधकाश्चते ॥ ७२॥ पंचमोऽनुग्रहःसर्गःसचतुर्द्धाव्यवस्थितः॥ विपर्ययेणसिद्ध्याचशक्त्यातुष्ट्यातथैवच ॥ ७३ ॥ निवृत्तंवर्त्तमा
नंचतेनजानंतिवैपुनः ॥ भूतादिकानांभूतानांषष्ठःसर्गःसउच्यते ॥ ७४ ॥ तेपरिग्राहिणःसर्वेसविभागरतास्तुते ॥ चोदनाजाप्यशीलाश्चज्ञेयाभूतादि
कास्तुते ॥ ७५ ॥ इत्येतेकथिताःसर्गाःषडत्रनृपसत्तम ॥ प्रथमोमहतस्सर्गोद्वितीयोब्रह्मणस्तुयः ॥ ७६॥ तन्मात्राणांद्वितीयस्तुभूतसर्गोहिसस्मृतः ॥
वैकारिकस्तृतीयस्तुसर्गश्चैन्द्रियकःस्मृतः ॥ ७७ ॥ इत्येषप्राकृतःसर्गःसंभूतोबुद्धिपूर्वकः ॥ मुख्यसर्गश्चतुर्थस्तुमुख्यावैस्थावराःस्मृताः ॥ ७८ ॥
तिर्यक्स्रोतश्चयःप्रोक्तस्तिर्यग्योन्यस्सउच्यते ॥ ततोर्ध्वस्रोतसांषष्ठोदेवसर्गस्तुसस्मृतः ॥७९॥ ततोर्वाक्स्रोतसांसर्गःसप्तमःसतुमानुषः ॥ अष्टमोऽनु
ग्रहःसर्गःसात्विकस्तामसस्तुसः ॥ ८० ॥ पंचैतेवैकृताःसर्गाःप्राकृतास्तुत्रयःस्मृताः ॥ प्राकृतोवैकृतश्चैवकौमारोनवमःस्मृतः ॥ ८१ ॥ एतेतवसमा
ख्यातानवसर्गाःप्रजापतेः ॥ प्राकृतावैकृताश्चैवजगतोमूलहेतवः ॥८२॥ सृजतोजगदीशस्यकिमन्यच्छ्रोतुमर्हसि ॥ भीष्मउवाच ॥ संक्षेपात्कथिताः
सर्गादेवादीनांगुरोस्तथा ॥८३॥ विस्तराच्छ्रोतुमिच्छामित्वत्तोमुनिवरोत्तम ॥ ॥ पुलस्त्यउवाच ॥ ॥ कर्मभिर्भाविताःसर्वेकुशलाकुशलैस्तुते ॥ ८४ ॥
ख्यात्यातयाह्यनिर्मुक्ताःसंहारेह्युपसंहृताः ॥ स्थावरान्तास्सुराद्यास्तुप्रजाराजंश्चतुर्विधाः ॥ ८५ ॥ ब्रह्मणःकुर्वतःसृष्टिंजज्ञिरेमानसाःस्मृताः ॥ ततो
देवासुरपितॄन्मानुषांस्तुचतुष्टयम् ॥ ८६ ॥ सिसृक्षुरंभांस्येतानिस्वमात्मानमयूयुजत् ॥ मुक्तात्मनस्ततोजातादुरात्मानः प्रजापतेः ॥ ८७ ॥ सिसृ
क्षोर्जघनात्पूर्वंजज्ञिरेत्वसुरास्ततः ॥ तत्याजतांततोदुष्टान्तमोमात्रात्मिकांतनुम् ॥८८॥ सातुत्यक्तातनुस्तेनराजेंद्राभूद्विभावरी ॥ सिसृक्षुरन्यदेहस्थः
प्रीतिमापुस्ततःसुराः ॥ ८९ ॥ सत्वोद्रिक्ताःसमुद्भूतामुखतोब्रह्मणोनृप ॥ त्यक्तासापितनुस्तेनसत्वप्रायमभूद्दिनम् ॥९०॥ ततोहिबलिनोरात्रावसुरा
देवतादिवा॥सत्वमात्रात्मिकांचैवततोऽन्यांजगृहेतनुम्॥९१॥ पितृवन्मन्यमानस्यपितरस्तस्यजज्ञिरे॥उत्ससर्जपितॄन्कृत्वाततस्तामपिसप्रभुः ॥९२॥
साचोत्सृष्टाभवत्संध्यादिननक्तांतरास्थितिः ॥ रजोमात्रात्मिकामन्यांजगृहेसतनुंततः ॥ ९३ ॥ रजोमात्रोत्कटाजातामनुष्याःकुरुसत्तम ॥ तामप्या
शुसतत्याजतनुमाद्यांप्रजापतिः ॥ ९४ ॥ ज्योत्स्नासमभवच्चापिप्राक्संध्यायाभिधीयते ॥ ज्योत्स्नागमेतुबलिनोमनुष्याःपितरस्तथा ॥ ९५ ॥
राजेंद्रसंध्यासमयेतस्मात्तेप्रभवंतिवै॥ज्योत्स्नारात्र्यहनीसन्ध्याचत्वार्येतानिवैविभोः ॥ ९६ ॥ ब्रह्मणस्तुशरीराणित्रिगुणोपाश्रयाणिच॥रजोमात्रात्मि

॥७५॥ कृतंजुगुप्सितंकर्मशम्भुमेतंजिघांसता ॥ त्वयाचदेवदेवस्यसृष्टःकोपेनवैपुमान् ॥७६॥ शुद्धयर्थमस्यपापस्यप्रायश्चित्तंपरंकुरु ॥ गृह्णंस्त्वह्नित्रयं
देवअग्निहोत्रमुपाहर ॥ ७७ ॥ पुण्यतीर्थेतथादेशेवनेवापिपितामह ॥ स्वपत्न्यासहितोयज्ञंकुरुष्वास्मत्परिग्रहात् ॥ ७८ ॥ सर्वेदेवास्तथादित्यारुद्रा
श्चापिजगत्पते ॥ आदेशंतेकरिष्यंतियतोऽस्माकंभवान्प्रभुः ॥ ७९ ॥ एकोहिगार्हपत्योऽग्निर्दक्षिणाग्निर्द्वितीयकः ॥ आहवनीयस्तृतीयस्तुत्रिकुंडेषुप्रक
ल्पय ॥ ८० ॥ वर्तुलेत्वर्चयात्मानम्मामंथोधनुराकृतौ॥ चतुःकोणेहरंदेवमृग्यजुःसामनामभिः ॥ ८१ ॥ अग्नीनुत्पाद्यतपसापरामृद्धिमवाप्यच ॥
दिव्यंवर्षसहस्रंतुहुत्वाग्नीञ्शमयिष्यसि ॥८२॥ अग्निहोत्रात्परंनान्यत्पवित्रमिहपठ्यते॥सुकृतेनाग्निहोत्रणप्रशुद्ध्यंतिभुविद्विजाः ॥८३॥ पंथानोदेवलो
कस्यब्राह्मणैर्दर्शितास्त्वमी ॥एकोऽग्निःसर्वदाधार्योगृहस्थेनद्विजन्मना ॥८४॥विनाग्निनाद्विजेनेहगार्हस्थ्यन्नतुलभ्यते॥भीष्मउवाच॥योऽसौकपालादु
त्पन्नोनरोनामधनुर्द्धरः ॥ ८५ ॥ किमेषमाधवाज्जातउताहोस्वेनकर्मणा॥ उतरुद्रेणजनितोह्यथवाबुद्धिपूर्वकम् ॥ ८६ ॥ ब्रह्मन्हिरण्यगर्भोऽयमंडजात
श्चतुर्मुखः ॥ अद्भुतंपञ्चमंतस्यवक्रंतत्कथमुत्थितम् ॥८७॥ सत्वेरजोनदृश्येतनसत्वंरजसिक्वचित् ॥ सत्वस्थोभगवान्ब्रह्माकथमुद्रेकमादधात् ॥८८॥
मूढात्मनानरोयेनहंतुंहिप्रहितोहरम्॥ ॥ पुलस्त्यउवाच ॥ महेश्वरहरीचैतौद्वावेवसत्पथिस्थितौ ॥८९॥ तयोरविदितंनास्तिसिद्धासिद्धंमहात्मनोः ॥
ब्रह्मणःपंचमंवक्रमूर्द्धमासीन्महात्मनः ॥९०॥ ततोब्रह्माऽभवन्मूढोरजसाचोपबृंहितः॥ततोऽयंतेजसासृष्टिममन्यतमयाकृताम्॥९१॥मत्तोऽन्योनास्ति
वैदेवोयेनसृष्टिःप्रवार्तिता ॥ सहदेवाःसगंधर्वाःपशुपक्षिमृगाकुलाः ॥ ९२ ॥ एवंमूढःसपञ्चास्योविरिंचिरभवत्पुनः ॥ प्राग्वक्रंमुखमेतस्यऋग्वेदस्यप्रव
र्तकम् ॥ ९३ ॥ द्वितीयंवदनंतस्ययजुर्वेदप्रवर्तकम् ॥ तृतीयंसामवेदस्यअथर्वार्थंचतुर्थकम् ॥ ९४ ॥ सांगोपांगेतिहासांश्चसरहस्यान्ससंग्रहान् ॥ वेदा
नधीतेवक्रेणपंचमेनोर्द्ध्वचक्षुषा ॥ ९५ ॥ तस्यासुरसुराःसर्वेवक्रस्याद्भुतवर्चसः ॥ तेजसानप्रकाशंतेदीपाःसूर्योदयेयथा ॥९६॥ स्वपुरेष्वपिसोद्वेगाह्यव
र्ततविचेतसः ॥ नकंचिद्गणयेच्चान्यंतेजसाक्षिपतेपरान् ॥ ९७ ॥ नाभिगंतुंनचद्रष्टुंपुरस्तान्नोपसर्पितुम्॥ शेकुस्त्रस्ताःसुरास्सर्वेपद्मयोनिमहाप्रभुम् ॥
॥९८॥अभिभूतमिवात्मानंमन्यमानाहतत्विषः॥सर्वेतेमंत्रयामासुर्दैवताहितमात्मनः ॥९९॥गच्छामःशरणंशंभुंनिस्तेजसोऽस्यतेजसा ॥ देवाऊचुः ॥
नमस्तेसर्वसत्वेशमहेश्वरनमोनमः ॥ १०० ॥ जगद्योनेपरंब्रह्मभूतानांत्वंसनातनः ॥ प्रतिष्ठासर्वजगतांत्वंहेतुर्विष्णुनासह ॥ १०१ ॥ एवंसंस्तूयमानो
ऽसौदेवर्षिपितृदानवैः ॥ अंतर्हितउवाचेदंदेवाःप्रार्थयतेप्सितम् ॥ १०२ ॥ देवाऊचुः ॥ प्रत्यक्षदर्शनंदत्वादेहिदेवयथेप्सितम् ॥ कृत्वाकारुण्यमस्माकं
वरश्चापिप्रदीयताम् ॥१०३॥ यदस्माकंमहद्वीर्यंतेजओजःपराक्रमः ॥ तत्सर्वंब्रह्मणाग्रस्तंपंचमास्यस्यतेजसा ॥१०४॥ विनेशुःसर्वतेजांसित्वत्प्रसादा

त्पुनःप्रभो ॥ जायतेतुयथापूर्वंतथाकुरुमहेश्वर ॥१०५॥ ततःप्रसन्नवदनोदेवैश्चापिनमस्कृतः ॥ जगामयत्रब्रह्मासौरजोऽहंकारमूढधीः ॥१०६॥ स्तुवं
तोदेवदेवेशंपरिवार्यसमाविशन् ॥ ब्रह्मातमागतंरुद्रंनजज्ञेरजसावृतः ॥ १०७ ॥ सूर्यकोटिसहस्राणांतेजसारंजयञ्जगत् ॥ तदादृश्यतविश्वात्माविश्वसृ
ग्विश्वभावनः ॥१०८॥ सपितामहमासीनंसकलंदेवमंडलम् ॥अभिगम्यततोरुद्रोब्रह्माणंपरमेष्ठिनम् ॥१०९॥ अहांऽतितेजसावक्रमधिकंदेवराजते ॥
एवमुक्त्वाट्टहासंतुमुमोचशशिशेखरः ॥११०॥ वामांगुष्ठनखाग्रेणब्रह्मणःपंचमंशिरः ॥चकर्तकदलीगर्भंनरःकररुहैरिव ॥१११॥ विच्छिन्नंतुशिरःपश्चा
द्भवहस्तेस्थितंतदा ॥ ग्रहमंडलमध्यस्थोद्वितीयइवचंद्रमाः ॥११२॥ करोत्क्षिप्तकपालेननर्नर्तचमहेश्वरः॥शिखरस्थेनसूर्येणकैलासइवपर्वतः ॥११३॥
छिन्नेवक्त्रेततोदेवाहृष्टास्तंवृषभध्वजम्॥तुष्टुवुर्विविधैःस्तोत्रैर्देवदेवंकपर्दिनम् ॥ ११४ ॥देवाऊचुः ॥नमःकपालिनेनित्यंमहाकालस्यकालिने ॥ ऐश्वर्य
ज्ञानयुक्तायसर्वभोगप्रदायिने ॥ ११५ ॥ नमोहर्षविलासायसर्वदेवमयायच ॥ कलौसंहारकर्तात्वंमहाकालः स्मृतोह्यसि ॥ ११६ ॥ भक्तानामार्ति
नाशस्त्वंदुःखांतस्तेनचोच्यसे ॥ शंकरोष्याशुभक्तानांतेनत्वंशंकरः स्मृतः ॥ ११७ ॥ छिन्नंब्रह्मशिरोयस्मात्त्वंकपालंबिभर्षिच ॥ तेनदेवकपालीत्वं
स्तुतोह्यद्यप्रसीदनः ॥११८॥ एवंस्तुतःप्रसन्नात्मादेवान्प्रस्थाप्यशंकरः ॥स्वानिधिष्ण्यानिभगवांस्तत्रैवासीन्मुदान्वितः ॥११९॥ विज्ञायब्रह्मणोभा
वंततोवीरस्यजन्मच॥ शिरोनीरस्यवाक्याच्चलोकानांकोपशांतये ॥१२०॥ शिरस्यञ्जलिमाधायतुष्टावाथप्रणम्यतम् ॥ तेजोनिधिपरंब्रह्मज्ञातुमित्थंप्र
जापतिम् ॥१२१॥ निरुक्तसूक्तरहस्यैर्ऋग्यजुःसामभाषितैः ॥ ॥रुद्रउवाच ॥ अप्रमेयनमस्तेऽस्तुपरमस्यपरात्मने ॥१२२॥ अद्भुतानांप्रसूतिस्त्वंतेज
सांनिधिरक्षयः॥विजयाद्विश्वभावस्त्वंसृष्टिकर्तामहाद्युते ॥१२३॥ ऊर्द्ध्ववक्त्रनमस्तेऽस्तुसत्वात्मकधरात्मक ॥ जलशायिञ्जलोत्पन्नजलालयनमोऽस्तु
ते ॥ १२४ ॥जलजोत्फुल्लपत्राक्षजयदेवपितामह ॥ त्वयाह्युत्पादितः पूर्वंसृष्ट्यर्थमहमीश्वर ॥१२५॥ यज्ञाहुतिसदाहारयज्ञांगेशनमोऽस्तुते ॥ स्वर्णग
र्भपद्मगर्भदेवगर्भप्रजापते ॥१२६॥त्वंयज्ञस्त्वंवषट्कारः स्वधात्वंपद्मसंभव॥वचनेनतुदेवानांशिरश्छिन्नंमयाप्रभो ॥१२७॥ ब्रह्महत्याभिभूतोऽस्मिमां
त्वंपाहिजगत्पते॥इत्युक्तोदेवदेवेनब्रह्मावचनमब्रवीत् ॥१२८॥ ब्रह्मोवाच ॥ ॥ सखानारायणोदेवः सत्वांपूतंकरिष्यति ॥ कीर्तनीयस्त्वयाधन्यःसमेपू
ज्यःस्वयंविभुः॥१२९॥अनुध्यातोऽसिवैनूनंतेनदेवेनविष्णुना॥येनतेभक्तिरुत्पन्नास्तोतुमांमतिरुत्थिता॥१३०॥शिरश्छेदात्कपालीत्वंसोमसिद्धांतका
रकः॥ कोटीःशतंचविप्राणामुद्धर्तासिमहाद्युते ॥१३१॥ ब्रह्महत्याव्रतंकुर्यानान्यत्किंचनविद्यते॥अभाष्याः पापिनःक्रूराब्रह्मघ्नाःपापकारिणः ॥१३२॥
वैतानिकाविकर्मस्थानतेभाष्याःकथंचन ॥तैस्तुदृष्टैस्तथाकार्यंभास्करस्यावलोकनम् ॥१३३॥ अंगस्पर्शेकृतेरुद्रसचैलोजलमाविशेत् ॥ एवंशुद्धिमवा

प्रोतिपूर्वंदृष्टांमनीषिभिः॥१२४॥सभवान्ब्रह्महन्तासिशुद्धचर्थंव्रतमाचर ॥ चीर्णेव्रतेपुनर्भूयःप्राप्स्यसित्वंवरान्बहून्॥१२५॥एवमुक्त्वागतोब्रह्मारुद्रस्त
त्राभिजज्ञिवान् ॥ अचिंतयत्तदाविष्णुंध्यानगत्याततः स्वयम् ॥ १२६॥ लक्ष्मीसहायंवरदंदेवदेवंसनातनम् ॥ अष्टांगप्रणिपातेनदेवदेवस्त्रिलोचनः
॥१२७॥तुष्टावप्रणतोभूत्वाशंखचक्रगदाधरम्॥रुद्रउवाच॥परंपराणाममृतंपुराणंपरात्परंविष्णुमनंतवीर्यम्॥१२८॥स्मरामिनित्यम्पुरुषंवरेण्यंनारायणं
निष्प्रतिमंपुराणम्॥परात्परंपूर्वजमुग्रवेगंगंभीरगम्भीरधियांप्रधानम् ॥१२९॥ नतोऽस्मिदेवंहरिमीशितारंपरात्परंधामपरंचधाम॥परापरंतत्परमंचधा
मपरापरेशंपुरुषंविशालम् ॥ १४० ॥ नारायणंस्तौमिविशुद्धभावंपरापरंसूक्ष्ममिदंससर्ज ॥ सदास्थितत्वात्पुरुषंप्रधानंशांतंप्रधानंशरणंममा
स्तु ॥ १४१ ॥ नारायणंवीतमलंपुराणंपरात्परंविष्णुमपारपारम् ॥ पुरातनंनीतिमतांप्रधानंधृतिक्षमाशांतिपरंक्षितीशम् ॥ १४२ ॥ शुभंसदा
स्तौमिमहानुभावंसहस्रमूर्द्धानमनेकपादम् ॥ अनंतबाहुंशशिसूर्यनेत्रंक्षराक्षरंक्षीरसमुद्रनिद्रम् ॥१४३ ॥ नारायणंस्तौमिपरम्परेशंपरात्परंयंत्रिदशैरग
म्यम् ॥ त्रिसर्गसंस्थंत्रिहुताशनेत्रंत्रितत्त्वलक्ष्यंत्रिलयंत्रिनेत्रम् ॥ १४४ ॥ नमामिनारायणमप्रमेयंकृतसितंद्वापरतश्चरक्तम् ॥ कलौचकृष्णंतमथोन
मामिससर्जयोवक्त्रतएव विप्रान् ॥ १४५ ॥ भुजांतगत्क्षत्रमथोरुयुग्माद्विशः पदाग्राच्चतथैवशूद्रान् ॥ नमामितंविश्वतनुंपुराणंपगत्परंपारगमप्रमेयम्
॥ १४६ ॥ सूक्ष्ममूर्त्तिमहामूर्त्तिविद्यामूर्त्तिममूर्त्तिकम् ॥ कवचंसर्वदेवानांनमस्येवारिजेक्षणम् ॥ १४७ ॥ सहस्रशीर्षदेवेशंसहस्राक्षंमहाभुजम् ॥ जग
त्संव्याप्यतिष्ठंतंनमस्येपरमेश्वरम् ॥१४८॥ शरण्यंशरणंदेवंविष्णुंजिष्णुंसनातनम् ॥नीलमेघप्रतीकाशंनमस्येशार्ङ्गपाणिनम् ॥१४९॥ शुद्धंसर्वगतंनि
त्यंव्योमरूपंसनातनम् ॥ भावाभावविनिर्मुक्तंनमस्येसर्वगंहरिम् ॥ १५० ॥ नचात्रकिंचित्पश्यामिव्यतिरिक्तंतवाच्युत ॥ त्वन्मयंचप्रपश्यामिसर्वमे
तच्चराचरम् ॥१५१॥ एवंतुवदतस्तस्यरुद्रस्यपरमेष्ठिनः॥ इतीरितस्तेनसनातनःस्वयंपरात्परस्तस्यबभूवदर्शने॥१५२॥ रथांगपाणिर्गरुडासनोगिरिं
विदीपयन्भास्करवत्समुत्थितः ॥ वरंवृणीष्वेतिसनातनोऽब्रवीद्धरस्तवाहंवरदः समागतः ॥१५३॥ इतीरितेरुद्रवरोजगादममातिशुद्धिर्भवितासुरेश ॥
नचास्यपापस्यहरंहिचान्यत्संदृश्यतेऽन्यश्चऋतंभवंतम्॥१५४॥ब्रह्महत्याभिभूतस्यतनुर्मेकृष्णतांगता॥शवगंधश्चमेगात्रेलोहस्याभरणानिमे॥१५५॥
कथंमेनभवेदेवमेतद्रूपंजनार्दन ॥ किंकरोमिमहादेवयेनमेपूर्विकातनुः ॥ १५६ ॥ त्वत्प्रसादेनभवितातन्मेकथयचाच्युत ॥ विष्णुरुवाच ॥ ब्रह्मवध्या
पराचोग्रासर्वकष्टप्रदापरा ॥ १५७ ॥ मनसापिनकुर्वीतपापस्यास्यतुभावनाम् ॥ भवतादेववाक्येननिष्ठाचैषानिबोधिता ॥ १५८ ॥ इदानींत्वंमहा
बाहोब्रह्मणोक्तंसमाचर ॥ भस्मसर्वाणिगात्राणित्रिकालंघर्षयेस्तनौ ॥ १५९ ॥ शिखायांकर्णयोश्चैवकरेचास्थीनिधारय ॥ एवंचकुर्वतोरुद्रकष्टंनैवभ

विष्यति ॥१६०॥ संदिश्यैवंसभगवांस्ततोंऽतर्धानमीश्वरः ॥ लक्ष्मीसहायोगतवान्रुद्रस्तत्राभिजज्ञिवान् ॥ १६१ ॥ कपालपाणिर्देवेशः पर्य
टन्वसुधामिमाम् ॥ हिमवंतंसमैनाकंमेरुणाचसहैवतु ॥ १६२ ॥ कैलासंसकलंविंध्यंनीलंचैवमहागिरिम् ॥ कांचींकाशींताम्रलिप्तांमगधा
माविलांतथा ॥ १६३ ॥ वत्सगुल्मंचगोकर्णंतथाचैवोत्तरान्कुरून् ॥ भद्राश्वंकेतुमालंचवर्षंहैरण्यकंतथा ॥ १६४ ॥ कामरूपंप्रभासं
चमहेन्द्रंचैवपर्वतम् ॥ ब्रह्महत्याभिभूतोऽसौभ्रमंस्त्राणंनविंदति ॥ १६५ ॥ त्रपान्वितःकपालंतुपश्यन्हस्तगतंसदा ॥ करौविधुन्वन्बहुशो
विक्षिप्तश्चमुहुर्मुहुः ॥ १६६ ॥ यदास्यधुन्वतोहस्तौकपालंपततेनतु ॥ तदास्यबुद्धिरुत्पन्नाव्रतंचैतत्करोम्यहम् ॥ १६७ ॥ मदीयंनैवमार्गेण
द्विजायास्यंतिसर्वतः ॥ ध्यात्वैवंसुचिरंदेवोवसुधांविचचारह ॥ १६८ ॥ पुष्करंतुसमासाद्यप्रविष्टोऽरण्यमुत्तमम् ॥ नानाद्रुमलताकीर्णंनानामृगरवा
कुलम् ॥१६९॥ द्रुमपुष्पभरामोदवासितंयत्सुवायुना ॥ बुद्धिपूर्वमिवन्यस्तैःपुष्पैर्भूषितभूतलम् ॥ १७० ॥ नानागंधरसैरन्यैःपक्वापक्वैःफलैस्तथा॥
विवेशतरुवृंदेनपुष्पामोदाभिनंदितः ॥ ७१ ॥ अत्राराधयतोभक्त्याब्रह्मादास्यतिमेवरम् ॥ ब्रह्मप्रसादात्संप्राप्तंपौष्करंज्ञानमीप्सितम् ॥ ७२ ॥ पाप
घ्नंदुष्टशमनंपुष्टिश्रीबलवर्द्धनम् ॥ एवंवैध्यायतस्तस्यरुद्रस्यामिततेजसः ॥ ७३ ॥ आजगामततोब्रह्माभक्तिप्रीतोऽथकंजजः॥ उवाचप्रणतंरुद्रमुत्था
प्यचैपुनर्गुरुः ॥ ७४ ॥ दिव्यव्रतोपचारेणसोऽहमाराधितस्त्वया ॥ भवताश्रद्धयात्यर्थंममदर्शनकांक्षया ॥ ७५ ॥ व्रतस्थामांहिपश्यंतिमनुष्यादेव
तास्तथा ॥ तदिच्छयाप्रयच्छामिवरंयत्प्रवरंवरम् ॥ ७६ ॥ सर्वकामप्रसिद्ध्यर्थंव्रतंयस्मान्निषेवितम् ॥ मनोवाक्कायभावैश्चसंतुष्टेनांतरात्मना ॥७७॥
कंददामिचवैकामंवदभोस्तेयथेप्सितम् ॥ रुद्रउवाच ॥ एषएवाद्यभगवन्सुपर्याप्तोमहावरः ॥७८॥ यद्दृष्टोऽसिजगद्वंद्यजगत्कर्तर्नमोऽस्तुते ॥ महताय
ज्ञसाध्येनबहुकालार्जितेनच ॥ ७९ ॥ प्राणव्ययकरेणत्वंतपसादेवदृश्यते ॥ इमंकपालंदेवेशनकरात्पतितंविभो ॥ १८० ॥ त्रपाकराऋषीणांचचर्यै
षाकुत्सिताविभो ॥ त्वत्प्रसादाद्व्रतंचेदंकृतंकापालिकंतुयत् ॥८१॥ सिद्धमेतत्प्रपन्नस्यमहाव्रतमिहोच्यताम् ॥ पुण्यप्रदेशेयस्मिंस्तुक्षिपामीदंवदस्व
मे ॥ ८२ ॥ पूतोभवामियेनाहंमुनीनांभावितात्मनाम् ॥ ॥ ब्रह्मोवाच ॥ ॥ अविमुक्तंभगवतःस्थानमस्तिपुरातनम् ॥८३॥ कपालमोचनंतीर्थंतव
तत्रभविष्यति॥ अहंचत्वंस्थितस्तत्रविष्णुश्चापिभविष्यति॥८४॥दर्शनेभवतस्तत्रमहापातकिनोऽपिये॥तेऽपिभोगान्समश्नंतिविशुद्धाभवनेमम॥८५॥
वरणापिअसीचापिद्वेनद्यौसुरवल्लभे ॥ अंतरालेतयोःक्षेत्रेवध्यानविशतिक्वचित् ॥ ८६ ॥ तीर्थानांप्रवरंतीर्थंक्षेत्राणांप्रवरंतव ॥ आदेहपतनाद्येतुक्षेत्रं
सेवंतिमानवाः ॥ ८७ ॥ तेमृताहंसयानेनदिवंयांत्यकुतोभयाः ॥ पंचक्रोशप्रमाणेनक्षेत्रंदत्तंमयातव ॥ ८८ ॥ क्षेत्रमध्याद्यदागंगागमिष्यतिसरित्प

तिम् ॥ तदासामहतीपुण्यापुरीरुद्रभविष्यति ॥ ८९ ॥ पुण्याचोदङ्मुखीगंगाप्राचीचापिसरस्वती॥उदङ्मुखीयोजनेद्वेगच्छतेजाह्नवीनदी॥१९०॥
तत्रवैविबुधाःसर्वेमयासहसवासवाः ॥ आगतावासमेष्यंतिकपालंतत्रमोचय ॥ ९१ ॥ तस्मिंस्तीर्थेतुयेगत्वापिंडदानेनवैपितॄन् ॥ श्राद्धैस्तुप्रीण
यिष्यंतितेषांलोकोऽक्षयोदिवि ॥९२॥ वाराणस्यांमहातीर्थेनरःस्नातोविमुच्यते॥सप्तजन्मकृतात्पापाद्गमनादेवमुच्यते ॥९३॥तत्तीर्थंसर्वतीर्थानामुत्तमं
परिकीर्तितम् ॥ त्यजंतितत्रयेप्राणान्प्राणिनःप्रणतास्तव ॥ ९४ ॥ रुद्रत्वंतेसमासाद्यमोदंतेभवतासह ॥ तत्रापिहितुयद्दत्तंदानंरुद्रयतात्मना ॥ ९५ ॥
स्यान्महच्चफलंतस्यभविताभावितात्मनः ॥ स्वांगस्फुटितसंस्कारंतत्रकुर्वंतियेनराः ॥ ९६ ॥ तेरुद्रलोकमासाद्यमोदंतेसुखिनःसदा ॥
तत्रपूजाजपोहोमःकृतोभवतिदेहिनाम् ॥ ९७ ॥ अनंतफलदः स्वर्गोरुद्रभक्तियुतात्मनः ॥ तत्रदीपप्रदानेतुज्ञानचक्षुर्भवेन्नरः ॥ ९८ ॥ अव्यंगंतरुणं
सौम्यंरूपवंतंतुगोसुतम् ॥ योऽङ्कयित्वामोचयतिसयातिपरमंपदम् ॥ ९९ ॥ पितृभिःसहितोमोक्षंगच्छतेनात्रसंशयः ॥ अथकिंबहुनोक्तेनयत्तत्रक्रि
यतेनरैः ॥ २०० ॥ कर्मधर्मंसमुद्दिश्यतदनंतफलंभवेत् ॥ स्वर्गापवर्गयोर्हेतुस्तद्धितीर्थंमतंभुवि ॥ १ ॥ स्नानाज्जपात्तथाहोमादनंतफलसाधनम्॥
गत्वावाराणसीतीर्थंभक्त्यारुद्रपरायणाः ॥ २ ॥ येतत्रपंचतांप्राप्ताभक्तास्तेनात्रसंशयः ॥ वसवःपितरोज्ञेयारुद्राश्चैवपितामहाः ॥ ३ ॥ प्रपितामहा
स्तथादित्याइत्येषावैदिकीश्रुतिः ॥ त्रिविधःपिंडदानायविधिरुक्तोमयानघ ॥ ४ ॥ मानुषैःपिंडदानंतुकार्यमत्रागतैस्सदा ॥ पिंडदानंचतत्रैवस्वपु
त्रैःकार्यमादरात् ॥ ५ ॥ सुपुत्रास्तेपितृणांतुभवंतिसुखदायकाः ॥ प्रोक्तंतीर्थंमयातुभ्यंदर्शनादपिमुक्तिदम् ॥ ६ ॥ स्नात्वातुसलिलेतत्रमुच्यतेज
न्मबंधनात् ॥ विमुक्तोब्रह्महत्यायास्तत्ररुद्रयथासुखम् ॥ ७ ॥ अविमुक्तेमयादत्तेतिष्ठत्वंभार्ययासह ॥ ॥ रुद्रउवाच ॥ पृथिव्यांयानितीर्थानितेष्व
हंविष्णुनासह ॥ ८ ॥ तिष्ठामिभवतोक्तेनवरएषवृतोमया ॥ अहंदेवोमहादेवआराध्योभवतासदा ॥ ९ ॥ वरंदास्यामितेचाहंसंतुष्टेनांतरात्मना ॥
विष्णोश्चाहंप्रदास्यामिवरांश्चमनसीप्सितान् ॥२१०॥ सुराणांचैवसर्वेषांमुनीनांभावितात्मनाम्॥ अहंदाताअहंयाच्योनान्योभाव्यःकथंचन ॥११॥
ब्रह्मोवाच ॥ एवंकरिष्येऽहंरुद्रयत्त्वयोक्तंवचःशुभम् ॥ नारायणश्चतेवाक्यंकर्तासर्वंनसंशयः ॥ १२ ॥ विसृज्यैवंतदारुद्रंब्रह्माचांतरधीयत ॥ वाराण
स्यांमहादेवोगत्वातीर्थंन्यवेशयत् ॥ १३ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखंडेरुद्रस्यब्रह्मवध्यानाशश्चतुर्दशोऽध्यायः ॥ १४ ॥ भीष्मउवाच ॥किंकृ
तंब्रह्मणाब्रह्मन्प्रेष्यवाराणसीपुरीम् ॥ जनार्दनेनकिंकर्मशंकरेणचयन्मुने ॥ १ ॥ कथंयज्ञःकृतस्तेनकस्मिंस्तीर्थेवदस्वमे ॥ केसदस्याऋत्विजश्चसर्वां
स्तान्प्रब्रवीहिमे ॥ २ ॥ केदेवास्तर्पितास्तेनएतन्मेकौतुकंमहत् ॥ पुलस्त्यउवाच ॥ श्रीनिधानंपुरंमेरोःशिखरेरत्नचित्रितम् ॥ ३ ॥ अनेकाश्चर्यनि

लयंबहुपादपसंकुलम् ॥ विचित्रधातुभिश्चित्रंस्वच्छस्फटिकनिर्मलम् ॥ ४ ॥ लतावितानशोभाढ्यंशिखिशब्दविनादितम् ॥ मृगेन्द्ररववित्रस्तगज
यूथसमाकुलम् ॥५॥ निर्झरांबुप्रपातोत्थशीकरासारशीतलम् ॥ वाताहततरुव्रातप्रसन्नापानचित्रितम् ॥६॥ मृगनाभिवरामोदवासिताशेषकाननम् ॥
लतागृहरतिश्रान्तसुप्तविद्याधराध्वगम् ॥७॥ प्रगीतकिन्नरव्रातमधुरध्वनिनादितम्॥ तस्मिन्ननेकविन्यासशोभिताशेषभूमिकम् ॥८॥ वैराजंनामभवनं
ब्रह्मणःपरमेष्ठिनः ॥ तत्रदिव्यांगनोद्गीतमधुरध्वनिनादिता ॥ ९ ॥पारिजाततरूत्पन्नमंजरीदाममालिनी॥रत्नरश्मिसमूहोत्थबहुवर्णविचित्रिता॥१०॥
विन्यस्तस्तंभकोटिस्तुनिर्मलादर्शशोभिता ॥ अप्सरोनृत्यविन्यासविलासोल्लासलासिता॥११॥बह्वातोद्यसमुत्पन्नसमूहस्वननंनादिता ॥ लयतालयुता
नेकगीतवादित्रशोभिता ॥ १२ ॥ सभाकांतिमतीनामदेवानांशर्मदायिका ॥ ऋषिसंघसमायुक्तामुनिवृंदनिषेविता ॥१३॥ द्विजातिसामशब्देननादि
तानंददायिनी ॥ तस्यांनिविष्टोदेवेशःसंध्यासक्तःपितामहः ॥१४॥ ध्यायतिस्मपरंदेवंयेनेदंनिर्मितंजगत् ॥ ध्यायतोबुद्धिरुत्पन्नाकथंयज्ञंकरोम्यहम्
॥ १५ ॥ कस्मिन्स्थानेमयायज्ञःकार्यःकुत्रधरातले ॥ काशीप्रयागस्तुंगाचनैमिषंशृंखलंतथा ॥ १६ ॥ कांचीभद्रादेविकाचकुरुक्षेत्रंसरस्वती ॥
प्रभासादीनितीर्थानि पृथिव्यामिहमध्यतः ॥ १७ ॥ क्षेत्राणिपुण्यतीर्थानिसंतियानीहसर्वशः ॥ मदादेशाच्चरुद्रेणकृतान्यन्यानिभूतले ॥१८॥ यथा
हंसर्वदेवेषुआदिदेवोव्यवस्थितः ॥ तथाचैकंपरंतीर्थमादिभूतंकरोम्यहम् ॥ १९ ॥ अहंयत्रसमुत्पन्नःपद्मंतद्विष्णुनाभिजम् ॥ पुष्करंप्रोच्यतेतीर्थमृषि
भिर्वेदपाठकैः ॥ २० ॥ एवंचिंतयतस्तस्यब्रह्मणस्तुप्रजापतेः ॥ मतिरेषासमुत्पन्नाव्रजाम्येषधरातले ॥ २१ ॥ प्राक्स्थानंससमासाद्यप्रविष्टस्तद्वनोत्त
मम् ॥ नानाद्रुमलताकीर्णंनानापुष्पोपशोभितम् ॥ २२ ॥ नानापक्षिरवाकीर्णंनानामृगगणाकुलम् ॥ द्रुमपुष्पभरामोदैर्वासयद्यत्सुरासुरान् ॥
॥ २३ ॥ बुद्धिपूर्वमिवन्यस्तैःपुष्पैर्भूषितभूतलम् ॥ नानागंधरसैःपक्वःपक्वैश्चषड्तूद्भवैः ॥२४॥ फलैःसुवर्णरूपाढ्यैर्घ्राणदृष्टिमनोहरैः ॥ जीर्णपत्रंतृणं
यत्रशुष्ककाष्ठफलानिच ॥ २५ ॥ बहिःक्षिपतिजातानिमारुतोऽनुग्रहादिव ॥ नानापुष्पसमूहानांगंधमादायमारुतः ॥ २६ ॥ शीतलोवातिखंभूमिं
दिशोयत्राभिवासयन् ॥ हरितस्निग्धनिश्छिद्रैरकीटकवनोत्कटैः ॥ २७ ॥ वृक्षरनेकसंज्ञैर्यद्भूषितंशिखरान्वितैः॥अरोगैर्दर्शनीयैश्चसुवृत्तैःकैश्चिदुज्ज्व
लैः ॥ २८ ॥ कुटुंबमिवविप्राणामृत्विग्भिर्भातिसर्वतः ॥ शोभंतेधातुसंकाशैरंकुरैःप्रावृताद्रुमाः ॥ २९ ॥ कुलीनैरिवनिश्छिद्रैःस्वगुणैःप्रावृतानराः ॥
पवनाविद्धशिखरैःस्पृशन्तीवपरस्परम् ॥ ३० ॥ आजिघ्रंतीवचान्योन्यंपुष्पशाखावतंसकाः ॥ नागवृक्षाःक्वचित्पुष्पैर्द्रुमवानीरकेसरैः ॥ ३१ ॥
नयनैरिवशोभंतेचंचलैःकृष्णतारकैः ॥ पुष्पसंपन्नशिखराःकर्णिकारद्रुमाःक्वचित् ॥ ३२ ॥ युग्मयुग्माद्विधाचेहशोभन्तइवदंपती ॥ सुपुष्पप्रभवाटो

पौर्स्सिदुवारद्रुपंक्तयः ॥ ३३ ॥ मूर्तिमत्यइवाभांतिपूजितावनदेवताः ॥ क्वचित्क्वचित्कुंदलताःसपुष्पाभरणोज्ज्वलाः ॥३४॥ दिक्षुवृक्षेषुशोभंतेबाल
चन्द्राइवोच्छ्रिताः ॥ सर्जार्जुनाःक्वचिद्भान्तिवनोद्देशेषुपुष्पिताः ॥ ३५ ॥ धौतकौशेयवासोभिःप्रावृताःपुरुषाइव ॥ अतिमुक्तकवल्लीभिःपुष्पिताभि
स्तथाद्रुमाः ॥ ३६ ॥ उपगूढाविराजंतेस्वनारीभिरिवप्रियाः ॥ अपरस्परसंसक्तैःसालाशोकाश्चपल्लवैः ॥ ३७ ॥ हस्तैर्हतान्स्पृशंतीवसुहृदश्चिरसंग
ताः ॥ फलपुष्पभरानम्राःपनसाःसरलार्जुनाः ॥ ३८ ॥ अन्योन्यमर्चयन्तीवपुष्पैश्चैवफलैस्तथा ॥ मारुतावेगसंश्लिष्टैःपादपास्सालबाहुभिः ॥
॥ ३९ ॥ अभ्याशमागतंलोकंप्रतिभावैरिवोत्थिताः ॥ पुष्पाणामवरोधनसुशोभार्थंनिवेशिताः ॥ ४० ॥ वसन्तमहमासाद्यपुरुपान्स्पर्धयंतिहि ॥
पुष्पशोभाभरनुतैःशिखरैर्वायुकम्पितैः॥४१॥नृत्यंतीवनराःप्रीताःस्रगलंकृतशेखराः॥शृंगाग्रपवनक्षिप्ताःपुष्पावलियुताद्रुमाः॥४२॥ सवल्लीकाःप्रनृत्यं
तिमानवाइवसप्रियाः ॥ स्वपुष्पनतवल्लीभिःपादपाःक्वचिदावृताः ॥४३॥ भांतितारागणैश्चित्रैःशरदीवनभस्तलम्॥द्रुमाणामथवाग्रेषुपुष्पितामालती
लताः ॥४४॥ शेखराइवशोभंतेरचिताबुद्धिपूर्वकम् ॥ हरिताःकांचनच्छायाःफलिताःपुष्पिताद्रुमाः ॥४५॥ सौहृदंदर्शयंतीवनराः साधुसमागमे ॥
पुष्पकिंजल्ककपिलागताःसर्वदिशासुच ॥४६ ॥ कदंबपुष्पस्यजयंघोषयंतीव षट्पदाः ॥ क्वचित्पुष्पासवक्षीबाःसंपतंतिततस्ततः ॥ ४७ ॥ पुंस्को
किलगणावृक्षगहनेष्विवसप्रियाः ॥ शिरीषपुष्पसंकाशाःशुकामिथुनशःक्वचित् ॥ ४८ ॥ कीर्तयंतिगिरश्चित्राःपूजिताब्राह्मणायथा ॥ सहचारिसुसं
युक्तामयूराश्चित्रबर्हिणः ॥४९॥ वनांतेष्वपिनृत्यंतिशोभंतइवनर्त्तकाः ॥ कूजन्तःप्रक्षिसंघातानानारुतविराविणः ॥ ५० ॥ कुर्वंतिरमणीयंवैरमणी
यतरंवनम् ॥ नानामृगगणाकीर्णंनित्यंप्रमुदितांडजम् ॥ ५१ ॥ तद्वनंनन्दनसमं मनोदृष्टिविवर्धनम् ॥ पद्मयोनिस्तुभगवांस्तथारूपंवनोत्तमम् ॥
॥५२॥ददर्शादर्शवद्दृष्ट्यासौम्ययापाययन्निव॥तावृक्षपंक्तयःसर्वादृष्ट्वादेवंतथागतम्॥५३॥ निवेद्यब्रह्मणेभक्त्यामुमुचुःपुष्पसंपदः॥पुष्पप्रतिग्रहंकृत्वापा
दपानांपितामहः॥५४॥ वरंवृणीध्वंभद्रंवःपादपानित्युवाचसः॥ एवमुक्ताभगवता तरवोनिरवग्रहाः॥५५॥ऊचुःप्रांजलयःसर्वेनमस्कृत्वाविरिंचिनम् ॥
वरंददासिचेद्देवप्रपन्नजनवत्सल ॥५६ ॥ इहैवभगवन्नित्यंवनेसंनिहितोभव ॥ एषनः परमःकामःपितामहनमोऽस्तुते ॥ ५७॥ त्वंचेद्वससिदेवेशवने
ऽस्मिन्विश्वभावन ॥ सर्वात्मनाप्रपन्नानांवांछतामुत्तमंवरम् ॥५८॥ वरकोटिभिरन्याभिरलंनो दीयतांवरम् ॥ सन्निधानेनतीर्थेभ्यइदंस्यात्प्रवरंमहत
॥ ५९ ॥ ब्रह्मोवाच ॥ उत्तमंसर्वक्षेत्राणांपुण्यमेतद्भविष्यति ॥ नित्यंपुष्पफलोपेतानित्यंसुस्थिरयौवनाः ॥ ६० ॥ कामगाःकामरूपाश्चकामरूप
फलप्रदाः ॥ कामसंदर्शनाःपुंसांतपःसिद्ध्युज्ज्वलानृणाम् ॥६१ ॥ श्रियापरमयायुक्तामत्प्रसादाद्भविष्यथ ॥ एवंसवरदोब्रह्माऽनुजग्राहपादपान् ॥

॥ ६२ ॥ स्थित्वावर्षसहस्रंतुपुष्करंप्राक्षिपद्भुवि ॥ क्षितिर्निपतितातेनव्यकंपतरसातलम् ॥ ६३ ॥ विवशास्तत्यजुर्वेलांसागराःक्षुभितोर्मयः ॥ शक्रा
शनिहतानीवव्याघ्रव्यालावृतानिच ॥ ६४ ॥ शिखराण्यप्यशीर्यंतपर्वतानांसहस्रशः ॥ देवसिद्धविमानानिगंधर्वनगराणिच ॥ ६५ ॥ प्रचेलुर्बभ्रमुः
पेतुर्विविशुश्चधरातलम् ॥ कपोतमेघाःखात्पेतुःपुटसंवातदर्शिनः ॥ ६६ ॥ ज्योतिर्गणांश्छादयंतोबभूवुस्तीव्रभास्कराः ॥ महतातस्यशब्देनमूका
न्धबधिरीकृतम् ॥६७॥ बभूवव्याकुलंसर्वंत्रैलोक्यंसचराचरम्॥सुरासुराणांसर्वेषांशरीराणिमनांसिच ॥६८॥ अवसेदुश्चकिमितिकिमित्येतन्नजज्ञिरे ॥
धैर्यमालंब्यसर्वेऽथब्रह्माणंचाप्यलोकयन् ॥ ६९ ॥ नचतेतमपश्यंतकुत्रब्रह्मागतोह्यभूत् ॥ किमर्थंकंपिताभूमिर्निमित्तोत्पातदर्शनम् ॥ ७० ॥ ताव
द्विष्णुर्गतस्तत्रयत्रदेवाव्यवस्थिताः॥ प्रणिपत्यइदंवाक्यमुक्तवंतोदिवौकसः ॥ ७१ ॥ किमेतद्भगवन्ब्रूहिनिमित्तोत्पातदर्शनम् ॥ त्रैलोक्यंकंपितंयेनसं
युक्तंकालधर्मणा ॥ ७२ ॥ जातकल्पावसानंतुभिन्नमर्यादसागरम् ॥ चत्वारोदिग्गजाःकिंतुबभूवुरचलाश्चलाः ॥ ७३ ॥ समावृताधराकस्मात्सप्तसा
गरवारिणा ॥ उत्पत्तिर्नास्तिशब्दस्यभगवन्निष्प्रयोजना ॥ ७४ ॥ यादृशोवास्मृतःशब्दोनभूतोनभविष्यति ॥ त्रैलोक्यमाकुलंयेनचक्रेरौद्रेणचो
द्यता ॥७५॥शुभोऽशुभोवाशब्दोऽयंत्रैलोक्यस्यदिवौकसाम् ॥ भगवन्यदिजानासिकिमेतत्कथयस्वनः ॥ ७६ ॥ एवमुक्तोऽब्रवीद्विष्णुःपरमेणानुभा
वितः ॥ माभैष्टमरुतःसर्वेशृणुध्वंचात्रकारणम् ॥ ७७ ॥ निश्चयेनानुविज्ञायवक्ष्याम्येपयथाविधम् ॥ पद्महस्तोहिभगवान्ब्रह्मालोकपितामहः ॥ ७८ ॥
भूप्रदेशेपुण्यराशौयज्ञंकर्तुंव्यवस्थितः ॥ अवरोहेपर्वतानांवनेचातीवशोभने ॥ ७९ ॥ कमलंतस्यहस्तात्तुपतितंधरणीतले ॥ तस्यशब्दोमहानेषयेन
यूयंप्रकंपिताः ॥ ८० ॥ तत्रासौतरुवृंदेनपुष्पामोदाभिनंदितः ॥ अनुगृह्याथभगवान्वनंतत्समृगांडजम् ॥ ८१ ॥ जगतोऽनुग्रहार्थायवासंतत्रान्वरो
चयत् ॥ पुष्करंनामतत्तीर्थंक्षेत्रंवृषभमेवच ॥ ८२ ॥ जनितंतद्भगवतालोकानांहितकारिणा ॥ ब्रह्माणंतत्रवैगत्वातोषयध्वंमयासह ॥ ८३ ॥ आरा
ध्यमानोभगवान्प्रदास्यतिवरान्वरान् ॥ इत्युक्त्वाभगवान्विष्णुःसहतैर्देवदानवैः ॥ ८४ ॥ जगामतद्वनोद्देशंयत्रास्तेसतुकंजजः ॥ प्रहृष्टास्तुष्टमनसः
कोकिलालापलापिताः ॥ ८५ ॥ पुष्पोच्चयोज्ज्वलंशस्तंविविशुर्ब्रह्मणोवनम् ॥ संप्राप्तंसर्वदेवैस्तुवनंनंदनसंमितम् ॥ ८६ ॥ पद्मिनीमृगपुष्पाढ्यंसु
दृढंशुशुभेतदा ॥ प्रविश्याथवनंदेवाःसर्वपुष्पोपशोभितम् ॥ ८७ ॥ इहदेवोऽस्तीतिदेवाबभ्रमुश्चदिदृक्षवः ॥ मृगयंतस्ततस्तेतुसर्वेदेवाःसवासवाः॥८८॥
अद्भुतस्यवनस्यांतंनतेददृशुराशुगाः ॥ विचिन्वद्भिस्तदादेवंदेवैर्वायुर्विलोकितः ॥ ८९ ॥ सतानुवाचब्रह्माणंनद्रक्ष्यथतपोविना ॥ तदाखिन्नाविचिन्वं
तस्तस्मिन्पर्वतरोधसि ॥ ९० ॥ दक्षिणेचोत्तरेचैवअंतरालेपुनःपुनः ॥ वायूक्तंहृदयेकृत्वावायुस्तानब्रवीत्पुनः ॥ ९१ ॥ त्रिविधोदर्शनोपायोविरिंचे

रस्यसर्वदा ॥ श्रद्धाज्ञानेनतपसायोगेनचनिगद्यते ॥ ९२ ॥ सकलंनिष्कलंचैवदेवंपश्यंतियोगिनः ॥ तपस्विनस्तुसकलंज्ञानिनोनिष्कलंपरम् ॥
॥ ९३ ॥ समुत्पन्नेतुविज्ञानेमंदश्रद्धोनपश्यति ॥ भक्त्यापरमयाक्षिप्रंब्रह्मपश्यंतियोगिनः ॥ ९४॥ द्रष्टव्योनिर्विकारोऽसौप्रधानपुरुषेश्वरः ॥ कर्मणा
मनसावाचानित्ययुक्ताःपितामहम् ॥ ९५ ॥ तपश्चरतभद्रंवोब्रह्माराधनतत्पराः ॥ ब्राह्मींदीक्षांप्रपन्नानांभक्तानांचद्विजन्मनाम् ॥ ९६॥ सर्वकालंसजा
नातिदातव्यंदर्शनंमया ॥ वायोस्तुवचनंश्रुत्वाहितमेतदवेत्यच ॥ ९७ ॥ ब्रह्मेच्छाविष्टमतयोवाक्पतिंचततोऽब्रुवन्॥ अज्ञानविबुधास्माकंब्राह्मींदीक्षां
विधत्स्वनः ॥ ९८ ॥ सदिदीक्षयिषुःक्षिप्रममरान्ब्रह्मदीक्षया ॥ वेदोक्तेनविधानेनदीक्षयामासतान्गुरुः ॥ ९९ ॥ विनीतवेषाःप्रणताअंतेवासित्वमा
ययुः ॥ ब्रह्मप्रसादंसंप्राप्ताःपौष्करंज्ञानमीरितम् ॥ १०० ॥यज्ञंचकारविधिनाधिषणोऽध्वर्युसत्तमः ॥ पद्मंकृत्वामृणालाढ्यंपद्मदीक्षाप्रयोगतः ॥ १ ॥
अनुजग्राहदेवांस्तान्सुरेच्छाप्रेरितोमुनिः ॥ तेभ्योददौविवेकिभ्यःसवेदोक्तावधानवित् ॥ २ ॥ दीक्षांवैविस्मयंत्यक्त्वाबृहस्पतिरुदारधीः ॥ एक
मग्निंचसंस्कृत्यमहात्मात्रिदिवौकसाम् ॥ ३ ॥ प्रादादांगिरसस्तुष्टोजाप्यंवदोदितंतुयत् ॥ त्रिसुपर्णंत्रिमधुचपावमानींचपावनीम् ॥ ४ ॥ सहिजा
प्यादिकंसर्वमशिक्षयदुदारधीः ॥ आपोहिष्ठेतियत्स्नानंब्राह्मंतत्परिपठ्यते ॥ ५ ॥ पापघ्नंदुष्टशमनंपुष्टिश्रीबलवर्धनम् ॥ सिद्धिदंकीर्तिदंचैवकलि
कल्मषनाशनम्॥६ ॥ तस्मात्सर्वप्रयत्नेनब्राह्मंस्नानंसमाचरेत् ॥ कुर्वंतोमौनिनोदांतादीक्षिताःक्षपितेंद्रियाः ॥ ७ ॥ सर्वेकमंडलुयुतामुक्तकक्षाक्षमा
लिनः ॥ दंडिनश्चीरवस्त्राश्चजटाभिरतिशोभिताः ॥ ८ ॥ स्नानाचारासनरताःप्रयतध्यानधारिणः ॥ मनोब्रह्मणिसंयोज्यनियताहारकांक्षिणः ॥
॥ ९ ॥ अतिष्ठन्दर्शनालापसंगध्यानविवर्जिताः ॥ एवंव्रतधराःसर्वेत्रिकालंस्नानकारिणः ॥ ११० ॥ भक्त्यापरमयायुक्ताविधिनापरमेणच ॥ काले
नमहताध्यानादेवज्ञानमनोगताः ॥ ११ ॥ ब्रह्मध्यानाग्निनिर्दग्धायदाशुद्धैकमानसाः ॥ आविर्बभूवभगवान्सर्वेषांदृष्टिगोचरः ॥ १२ ॥ तेजसाप्या
यितास्तस्यबभूवुर्भ्रांतचेतसः ॥ ततोऽवलंब्यतेधैर्यमिष्टंदेवंयथाविधि ॥ १३ ॥ षडंगवेदयोगेनहृष्टचित्तास्तुतत्पराः ॥ शिरोगतैरंजलिभिःशिरोभिश्च
महींगताः ॥ १४ ॥ तुष्टुवुःसृष्टिकर्त्तारंस्थितिकर्तारमीश्वरम् ॥ देवाऊचुः ॥ ब्रह्मणेब्रह्मदेहायब्रह्मण्यायाजितायच ॥ १५ ॥ नमस्कुर्मःसुनियताःक्रतु
वेदप्रदायिने ॥ लोकानुकंपिनेदेवसृष्टिरूपायवैनमः ॥ १६ ॥ ॥ भक्तानुकंपिनेऽत्यर्थंवेदजाप्यस्तुतायच ॥ बहुरूपस्वरूपायरूपाणांशतधारिणे ॥
॥ १७ ॥ सावित्रिपतयेदेवगायत्रीपतयेनमः ॥ पद्मासनायपद्मायपद्मवक्रायतेनमः ॥ १८ ॥ वरदायवराहायकूर्मायचमृगायच ॥ जटामुकुटयुक्ता
यस्त्रुवस्त्रुचनिधारिणे॥१९॥मृगांकमृगधर्मायधर्मनेत्रायतेनमः ॥ विश्वनाम्नेऽथविश्वायविश्वेशायनमोनमः॥१२०॥धर्मनेत्रत्राणमस्मादधिकंकर्तुमर्हसि॥

वाङ्मनःकायभावैस्त्वांप्रपन्नास्स्मः पितामह ॥ २१ ॥ एवंस्तुतस्तदादेवैर्ब्रह्माब्रह्मविदां वरः ॥ प्रदास्यामिस्मृतोबाढममोघंदर्शनंहिवः ॥ २२ ॥
ब्रुवंतुवांछितंपुत्राःप्रदास्यामिवरान्वरान् ॥ एवमुक्ताभगवतादेवावचनमब्रुवन् ॥ २३ ॥ एषएवाद्यभगवन्सुपर्याप्तोमहान्वरः ॥ जनितोनःसुश
ब्दोऽयंकमलंक्षिपतात्वया ॥ २४ ॥ किमर्थंकंपिताभूमिर्लोकाश्चाकुलिताःकृताः ॥ नैतन्निरर्थकंदेवउच्यतामत्रकारणम् ॥ २५ ॥ ब्रह्मोवाच ॥
युष्मद्धितार्थमेतद्वैपद्मंविनिहितंमया ॥ देवतानांचरक्षार्थंश्रूयतामत्रकारणम् ॥ २६ ॥ असुरोवज्रनाभोऽयंबालजीवापहारकः ॥ अवस्थितस्त्वव
ष्टभ्यरसातलतलाश्रयम् ॥ २७ ॥ युष्मदागमनंज्ञात्वातपस्थान्निहितायुधान् ॥ हंतुकामोदुराचारःसेंद्रानपिदिवौकसः ॥ २८ ॥ घातःकमलपा
तेनमयातस्यविनिर्मितः ॥ सराज्यैश्वर्यदर्पिष्ठस्तेनासौनिहतोमया ॥ २९ ॥ लोकेऽस्मिन्समयेभक्ताब्राह्मणावेदपारगाः ॥ मैवतेदुर्गतिंयांतुल
भंतांसुगतिंपुनः ॥ १३० ॥ देवानांदानवानांचमनुष्योरगरक्षसाम् ॥ भूतग्रामस्यसर्वस्यसमोऽस्मित्रिदिवौकसः ॥ ३१ ॥ युष्मद्धितार्थंपा
पोऽसौमयामंत्रेणघातितः ॥ प्राप्तःपुण्यकृतांल्लोकान्कमलस्यास्यदर्शनात् ॥ ३२ ॥ यन्मयापद्ममुक्तंतुतेनेदंपुष्करंभुवि ॥ ख्यातंभविष्यतेतीर्थंपाव
नंपुण्यदंमहत् ॥ ३३ ॥ पृथिव्यांसर्वजंतूनाम्पुण्यदंपरिपठ्यते ॥ कृतोह्यनुग्रहोदेवाभक्तानांभक्तिमिच्छताम् ॥ ३४ ॥ वनेऽस्मिन्नित्यवासेनवृक्षैरभ्य
र्थितेनच ॥ महाकालोवनेऽत्रागादागतस्यममानघाः ॥ ३५ ॥ तपस्यतांचभवतांमहज्ज्ञानंप्रदर्शितम् ॥ कुरुध्वंहंदयेदेवाःस्वार्थंचैवपरार्थकम्
॥ ३६ ॥ भवद्भिर्दर्शनीयंतुनानारूपधरैर्भुवि ॥ द्विषन्वैब्राह्मनिनंविप्रंपापेनैवार्दितोनरः ॥ ३७ ॥ नविमुच्येतपापेनजन्मकोटिशतैरपि ॥ वेदांग
पारगंविप्रंनहन्यान्नचदूषयेत ॥ ३८ ॥ एकस्मिन्निहतेयस्मात्कोटिर्भवतिघातिता ॥ एकंवेदांतगंविप्रंभोजयेच्छ्रद्धयान्वितः ॥ ३९ ॥ तस्यभु
क्ताभवेत्कोटिर्विप्राणांनात्रसंशयः ॥ यःपात्रपूरणींभिक्षांयतीनांतुप्रयच्छति ॥ १४० ॥ विमुक्तःसर्वपापेभ्योनासौदुर्गतिमाप्नुयात् ॥ यथाहंसर्व
देवानांज्येष्ठःश्रेष्ठःपितामहः ॥ ४१ ॥ ॥ तथाज्ञानीसदापूज्योनिर्ममोनिष्परिग्रहः ॥ संसारबंधमोक्षार्थंब्रह्मगुप्तमिदंव्रतम् ॥ ४२ ॥ मयाप्रणीतंवि
प्राणामपुनर्भवकारणम् ॥ अग्निहोत्रमुपादाययस्त्यजेदजितेंद्रियः ॥ ४३ ॥ रौरवंसप्रयात्याशुप्रणीतोयमकिंकरैः ॥ लोकयात्रावितंडश्चक्षुद्रं
कर्मकरोतियः ॥ ४४ ॥ सरागचित्तःशृंगारीनारीजनधनप्रियः ॥ एकभोजीसुमिष्टाशीकृषिवाणिज्यसेवकः ॥ ४५ ॥ अवेदोवेदनिन्दीचपरभार्यां
चसेवते ॥ इत्यादिदोषदुष्टोयस्तस्यसंभाषणादपि ॥ ४६ ॥ नरोनरकगामीस्याद्यश्चसद्व्रतदूषकः ॥ असंतुष्टंभिन्नचित्तंदुर्मतिंपापकारिणम् ॥ ४७ ॥
नस्पृशेदंगसंगेनस्पृष्ट्वास्नानेनशुद्ध्यति ॥ एवमुक्त्वासभगवान्ब्रह्मातैरमरैःसह ॥४८॥ क्षेत्रंनिवेशयामासयथावत्कथयामिते ॥ उत्तरेचंद्रनद्यास्तुप्रा

चीयावत्सरस्वती ॥ ४९ ॥ पूर्वंतुनंदनात्कृत्स्नंयावत्कल्पंसपुष्करम् ॥ वेदीह्येषाकृतायज्ञेब्रह्मणालोककारिणा ॥१५०॥ ज्येष्ठंतुप्रथमंज्ञेयंतीर्थंत्रैलो
क्यपावनम् ॥ ख्यातंतद्ब्रह्मदैवत्यंमध्यमंवैष्णवंतथा ॥ ५१ ॥ कनिष्ठंरुद्रदैवत्यंब्रह्मापूर्वमकारयत् ॥ आद्यमेतत्परंक्षेत्रंगुह्यंवेदेषुपठ्यते ॥ ५२ ॥
अरण्यंपुष्कराख्यंतुब्रह्मासन्निहितःप्रभुः ॥ अनुग्रहोभूमिभागेकृतोवैब्रह्मणास्वयम् ॥ ५३ ॥ अनुग्रहार्थंविप्राणांसर्वेषांभूमिचारिणाम् ॥ सुवर्णवज्रपर्यं
तावेदिकांकामहीकृता ॥ ५४ ॥ विचित्रकुट्टिमारत्नैःकारितासर्वशोभना ॥ रमतेतत्रभगवान्ब्रह्मालोकपितामहः ॥ ५५ ॥ विष्णुरुद्रौतथादेवौवस
वोऽप्यश्विनावपि ॥ मरुतश्चमहेंद्रश्चरमंतेचदिवौकसः ॥ ५६ ॥ एतत्तेतथ्यमाख्यातंलोकानुग्रहकारणम् ॥ संहितानुक्रमेणात्रमंत्रैश्चविधिपूर्वकम्
॥ ५७ ॥ वेदान्पठंतियेविप्रागुरुशुश्रूषणेरताः ॥ वसंतिब्रह्मसामीप्येसर्वेतेनानुभाविना ॥ ५८ ॥ ॥ भीष्मउवाच ॥ भगवन्केनविधिनाअर
ण्यंपुष्करेनरैः॥ ब्रह्मलोकमभीप्सद्भिर्वस्तव्यंक्षेत्रवासिभिः ॥ ५९ ॥ किंमनुष्यैरुतस्त्रीभिरुतवर्णाश्रमान्वितैः ॥ वसद्भिःकिमनुष्ठेयमेतत्सर्वंब्रवी
हिमे ॥ ॥ १६० ॥ पुलस्त्यउवाच ॥ ॥ नरैःस्त्रीभिश्चवस्तव्यंवर्णाश्रमनिवासिभिः ॥ स्वधर्माचारनिरतैर्दंभमोहविवर्जितैः ॥ ६१ ॥ कर्मणामनसा
वाचाब्रह्मभक्तैर्जितेंद्रियैः ॥ अनसूयुभिरक्षुद्रैःसर्वभूतहितेरतैः ॥ ६२ ॥ भीष्म उवाच ॥ किंकुर्वाणोनरःकर्मब्रह्मभक्तस्त्विहोच्यते ॥ कीदृशाब्रह्म
भक्ताश्चस्मृतानॄणांवदस्वमे ॥ ६३ ॥ पुलस्त्यउवाच ॥ त्रिविधाभक्तिरुद्दिष्टामनोवाक्कायसंभवा ॥ लौकिकीवैदिकीचापिभवेदाध्यात्मिकी
तथा ॥ ६४ ॥ ध्यानधारणयाबुद्ध्यावेदार्थस्मरणेहियत् ॥ ब्रह्मप्रीतिकरीचैषामानसीभक्तिरुच्यते ॥ ६५ ॥ मंत्रवेदनमस्कारैरग्निश्राद्धादिचिंतनैः ॥
जाप्यैश्चावश्यकैश्चैववाचिकीभक्तिरिष्यते ॥ ६६ ॥ व्रतोपवासनियतैश्चित्तेंद्रियनिरोधिभिः ॥ कृच्छ्रैःसांतपनैश्चान्यैस्तथाचांद्रायणादिभिः
॥ ६७ ॥ ब्रह्मकृच्छ्रोपवासैश्चतथाचान्यैःशुभव्रतैः ॥ कायिकीभक्तिराख्यातात्रिविधातुद्विजन्मनाम् ॥६८॥ गोघृतक्षीरदधिभिःरत्नदीपकुशोदकैः ॥
गंधैर्माल्यैश्चविविधैर्धातुभिश्चोपपादितैः ॥ ६९ ॥ घृतगुग्गुलुधूपैश्चकृष्णागरुसुगंधिभिः ॥ भूषणैर्हेमरत्नाढ्यैश्चित्राभिः स्रग्भिरेवच ॥ १७० ॥
नृत्यवादित्रगीतैश्चसर्वरत्नोपहारकैः ॥ भक्ष्यभोज्यान्नपानैश्चयापूजाक्रियतेनरैः ॥ ७१ ॥ पितामहंसमुद्दिश्यभक्तिस्सालौकिकीमता ॥
वेदमंत्रहविर्योगैर्भक्तिर्यावैदिकीमता ॥ ७२ ॥ दर्शेवापौर्णमास्यांवाकर्तव्यमग्निहोत्रकम् ॥ प्रशस्तंदक्षिणादानंपुरोडाशंचरुक्रिया ॥ ७३ ॥
इष्टिर्धृतिःसोमपानांयज्ञीयंकर्मसर्वशः ॥ ऋग्यजुःसामजाप्यानिसंहिताध्ययनानिच ॥ ७४ ॥ क्रियंतेविधिमुद्दिश्यसाभक्तिर्वैदिकीष्यते ॥ अग्निभू
म्यनिलाकाशांबुनिशाकरभास्करम् ॥ ७५ ॥ समुद्दिश्यकृतंकर्मतत्सर्वंब्रह्मदैवतम् ॥ आध्यात्मिकीतुद्विविधाब्रह्मभक्तिः स्थितानृप ॥ ७६ ॥संख्या

स्यायोगजाचान्याविभागंतत्रमेशृणु ॥ चतुर्विंशतितत्त्वानिप्रधानादीनिसंख्यया ॥७७॥ अचेतनानिभोग्यानिपुरुषःपचविंशकः ॥ चेतनःपुरुषो भोक्तानकर्त्तातस्यकर्मणः ॥७८॥ आत्मानित्योऽव्ययश्चैवअधिष्ठाताप्रयोजकः ॥ अव्यक्तः पुरुषोनित्यः कारणंचपितामहः ॥७९॥ तत्त्वसर्गोभावस र्गोभूतसर्गश्चतत्त्वतः ॥ संख्ययापरिसंख्यायप्रधानंचगुणात्मकम् ॥ १८०॥ साधर्म्यमानमैश्वर्यंप्रधानंचविधर्मिच ॥ कारणत्वंचब्रह्मत्वंकाम्यत्वमि दमुच्यते ॥ ८१ ॥ प्रयोज्यत्वंप्रधानस्यवैधर्म्यमिदमुच्यते ॥ सर्वत्रकर्तृस्याद्ब्रह्मपुरुषस्याप्यकर्तृता ॥८२॥ चेतनत्वंप्रधानेचसाधर्म्यमिदमुच्यते ॥ तत्त्वांतरंचतत्त्वानांकर्मकारणमेवच ॥८३॥ प्रयोजनंचवैयोज्यमैश्वर्यंतत्त्वसंख्यया ॥ संख्यास्तीत्युच्यतेप्राज्ञैर्विनिश्चित्यार्थचिंतकः ॥८४॥ इतितत्त्व स्यसंभारंतत्त्वसंख्याचतत्त्वतः ॥ ब्रह्मतत्त्वाधिकंचापिश्रुत्वातत्त्वंविदुर्बुधाः ॥ ८५ ॥ सांख्यकृद्भक्तिरेषाचसद्भिराध्यात्मिकीकृता ॥ योगजामपिभक्ता नांशृणुभक्तिपितामहे ॥८६॥ प्राणायामपरोनित्यंध्यानवान्नियतेंद्रियः ॥ भैक्ष्यभक्षीव्रतीवापिसर्वप्रत्याहृतेंद्रियः ॥८७॥ धारणंहृदयेकुर्याद्ध्यायमा नः प्रजेश्वरम् ॥ हृत्पद्मकर्णिकासीनंरक्तवक्त्रंसुलोचनम् ॥ ८८ ॥ परितोद्योतितमुखंब्रह्मसूत्रकटीतटम् ॥ चतुर्वक्त्रंचतुर्बाहुंवरदाभयहस्तकम् ॥ ८९ ॥ योगजामानसीसिद्धिर्ब्रह्मभक्तिःपरास्मृता ॥ यएवंभक्तिमान्देवेब्रह्मभक्तः सउच्यते ॥१९०॥ वृत्तिंचशृणुराजेंद्रयास्मृताक्षेत्रवासिनाम् ॥ स्वयंदेवेनवि प्राणांविष्णवादीनांसमागमे ॥ ९१ ॥ कथिताविस्तरात्पूर्वंसर्वेषांतत्रसन्निधौ ॥ निर्ममानिरहंकारानिःसंगानिष्परिग्रहाः ॥ .९२ ॥ बंधुवर्गेचनिःस्ने हास्समलोष्टाश्मकांचनाः ॥ भूतानांकर्मभिर्नित्यैर्विविधैरभयप्रदाः ॥९३॥प्राणायामपरानित्यंपरध्यानपरायणाः ॥ याजिनःशुचयोनित्यंयतिधर्मप यणाः ॥ ॥९४॥ सांख्ययोगविधिज्ञाश्चधर्मज्ञाश्छिन्नसंशयाः ॥ यजंतेविधिनानेनयेविप्राः क्षेत्रवासिनः ॥९५॥ अरण्येपौष्करेतेषांभूतानांसंतफलंशृ णु ॥ व्रजंतितेसुदुष्प्रापंब्रह्मसायुज्यमक्षयम् ॥ ९६ ॥ यत्प्राप्यनपुनर्जन्ममलभन्तेमृत्युदायकम् ॥ पुनरावर्तनंहित्वाब्राह्मींविद्यांसमाश्रितः ॥९७॥ पुन रावृत्तिरन्येषांप्रपंचाश्रमवासिनाम् ॥ गार्हस्थ्यविधिमाश्रित्यषट्कर्मनिरतःसदा ॥ ९८ ॥ जुहोतिविधिनासम्यङ्मंत्रैर्यज्ञनिमंत्रितः ॥ अधिकंफलमा प्नोतिसर्वदुःखविवर्जितः ॥ ९९ ॥ सर्वलोकेषुचाप्यस्यगतिर्नप्रतिहन्यते ॥ दिव्येनैश्वर्ययोगेनस्वारूढःसपरिग्रहः ॥ २०० ॥ बालसूर्यप्रकाशेनविमा नेनसुवर्चसा ॥ वृतः स्त्रीणांसहस्रैस्तुस्वच्छंदगमनालयः ॥ १ ॥ विचरत्यानिवार्येणसर्वलोकान्यदृच्छया ॥ स्पृहणीयतमः पुंसांसर्वधर्मोत्तमोधनी ॥ २ ॥ स्वर्गच्च्युतः प्रजायेत कुलेमहतिरूपवान् ॥ धर्मज्ञोधर्मभक्तश्चसर्वविद्यार्थपारगः ॥ ३ ॥ तथैवब्रह्मचर्येणगुरुशुश्रूषणेनच ॥ वेदाध्ययनसंयुक्तो भैक्ष्यवृत्तिर्जितेन्द्रियः ॥ ४ ॥ नित्यंसत्यव्रतेयुक्तः स्वधर्मेष्वप्रमादवान् ॥ सर्वकामसमृद्धेनसर्वकामावलंबिना ॥ ५ ॥ सूर्येणेवद्वितीयेनविमानेनानि

वारितः ॥ गुह्यकानामब्रह्माख्यगणाः परमसंमताः ॥ ६ ॥ अप्रमेयबलैश्वर्यादेवदानपूजिताः ॥ तषांससमतांयातितुल्यैश्वर्यसमन्वितः ॥७॥ देवदानव
मर्त्येषुभवत्यनियतायुधः ॥ वर्षकोटिसहस्राणिवर्षकोटिशतानिच ॥८॥ एवमश्वर्यसंयुक्तोविष्णुलोकेमहीयते ॥ उषित्वासौविभूत्यैवंयदाप्रच्यवतेपुनः
॥ ९ ॥ विष्णुलोकात्स्वकृत्येनस्वर्गस्थानेषुजायते ॥ २१० ॥ पुष्करारण्यमासाद्यब्रह्मचर्याश्रमे स्थतः ॥ अभ्यासेनतुवेदानांवसतम्रियतेऽपिवा
॥११॥ मृतोऽसौयातिदिव्येनविमानेनस्वंतेजसा ॥ पूर्णचंद्रप्रकाशेनशशिवत्प्रियदर्शनः ॥१२॥ रुद्रलोकंसमासाद्यगुह्यकैः सहमोदते॥ऐश्वर्यंमहदाप्नो
तिसर्वस्यजगतः प्रभुः ॥ १३ ॥ भुक्त्वायुगसहस्राणिरुद्रलोकेमहीयते ॥ प्रच्युतस्तुपुनस्तस्माद्रुद्रलोकात्क्रमेणतु ॥ १४ ॥ नित्यंप्रमुदितस्तत्रभुक्त्वा
सुखमनामयम् ॥ द्विजानांसदनेदिव्यं कुलेमहतिजायते ॥ १५ ॥ मानुषेषुसधर्म्मात्मारू [illegible]पोवाक्पतिर्भवेत् ॥ स्पृहणीयवपुःस्त्रीणाम्महाभोगपति
र्बली ॥१६॥ वानप्रस्थसमाचारोग्राम्योपाधिविवर्जितः॥ सर्वलोकेषुचाप्यस्यगतिर्नप्रतिहन्यते॥१७॥ शीर्णपर्णफलाहारःपुष्पमूलांबुभोजनः ॥ कपो
तेनाश्मकुट्टेनदंतोलूखलिकेनच ॥१८॥ वृत्त्युपायेनजीवेतचीरवल्कलवाससा ॥जटीत्रिषवणस्नायीत्यक्तदोषस्तुदंडवान् ॥१९ ॥ कृच्छ्रव्रतपरोयस्तुश्वप
चोर्ध्वदिवापरः ॥ जलशायीपंचतपावर्षास्वभ्रावगाहकः ॥ २२० ॥ कीटकंटकपाषाणभूम्यांतुशयनंतथा ॥ स्थानंवीरासनंरतः संविभागीदृढव्रतः
॥२१॥ अरण्यौषधिभोक्ताचसर्वभूताभयप्रदः ॥नित्यंधर्मार्जनरतोजितक्रोधोजितेंद्रियः ॥ २२ ॥ ब्रह्मभक्तःक्षेत्रवासीपुष्करेवसतेमुनिः ॥ सर्वसंगपरि
त्यागीस्वारामोविगतस्पृहः ॥ २३॥ यश्चात्रवसतेभीष्मशृणुतस्यापियागतिः॥ तरुणार्कप्रकाशेनवेदिकास्तंभशोभिना ॥ २४॥ ब्रह्मभक्तोविमानेनया
तिकामप्रचारिणा ॥ विराजमानोनभसिद्वितीयइवचंद्रमाः ॥ २५ ॥ गीतवादित्रनृत्यज्ञैर्गंधर्वाप्सरसांगणैः ॥ अप्सरोभिःसमायुक्तोवर्षकोटिशतान्य
सौ ॥ २६ ॥ यस्यकस्यापिदेवस्यलोकंयात्यनिवारितः ॥ ब्रह्मणोऽनुग्रहेणैवतत्रतत्रविराजते ॥ २७ ॥ ब्रह्मलोकाच्च्युतश्चापिविष्णुलोकंसगच्छति ॥
विष्णुलोकात्परिभ्रष्टोरुद्रलोकंसगच्छति ॥२८॥ तस्मादपिच्युतः स्थानाद्द्वीपेषुसहिजायते ॥ स्वर्गेषुचतथान्येषुभोगान्भुक्त्वायथेप्सितान् ॥ २९ ॥
भुक्त्वैश्वर्यंततस्तेषुपुनर्मर्त्येषुजायत ॥ राजावाराजपुत्रोवाजायतेधनवान्सुखी ॥ २३० ॥ सुरूपःसुभगः कांतःकीर्तिमान्भक्तिभावितः ॥ ब्राह्मणाः
क्षत्रियावैश्याः शूद्रावाक्षेत्रवासिनः ॥ ३१ ॥ स्वधर्मनिरताराजन्सुवृत्ताश्चिरजीविनः ॥ सर्वात्मनाब्रह्मभक्ताभूतानुग्रहकारिणः ॥ ३२ ॥ पुष्करेतुमह्य
क्षेत्रेयेवसंतिमुमुक्षवः ॥ मृतास्ते ब्रह्मभवनंविमानैर्यांतिशोभनैः ॥ ३३ ॥ अप्सरोगणसंघुष्टैःकामगैःकामरूपिभिः ॥ अथवासंप्रदीप्ताग्नौस्वशरीरंजु
होतियः ॥ ३४ ॥ ब्रह्माध्यायीमहासत्वःसब्रह्मभवनंव्रजेत् ॥ ब्रह्मलोकोऽक्षयस्तस्यशाश्वतोविभवैःसह ॥ ३५ ॥ सर्वलोकोत्तमोरम्योभवतीष्टार्थसा

धकः ॥पुष्करेतुमहापुण्येप्राणान्येसलिलेऽत्यजन् ॥ ३६ ॥ तेषामप्यक्षयोभीष्मब्रह्मलोकोमहात्मनाम् ॥ साक्षात्पश्यंतितेदेवंसर्वदुःखविनाशनम्
॥३७॥ सर्वामरयुतंदेवंरुद्रविष्णुगणैर्युतम् ॥ अनाशकेमृताश्शूद्राः पुष्करेतुवनेनराः ॥३८॥ हंसयुक्तैस्ततोयांतिविमानैरर्कसप्रभैः॥नानारत्नसुवर्णाढ्यै
र्दृढैर्गंधाधिवासितैः ॥ ३९ ॥ अनौपम्यगुणैरन्यरप्सरोगीतनादितैः॥ पताकाध्वजविन्यस्तैर्नानाघण्टानिनादितैः ॥ २४० ॥ बह्वाश्चर्यसमोपेतैः
क्रीडाविज्ञानशालिभिः ॥ सुप्रभैर्गुणसंपन्नैर्मयूरवरवाहिभिः ॥ ४१ ॥ ब्रह्मलोकेनराधीरारमंतेऽनाशकेमृताः ॥ तत्रोषित्वाचिरंकालंभुक्त्वाभो
गान्यथेप्सितान् ॥ ४२ ॥ धनीविप्रकुलेभोगीजायतेमर्त्यमागतः ॥ कारीषींसाधयेद्यस्तुपुष्करेतुवनेनरः ॥ ४३ ॥ सर्वलोकान्परित्य
ज्यब्रह्मलोकंसगच्छति ॥ ब्रह्मलोकेवसेत्तावद्यावत्कल्पक्षयोभवेत् ॥ ४४ ॥ नवपश्यतिमर्त्येहिक्लिश्यमानंस्वकर्मभिः ॥ गतिस्तस्याप्रतिह
तातिर्यगूर्ध्वमधस्तथा ॥ ४५ ॥ सपूज्यः सर्वलोकेषुयशोविस्तारयन्वशी ॥ सदाचारविधिप्रज्ञःसर्वेंद्रियमनोहरः ॥ ४६ ॥ नृत्यवादित्र
गीतज्ञः सुभगः प्रियदर्शनः ॥ नित्यमम्लानकुसुमोदिव्याभरणभूषितः ॥ ४७ ॥ नीलोत्पलदलश्यामानीलकुञ्चितमूर्द्धजः ॥ अजघन्याः
सुमध्याश्चसर्वसौभाग्यपूरिताः॥ ४८ ॥ सर्वैश्वर्यगुणोपेतायौवनेनातिगर्विताः॥ स्त्रियःसेवंतितत्रस्थाःशयनेरमयंतिच ॥ ४९ ॥ वीणावेणुनिनादै
श्चसुप्तःसंप्रतिबुध्यत ॥ महोत्सवसुखंभुंक्तेदुष्प्राप्यमकृतात्मभिः ॥२५०॥ प्रसादाद्देवदेवस्यब्रह्मणःशुभकारिणः ॥ भीष्मउवाच ॥ आचाराःपरमाध
र्माःक्षेत्रधर्मपरायणाः ॥ ५१ ॥ स्वधर्माचाररनिरताजितक्रोधाजितेंद्रियाः ॥ ब्रह्मलोकंव्रजंतीतिनैतच्चित्रंमतंमम ॥ ५२ ॥ असंशयंचगच्छंतिलोका
नन्यानपिद्विजाः॥ विनापद्मोपवासेनतथैवानियमेनच ॥५३॥ स्त्रियोम्लेछाश्चशूद्राश्चपक्षिणःपशवोमृगाः ॥ मूकाजडान्धबधिरास्तपोनियमवर्जिताः
॥ ५४ ॥ तेषांवदगतिंविप्रपुष्करेयेत्ववस्थिताः ॥ पुलस्त्यउवाच ॥ स्त्रियोम्लेच्छाश्चशूद्राश्चपशवःपक्षिणोमृगाः ॥ ५५॥ पुष्करेतुमृताभीष्मब्रह्म
लोकंव्रजंतिते ॥ शरीरैर्दिव्यरूपैस्तुविमानैरविसप्रभः ॥५६॥ दिव्यव्यूहसमायुक्तैःसुवर्णवरकेतनैः ॥ सुवर्णवज्रसोपानमणिस्तंभविभूषितैः ॥ ५७ ॥
सर्वकामोपभोगाढ्यैःकामगैःकामरूपिभिः ॥ नानारसाढ्यंगच्छंतिस्त्रीसहस्रसमाकुलाः ॥ ५८ ॥ ब्रह्मलोकंमहात्मानोलोकानन्यान्यथेप्सितान् ॥
ब्रह्मलोकाच्च्युताश्चापिकमाद्दीपेषुयांतिते ॥ ५९ ॥ कुलेमहतिविस्तीर्णेधनीभवतिसद्विजः ॥ तिर्यग्योनिगतायेतुसर्पकीटपिपीलिकाः ॥ ॥ २६० ॥
स्थलजाजलजाश्चैवस्वेदांडोद्भिज्जरायुजाः ॥ सकामावाप्यकामावापुष्करेतुवनेमृताः ॥६१॥ सूर्यप्रभविमानस्थाब्रह्मलोकंप्रयांतिते ॥ कलौयुगेमहा
घोरेप्रजाःपापसमीरिताः ॥ ६२ ॥ नान्येनास्मिन्नुपायेनधर्मःस्वर्गश्चलभ्यते ॥ वसंतिपुष्करेयेतुब्रह्मार्चनरतानराः ॥ ६३ ॥ कलौयुगेकृतार्थास्ते

क्लिश्यंत्यन्येनिरर्थकाः ॥ रात्रौकरोतियत्पापंनरःपंचभिरिंद्रियः ॥ ६४ ॥ कर्मणामनसावाचाकामक्रोधवशानुगः ॥ प्रातःसवनमासाद्यपुष्करेतुपि
तामहम् ॥ ६५॥ अभिगम्यशुचिर्भूत्त्वातस्मात्पापात्प्रमुच्यते ॥ अर्कस्योदयमारभ्ययावद्दर्शनमूर्ध्वगम् ॥६६॥ मानसाख्येप्रसंचिंत्यब्रह्मयोगेहरेदघ
म् ॥ दृष्ट्वाविरिंचिमध्याह्नेनरःपापात्प्रमुच्यते ॥ ६७ ॥ मध्याह्नास्तमयान्तंयदिंद्रियैःपापमाचरेत् ॥ पितामहस्यसंध्यायांदर्शनादेवमुच्यते ॥ ६८ ॥
शब्दादीन्विषयान्सर्वान्भुंजानोऽपिसकामतः ॥ यःपुष्करेब्रह्मभक्तोनिवसेत्तपसिस्थितः ॥ ६९ ॥ शीर्णपर्णाशनोपायः फलमूलाम्बुभोजनः ॥
वृक्षमूलेऽश्मकूटे वा सर्वदातपतेत्तपः ॥ २७० ॥ पुष्करारण्यमध्यस्थोमिष्टान्नास्वादभोजनः ॥ त्रिकालमपिभुंजानोवायुभक्षसमोमतः ॥ ७१ ॥
वसंतिपुष्करेयेतुनराःसुकृतकर्मिणः ॥ तलभंतेमहाभोगान्क्षेत्रस्यास्यप्रभावतः ॥ ७२ ॥ यथामहोदधेस्तुल्योनचान्योऽस्तिजलाशयः ॥
तथावैपुष्करस्यापिसमंतीर्थंनविद्यते ॥ ७३ ॥ देवाधिकोयथाब्रह्मायथानान्योऽधिकोभवेत् ॥ पुष्करारण्यसदृशंतीर्थंनास्त्यधिकंमुणेः ॥ ७४ ॥
अथतेऽन्यान्प्रवक्ष्यामियेऽस्मिन्क्षेत्रेव्यवस्थिताः ॥ ७५ ॥ विष्णुनासहिताःसर्वइंद्राद्याश्चदिवौकसः ॥ गजवक्त्रःकुमारश्चरेवंतःसदिवाकरः ॥ ७६ ॥
शिवदूतीतथादेवीकन्याक्षेमंकरीवरा ॥ स्थिताहितार्थंजगतोब्रह्मणोनिलयसदा ॥ ७७ ॥ अलंतपोभिर्नियमैःसुक्रियार्चनकारिणाम् ॥ व्रतो
पवासकर्माणिकृत्वान्यत्रमहांत्यपि ॥ ७८ ॥ ज्येष्ठेतुपुष्करारण्येयस्तिष्ठतिनिरुद्यमः ॥ लभतेसर्वकामांस्त्वंयोऽत्रैवास्तेद्विजःसदा ॥ ७९ ॥
पितामहसमंयातिस्थानंपरममव्ययम् ॥ कृतेद्वादशभिर्वर्षैस्त्रेतायांहायनेनतु ॥ मासेनद्वापरेभीष्मअहोरात्रेणतत्कलौ ॥ २८० ॥ फलंसंप्राप्यते
लोकैःक्षेत्रेऽस्मिंस्तीर्थवासिभिः ॥ इत्येवंदेवदेवेनपुरोक्तंब्रह्मणामम ॥ ८१ ॥ नातःपरतरंकिंचित्क्षेत्रमस्तीहभूतले ॥ तस्मात्सर्वप्रयत्नेनारण्य
मेतत्समाश्रयेत् ॥ ८२ ॥ गृहस्थोब्रह्मचारीचवानप्रस्थोऽथभिक्षुकः ॥ यथोक्तकारिणःसर्वेगच्छंतिपरमांगतिम् ॥ ८३ ॥ एकस्मिन्नाश्रमेधर्मं
योऽनुतिष्ठेद्यथाविधि ॥ अकामद्वेषसंयुक्तःसपरत्रमहीयते ॥ ८४ ॥ चतुष्पदाहिनिःश्रणीब्रह्मणैषाप्रतिष्ठिता ॥ एतामाश्रित्यनिःश्रेणींब्रह्मलोकेम
हीयते ॥ ८५ ॥ आयुषोऽपिचतुर्भागंब्रह्मचार्यनसूयकः ॥ गुरौवागुरुपुत्रेवावसेद्धर्मार्थकोविदः ॥ ८६ ॥ कर्मातिरेकेणगुरोरध्येतव्यंबुभूषता ॥
दक्षिणानांप्रदायीस्यादाहूतोगुरुमाश्रयेत् ॥ ८७ ॥ जघन्यशायीपूर्वंस्यादुत्थायीगुरुवेश्मनि ॥ यच्चाशिष्येणकर्त्तव्यंकार्यमासेवनादिकम् ॥ ८८ ॥
कृतमित्येवतत्सर्वंकृत्वातिष्ठेत्तुपार्श्वतः ॥ किंकरःसर्वकारीचसर्वकर्मसुकोविदः ॥ ८९ ॥ शुचिर्दक्षोगुणोपेतोब्रूयादिष्टमथोत्तरम् ॥ चक्षुषागुरु
मव्यग्रोनिरीक्षेतजितेंद्रियः ॥ २९० ॥ नाभुक्तवतिचाश्नीयादपीतवतिनोपिबेत् ॥ नतिष्ठतितथासीतनसुप्तेनैवसंविशेत ॥ ९१ ॥ उत्तानाभ्यांच

पाणिभ्यांपादावस्यमृदुस्पृशेत ॥ दक्षिणंदक्षिणेनैवसव्यंसव्येनपीडयेत् ॥ ९२ ॥ अभिवाद्यगुरुंब्रूयादभिधांस्वांब्रुवन्निति ॥ इदंकरिष्येभगवन्निदं चापिमयाकृतम् ॥ ९३ ॥ इतिसर्वंचविज्ञाप्यनिवेद्यगुरवेधनम् ॥ कुर्यात्कृतंचतत्सर्वमाख्येयंगुरवेपुनः ॥ ९४ ॥ यांस्तुगंधांत्ररसान्वापिब्रह्मचा रीनसेवते ॥ सेवेततान्समावृत्यइतिधर्मेषुनिश्चयः ॥ ९५ ॥ येकेचिद्विस्तरेणोक्तानियमाब्रह्मचारिणः ॥ तान्सर्वाननुगृह्णीयाद्भक्तशिशष्यश्चवैगुरोः ॥ ॥ ९६॥ सएवंगुरवेप्रीतिमुपहृत्ययथाबलम् ॥ अग्राम्यंष्वाश्रमेष्वेवंशिष्योवर्तेतकर्मणा॥९७॥वेदंवेदौतथावेदान्वेदार्थांश्चतथाद्विजः ॥भिक्षाभुगप्यधः शायीसमधीत्यगुरोर्मुखात् ॥ ९८ ॥ वेदव्रतोपयोगीचचतुर्थांशेनयोगतः ॥ गुरवेदक्षिणांदत्वासमावर्तेद्यथाविधि ॥ ९९ ॥ धर्मान्वितैर्युतोदारैरग्नी नावाद्यपूजयेत् ॥ द्वितीयमायुषोभागंगृहमेधीसमाचरेत् ॥ २००॥ गृहस्थवृत्तयःपूर्वंचतस्रोमुनिभिःकृताः॥कुशूलधान्याप्रथमाकुंभीधान्याद्वितीयका ॥ १ ॥ अश्वस्तनीतृतीयोक्ताकापोत्यथचतुर्थिका ॥ तासांपरापराश्रेष्ठाधर्मतालोकजित्तमा ॥ २ ॥ षट्कर्मवर्त्तकस्त्वेकस्त्रिभिरन्यःप्रवर्तते ॥ द्वाभ्यां चैवचतुर्थस्तुद्विजःसब्रह्मणिस्थितः ॥ ३ ॥ गृहमेधिव्रतादन्यन्महत्तीर्थंनचक्षते ॥ नात्मार्थेपाचयेदन्नंनवृथाघातयेत्पशुम् ॥ ४ ॥ प्राणीवायदिवाप्रा णीसंस्काराद्यजुमर्हति ॥ नदिवाप्रस्वपेज्जातुनपूर्वापररात्रयोः ॥५॥ नभुंजीतांतराकालेनानृतंतुवदेदिह ॥ नास्यानश्नन्वसेद्विप्रोगृहेकश्चिदपूजितः॥ ॥ ६ ॥ तथास्यातिथयःपूज्याहव्यकव्यवहाःस्मृताः ॥ वेदविद्यव्रतस्नाताःश्रोत्रियावेदपारगाः॥७॥स्वकर्मजीविनोदांताःक्रियावंतस्तपस्विनः ॥ तेषां हव्यंचकव्यंचाप्यर्हणार्थंविधीयते ॥ ८ ॥ नश्वरैस्संप्रयातस्यस्वधर्मापगतस्यच ॥ अपविद्धाग्निहोत्रस्यगुरोर्वालीककारिणः ॥ ९ ॥ असत्याभिनि वेशस्यनाधिकारोऽस्तिकव्ययोः ॥ संविभागोऽत्रभूतानांसर्वेषामेवशिष्यते ॥ १० ॥ तथवापचमानेभ्यःप्रदेयंगृहमेधिना ॥ विघसाशीभवेन्नित्यं नित्यंचामृतभोजनः ॥११॥ अमृतंयज्ञशेषःस्याद्भोजनंहविषासमम् ॥ संभुक्तशेषंयोऽश्नातितमाहुर्विघसाशिनम् ॥१२॥ स्वदारनिरतोदांतोदक्षोऽत्य र्थंजितेंद्रियः ॥ ऋत्विक्पुरोहिताचार्यमातुलातिथिसंहतः ॥ १३ ॥ वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबंधिबांधवैः ॥ मात्रापित्राचजामात्राभ्रात्रापुत्रेणभार्यया ॥ १४ ॥ दुहित्रादासवर्गेणविवादंनसमाचरेत् ॥ एतान्विमुच्यसंवादान्सर्वपापैःप्रमुच्यते ॥ १५ ॥ एतैर्जितैस्तुजयतिसर्वलोकान्नसंशयः ॥ आचा र्योब्रह्मलोकेशः प्राजापत्यप्रभुः पिता ॥१६॥ अतिथिःसर्वलोकेशऋत्विग्वेदाश्रयःप्रभुः ॥ जामाताप्सरसांलोकेज्ञातयोवैश्वदेविकाः ॥ १७ ॥ संबं धिबांधवादिक्षुपृथिव्यांमातृमातुलौ ॥ वृद्धबालातुराश्चैवआकाशेप्रभविष्णवः ॥ १८ ॥ पुरोधाऋषिलोकेशःसंश्रितास्साध्यलोकपाः ॥ अश्विलोकप तिर्वैद्योभ्रातातुवसुलोकपः ॥ १९ ॥ चंद्रलोकेश्वरीभार्यादुहिताप्सरसांगृहे ॥ भ्राताज्येष्ठःसमः पित्राभार्यापुत्रःस्वकातनुः ॥२२०॥ कायस्थादासवर्गा

श्वदुहिताकृपणंपरम् ॥ तस्मादेतैरधिक्षिप्तःसहेन्नित्यमसंज्वरः ॥ २१ ॥ गृहधर्मरतोविद्वान्धर्मनिष्ठोजितक्रमः ॥ नारभेद्बहुकार्याणिधर्मवान्किंचिदा
रभेत् ॥ २२ ॥ गृहस्थवृत्तयस्तिस्रस्तासांनिःश्रेयसंपरम् ॥ परस्परंतथैवाहुश्चातुराश्रम्यमेवच ॥२३॥ येचोक्तानियमास्तेषांसर्वंकार्यंबुभूषुणा ॥ कुंभ
धान्यैरुञ्छशिलैःकापोतींवृत्तिमाश्रिताः ॥ २४ ॥ यस्मिंश्चतवसंत्यर्थास्तद्राष्ट्रमभिवर्धते ॥ पूर्वापरान्दशपरान्पुनातिचपितामहान् ॥२५॥ गृहस्थवृ
त्तिमप्येतांवर्ततेयोगतव्यथः ॥ सचक्रधरलोकानांसमानाम्प्राप्नुयाद्गतिम् ॥ २६ ॥ जितद्रियाणामथवागतिरेषाविधीयते ॥ स्वर्गलोकोगृहस्थानांप्र
तिष्ठानियतात्मनाम् ॥ २७ ॥ ब्रह्मणाभिहिताश्रेणीह्येषायस्याःप्रमुच्यते ॥ द्वितीयंक्रमशःप्राप्यंस्वर्गलोकेमहीयते ॥२८॥ तृतीयामपिवक्ष्यामिवान
प्रस्थाश्रमंशृणु ॥ गृहस्थस्तुयदापश्येद्वलीपलितमात्मनः ॥२९॥ अपत्यस्यैवचापत्यंवनमेवतदाश्रयेत् ॥ गहस्थव्रतखिन्नानांवानप्रस्थाश्रमौकसाम्
॥३३०॥ श्रूयतांभीष्मभद्रंतेसर्वलोकाश्रयात्मनाम्॥दीक्षापूर्वंनिवृत्तानांपुण्यदेशानिवासिनाम् ॥३१॥ प्रज्ञाबलयुजांपुसांसत्यशौचक्षमावताम् ॥ तृती
यमायुषोभागंवानप्रस्थाश्रमेवसन् ॥ ३२ ॥ तानेवाग्नीन्परिचरेद्यजमानोदिवौकसः ॥ नियतोनियताहारोविष्णुभक्तिप्रसक्तिमान् ॥३३॥ तदाग्निहो
त्रमग्नाणियज्ञांगानिचसर्वशः ॥ अकृष्टंवव्रीहियवंनीवारंविघसानिच ॥ ३४ ॥ ग्रीष्मेहविष्यंप्रायच्छेत्समखेष्वपिपंचसु ॥ वानप्रस्थाश्रमेऽप्येताश्चत
स्रोवृत्तयःस्मृताः ॥ ३५ ॥ सद्यःप्रभक्षकाःकेचित्केचिन्मासिकसंचयान् ॥ वार्षिकान्संचयान्केचित्केचिद्द्वादशवार्षिकान् ॥ ३६ ॥ कुर्वन्त्यति
थिपूजार्थंयज्ञतन्त्रार्थमेवच ॥ अभ्रावकाशावर्षासुहेमंतेजलसंश्रयाः ॥३७॥ ग्रीष्मेपंचाग्नितपसःशरद्यमृतभोजनाः ॥ भूमौविपरिवर्तंतेतिष्ठन्तिप्रपदैरपि
॥३८॥ स्थानासनेचवर्तन्तेवसनेष्वपिसंस्थिते ॥ दंतोलूखलिनःकेचिदश्मकुट्टास्तथापरे ॥ ३९ ॥ शुक्लपक्षेपिबन्त्येकेयवागूंक्वथितांक्वचित् ॥ कृष्ण
पक्षेपिबंत्येकेभुंजतेचयथागमम् ॥३४०॥ मूलैरेकेफलैरेकेजलैरेकेदृढव्रताः ॥ वर्त्तयंतियथान्यायंवैखानसधृतव्रताः ॥ ४१ ॥ एताश्चान्याश्चविविधादी
क्षास्तेषांमनस्विनाम् ॥ चतुर्थश्चौपनिषदाधर्मःसाधारणोमतः ॥ ४२ ॥ वानप्रस्थोगृहस्थश्चसततोऽन्यःप्रवर्त्तते ॥ तस्मिन्नेवयुगेतातविप्रैःसर्वार्थदर्शि
भिः ॥ ४३ ॥ अगस्त्यश्चसप्तर्षयोमधुच्छंदोगवेषणः ॥ सांकृतिःसदिवोभांडिर्यवप्रोथोह्यथर्वणः ॥ ४४ ॥ अहोवीयस्तथाकाम्यःस्थाणुर्मेधातिथिर्बु
धः ॥ मनोवाकःशिनीवाकःशून्यपालोऽकृतव्रणः ॥ ४५ ॥ एतेकर्मसुविद्वांसस्ततःस्वर्गमुपागमन् ॥ एतेप्रत्यक्षधर्माणस्तथायायावरागणाः ॥४६॥ ॥ ४६ ॥
ऋषीणामुग्रतपसांधर्मनैपुण्यदर्शिनाम् ॥ सुरेश्वरंसमाराध्यब्राह्मणावनमाश्रिताः ॥ ४७ ॥ अपास्योपरतामायांब्राह्मणावनमाश्रिताः ॥ अनक्षत्रास्त
थाऽधृष्याहृश्यन्तेज्योतिषंगणाः ॥ ४८ ॥ जरयातुपरिद्यूनाव्याधिनापरिपीडिताः॥चतुर्थंत्वाश्रमंशेषंवानप्रस्थाश्रमाद्ययुः ॥ ४९ ॥ सद्यस्कारीसुनि

र्वाप्यसर्ववेदसदक्षिणान् ॥ आत्मयाजीसौम्यमतिरात्मक्रीडात्मसंश्रयः ॥ २५० ॥ आत्मन्यग्निंसमाधायत्यक्त्वासर्वपरिग्रहम् ॥ सद्यस्कश्चय
जेद्यज्ञानिष्टिंचैवेहसर्वदा ॥ ५१ ॥ सदैवयाजिनांयज्ञमात्मनीज्याप्रवर्त्तते ॥ त्रींश्चैवाग्नीन्यजेत्सम्यगात्मन्येवात्मनाक्षणात् ॥५२॥ प्राणुयाद्येनवा
यच्चतत्प्राश्नीयादकुत्सयन् ॥ केशलोमनखान्यस्येद्वानप्रस्थाश्रमेरतः ॥५३॥ आश्रमादाश्रमंसद्यःपूतोगच्छतिकर्मभिः ॥ अभयंसर्वभूतेभ्योयोदत्वा
प्रव्रजेद्द्विजः ॥ लोकास्तेजोमयास्तस्यप्रेत्यचानन्त्यमश्नुते ॥ ५४ ॥ सुशीलवृत्तोव्यपनीतकल्मषोनचेहनामुत्रचरन्त्यमीहते ॥ अरोषमोहोगतसंधिवि
ग्रहः सचेदुदासीनवदात्मचिंतया ॥५५॥ यमेषुचैवान्यगतेषुनव्यथःस्वशास्त्रशून्योहृदिनात्मविभ्रमः ॥ भवेद्यथेष्टागतिरात्मयाजिनिनिस्संशयेधर्मपरे
जितेन्द्रिये ॥५६॥ अतःपरंश्रेष्ठमतीवसद्गुणैरधिष्ठितंत्रीनतिवर्त्यचाश्रमान् ॥ चतुर्थमुक्तंपरमाश्रमंशृणुप्रकीर्त्यमानंपरमंपरायणम् ॥ ५७॥ प्राप्यसंस्कारमे
ताभ्यामाश्रमाभ्यांततःपरम् ॥ यत्कार्यंपरमात्मार्थंतत्त्वमेकमनाःशृणु ॥ ५८ ॥ काषायंधारयित्वातुश्रेणीस्थानेषुचत्रिषु ॥ योव्रजेच्चपरंस्थानंपारिव्रा
ज्यमनुत्तमम् ॥ ५९ ॥ तद्भावनेनसंन्यस्यवर्तनंश्रूयतांतथा ॥२६०॥ एकएवचरेद्धर्मसिध्यर्थमसहायवान् ॥ एकश्चरतियः पश्यन्नजहातिनहीयते ॥६१॥
अनग्निरनिकेतस्तुग्राममंभिक्षार्थमाश्रयेत् ॥ अश्वस्तनविधानःस्यान्मुनिर्भावसमन्वितः ॥ ६२ ॥ लघ्वाशीनियताहारःसकृदन्नंनिषेवयेत् ॥ कपा
लंवृक्षमूलानिकुचेलमसहायता ॥ उपेक्षासर्वभूतानामेतावद्भिक्षुलक्षणम् ॥ ६३ ॥ यस्मिन्वाचःप्रविशंतिकूपेप्राप्तामृताइव ॥ न वक्ता
रंपुनर्यांतिसकैवल्याश्रमेवसेत् ॥ ६४ ॥ नैवपश्येन्नशृणुयादवाच्यंजातुकस्यचित् ॥ ब्राह्मणानांविशेषेणनैतद्ब्रूयात्कथंचन ॥ ६५ ॥ यद्ब्राह्मणस्यानु
कूलंतदेवसततंवदेत् ॥ तूष्णीमासीतनिंदायांकुर्वन्भैषज्यमात्मनः ॥ ६६ ॥ येनपूर्णमिवाकाशंभवत्येकेनसर्वदा ॥ शून्यंयेनसमाकीर्णंतं
देवाब्राह्मणंविदुः ॥६७॥ येनकेनचिदाच्छन्नोयेनकेनचिदाशितः ॥ यत्रक्कचनशायीचतंदेवाब्राह्मणंविदुः ॥६८॥ अहेरिवजनाद्भीतःसुहृदोनरकादिव ॥
कृपणादिवनारीभ्यस्तंदेवाब्राह्मणंविदुः ॥ ६९॥ नहृष्येतविषीदेतमानितोऽमानितस्तथा ॥ सर्वभूतेष्वभयदस्तंदेवाब्राह्मणंविदुः॥ २७० ॥ नाभिनं
देतमरणंनाभिनंदेतजीवितम् ॥ कालमेवनिरीक्षेतनिर्देशंकृषकोयथा ॥ ७१ ॥ अनभ्याहतचित्तश्चदांतश्चाहतधीस्तथा ॥ विमुक्तःसर्वपापेभ्योनरोगच्छेत्त
तोदिवम् ॥ ७२ ॥ अभयंसर्वभूतेभ्योभूतानामभयंयतः ॥ तस्यदेहविमुक्तस्यभयंनास्तिकुतश्चन ॥७३ ॥ यथानागपदेऽन्यानिपदानिपदगामिनाम् ॥
सर्वाण्येवावलीयंतेतथाज्ञानानिचेतसि ॥ ७४ ॥ एवंसर्वमहिंसायांधर्मोऽर्थश्चमहीयते॥ मृतःसनित्यंभवतियोहिंसांप्रतिपद्यते ॥ ७५॥ अहिंसकस्ततः
सम्यग्धृतिमान्नियतेंद्रियः ॥ शरण्यस्सर्वभूतानांगतिमाप्नोत्यनुत्तमाम् ॥७६ ॥ एवंप्रज्ञानतृप्तस्यनिर्भयस्यमनीषिणः ॥ नमृत्युरधिकोभावःसोऽमृत

त्वंचगच्छति ॥ ७७ ॥ विमुक्तः सर्वसंगेभ्योमुनिराकाशवत्स्थितः ॥ विष्णुप्रियकरःशांतस्तंदेवाब्राह्मणंविदुः ॥ ७८ ॥ जीवितंयस्यधर्मार्थंधर्मोस्त्यर्थ
मेवच ॥ अहोरात्रादिपुण्यार्थंतंदेवाब्राह्मणंविदुः ॥ ७९ ॥ निवारितसमारंभंनिर्नमस्कारमस्तुतिम् ॥ अक्षीणंक्षीणकर्माणंतंदेवाब्राह्मणंविदुः ॥ ८० ॥
सर्वाणिभूतानिसुखंरमंतेसर्वाणिदुःखानिभृशंभवंति ॥ तेषांभवोत्पादनजातखेदःकुर्यात्तुकर्माणिचश्रद्दधानः ॥ ८१ ॥ दानंहिभूताभयदक्षिणायाः
सर्वाणिदानान्यधितिष्ठतीह ॥ तीक्ष्णंतनुंयःप्रथमंजुहोतिसोऽनंतमाप्नोत्यभयंप्रजाभ्यः ॥८२॥ उत्तानमास्येनहविर्जुहोतिअनंतमाग्नं॥त्यभितःप्रति
ष्ठाम् ॥ तस्यांगसंगादभिनिष्कृतंचवैश्वानरंसर्वमिदंप्रपेदे ॥८३॥ प्रादेशमात्रेहृदिनिसृतंयत्तस्मिन्प्राणेनात्मयाजीजुहोति ॥ तस्याग्निहोत्रंहुतमात्मसं
स्थंसर्वेषुलोकेषुसदैवतेषु ॥८४॥ देवंविधातुंत्रिवृतंसुवर्णयेवैविदुस्तुंपरमार्थभूतम् ॥ तसर्वभूतेषुमहीयमानादेवाःसमर्थाअमृतंव्रजंति ॥८५॥ वेदांश्चवेद्यं
चविधिंचकृत्स्नमथोनिरुक्तंपरमार्थतांच ॥ सर्वशरीरात्मनियःप्रवेदतस्याभिसर्वेप्रचरंतिनित्यम् ॥ ८६ ॥ भूमावसक्तंदिविचाप्रमेयंहिरण्मयंतंचसमंड
लांते ॥ प्रदक्षिणंदक्षिणमंतरिक्षेयोवेदनाप्यात्मनिदीप्तरश्मिः ॥ ८७ ॥ आवर्तमानंचविवतमानंषण्नेमियद्वादशारंत्रिपर्व ॥ यस्येदमास्यंपरिपातिविश्वं
तत्कालचक्रंनिहितंगुहायाम् ॥८८॥यतःप्रसादंजगतःशरीरंसर्वांश्चलोकानधिगच्छतीह॥तस्मिन्हिसंतर्पयतीहदेवान्सवैविमुक्तोभवतीहनित्यम्॥८९॥
तेजोमयोनित्यमतःपुराणोलोकेभवत्यथभयादुपैति ॥भूतानियस्मान्नभयंव्रजंतिभूतेभ्योयांनोद्विजतेकदाचित् ॥२९०॥ अगर्हणीयांनचगर्हतेऽन्यान्स
वैविप्रःप्रवरंस्वात्मनीक्षेत्॥ विनीतमोहोऽप्यपनीतकल्मषोनचेहनामुत्रचयोऽर्थमृच्छति ॥ ९१ ॥ अरोषमोहःसमलोष्टकांचनःप्रहीणशोकोगतसंधिवि
ग्रहः॥अपेतनिंदास्तुतिरप्रियाप्रियश्चरन्नुदासीनवदेवभिक्षुः ॥९२॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेक्षेत्रवासमाहात्म्यंनामपंचदशोऽध्यायः ॥१५॥
भीष्मउवाच ॥ यदेतत्कथितंब्रह्मंस्तीर्थमाहात्म्यमुत्तमम् ॥ कमलस्याभिपातेनतीर्थजातंधरातले ॥१॥ तत्रस्थेनभगवताविष्णुनाशंकरेणच ॥ यत्कृ
तंमुनिशार्दूलतत्सर्वंपरिकीर्त्तय ॥२॥ कथंयज्ञोहिदेवेनविभुनातत्रकारितः॥केसदस्याऋत्विजश्चब्राह्मणाःकेसमागताः ॥३॥ केभागास्तस्ययज्ञस्यकिंद्र
व्यंकाचदक्षिणा ॥ कावेदीकिंप्रमाणंचकृतंतत्रविरिंचिना ॥४॥ योयाज्यःसर्वदेवानांवेदैःसर्वत्रपठ्यते ॥ कंचकाममभिध्यायन्वेधायज्ञंचकारह ॥५॥
यथासौदेवदेवेशोह्यजरश्चामरश्चह ॥ तथाचैवाक्षयःस्वर्गस्तस्यदेवस्यदृश्यते ॥६॥ अन्येषांचैवदेवानांदत्तःस्वर्गोमहात्मना ॥ अग्निहोत्रार्थमुत्पन्नावे
दाओषधयस्तथा ॥७॥ यचान्येपशवोभूमौसर्वेतेयज्ञकारणात्॥सृष्टाभगवतानेनइत्येषावैदिकीश्रुतिः ॥८॥ तदत्रकौतुकंमह्यंश्रुत्वेदंतवभाषितम्॥यंका
ममधिकृत्यैकंयत्फलंयांचभावनाम्॥९॥कृतश्चानेनवैयज्ञःसर्वंशंसितुमर्हसि ॥ शतरूपाचयानारीसावित्रीसात्विहोच्यते ॥१०॥ भार्यासाब्रह्मणःप्रोक्ता

ऋषीणांजननीचसा ॥ पुलस्त्याद्यान्मुनीन्सप्तदक्षाद्यांस्तुप्रजापतीन्॥ ११॥स्वायंभुवादींश्चमनून्सावित्रीसमजीजनत्॥धर्मपत्नींतुतांब्रह्मापुत्रिणीमात्म
नःप्रियाम्॥ १२॥पतिव्रतांमहाभागांसुव्रतांचारुहासिनीम्॥कथंसतींपरित्यज्यभार्यामन्यामविंदत॥ १३॥किंनाम्नीकिंसमाचाराकस्यसातनयाविमोः॥
क्वसादृष्टाहिदेवेनकेनचास्यप्रदाशता ॥ १४ ॥ किंरूपासातुदेवेशीदृष्टाचित्तविमोहिनी ॥ यांतुदृष्ट्वासदेवेशःकामस्यवशमेयिवान् ॥ १५॥ वर्णतोरूप
तश्चैवसावित्र्यास्त्वधिकामुने॥ यामोहितवतीदेवंसवलोकेश्वरंविभुम् ॥ १६॥ यथागृहीतवान्देवोनारींतांलोकसुंदरीम् ॥ यथाप्रवृत्तोयज्ञोऽसौतथासर्वंप्र
कीर्तय ॥ १७ ॥ तांदृष्ट्वाब्रह्मणःपार्श्वेसावित्रीकिंचकारह ॥ सावित्र्यांतुतदाब्रह्माकांतुवृत्तिमवत्तत ॥ १८ ॥सन्निधौकानिवाक्यानिसावित्रीब्रह्मणातदा॥
उक्ताप्युक्तवतीभूयःसर्वंशंसितुमर्हसि ॥ १९ ॥ किंकृतंतत्रयुष्माभिःकोपोवाथक्षमापिवा ॥ यत्कृतंतत्रयद्दृष्टंयत्तवोक्तंमयात्विह ॥ २० ॥ विस्तरेणेहस
र्वाणिकर्माणिपरमेष्ठिनः ॥ श्रोतुमिच्छाम्यशेषेणविधेर्यज्ञविधिंपरम्॥ २१ ॥ कर्मणामानुपूर्व्यंचप्रारंभोहोत्रमेवच ॥ होतुर्भक्षोयथार्चापिप्रथमाकस्यका
रिता ॥ २२ ॥ कथंचभगवान्विष्णुःसाहाय्यंकेनकीदृशम् ॥ अमरैर्वाकृतंयच्चतद्भवान्वक्तुमर्हति ॥ २३ ॥ देवलोकंपरित्यज्यकथंमर्त्यमुपागतः ॥
गार्हपत्यंचविधिनाअन्वाहार्यंचदक्षिणम् ॥ २४ ॥ अग्निमाहवनीयंचवेदींचैवतथास्रुवम् ॥ प्रोक्षणीयंस्रुचंचैवआवभृथ्यंतथैवच ॥ २५ ॥ अग्नींस्त्रींश्च
यश्चचक्रेहव्यभागवहान्हिव ॥ हव्यादांश्चसुरांश्चक्रकव्यादांश्चपितॄनपि ॥ २६ ॥ भागार्थंयज्ञविधिनायेयज्ञायज्ञकर्माणि ॥ यूपान्समि
त्कुशंसोमंपवित्रंपरिधीनपि ॥ २७ ॥ यज्ञियानिचद्रव्याणियथाब्रह्माचकारह ॥ विभ्राजपुरायश्चपारंमेष्ठ्येनकर्मणा ॥ २८ ॥ क्षणानिमेषाः
काष्ठाश्चकलास्त्रकाल्यमेवच ॥ मुहूर्तास्तिथयोमासादिनंसंवत्सरस्तथा ॥२९॥ ऋतवःकालयोगाश्चप्रमाणंत्रिविधंपुरा॥आयुःक्षेत्राण्यपचयंलक्षणंरू
पसौष्ठवम् ॥३०॥ त्रयोवर्णास्त्रयोलोकास्त्रैविद्यंपावकास्त्रयः ॥ त्रैकाल्यंत्रीणिकर्माणित्रयोवर्णास्त्रयोगुणाः ॥ ३१ ॥ सृष्टालोकाःपराःस्रष्ट्रायेचान्ये
ऽनल्पचेतसा ॥ यागतिर्धर्मयुक्तानांयागतिःपापकर्मणाम् ॥३२॥चातुर्वर्ण्यस्यप्रभवश्चातुर्वर्ण्यस्यरक्षिता॥चातुर्विद्यस्ययोवेत्ताचतुराश्रमसंश्रयः॥३३॥
यःपरंश्रूयतेज्योतिर्यःपरंश्रूयतेतपः ॥ यःपरंपरतःप्राहपरंयःपरमात्मवान्॥३४॥सेतुर्योलोकसेतूनांमेध्योयोमेध्यकर्मणाम्॥ वेद्योयोवेदविदुषांयःप्रभुः
प्रभवात्मनाम् ॥ ३५ ॥ असुभूतश्चभूतानामग्निभूतोऽग्निवर्चसाम् ॥ मनुष्याणांमनोभूतस्तपोभूतस्तपस्विनाम् ॥ ३६ ॥ विनयोनयवृत्तीनांतेजस्तेज
स्विनामपि ॥ इत्येतत्सर्वमखिलान्सृजन्लोकपितामहः ॥३७॥ यज्ञाद्गतिंकामन्वैच्छत्कथंयज्ञेमतिःकृता ॥ एषमेसंशयोब्रह्मन्नेषमेसंशयःपरः ॥३८॥
आश्चर्यःपरमोब्रह्मादेवैर्दैत्यैश्चपठ्यते ॥ कर्मणाश्चर्यभूतोऽपितत्त्वतःसइहोच्यते ॥ ३९ ॥ पुलस्त्यउवाच ॥ प्रश्नभारोमहानेषत्वयोक्तोब्रह्मणश्चयः ॥

यथाशक्तितु वक्ष्यामिश्रूयतांतत्परंयशः ॥ ४० ॥ सहस्रास्यंसहस्राक्षंसहस्रचरणंचयम् ॥ सहस्रश्रवणंचैवसहस्रकरमव्ययम् ॥ ४१ ॥ सहस्रजिह्वंसा
हस्रंसहस्रपरमंप्रभुम् ॥ सहस्रदंसहस्रादिंसहस्रभुजमव्ययम् ॥४२॥ हवनंसवनंचैवहव्यंहोतारमेवच ॥ पात्राणिचपवित्राणिवेदींदीक्षांचरुंस्रुवम् ॥४३॥
स्रुक्सोममवभृचैवप्रोक्षणीदक्षिणाधनम् ॥ अध्वर्युंसामगंविप्रंसदस्यान्सदनंसदः ॥ ४४ ॥ यूपंसमित्कुशंदर्वीचमसोलूखलानिच ॥ प्राग्वंशंयज्ञभूमिं
चहोतारंबन्धनंचयत् ॥ ४५ ॥ ह्रस्वान्यतिप्रमाणानिप्रमाणस्थावराणिच ॥ प्रायश्चित्तानिवाजाश्चस्थंडिलानिकुशास्तथा ॥ ४६ ॥ मंत्रंयज्ञंचहवनं
वह्निभागंभवंचमम् ॥ अग्रेभुजंहोमभुजंशुभार्चिषमुदायुधम्॥४७॥ आहुर्वेदविदोविप्रायोयज्ञःशाश्वतःप्रभुः॥ यांपृच्छसिमहाराजपुण्यांदिव्यामिमांक
थाम् ॥ ४८ ॥ यदर्थंभगवान्ब्रह्माभूमौ यज्ञमथाकरोत् ॥ हितार्थंसुरमर्त्यानांलोकानांप्रभवायच ॥४९॥ ब्रह्माथकपिलश्चैवपरमेष्ठीतथैवच ॥ देवाः
सप्तर्षयश्चैवत्र्यंबकश्चमहायशाः ॥ ५० ॥ सनत्कुमारश्चमहानुभावोमनुर्महात्माभगवान्प्रजापतिः ॥ पुराणदेवोऽथतथाप्रचक्रेप्रदीप्तवैश्वानरतुल्यतेजाः
॥ ५१ ॥ पुरा कमलजातस्यस्वपतस्तस्यकोटरे ॥ पुष्करेयत्रसंभूतादेवाऋषिगणास्तथा ॥ ५२ ॥ एषपौष्करकोनामप्रादुर्भावोमहात्मनः ॥ पुरा
णंकथ्यतेयत्रवेदस्मृतिसुसंहितम् ॥५३॥ वराहस्तुश्रुतिमुखःप्रादुर्भूतोविरिंचिनः ॥ सहाय्यार्थंसुरश्रेष्ठोवाराहंरूपमास्थितः ॥५४॥ विस्तीर्णंपुष्करेकृत्वा
तीर्थंकोकामुखंहितु ॥ वेदपादोयूपदंष्ट्रःक्रतुहस्तश्चितीमुखः ॥ ५५ ॥ अग्निजिह्वोदर्भरोमाब्रह्मशीर्षोमहातपाः ॥ अहोरात्रेक्षणोदिव्योवेदांगःश्रुतिभूष
णः ॥ ५६ ॥ आज्यनासः स्रुवतुंडःसामघोषस्वनोमहान् ॥ सत्यधर्ममयः श्रीमान्कर्मविक्रमसत्कृतः ॥ ५७ ॥ प्रायश्चित्तनखोधीरःपशुजानुर्मखाकृ
तिः ॥ उद्गात्रंत्रोहोमलिंगोफलबीजमहौषधिः॥५८॥वाय्वंतरात्मामंत्रास्थिरापःस्फिक्सोमशोणितः ॥वेदस्कन्धोहविर्गंधोहव्यकव्यातिवेगवान्॥५९॥
प्राग्वंशकायोद्युतिमान्नानादीक्षाभिरर्चितः ॥ दक्षिणाहृदयोयोगीमहासत्रमयोमहान् ॥६०॥ उपाकर्मेष्टिरुचिरःप्रवर्ग्यावर्तभूषणः ॥ छायापत्नीसहायो
वैमणिशृंगमिवोच्छ्रितः ॥ ६१ ॥ सर्वलोकहितात्मायोदंष्ट्र्याभ्युज्जहारगाम् ॥ ततःस्वस्थानमानीयपृथिवींपृथिवीधरः ॥ ६२ ॥ ततोजगामपृथिवी
निर्वाणंधारणाद्धरेः ॥ एवमादिवराहेणधृत्वाब्रह्महितार्थिना ॥ ६३ ॥ उद्धृतापुष्करेपृथ्वीसागरांबुगतापुरा ॥ वृतःशमदमाभ्यांयोदिव्येकोकामुखे
स्थितः ॥६४॥ आदित्यैर्वसुभिःसाध्यैर्मरुद्भिर्दैवतःसह॥रुद्रैर्विश्वसहायैश्वयक्षराक्षसकिन्नरैः॥६५॥दिग्भिर्विदिग्भिः पृथिवीनदीभिः सह सागरैः॥चरा
चरगुरुःश्रीमान्ब्रह्माब्रह्मविदांवरः॥६६॥उवाचवचनंकोकामुखंतीर्थंत्वयाविभो॥पालनीयंसदागोप्यंरक्षाकार्यामखेत्विह ॥६७॥एवंकरिष्येभगवंस्तदाब्र
ह्माणमुक्तवान्॥उवाच तंपुनर्ब्रह्माविष्णुंदेवंपुरःस्थितम्॥६८॥ब्रह्मोवाच॥त्वंहिमेपरमोदेवस्त्वंहिमेपरमोगुरुः॥त्वंहिमेपरमंधामशक्रादीनांसुरोत्तम॥६९॥

उत्फुल्लामलपद्माक्षशत्रुपक्षक्षयावह ॥ यथायज्ञेनमेध्वंसोदानवैश्चविधीयते ॥७०॥ तथात्वयाविधातव्यंप्रणतस्यनमोऽस्तुते॥विष्णुरुवाच॥भयंत्यजस्व
देवेशक्षयंनेष्यामिदानवान्॥७१॥येचान्येविघ्नकर्तारोयातुधानास्तथासुराः॥घातयिष्याम्यहंसर्वान्स्वस्तितेस्तुपितामह ॥ ७२॥ एवमुक्त्वास्थितस्त
त्रसाहाय्येन कृतक्षणः॥प्रववुश्चशिवावाताःप्रसन्नाश्चदिशोदश ॥७३॥ सुप्रभाणिचज्योतींषिचंद्रंचक्रुःप्रदक्षिणम् ॥ नविग्रहंग्रहाश्चक्रुः प्रसेदुश्चापि सिंध
वः ॥ ७४ ॥ नीरजस्काभूमिरासीत्सकलाह्लाददास्त्वपः ॥ जग्मुः स्वमार्गंसरितोनापिचुक्षुभुरर्णवाः ॥ ७५ ॥ आसञ्शुभानींद्रियाणिनराणामंतरा
त्मनाम् ॥ महर्षयोवीतशोकावेदानुच्चैरवाचयन् ॥ ७६ ॥ यज्ञेतस्मिन्हविःपाकेशिवाआसंश्चपावकाः ॥ प्रवृत्तधर्मसद्वृत्तालोकामुदितमानसाः ॥७७॥
विष्णोःसत्यप्रतिज्ञस्यश्रुत्वारिनिधनागिरः ॥ ततोदेवाःसमायातादानवाराक्षसैस्सह ॥ ७८ ॥ भूतप्रेतपिशाचाश्चसर्वेतत्रागताःक्रमात् ॥ गन्धर्वाप्सर
सश्चैवनागाविद्याधरागणाः ॥७९॥ वानस्पत्याश्चौषधयोयच्चेहद्यच्चनेहति ॥ ब्रह्मादेशान्मारुतेनआनीताःसर्वतोदिशः ॥८०॥ यज्ञपर्वतमासाद्यदाक्षि
णामभितोदिशम् ॥ सुराउत्तरतः सर्वेमर्यादापर्वतेस्थिताः ॥ ८१ ॥ गंधर्वाप्सरसश्चैवमुनयोवेदपारगाः ॥ पश्चिमांदिशमास्थायस्थितास्तत्रमहा
क्रतौ ॥ ८२ ॥ सर्वेदेवनिकायाश्चदानवाश्चासुरागणाः ॥ अमर्षंपृष्ठतःकृत्वासुप्रीतास्तेपरस्परम् ॥८३॥ ऋषीन्पर्यचरन्सर्वेशुश्रूषन्ब्राह्मणांस्तथा॥ऋष
योब्रह्मर्षयश्चद्विजादेवर्षयस्तथा ॥८४॥राजर्षयोमुख्यतमास्समायातास्समंततः॥कतमश्चसुरोऽप्यत्रक्रतौयाज्योभविष्यति ॥८५॥ पशवःपक्षिणश्चैवत
त्रायातादिदृक्षवः ॥ ब्राह्मणाभोक्तुकामाश्चसर्वेवर्णानुपूर्वशः ॥८६॥ स्वयंचवरुणोरत्नंदक्षश्चान्नंस्वयंददौ॥आगत्यवरुणोलोकात्पक्वंचान्नंस्वतोऽपचत् ॥
॥८७॥ वायुर्भक्षविकारांश्चरसपाचीदिवाकरः ॥ अन्नपाचनकृत्सोमोमतिदाताबृहस्पतिः ॥८८॥ धनदानंधनाध्यक्षोवस्त्राणिविविधानिच ॥ सरस्वती
नदाध्यक्षोगंगादेवीसनर्मदा ॥ ८९ ॥ याश्चान्याःसरितःपुण्याःकूपाश्चैवजलाशयाः ॥ पल्वलानितटाकानिकुंडानिविविधानिच ॥ ९० ॥प्रस्रवाणि
चमुख्यानिदेवखातान्यनेकशः ॥ जलाशयानिसर्वाणिसमुद्राःसप्तसंख्यकाः ॥ ९१ ॥लवणेक्षुसुरासर्पिर्दधिदुग्धजलैःसमम् ॥ सप्तलोकाःसपातालाः
सप्तद्वीपाःसपत्तनाः ॥९२॥ वृक्षावल्ल्यःसतृणानिशाकानिचफलानिच॥पृथिवीवायुराकाशमापोज्योतिश्चपंचमम्॥९३॥सविग्रहाणिभूतानिधर्मशास्त्रा
णियानिच ॥ वेदभाष्याणिसूत्राणिब्रह्मणानिर्मितंचयत् ॥ ९४ ॥ अमूर्तंमूर्तमत्यन्तंमूर्तंदृश्यंतथाखिलम् ॥ एवंकृतेतथास्मिंस्तुयज्ञेपैतामहेतदा ॥
॥ ९५ ॥ देवानांसंनिधौतत्रऋषिभिश्चसमागमे ॥ ब्रह्मणोदक्षिणेपार्श्वेस्थितोविष्णुःसनातनः ॥ ९६ ॥ वामपार्श्वस्थितोरुद्रःपिनाकीवरदःप्रभुः ॥
ऋत्विजांचापिवरणंकृतंतत्रमहात्मना ॥ ९७ ॥ भृगुर्होतावृतस्तत्रपुलस्त्योऽध्वर्युसत्तमः ॥ तत्रोद्गातामरीचिस्तुब्रह्मावैनारदःकृतः ॥ ९८ ॥ सनत्कु

मारादयोयेसदस्यास्तत्रतेऽभवन् ॥प्रजापतयोदक्षाद्यावर्णाब्राह्मणपूर्वकाः ॥९९॥ ब्रह्मणश्चसमीपेतुकृताऋत्विग्विकल्पना ॥ वस्त्रैराभरणैर्युक्ताःकृतावै
श्रवणेनते ॥१००॥ अंगुलीयैःसकटकैर्मुकुटैर्भूषिताद्विजाः ॥ चत्वारोद्वौदशान्येचततस्तेषोडशर्त्विजः ॥१॥ ब्रह्मणापूजिताःसर्वेप्रणिपातपुरःसरम् ॥
अनुग्राह्योभवद्भिस्तुसर्वैरस्मिन्क्रताविह ॥ २ ॥पत्नीममैषासावित्रीयूयंमेशरणंद्विजाः॥ विश्वकर्माणमाहूयब्रह्मणःशीर्षमुंडनम् ॥ ३ ॥ यज्ञेतुविहितंत
स्यकारितंद्विजसत्तमैः ॥ आतसेयानिवस्त्राणिदंपत्यर्थेतथाद्विजैः ॥ ४ ॥ ब्रह्मघोषेणतेविप्रानादयानात्रिविष्टपम् ॥ पालयंतोजगच्चेदंक्षत्रियाःसायु
धाःस्थिताः ॥ ५ ॥ भक्ष्यप्रकारान्विविधान्वैश्यास्तत्रप्रचक्रिरे ॥ रसबाहुल्ययुक्तंचभक्ष्यंभोज्यंकृतंततः ॥ ६ ॥ अश्रुतंप्रागदृष्टंचदृष्ट्वातुष्टःप्रजापतिः
॥ प्राग्वाटेतिददौनामवैश्यानांसृष्टिकृद्विभुः ॥७॥ द्विजानांपादशुश्रूषाशूद्रैःकार्यासदात्विह ॥ पादप्रक्षालनंभोज्यमुच्छिष्टस्यप्रमार्जनम् ॥ ८ ॥ ते
ऽपिचक्रुस्तदातत्रतेभ्योभूयःपितामहः ॥ शुश्रूषार्थंमयायूयंतुरीयेतुपदेकृताः ॥ ९ ॥ द्विजानांक्षत्रबन्धूनांवन्धूनांचभवद्भिःधैः ॥ त्रिभ्यश्शुश्रूषणाकार्ये
त्युक्त्वाब्रह्मातथाकरोत् ॥ ११० ॥ द्वाराध्यक्षंतथाशक्रंवरुणंरसदायकम् ॥ वित्तप्रदंवैश्रवणंपवनंगंधदायिनम् ॥ ११ ॥ उद्योतकारिणंसूर्यंप्रभुत्वे
माध्रवःस्थितः ॥ सोमःसोमप्रदस्तेषांवामपक्षपथाश्रितः ॥ १२ ॥ सुसत्कृताचपत्नीसासावित्रीचवरांगना ॥ अध्वर्युणासमाहूताएहिदेवित्वरान्वि
ता ॥ १३ ॥ उत्थिताश्चाग्नयःसर्वेदीक्षाकालउपागतः ॥ व्यग्रासाकार्यकरणेस्त्रीस्वभावेननागता ॥ १४ ॥ इहवेनकृतंकिंचिद्द्वारेवैमंडनंमया ॥
भित्त्यांवैचित्र्यकर्माणिस्वस्तिकप्रांगणेनतु ॥१५॥ प्रक्षालनंचभांडानांनकृतंकिमपित्विह॥लक्ष्मीरद्यापिनायातापत्नीनारायणस्यया ॥१६॥ अग्नेःप
त्नीतथास्वाहाधूम्रोर्णातुयमस्यतु ॥ वारुणीवैतथागौरीवायोर्वैसुप्रभातथा ॥ १७ ॥ ऋद्धिर्वैश्रवणीभार्याशम्भोर्गौरीजगत्प्रिया ॥ मेधाश्रद्धाविभूति
श्च अनसूयाधृतिःक्षमा ॥ १८ ॥ गंगासरस्वतीचैवनाद्यायाताश्चकन्यकाः ॥ इंद्राणीचंद्रपत्नीतुरोहिणीशशिनःप्रिया ॥१९॥ अरुंधतीवसिष्ठस्यसप्त
र्षीणांचयाःस्त्रियः ॥ अनसूयात्रिपत्नीचतथान्याःप्रमदाइह ॥२०॥ वध्वोदुहितरश्चैवसख्योभगिनिकास्तथा ॥ नाद्यागतास्तुताःसर्वाअहंतावत्स्थि
ताचिरम् ॥२१॥ नाहमेकाकिनीयास्येयावन्नायांतितास्स्त्रियः ॥ ब्रूहिगत्वाविरिंचितुतिष्ठतावन्मुहूर्तकम् ॥ २२ ॥ सर्वाभिःसहिताचाहमागच्छामित्व
रान्विता ॥ सर्वैःपरिवृतःशोभांदेवैःसहमहामते ॥ २३ ॥ भवान्प्राप्नोतिपरमांतथाहंतुनसंशयः ॥ वदमानांतथाध्वर्युस्त्यक्त्वाब्रह्माणमागतः ॥
॥ २४ ॥ सावित्रीव्याकुलादेवप्रसक्तागृहकर्मणि ॥ सख्योनाभ्यागतायावत्तावन्नागमनंमम ॥ २५ ॥ एवमुक्तोऽस्मिवैदेवकालश्चाप्यतिवर्त्तते ॥ यत्ते
ऽद्यरुचितंतावत्तत्कुरुष्वपितामह ॥ २६ ॥ एवमुक्तस्तदाब्रह्माकिंचित्कोपसमन्वितः ॥ पत्नींचान्यांमदर्थेवैशीघ्रंशक्रइहानय ॥ २७ ॥ यथा

प्रवर्ततेयज्ञःकालहीनोनजायते ॥ तथाशीघ्रंविधत्स्वत्वंनारींकांचिदुपानय ॥ २८ ॥ यावद्यज्ञसमाप्तिर्मेवर्णेत्वंमाक्तथामनः ॥ भूयोऽपितांप्रमो
क्ष्यामिसमाप्तौतुक्रतोरिह ॥ २९ ॥ एवमुक्तस्तदाशक्रोगत्वासर्वंधरातलम् ॥ स्त्रियोदृष्टास्तुयास्तेनसर्वास्तास्सपरिग्रहाः ॥ १३० ॥ आभीरकन्या
रूपाढ्यासुनासाचारुलोचना ॥ नदेवीनचगन्धर्वीनासुरीनचपन्नगी ॥ ३१ ॥ नचास्तितादृशीकन्यायादृशीसावरांगना ॥ ददर्शतांसुचार्वंगींश्रियं
देवीमिवापराम् ॥ ३२ ॥ संक्षिपन्तींमनोवृत्तिविभवंरूपसंपदा ॥ यद्यत्तुवस्तुसौंदर्याद्विशिष्टंलभ्यतेक्वचित ॥ ३३ ॥ तत्तच्छरीरसंलग्नंतन्वंग्याददृशे
वरम् ॥ तांदृष्ट्वाचिंतयामासयद्येषाकन्यकाभवेत ॥३४॥ तन्मत्तःकृतपुण्योऽन्योनदेवोभुविविद्यते ॥ सोपिद्रत्नमिदंसेयंसद्गम्यायांपितामहः॥३५॥
सरागोयदिवास्याःतुसफलस्त्वेषमेश्रमः ॥ नीलाभ्रकनकांभोजविद्रुमाभांददर्शताम् ॥ ३६ ॥ त्विषंसंबिभ्रतीमंगैःकेशगंडेक्षणाधरैः ॥ मन्मथाशोक
वृक्षस्यप्रोद्भिन्नांकलिकामिव ॥ ३७ ॥ प्रदग्धहृच्छयेनैवनेत्रवह्निशिखोत्करैः ॥ धात्राकथंहिसामृष्टाप्रतिरूपमपश्यता ॥ ३८ ॥ कल्पिताचेत्स्वयं
बुद्ध्यानैपुण्यस्यगतिःपरा ॥ उत्तुंगाग्रौविमौसृष्टौयन्मेसंपश्यतःसुखम् ॥ ३९ ॥ पयोधरौनातिचित्रंकस्यसंजायतेहृदि ॥ रागोपहतदेहोऽयमधरो
यद्यपिस्फुटम् ॥ १४० ॥ तथापिसेवमानस्यनिर्वाणंसंप्रयच्छति ॥ वहद्भिरपिकौटिल्यमलकैःसुखमर्प्यते ॥ ४१ ॥ दोषोऽपिगुणवद्भातिभूरिसौंदर्य
माश्रितः ॥ नेत्रयोभूषितावंतावाकर्णाभ्याशमागतौ ॥ ४२ ॥ कारणाद्भावचैतन्यंप्रवदंतिहितद्विदः ॥ कर्णयोर्भूषणंनेत्रेनेत्रयोःश्रवणाविमौ ॥ ४३ ॥
कुंडलांजनयोरत्रनावकाशोऽस्तिकश्चन ॥ नतद्युक्तंकटाक्षाणांयद्विधाकरणंहृदि ॥ ४४ ॥ तवसंबंधिनोयेऽत्रकथंतदुःखभागिनः ॥ सर्वसुन्दरता
मेतिविकारःप्राकृतैर्गुणैः ॥ ४५ ॥ वृद्धेक्षणशतानांतुदृष्टमेषांमयाफलम् ॥ धात्राकौशल्यसीमेयंरूपोत्पत्तौसुदर्शिता ॥ ४६ ॥ करोत्येषामनोनृणां
सस्नेहंकृतिविभ्रमैः ॥ एवंविमृशतस्तस्यतद्रूपापहृतत्विषः ॥ ४७ ॥ निरंतरोद्गतैश्छन्नमभवत्पुलकैर्वपु ॥ तांवीक्ष्यतप्तहेमाभांपद्मपत्रायतेक्ष
णाम् ॥ ४८ ॥ देवानामथयक्षाणांगन्धर्वोरगरक्षसाम् ॥ नानादृष्टामयानार्योनेदृशीरूपसंपदा ॥ ४९ ॥ त्रैलोक्यांतर्गतंयद्यद्वस्तुनत्तत्प्रधा
नतः ॥ समादायविधात्रास्याःकृतारूपस्यसंस्थितिः ॥ १५० ॥ इन्द्रउवाच ॥ कासिकस्यकुतश्चत्वमागतासुभ्रुकथ्यताम् ॥ एकाकिनी
किमर्थंचवीथीमध्येतुतिष्ठसि ॥ ५१ ॥ यान्येतान्यंगसंस्थानिभूषणानिबिभर्षिच ॥ नैतानितवभूषायैत्वमेतेषांहिभूषणम् ॥ ५२ ॥ नदेवी
नचगन्धर्वीनासुरीनचपन्नगी ॥ किन्नरीदृष्टपूर्वावायादृशीत्वंसुलोचने ॥ ५३ ॥ उक्तामयाऽपिबहुशःकस्माद्दत्सेहिनोत्तरम् ॥ त्रपान्विता
तुसाकन्याशक्रंप्रोवाचवेपती ॥ ५४ ॥ कन्योवाच ॥ गोपकन्यात्वहंवीरविक्रीणामीहगोरसम् ॥ नवनीतमिदंशुद्धंदधिचेदंविमण्डकम् ॥ ५५ ॥

दृश्याचैवात्रतर्केणरसेनापिपरंतप ॥ अर्थीयेनासितब्रूहिप्रगृह्णीष्वयथेप्सितम् ॥ ५६ ॥ एवमुक्तस्तदाशक्रोगृहीत्वातांकरेदृढम् ॥ अनयत्तांविशा
लाक्षींयत्रब्रह्माव्यवस्थितः ॥ ५७ ॥ नीयमानातुसातेनक्रोशन्तीपितृमातरौ ॥ हातातमातर्हाभ्रातर्नयत्येपनरोबलात् ॥ ५८ ॥ यदितेऽस्ति
मयाकार्यंपितरंमेप्रयाचय ॥ सदास्यतिहिमांनूनंभवतःसत्यमुच्यते ॥ ५९ ॥ काहिनाभिलपेत्कन्याभर्तारंभक्तिवत्सलम् ॥ नादेयमस्तितेकिंचि
त्पितुर्मेधर्मवत्सल ॥ १६० ॥ प्रसादयेत्वांशिरसामांसतुष्टःप्रदास्यति ॥ पितुश्चित्तमविज्ञाययद्यात्मानंददामिते ॥ ६१ ॥ धर्मोहिविपुलोनश्ये
त्तेनत्वांनप्रसादये ॥ भविष्यामिवशेतुभ्यंयदितातःप्रदास्यति ॥ ६२ ॥ इत्थमाभाष्यमाणस्तुतयाशक्रोऽनयच्चताम् ॥ ब्रह्मणःपुरतःस्थाप्यप्राहा
स्यार्थेमयाऽबले ॥ ६३ ॥ आनीतासिविशालाक्षिमाशुचोवरवर्णिनि ॥ गोपकन्याचतंदृष्ट्वागौरवर्णंमहाद्युतिम् ॥ ६४ ॥ कमलाक्षंसुबाहुंसं
पुंडरीकनिभेक्षणम् ॥ तप्तकांचनसद्भित्तिसदृशापीनवक्षसम् ॥ ६५ ॥ मत्तेभहस्तवृत्तोरुंरक्तोत्तुंगनखत्विषम् ॥ प्राप्तंसाऽमन्यतात्मानंमन्मथस्ये
षुगोचरे ॥ ६६ ॥ तत्प्राप्तिहेतुकधियागतचित्तेवलक्ष्यते ॥ प्रभुत्वमात्मनोदानेगोपकन्याऽप्यमन्यत ॥ ६७ ॥ यद्येपमांसुरूपत्वादिच्छ
त्याद्दातुमाग्रहात् ॥ नास्तिसीमंतिनीकाचिन्मत्तोधन्यतराभुवि ॥ ६८ ॥ अनेनाहंसमानीतायच्चक्षुर्गोचरंगता ॥ अस्यत्यागेभवेन्मृत्युरत्यागे
जीवितंसुखम् ॥ ६९ ॥ भवेयमपमानाच्चधिग्रूपादुःखदायिनी ॥ दृश्यतेचक्षुपानेनयाऽपियोषित्प्रसादतः ॥ १७० ॥ साऽपिधन्यानसन्देहः
किंपुनर्यापरिष्वजेत् ॥ जगद्रूपमशेषंहिपृथक्संचारमाश्रितम् ॥ ७१ ॥ लावण्यंतदिहैकस्थंदर्शितंविश्वयोनिना ॥ अस्योपमास्मरःसाध्वी
मन्मथस्योपमात्वयम् ॥ ७२ ॥ तिरस्कृतस्तुशोकोऽयंपितामातानकारणम् यदिमांनैषआदत्तेस्वल्पंमयिनभाषते ॥ ७३ ॥
अस्यानुस्मरणान्मृत्युःप्रभविष्यतिशोकजः ॥ अनागसिचपत्न्यांतुक्षिप्रंयातयमीदृशी ॥ ७४ ॥ कुचयोर्मणिशोभायैशुद्धाम्बुजसमद्युतिः ॥ मुख
मस्यप्रपश्यंत्यामनोमेध्यानमागतम् ॥ ७५ ॥ अस्यांगस्पर्शसंयोगंनवायोवहुमन्यसे ॥ स्पृशन्नटसियेनत्वंशरीरंप्राणिनांवरम् ॥ ७६ ॥ अ
थवास्यनदोषोऽस्तियदृच्छाचारकोह्यसि ॥ मुपितःस्मरनूनंत्वंसंरक्षस्वांप्रियांरतिम् ॥ ७७ ॥ त्वत्तोऽपिदृश्यतेयेनरूपेणायंस्मराधिकः ॥ ममानेन
मनोरत्नसर्वस्वंचहृतंदृढम् ॥ ७८ ॥ शोभायादृश्यतेवक्रेसाकुतःशशलक्ष्मणि ॥ नोपमासकलंकस्यनिष्कलंकेनशस्यते ॥ १७९ ॥ समानभाव
तांयातिपंकजंनास्यनेत्रयोः ॥ कोपमाजलशंखेनप्राप्ताश्रवणशङ्खयोः ॥ १८० ॥ विद्रुमोऽप्यधरस्यास्यलभतेनोपमांध्रुवम् ॥ आत्मस्थममृतंह्येषसं
स्रवंश्चेष्टतेध्रुवम् ॥ ८१ ॥ यदिकिंचिच्छुभंकर्मजन्मांतरशतैःकृतम् ॥ तत्प्रसादात्पुमान्भर्ताभवत्वेषममेप्सितः ॥ ८२ ॥ एवंचिंतापराधीनायाव

त्सागोपकन्यका ॥ तावद्ब्रह्माहरिंप्राहयज्ञार्थंसत्वरंवचः ॥ ८३ ॥ देवीचैषामहाभागागायत्रीनामतःप्रभो ॥ एवमुक्तेतदाविष्णुर्ब्रह्माणंप्रोक्तवानिदम् ॥ ८४ ॥ विष्णुरुवाच ॥ तदेनामुद्वहस्वाद्यमयादत्तांजगत्प्रभो ॥ गांधर्वेणविवाहेनविकल्पंमाकृथाश्चिरम् ॥ ८५ ॥ अमुंगृहाणदेवाद्यअस्याःपाणिमनाकुलम् ॥ गांधर्वेणविवाहेनउपयेमेपितामहः ॥ ८६ ॥ तामवाप्यतदाब्रह्माजगादाध्वर्युसत्तमम् ॥ कृतापत्नीमयाह्येषासदनेमेनिवेशय ॥ ८७ ॥ मृगशृंगधराबालाक्षौमवस्त्रावगुंठिता ॥ पत्नीशालांतदानीताऋत्विग्भिर्वेदपारगैः ॥ ८८ ॥ औदुंबरेणदंडेनप्रावृतोमृगचर्मणा ॥ महाध्वरेतदाब्रह्माधाम्नास्वेनैव शोभते ॥ ८९ ॥ प्रारब्धंचततोहोत्रंब्राह्मणैर्वेदपारगैः ॥ भृगुणासहितैःकर्मवेदोक्तंतैःकृतंतदा ॥ तथायुगसहस्रंतुसयज्ञःपुष्करेऽभवत् ॥ १९० ॥ इति श्रीपाद्मपुराणेप्रथमेसृष्टिखंडेगायत्रीसंग्रहोनामषोडशोऽध्यायः ॥ १६ ॥ भीष्मउवाच ॥ तस्मियज्ञेकिमाश्चर्यंतदासीद्दिजसत्तम ॥ कथंरुद्रःस्थितस्तत्रविष्णुश्चापिसुरोत्तमः ॥ १ ॥ गायत्र्याकिंकृतंतत्रपत्नीत्वेस्थितयातया ॥ आभीरैःकिंनुतत्त्वज्ञैर्ज्ञात्वातैश्चकृतंमुने ॥ २ ॥ एतद्वृत्तंसमाचक्ष्वयथावृत्तंयथाकृतम् ॥ अभीरैर्ब्रह्मणाचापिममैतत्कौतुकंमहत् ॥ ३ ॥ पुलस्त्यउवाच ॥ तस्मिन्यज्ञेयदाश्चर्यंवृत्तमासीन्नराधिप ॥ कथयिष्यामितत्सर्वंशृणुष्वैकमनानृप ॥ ४॥ रुद्रस्तुमहदाश्चर्यंकृतवान्वैसदोगतः ॥ निंद्यरूपधरोदेवःस्थितोऽसौद्विजसन्निधौ ॥ ५ ॥ विष्णुनानकृतंकिंचित्प्राधान्येसयतःस्थितः ॥ नाशंतुगोपकन्यायाज्ञात्वागोपकुमारकाः ॥ ६ ॥ गोप्यश्चतास्तथासर्वाआगताब्रह्मणोऽतिकम् ॥ दृष्ट्वातांमेखलाबद्धांयज्ञसीमव्यवस्थिताम् ॥ ७ ॥ हापुत्रीतितदामातापिताहापुत्रिकेतिच ॥ स्वसेतिबांधवाःसर्वेसख्यःसख्येनहासखि ॥ ८ ॥ केनत्वमिहचानीताकेनकस्माच्चवेष्टिता ॥ मौञ्जीतुत्रिवृतांकृत्वाकेनयुक्ताचकंबली ॥ ९ ॥ केनचेयंजटापुत्रिरक्तसूत्रावकल्पिता ॥ एवंविधानिवाक्यानिश्रुत्वोवाचपुरंदरः ॥१०॥ प्रतिषिध्यतुतानेवंसर्वानेवप्रसादयन् ॥ इन्द्रउवाच॥इहचास्माभिरानीतापत्न्यर्थंविनियोजिता ॥ ११ ॥ ब्रह्मणालंबिताबालाप्रलापंमाकृथास्त्विह ॥पुण्याचैषासुभाग्याचसर्वेषांकुलनंदिनी ॥ १२ ॥ पुण्याचेन्नभवत्येषाकथमागच्छतेसदः ॥ एवंज्ञात्वामहाभागनत्वंशोचितुमर्हसि ॥ १३ ॥ गोपांस्त्ववष्टभ्यतदाशक्रवाक्यादनन्तरम्॥ उवाचस्निग्धयावाचाप्रतिनन्द्यहरिःपुनः ॥ १४॥ विष्णुरुवाच ॥ भोभोगोपसदाचारनत्वंशोचितुमर्हसि ॥ कन्यैषातेमहाभागाप्राप्तादेवंविरिञ्चिनम् ॥ १५ ॥ योगिनोयोगयुक्तायेब्राह्मणावेदपारगाः ॥ नलभन्तेप्रार्थयन्तस्तांगतिंदुहितागता ॥ १६ ॥ धर्मवन्तंसदाचारंभवन्तंधर्मवत्सलम् ॥ मयाज्ञात्वाततःकन्यादत्ताचैषाविरंचये ॥ १७ ॥ अनयातारितोगच्छदिव्याँल्लोकान्महोद

१ ज्वालारूप. क.

यान् ॥ युष्माकंचकुलेचापिदेवकार्यार्थसिद्धये ॥ १८ ॥ अवतारंकरिष्येऽहंसाक्रीडातुभविष्यति ॥ यदानन्दप्रभृतयोह्यवतारंधरातले ॥ १९ ॥
करिष्यंतितदाचाहंवसिष्येतेषुमध्यतः ॥ युष्माकंकन्यकाःसर्वारमिष्यंतमयासह ॥२०॥ तत्रदोषोनभवितानद्वेषोनचमत्सरः॥करिष्यंतितदागोपाभ
यंचनमनुष्यकाः ॥ २१ ॥ नचासांभवितादोषःकर्मणानेनकर्हिचित् ॥ श्रुत्वावाक्यन्तदाविष्णोरूचुर्गोपाः प्रणम्यतम् ॥ २२ ॥ गोपाऊचुः ॥
एवमेषवरोदेवयोदत्तोभविताहिमे ॥ अवतारःकुलेऽस्माकंकर्तव्योधर्मसाधनः ॥ २३ ॥ भवतोदर्शनादेवभवामःस्वर्गवासिनः ॥ शुभदाकन्यकाचै
षातारिर्णामेकुलैःसह ॥ २४ ॥ एवंभवतुदेवेशवग्दानंविभोतव ॥ अनुनीतास्तदागोपाःस्वयंदेवेनविष्णुना ॥ २५ ॥ ब्रह्मणाप्येवमेवन्तुवामहस्तेन
भाषितम् ॥ त्रपान्वितादर्शनेतुबन्धूनांवरवर्णिनी ॥ २६ ॥ कैर्हंतुसमाख्यातायेनेमंदेशमागताः ॥ दृष्ट्वातुतांस्ततःप्राहगायत्रीगोपकन्यका ॥ २७ ॥
वामहस्तेनतान्सर्वान्प्राणिपातपुरःसरम् ॥ गायत्र्युवाच ॥ अत्रचाहंस्थितामातर्ब्रह्माणंसमुपागता ॥२८॥ भर्तालब्धोमयादेवःसर्वस्याद्योजगत्पतिः ॥
नाहंशोच्याभवत्यातुनपित्रानचबांधवैः ॥ २९ ॥ सर्वामणश्चमेयातुभगिन्योदारकैःसह ॥ सर्वेषांकुशलंवाच्यंस्थिताऽस्मिसहदैवतैः ॥ ३० ॥
गतेषुतेषुसर्वेषुगायत्रीसासुमध्यमा ॥ ब्रह्मणासहितारेजेयज्ञवाटंगतासती ॥ ३१ ॥ याचितोब्राह्मणैर्ब्रह्मावरान्नोदेहिचेप्सितान् ॥ यथेप्सितंवरंते
षांतदाब्रह्माऽप्ययच्छत ॥ ३२ ॥ तयादेव्याचगायत्र्यादत्तंतच्चानुमोदितम् ॥ सातुयज्ञेस्थितासाध्वीदेवतानांसमीपगा ॥ ३३ ॥ दिव्यंवर्ष
शतंसाग्रंसयज्ञोववृधेतदा ॥ यज्ञवाटंकपर्दीतुभिक्षार्थंसमुपागतः ॥ ३४ ॥ बृहत्कपालंसंगृह्यपंचमुण्डैरलंकृतः ॥ ऋत्विग्भिश्चसदस्यैश्चदूरा
त्तिष्ठञ्जुगुप्सितः ॥ ३५ ॥ कथंत्वमिहसंप्राप्तोनिंदितोवेदवादिभिः ॥ एवंप्रोत्सायमाणोऽपिनिंद्यमानःसतैर्द्विजैः ॥ ३६ ॥ उवाचतान्द्विजान्सर्वा
न्स्मितंकृत्वामहेश्वरः ॥ महेश्वरउवाच ॥अत्रपैतामहेयज्ञेसर्वेपांतोषदायिनि ॥३७॥कश्चिदुत्सार्यतेनैवऋतेमांद्विजसत्तमाः ॥उक्तःसतैःकपर्दीतुभुक्त्वा
चान्नंततोव्रज ॥ ३८ ॥ कपर्दिनाचतेउक्ताभुक्त्वायास्यामिभोद्विजाः ॥ एवमुक्त्वानिषण्णःसकपालंन्यस्यचाग्रतः ॥ ३९ ॥ तेषांनिरीक्ष्यतत्कर्मच
क्रेकौटिल्यमीश्वरः ॥ मुक्त्वाकपालंभूमौतुतान्द्विजानवलोकयन् ॥ ४० ॥ उवाचपुष्करंयामिस्नानार्थंद्विजसत्तमाः ॥ तूर्णंगच्छेतितैरुक्तःसगतःपर
मेश्वरः ॥ ४१ ॥ वियत्स्थितःकौतुकेनमोहयित्वादिवौकसः ॥ स्नानार्थंपुष्करंयातेकपर्दिनिद्विजातयः ॥ ४२ ॥ कथंहोमोऽत्रक्रियतेकपालेसदसि ॥ ९८
स्थिते ॥ कपालंतान्यशौचानिपुराप्राहप्रजापतिः ॥४३॥ विप्रोऽभ्यधात्सदस्येकःकपालमुत्क्षिपाम्यहम् ॥ उद्धृतंतुसदस्येनप्रक्षिप्तंपाणिनास्वयम्॥
॥ ४४ ॥ तावदन्यत्स्थितंतत्रपुनरेवसमुद्धृतम् ॥ एवंद्वितीयंतृतीयंविंशतिस्त्रिंशदप्यहो ॥ ४५ ॥ पंचाशच्चशतंचैवसहस्रमयुतंतथा ॥ एवंनांतःक

पालनाप्राप्यताद्विजसत्तमः ॥ ४६ ॥ नत्व [illegible] दनदवशरणसमुपागताः ॥ पुष्करारण्यमासाद्यजप्यैश्चवैदिकैर्भृशम् ॥ ४७ ॥ तुष्टुवुःसहिताःस
र्वेतावत्तुष्टोहरःस्वयम् ॥ ततःसदर्शनंप्रादाद्द्विजानांभक्तितःशिवः ॥४८॥ उवाचतांस्ततोदेवोभक्तिनम्रान्द्विजोत्तमान् ॥ शिवउवाच ॥ पुरोडाशस्य
निष्पत्तिःकपालंनविनाभवेत् ॥ ४९ ॥ कुरुध्वंवचनंविप्राभागःस्विष्टकृतोमम ॥ एवंकृतेकृतंसर्वंमदीयंशासनंभवेत् ॥ ५० ॥ तथेत्यूचुर्द्विजाश्शं
भुंकुर्मोवैतवशासनम् ॥ कपालपाणिराहेशोभगवंतंपितामहम् ॥ ५१ ॥ वरंवरयभोब्रह्मन्हृदियत्तेप्रियंस्थितम् ॥ सर्वंतवप्रदास्यामिअदेयंनास्तिमे
प्रभो ॥ ५२ ॥ ब्रह्मोवाच ॥ नतेवरंग्रहीष्यामिदीक्षितोऽहंसदःस्थितः ॥ सर्वकामप्रदश्चाहंयोमांप्रार्थयतेत्विह ॥ ५३ ॥ एवंवदंतंवरदंक्रतौतस्मिन्पि
तामहम् ॥ तथेतिचोक्त्वारुद्रःसवरमस्मादयाचत ॥ ५४ ॥ ततोमन्वंतरेऽतीतेपुनरेवप्रभुःस्वयम् ॥ ब्रह्मोत्तरंकृतंस्थानंस्वयंदेवेनशंभुना ॥ ५५ ॥
चतुर्ष्वपिहिवेदेषुपरिनिष्ठांगतोहियः ॥ तस्मिन्कालेतदादेवोनगरस्यावलोकने ॥ ५६ ॥ संभाषणेद्विजानांतुकौतुकेनसदोगतः ॥ तेनैवोन्मत्तवेषेण
हुतशेषेमहेश्वरः ॥ ५७ ॥ प्रविष्टोब्रह्मणःसद्मदृष्टोदेवैर्द्विजोत्तमैः ॥ प्रहसंतिचकेऽप्येनंकेचिन्निर्भर्त्सयंतिच ॥ ५८ ॥ अपरेपांसुभिःसिञ्चन्त्युन्मत्तंतं
तथाद्विजाः ॥ लोष्टैश्चलगुडैश्चान्येशुष्मिणोबलगर्विताः ॥ ५९ ॥ प्रहरन्तिस्मोपहासंकुर्वाणाहस्तसंविदम् ॥ ततोऽन्यवटवस्तत्रजटास्वागृह्यचांतिक
म् ॥ ६० ॥ पृच्छंतिव्रतचर्यांतांकेनैषातेनिदर्शिता ॥ अत्रवामाःस्त्रियःसंतितासामर्थेत्वमागतः ॥ ६१ ॥ केनैषादर्शिताचर्यागुरुणापापदर्शिना ॥
येनचोन्मत्तवद्वाक्यंवदन्मध्येप्रधावसि ॥ ६२ ॥ शिश्नंमेब्रह्मणोरूपंभगंचापिजनार्दनः ॥ उप्यमानमिदंबीजंलोकःक्लिश्नातिचान्यथा ॥ ६३ ॥ म
याऽयंजनितःपुत्रोजनितोऽनेनचाप्यहम् ॥ महादेवकृतेसृष्टिःसृष्टाभार्याहिमालये ॥ ६४॥ उमादत्तातुरुद्रस्यकस्यसातनयावद ॥ मूढायूयंनजानीथ
वदतांभगवांस्तुवः॥६५॥ ब्रह्मणानकृताचर्यादर्शितानैवविष्णुना॥ गिरिशेनापिदेवेनब्रह्मवध्याकृतेनतु॥६६॥कथंस्विद्दूहसेदेवंवध्योऽस्माकंत्वमद्यवै ॥
एवंतैर्हन्यमानस्तुब्राह्मणैस्तत्रशंकरः ॥ ६७ ॥ स्मितंकृत्वाऽब्रवीत्सर्वान्ब्राह्मणान्नृपसत्तम ॥ शिवउवाच ॥ किंमांनवित्थभोविप्राउन्मत्तंनष्टचेतनम् ॥
॥ ६८ ॥ यूयंकारुणिकाःसर्वेमित्रभावेव्यवस्थिताः ॥ वदमानमिदंछद्मब्रह्मरूपधरंहरम् ॥ ६९ ॥ माययातस्यदेवस्यमोहितास्तेद्विजोत्तमाः ॥
कपर्दिनंनिजघ्नुस्तेपाणिपादैश्चमुष्टिभिः ॥ ७० ॥ दंडैश्चापिचकीलैश्चउन्मत्तवेषधारिणम् ॥ पीड्यमानस्ततस्तैस्तुद्विजैःकोपमथागमत् ॥
॥ ७१ ॥ ततोदेवनतेशप्तायूयंवेदविवर्जिताः ॥ ऊर्ध्वजटाःक्रतुभ्रष्टाःपरदारोपसेविनः ॥ ७२ ॥ वेश्यायांतुरताद्यूतेपितृमातृविवर्जिताः ॥
नपुत्रःपैतृकंवित्तंविद्यांवापिगमिष्यति ॥ ७३ ॥ सर्वेचमोहिताःसंतुसर्वेंद्रियविवर्जिताः ॥ रौद्रींभिक्षांसमश्नंतुपरपिंडोपजीविनः ॥ ७४ ॥

आत्मानंवर्तयंतश्चनिर्ममाधर्मवर्जिताः ॥ कृपार्पितातुयैर्विप्रैरुन्मत्तेमयिसांप्रतम् ॥ ७५ ॥ तेषांधनंचपुत्राश्चदासीदासमजाविकम् ॥ कुलो
त्पन्नाश्चवैनार्योमयितुष्टेभजिष्यथ ॥ ७६ ॥ एवंशापंवरंचैवदत्त्वांतर्द्धानमीश्वरः ॥ गतोद्विजागतेदेवेमत्वातंशंकरंप्रभुम् ॥ ७७ ॥ अन्विष्यं
तोऽपियत्नेननचापश्यंततेयदा ॥ तदानियमसंपन्नाःपुष्करारण्यमागताः ॥ ७८ ॥ स्नात्वाज्येष्ठसरोविप्राजेपुस्तेशतरुद्रियम् ॥ जाप्यावसानेदेवस्ता
नशरीरगिराब्रवीत् ॥ ७९ ॥ शिवउवाच ॥ अनृतंनमयाप्रोक्तंस्वैरेष्वपिकुतःपुनः॥ आगतेनिग्रहेक्षेमंभूयोऽपिकरवाण्यहम् ॥ ८० ॥ शांतादांताद्वि
जायेतुभक्तिमंतोमयिस्थिराः ॥ नतेषांछिद्यतेवेदोनधनंनापिसंततिः ॥ ८१ ॥ अग्निहोत्ररतायेचभक्तिमंतोजनार्दने ॥ पूजयंतिचब्रह्माणंतेजोराशिं
दिवाकरम् ॥ ८२ ॥ नाशुभंविद्यतेतेषांयेषांसाम्येस्थितामतिः ॥ एतावदुक्त्वावचनंतूष्णींभूतस्तुसोऽभवत् ॥ ८३ ॥ लब्ध्वावरंसप्रसादंदेवदेवान्महे
श्वरात् ॥ आजग्मुःसहितास्सर्वेयत्रदेवःपितामहः ॥ ८४ ॥ विरिंचिसंहिताजाप्यैस्तोषयंतोऽग्रतःस्थिताः ॥ तुष्टस्तानब्रवीद्ब्रह्मामत्तोऽपिव्रियतां
वरः ॥ ८५ ॥ ब्रह्मणस्तेनवाक्येनहृष्टाःसर्वेद्विजोत्तमाः ॥ कोवरोयाच्यतांविप्राःपरितुष्टेपितामहे ॥ ८६ ॥ एकेतत्राब्रुवन्विप्रावेदान्वैवृणवामहे
नेतिचान्येधनंचान्येव्रियतामविशङ्कितैः ॥ ८७ ॥ किमस्माकंधनेनेहकार्यंतुष्टेपितामहे ॥ अग्निहोत्राणिवेदाश्चशास्त्राणिविविधानिच ॥ ८८ ॥
सांतानिकाश्चयेलोकावरदानाद्भवंतुनः ॥ एवंप्रजल्पतांतत्रविप्राणांकोपमाविशत् ॥ ८९ ॥ केयूयंकेऽत्रप्रवरावयंश्रेष्ठास्तथापरे ॥ नेतिनेतितथाविप्रा
द्विजांस्तांस्तत्रसंस्थितान् ॥ ९० ॥ ब्रह्मोवाचाभिसंप्रेक्ष्यब्राह्मणान्क्रोधपूरितान् ॥ यस्माद्यूयंत्रिभिर्भागैःसभायांबाह्यतःस्थिताः ॥ ९१ ॥ तस्मा
दामूलिकोगुल्मोह्येकोभवतुवोद्विजाः ॥ उदासीनाःस्थितायेतुउदासीनाभवंतुते ॥ ९२ ॥ सायुधाबद्धनिस्त्रिंशायोद्धुकामाव्यवस्थिताः ॥ कौशिकी
तिगणोनामतृतीयोभवतुद्विजाः ॥ ९३ ॥ त्रिधाबद्धमिदंस्थानंसर्वंयुष्मद्भविष्यति ॥ बाह्यतोलोकशब्देनप्रोच्यमानाःप्रजास्त्विह ॥ ९४ ॥ अवि
क्रेयंनास्तिवोऽत्रसर्वस्वंवःप्रणश्यति ॥ तृणानिभूमिरुदकंतथावैदारुसंचयः ॥ ९५ ॥ प्रतिग्रहेचानुवृत्तिःकुपिताश्चपरस्परम् ॥ अभिप्रपन्नविप्राणांक्ष
मावैनात्रकाचन ॥ ९६ ॥ केवलंद्रव्यरुचयोलोभोपहतचेतसः ॥ एवंविधारुद्रशापाद्भवितारोनसंशयः ॥ ९७ ॥ युष्माकंस्थानमेतत्तुविष्णुःपा
लयिताध्रुवम् ॥ मयादत्तंचिरस्थायिअभंगंचभविष्यति ॥ ९८ ॥ एवमुक्त्वातदाब्रह्मासमापिंतामवैक्षत ॥ ब्राह्मणाःसहितास्तेतुयज्ञार्थेविबुधैस्सह ॥
॥ ९९ ॥ अतिथिंभोजयानाश्चवेदाभ्यासरतास्तुते ॥ एतच्चपरमंक्षेत्रंपुष्करंब्रह्मसंज्ञितम् ॥ १०० ॥ तत्रस्थायेद्विजाःशांतावसंतिक्षेत्रवासिनः ॥ नते
षांदुर्लभंकिंचिद्ब्रह्मलोकेभविष्यति ॥ १ ॥ कोकामुखेकुरुक्षेत्रेनैमिषेऋषिसंगमे ॥ वाराणस्यांप्रभासेचतथावदरिकाश्रमे ॥ २ ॥ गंगाद्वारेप्रया

गेचगंगासागरसंगमे ॥ रुद्रकोट्यांविरूपाक्षेमित्रम्यापितथावने ॥ ३ ॥ तीर्थेष्वेतेषुसर्वेषुसिद्धिर्याद्वादशाब्दिक[1] ॥ प्राप्यतेमानवैर्लोकेषण्मासाद्रा
जसत्तम ॥ ४ ॥ पुष्करेतुनसंदेहोब्रह्मचर्यमनायदि ॥ तीर्थानांपरमंतीर्थंक्षेत्राणामपिचोत्तमम् ॥ ५ ॥ सदातुपूजितंपूज्यैर्भक्तियुक्तैःपितामहे ॥
अतःपरंप्रवक्ष्यामिसावित्र्याब्रह्मणासह ॥ ६ ॥ वादोयथानुभूतस्तुपरिहासकृतोमहान् ॥ सावित्रीगमनेसर्वा आगतादेवयोषितः ॥ ७ ॥ भृगोःख्यात्यां
समुत्पन्नाविष्णुपत्नीयशस्विनी ॥ आमन्त्रितातदालक्ष्मीस्तत्रायातात्वरान्विता ॥ ८ ॥ मदिराचमहाभागायोगनिद्राविभूतिदा ॥ श्रीःकमलालया
भूतिःकीर्तिःश्रद्धामनस्विनी ॥ ९॥ पुष्टितुष्टिप्रदायातुदेव्यएताःसमागताः ॥ सतीयादक्षतनयाउमेतिपार्वतीशुभा ॥ ११०॥ त्रैलोक्यसुंदरीदेवीस्त्री
णांसौभाग्यदायिनी ॥ जयाचविजयाचैवमधुच्छंदामरावती ॥ ११ ॥ सुप्रियाजनकांताचसावित्र्यामंदिरेशुभे ॥ गौर्यासहसमायातास्सुवेषाभर
णान्विताः ॥ १२ ॥ पुलोमदुहिताचैवशक्राणीचमहाप्सराः ॥ स्वाहाचापिस्वधायाताधूमोर्णाचवरानना ॥ १३॥ यक्षीतुराक्षसीचैवगौरीचैवम
हाधना ॥ मनोजवावायुपत्नीऋद्धिश्चधनदप्रिया ॥ १४ ॥ देवकन्यास्तथायानादानव्योदनुवल्लभाः ॥ सप्तर्षीणांमहापत्न्यऋषीणांचवरांगनाः ॥
॥ १५ ॥ एवंभगिन्योदुहिताविद्याधरीगणास्तथा ॥ राक्षस्यःपितृकन्याश्चतथान्यालोकमातरः ॥ १६ ॥ वधूभिःसस्नुषाभिश्चसावित्रीगंतुमि
च्छति ॥ अदित्याद्यास्तथासर्वादक्षकन्यास्समागताः ॥ १७ ॥ ताभिःपरिवृतासाध्वीब्रह्माणीकमलालया ॥ काचिन्मोदकमादायकाचिच्छू
र्पंवरानना ॥ १८ ॥ फलपूरितमादायप्रयाताब्रह्मणोऽतिकम् ॥ आढकीःसहनिष्पावागृहीत्वान्यास्तथापराः ॥ १९ ॥ दाडिमानिविचित्राणि
मातुलिंगानिशोभना ॥ करीराणितथाचान्यागृहीत्वाकमलानिच ॥ १२० ॥ कौसुंभकंजीरकंचखर्जूरमपरातथा ॥ उत्तमान्यपरादायनालिकेरा
णिसर्वशः ॥ २१ ॥ द्राक्षयापूरितंकाचित्पात्रंशृगाटकंतथा ॥ कर्पूराणिविचित्राणिजंबूकानिशुभानिच ॥ २२ ॥ अक्षोटामलकान्गृह्यजंबीराणि
तथापरा ॥ बिल्वानिपरिपक्वानिचिपिटानिवरानना ॥ २३ ॥ अतुल्यान्नविकाराणिबहूनिविविधानिच ॥ कार्पासतूलिकाश्चान्यावस्त्रंकौसुंभकं
तथा ॥१४॥ एवमाद्यानिचान्यानिकृत्वाशूर्पेवगनानाः ॥ सावित्र्यासहिताःसर्वाःसंप्राताःसहसांशुभाः ॥२५॥ सावित्रीमागतांदृष्ट्वाभीतस्तत्रपुरंदरः॥
अधोमुखःस्थितोब्रह्माकिमेषामांवदिष्यति ॥२६॥ त्रपान्वितौविष्णुरुद्रौसर्वेचान्येद्विजातयः ॥ सभासदस्तथाभीतास्तथाचान्येदिवौकसः ॥२७॥
पुत्राःपौत्राभागिनेयामातुलाभ्रातरस्तथा ॥ ऋभवोनामयेदेवादेवानामपिदेवताः ॥ २८ ॥ वैलक्ष्येतुस्थिताःसर्वेसावित्रीकिंवदिष्यति ॥ ब्रह्मपार्श्वे

१ कान्तिः ।

स्थितानात्रकिंतुवैगोपकन्यका ॥ २९ ॥ मौनीभूतातुशृण्वानासर्वेषांवदतांगिरः ॥ अध्वर्युणासमाहूतानागतावरवर्णिनी ॥ १३० ॥ शक्रेणान्याहृता
भीगीदत्तासाविष्णुनास्वयम् ॥ अनुमोदिताचरुद्रेणपित्राऽदत्तास्वयंतथा ॥३१॥ कथंसाभावितायज्ञसमाप्तिंवाव्रजेत्कथम्॥एवंचिंतयतांतेषांप्रविष्टाक
मलालया ॥३२॥ वृतोब्रह्मामदस्यैस्तुऋत्विग्भिर्दैवतैस्तथा॥हूयन्तेचाग्रयस्तत्रब्राह्मणैर्वेदपारगैः ॥३३॥ पत्नीशालास्थितागोपीसैणशृंगासमेखला॥
क्षौमवस्त्रपरीधानाध्यायंतीपरमंपदम् ॥३४॥ पतिव्रतापतिप्राणाप्राधान्येचनिवेशिता॥रूपान्विताविशालाक्षीतेजसाभास्करोपमा ॥३५॥ द्योतयंती
सदस्तत्रसूर्यस्येवयथाप्रभा ॥ ज्वलमानंतथावह्निंश्रयंतऋत्विजस्तथा ॥३६॥ पशूनामिहगृह्णानाभागंस्वंस्वंचरोर्मुदा ॥ यज्ञभागार्थिनोदेवाविलंबा
द्भुवतेतदा ॥३७॥ कालहीनंनकर्तव्यंकृतंनफलदंयतः ॥ वेदेष्वेवमधीकारोदृष्टःसर्वैर्मनीषिभिः ॥३८॥ प्रावर्ग्येक्रियमाणेतुब्राह्मणैर्वेदपारगैः ॥ क्षीर
द्वयेनसंयुक्तशृतेनाध्वर्युणातथा ॥ ३९ ॥ उपहूतेनागतेनचाहूतेषुद्विजन्मसु ॥ क्रियमाणेतथाभक्ष्येदृष्ट्वादेवीरुपान्विता ॥ १४० ॥ उवाचदेवीब्रह्माणं
सदोमध्येतुमौनिनम् ॥ सावित्र्युवाच॥किमेतद्युज्यतेदेवकर्तुमेतद्विचेष्टितम् ॥ ४१ ॥ मांपरित्यज्ययत्कामात्कृतवानसिकिल्बिषम् ॥ नतुल्यापादर
जसाममेयंगोपकन्यका ॥४२॥ यद्वदंतिजनास्सर्वेसंगताःसदसिस्थिताः ॥ आज्ञामीश्वरभूतानांतांकुरुष्वयदीच्छसि ॥ ४३ ॥ भवतारूपलोभेनकृतं
लोकविगर्हितम् ॥ पुत्रेपुनकृतालज्जापौत्रेषुचनतेप्रभो ॥ ४४ ॥ कामकारकृतंमन्यएतत्कर्मविगर्हितम् ॥ पितामहोऽसिदेवानामृषीणांप्रपितामहः
॥ ४५ ॥ कथंनतेत्रपाजाताआत्मनःपश्यतस्तनुम् ॥ लोकमध्येकृतंहास्यमहंचापकृताप्रभो ॥ ४६ ॥ यद्येषतेस्थिरोभावस्तिष्ठदेवनमोऽस्तुते ॥अहं
कथंसखीनांतुदर्शयिष्यामिवैमुखम् ॥ ४७ ॥ भर्त्रामेविधृतापत्नीकथमेतदहंवद ॥ ब्रह्मोवाच ॥ ऋत्विग्भिस्त्वरितश्चाहंदीक्षाकालादनंतरम् ॥४८॥
पत्नींविनानहोमोऽत्रशीघ्रपत्नीमिहानय ॥ शक्रेणैषासमानीतादत्तेयंममविष्णुना ॥ ४९ ॥ गृहीताचमयासुभ्रुक्षमस्वैतंमयाकृतम् ॥ नचापराधं
भूयोऽन्यंकरिष्येतवसुव्रते ॥ १५० ॥ ॥ पादयोःपतितस्तेऽहंक्षमस्वहनमोऽस्तुते ॥ पुलस्त्य उवाच ॥ एवमुक्तातदाक्रुद्धाब्रह्माणंशप्तुमुद्यता ॥५१॥
यदिमेऽस्तितपस्तप्तंगुरवोयदितोषिताः ॥ सर्वब्रह्मसमूहेषुस्थानेषुविविधेषुच ॥ ५२ ॥ नैवतेब्राह्मणाःपूजांकरिष्यंतिकदाचन ॥ ऋतेतुकार्तिकीमेकां
पूजांसांवत्सरींतव ॥ ५३ ॥ करिष्यंतिद्विजाःसर्वेमर्त्यानान्यत्रभूतले ॥ एतद्ब्रह्माणमुक्त्वाहशतक्रतुमुपस्थितम् ॥ ५४ ॥ भोभोःशक्रत्वयानीता
आभीरीब्रह्मणोऽंतिकम् ॥ यस्मात्तेक्षुद्रकंकर्मतस्मात्त्वंलप्स्यसेफलम् ॥ ५५ ॥ यदासंग्राममध्येत्वंस्थाताशक्रभविष्यसि ॥ तदात्वंशत्रुभिर्बद्धो
नीतःपरमिकांदशाम् ॥ ५६ ॥ अकिंचनोनष्टसत्त्वःशत्रूणांनगरेस्थितः । पराभवंमहत्प्राप्यनचिरादेवमोक्ष्यसे ॥ ५७ ॥ शक्रंशप्त्वातदादेवीविष्णुं ॥ ५२ ॥

वाक्यमथाब्रवीत् ॥ भृगुवाक्येनतेजन्मयदामर्त्येभविष्यति ॥ ५८ ॥ भार्यावियोगजंदुःखंतदात्वंतत्रभोक्ष्यसे ॥ हृतांतेशत्रुणापत्नीपरेपारेमहोदधेः
॥ ५९ ॥ नचत्वंज्ञास्यसेनीतांशोकोपहतचेतनः ॥ भ्रात्रासहपरंकष्टामापदंप्राप्यदुःखितः ॥ १६० ॥ यदायदुकुलेजातःकृष्णसंज्ञोभविष्यसि ॥ पशू
नांपालकोभूत्वाचिरकालंभ्रमिष्यसि ॥ ६१ ॥ तदाहरुद्रंकुपितायदादारुवनेस्थितः ॥ तदातेऋषयःक्रुद्धाःशापंदास्यंतिवैहर ॥ ६२ ॥ भोभोःकापा
लिकक्षुद्रस्त्रीरस्माकंजिहीर्षसि ॥ तदेतद्दर्पिततेऽद्यभूमौलिंगंपतिष्यति ॥ ६३ ॥ विहीनःपौरुषेणत्वंमुनिशापाच्चपीडितः ॥ गंगाद्वारेस्थितापत्नीसा
त्वामाश्वासयिष्यति ॥ ६४ ॥ अग्नेत्वंसर्वभक्षोऽसिपूर्वंपुत्रेणमेकृतः ॥ भृगुणाधर्मनित्येनकथंदग्धंदहाम्यहम् ॥ ६५ ॥ जातवेदस्सरुद्रस्त्वांरेतसाप्लाव
यिष्यति ॥ अमेध्येषुचतेजिह्वाअधिकंप्रज्वलिष्यति ॥ ६६ ॥ ब्राह्मणानृत्विजःसर्वान्सावित्रीवैशशापह ॥ प्रतिग्रहार्थेऽग्निहोत्रवृथाटव्याश्रयास्तथा
॥ ६७ ॥ सदातीर्थानिक्षेत्राणिलोभादेवभजिष्यथ ॥ परान्नेषुसदातृप्ताअतृप्तास्स्वगृहेषुच ॥ ६८ ॥ अयाज्ययाजनंकृत्वाकुत्सितस्यप्रतिग्रहम् ॥ वृथा
धनार्जनंकृत्वाव्ययंचैवतथावृथा ॥ ६९ ॥ प्रेतानांतेनप्रेतत्वंभविष्यतिनसंशयः ॥ एवंशक्रंतथाविष्णुंरुद्रंवैपावकंतथा ॥ १७० ॥ ब्रह्माणंब्राह्मणांश्चै
वसर्वांस्तानशपद्रुषा ॥ शापंदत्त्वातथातेषांनिष्क्रांतामदमस्तथा ॥ ७१ ॥ ज्येष्ठंपुष्करमासाद्यतदासाचव्यवस्थिता ॥ लक्ष्मींप्राहसतींतां
चशक्रभार्यांवराननाम् ॥ ७२ ॥ युवतीस्तास्तथोवाचनात्रस्थास्यामिसंसदि ॥ तत्रचाहंगमिष्यामियत्रश्रोष्येनचध्वनिम् ॥ ७३ ॥ पुलस्त्य
उवाच ॥ ततस्ताःप्रमदाःसर्वाःप्रयाताःस्वनिकेतनम् ॥ सावित्रीकुपितातासामपिशापायचोद्यता ॥ ७४ ॥ यस्मान्मांतुपरित्यज्यगतास्तादेवयो
षितः ॥ तासामपितथाशापंप्रददाम्येकुपिताभृशम ॥ ७५ ॥ सावित्र्युवाच ॥ नैकत्रवासोलक्ष्म्यास्तुभविष्यतिकदाचन ॥ क्षुद्रासाचलचित्ताच
मूर्खेषुचवसिष्यति ॥ ७६ ॥ म्लेच्छेषुपार्वतीयेषुकुत्सितेऽकुत्सितेतथा ॥ मूर्खेषुचावलिप्तेषुअभिशप्तेदुरात्मनि ॥ ७७ ॥ एवंविधनरेस्यात्तेवसतिः
शापकारिता ॥ शापंदत्त्वाततस्तस्याइंद्राणीमशपत्तदा ॥ ७८ ॥ ब्रह्महत्यागृहीतेंद्रपत्यौतेदुःखभागिनि ॥ नहुषापहृतेराज्येदृष्ट्वात्वांयाचयिष्यति
॥ ७९ ॥ अहमिंद्रःकथंचैषानोपस्थास्यतिबालिशा ॥ सर्वान्देवान्हनिष्यामिनलभ्येऽहंशचींयदि ॥ १८० ॥ नष्टात्वंचतदात्रस्तावाक्पतेर्दुःखिता
गृहे ॥ वसिष्यसेदुराचारेममशापेनगर्विते ॥ ८१ ॥ देवभार्यासुसर्वासुतदाशापमयच्छत ॥ नचापत्यकृतांप्रीतिमेताःसर्वालभिष्यथ ॥ ८२ ॥
दह्यमानादिवारात्रौवंध्याशब्देनदूषिताः ॥ गौर्य्यप्येवंतदाशप्तासावित्र्यावरवर्णिनी ॥ ८३ ॥ रुदमानातुमादृष्ट्वाविष्णुनाचप्रसादिता ॥ विष्णुरुवाच ॥
मारोदीस्त्वंविशालाक्षिएह्यागच्छसदाशुभे ॥ ८४ ॥ प्रविश्यचसभांदेहिमेखलांक्षौमवाससी ॥ गृहाणदीक्षांब्रह्माणिपादौचप्रणमामिते ॥ ८५ ॥

एवमुक्ताऽब्रवीदेनंनकरोमिवचस्तव ॥ तत्रचाहंगमिष्यामियत्रश्रोष्यंनवैध्वनिम् ॥ ८६ ॥ एतावदुक्त्वासारुद्यातस्मात्स्थानाद्विरौस्थिता ॥ विष्णुस्तद
ग्रतःस्थित्वाबद्धाचकरसंपुटम् ॥ ८७ ॥ तुष्टावप्रणतोभूत्वाभक्त्यापरमयास्थितः ॥ विष्णुरुवाच ॥ सर्वगासर्वभूतेषुद्रष्टव्यासर्वतोऽद्भुता ॥ ८८ ॥
मदमचैवयत्किंचिद्दृश्यंतन्नविनात्वया ॥ तथापियेषुस्थानेषुद्रष्टव्यासिद्धिमीप्सुभिः ॥ ८९ ॥ स्मर्तव्याभूमिकामैर्वानत्प्रवक्ष्यामितेऽग्रतः ॥ सावित्री
पुष्करेनामतीर्थानांप्रवरेशुभे ॥ ९० ॥ वाराणस्यांविशालाक्षीनैमिषेलिंगधारिणी ॥ प्रयागेललितादेवीकामुकागंधमादने ॥ ९१ ॥ मानसेकुमुदा
नामविश्वकायातथांबरे ॥ गोमंतेगोमतीनाममंदरेकामचारिणी ॥ ९२ ॥ मदोत्कटाचैत्ररथेजयंतीहस्तिनापुरे ॥ कान्यकुब्जेतथागौरीरंभामलयप
र्वते॥९३॥एकाम्रकेकीर्तिमतीविश्वाविश्वेश्वरीतथा॥कर्णिकेपुरुहस्तेतिकेदारेमार्गदायिका॥९४॥नंदाहिमवतःपृष्ठेगोकर्णेभद्रकालिका ॥स्थाण्वीश्वरेभवा
नीतुबिल्वकेबिल्वपत्रिका॥९५॥श्रीशैलेमाधवीदेवीभद्राभद्रेश्वरीतथा॥ जयावराहशैलेतुकमलाकमलालये ॥९६॥रुद्रकोटयांतुरुद्राणीकालीकालंजरेत
था॥महालिंगेतुकपिलाकर्कोटेमंगलेश्वरी॥९७॥शालग्रामेमहादेवीशिवलिंगेजलप्रिया॥मायापुर्यांकुमारीतुसंतानेललितातथा ॥९८ ॥उत्पलाक्षीसहस्रा
क्षेहिरण्याक्षमहोत्पला ॥ गयायांमंगलानामविमलापुरुषोत्तमे ॥ ९९ ॥ विपाशायाममोघाक्षीपाटलापुण्यवर्द्धने ॥ नारायणीसुपार्श्वेतुत्रिकूटेभद्र
सुंदरी ॥ २०० ॥विपुलेविपुलानामकल्याणीमलयाचले ॥ कोटवीकोटितीर्थेतुसुगंधामाधवीवने ॥ १ ॥ कुब्जाम्रकेत्रिसंध्यातुगंगाद्वारेहरिप्रिया ॥
शिवकुंडेशिवानंदानंदिनीदेविकातटे ॥ २ ॥ रुक्मिणीद्वारवत्यांतुराधावृंदावनेतथा ॥ देवकीमथुरायांतुपातालेपरमेश्वरी ॥ ३ ॥ चित्रकूटेतथा
सीताविंध्येविंध्यनिवासिनी ॥ सह्याद्रावेकवीरातुहरिश्चंद्रतुचंद्रिका ॥ ४ ॥ रमणारामतीर्थेतुयमुनायांमृगावती ॥ करवीरेमहालक्ष्मीरुमादेवी
विनायके ॥ ५ ॥ अरोगावैद्यनाथेतुमहाकालेमहेश्वरी ॥ अभयापुष्पतीर्थेतुअमृताविंध्यकंदरे ॥ ६ ॥ मांडव्येमांडवीदेवीस्वाहामाहेश्वरेपुरे ॥
वेगलेतुप्रचंडाथचंडिकामरकंटके ॥ ७ ॥ सोमेश्वरेवरारोहाप्रभासेपुष्करावती ॥ देवमातासरस्वत्यांपारापारतटेस्थिता ॥ ८ ॥ महालयेमहापद्मा
पयोष्ण्यांपिंगलेश्वरी ॥ सिंहिकाकृतशौचेतुकार्तिकेयेतुशंकरी ॥ ९ ॥ उत्पलावर्तकेलोलासुभद्रासिंधुसंगमे ॥ उमासिद्धवनेलक्ष्मीरनंगाभग्नाश्रमे
॥ २१० ॥ जालंधरेविश्वमुखीताराकिष्किंधपर्वते ॥ देवदारुवनेपुष्टिर्मेधाकाश्मीरमंडले ॥११॥ भीमादेवीहिमाद्रौचतुष्टिर्वस्त्रेश्वरेतथा ॥ कपालमोच
नेश्रद्धामाताकायावरोहणे ॥ १२ ॥ शंखोद्धारेध्वनिर्नामधृतिःपिंडारकेतथा ॥ कालातुचंद्रभागायामच्छोदेसिद्धिदायिनी ॥ १३ ॥ वेणायाम
मृतादेवीबदर्यामुर्वशीतथा ॥औषधीचोत्तरकुरौकुशद्वीपेकुशोदका ॥१४॥ मन्मथाहेमकूटेतुकुमुदेसत्यवादिनी ॥ अश्वत्थेवंदनीयातुनिधिर्वैश्रवणा

लये ॥ १५ ॥ गायत्रीवेदवदनेपार्वतीशिवसन्निधौ ॥ देवलोकेतथैंद्राणीब्रह्मास्येतुसरस्वती ॥ १६ ॥ सूर्यबिंबप्रभानाममातृणांवैष्णवीतथा ॥ अरुंधतीसतीनांतुरामासुचनिलोत्तमा ॥ १७ ॥ चित्रेब्रह्मकलानामशक्तिःसर्वशरीरिणाम् ॥ एतद्भक्त्यामयाप्रोक्तंनामाष्टशतमुत्तमम् ॥ १८ ॥ अष्टोत्तरंचतीर्थानांशतमेतदुदाहृतम् ॥ योजपेच्छृणुयाद्वापिसर्वपापैःप्रमुच्यते ॥ १९ ॥ येषुतीर्थेषुयःकृत्वास्नानंपश्येन्नरोत्तमः ॥ सर्वपापविनिर्मुक्तः कल्पंब्रह्मपुरेवसेत्॥ २२० ॥ नामाष्टकशतंयस्तुश्रावयेद्ब्रह्मसन्निधौ ॥ पौर्णमास्याममायांवाबहुपुत्रोभवेन्नरः ॥ २१ ॥ गोदानेश्राद्धदानेवाअहन्यहनि वापुनः ॥ देवार्चनविधौशृण्वन्परंब्रह्माधिगच्छति ॥२२॥ एवंस्तुवंतंमाविश्रीविष्णुंप्रोवाचसुव्रता ॥ सवित्र्युवाच ॥ सम्यक्स्तुतात्वयापुत्रत्वमजय्योभ विष्यसि ॥२३॥ अवतारेसदारस्त्वंपितृमातृपुवल्लभः ॥ इहचागत्ययोमांतुस्तवेनानेनसंस्तुयात् ॥ २४ ॥ सर्वपापविनिर्मुक्तःपरंस्थानंगमिष्यति ॥ गच्छयज्ञंविरिंचस्यसमाप्तिंनयपुत्रक ॥ २५ ॥ कुरुक्षेत्रप्रयागेचभविष्येचान्नदायिनी ॥ समीपगास्थिताभर्त्तुःकरिष्येतवभाषितम् ॥ २६ ॥ पुलस्त्यउवाच ॥ एवमुक्तोगतोविष्णुर्ब्रह्मणःसदउत्तमम् ॥ गतायामथसावित्र्यांगायत्रीवाक्यमब्रवीत ॥ २७ ॥ गायत्र्युवाच ॥ शृण्वन्तु वाक्यमृषयोमदीयंभर्तृसन्निधौ ॥ यदिदंवचम्यहंतुष्टावरदानायचोद्यता ॥२८॥ ब्रह्माणंपूजयिष्यंतिनराभक्तिसमन्विताः ॥तेषांवस्त्रंधनंधान्यंदाराः सौख्यंधनानिच ॥ २९ ॥ अविच्छिन्नंतथासौख्यंगृहेवैपुत्रपौत्रकम् ॥ भुक्त्वासौसुचिरंकालमंतेमोक्षंगमिष्यति ॥ २३० ॥ पुलस्त्यउवाच ॥ ब्रह्माणंचप्रतिष्ठाप्यसर्वयत्नैर्विधानतः ॥ यत्पुण्यफलमाप्नोतितदेकाग्रमनाःशृणु ॥ ३१ ॥ सर्वयज्ञतपोदानतीर्थवेदेषुयत्फलम् ॥ तत्फलंकोटिगुणि तंलभेतैतत्प्रतिष्ठया ॥ ३२ ॥ पौर्णमास्युपवासंतुकृत्वाभक्त्यानराधिप ॥ अनेनविधिनायस्तुविरिंचिंपूजयेन्नरः ॥ ३३ ॥ प्रतिपदिमहाबाहोसयाति ब्रह्मणःपदम् ॥ विरिंचिवासुदेवंतुऋत्विग्भिश्चविशेषतः ॥ ३४ ॥ कार्तिकेमासिदेवस्यरथयात्राप्रकीर्तिता ॥ यांकृत्वामानवाभक्त्यासंयांतिब्रह्मलोक ताम् ॥ ३५ ॥ कार्तिकेमासिगजेंद्रपौर्णमास्यांचतुर्मुखम् ॥ मार्गेणब्रह्मणासार्द्धंसावित्र्याचपरंतप ॥ ३६ ॥ भ्रामयेन्नगरंसर्वंनानावाद्यसमन्वितः ॥ स्थापयेद्भ्रामयित्वातुसलोकनगरंनृप ॥ ३७ ॥ ब्राह्मणान्भोजयित्वाग्रेशांडिलेयंप्रपूज्यच ॥ आरोपयेद्रथेदेवंपुण्यवादित्रनिःस्वनैः ॥ ३८ ॥ रथाग्रे शांडिलीपुत्रंपूजयित्वाविधानतः॥ब्राह्मणान्वाचयित्वातुकृत्वापुण्याहमङ्गलम् ॥ ३९ ॥ देवमारोपयित्वाचरथेकुर्यात्प्रजागरम् ॥ नानाविधैःप्रेक्षणि कैर्ब्रह्मघोषैश्चपुष्कलैः ॥ २४० ॥ कृत्वाप्रजागरंदेवंप्रभातेब्राह्मणान्नृप ॥ भोजयित्वायथाशक्तिभक्ष्यभोज्यैरनेकशः ॥ ४१ ॥ पूजयित्वाजनंधीरमंत्रेण विधिवन्नृप ॥ आज्येनतुमहाबाहोपयसापायसेनच ॥४२॥ ब्राह्मणान्वाचयित्वातुस्वस्त्यातुविधिवन्नृप॥कृत्वापुण्याहशब्दंचतद्रथंभ्रामयेत्पुरे॥४३॥

विप्रैश्चतुर्वेदविद्भिर्भ्रामयद्ब्रह्मणोरथम् ॥ वह्वृचाथर्वणैर्वीरछंदोगाध्वर्युभिस्तथा ॥ ४४ ॥ भ्रामयेद्देवदेवस्यसुरश्रेष्ठस्यतंरथम् ॥ प्रदक्षिणंपुरंस
र्वमार्गेणसुसमंततः ॥ ४५ ॥ नवोढव्योरथोवीरशूद्रेणहितमिच्छता ॥ नचारोहेद्रथंप्राज्ञोमुक्त्वैकंभोजकंनृपः ॥४६॥ ब्रह्मणोदक्षिणेपार्श्वेगायत्रींस्थाप
येन्नृप ॥ भोजकंवामपार्श्वेतुपुरतःपङ्कजंन्यसेत् ॥ ४७ ॥ एवंतूर्यनिनादैस्तुशंखशब्दैश्चपुष्कलः ॥ भ्रामयित्वारथंवीरपुरंसर्वंप्रदक्षिणम् ॥ ४८ ॥
स्वस्थानेस्थापयेद्देवंदत्वानीराजनंबुधः ॥ यएवंकुरुतेयात्रांयोवाभक्त्यापिपश्यति ॥ ४९ ॥ रथंवाकर्षयेद्यस्तुसगच्छेद्ब्रह्मणःपदम् ॥ कार्तिकेमास्य
मावास्यायंश्चदीपप्रदीपनम् ॥ २५० ॥ शालायांब्रह्मणःकुर्यात्सगच्छेत्परमंपदम् ॥ गंधपुष्पैर्नववस्त्रैरात्मानंपूजयेत्तुयः ॥ ५१ ॥ तस्यांप्रतिपदायांतु
सगच्छेद्ब्रह्मणःपदम् ॥ महापुण्यातिथिरियंबलिराज्यप्रवर्तिनी ॥ ५२ ॥ ब्रह्मणःसुप्रियानित्यंबालेयीपरिकीर्तिता ॥ ब्रह्माणंपूजयेद्योऽस्यामात्मानंच
विशेषतः ॥ ५३ ॥सयातिपरमंस्थानंविष्णोरमिततेजसः ॥ चैत्रमासिमहाबाहोपुण्याप्रतिपदावरा ॥ ५४ ॥ तस्यांयःश्वपचंस्पृष्ट्वास्नानंकुर्यान्नरोत्तमः
॥ नतस्यदुरितंकिंचिन्नाधयोव्याधयोनृप॥५५ ॥भवंतिकुरुशार्दूलतस्मात्स्नानंसमाचरेत् ॥दिव्यंनीराजनंतद्धिसर्वरोगविनाशनम्॥५६॥ गोमहिष्या
दियत्किंचित्तत्सर्वंकर्पयेन्नृप ॥ ततवस्त्रादिभिःसर्वैस्तोरणंबाह्यतोन्यसेत् ॥ ५७ ॥ ब्राह्मणानांतथाभोज्यंकुर्यात्कुरुकुलोद्वह ॥ तिस्रोह्येताःपुराप्रोक्ता
स्तिथयःकुरुनंदन ॥ ५८ ॥ कार्तिकेऽयुजेमासिचैत्रमासितथानृप ॥ स्नानंदानंशतगुणंकार्तिकेयातिथिर्नृप ॥ ५९ ॥ बलिराज्ञस्तुशुभदा
पशूनांहितकारिणी ॥ गायत्र्युवाच ॥ यदुक्तंतुतयावाक्यंसावित्र्याकमलोद्भव ॥२६०॥ नतुतब्राह्मणाःपूजांकरिष्यंतिकदाचन ॥ मदीयंतुवचःश्रुत्वा
येकरिष्यंतिचार्चनम् ॥ ६१ ॥ इहभुक्त्वातुभोगांस्तेपरत्रमोक्षभागिनः ॥ एतांज्ञात्वापरांहृष्टिंवरंतुष्टःप्रयच्छति ॥६२ ॥ शक्राहंतेवरंदास्येसंग्रामेश
त्रुनिग्रहे ॥ तदाब्रह्मामोचयितागत्वाशत्रुनिकेतनम् ॥६३॥ स्वपुरंलप्स्यसेनष्टंशत्रुनाशात्परांमुदम् ॥ अकंटकंमहद्राज्यंत्रैलोक्येतेभविष्यति ॥६४॥
मर्त्यलोके[illegible]यदाविष्णोअवतारंकरिष्यसि ॥ भ्रात्रासहपरंदुःखंस्वभार्याहरणादिजम् ॥६५॥ हत्वाशत्रुंपुनर्भार्यांलप्स्यसेसुरसन्निधौ ॥ गृहीत्वातांपुना
राज्यंकृत्वास्वर्गंगमि[illegible]ष्यसि ॥ ६६ ॥ एकादशसहस्राणिवर्षाणांचपुनर्दिवम् ॥ ख्यातिस्तेविपुलालोकेअनुरागंजनैस्सह ॥ ६७ ॥ सांतानिकानाम
तवैलोकाःस्थास्यंतिभाविताः ॥ [illegible]स्यांततागतादेवरामरूपेणमानवाः ॥ ६८ ॥ गायत्रीतुतदारुद्रंवरदांप्रत्यभाषत ॥ पतितेऽपिचतेलिंगेपूजांकुर्व
तियेनराः ॥ ६९ ॥ तेपूताःपुण्यकर्माणःस्व[illegible]लोकस्यभागिनः ॥ नतांगतिंचाग्निहोत्रेनकृतोहुतपावके ॥ २७० ॥ यांगतिंमनुजायांतितवलिंगस्य
पूजनात् ॥ गंगातीरेसदालिंगंबिल्वपत्रेणयेनव[illegible] ॥७१॥ पूजयिष्यंतिसुप्रीतारुद्रलोकस्यभागिनः ॥ प्राप्यापिसर्वभक्षत्वमग्नेत्वंभवपावनः ॥ ७२ ॥

त्वयिप्रीतेसुराःसर्वेप्रीतावैनात्रसंशयः॥त्वन्मुखेनहविर्देवाःप्रीताःप्राप्यसदाध्रुवम् ॥७३॥भुंजतेनात्रसंदेहोवेदोक्तंवचनंयथा॥गायत्राब्राह्मणांस्तांश्च
श्चैवाब्रवीदिदम् ॥ ७४ ॥ युष्माकंप्रीणनंकृत्वासर्वतीर्थेषुमानवाः ॥ पदंसर्वेगमिष्यंतिवैराजाख्यंनसंशयः ॥ ७५ ॥ अन्नप्रकारान्विविधान्दत्त्वादा
नान्यनेकशः॥श्राद्धेषुप्रीणनंकृत्वादेवदेवाभवंतिते ॥ ७६ ॥ येचवैब्राह्मणश्रेष्ठास्तेषामास्येदिवौकसः ॥भुंजतेचहविःक्षिप्रंकव्यंचैवपितामहाः ॥७७॥
यूयंहिधारणेशक्तास्त्रैलोक्यस्यनसंशयः ॥ प्राणायामेनचैकेनसर्वेपूताभविष्यथ ॥७८॥ विशेषात्पुष्करेस्नात्वामांजप्त्वावेदमातरम्॥ प्रतिग्रहकृतान्दो
षान्नप्राप्स्यथद्विजोत्तमाः ॥७९॥पुष्करेचान्नदानेनप्रीताःस्युःसर्वदेवताः ॥एकस्मिन्भोजितेविप्रेकोट्याःफलमवाप्स्यते॥ २८०॥ब्रह्महत्यादिपापानिदु
ष्कृतानिकृतानिच ॥तरिष्यन्तिनरास्सर्वेदत्त्वायुष्मत्करेधनम्॥ ८१ ॥ मदीयेनतुजाप्येनजन्मभिस्तुत्रिभिःकृतम् ॥ ब्रह्महत्यासमंपापंतत्क्षणादेवन
श्यति ॥ ८२ ॥ दशभिर्जन्मभिर्जातंशतेनचपुराकृतम् ॥ त्रियुगेनसहस्रेणगायत्रीहंतिकिल्बिषम् ॥ ८३ ॥ एवंज्ञात्वासदापूताजाप्येतुममवैकृते
॥ भविष्यथ्वंनसंदेहोनात्रकार्याविचारणा ॥ ८४ ॥ प्रणवेनत्रिमात्रेणसार्द्धंजप्त्वाविशेषतः ॥ पूताःसर्वेनसंदेहोजप्त्वामांशिरसासह ॥ ८५ ॥
अष्टाक्षरास्थिताचाहंजगद्व्याप्तंमयात्विदम् ॥ माताहंसर्ववेदानांपदैःसर्वैरलंकृता ॥ ८६ ॥ जप्त्वामांभक्तितःसिद्धिंयास्यंतिद्विजसत्तमाः ॥ प्राधान्यं
ममजाप्येनसर्वेषांवोभविष्यति ॥ ८७ ॥ गायत्रीमात्रसारोऽपिवरंविप्रःसुसंयतः ॥ नायंत्रितश्चतुर्वेदीसर्वाशीसर्वविक्रयी ॥ ८८ ॥ यस्माद्विप्रेषु
सावित्र्याशापोदत्तःसदस्यथ ॥ अत्रदत्तंहुतंचापिसर्वमक्षयकारकम् ॥ ८९ ॥ दत्तोवरोमयातेनयुष्माकंद्विजसत्तमाः ॥ अग्निहोत्रपराविप्रास्त्रिकालं
होमदायिनः ॥ २९० ॥ स्वर्गंतेतुगमिष्यंतिसैकविंशतिभिःकुलैः ॥ पुलस्त्यउवाच ॥ एवंशक्रस्यविष्णोश्चरुद्रस्यपावकस्यच ॥ ९१ ॥
ब्रह्मणोब्राह्मणानांचगायत्रीवरमुत्तमम् ॥ तस्मिन्वैपुष्करेदत्त्वाब्रह्मणःपार्श्वगाभवत् ॥ ९२ ॥ चारणैस्तुतदाख्यातंलक्ष्म्यावैशापकारणम् ॥
युवतीनांचसर्वासांशापाञ्ज्ञात्वापृथक्पृथक् ॥९३॥ लक्ष्म्याश्चैववरंप्रादाद्गायत्रीब्रह्मणःप्रिया॥गायत्र्युवाच॥अकुत्सितान्सदासर्वान्कुर्वतीधनशोभना
॥९४॥ शोभिष्यसेनसंदेहःसर्वेभ्यःप्रीतिदायिनी ॥ यंत्वयावीक्षिताःपुत्रिसर्वेतेपुण्यभाजनाः ॥९५॥ परित्यक्तास्त्वयायेतुसर्वेतेदुःखभागिनः ॥ तेषां
जातिःकुलंशीलंधर्मश्चैववरानने ॥९६॥ सभायांतेचशोभंतेदृश्यंतेचैवपार्थिवैः ॥ अर्थित्वंचैवतेषांतुकरिष्यंतिद्विजोत्तमाः ॥९७॥ सौजन्यंतेषुकुर्वंति
त्वंनोभ्रातापितागुरुः ॥ बांधवोऽपिनसंदेहोनजीवेयंत्वयाविना ॥९८॥ त्वयिदृष्टेप्रसन्नामेदृष्टिर्भवतिशोभना ॥ मनःप्रसीदतेत्यर्थंसत्यंसत्यंवदामिते
॥९९॥ एवंविधानिवाक्यानित्वदृष्ट्यायेनिरीक्षिताः॥ सज्जनास्तेतुश्रोष्यंतिजनानांप्रीतिदायकाः ॥३००॥ इंद्रत्वंनहुषःप्राप्यदृष्ट्वात्वांयाचयिष्यति॥

त्वद्दृष्ट्यातुहतःपापोह्यगस्त्यवचनाद्धुवम् ॥ १ ॥ सर्पत्वंसमनुप्राप्यप्रार्थयिष्यतितंतुसः ॥ दर्पेणाहंविनष्टोऽस्मिशरणंमेमुनेभव ॥ २ ॥
वाक्येनतंनतस्यासौनृपस्यभगवानृषिः ॥ कृत्वामनसिकारुण्यमिदंवाक्यंवदिष्यति ॥ ३ ॥ उत्पत्स्यतेकुलेराजात्वदीयेकुलनंदनः ॥ सर्परूप
धरंदृष्ट्वासतेशापंहिभिंत्स्यति ॥ ४ ॥ तदात्वंसपतांत्यक्त्वापुनःस्वर्गंगमिष्यसि ॥ अश्वमेधकृतेनत्वंभर्त्रासहपुनर्दिवम् ॥ ५ ॥ प्राप्स्यसेवरदाने
नमदीयेनसुलोचने ॥ पुलस्त्यउवाच ॥ देवपत्न्यस्तदासर्वास्तुष्टयापरिभाषिताः ॥ ६ ॥ अपत्यैरपिहीनानांनैवदुःखंभविष्यति ॥ गौरी
चैवतुगायत्र्यातदासापिविबोधिता ॥ ७ ॥ बृंहितापरितोषेणवरान्दत्त्वामनस्विनी ॥ समाप्तिंतस्ययज्ञस्यकांक्षंतीब्रह्मणःप्रिया ॥ ८ ॥
वरदांतांतथादृष्ट्वागायत्रींवेदमातरम् ॥ प्रणिपत्यतदारुद्रःस्तुतिमेतांचकारह ॥ ९ ॥ रुद्रउवाच ॥ नमोऽस्तुतेवेदमातरष्टाक्षरविशो
धिते ॥ गायत्रीदुर्गतरणीवाणीसप्तविधातथा ॥ ३१० ॥ सर्वाणिस्तुतिशास्त्राणिगाथाश्चनिखिलास्तथा ॥ अक्षराणिचसर्वाणिलक्षणानि
तथैवच ॥ ११ ॥ भाष्यादिसर्वशास्त्राणियेचान्येनियमास्तथा ॥ अक्षराणिचसर्वाणित्वंतुदेविनमोऽस्तुते ॥ १२ ॥ श्वेतात्वंश्वेतरूपासिश
शांकेनसमानना ॥ बिभ्रतीविपुलौबाहूकदलीगर्भकोमलौ ॥ १३ ॥ एणशृंगंकरेगृह्यपंकजंचसुनिर्मलम् ॥ वसानावसनेक्षौमेरक्तेनोत्तरवाससा ॥ १४ ॥
शशिरश्मिप्रकाशेनहाररेणोरसिराजिता ॥ दिव्यकुंडलपूर्णाभ्यांकर्णाभ्यांसुविभूषिता ॥१५॥ चन्द्रसापत्न्यभूतेनमुखेनत्वंविराजसे॥मुकुटेनातिशुद्धेन
केशबंधेनशोभिता ॥ १६ ॥ भुजगाभोगसदृशौभुजौतेभूषणंदिवः ॥ स्तनौतेरुचिरौदेविवर्तुलौसमचूचुकौ ॥ १७ ॥ जघनेनातिशुभ्रेणत्रिवलीभं
गदार्पिता ॥ सुमध्यवर्त्तिनीनाभिर्गंभीराशुभदर्शिनी ॥ १८ ॥ विस्तीर्णजघनादेवीसुश्रोणीचवरानने ॥ सुजातवृत्तोरुयुगासुजानुचरणातथा ॥ १९ ॥
त्रैलोक्यधारिणीसात्वंभुविसत्योपयाचना ॥ भविष्यसिमहाभागेवरदावरवर्णिनी ॥३२०॥ पुष्करेचकृतायात्रादृष्ट्वात्वांसंभविष्यति ॥ ज्येष्ठमासेपौ
र्णमास्यामग्र्यांपूजांचलप्स्यसे ॥ २१ ॥ येचवात्वत्प्रभावज्ञाःपूजयिष्यंतिमानवाः ॥ नतेषांदुर्लभंकिंचित्पुत्रतोधनतोऽपिवा ॥ २२ ॥ कांतारे
षुनिमग्नानामटव्यांवामहार्णवे ॥दस्युभिर्वानिरुद्धानांत्वंगतिःपरमानृणाम् ॥२३ ॥ त्वंसिद्धिःश्रीर्धृतिःकीर्तिर्ह्रीर्विद्यासन्नतिर्मतिः ॥ संध्यारात्रिःप्रभा
निद्राकालरात्रिस्त्वमेवच ॥ २४ ॥ अम्बाचकमलामातर्ब्रह्माणीब्रह्मचारिणी ॥ जननीसर्वदेवानांगायत्रीपरमांगना ॥ २५ ॥ जयाचविजयाचैवपु
ष्टिस्त्वंचक्षमादया ॥ सावित्र्यवरजाचासिसदाचेष्टापितुर्मम ॥ २६ ॥ बहुरूपाविश्वरूपासुनेत्राब्रह्मचारिणी ॥ सुरूपात्वंविशालाक्षीभक्तानांपरिर
क्षिणी ॥ २७ ॥ नगरेषुचपुण्येषुआश्रमेषुवरानने ॥ वासस्तवमहादेविवनेषूपवनेषुच ॥ २८ ॥ ब्रह्मस्थानेषुसर्वेषुब्रह्मणोवामतःस्थिता ॥ दक्षिणेनतु

सावित्रीमध्येब्रह्मापितामहः ॥ २९ ॥ अन्तर्वेदीचयज्ञानामृत्विजांचापिदक्षिणा ॥ सिद्धिस्त्वंहिनृपाणांचवेलासागरजामता ॥ ३० ॥ ब्रह्मचारि
णियादीक्षाशोभाचपरमामता ॥ ज्योतिषांचप्रभादेवीलक्ष्मीर्नारायणेस्थिता ॥ ३१ ॥ क्षमासिद्धिर्मुनीनांचनक्षत्राणांचरोहिणी ॥ राजद्वारेषुतीर्थे
षुनदीनांसंगमेषुच ॥ ३२ ॥ पूर्णिमापूर्णचन्द्रेचबुद्धिर्नीत्यांक्षमाधृतिः ॥ उमादेवीचनारीणांश्रूयसेवरवर्णिनी ॥ ३३ ॥ इन्द्रस्यचारुदृष्टिस्त्वंसहस्रन
यनोपगा ॥ ऋषीणांधर्मबुद्धिस्त्वंदेवानांचपरायणा ॥ ३४ ॥ कर्षकाणांचसीतात्वंभूतानांधरणीतथा ॥ स्त्रीणामवैधव्यकरीधनधान्यप्रदासदा ॥
॥ ३५ ॥ व्याधिंमृत्युंभयंचैवपूजिताशमयिष्यसि ॥ तथातुकार्तिकेमासिपौर्णमास्यांसुपूजिता ॥ ३६ ॥ सर्वकामप्रदादेवीभविष्यसिशुभप्रदे ॥
यश्चेदंपठतेस्तोत्रंशृणुयाद्वाप्यभीक्ष्णशः ॥ ३७ ॥ सर्वार्थसिद्धिंलभतेनरोनास्त्यत्रसंशयः ॥ गायत्र्युवाच ॥ भविष्यत्येवमेवंतुयत्त्वयापुत्रभाषि
तम् ॥ ३८ ॥ विष्णुनासहितःसर्वस्थानेष्वेवभविष्यसि ॥ ३९ ॥ इति श्रीपाद्मपुराणेप्रथमेसृष्टिखंडेसावित्रीविवादगायत्रीवरप्रदानंनामसप्तद
शोऽध्यायः ॥ १७ ॥ भीष्मउवाच ॥ अत्यद्भुतमिदंब्रह्मन्श्रुतवानस्मितत्त्वतः ॥ अभिषेकंतुगायत्र्याःसदस्यत्रतथाकृतम् ॥ १ ॥ विरोधंचैवसा
वित्र्याशापदानंतथाकृतम् ॥ विष्णुनाचयथादेवीसर्वस्थानेषुकीर्तिता ॥ २ ॥ गायत्रीचापिरुद्रेणस्तुताचवरवर्णिनी ॥ श्रुत्वेदंपूतमात्मानंमन्येऽहंतु
महामुने ॥ ३ ॥ प्रहृष्टानिचरोमाणिप्रशांतंचमनोमम ॥ श्रुत्वामेपरमाप्रीतिःकौतूहलमथैवहि ॥ ४ ॥ नारायणस्तुभगवान्कृत्वातांपरमांचवे ॥
ब्रह्मपत्न्याःस्तुतिंभक्त्यान्यस्यतांपर्वतोपरि ॥ ५ ॥ उवाचवचनंविष्णुस्तुष्टिपुष्टिप्रदायकम् ॥ श्रीमतीह्रीमतीचैवयाचदेवीश्वरीतथा॥ ६ ॥ एतदे
वश्रुतंब्रह्मंस्तववक्त्राद्विनिःसृतम् ॥ उत्तरंतत्रयद्भूतंयच्चतस्मिन्स्थलेकृतम् ॥ ७ ॥ आनुपूर्व्याचतत्सर्वंभगवान्वक्तुमर्हति ॥ श्रुतेनमेदेहशुद्धिर्भविष्यतिनं
संशयः ॥ ८ ॥ पुलस्त्यउवाच ॥ यजतःपुष्करेतस्यदेवस्यपरमेष्ठिनः ॥ शृणुराजन्निदंचित्रंपूर्वमेवयथाकृतम् ॥ ९ ॥ आदौकृतयुगेतस्मिन्यजमा
नेपितामहे ॥ मरीचिरंगिराश्चैवपुलस्त्यःपुलहःक्रतुः ॥ १० ॥ दक्षःप्रजापतिश्चैवनमस्कारंप्रचक्रिरे ॥ विद्योतमानाःपुरुषाःसर्वाभरणभूषिताः ॥
॥ ११ ॥ उपनृत्यंतिदेवेशंविष्णुमप्सरसांगणाः ॥ ततोगंधर्वतूर्यैस्तुप्रतिनंद्यविहायसि ॥ १२ ॥ बहुभिःसहगंधर्वैःप्रगायतिचतुंबुरुः ॥ महाश्रुति
श्चित्रसेनऊर्णायुरनघस्तथा ॥ १३ ॥ गोमायुस्सूर्यवर्चाश्चसोमवर्चाश्चकौरव ॥ युगपश्चतृणायुश्चनंदिश्चित्ररथस्तथा ॥ १४ ॥ त्रयोदशःशालिशि
राःपर्जन्यश्चचतुर्दशः ॥ कलिःपंचदशश्चात्रतारकश्चात्रषोडशः ॥ १५ ॥ हाहाहूहूश्चगन्धर्वोहंसश्चैवमहाद्युतिः ॥ इत्येतेदेवगंधर्वाउपगायंतितेविभु
म् ॥ १६ ॥ तथैवाप्सरसोदिव्याउपनृत्यंतितविभुम् ॥ धातार्यमाचसवितावरुणोंऽशोभगस्तथा ॥ १७॥ इन्द्रोविवस्वान्पूषाचत्वष्टापर्जन्यएवच ॥

ण्डदः समरप्रियः ॥ गरिष्ठश्चवरिष्ठश्चप्रलंबोनरकःपृथुः ॥ ७५ ॥ इंद्रतापनवातापीकेतुमान्बलदर्पितः ॥ असिलोमासुलोमाचबाष्कलिःप्रमदोमदः
॥ ७६॥ सृगालवदनश्चैवकेशीचशरदस्तथा ॥ एकाक्षश्चैवराहुश्चवृत्रःक्रोधविमोक्षणः ॥ ७७ ॥ एतेचान्येचबहवोदानवाबलदर्पिताः ॥ ब्रह्माणंपर्युपा
संतवाक्यंचेदमथोचिरे ॥ ७८ ॥ त्वयासृष्टाःस्मभगवंस्त्रैलोक्यंभवताहिनः ॥ दत्तंसुरवरश्रेष्ठदेवेभ्यश्चाधिकाःकृताः ॥ ७९ ॥ भगवन्निहकिंकुर्मोय
ज्ञेतवपितामह ॥ यद्धितंतद्वदास्माकंसमर्थाःकार्यनिर्णये ॥८०॥ किमेभिस्तेवराकैश्चअदितेर्गर्भसंभवैः ॥ दैवतैर्निहतैःसर्वैःपराभूतैश्चसर्वदा ॥ ८१ ॥
पितामहोऽसिसर्वेषामस्माकंदैवतैःसह ॥ तवयज्ञसमाप्तौचपुनरस्मासुदैवतैः ॥ ८२ ॥ श्रियंप्रतिविरोधश्चभविष्यतिनसंशयः ॥ इदानींप्रेक्षणंकुर्मःस
हिताःसर्वदानवैः ॥ ८३ ॥ पुलस्त्यउवाच ॥ सगर्वंतुवचस्तेषांश्रुत्वादेवोजनार्दनः ॥ शक्रेणसहितःशंभुमिदमाहमहायशाः ॥ ८४॥ यज्ञेपैतामहेयेतु
सम्प्राप्तादनुपुङ्गवाः ॥ ब्रह्मणामंत्रिताश्चेहविघ्नार्थंप्रयतंतिते ॥ ८५ ॥ अस्माभिस्तुक्षमाकार्यायावद्यज्ञःसमाप्यते ॥ समाप्तेतुक्रतावस्मिन्युद्धंकार्यं
दिवौकसाम् ॥ ८६ ॥ यथानिर्दानवाभूमिस्तथाकार्यंत्वयाविभो ॥ जयार्थंचेहशक्रस्यभवतात्त्वमयामह ॥ ८७ ॥ द्विजानांपरिविष्टारोमरुतःपरिक
ल्पिताः ॥ दानवानांधनंयच्चगृहीत्वातद्यजामहे ॥ ८८ ॥ अत्रागतेषुविप्रेषुदुःखितेषुजनेष्विह ॥ व्ययंतस्यकरिष्यामोदाम्भंभावेनिवेशिताः ॥ ८९ ॥
वदंतमेवंतंविष्णुंब्रह्मावचनमब्रवीत् ॥ एतेदनुसुताःक्रुद्धायुष्माकमपिनेप्सिताः ॥ ९० ॥ भवताचक्षमाकार्यारुद्रेणसहदैवतैः ॥ कृतेयुगावसानेतुसमा
प्तिंचक्रतौगते ॥ ९१ ॥ मयाचप्रेषितायूयमेतेचदनुपुंगवाः ॥ संधिर्वाविग्रहोवापिसर्वैःकार्यस्तदैवहि ॥ ९२ ॥ पुलस्त्यउवाच ॥ पुनस्तान्दानवान्ब्र
ह्मावाक्यमाहस्वयंप्रभुः ॥ दानवैर्नैविरोधोऽत्रयज्ञेममकथंचन ॥ ९३ ॥ मैत्रभावस्थितायूयमस्मत्कार्यपरायणाः ॥ दानवाऊचुः ॥ सर्वमेत
त्करिष्यामःशासनंतेपितामह ॥ ९४ ॥ अस्माकमनुजादेवाभयंतेषांनविद्यते ॥ पुलस्त्यउवाच ॥ एतच्छ्रुत्वातदातेषांपरितुष्टःपितामहः ॥ ९५ ॥
मुहूर्तंतिष्ठतांतेषामृषिकोटिरुपागता ॥ श्रुत्वापैतामहंयज्ञंतेषांपूजांतुकेशवः ॥ ९६ ॥ आसनानिददौतेषांतदादेवःपिनाकधृक् ॥ वसिष्ठोऽर्घंद
दौतेषांब्रह्मणापरिचोदितः ॥ ९७ ॥ गामर्घंचततोदत्वापृष्ट्वाकुशलमव्ययम् ॥ निवेशंपुष्करेदत्वास्थीयतामितिचाब्रवीत् ॥ ९८ ॥ ततस्त
ऋषयःसर्वेजटाजिनधरास्तथा ॥ शोभयंतःसरःश्रेष्ठंगङ्गामिवदिवौकसः ॥ ९९ ॥ मुंडाःकाषायिणाश्चैकेदीर्घश्मश्रुधराः परे ॥ विरलैर्दशनैः
केचिच्चिपिटाक्षास्तथापरे ॥ १०० ॥ बृहत्तनूदराःकेऽपिकेकराक्षास्तथापरे ॥ दीर्घकर्णाविकर्णाश्चकर्णैश्चत्रुटितास्तथा ॥ १ ॥
दीर्घफालाविफालाश्चस्नायुचर्मावगुंठिताः ॥ निर्गतंचोदरंतेषांमुनीनांभावितात्मनाम् ॥ २ ॥ दृष्ट्वातेपुष्करंतीर्थंदीप्यमानंसमंततः ॥ तीर्थं

लोभान्नख्याप्रतस्यतीरेव्यवस्थिताः ॥ ३ ॥ वालखिल्यामहात्मानोह्यश्मकुट्टास्तथापरे ॥ दंतोलूखलिनश्चान्येसंप्रक्षालास्तथापरे ॥ ४ ॥
वायुभक्षाजलाहाराःपर्णाहारास्तथापरे ॥ नानानियमयुक्ताश्चतथास्थंडिलशायिनः ॥ ५ ॥ सरस्यं[?]मन्मुखंदृष्ट्वासुरूपास्याःक्षणादनु ॥
किमेतदितिचिंत्याथनिरीक्ष्यचपरस्परम् ॥ ६ ॥ अस्मिंस्तीर्थेदर्शनेनमुखस्येहसुरूपता ॥ मुखदर्शनमित्येवनामकृत्वातुतापसाः ॥ ७ ॥
स्नातानियमयुक्ताश्चसुरूपास्तेतदाभवन् ॥ देवपुत्रोपमाजाताअनौपम्यगुणान्विताः ॥ ८ ॥ शोभमानानरश्रेष्ठस्थिताःसर्वेवनौकसः ॥
यज्ञोपवीतमात्रेणव्यभजंस्तीर्थमंजसा ॥ ९ ॥ जुह्वतश्चाग्निहोत्राणिचक्रुश्चविविधाःक्रियाः ॥ चिंतयंतोहिराजेंद्रतपसादग्धकिल्बिषाः ॥ ११० ॥
नयास्यामोपरंतीर्थंज्येष्ठश्चावोत्विदंसरः ॥ ज्येष्ठपुष्करमित्येवनामचक्रुर्द्विजातयः ॥ ११ ॥ तत्रकुब्जान्बहून्दृष्ट्वास्थितांस्तीर्थसमीपतः ॥ बभू
वुर्विस्मितास्तत्रजनायेचसमागताः ॥ १२ ॥ दत्वादानंद्विजातिभ्योभांडानिविविधानिच ॥ श्रुत्वासरस्वतींप्राचींस्नातुकामाद्विजागताः
॥ १३ ॥ सरस्वतींतीर्थवरानानाद्विजगणैर्युता ॥ बदरेंगुदकाश्मर्यप्लक्षाश्वत्थविभीतकैः ॥ १४ ॥ पौलोमैश्चपलाशैश्चकरीरैःपीलुभिस्तथा ॥ सर
स्वतीतीर्थरुहैर्धन्वनैःस्यंदनैस्तथा ॥ १५ ॥ कपित्थैःकरवीरैश्चबिल्वैराम्रातकैस्तथा ॥ अतिमुक्तकषंडैश्चपारिजातैश्चशोभिता ॥ १६ ॥ कदंब
वनभूयिष्ठासर्वसत्वमनोरमा ॥ वाय्वंबुफलपर्णादैर्दंतोलूखलिकैरपि ॥ १७ ॥ तथाश्मकुट्टमुख्यैश्चवरिष्ठैर्मुनिभिर्वृता ॥ स्वाध्यायघोषसं
घुष्टामृगयूथशताकुला ॥ १८ ॥ अहिंस्रैर्धर्मपरमैस्तथाचातीवशोभिता ॥ सुप्रभाकांचनाख्याचप्राचीनंदाविशालका ॥ १९ ॥ स्रोतोभिः
पंचभिस्तत्रवर्ततेपुष्करेनदी ॥ पितामहस्यसदसिवर्त्तमानेमहीतले ॥ १२० ॥ वितते यज्ञवाटेतुस्वागतेषुद्विजादिषु ॥ पुण्याहघोषैर्विततैर्देवा
नांनियमैस्तथा ॥ २१ ॥ देवेषुचैवव्यग्रेषुतस्मिन्यज्ञविधौतथा ॥ तत्रचैवमहाराजदीक्षितेचपितामहे ॥ २२ ॥ यजतस्तस्यसत्रेणसर्वकाम
समृद्धिना ॥ मनसाचिंतिताह्यर्थाधर्मार्थकुशलास्तथा ॥ २३ ॥ उपतिष्ठंतिराजेंद्रद्विजातींस्तत्रतत्रह ॥ जगुश्चदेवगंधर्वाननृतुश्चाप्सरोगणाः
॥ २४ ॥ वादित्राणिचदिव्यानिवादयामासुरंजसा ॥ तस्ययज्ञस्यसंपत्त्यातुतुषुर्देवताअपि ॥ २५ ॥ विस्मयंपरमंजग्मुःकिमुमानुषयोनयः ॥ वर्त
मानेतथायज्ञेपुष्करस्थेपितामहे ॥ २६ ॥ अब्रुवन्नृषयोभीष्मतदातुष्टास्सरस्वतीम् ॥ सुप्रभांनामराजेंद्रनाम्नाचैवसरस्वतीम् ॥ २७ ॥ तेदृ
ष्ट्वामुनयःसर्वेवेगयुक्तांसरस्वतीम् ॥ पितामहंभासयंतींक्रतुंतेबहुमेनिरे ॥ २८ ॥ एवमेषासरिच्छ्रेष्ठापुष्करेषुसरस्वती ॥ पितामहार्थंप्रभूतातु
ष्ट्यर्थंचमनीषिणाम् ॥ २९ ॥ पुण्यस्यपुण्यताकारिपंचस्रोतास्सरस्वती ॥ सुप्रभानामराजेन्द्रनाम्नाचैवसरस्वती ॥ १३० ॥ यत्रतेमुनयश्शा

न्तानानास्वाध्यायवादिनः ॥ तेसमागंत्यऋषयस्सस्मर्वैसरस्वतीम् ॥ ३१ ॥ साभिध्यातामहाभागाऋषिभिःसत्रयाजिभिः ॥ समास्थिता
दिशंपूर्वांभक्तिप्रीतामहानदी ॥ ३२ ॥ प्राचीपूर्ववहानाम्नामुनिवंद्यासरस्वती ॥ इदमन्यन्महाराजाश्रृण्वाश्चर्यवरंभुवि ॥ ३३ ॥ क्षतोमंकणकोविप्रः
कुशाग्रेणेतिनःश्रुतम् ॥ क्षतात्किलकरेतस्यराजञ्शाकरसोऽस्रवत् ॥३४॥ सवैशाकरसंदृष्ट्वाहर्षाविष्टःप्रनृत्तवान् ॥ ततस्तस्मिन्प्रनृत्तेतुस्थावरंजंगमंच
यत् ॥ ३५ ॥ प्रानृत्यतजगत्सर्वंतेजसातस्यमोहितम् ॥ शक्रादिभिस्सुरैराजन्नृषिभिश्चतपोधनैः ॥ ३६ ॥ विज्ञप्तस्तत्रवैब्रह्मानायंनृत्येत्तथाकुरु ॥
आदिष्टोब्रह्मणारुद्रऋषिरर्थेनराधिप ॥ ३७ ॥ नायंनृत्येद्यथाभीमतथात्वंवक्तुमर्हसि ॥ गत्वारुद्रोमुनिंदृष्ट्वाहर्षाविष्टमतीवहि ॥ ३८ ॥ भोभोवि
प्रर्षभत्वंहिनृत्यसेकेनहेतुना ॥ नृत्यमानेनभवताजगत्सर्वंचनृत्यति ॥ ३९ ॥ तेनायंवारितःप्राहनृत्यन्वैमुनिसत्तमः ॥ मुनिरुवाच ॥ किं
नपश्यसिमेदेवकराच्छाकरसोऽस्रवत् ॥ १४० ॥ तंतुदृष्ट्वाप्रनृत्तोऽहंहर्षेणमहतावृतः ॥ तंप्रहस्याब्रवीद्देवोमुनिंरागेणमोहितम् ॥४१॥ अहंनविस्मयं
विप्रगच्छामीहप्रपश्यमाम् ॥ एवमुक्तोमुनिश्रेष्ठोमहादेवेनकौरव ॥ ४२ ॥ ध्यायमानस्तदाकोऽयंप्रतिपिद्धोऽस्मियेनहि ॥ अंगुल्यग्रेणराजेंद्रस्वां
गुष्ठस्ताडितस्तथा ॥ ४३ ॥ ततोभस्मक्षताद्राजन्निर्गतंहिमपांडुरम् ॥ तद्दृष्ट्वाव्रीडितश्चासौप्राहतत्पादयोःपतन् ॥४४॥ नान्यद्देवादहंमन्येरुद्रात्परतरं
महत् ॥ चराचरस्यजगतोगतिस्त्वमसिशूलधृत् ॥ ४५ ॥ त्वयासृष्टमिदंसर्ववदंतीहमनीषिणः ॥ त्वामेवसर्वंविशतिपुनरेवयुगक्षये ॥ ४६ ॥ देवैर
पिनशक्यस्त्वंपरिज्ञातुंमयाकुतः ॥ त्वयिसर्वेचदृश्यंतेसुराब्रह्मादयोऽपिये ॥ ४७ ॥ सर्वस्त्वमसिदेवानांकर्ताकारयिताचयः ॥ त्वत्प्रसादात्सुराः
सर्वेभवतीहाकुतोभयाः ॥ ४८ ॥ एवंस्तुत्वामहादेवमृषिश्चप्रणतोऽब्रवीत् ॥ भगवंस्त्वत्प्रसादेनतपोनक्षीयतेत्विह ॥४९॥ ततोदेवःप्रीतमनास्तमृ
षिंपुनरब्रवीत् ॥ तपस्तेवर्द्धतांविप्रमत्प्रसादात्सहस्रधा ॥१५०॥ प्राचीमेवेहवत्स्यामित्वयासार्द्धमहंसदा ॥ सरस्वतीमहापुण्याक्षेत्रेचास्मिन्विशे
षतः ॥५१ ॥ नतस्यदुर्लभंकिंचिदिहलोकेपरत्रच ॥ सरस्वत्युत्तरेतीरेयस्त्यजेदात्मनस्तनुम् ॥५२ ॥ प्राचीतटेजाप्यपरोनचेहम्रियतेपुनः ॥ अ
ल्पतोवाजिमेधस्यफलमाप्स्यतिपुष्कलम् ॥ ५३ ॥ नियमैश्चोपवासैश्चकर्शयन्देहमात्मनः ॥ जलाहारोवायुभक्षःपर्णाहारश्चतापसः ॥ ५४ ॥ तथा
स्थंडिलशायीचयेचान्येनियमाःपृथक् ॥ करोतियोद्विजश्रेष्ठोनियमांस्तान्व्रतानिच ॥ ५५॥ सयातिशुद्धदेहश्चब्रह्मणःपरमंपदम् ॥तस्मिंस्तीर्थेतुयैर्दत्तं ॥ ५८ ॥
तिलमात्रंतुकांचनम् ॥ ५६ ॥ मेरुदानसमंतत्स्यात्पुराप्राहप्रजापतिः ॥तस्मिंस्तीर्थेतुयेश्राद्धंकरिष्यंतिहिमानवाः ॥ ५७ ॥ एकविंशकुलोपेताःस्वर्गं
यास्यंतितेनराः ॥पितॄणांचशुभंतीर्थेपिंडेनैकेननर्पिताः ॥५८॥ ब्रह्मलोकंगमिष्यंतिस्वपुत्रेगेहतारिताः ॥भूयश्चान्नंनचेच्छंतिमोक्षमार्गंव्रजंतिते ॥५९॥

प्राचीनत्वंसरस्वत्यायथाभूतंशृणुष्वतत् ॥ सरस्वतीपुराप्रोक्तादेवैःसर्वैःसंवासवैः ॥ १६० ॥ तटत्वयाप्रयातव्यंप्रतीच्यांलवणोदधः ॥ वडवाग्निमि
मंनीत्वासमुद्रेनिक्षिपस्वह ॥ ६१ ॥ एवंकृतेसुराःसर्वेभवंतिभयवर्जिताः ॥ अन्यथावडवाग्निस्तुदहतेस्वेनतेजसा ॥ ६२ ॥ तस्माद्रक्षस्वविबुधानेत
स्मादचिराद्भयात् ॥ मातंवभवसुश्रोणिसुगणामभयप्रदा ॥ ६३ ॥ एवमुक्तातुसादेवीविष्णुनाप्रभविष्णुना ॥ आहनाहंस्वतंत्रास्मिपितामेव्रियतां
स्वराट् ॥ ६४ ॥ तदाज्ञाकारिणीनित्यंकुमारीहधृतव्रत ॥ पित्रादेशाद्विनानाहंपदमेकमपिक्वचित् ॥ ६५ ॥ गच्छामितस्मात्कोऽप्यन्यउपाय
श्चिंत्यतामहो ॥ तदाशयंविदित्वाहुस्तेसमेत्यपितामहम् ॥ ६६ ॥ नान्येनशक्यतेनेतुंवडवाग्निःपितामह ॥ अदृष्टदोषाम्मुक्त्वैकांकुमारींतनयांतव
॥ ६७ ॥ सरस्वतींसमानीयकृत्वांकेवरवार्णिनी ॥ शिरस्याघ्रायसस्नेहमुवाचाथसरस्वतीम् ॥ ६८ ॥ मांचदेवासुराःप्राहुःसत्वंब्रह्मियशस्विनीम् ॥
नीत्वाविनिक्षिपेदेनंवाडवंलवणांबुनि ॥ ६९ ॥ पितुर्वाक्यंहितच्छ्रुत्वावियुक्ताकुररीयथा ॥ पित्रातदैवसाकन्यारुरुदेदीनमानसा ॥१७०॥ शोभते
तन्मुखंतस्याःशोकबाष्पाविलेक्षणम् ॥ सितंविकसितंतद्वत्पद्मंतोयकणोक्षितम् ॥ ७१ ॥ ततस्तथाविधमालोक्यपितामहपुरस्सराः ॥ विबुधाः
शोकभावस्यसर्वेवशमुपागताः ॥ ७२ ॥ संस्तभ्यहृदयंतस्याःशोकसंतापितंतदा ॥ पितामहस्तामुवाचमारोदीर्नास्तिभयम् ॥ ७३ ॥ मानलाभश्च
भवितातवदेवानुभावतः ॥ नीत्वाक्षारोदमध्येतुक्षिपस्वज्वलनंसुते ॥ ७४ ॥ एवमुक्तातुसाबालाबाष्पाकुलितलोचना ॥ प्रणम्यपद्मजन्मानं
गच्छाम्युक्तवतीतुसा ॥ ७५ ॥ माभैरुक्तापुनस्तैस्तुपित्राचापितथैवसा ॥ त्यक्त्वाभयंहृष्टमनाःप्रयातुंसमवस्थिता ॥ ७६ ॥ तस्याःप्रयाणसमये
शंखदुंदुभिनिस्वनैः ॥ मंगलानांचनिर्घोषैर्जगदापूरितंशुभः ॥ ७७ ॥ सितांबरधराधन्यासितचंदनमंडिता ॥ शरदंबुजसच्छायतारहारविभूषिता
॥ ७८ ॥ संपूर्णचंद्रवदनापद्मपत्रायतेक्षणा ॥ शुभांकीर्तिसुरेशस्यपूरयन्तीदिशोदश ॥ ७९ ॥ स्वतेजसातद्धृदयान्निःसृताभासयज्जगत् ॥
अनुव्रजन्तीतांगंगातयोक्तावर्णिनी ॥ १८० ॥ द्रक्ष्यामित्वांपुनरहंकुत्रयातासिमेसखि ॥ एवमुक्तातयागंगाप्रोवाचमधुरांगिरम् ॥ ८१ ॥
यदैवायास्थसिप्राचींदिशंमांपश्यसेशुभे ॥ विबुधैस्त्वंपरिवृतादर्शनंतवसंश्रये ॥ ८२ ॥ उदङ्मुखीतदाभूत्वात्यजशोकंशुचिस्मिते ॥
अहंचोदङ्मुखीपुण्यात्वंतुप्राचीसरस्वती ॥ ८३ ॥ तत्रक्रतुशतंपुण्यंस्नानदानेनसुव्रते ॥ श्राद्धदानेतथानित्यंपितॄणांदत्तमक्षयम् ॥ ८४ ॥
येकरिष्यंतिमनुजाविमुक्तास्तत्रऋणैस्त्रिभिः ॥ मोक्षमार्गंगमिष्यन्तिविचारोनात्रविद्यते ॥ ८५ ॥ तामुवाचततोगङ्गापुनर्दर्शनमस्तुते ॥ गच्छ
स्वमालयंभद्रेस्मर्तव्याहंत्वयानघे ॥ ८६ ॥ यमुनापितथैवंसागायत्रीचमनोरमा ॥ सावित्र्यासहिताःसर्वाःसर्वांसंप्रेषयंस्तथा ॥ ८७ ॥

ततोविसृज्यतान्देवान्नदीभूतासरस्वती ॥ उत्तंकस्याश्रमपदउद्भूतासामनस्विनी ॥ ८८ ॥ अधस्तात्प्लक्षवृक्षस्यअवरोप्यचतांतनुम् ॥ अवतीर्णा
महाभागादेवानांपश्यतांतदा ॥ ८९ ॥ विष्णुरूपस्तरुःसोऽत्रसर्वदेवैस्तुवन्दितः ॥ संसेव्यश्चद्विजैर्नित्यंफलहेतोर्महोदयः ॥ १९० ॥ अनेकशाखा
विततश्चतुर्मुखइवापरः ॥ तत्कोटरकुटीकोटिप्रविष्टानांद्विजन्मनाम् ॥ ९१ ॥ श्रूयंतेविविधावाचःसुराणांरक्तचेतसाम् ॥ वनस्पतिरपुष्पोऽ
पिपुष्पितश्चोपलक्ष्यते ॥ ९२ ॥ जातीचम्पकवत्पुष्पैःशाखालग्नैःशुकैःशुभैः ॥ केतकीवबलाकाभिरशोभतसरिद्वरा ॥ ९३ ॥ कोकिला
भिस्समालेवफेनकैःपुष्पितेवसा ॥ हरेणेवयथागङ्गाप्लक्षेणैवहिसातथा ॥ ९४ ॥ तत्रांभस्थानदादेवंप्रोवाचाथजनार्दनम् ॥ समर्पयस्वतंवह्निं
देवादेशंकरोम्यहम् ॥ ९५ ॥ एवमुक्तेनसातेनप्रत्युक्ताविष्णुनातदा ॥ नतेदाहभयंत्याज्यस्त्वयायंवह्निराट्स्वयम् ॥ ९६ ॥ पश्चिमं
सागरंनेतुंवाडवज्वलनंशुभे ॥ एवंक्रमेणगच्छंत्यातदापंप्राप्स्यतेशुभे ॥ ९७ ॥ ततस्तंशातकुंभस्थंकृत्वासौवडवानलम् ॥ समर्पयतगोविन्दः
सरस्वत्यामहोदरे ॥ ९८ ॥ सातंगृहीत्वासुश्रोणीप्रतीच्यभिमुखीययौ ॥ अंतर्द्धानेनसंप्राप्तापुष्करंसामहानदी ॥ ९९ ॥ मर्यादापर्वतेतस्मिन्स
म्भूताविमलासरित् ॥ पुष्करारण्यंविपुलंसुरसिद्धनिषेवितम् ॥ २०० ॥ पितामहेनयत्रासीद्यज्ञसत्रंनिषेवितम् ॥ सिद्ध्यर्थंमुनिमुख्यानामा
गतासौमहानदी ॥ १ ॥ येषुतत्रकृतोहोमःकुंडेष्वासीद्विरिंचिना ॥ तानिसर्वाणिसंप्लाव्यतोयेनाप्युद्गताहिसा ॥ २ ॥ तत्रक्षेत्रेमहापुण्या
पुष्करेसातथोत्थिता ॥ तेनतत्पूरणंप्रोक्तंवायुनाजगदायुषा ॥ ३ ॥ सापितत्क्षेत्रमासाद्यपुण्यंपुण्यामहानदी ॥ सरस्वतीस्थितादेवीमर्त्यानां
पापनाशिनी ॥ ४ ॥ तत्रयेशुभकर्माणःपुष्करस्थांसरस्वतीम् ॥ पश्यंतितेनपश्यंतिसुघोरांतामधोगतिम् ॥ ५ ॥ यःपुनस्तत्रभावेननरःस्नानंस
माचरेत् ॥ सब्रह्मलोकमासाद्यब्रह्मणासहमोदते ॥६॥ यस्तुदद्यात्तत्रदधिब्राह्मणायमनोरमम् ॥ सोऽप्यग्निलोकमासाद्यभुंक्तेभोगान्सुशोभनान् ॥ ७ ॥
वरंप्रावरणंयोऽपिभक्त्यादद्याद्द्विजातये ॥ सोऽपिसद्वस्त्रदानस्यफलंदशगुणंलभेत् ॥ ८ ॥ ज्येष्ठकुंडेनरःस्नात्वायःसंतर्पयतेपितॄन् ॥ सतानुद्धरते
सर्वान्नरकादपिशुद्धधीः ॥ ९ ॥ क्षेत्रेपैतामहेपूतेपुण्यांप्राप्यसरस्वतीम् ॥ नरःकिंप्रार्थयेदन्यत्तीर्थंब्रह्मसुतोऽब्रवीत् ॥२१० ॥ तस्मात्सर्वेषुतीर्थेषु
स्नातःप्राप्नोतियत्फलम् ॥तत्सर्वंप्राप्नुयान्मर्त्योज्येष्ठकुंडेसकृत्प्लुतः ॥ ११ ॥ किमत्रबहुनोक्तेनक्षेत्रंतीर्थंगतिश्शुभा ॥ येनैतत्त्रितयंप्राप्तंप्राप्तातेनगतिः
परा ॥ १२ ॥ कालेक्षेत्रेतथातीर्थेस्नात्वाहुत्वापितत्रयः ॥ प्रयच्छतेद्विजायार्थंसोऽनंतंसुखमश्नुते ॥ १३ ॥ कार्त्तिकेमासिशुक्लेचवैशाखेशशिभू
षणे ॥ चंद्रसूर्योपरागेचकालेचकुरुजांगले ॥ १४ ॥ क्षेत्रेष्वेतेषुतीर्थानियान्युक्तानिमुनीश्वरैः ॥ तेषांपुण्यतमंतीर्थमिदमाहपितामहः ॥ १५ ॥

कुण्डेतुमध्यमेस्नात्वाकार्तिक्यांयःपुमान्द्विजे ॥ प्रयच्छतेचापिद्रव्यंसोऽश्वमेधमवाप्नुयात् ॥ १६ ॥ एवंकनिष्ठकेऽप्यत्रकुंडेस्नात्वासमाधिना ॥ यः
प्रयच्छतिविप्रायसुरूपामपिशालिकाम् ॥ १७ ॥ सप्रयातिनरःक्षिप्रमग्निलोकंमनोरमम् ॥ त्रिःसप्तकुलसंयुक्तोभुंक्तेतत्रमहाफलम् ॥ १८ ॥ त
स्मात्सर्वप्रयत्नेनगमनायमतिःस्थिरा ॥ पुरुषेणतुकर्तव्यापुष्करावाप्तयेशुभा ॥ १९ ॥ पुष्करारण्यमासाद्यप्राचीयत्रसरस्वती ॥ मतिःस्मृतिः
शुभाप्रज्ञामेधाबुद्धिर्दयापरा ॥२२०॥ सरस्वत्यास्तुपर्यायाष्षडेतेसंप्रकीर्तिताः ॥ ततःप्रभृतियत्रासौप्राचीभूतासरस्वती ॥२१॥ तत्रस्थंतज्जलंयेऽपि
पश्यंतितटसंस्थिताः ॥ तेऽप्यश्वमेधस्यफलंलभंतेनात्रसंशयः ॥ २२ ॥ योऽवतीर्यपुनस्तत्रकश्चित्स्नानंसमाचरेत् ॥ नरःसमाधियुक्तोवैब्रह्मणोऽनु
चरोभवेत् ॥ २३ ॥ शाकादिनापिहिपितॄन्यस्तत्रार्चयतेनरः ॥ सोऽप्यंतिविपुलान्भोगांस्तेषामेवानुभावतः ॥ २४ ॥ येपुनर्विधिनातत्रश्राद्धं
कुर्वंतिमानवाः ॥ तेनयंतिपितॄन्स्वर्गंनरकादपिदुःखदात् ॥ २५ ॥ तृप्यंतिपितरस्तस्ययस्तत्रकुशमिश्रितम् ॥ स्नात्वाप्रयच्छतेतोयंपूतंतेषांतिलान्वि
तम् ॥ २६ ॥ तेऽपितुष्टाःपुनस्तस्यप्रयच्छन्त्यमितंफलम् ॥ सर्वेषामेवतीर्थानामिदमेवाधिकंस्मृतम् ॥ २७ ॥ आदितीर्थमिदंतस्मात्तीर्थानांभुवि
विश्रुतम् ॥ धर्मापवर्गयोःक्रीडानिधिभूतमवस्थितम् ॥ २८ ॥ सरस्वत्यापुनश्चैवसमेतंगुणवत्तरम् ॥ धर्मार्थकाममोक्षाणांचतुर्णामपिदायकम् ॥
॥२९॥ येऽप्यत्रमलनाशायपुमांसोविविशुर्जलम् ॥ गोप्रदानसमंतेषांसुखेनैवफलंभवेत् ॥२३०॥ सुवर्णदानेनसममेवमाहुर्मनीषिणः ॥ तर्पणात्पिण्ड
दानाच्चनरकेष्वपिसंस्थिताः ॥ ३१ ॥ स्वर्गंप्रयान्तिपितरस्तत्रपुत्रेणतारिताः ॥ पुष्करेऽपिसरस्वत्यांयेपिबंतिजलंजनाः ॥ ३२ ॥ तेलभन्तेऽक्ष
याँल्लोकान्ब्रह्मविश्वेशवंदितान् ॥ स्वर्गनिश्रेणिकाभूतापुष्करेचसरस्वती ॥३३॥ सांपुण्यवद्भिस्संप्राप्तुंपुंभिश्शक्यामहानदी ॥ मुनिभिर्धर्मतत्त्वज्ञैस्त
त्रतत्रनिषेविता ॥३४॥ तस्मात्सर्वत्रसादेवीपवित्रासर्वतःस्थिता॥पुष्करेतुविशेषेणपूतात्पूततमाहिसा ॥३५॥ नदीसरस्वतीपुण्यासुलभाजगतिस्थिता॥
दुर्लभासाकुरुक्षेत्रेप्रभासेपुष्करेतथा ॥ ३६ ॥ तत्तीर्थंसर्वतीर्थानांप्रवरंविहितंभुवि ॥ धर्मार्थकाममोक्षाणांचतुर्णामपिसाधकम् ॥ ३७ ॥ प्राचींस
रस्वतींप्राप्ययोऽन्यत्तीर्थंहिमार्गते ॥ सकरस्थंसमुत्सृज्यह्यमृतंविषमिच्छति ॥ ३८ ॥ ज्येष्ठेज्येष्ठाप्रयागस्यमध्यमेमध्यमास्मृता ॥ प्रदक्षिणंततोग
च्छेत्कनीयांसंविचक्षणः ॥ ३९ ॥ त्रिष्वप्येतेषुस्नायीतकुर्याच्चापिप्रदक्षिणम् ॥ प्रयच्छतिपितृभ्योयस्तोयंतेषांतिलान्वितम् ॥२४०॥ तेऽपितुष्टाःपु
नस्तस्यप्रयच्छंत्यमितंफलम् ॥ यःस्नात्वाप्रयतोनित्यंततःपश्येत्पितामहम् ॥ ४१ ॥ अनुलोमविलोमाभ्यांतथाव्यस्तसमस्तयोः ॥ स्नातव्यं
पुष्करेनित्यंब्रह्मलोकमभीप्सिता ॥ ४२ ॥ त्रीणिशृंगाणिशुभ्राणित्रीणिप्रस्रवणानिच ॥ पुष्कराणिप्रसिद्धानिनविद्मस्तत्रकारणम् ॥ ४३ ॥ कनी

यांसंमध्यमंचतृतीयंज्येष्ठपुष्करम् ॥ शृंगशब्दाभिधानानिशुभप्रस्रवणानिच ॥ ४४ ॥ धर्मार्थकाममोक्षाणांसंकल्पैरफलंनरः ॥ यस्तत्रसंत्यजेद्देहंमो
क्षंप्राप्नोत्यसंशयम् ॥ ४५ ॥ प्रयतःसंयतस्तस्यांस्नात्वादद्याद्विजेशुभाम् ॥ गामेकांमन्त्रपूतांचलोकानाप्नोतिसोऽक्षयान् ॥ ४६ ॥ किमत्रबहुनोक्ते
नगत्रावपिहियोऽर्थिने ॥ अर्थंप्रयच्छतेस्नात्वासोऽनन्तंसुखमश्नुते ॥४७॥ तत्रदानंप्रशंसंतितिलानांमुनिसत्तमाः ॥ कृष्णपक्षेचतुर्दश्यांस्नानंचविहितं
सदा ॥ ४८ ॥ पिण्याकेनगुडेनापिपिण्डंयोऽत्रप्रयच्छति ॥ पितॄणांप्रयतोभूत्वापितृलोकंसयच्छति ॥ ४९ ॥ पुष्करारण्यमासाद्यपुनस्तस्मात्सरस्व
ती ॥ अन्तर्धानंगतागन्तुंप्रवृत्तापश्चिमामुखी ॥२५०॥ नातिदूरेततस्तस्यपुष्करस्यसुशोभना ॥ खर्जूरवनमासाद्यफलपुष्पोपशोभितम् ॥ ५१ ॥
तत्रोषित्वापुनर्देवीवनेमुनिमनोरमे ॥ सर्वर्तुकुसुमाकीर्णेसिद्धचारणसेविते ॥ ५२ ॥ नंदानामसरिच्छ्रेष्ठात्रिषुलोकेषुविश्रुता ॥ मीननक्रझषोपेता
विमलोदकपूरिता ॥ ५३ ॥ सूतउवाच ॥ अथदेवव्रतःप्राहकिमन्यासासरिद्वरा ॥ एतन्मेकौतुकंब्रह्मन्नंदाशब्दासरस्वती ॥ ५४ ॥
यथाभूतायेनकृताकारणेनसरिद्वरा॥एवमुक्तःपुलस्त्यःसभीष्मायैतत्पुरातनम् ॥ ५५ ॥ आख्यातुमुपचक्रामनंदानामयतस्स्मृता ॥ क्षत्रव्रतधरोनित्य
मासीद्राजाप्रभंजनः ॥५६॥ प्रवृत्तोऽसौमृगान्हंतुंवनेतस्मिन्महाबलः ॥सददर्शततस्तस्मिन्मृगींगुल्मांतरेस्थिताम् ॥५७॥ मार्गणेनसुतीक्ष्णेनतांविव्या
धपुरोगताम् ॥ साविलोक्यदिशःसर्वास्तंदृष्ट्वाशरपाणिनम् ॥ ५८ ॥ आहकिंतेकृतंमूढत्वयैतत्कर्मदुष्करम् ॥ स्तनंतावत्प्रयच्छामिसुतस्याधोमुखी
स्थिता ॥ ५९ ॥ मांसलोभेनविद्धाहंतरसाह्यकुतोभया ॥ पिबंतंगुप्तवत्संचगूढमैथुनमागतम् ॥ २६० ॥ एवंविधंमृगंराजन्नहन्यात्प्राज्ञ
मयाश्रुतम् ॥ स्तनंतुतनयस्यास्यप्रयच्छंतीत्वयाहता ॥ ६१ ॥ बाणनाशनिकल्पेननिर्दोषावनमागता ॥ तस्मात्त्वमपिदुर्बुद्धेक्रव्यादत्वम
वाप्स्यसि ॥ ६२ ॥ वनेऽस्मिन्कंटकाकीर्णेव्याघ्ररूपंत्वमाप्नुहि ॥ शापप्रदानंश्रुत्वैवंसराजापुरतःस्थितः ॥ ६३ ॥ प्रोवाचप्रांजलिर्भूत्वा
तांमृगींव्यथितेंद्रियः ॥ स्तनंतुतनयस्येहप्रयच्छंतीनमेमता ॥ ६४ ॥ अज्ञानेनहताभद्रेप्रसीदसुसमाधिना ॥ व्याघ्ररूपमहंत्यक्त्वाप्राप्स्या
मिमानुषंकदा ॥ ६५ ॥ एवंविधस्यशापस्यविमोक्षंशंसमेमृगि ॥ एवमुक्तेमृगीतस्यप्रोवाचवचनंशुभम् ॥ ६६ ॥ राजन्नब्दशतांतेतुशा
पस्यागतयागवा ॥ नंदयासहसंवादमासाद्यांतोभविष्यति ॥ ६७ ॥ मृग्योक्तेवचनेराजाव्याघ्रएवाभवत्तदा ॥ नखदंष्ट्रायुधोपेतोव्याघ्र
रूपोऽतिभीषणः ॥६८॥ तत्रासौभक्षयन्नास्तेमृगान्हत्वाचतुष्पदः ॥ द्विपदानपितत्रस्थान्कालेनक्रमयोजितान् ॥६९॥ एवंतत्रवनेतस्यसंवत्सरशतंग
तम् ॥ आत्मानंनिंदमानस्यमृगमांसानिखादतः ॥ २७० ॥ कदाहंमानुषंभावंगमिष्यामीदृशंपुनः॥कुत्सितंनकरिष्यामिवियोनिकरणंमहत् ॥ ७१ ॥

कुर्वतामांसलाभनमृगयांपरिधावता ॥ आपदासहितंप्राप्तंमानुषाणांभयावहम् ॥७२॥ दर्शनंदुःखदंमह्यंमृगाणांमानुषैःसह ॥ पापेनपापतांनीतोह्य
पापेऽपिसतांकुले ॥ ७३ ॥ उत्पन्नोविकृतिंनीतःपश्यकालस्यपर्ययम् ॥ तस्मान्मेसुकृतंनास्तिहिंसाप्येकाविगर्हिता ॥ ७४ ॥ तयाप्राप्यतेदुःखंन
चमोक्षोभविष्यति ॥ कथंमेभवितामोक्षःकथंसत्यामृगीभवेत् ॥ ७५ ॥ गतेवर्षशतेतस्यवसतस्तद्वनेतदा ॥ आयातंगोकुलंकालेयवसोदककारणा
त् ॥ ७६ ॥ गोवाटवाटीसंस्थानंतत्तत्रसमवस्थितम् ॥ वनोपकण्ठमंथानरवेणापूरितंचयत् ॥७७॥ क्षीबैर्गोपैःसमाकीर्णंपादपैरपितद्वनम् ॥ निशि
वंशरवोपेतंगोपीनांचशुभप्रदम् ॥७८॥ एवंतुवसतस्तस्यखर्जूरवनसंसदि ॥ हृष्टातुष्टाचपुष्टाचनंदावैनामनामतः ॥७९॥ गोमण्डलस्यसामुख्याहंस
वर्णाघटस्तना ॥ दीर्घघोणाविभक्तांगीबंधुरांगीतनुत्वचा ॥२८०॥ नीलकण्ठाशुभग्रीवाघण्टालीमधुरस्वना ॥ साचयूथस्यसर्वस्यपुरश्चरतिनिर्भया ॥
॥ ८१ ॥ घासस्थानंचरेच्छन्नंगत्वैकाचयथासुखम् ॥ यथेष्टकामासुरभिश्छन्नंचरतिवैतृणम् ॥ ८२ ॥ रोहितोनामतत्रान्यःपर्वतःसरितस्तटे ॥
अनेककन्दरदरीगुहासत्त्वनिषेवितः ॥ ८३ ॥ तस्यपूर्वोत्तरेभागेघोरेतृणसमाकुले ॥ संकटेविषमेदुर्गेभैरवेलोमहर्षणे ॥ ८४ ॥ मृगसिंहसमाकीर्णेबहु
श्वापदसेविते ॥ वल्लीवृक्षादिगहनेशिवाशतनिनादित ॥८५॥ दुर्गेऽस्मिन्वसतेरौद्रःकामरूपीभयंकरः ॥ द्वीपीशोणितदिग्धांसोघोरदंष्ट्रोनखायुधः
॥८६॥ नंदोनामसधर्मात्मासचगोपीहितेरतः ॥ अच्छिन्नाग्रैस्तृणैर्दीर्घैर्गोधनंपरिरक्षति ॥८७॥ तस्ययूथपरिभ्रष्टासानंदातृणलिप्सया ॥ चरंतीव्या
घ्रपुरतःसाधेनुःप्रत्युपस्थिता ॥ ८८ ॥ अभ्यद्रवच्चतांद्वीपीतिष्ठतिष्ठेतिचाब्रवीत् ॥ त्वमद्यविहितोभक्षःस्वयंप्राप्तासिधेनुके ॥ ८९ ॥ द्वीपिनश्चवचः
श्रुत्वानिष्ठुरंरोमहर्षणम् ॥ शुक्लरूपान्वितंबालंभद्रमिंदुसमप्रभम् ॥२९०॥ वत्संस्मरतिसाधेनुःस्नेहात्कागद्गदाक्षरम्॥दह्यंतीपुत्रशोकेननंदासापुत्रवत्स
ला ॥ ९१ ॥ रुदंतीकरुणंचैवनिराशापुत्रदर्शने ॥ द्वीपीदृष्ट्वातुतांधेनुंक्रंदमानांसुदुःखिताम् ॥ ९२ ॥ उवाचवचनंघोरंधेनुकेकिंप्ररुद्यते ॥ दैवात्सु
खोपपन्नासिभक्षस्त्वंमेयदृच्छया ॥९३॥ रुदंत्यावाहसंत्यावातवात्तंजीवितंभवेत् ॥ विहितंभुज्यतेलोकेस्वयंप्राप्तासिधेनुके ॥९४॥ मृत्युस्तेविहितोऽ
द्यैववृथाकिमनुशोचसि ॥ पप्रच्छतांपुनर्द्वीपीकिमर्थंरुदितंत्वया ॥ ९५ ॥ कौतुकंचात्रमेजातंमहन्मेकथयस्ववै ॥ व्याघ्रस्यवचनंश्रुत्वानंदावाक्य
मथाब्रवीत् ॥९६॥ क्षंतुमर्हसिमेनाथकामरूपिन्नमोऽस्तुते॥त्वांसमासाद्यलोकस्यपरित्राणंनविद्यते ॥९७॥ जीवितार्थंनशोचामिप्राप्तव्यंमरणंमया॥जात
स्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यच ॥९८॥ तस्मादपरिहार्येऽर्थेनशोचामिमृगाधिप॥दैवैरपियथासर्वैर्मर्तव्यमवशैर्ध्रुवम् ॥९९॥ तस्मात्तुनाहमेवैकाव्या
घ्रशोचामिजीवितम्॥किंतुस्नेहेनवैसाधोदुःखेनरुदितंमया ॥३००॥अस्तिमेहृदिसंतापस्तंचत्वंश्रोतुमर्हसि ॥ प्रथमेवयसिप्राप्तेप्रसूताहंमृगाधिप ॥१॥

इष्टः प्रथमजातश्चसुतस्तुममबालकः ॥ क्षीरपायीचमेवत्सस्तृणंनाद्यापिजिघ्रति ॥ २ ॥ सचगोपकुलेवद्धःक्षुधार्तोमामवेक्षते ॥ तमहंचा
नुशोचामिकथंजीविष्यतेसुतः ॥३॥ तस्येच्छामिस्तनंदातुंपुत्रस्नेहवशंगता ॥ पाययित्वास्तनंवत्समवलिह्यचमूर्द्धनि ॥ ४॥ सखीनामर्पयित्वातुसं
दिश्यचहिताहितम् ॥ पुनःप्रत्यागमिष्यामियथेष्टंभक्षयिष्यसि ॥ ५ ॥ सनंदायावचःश्रुत्वामृगेंद्रःपुनरब्रवीत् ॥ किंतेपुत्रेणकर्तव्यंमरणंकिंनबुध्यसे
॥ ६ ॥ त्रस्यंतिसर्वभूतानिम्रियंतेमांनिरीक्ष्यच ॥ त्वंपुनःकृपयाविष्टापुत्रपुत्रेतिभाषसे ॥ ७ ॥ नपुत्रानतपोदानंनमातानपितागुरुः ॥ शक्नुवंतिपरि
त्रातुंनरंकालप्रपीडितम् ॥ ८ ॥ कथंत्वंगोकुलंगत्वागोपीजनसमाकुलम् ॥ वृषभैर्नादितंदिव्यंबालवत्सविभूषितम् ॥ ९ ॥ भूषणंदेवलोकस्यस्वगतु
ल्यंनसंशयः ॥ नित्यंप्रमुदितंदिव्यंसर्वदेवप्रपूजितम् ॥ ३१० ॥ यत्पवित्रंपवित्राणांमंगलानांचमंगलम् ॥ यत्तीर्थंसर्वतीर्थानांधन्यानांधन्यमुत्तमम्
॥ ११ ॥ समस्तगुणसंपन्नमीश्वरायतनंमहत् ॥ यत्ख्यातंसर्वतीर्थानांभूमिस्वर्गमनुत्तमम् ॥१२॥ गोपीमंथनशब्देनबालवत्सरवेणच ॥ गवांहुंकारश
ब्देनअलक्ष्मीःप्रतिहन्यते ॥ १३ ॥ यत्रवत्साश्चहुंकारंकरुणंमातृकांक्षया ॥ यद्गोपैःपालितंशूरैर्बाहुयुद्धकृतश्रमैः ॥ १४ ॥ प्रगीतनृत्यसंलापंनंदि
तास्फोटनादितम् ॥ इतस्ततःस्थितैर्वत्सैर्नद्यमानंसमंततः ॥ १५ ॥ सरोवद्राजतेगोष्टंचलद्भिरिवपंकजैः ॥ तंश्रीनिकेतनंसौम्यंहृष्टपुष्टजनाकुलम्
॥१६॥ गोलोकप्रतिमंदृष्ट्वाकथंप्रत्यागमिष्यसि ॥ पंचभूतानिमेभद्रेपिबंतुरुधिरंतव ॥१७॥ननिर्विण्णानिभूतामिवाङ्मात्रेणकरोम्यहम् ॥ नंदोवाच ॥
एवंप्रथमवत्सायामृगेंद्रशृणुमेवचः ॥ १८ ॥ दृष्ट्वासखींसुतंबालंगोपांश्चप्रतिपालकान् ॥ गोपीजनमुपामन्त्र्यजननींचविशेषतः ॥१९॥ शपथैरागमि
ष्यामिमन्यसेयदिमुञ्चमाम्॥ यत्पापंब्रह्मवध्यायांमातापितृवधेषुच ॥२२०॥तेनपापेनलिप्येऽहंयद्यहंनागमेपुनः॥यत्पापंलुब्धकानांतुम्लेच्छानांगरदा
यिनाम् ॥ २१ ॥ तेनपापेनलिप्येऽहंयद्यहंनागमेपुनः ॥ गोषुविप्रांश्चयेकुर्युःस्वपंतींताडयंतिच ॥ २२ ॥ तेनपापेनलिप्येऽहंयद्यहंनागमेपुनः ॥
सकृद्दत्त्वातुयःकन्यांद्वितीयेदातुमिच्छति ॥ २३ ॥ तस्यपापेनलिप्येऽहंयद्यहंनागमेपुनः ॥ यस्त्वनर्हान्बलीवर्दान्विषमेवाहयेत्पुमान् ॥२४॥ कथा
यांकथ्यमानायांविघ्नंकारयतेतुयः ॥ तेनपापेनलिप्येऽहंयद्यहंनागमेपुनः ॥२५॥ गृहेयस्यागतंमित्रंनिराशंप्रतिगच्छति॥ तस्यपापेनलिप्येऽहंयद्यहं
नागमेपुनः॥२६॥इत्येतैःपातकैर्घोरैरागमिष्याम्यहंपुनः॥ बुद्ध्वासंप्रत्ययंद्वीपीपुनर्वचनमब्रवीत् ॥२७॥ व्याघ्रउवाच ॥ संजातःप्रत्ययोऽस्माकंशपथै
र्धेनुकेतव ॥ कदाचिन्मन्यसेगत्वामूर्खोऽयंवञ्चितोमया ॥ २८ ॥ अत्रापिकेचिद्वक्ष्यंतिशपथेनास्तिपातकम् ॥ कामिनीषुविवाहेषुगवां
मुक्तौतथैवच ॥ २९ ॥ प्राणत्यागेसमुत्पन्नेश्रद्धातव्यंनचत्वया ॥ लोकेऽस्मिन्नास्तिकाःकेचिन्मूर्खाःपंडितमानिनः ॥ ३३० ॥ भ्रामयिष्यंतितेचित्तं

चक्रारूढमिवक्षणात् ॥ कुतर्कहेतुवृत्तांतैरज्ञानावृतचेतसः ॥ ३१ ॥ मोहयंतिनराःक्षुद्राआगमार्थविशारदाः ॥ अतथ्यान्यपितथ्यानिदर्शयंत्यति
पेशलाः ॥ ३२ ॥ समेनिम्नोन्नतानीवचित्रकर्मविदोजनाः ॥ प्रायःकृतार्थोलोकोऽयंमन्यतेनोपकारिणम् ॥ ३३ ॥ वत्सःक्षीरक्षयंदृष्ट्वापरित्यजतिमा
तरम् ॥ नतंपश्यामिलोकेऽस्मिन्कृतेप्रतिकरोतियः ॥ ३४ ॥ सर्वस्यहिकृतार्थस्यमतिरन्याप्रवर्तते ॥ ऋषिदेवासुरनरैःशपथाःकार्यसिद्धये
॥ ३५ ॥ कृताःपरस्परंपूर्वंतान्नमन्यामहेवयम् ॥ सत्येनापिशपेद्यस्तुदेवाग्निगुरुसन्निधौ ॥ ३६ ॥ तस्यवैवस्वतोराजाधर्मस्यार्द्धंनिकृन्तति ॥
मातेबुद्धिर्भवेदेवंशपथैरेषवंचितः ॥३७॥ त्वयैवदर्शितंसर्वंयथेष्टंकुरुसांप्रतम् ॥ नंदोवाच ॥ एवमेवमहासाधोकस्त्वांवञ्चयितुंक्षमः ॥३८॥ आत्मैववं
चितस्तेनयःपरंवञ्चयिष्यति ॥ द्वीप्युवाच ॥ धेनुकेपश्यगच्छत्वंपुत्रकंपुत्रवत्सले ॥ ३९ ॥ पाययित्वास्तनंवत्समवलिह्यचमूर्द्धनि ॥ मातरं
भ्रातरंदृष्ट्वासखीस्वजनबांधवान् ॥ ३४० ॥ सत्यमेवाग्रतःकृत्वाशीघ्रमागमनंकुरु ॥ एवंसाशपथंकृत्वाधेनुर्वैसत्यवादिनी ॥ ४१ ॥ अनुज्ञा
तामृगेंद्रेणप्रयातापुत्रवत्सला ॥ अश्रुपूर्णमुखीदीनावेपमानासुदुःखिता ॥ ४२ ॥ हुंभारैवंप्रमुंचंतीपतिताशोकसागरे ॥ करीवचरणग्राहंगृही
तःसलिलाशये ॥ ४३ ॥ अशक्तास्वपरित्राणेविलपंतीमुहुर्मुहुः ॥ सातत्रगोकुलंप्राप्ताहरिन्नद्यास्तटेस्थितम् ॥ ४४ ॥ श्रुत्वावत्संतुक्रो
शंतंपर्यधावतसंमुखी ॥ उपसृप्यचतंबालंबाष्पपर्याकुलेक्षणम् ॥ ४५ ॥ संप्राप्यमातरंवत्सःशंकितःपरिपृच्छति ॥ नतेपश्याम्यहंस्वा
स्थ्यंधैर्यंनैवाद्यलक्षये ॥ ४६ ॥ उद्विग्नाचापितेदृष्टिर्भीताचातीवलक्ष्यसे ॥ नन्दोवाच ॥ पिबपुत्रस्तनंमेऽद्यकारणंयदिपृच्छसि ॥ ४७ ॥
अशक्ताहंतवाख्यातुंकुरुतृप्तिंयथेप्सिताम् ॥ अपश्चिमंतुतेपुत्रदुर्लभंमातृदर्शनम् ॥ ४८ ॥ एकाहमद्यमेपीत्वाप्रभातेकस्यपास्यसि ॥ त्वांत्यक्त्वापुत्र
गंतव्यंशपथैरागताह्यहम् ॥ ४९ ॥ क्षुत्क्षामस्यचव्याघ्रस्यदातव्यमात्मजीवितम् ॥ नंदायाश्चवचःश्रुत्वावत्सोवचनमब्रवीत् ॥ ३५० ॥
वत्सउवाच ॥ अहंतत्रगमिष्यामियत्रत्वंगंतुमिच्छसि ॥ श्लाघ्यंममापिमरणंत्वयासहनसंशयः ॥ ५१ ॥ एकाकिनापिमर्तव्यंमयातेनत्व
याविना ॥ यदिमांसंहितंमातर्वनेव्याघ्रोहनिष्यति ॥ ५२ ॥ यागतिर्मातृभक्तानांध्रुवंसामेभविष्यति ॥ तस्मादवश्यंयास्यामित्वयासहन
संशयः ॥ ५३ ॥ अथवातिष्टमातस्त्वंशपथाःसंतुतेमम ॥ जनन्याचवियुक्तस्यजीवितेकिंप्रयोजनम् ॥ ५४ ॥ अनाथस्यवनेनित्यंकोमेनाथो
भविष्यति ॥ नास्तिमातृसमोबंधुर्बालानांक्षीरजीविनाम् ॥ ५५ ॥ नास्तिमातृसमोनाथोनास्तिमातृसमागतिः ॥ नास्तिमातृसमःस्नेहोनास्ति
मातृसमंसुखम् ॥५६॥ नास्तिमातृसमोदेवइहलोकेपरत्रच ॥ एवंवैपरमोधर्मःप्रजापतिविनिर्मितः ॥५७॥ येतिष्ठंतिसदापुत्रास्तेयांतिपरमांगतिम् ॥

नंदोवाच ॥ममैवविहितोमृत्युर्नत्वंपुत्रागमिष्यसि ॥५८॥नचायमन्यर्जावानांमृत्युःस्यादन्यमृत्युना ॥ अपश्चिममिमंपुत्रमातृसंदेशमुत्तमम्॥५९ ॥
अत्रातिष्ठस्वमद्वाक्यात्ततःशुश्रूषणंपुनः ॥ जलेस्थलेचविचरन्प्रमादंतातमाकुरु ॥ ३६० ॥ प्रमादात्सर्वभूतानिविनश्यंतिनसंशयः ॥ नचलोभन
र्तव्यंविपमस्थंतृणंक्वचित् ॥ ६१ ॥ लोभाद्विनाशःसर्वेषामिहलोकेपरत्रच ॥ समुद्रमटवींपुत्रविशंतिलोभमोहिताः ॥ ६२ ॥ लोभादकार्यमत्यु
ग्रंविद्वानपिसमाचरेत् ॥ लोभात्प्रमादाद्विस्रंभात्त्रिभिर्नाशोभवेन्नृणाम् ॥ ६३ ॥ तस्माल्लोभंनकुर्वीतनप्रमादंनविश्वसेत् ॥ आत्माहिसततंपुत्ररक्षि
तव्यःप्रयत्नतः ॥ ६४ ॥ सर्वेभ्यःश्वापदेभ्यश्चम्लेच्छचोरादिसंकटात् ॥ तिरश्चांपापयोनीनामेकत्रवसतामपि ॥ ६५ ॥ विपरीतानिचित्तानिवि
ज्ञायंतेनपुत्रक ॥ नखिनांचनदीनांचशृंगिणांशस्त्रधारिणाम् ॥ ६६ ॥ नविश्वासस्त्वयाकार्यःस्त्रीणांप्रेष्यजनस्यच ॥ नविश्वसेदविश्वस्तेविश्वस्ते
नातिविश्वसेत् ॥६७॥ विश्वासाद्भयमुत्पन्नंमूलान्यपिनिकृन्तति ॥नविश्वसेत्स्वदेहेऽपित्वलिप्टेभीतचेतसि ॥६८॥ वक्ष्यंतिगूढमत्यर्थंसुप्तंमत्तंप्रमदतः ॥
॥ गंधःसर्वत्रसततमाघ्रातव्यःप्रयत्नतः ॥ ६९ ॥ गावःपश्यंतिगंधेनराजानश्चारचक्षुषा ॥ नैकस्तिष्ठेद्वनेघोरेधर्ममेकंचचिंतयेत् ॥ ३७० ॥ नचो
द्वेगस्त्वयाकार्यः सर्वस्यमरणंध्रुवम् ॥ यथाहिपथिकःकश्चिच्छायामाश्रित्यतिष्ठति ॥ ७१ ॥ विश्रम्यचपुनर्यातितद्वद्भूतसमागमः ॥पुत्रनित्यंजगत्स
र्वंतत्रैकःशोचसेकथम् ॥ ७२ ॥ तावत्त्वंशोकमुत्सृज्यमद्वाक्यमनुपालय ॥ शिरस्याघ्रायतंपुत्रमवलिह्यचमूर्द्धनि ॥ ७३ ॥ शोकेनमहताविष्टावाष्प
व्याकुललोचना ॥विनिःश्वसंतीनागीवदीर्घमुष्णंमुहुर्मुहुः ॥७४॥पुत्रहीनंजगच्छून्यंप्रपश्यंतीवसाभवत् ॥महापंकनिमग्नेवतिष्टन्तीचावसीदती॥७५॥
विलप्यनंदिनीपुत्रमुवाचेदंपुनर्वचः ॥ नास्तिपुत्रसमःस्नेहोनास्तिपुत्रसमंसुखम् ॥७६॥ नास्तिपुत्रसमाप्रीतिर्नास्तिपुत्रसमागतिः ॥अपुत्रस्यजगच्छू
न्यमपुत्रस्यगृहेऽसुखम् ॥ ७७ ॥ पुत्रेणलभतेलोकमपुत्रोनरकंव्रजेत् ॥ लोकोवदतिवाक्यानिचंदनंकिलशीतलम् ॥७८॥ पुत्रगात्रपरिष्वंगश्चंदनादति
शीतलः ॥ इतिपुत्रगुणानुक्त्वानिरीक्ष्यचपुनःपुनः ॥७९॥ स्वमातरंसखीगोपीस्त्वरमाणाचपृच्छति ॥ यूथस्याग्रेचरंतींमामाससादमृगाधिपः ॥
॥ ३८० ॥ मुक्ताहंतेनशपथैःपुनर्यास्यामितत्रवै ॥ सुतंचमातरंचैवसखीर्द्रष्टुंचगोकुलम् ॥ ८१ ॥ आगतासत्यवाक्येनपुनर्यास्यामितत्रवै ॥
मातःक्षमस्वतत्सर्वंदौःशील्यादिकृतंमम ॥ ८२ ॥ वालस्तवायंदौहित्रःकिमत्रान्यद्ब्रवीम्यहम् ॥ विपुलेचंपकेमातर्भद्रेसुरभिमानिनि ॥ ८३ ॥
वसुधारेप्रियानंदेमहानंदेघटस्रवे ॥अज्ञानाज्ज्ञानतोवापियदुक्तंकिंचिदप्रियम् ॥ ८४ ॥तत्क्षमध्वंमहाभागायच्चान्यच्चकृतंमया ॥ सर्वाःसर्वगुणोपेताः
सर्वालोकस्यमातरः ॥ ८५ ॥ सर्वाःसर्वप्रदानित्यंरक्षध्वंममबालकम् ॥ अनाथंविकलंदीनंरक्षध्वंममपुत्रकम् ॥ ८६ ॥ मातृशोकाभिसंतप्तंभगिन्यः

पालयिष्यथ ॥ भगिनीनामयंपुत्रोह्यर्पितस्स्वसुतोमया ॥ ८७ ॥ पाल्योबालश्चसर्वाभिःपोष्यःपाल्यश्चपुत्रवत् ॥ तस्मादनाथमबलं
पुत्रवत्पालयिष्यथ ॥८८॥ क्षमध्वंचमहाभागायास्येऽहंसत्यसंश्रया ॥ नचिंतामहतीकार्यासखीभिश्चकथंचन ॥ ८९ ॥ प्रथमस्यास्यजातस्य
स्थितंमरणमग्रतः ॥ श्रुत्वातुनंदावचनंमातासख्यश्चदुःखिताः ॥३९०॥ विषादंपरमंजग्मुरिदमूचुश्चविस्मिताः ॥ अहोऽत्रमहदाश्चर्यंयद्व्याघ्रवचनं
त्वया ॥ ९१ ॥ प्रकर्तुमुद्यतंभीमंनंदात्वंसत्यवादिनी ॥ शपथैःसत्यवाक्येनवंचयित्वामहाभयम् ॥ ९२ ॥ नाशनीयंप्रयत्नेननगंतव्यंकथंचन ॥
नंदेनचैवगंतव्यमधर्मःक्रियतेत्वया ॥ ९३ ॥ यद्बालंस्वसुतंत्यक्त्वासत्यलोभेनगम्यते ॥ अत्रगाथापुराप्रोक्ताऋषिभिर्ब्रह्मवादिभिः ॥ ९४ ॥ प्राण
त्यागेसमुत्पन्नेशपथैर्नास्तिपातकम् ॥ उक्त्वानृतंभवेद्यत्रप्राणिनांप्राणरक्षणम् ॥ ९५ ॥ अनृतंतत्रसत्यंस्यात्सत्यमप्यनृतंभवेत् ॥ कामिनीषुविवा
हेषुगवांमुक्तौतथैवच ॥ ९६ ॥ ब्राह्मणानांविपत्तौचशपथैर्नास्तिपातकम् ॥ ॥ नंदोवाच ॥ ॥ परेषांप्राणरक्षार्थंवदाम्येवानृतंवचः ॥ ९७ ॥ ना
त्मार्थमुत्सहेवक्तुंजीवितार्थेकथंचन ॥ एकःसंश्लिष्यतेगर्भेमरणेभरणंतथा ॥ ९८ ॥ भुंक्तचैकःसुखंदुःखमतःसत्यंवदाम्यहम् ॥ सत्येप्रतिष्ठितालोका
धर्मःसत्येप्रतिष्ठितः ॥ ९९ ॥ उदधिस्सत्यवाक्येनमर्यादांनविलंघते ॥ विष्णवेपृथिवींदत्त्वाबलिःपातालमाश्रितः ॥ ४०० ॥ छद्मनापिबलिर्बद्धः
सत्यवाक्यंनचात्यजत् ॥ प्रवर्धमानःशैलेंद्रःशतशृंगःसमुत्थितः ॥ १ ॥ सत्येनसंस्थितोविंध्यःप्रबन्धंनातिवर्तते ॥ स्वर्गापवर्गनरकाःसत्यवा
चिप्रतिष्ठिताः ॥ २ ॥ यस्तुलोपयतेवाचमशेषंतेनलोपितम् ॥ योऽन्यथासंतमात्मानमन्यथाप्रतिपद्यते ॥ ३ ॥ किंतेननकृतंपापंचोरेणात्मापहा-
रिणा ॥ यास्यामिनरकंघोरंविलोप्यात्मानमात्मना ॥ ४ ॥ तस्यवैवस्वतोराजाधर्मस्यार्धंनिकृंतति ॥ अगाधेसलिलेशुद्धेसत्यतीर्थेक्षमाह्रदे ॥ ५ ॥
स्नात्वापापविनिर्मुक्तःप्रयातिपरमांगतिम् ॥ अश्वमेधसहस्रंचसत्यंचतुलयाधृतम् ॥ अश्वमेधसहस्राद्धिसत्यमेवविशिष्यते ॥ ६ ॥ सत्यंसाधुफलं
श्रुतंचपरमंक्लेशादिभिर्वर्जितं साधूनांनिकटंसतांकुलधनंसर्वाश्रमाणांफलम् ॥ स्वाधीनंचसुदुर्लभंचजगतस्साधारणंभूषणं यन्म्लेच्छोऽप्यभिधायग
च्छतिदिवंतत्त्यज्यतेवाकथम् ॥ ७ ॥ सख्यऊचुः ॥ नंदेसात्वंनमस्कार्यासर्वैरपिसुरासुरैः ॥ यात्वंपरमसत्त्वेनप्राणांस्त्यजसिदुस्त्यजान् ॥ ८ ॥
ब्रूमःकिंतत्रकल्याणियात्वंधर्मधुरंधरा ॥ त्यागेनानेननप्राप्यंत्रैलोक्यंवस्तुकिंचन ॥९॥ अवियोगंचपश्यामस्त्यागादस्मात्सुतेनहि ॥ नार्याःकल्या
णचित्तायानापदःसंतिकुत्रचित् ॥ ४१० ॥ दृष्ट्वागोपीजनंसर्वंपरिक्रम्यचगोकुलम् ॥ नन्दासंप्रस्थितादेवान्वृक्षांश्चापृच्छ्यसापुनः ॥ ११ ॥ क्षिति
वरुणमग्निंचवायुंचापिनिशाकरम् ॥ दशदिग्देवतावृक्षान्नक्षत्राणिग्रहैःसह ॥१२॥ सर्वान्विज्ञापयामासप्रणिपत्यमुहुर्मुहुः ॥ येसंश्रितावनेसिद्धाःसर्वा

श्चवनदेवताः ॥ १३ ॥ वनेचरंतंचतृणंतेरक्षंतुसुतंमम ॥ चंपकाशोकपुन्नागास्सरलार्जुनकिंशुकाः ॥ १४ ॥ शृण्वंतुपादपाःसर्वेसंदेशंममविक्लवम् ॥
वत्समेकाकिनंदीनंचरंतंविपमेवने ॥ १५ ॥ रक्षध्वंवत्सकंबालंस्नेहात्पुत्रमिवौरसम् ॥ मात्रापित्राविहीनंचअनाथंदीनमानसम् ॥ १६ ॥ विचरंत
मिमांभूमिंक्रंदमानंसुदुःखितम् ॥ नस्येहक्रंदमानस्यमत्पुत्रस्यमहावने ॥ १७ ॥ महाशोकाभिभूतस्यक्षुत्पिपासातुरस्यच ॥ शून्यस्यैकाकिनः
सर्वंजगच्छून्यंप्रपश्यतः ॥ १८ ॥ चरमांणस्यकर्तव्यंसानुक्रोशैस्तुरक्षणम् ॥ संदिश्यनंदाप्रीत्यैवंपुत्रस्नेहवशंगता ॥ १९ ॥ शोकाग्निनाचसन्दी
प्ताविच्छिन्नापुत्रदर्शने ॥ वियुक्ताचक्रवाकीवलतेवपतितातरोः ॥ ४२० ॥ अन्धेवदृष्टिरहिताप्रस्खलंतीपदेपदे ॥ अगच्छत्सापुनस्तत्रयत्रासौपिशिता
शनः ॥ २१ ॥ आस्तेविस्फूर्जितमुखस्तीक्ष्णदंष्ट्रोभयावहः ॥ तावत्तस्याःसुतोवत्सऊर्द्ध्वपुच्छोऽतिवेगवान् ॥ २२ ॥ आगत्यमातुरग्रेऽसौमृगें
द्रस्याग्रतोऽभवत ॥ आगतंतुसुतंदृष्ट्वामृत्युंतमग्रतःस्थितम् ॥ २३ ॥ व्याघ्रंदृष्ट्वातुसाधेनुरिदंवचनमब्रवीत् ॥ भोभोमृगेंद्रागताहंसत्यधर्मव्रतेस्थिता
॥ २४ ॥ कुरुतृप्तिंयथाकाममस्मन्मांसेनसांप्रतम् ॥ संतर्पयस्वभूतानिपिबत्वंशोणितंमम ॥ २५ ॥ मृतायांतुमयित्वंभोभक्षयेमंतुबालकम् ॥ द्वीप्यु
वाच ॥ स्वागतंतवकल्याणिधेनुकेसत्यवादिनि ॥ २६ ॥ नहिसत्यवतांकिंचिदशुभंभवतिक्वचित् ॥ त्वयोक्तंधेनुकेपूर्वंसत्यंप्रत्यागमेपुनः ॥ २७॥
तेनमेकौतुकंप्राप्तंप्राप्तागच्छेत्कथंपुनः ॥ तवसत्यपरीक्षार्थंप्रेपितासिमयापुनः ॥ २८॥ अन्यथामांसमासाद्यजीवंतीयास्यसेकथम् ॥ यच्चनःकौतुकं
जातंसत्यस्यान्वेषणंमम ॥ २९॥ तस्मादनेनसत्येनमुक्तासिचमयाधुना ॥ भगिनीभवतीमह्यंभागिनेयःसुतस्तव ॥ ४३०॥ दत्तोपदेशस्यशुभे
ममपापिष्ठकर्मणः ॥ सत्येप्रतिष्ठितालोकाधर्मःसत्येप्रतिष्ठितः ॥ ३१ ॥ सत्येनगौःक्षीरधारांप्रमुंचतिहविःप्रियाम् ॥ सवैधन्यतमो
गोपोयस्त्वत्क्षीरेणजीवति ॥ ३२ ॥ भूमिप्रदेशाधन्यास्तेसतृणावीरुधःशुभ ॥ तेधन्याश्चकृतार्थाश्चतैरेवसुकृतंकृतम् ॥ ३३ ॥ तैराप्तंजन्मनःसारंये
पिबंतिपयस्तव ॥ मृगेंद्रःप्रत्ययंगत्वाविस्मयंपरमंगतः॥३४॥ प्रत्यादेशोऽयमस्माकंसत्यंदेवैःप्रदर्शितः॥ सत्यमिष्टंगवांदृष्ट्वानमेवाञ्छास्तिजीवितुम्
॥ ३५ ॥ तत्करिष्याम्यहंकर्मयेनमुच्येयकिल्बिषात् ॥ मयाजीवसहस्राणिभक्षितानिशतानिच ॥ ३६ ॥ गतिंकामिहगच्छामिदृष्ट्वागोःसत्यमी
दृशम् ॥ अहंपापोदुराचारोनृशंसोजीवघातकः ॥ ३७ ॥ कांस्तुलोकान्गमिष्यामिकृत्वाकर्मसुदारुणम् ॥ गमिष्येपुण्यतीर्थानिकरिष्येपापशोधनम्
॥ ३८ ॥ पतिष्येगिरिमारुह्यप्रवेक्ष्येवाहुताशनम् ॥ धेनोऽद्ययन्मयाकार्यंतपःपापाद्विशुद्धये ॥ ३९ ॥ तदादिशस्वसंक्षेपान्नकालोविस्तरस्यतु ॥
धेनुरुवाच ॥ तपःकृतेप्रशंसंतित्रेतायांज्ञानमेवच ॥ ४४० ॥ द्वापरेयज्ञमित्याहुर्दानमेकंकलौयुगे ॥ सर्वेषामेवदानानामिदमेवैकमुत्तमम् ॥ ४१ ॥

अभयसर्वभूतानांनास्तिदानमतःपरम् ॥ चराचराणांभूतानामभयंयःप्रयच्छति ॥ ४२ ॥ सचसर्वभयान्मुक्तःपरंब्रह्माधिगच्छति ॥ नास्त्यहिंसासमं
दानंनास्त्यहिंसासमंतपः ॥ ४३ ॥ यथाहस्तिपदेष्वन्यत्पदंसर्वंप्रलीयते ॥ सर्वेधर्मास्तथाव्याघ्रप्रलीयंतेह्यहिंसया ॥ ४४ ॥ योगवृक्षस्यछायाया
तापत्रयविनाशिनी ॥ धर्मज्ञानेचपुष्पाणिस्वर्गमोक्षौफलानिच ॥ ४५ ॥ दुःखत्रयाभितप्तस्यछायायोगतरोःस्मृता ॥ नबाध्यतेपुनर्दुःखैःप्राप्यनिर्वा
णमुत्तमम् ॥ ४६ ॥ इत्येतत्परमंश्रेयःकीर्तितंतेसमासतः ॥ ज्ञातंचैवत्वयासर्वंकेवलंमांतुपृच्छसि ॥ ४७ ॥ द्वीप्युवाच ॥ अहंनृग्यापुराशप्तो
व्याघ्ररूपेणसंस्थितः ॥ ततःप्राणिवधात्सर्वमशेषंममविस्मृतम् ॥ ४८ ॥ त्वत्संपर्कोपदेशाभ्यांसंजातंस्मरणंमम ॥ त्वंचाप्यनेनसत्येनगमिष्यसि
परांगतिम् ॥४९॥ तदहंत्वांपुनःपृच्छेप्रश्नमेकंहृदिस्थितम्॥ साग्रंवर्षशतंजातंचिंतयानस्यमेशुभे॥४५०॥भवत्याभाग्ययोगेनकदाचित्स्वर्गशोभने॥
कृतंधर्मस्यसंस्थानंसतांमार्गेप्रतिष्ठितम् ॥ ५१ ॥ किंतेऽभिधानंकल्याणिब्रूहिमेऽज्ञस्यसुव्रते ॥ नंदोवाच ॥ ममनंदेतिसंज्ञातुकृतानंदेनस्वामिना
॥ ५२ ॥ सांप्रतंभक्षयामीतिह्यतिष्ठःकेनहेतुना ॥ नंदेतिश्रुत्वातन्नाममुक्तशापप्रभंजनः ॥ ५३ ॥ पुनर्नृपत्वमापन्नोबलरूपसमन्वितः ॥ एतस्मिन्नंतरे
धर्मस्तांज्ञात्वासत्यवादिनीम् ॥ ५४ ॥ द्रष्टुंसमागतस्तत्रप्राब्रवीच्चपयस्विनीम् ॥ तवसत्यव्रताद्धृष्टोधर्मोऽहमिहचागतः ॥५५॥ नंदेवृणीष्वभद्रंतेवरं
वरतमंहियत् ॥ एवमुक्ताहिसादेवीनंदातंप्रार्थयद्वरम् ॥ ५६ ॥ तवानुभावात्सस्रुतागच्छामिपदमुत्तमम् ॥ भवेदिदंशुभंतीर्थंमुनीनांधर्मदायकम् ॥
॥ ५७ ॥ मन्नाम्नाचसरिदियंनंदानामसरस्वती ॥ वरप्रदानाद्देवेशतदेतत्प्रार्थितंमया ॥ ५८ ॥ पुलस्त्यउवाच ॥ सातत्क्षणाद्गतादेवीस्थानंसत्यव
तांशुभम् ॥ प्रभंजनोऽपितद्राज्यंसंप्राप्तःप्रागुपार्जितम् ॥ ५९ ॥ नंदायनगतास्वर्गंनंदांप्राप्यसरस्वतीम् ॥ तेनाख्ययाबुधैस्तस्याःप्रोक्तानंदासर
स्वती ॥४६०॥ सरस्वतीपुनस्तस्माद्वनात्खर्जूरसंज्ञितात् ॥ दक्षिणेनपुनर्यांताप्लावयंतीधरातलम्॥६१॥आगच्छन्नपियस्तस्यानामगृह्णातिमानवः॥
जीवन्सुखंसआप्नोतिमृतोभवतिखेचरः ॥ ६२॥ तत्रयेशुभकर्माणस्त्यजंतिस्वांतनुंनराः ॥ तेविद्याधरराजानोभवंतिसुखिनोजनाः ॥६३ ॥ नराणां
स्वर्गनिःश्रेणीस्नानात्पानात्सरस्वती ॥ तत्रस्नानंप्रकुर्वन्तियेऽष्टम्यांसुसमाहिताः ॥६४॥ तेमृताःस्वर्गमासाद्यमोदंतेसुमनोरमाः॥ सरस्वतीसदास्त्रीणां
तत्रसौभाग्यदायिका ॥ ६५ ॥ उपोषितातृतीयायामपिसौभाग्यभाजना॥ तत्रतद्दर्शनेनापिमुच्यंतेपापसंचयात् ॥६६॥ स्पृशंतियेनराःकेचित्तेऽपि
ज्ञेयामुनीश्वराः ॥ रजतस्यप्रदानेनरूपवाञ्जायतेनरः ॥ ६७ ॥ पुण्यापुण्यजलोपेतानदीयंब्रह्मणःसुता ॥ नंदानामेतिविपुलाप्रवृत्तादक्षिणामुखी ॥
॥ ६८ ॥ गत्वाततोनातिदूरंपुनर्यातापराङ्मुखी ॥ ततःप्रभृतिसादेवीप्रसभप्रकटास्थिता ॥ ६९ ॥ तस्यास्तटेषुपुण्येषुतीर्थान्यायतनानिच ॥

संसेवितानिमुनिभिःसिद्धैश्चापिममंततः ॥ ४७०॥ तेषुसर्वेषुभवतिधर्मेहेतुस्सरस्वती ॥ स्नानात्पानात्प्रदानाद्वाहिरण्यस्यमहानदी ॥ ७१ ॥ हाटक
क्षितिगौरीणांनंदातीर्थेमहोदयम् ॥ दानंदत्तंनरैःस्नातैर्जनयत्यक्षयंफलम् ॥ ७२ ॥ धान्यप्रदानंप्रवदंतिशस्तंवसुप्रदानंचतथामुनींद्राः ॥ यैस्तेषु
तीर्थेषुनरैःप्रदत्तंतद्धर्महेतुःप्रवरंप्रदिष्टम् ॥ ७३ ॥ प्रायोपवेशंप्रयतःप्रयत्नाद्यस्तत्रकुर्यात्प्रमदापुमान्वा ॥ तीर्थेषुसायुज्यमवाप्यसोऽयंभुङ्क्तेफलंब्रह्म
गृहेयथेष्टम् ॥ ७४ ॥ तस्योपकण्ठेतुमृतास्तुयेवैकर्मक्षयात्स्थावरजंगमाश्च ॥ तैश्चापिमर्त्यैःसहसाप्रसह्यलभ्येतयज्ञस्यफलंदुरापम् ॥ ७५ ॥ ततस्तुसा
धर्मफलप्रदाभवेज्जन्मादिदुःखार्दितचेतसांनृणाम् ॥ सर्वात्मनापुण्यफलासरस्वतीसेव्याप्रयत्नात्पुरुषैर्महानदी ॥ ४७६॥ इति श्रीपाद्मपुराणेप्रथमेसृष्टि
खंडेनंदाप्राचीमाहात्म्येऽष्टादशोऽध्यायः ॥ १८ ॥ भीष्मउवाच ॥ पुष्करस्यचनंदायाःश्रुतंमाहात्म्यमुत्तमम् ॥ ऋषिकोटिर्यदायातापुष्करेमुखद
र्शनात् ॥ १ ॥ सर्वैःसुरूपतालब्धाममैवमेतन्मयाश्रुतम् ॥ यज्ञोपवीतैर्भक्तानियानितानिवदस्वमे ॥ २ ॥ कथंतीर्थविभागस्तुकृतस्तैःसुमहात्म
भिः ॥ आश्रमेयानितीर्थानिकृतान्यपिमहर्षिभिः ॥ ३ ॥ पदन्यासःकृतःपूर्वंविष्णुनायज्ञपर्वते ॥ नागैस्तत्रपश्चतीर्थंकृतंतैस्तुमहाविषैः ॥ ४ ॥ पिंड
प्रदानवापीचकेनपूर्वंविनिर्मिता ॥ उदङ्मुखीभूमिगताकथंगङ्गासरस्वती ॥ ५ ॥ ब्राह्मणैर्वेदविद्वद्भिःकथंयात्रात्रिपुष्करे ॥ कर्तव्यायत्फलंतस्याजा
यतेतद्वदस्वमे ॥ ६ ॥ पुलस्त्यउवाच ॥ प्रश्नभारोमहानेषभवतापरिकल्पितः ॥ तदेकाग्रमनाभूत्वाशृणुतीर्थमहाफलम् ॥ ७ ॥ यस्यहस्तौचपादौ
चमनश्चैवसुसंयतम् ॥ विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते ॥८॥ प्रतिग्रहादुपावृत्तःसंतुष्टोयेनकेनचित् ॥ अहङ्कारनिवृत्तश्चसतीर्थफलमश्नुते ॥
॥ ९ ॥ अक्रोधनश्चराजेंद्रसत्यशीलोदृढव्रतः ॥ आत्मोपमश्चभूतेषुसतीर्थफलमश्नुते ॥ १० ॥ ऋषीणांपरमंगुह्यमिदंभरतसत्तम ॥ पूर्वंयत्रमहारा
जसत्रैपैतामहेतथा ॥ ११ ॥ यतीनामुग्रतपसांयेषांकोटिःसमागता ॥ मुखदर्शनमाश्रित्यस्थितास्तेज्येष्ठपुष्करे ॥ १२ ॥ सुरूपतांपरांलब्ध्वाप्रीतास्ते
मुनिसत्तमाः ॥ हर्षेणमहताविष्टाब्रह्मदर्शनकांक्षिणः ॥ १३ ॥ यज्ञोपवीतैस्तेभूमिमाप्यसर्वेचतुर्दिशम् ॥ कृत्वातीर्थविभागंचस्थिताभक्तिपराय
णाः ॥ १४ ॥ आसन्नश्चततस्तेषांतदातुष्टःपितामहः ॥ कोटिंकृत्वातदातेषांमानंदृष्ट्वामनीषिणाम् ॥ १५ ॥ अद्यप्रभृतियुष्माकंधर्मवृद्धिर्भविष्य
ति ॥ इहागत्यनरोयोवैयदंगंप्रथमंजले ॥ १६ ॥ प्लावयिष्यतिरूपार्थंरूपितातीर्थकारिता ॥ भविष्यतिनसंदेहोयोजनायतमंडले ॥ १७ ॥
अर्धयोजनविस्तारंदीर्घंसार्धंहियोजनम् ॥ एतत्प्रमाणंतीर्थस्यऋषिकोटिप्रवर्तितम् ॥१८॥ गमनादेवराजेंद्रपुष्करस्यत्वरिंदम ॥ राजसूयाश्वमेधा
भ्यांफलमाप्नोतिमानवः ॥ १९ ॥ सरस्वतीमहापुण्याप्रविष्टाज्येष्ठपुष्करे ॥ तत्रब्रह्मादयोदेवाऋषयःसिद्धचारणाः ॥ २० ॥ अभिगच्छंतिराजेंद्रचै

त्रशुक्लचतुर्दशीम् ॥ तत्राभिषकंकुर्वीतपितृदेवार्चनेरतः ॥२१॥ गोमेधंचतदाप्नोतिकुलंचैवसमुद्धरेत् ॥ एवंतीर्थविभागस्तुकृतस्तैस्तुमहर्षिभिः ॥२२॥ पितॄन्देवांश्चसन्तर्प्यविष्णुलोकेमहीयते ॥ तत्रस्नात्वाभवेन्मर्त्योविमलश्चन्द्रमायथा ॥ २३ ॥ ब्रह्मलोकमवाप्नोतिगतिंचपरमांव्रजेत् ॥ नृलोकेदेवदेवस्यतीर्थंत्रैलोक्यविश्रुतम् ॥ २४ ॥ पुष्करंनामविख्यातंमहापातकनाशनम् ॥ दशकोटिसहस्राणितीर्थानांवैमहीपते ॥ २५ ॥ सान्निध्यंपुष्करेयेषांत्रिसन्ध्यंकुलनन्दन ॥ आदित्यावसवोरुद्रास्साध्याश्चसमरुद्गणाः ॥ २६ ॥ गन्धर्वाप्सरसश्चैवनित्यंसन्निहितावि भोः ॥ यत्रदेवास्तपस्तप्त्वादैत्याब्रह्मर्षयस्तथा ॥२७॥ दिव्ययोगामहाराजपुण्येनमहतान्विताः ॥ मनसाप्यभिकामस्यपुष्कराणिमनस्विनः ॥२८॥ पूयन्तेसर्वपापानिनाकपृष्ठेसमोदते ॥ तस्मिंस्तीर्थेमहाराजनित्यमेवपितामहः ॥२९॥ उवासपरमप्रीतोदेवदानवसम्मतः ॥ पुष्करेषुमहाराजदेवाःसर्षिपुरोगमाः ॥३०॥ सिद्धिंचसमनुप्राप्ताःपुण्येनमहतान्विताः ॥ तत्राभिषेकंयःकुर्यात्पितृदेवार्चनेरतः ॥३१॥ अश्वमेधाद्दशगुणंप्रवदंतिमनीषिणः ॥ अप्येकंभोजयेद्विप्रंपुष्करारण्यमाश्रितः ॥ ३२ ॥ अन्नेनतेनसंप्रीताकोटिर्भवतिपूजिता ॥ तेनासौकर्मणाभीष्मप्रेत्यचेहचमोदते ॥ ३३ ॥ शाकैर्मूलैःफलैर्वापियेनवावर्तयेत्स्वयम् ॥ तद्वैदद्याद्ब्राह्मणायश्रद्धावाननसूयकः ॥३४॥ तेनैवप्राप्नुयात्प्राज्ञोहयमेधफलंनरः ॥ ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवाराजसत्तम ॥ ३५ ॥ पैतामहंसरःपुण्यंपुष्करंनामनामतः ॥ वैखानसानांसिद्धानांमुनीनांपुण्यदंहियत् ॥३६॥ सरस्वतीपुण्यतमायस्माद्यातामहार्णवम् ॥ आदिदेवोमहायोगीयत्रास्तेमधुसूदनः ॥ ३७ ॥ ख्यातआदिवराहेतिनाम्नात्रिदशपूजितः ॥ हीनवर्णाश्चयेवर्णास्तीर्थेपैतामहेगताः ॥३८॥ नवियोनिंव्रजंत्येतेस्नात्वातीर्थेमहात्मनः ॥ कार्तिक्यांचविशेषेणयोऽभिगच्छेत्तुपुष्करम् ॥३९॥ फलंतत्राक्षयंतस्यभवतीत्यनुशुश्रुम ॥ सायंप्रातःस्मरेद्यस्तुपुष्कराणिकृतांजलिः ॥ ४० ॥ उपस्पृष्टंभवेत्तेनसर्वतीर्थेतुकौरव ॥ जन्मप्रभृतियत्पापंस्त्रियोवापुरुषस्यवा ॥४१॥ पुष्करेस्नानमात्रेणसर्वमेतत्प्रणश्यति ॥ यथासुराणांप्रवरःसर्वेषांतुपितामहः ॥ ४२ ॥ तथैवपुष्करंतीर्थंतीर्थानामादिरुच्यते ॥ तद्द्वादशवर्षाणिपुष्करेनियतःशुचिः ॥ ४३ ॥ क्रतून्सर्वानवाप्नोतिब्रह्मलोकंसगच्छति ॥ यस्तुवर्षशतंपूर्णमग्निहोत्रमुपासते ॥ ४४ ॥ कार्तिकींवावसेदेकांपुष्करेसममेवतु ॥ पुष्करेदुष्करोहोमःपुष्करेदुष्करंतपः ॥४५॥ पुष्करेदुष्करंदानंवासश्चैवसुदुष्करः ॥ ब्राह्मणोवेदविद्वांस्तुगत्वावैज्येष्ठपुष्करम् ॥४६॥ स्नानाद्भवेन्मोक्षभागीश्राद्धेनपितृतारकः ॥ नाममात्रोऽपियोविप्रोगत्वासंध्यामुपासते ॥४७॥ वर्षाणिद्वादशैवेहतेनसंध्याह्युपासिता ॥ भवेत्तुनात्रसंदेहःपुराप्रोक्तंस्वयंभुवा ॥४८॥ सावित्रीकथितोदोषःकुलेतस्यनजायते ॥ यापत्नीददतेभर्तुःसंध्योपास्तिंकरिष्यतः ॥४९॥ करकेणतुतांप्रणतोयंमुक्ता दिवंव्रजेत् ॥ ब्रह्मलोकमनुप्राप्यतिष्ठतिब्रह्मणोदिनम् ॥

॥५०॥ एकाकिनागतेनापिसंध्यावंद्यायथाक्रमम् ॥ पौष्करेणाथतोयेनशृंगारेनिहितंनतु ॥५१॥ तेनापिद्वादशाब्दानिसंध्योपास्तानसंशयः ॥भवेत्स
मीपगापत्नीकुर्वतःपितृतर्पणम् ॥ ५२ ॥ दक्षिणांदिशमास्थायगायत्र्याराजसत्तम ॥ पितॄणांपरमातृप्तिःक्रियतेद्वादशाब्दिकी ॥५३॥ युगसहस्रंपिण्ड
नश्राद्धेनानन्त्यमश्नुते ॥ एतदर्थंहिविद्वांसःकुर्वतेदारसंग्रहम् ॥५४॥ तीर्थंगत्वाप्रदास्यामःपिंडान्वैश्राद्धपूर्वकम् ॥ तेषांपुत्राधनंधान्यमविच्छिन्नाचसं
ततिः ॥५५॥ भवेद्धैनात्रसंदेहएतदाहपितामहः॥ तर्पयित्वापितॄन्देवानग्निष्टोमफलंलभेत् ॥५६॥ आश्रमानपितेवच्मिशृणुष्वैकमनानृप ॥ अगस्त्येन
कृतश्चात्रआश्रमोदेवसंमितः॥५७॥सप्तर्षीणांपुराचात्रआश्रमोदेवसम्मतः ॥ ब्रह्मर्षीणांतथाचात्रमनूनांपरमस्तथा ॥५८॥ नागानांचपुरीरम्यायज्ञपर्वत
रोधसि॥अगस्त्यस्यमहाराजप्रभावममितात्मनः ॥५९॥ कथयामिसमासेनशृणुत्वंसुसमाहितः ॥पूर्वंकृतयुगेभीष्मदानवायुद्धदुर्मदाः॥६०॥कालेयाइ
तिविख्यातागणाःपरमदारुणाः ॥ तेतुवृत्रंसमाश्रित्यनानाप्रहरणोद्यताः ॥ ६१ ॥ समन्तात्पर्यधावन्तमहेन्द्रप्रमुखान्सुरान् ॥ ततोवृत्रवधंयत्नमकुर्वं
स्त्रिदशाःपुरा॥६२॥ पुरन्दरंपुरस्कृत्यब्रह्माणमुपतस्थिरे ॥ कृताञ्जलींस्तुतान्सर्वान्परमेष्ठीत्युवाचह॥६३॥ विदितंमेसुराःसर्वंयद्वःकार्यंचिकीर्षितम् ॥
तमुपायंप्रवक्ष्यामियथावृत्रंवधिष्यथ ॥ ६४ ॥ दधीचिरितिविख्यातोमहानृषिरुदारधीः ॥ तंगत्वासहितास्सर्वेवरंचप्रतियाचत ॥ ६५ ॥ सवो
दास्यतिधर्मात्मासुप्रीतेनान्तरात्मना ॥ सवाच्यःसहितैःसर्वैर्भवद्भिर्जयकांक्षिभिः ॥ ६६ ॥ स्वान्यस्थीनिप्रयच्छस्वत्रैलोक्यहितकांक्षया ॥ सश
रीरंसमुत्सृज्यस्वान्यस्थीनिप्रदास्यति ॥६७॥ तस्यास्थिभिर्महाघोरंवज्रंसंक्रियतांदृढम् ॥ महच्छत्रुहनंदिव्यंतदस्त्रमशनिःस्मृतम् ॥ ६८ ॥ तेनवज्रे
णवैवृत्रंवधिष्यतिशतक्रतुः ॥ एतद्वःसर्वमाख्यातंतस्मात्सर्वंविधीयताम् ॥६९॥ एवमुक्तास्ततोदेवाअनुज्ञाप्यपितामहम् ॥ शतक्रतुंपुरस्कृत्यदधीचेरा
श्रमंययुः ॥ ७० ॥ सरस्वत्याःपरेपारेनानाद्रुमलतावृतम् ॥ षट्पदोद्गीतनिनदैरुद्घुष्टंसामगैरिव ॥ ७१ ॥ पुंस्कोकिलरवोन्मिश्रंजीवंजीवकनादि
तम् ॥ महिषैश्चवराहैश्चसृमरैश्चमरैरपि ॥ ७२ ॥ तत्रतत्रानुचरितैःशार्दूलभयवर्जितैः ॥ करेणुभिर्वारणैश्चप्रभिन्नकरटामुखैः ॥ ७३ ॥ स्वरोद्गारैश्चक्री
डद्भिःसमंतादनुनादितम् ॥ सिंहव्याघ्रैर्महानादंनदद्भिरनुनादितम् ॥ ७४ ॥ मयूरैश्चापिसंलीनैर्गुहाकंदरवासिभिः ॥ तेषुतेषुचकुंजेषुनादितंसुमनो
रमम् ॥७५॥ त्रिविष्टपसमप्रख्यंदधीच्याश्रममागमन् ॥ तत्रापश्यन्दधीचिंतंदिवाकरसमप्रभम् ॥७६॥ जाज्वल्यमानंवपुषायथालक्ष्म्याचतुर्भुजम्॥
तस्यपादौसुराराजन्नभिवंद्यप्रणम्यच ॥ ७७ ॥ अयाचंतवरंसर्वेयथोक्तंपरमेष्ठिना ॥ ततोदधीचिःपरमप्रतीतश्चसुरोत्तमान् ॥ ७८ ॥ उवाचप्रणतो
भूत्वात्विदंकार्यकरंवचः॥दधीचिरुवाच॥ इन्द्राद्यास्त्वागतादेवाःकिमर्थंतद्वदन्तुमे ॥७९॥ पीडयमानानहंमन्येहतप्रभसुरोत्तमाः॥ यदर्थंपीडितात्मान

स्तद्वदन्तुनिराकुलम्॥८० ॥देवाऊचुः॥ त्वदस्थिकृतशस्त्रेणदेवास्सन्तुनिरामयाः ॥८१॥ दधीचिरुवाच ॥करोमियद्वोहितमद्यदेवाःस्वंवापिदेहंत्वहमु
त्सृजामि॥पुलस्त्यउवाच ॥तानेवमुक्त्वाद्विपदांवरिष्ठःप्राणांस्ततोऽसौसहसोत्ससर्ज ॥८२॥सुरास्तदस्थीनिसवासवास्तंयथोपयोगंजगृहुःस्मतस्य ॥
प्रहृष्टरूपाश्चजयायदेवास्त्वष्टारमासाद्यतमर्थमूचुः ॥८३॥त्वष्टातुतेषांवचनंनिशम्यप्रहृष्टरूपःप्रयतःप्रयत्नात्॥ चकारवज्रंभृशमुग्रवीर्यंकृत्वाचशस्त्रं
तमुवाचहृष्टः ॥८४॥अनेनशस्त्रप्रवरेणदेवभस्मीकुरुष्वाद्यसुरारिमुग्रम्॥ततोहतारिःसगणःसुखंत्वंप्रशाधिकृत्स्नंत्रिदिवंदिविष्ठः ॥त्वष्ट्रातथोक्तस्तुपुरंदर
श्चवज्रंप्रहृष्टःप्रयतोह्यगृह्णात्॥८५॥ ततःसवज्रेणयुतोदैवतैरभिपूजितः॥आससादततोवृत्रंस्थितमावृत्यरोदसी॥८६॥ कालकेयैर्महाकायैस्संमतादभिरक्षि
तम् ॥ समुद्यतप्रहरणैःसशृंगैरिवपर्वतैः ॥८७॥ततोयुद्धंसमभवद्देवानांसहदानवैः॥ मुहूर्तंभरतश्रेष्ठलोकत्रासकरंमहत्॥८८॥उद्यतैःप्रतिसृष्टानांखड्गानांवी
रबाहुभिः ॥आसीत्सुतुमुलःशब्दःशरीरैरभिपातितैः॥८९॥शिरोभिःप्रपतद्भिश्चाप्यंतरिक्षान्महीतलम् ॥तालैरिवमहीपालवृंतैरेवदृश्यते॥९०॥तेहेमक
वचाभूत्वाकालेयाःपरिघायुधाः॥त्रिदशानभ्यवर्तन्तदावदग्धाइवद्रुमाः॥९१॥तेषांवेगवतांवेगंसहितानांप्रधावताम् ॥ नशेकुःसहिताःसोढुंभग्नास्तेप्राद्र
वन्भयात्॥९२॥तान्दृष्ट्वाद्रवतोभीतान्सहस्राक्षःपुरन्दरः॥वृत्रंचवर्द्धमानंतुकश्मलंमहदाविशत्॥९३॥तंशक्रंकश्मलाविष्टंदृष्ट्वाविष्णुःसनातनः ॥स्वतेजो
व्यदधाच्छक्रेबलमस्यविवर्धयन्॥९४॥विष्णुनाप्यायितंशक्रंदृष्ट्वादेवगणास्तदा ॥सर्वेतेजस्समादध्युस्तथाब्रह्मर्षयोऽमलाः॥९५॥ससमाप्यायितःशक्रो
विष्णुनादैवतैःसह॥ऋषिभिश्चमहाभागैर्बलवान्समपद्यत॥९६॥ ज्ञात्वाबलस्थंत्रिदशाधिपंतंननादवृत्रस्सुमहानिनादम्॥तस्यप्रणादेनधरादिशश्चखंद्यौ
र्नगाश्चेतिचचालसर्वम्॥९७॥ततोमहेंद्रःपरमाभितप्तःश्रुत्वारवंघोरतरंमहान्तम्॥भयेनमग्नस्त्वरितंमुमोचवज्रंमहान्तंखलुतस्यशीर्षे॥९८॥सशक्रवज्राभि
हतःपपातमहास्वनःकाञ्चनमाल्यधारी॥ यथामहाशैलवरःपुरस्तात्समन्दरोविष्णुकरात्प्रमुक्तः ॥९९॥ तस्मिन्हतेदैत्यवरेभयार्तःशक्रःप्रदुद्रावसरःप्रवे
ष्टुम्॥वज्रंचमेनेस्वकरात्प्रमुक्तंवृत्रंभयाच्चैवहतंनपश्यति॥१००॥ सर्वेचदेवामुदिताःप्रहृष्टाःसहर्षयश्चैनमथोस्तुवन्ति॥शेषांश्चदैत्यांस्त्वरितंसमेत्यजघ्नुः
सुरावृत्रवधाभितप्तान् ॥ १ ॥ तेवध्यमानास्त्रिदशैस्तदानीमहासुरावायुसमानवेगाः ॥ समुद्रमेवाविविशुर्भयार्ताःप्रविश्यचैवोदधिमप्रमेयम् ॥ २ ॥
झषाकुलंरत्नसमाकुलंचतदास्ममन्त्रंसहिताःप्रचक्रुः ॥तत्रस्मकेचिन्मतिनिश्चयज्ञास्तांस्तानुपायान्परिचिन्तयन्तः ॥३॥भयार्दितादेवनिकायतप्तास्त्रैलो
क्यनाशायमतिंप्रचक्रुः ॥ तेषांतुतत्रक्षयकालयोगाद्घोरामतिश्चिन्तयतांबभूव ॥४॥ येसन्तिविद्यातपसोपपन्नास्तेषांविनाशःप्रथमंचकार्यः ॥लोकाश्च
सर्वेतपसाध्रियन्तेतस्मात्त्वरध्वंतपसाक्षयाय ॥५॥ येसन्तिकेचिद्विवसुन्धरायांतपस्विनोधर्मविदश्चतज्ज्ञाः॥ तेषांवधश्चक्रियतांहिक्षिप्रंतेषुप्रनष्टेषुजग

द्रिनष्टम् ॥६॥ एवंहिसर्वेगतबुद्धिभावाजगद्विनाशेपरमप्रहृष्टाः ॥ दुर्गंसमाश्रित्यमहोर्मिमन्तंरत्नाकरंवारुणमालयंस्म ॥७॥ समुद्रंतेसमासाद्यवारुणं
त्वम्भमांनिधिम्॥कालेयास्समपद्यन्तत्रैलोक्यस्यविनाशने ॥८॥ तेरात्रौसमभिक्रुद्धावभक्षुस्तांस्तदामुनीन्॥आश्रमेषुचयेसन्तिपुण्येष्वायतनेषुच ॥
॥ ९ ॥ वसिष्ठस्याश्रमेविप्राभक्षितास्तैर्दुरात्मभिः ॥ अशीतिःशतमष्टौचवनेचान्यतपस्विनः ॥११०॥ च्यवनस्याश्रमंगत्वापुण्यंद्विजनिषेवितम् ॥
फलमूलाशनानांहिमुनीनांभक्षितंशतम् ॥११॥एवंरात्रौस्मकुर्वन्तोविविशुश्चार्णवंदिवा ॥भरद्वाजाश्रमंगत्वानियताब्रह्मचारिणः ॥१२॥वाताहारम्बुभ
क्षाश्चविंशतिश्चनिषूदिताः ॥ एवंक्रमेणभक्षार्थंमुनीनांदानवास्तदा॥१३॥ निशायांपर्यधावन्तशक्ताभुजवलाश्रयात ॥ कालेनमहतातेवैजघ्नुर्मुनिगणा
न्वहून् ॥१४॥ नचैतानवबुध्यन्तमनुजामनुजाधिप ॥ निःस्वाध्यायवषट्कारंनष्टयज्ञोत्सवक्रियम् ॥१५॥ जगदासीन्निरुत्साहंकालेयभयपीडितम् ॥
एवंप्रक्षीयमाणास्तेमानवामनुजेश्वर ॥ १६ ॥ आत्मत्राणपराभीताःप्राद्रवन्तुदिशोदश ॥ केचिद्गुहांप्रविविशुर्विकीर्णाश्चापरेद्विजाः ॥ १७ ॥ अप
रेचभयोद्विग्नाभयात्प्राणान्समत्यजन् ॥ केचित्तत्रमहेष्वासाःशूराःपरमदर्पिताः ॥१८॥ मार्गमाणाःपरंयत्नंदानवानांप्रचक्रिरे ॥ नचैताननुजग्मुस्ते
समुद्रंसमुपाश्रितान् ॥१९॥ श्रमंनजग्मुःपरममाजग्मुःक्षयमेवच ॥ जगत्प्रशमनेजातेनष्टयज्ञोत्सवक्रिये ॥१२०॥ आजग्मुःपरमोद्विग्नास्त्रिदशामनुजे
श्वर ॥ समेत्यसमहेन्द्रास्तुभयान्मंत्रंप्रचक्रिरे ॥२१॥ नारायणंपुरस्कृत्यवैकुंठमपराजितम् ॥ ततोदेवास्समेतास्तेतदोचुर्मधुसूदनम् ॥ २२ ॥ त्वंनः
स्रष्टाचगोप्ताचभर्ताचजगतःप्रभो ॥ त्वयासृष्टंजगत्सर्वंयच्चेङ्गंयच्चनेङ्गति ॥२३॥ त्वयाभूमिःपुरानष्टासमुद्रात्पुष्करेक्षण ॥ वाराहंरूपमास्थायजगदर्थे
समुद्धृता ॥ २४ ॥ आदिदैत्योमहावीर्योहिरण्यकशिपुःपुरा ॥ नारसिंहंवपुःकृत्वासूदितःपुरुषोत्तम ॥२५॥ अवध्यःसर्वभूतानांबलिश्चापिमहासुरः ॥
वामनंवपुरास्थायत्रैलोक्याद्भ्रंशितस्त्वया ॥२६॥ असुरःसुमहेष्वासोजंभइत्यभिविश्रुतः ॥ यज्ञक्षोभकरःक्रूरस्त्वयासर्वनिपातितः ॥ २७॥ एवमादी
निकर्माणियेषांसंख्यानविद्यते ॥ अस्माकंभयभीतानांत्वंगतिर्मधुसूदन ॥२८॥तस्मात्त्वांदेवदेवेशलोकार्थंज्ञापयामहे ॥ रक्षलोकांश्चदेवांश्चशक्रंचमहतो
भयात्॥२९॥भवत्प्रसादाद्वर्तन्तेप्रजाःसर्वाश्चतुर्विधाः॥ स्वस्थाभवन्तिमनुजाहव्यकव्यैर्दिवौकसः॥१३०॥लोकाह्येवंप्रवर्तन्तेअन्योन्यंचसमाश्रिताः॥
त्वत्प्रभावान्निरुद्विग्नास्त्वयैवपरिरक्षिताः॥३१॥इदंचसमनुप्राप्तंलोकानांभयमुत्तमम्॥जानीमोनचकेनैतेवध्यन्तेब्राह्मणानिशि॥३२॥ ब्राह्मणेषुचक्षीणेषु
पृथ्वीक्षयमेष्यति ॥ त्वत्प्रसादान्महाबाहोलोकास्सर्वेजगत्पते ॥३३॥ विनाशंनाधिगच्छेयुस्त्वयावैपरिरक्षिताः ॥ विष्णुरुवाच ॥ विदितंमेसुरास्सर्वे
प्रजायाःक्षयकारणम् ॥३४ ॥ भवतांचापिवक्ष्यामिशृणुध्वंविगतज्वराः॥कालकेयाइतिख्यातागणाःपरमदारुणाः॥३५॥तेवृत्रंनिहतंदृष्ट्वासहस्राक्षेणधी

मता॥ जीवितंपरिरक्षन्तःप्रविष्टावरुणालयम् ॥ ३६ ॥ तप्रविश्योदधिंघोरंनानाग्राहसमाकुलम् ॥ उत्सादनार्थंलोकस्यरात्रौघ्नन्तिमुनीनिह ॥ ३७ ॥
नतुशक्याःक्षयंनेतुंसमुद्रान्तर्हिताहिते॥समुद्रस्यक्षयेबुद्धिर्भवद्भिःपरिचिन्त्यताम्॥३८॥एतच्छ्रुत्वावचोदेवाविष्णुनासमुदाहृतम्॥परमेष्ठिनमासाद्यअ
गस्त्यस्याश्रमंययुः ॥३९॥ तत्रापश्यन्महात्मानंवारुणंदीप्ततेजसम् ॥ उपास्यमानमृषिभिर्देवैरिवपितामहम्॥१४०॥तेऽभिगम्यमहात्मानंमैत्रावरुणि
मुत्तमम् ॥ अप्रमत्तंतपोराशिंकर्मभिःस्वैरनुष्ठितैः ॥ ४१॥ देवाऊचुः ॥ नहुषेणाभितप्तानांलोकानांत्वंगतिःपुरा ॥ भ्रंशितश्चसुरैश्वर्याल्लोकार्थंलोकक
ण्टकः ॥ ४२ ॥ क्रोधात्प्रवृद्धःसमहान्भास्करस्यनगोत्तमः ॥ वचस्तवानतिक्रामन्विन्ध्यःशैलोनवर्धते ॥४३॥ तमसाच्छादितेलोकेमृत्युनाभ्यर्दिताः
प्रजाः॥ त्वामेवनाथमागम्यनिर्वृतिंपरमांगताः ॥ ४४ ॥ अस्माकंभयभीतानांनित्यमेवभवान्गतिः ॥ ततस्त्वद्यप्रयाचामस्त्वांवरंवरदोह्यसि ॥४५ ॥
॥ भीष्मउवाच॥ किमर्थंसहसाविन्ध्यःप्रवृद्धःक्रोधमूर्छितः ॥ एतदिच्छाम्यहंश्रोतुंविस्तरेणमहामुने॥४६॥पुलस्त्यउवाच ॥ अद्रिराजंमहाशैलंमेरुंक
नकपर्वतम् ॥ उदयेऽस्तमयेभानुःप्रदक्षिणमवर्तत ॥ ४७ ॥ तंदृष्ट्वातुतदाविन्ध्यःशैलसूर्यमथाब्रवीत् ॥ यथाहिमेरुर्भवतानित्यशःपरिगम्यते
॥ ४८ ॥ प्रदक्षिणंचक्रियतेमामेवंकुरुभास्कर ॥ एवमुक्तस्ततःसूर्यःशैलेन्द्रंप्रत्यभाषत ॥ ४९ ॥ नाहमात्मेच्छयाशैलंकरोम्येनंप्रदक्षिणम् ॥
एषमार्गःप्रदिष्टोमेयेनेदंनिर्मितंजगत् ॥१५०॥ एवमुक्तस्तदाक्रोधात्प्रवृद्धःसहसाचलः.॥ सूर्याचन्द्रमसोर्मार्गंरोद्धुमिच्छन्परंतप ॥ ५१॥ ततोहिदेवाः
सहितास्तुसर्वेसेंद्राःसमागम्यमहाद्रिराजम्॥निवारयामासुरथोत्पतन्तंनवैसतेषांवचनंचकार॥५२॥ ततोहिजग्मुर्मुनिमाश्रमस्थंतपस्विनांधर्मवतांवरि
ष्ठम् ॥ अगस्त्यमत्यद्भुतदीप्तवीर्यंतंचार्यमूचुःसहिताःसुरास्ते ॥ ५३ ॥ देवाऊचुः ॥ सूर्याचन्द्रमसोर्मार्गंनक्षत्राणांगतिंतथा ॥ शैलराडावृणोत्येष
विन्ध्यःक्रोधवशानुगः॥५४॥तंनिवारयितुंशक्तोनान्यःकश्चिन्मुनीश्वर॥तच्छ्रुत्वावचनंविप्रःसुराणांशैलमभ्यगात्॥५५॥सोऽभिगम्याब्रवीद्विन्ध्यंसाद
रंसमुपस्थितम् ॥ मार्गमिच्छाम्यहंदत्तंभवतापर्वतोत्तम ॥५६॥ दक्षिणामभिगन्तास्मिदिशंकार्येणकेनचित् ॥ यावदागमनंमस्यात्तावत्त्वंप्रतिपालय
॥ ५७ ॥ निवृत्तेमयिशैलेन्द्रततोवर्धस्वकामतः॥पुलस्त्यउवाच॥अद्यापिदक्षिणाद्देशाद्वारुणिर्ननिवर्तते ॥५८॥ एतत्तेसर्वमाख्यातंयथाविन्ध्योनवर्धते
अगस्त्यस्यप्रभावेनयन्मांत्वंपरिपृच्छसि ॥ ५९ ॥ कालेयास्तुयथाराजन्सुरैःसवानषूदिताः ॥ अगस्त्यद्वारमासाद्यतन्मेनिगदतःशृणु ॥ १६० ॥
त्रिदशानांवचःश्रुत्वामैत्रावरुणिरब्रवीत् ॥ किमर्थंसमुपायातावरंमत्तःकिमिच्छथ ॥६१॥ एवंमुक्तास्तदातेनदेवास्तंमुनिमब्रुवन्॥इच्छामएकंवरमद्भुतं
वयंपिबार्णवंदेवमुनेमहात्मन् ॥ ६२ ॥ एवंत्वयेच्छेमकृतमहर्षेमहार्णवंपीयमानंसमग्रम् · ॥ ततोविहन्यामचसानुबन्धंकालेयसंज्ञंसुरविद्विषांबलम्

॥ ६३ ॥ त्रिदशानांवचःश्रुत्वातथेतिमुनिरब्रवीत् ॥ करिष्येभवतांकामंलोकानांसुखकारकम् ॥ ६४ ॥ एवमुक्त्वाततोऽगच्छत्समुद्रंनिधिमम्भसाम्
॥ तपःसिद्धैश्चमुनिभिःसार्धंदेवैश्चसुव्रत ॥ ६५ ॥ मनुष्योरगगंधर्वायक्षाःकिंपुरुषास्तथा ॥ अनुजग्मुर्महात्मानंद्रष्टुकामास्तदद्भुतम् ॥ ६६ ॥
ततोऽभ्यपश्यत्सहितःसमुद्रंभीमनिःस्वनम्॥नृत्यन्तमिवचोर्मीभिर्वल्गन्तमिववायुना॥६७॥हसंतमिवफेनौघैःस्खलन्तंकन्दरेषुच॥नानाग्राहसमाकीर्णं
नानाद्विजगणैर्युतम् ॥ ६८ ॥ अगस्त्यसहितादेवाःसगंधर्वमहोरगाः ॥ ऋषयश्चमहाभागाःसमासेदुर्महोदधिम् ॥ ६९ ॥ समुद्रंससमासाद्यवारुणि
र्भगवानृषिः ॥ उवाचसहितान्देवानृषींस्तांस्तुसमागतान् ॥ १७० ॥ पातुकामःसमुद्रंचअगस्त्यऋषिसत्तमः ॥ एषलोकहितार्थायपिबामिवरुणा
लयम् ॥ ७१ ॥ भवतांयदनुष्ठेयंतच्छीघ्रंसंविधीयताम् ॥ एतावदुक्त्वावचनंमैत्रावरुणिरग्रतः ॥ ७२ ॥ समुद्रमपिबत्क्रुद्धःसर्वलोकस्यपश्यतः ॥
पीयमानंसमुद्रंतुदृष्ट्वादेवाःसवासवाः ॥७३॥ विस्मयंपरमंजग्मुस्स्तुतिभिश्चाप्यपूजयन् ॥ त्वंनस्त्राताविधाताचलोकानांलोकभावनः ॥ त्वत्प्रसादा
त्समुत्सेधमुपगच्छेत्समंजगत्॥७४॥संपूज्यमानस्त्रिदशैर्महात्मागन्धर्वमुख्येषुनदत्सुचैव ॥दिव्यैश्चपुष्पैरवकीर्यमाणोमहार्णवंनिःसलिलंचकार॥७५॥
दृष्ट्वाकृतंनिःसलिलंमहार्णवंसुराःसमस्ताःपरमप्रहृष्टाः ॥ प्रगृह्यदिव्यानिवरायुधानितान्दानवाञ्जघ्नुरदीनसत्त्वाः ॥ ७६ ॥ तेवध्यमानास्त्रिदशै
र्महात्मभिर्महाबलैर्वेगयुतैर्नदद्भिः ॥ नसेहिरेवेगवतांमहात्मनांवेगंतदाधारयितुंदिवौकसाम् ॥ ७७ ॥ तेवध्यमानास्त्रिदशैर्दानवाभीमनिःस्वनाः ॥
चक्रुःसुतुमुलंयुद्धंमुहूर्त्तमिवभारत ॥ ७८ ॥ तेपूर्वंतपसादग्धामुनिभिर्भावितात्मभिः ॥ यतमानाःपरंशक्त्यात्रिदशैर्विनिषूदिताः ॥ ॥ ७९ ॥
तेहेमनिष्काभरणाःकुण्डलाङ्गदधारिणः ॥ निहताबह्वशोभंतपुष्पिताइवकिंशुकाः ॥ १८० ॥ हतशिष्टास्ततःकेचित्कालेयदनुजोत्तमाः ॥ विदार्य
वसुधांदेवींपातालतलमाश्रिताः ॥ ८१ ॥ निहतान्दानवान्दृष्ट्वात्रिदशामुनिपुङ्गवम् ॥ तुष्टुवुर्विविधैर्वाक्यैरिदंचैवाब्रुवन्वचः ॥ ८२ ॥ त्वत्प्रसा
दान्महाभागलोकैःप्राप्तंमहत्सुखम् ॥ त्वत्तेजसाचनिहताःकालेयाभीमविक्रमाः ॥ ८३ ॥ पूरयस्वमहाविप्रसमुद्रंलोकभावनम् ॥ यत्त्वयासलिलं
पीतंतदस्मिन्पुनरुत्सृज ॥ ८४ ॥ एवमुक्तःप्रत्युवाचभगवान्मुनिपुङ्गवः ॥ जीर्णंतद्धिमयातोयमुपायोऽन्यःप्रचिन्त्यताम् ॥ ८५ ॥ पूरणार्थं
समुद्रस्यभवद्भिर्यत्नमास्थितैः ॥एवंश्रुत्वातुवचनंमहर्षेर्भावितात्मनः ॥ ८६ ॥ विस्मिताश्चविषण्णाश्चबभूवुःसहितास्सुराः ॥ परस्परमनुज्ञाप्यप्रणम्य
मुनिपुङ्गवम् ॥८७॥प्रजाःसर्वामहाराजविप्राजग्मुर्यथागतम् ॥ त्रिदशाविष्णुनासार्द्धमनुजग्मुःपितामहम् ॥८८ ॥पूरणार्थंसमुद्रस्यमन्त्रयन्तःपरस्पर
म् ॥ ऊचुःप्राञ्जलयस्सर्वेसागरस्यहिपूरणम् ॥ ८९ ॥ तानुवाचसमेतांस्तुब्रह्मालोकपितामहः ॥ गच्छध्वंविबुधास्सर्वेयथाकामंयथेप्सितम् ॥१९०॥

महताकालयोगेनप्रकृतिंयास्यतेऽर्णवः ॥ज्ञातींस्तुकारणंकृत्वामहाराजोभगीरथः ॥९१॥ गंगौघेनसमुद्रंचपुनःसंपूरयिष्यति॥एवंतेब्रह्मणादेवाःप्रेषिता ऋषिसत्तमाः ॥ ९२ ॥ उवाचभगवांस्तुष्टस्त्वगस्त्यमृषिसत्तमम् ॥ देवकार्यंतुभवतादानवानांविनाशनम् ॥९३॥ यतस्संतारितादेवास्तेनतुष्टोऽस्मि वैमुने ॥ अभिप्रेतोवरोयस्तेयाचयस्वददामितम् ॥ ९४ ॥ एवमुक्तस्तदागस्त्यःप्रणिपातपुरःसरम् ॥ इहस्थेनमयादेवदेवकार्यमिदंकृतम् ॥ ९५ ॥ सर्वाश्रमाणांप्रवरोभवत्वेषममाश्रमः॥त्वयाचोक्तस्तुभगवन्भवितानात्रसंशयः ॥९६॥ ब्रह्मोवाच ॥ यात्रांतुपुष्करेकृत्वाइहागत्यनरास्तुये॥इहकुण्डेषु येस्नानंतर्पणंपितृदेवयोः ॥९७॥ अर्चनंचैवदेवेषुसर्वमक्षयकारकम्॥अर्घ्यंचोच्चावचंगृह्यशष्कुलापूपकांस्ततः ॥९८॥ दास्यन्तिद्विजमुख्येभ्यस्तेषांवा सत्रिविष्टपे॥श्राद्धेनपितरस्तृप्तायावदाभूतसंप्लवम्॥९९॥कन्दमूलफलैर्वापितर्पयिष्यतियोमुनिम्॥सप्तर्षिस्थानमासाद्यमोदतेशाश्वतीःसमाः ॥२००॥ यज्ञपर्वतमारूढोदृष्ट्वागंगाविनिर्गमम्॥ उदङ्मुखीदेवनदीनिर्गतापुष्करंप्रति ॥१॥ अत्राभिषेकंयःकुर्यात्पितृदेवार्चनेरतः ॥अश्वमेधफलंतस्यभवत्येव नसंशयः॥२॥यस्त्वेकंभोजयेद्विप्रंकोटिर्भवतिभोजिता॥अक्षयंत्वन्नपानंचअत्रदत्तंमुनीश्वर ॥३॥ योऽयमिच्छतिकामंतुसर्वंतस्यभविष्यति॥नवियोनिं व्रजत्यत्रस्नातमात्रोनरोभुवि ॥ ४ ॥ स्थानानांपरमंस्थानंतीर्थानांतीर्थमुत्तमम् ॥ मयादत्तंमुनिश्रेष्ठभविष्यतिनसंशयः ॥ ५ ॥ जन्मप्रभृतियत्पापं स्त्रियोवापुरुषस्यवा ॥ अत्रैवस्नातमात्रस्यसर्वमेतत्प्रणश्यति ॥६॥ एवमुक्त्वातुभगवान्ब्रह्मालोकपितामहः ॥ जगामामन्त्र्यसमुनिमगस्त्यंमुनिसत्त मम् ॥ ७ ॥ अगस्त्योऽपिस्थितस्तत्रआश्रमेस्वेपरंतप ॥ अगस्त्यस्याश्रमोत्पत्तिरेषातेपरिकीर्तिता ॥ ८ ॥ सप्तर्षीणामाश्रमांश्चकीर्तयिष्येकुरूद्वह ॥ अत्रिश्चैववसिष्ठोऽथपुलस्त्यःपुलहःक्रतुः ॥९॥ अंगिरागौतमश्चैवसुमतिःसुमुखस्तथा ॥ विश्वामित्रःस्थूलशिराःसंवर्तश्चप्रतर्दनः ॥२१०॥ रैभ्योबृ हस्पतिश्चैवच्यवनःकश्यपोभृगुः ॥ दुर्वासाजमदग्निश्चमार्कण्डेयोऽथगालवः ॥११ ॥ उशनाथभरद्वाजोयवक्रीतस्तथामुनिः॥स्थूलाक्षःसकलाक्षश्चक ण्वोमेधातिथिःक्रतुः ॥१२॥ नारदःपर्वतश्चैवस्वगन्धीच्यवनोद्विजः॥तृणाम्बुःशबलोधौम्यःशतानन्दोऽकृतव्रणः॥१३॥जमदग्निस्तथागमोह्यष्टकश्चैव मादयः ॥ कृष्णद्वैपायनश्चैवपुत्रशिष्यैःसमन्वितः ॥१४॥ एतेतुपुष्करंप्राप्यसप्तर्षीणामथाश्रमे ॥ वेष्टितानियमैश्चापिदयायुक्तास्तपस्विनः ॥१५॥ आनृशंस्यंजयोधैर्यंतपःसत्यंक्षमार्जवम् ॥ दयादानंजपश्चैवसर्वेषांतत्प्रतिष्ठितम् ॥ १६ ॥ इहयत्क्रियतेकर्मतत्परत्रोपभुज्यते ॥ ज्ञात्वातदित्थंमुनयः परमार्थपरायणाः ॥ १७ ॥ नतत्रनास्तिकायान्तिनस्तेनानाजितेन्द्रियाः ॥ ननृशंसानपिशुनानकृतघ्नानमानिनः ॥१८॥ सत्यतेजस्विनःशूरादया वंतःक्षमापराः॥ यज्वानोयज्ञशीलाश्चनिरीहानिरुपद्रवाः ॥१९॥ निर्ममानिरहङ्कारास्तत्रगच्छन्तिपुष्करे ॥ नरोगोनजरांमृत्युर्भवितात्रमहात्मनाम् ॥

॥ २२० ॥ नतत्रमूढाविशन्तिपुरुषाविपर्यात्मकाः ॥ कामलोभमदद्रोहक्रोधमोहैरुपद्रुताः ॥ २१॥ तुल्यमानापमानाश्चनिर्द्वन्द्वास्संयतेन्द्रियाः ॥
ध्यानयोगपराश्चैवतेतुगच्छन्तिपुष्करम् ॥२२॥ आश्रमेषुयथोक्तेषुयथोक्तंवैद्विजातयः॥येंवर्तन्तेसमन्त्रास्तुतेषांलोकामहोदयाः ॥२३॥ येनहिंसन्ति
भूतानिकर्मणामनसागिरा॥अनृशंसतराःसन्तःसर्वदाचप्रियंवदाः॥२४॥अग्निहोत्ररतानित्यंनित्यंचातिथिपूजकाः॥नित्यंस्वाध्यायवन्तश्चनित्यंस्ना
नपरायणाः ॥२५॥ मातृवत्स्वसृवच्चैवतथादुहितृवच्चह॥परदारान्प्रपश्यन्तिसततंविगतस्पृहाः ॥२६॥ येऽधिक्षितानकुप्यन्तिनहिंसन्तिचहिंसिताः ॥
समदुःखसुखाःसन्तोमहात्मानोजितेन्द्रियाः ॥२७॥ तेहिसर्वेप्रपश्यन्तिपुराचेरुर्महीमिमाम्॥समाधिनाचिन्तयन्तोब्रह्मलोकंसनातनम् ॥२८॥अथाभ
वदनावृष्टिःकदाचिन्महतींतदा ॥ कृच्छ्रंप्रायोह्यभूत्तत्रसर्वलोकःक्षुधार्दितः ॥ २९ ॥ ततोनिरन्नेलोकेऽस्मिंश्चात्मानंतेपरीप्सवः ॥ मृतंकुमारमादाय
कृच्छ्रप्रायास्तदापचन् ॥ २३० ॥ अथपर्यन्नरत्तत्रक्लिश्यमानान्हितानृषीन् ॥ दृष्ट्वाराजाविषादार्त्तःप्रोवाचेदंवचस्तदा ॥ ३१ ॥ राजोवाच ॥
प्रतिग्रहोब्राह्मणानांदृष्टावृत्तिरनिन्दिता ॥ तस्मात्प्रतिग्रहान्मत्तोगृह्णीध्वंमुनिसत्तमाः ॥ ३२ ॥ वरान्ग्रामान्व्रीहियवान्रसान्रत्नानिकाञ्चनम् ॥ गाश्च
धेनूश्चतत्सर्वंमामांसंपचतद्विजाः ॥३३॥ ऋषयऊचुः॥राजन्प्रतिग्रहोघोरोमध्वास्वादोविषोपमः ॥ तज्जानतांनःकस्मात्त्वंकुरुपेसम्प्रलोभनम्॥३४॥
दशसूनासमश्चक्रीदशचक्रिसमोध्वजी ॥ दशध्वजिसमावेश्यादशवेश्यासमोनृपः॥ ॥३५॥दशसूनासहस्राणियोवाहयतिशौण्डिकः ॥ तेनतुल्यस्ततो
राजाघोरस्तस्यप्रतिग्रहः ॥ ३६ ॥ योराज्ञःप्रतिगृह्णातिब्राह्मणोलोभमोहितः ॥ तामिस्रादिषुघोरेषुनरकेषुसपच्यते ॥ ३७ ॥ तद्गच्छकुशलंतेऽस्तुसह
दानेनपार्थिव ॥ अन्येषांदीयतामेतदित्युक्त्वातेवनंययुः ॥ ३८ ॥ अथराज्ञःसमादेशात्तत्रगत्वाथमन्त्रिणः ॥ उदुम्बराणिव्यकिरन्हेमगर्भाणिभू
तले ॥ ३९ ॥ ततोह्यन्नंविचिन्वन्तोगृह्णंश्चोदुम्बराण्यपि ॥ गुरूणिहिविदित्वातुनग्राह्याण्यत्रिरब्रवीत् ॥ २४० ॥ अत्रिरुवाच ॥ नास्महेमूढवि
ज्ञानानास्महेमन्दबुद्धयः ॥ हैमानीमानिजानीमःप्रतिबुद्धाःस्मज्ञानिनः ॥ ४१॥ इहैवेदंवसुप्रीत्यैप्रेत्यवैकुण्ठितोदयम् ॥ तस्मान्नग्राह्यमेवैतत्सुखमान
न्त्यमिच्छता ॥४२॥ शतेनगुणितंनिष्कंसहस्रेणसमन्वितम् ॥ यश्चान्यतःप्रतीच्छेत्सपापिष्ठांलभतेगतिम् ॥ ४३ ॥ यत्पृथिव्यांव्रीहियवंहिरण्यंपश
वःस्त्रियः ॥ नूनंनैकस्यपर्याप्तमितिमत्वाशमंव्रजेत् ॥ ४४ ॥ वसिष्ठउवाच ॥ तपसासंचयोयस्यद्रव्याणांयस्यसंचयः ॥ तपःसंचयएवेहविशिष्टोधन
संचयात् ॥ ४५ ॥ त्यजतःसंचयान्सर्वान्यान्तिनाशमुपद्रवाः ॥ नहिसंचयवान्कश्चिद्दृश्यतेनिरुपद्रवः ॥ ४६ ॥ यथायथानगृह्णातिब्राह्मणोऽसत्प्र ॥ ६८ ॥
तिग्रहम् ॥ तथातस्यहिसंतोषाद्ब्राह्मंतेजोविवर्द्धते ॥ ४७ ॥ अकिञ्चनत्वंराज्यंचतुलयासमतोलयत् ॥ अकिञ्चनत्वमधिकंराज्यादपिहिता

त्मनः ॥ ४८ ॥ कश्यपउवाच ॥ अनर्थोब्राह्मणस्यैषयस्त्वर्थनिचयोमहान् ॥ ४९ ॥ अर्थैश्वर्यविमूढोहिश्रेयसोभ्रश्यतेद्विजः ॥ अर्थसंपद्विमोहाय
विमोहोनरकायच ॥ २५० ॥ तस्मादर्थमनर्थाख्यंश्रेयोऽर्थीदूरतस्त्यजेत् ॥ यस्यधर्मार्थमर्थेहातस्यानीहागरीयसी ॥ ५१ ॥ प्रक्षालनाद्धिपंकस्य
दूरादस्पर्शनंवरम् ॥ योऽर्थेनसाध्यतेधर्मःक्षयिष्णुःसप्रकीर्तितः ॥५२॥ यःपरार्थेपरित्यागःसोऽक्षयोमुक्तिलक्षणः॥भरद्वाजउवाच ॥ जीर्यंतिजीर्यतः
केशादंताजीर्यन्तिजीर्यतः ॥ ५३ ॥ धनाशाजीविताशाचजीर्यतोऽपिनजीर्यति ॥ चक्षुःश्रोत्रेचजीर्येतेतृष्णैकानिरुपद्रवा ॥५४॥ सूच्यासूत्रंयथावस्त्रे
समानयतिसूचकः ॥ तद्वत्संसारसूत्रंहितृष्णासूच्योपनीयते ॥५५॥ यथाशृंगंरुरोःकायेवर्द्धमानेचवर्द्धते ॥ अनन्तपारादुष्पूरातृष्णादुःखशतावहा
॥५६॥अधर्मबहुलाचैवतस्मात्तांपरिवर्जयेत् ॥गौतमउवाच ॥संतुष्टःकोनशक्नोतिफलैश्चाप्यतिवार्तितुम्॥५७॥लुब्धइन्द्रियलौल्येनसंकटान्यवगाहते॥
सर्वत्रसंपदस्तस्यसंतुष्टंयस्यमानसम् ॥५८॥ उपानद्गूढपादस्यतस्यचर्मावृतेवभूः॥ संतोषामृततृप्तानांयत्सुखंशातचेतसाम् ॥५९॥ कुतस्तद्धनलुब्धा
नामितश्चेतश्चधावताम् ॥ असंतोषःपरंदुःखंसन्तोषःपरमंसुखम् ॥२६०॥ सुखार्थीपुरुषस्तस्मात्संतुष्टःसंततंभवेत् ॥ विश्वामित्रउवाच ॥ कामंकाम
यमानस्ययदिकामःसमृद्ध्यति ॥६१॥ अथैनमपरःकामोभूयोविध्यतिबाणवत् ॥ नजातुकामःकामानामुपभोगेनशाम्यति ॥ ६२ ॥ हविषाकृष्णव
र्त्मेवभूयएवाभिवर्द्धते ॥ कामानभिलषन्मोहान्ननरःसुखमेधते ॥६३॥ श्येनालयतरुच्छायांव्रजन्निवकपिञ्जलः ॥ चतुस्सागरपर्यन्तांयोभुंक्तेपृथिवीमि
माम् ॥ ६४ ॥ तुल्याश्मकाञ्चनोयश्चसकृतार्थोनपार्थिवः ॥ जमदग्निरुवाच ॥ प्रतिग्रहसमर्थोऽपिनादत्तेयःप्रतिग्रहम् ॥६५॥ येलोकादानशीलानांस
तानाप्नोतिशाश्वतान्॥ योऽर्थानिच्छंनृपाद्विप्रःशोचितव्योमहार्षिभिः॥६६॥नसपश्यतिमूढात्मानरकंयातनाभयम्॥ प्रतिग्रहसमर्थोऽपिनप्रसज्येत्प्रति
ग्रहे ॥ ६७ ॥ प्रतिग्रहेणविप्राणांब्राह्मंतेजःप्रशाम्यति ॥ प्रतिग्रहसमर्थानांनिवृत्तानांप्रतिग्रहात् ॥६८॥ यएवंददतांलोकास्तएवाप्रतिगृह्णताम् ॥ ॥ अ
रुन्धत्युवाच ॥ ॥ बिसतंतुर्यथानित्यमम्भस्थस्सततंविशेत्॥६९॥ तृष्णाचैवमनाद्यंतातथादेहगतासदा ॥ यादुस्त्यजादुर्मतिभिर्यानजीर्यतिजीर्यतः
॥ २७० ॥ योऽसौप्राणान्तिकोरोगस्तांतृष्णांत्यजतःसुखम् ॥ चाण्डालउवाच ॥ उग्रादितोभयांद्यस्माद्बिभ्यर्तामेमहेश्वराः॥७१॥बलीयसोदुर्बलवत्त
स्माच्चैवबिभेम्यहम् ॥ पशुसखउवाच ॥ यदाचरन्तिविद्वांसःसदाधर्मपरायणाः॥७२॥तदेवविदुषाकार्यमात्मनोहितमिच्छता॥ इत्युक्त्वाहेमगर्भाणि
त्यक्त्वातानिफलानिवै॥७३॥ ऋषयोजग्मुरन्यत्रसर्वएवदृढव्रताः ॥ ततस्तेविचरन्तोवैमध्यमंपुष्करंगताः ॥७४॥ ददृशुःसहसाप्राप्तंपरिव्राजंशुनःसख
म्॥तेनेहसहितास्तत्रगत्वाकिंचिद्वनान्तरम् ॥७५॥ सरःपरमपश्यन्तवृतंपद्मैर्जलाशयम्॥निविष्टाःसरसस्तीरेचिन्तयन्तोगतिंशुभाम्॥७६॥शुनःसखो

मुनीन्सर्वानुवाचक्षुधितांस्तदा ॥ सर्वेवदन्तुसहिताःकीदृशीक्षुत्प्रवेदना ॥७७॥ तमूचुःसहितास्तेतुपरिव्राजंशुनःसखम् ॥ ऋषयऊचुः ॥शक्तिखड्ग
दाभिश्चचक्रतोमरसायकैः ॥ ७८ ॥ बाधितेवेदनायातुक्षुधयासापिनिर्जिता ॥ श्वासकुष्ठक्षयाष्ठीलीज्वरापस्मारशूलकैः ॥ ७९ ॥ व्याधिभिर्जनि
तासापिक्षुधायानाधिकाभवेत् ॥ हिरण्याङ्गदकेयूरमुकुटोज्ज्वलकुण्डलाः ॥२८०॥ क्षुधायांनविराजन्तेतत्रयेसंस्थितानराः ॥ यथाभूमिगतंतोयंरवि
रश्मिर्विकर्षति ॥ ८१ ॥ तद्वच्छरीरजानांडचःशोष्यन्तेजठराग्निना ॥ नशृणोतिनचाघ्रातिचक्षुषानैवपश्यति ॥८२॥ दह्यतेक्षीयतेमूढःशुष्यतेक्षुधया
र्दितः ॥ नपूर्वांदक्षिणांचापिपाश्चिमांनोत्तरामपि ॥ ८३ ॥ नचाधोनैवचोर्द्धंचक्षुधाविष्टोहिविन्दति॥ मूकत्वंबधिरत्वंचजडत्वमथपङ्गुता ॥८४॥भैर
वत्वममर्यादंक्षुधायांसंप्रवर्द्धते ॥ जनकंजननींपुत्रान्भार्यांदुहितरंतथा ॥ ८५ ॥ भ्रातरंस्वजनंवापित्यजतिक्षुधयार्दितः ॥ नपितॄन्पूजयेत्सम्यग्दे
वंचापिगुरुंतथा॥८६॥ ऋषीनुपगतांश्चापिक्षुधाविष्टोनविन्दति ॥ एवमन्नविहीनस्यभवन्त्येतानिदेहिनाम् ॥८७ ॥अन्नात्परमतोलोकेनभूतंनभविष्य
ति ॥ अन्नमूलंजगत्सर्वमन्नेचैवप्रतिष्ठितम्॥८८॥ पितरोदेवदैत्याश्चयक्षराक्षसकिन्नराः ॥ मनुष्याश्चपिशाचाश्चसर्वेचान्नमयाःस्मृताः॥८९॥ कुक्कुटा
वायसाःश्वानआखुर्बिलेशयास्तथा ॥ मत्स्याःकीटाःपिपीलाश्चसर्वेचान्नाशयाःस्मृताः ॥ २९० ॥ तस्मात्सर्वप्रयत्नेनअन्नंददज्जुपस्वच ॥ अन्नदस्तृ
तिमाप्नोतिशाश्वतींस्थितिमक्षयाम् ॥९१॥तपःसत्यंजपोहोमोध्यानंयोगःपरागतिः ॥ स्वर्गश्चैवसुखप्राप्तिःसर्वमन्नात्प्रवर्तते ॥९२॥चान्द्रोवारुणलोक
श्चयाम्यःकौबेरकस्तथा ॥ गोलोकोब्रह्मलोकोवासर्वेचान्नेप्रतिष्ठिताः ॥ ९३ ॥ चन्दनागरुधूपानिशिशिरेष्विन्धनानिच ॥ अन्नदानस्यवैराजन्कलां
नार्हन्तिषोडशीम् ॥ ९४ ॥ कूपारामवृषोत्सर्गवाप्यश्चायतनानिच ॥ अन्नदानस्यचैतानिकलांनार्हन्तिषोडशीम् ॥ ९५ ॥ पानीयंभूमिगा
वश्चअन्नंचतुलयाधृतम् ॥ देवैरपिपुरातातैतेषामन्नंविशिष्यते ॥ ९६ ॥ अन्नंप्राणोबलंतेजोह्यन्नंचैवपराक्रमः ॥ अन्नात्संभवतेतेजोह्यन्नेनैवविवर्धते
॥ ९७ ॥ पौण्डरीकोऽश्वमेधश्चउक्थषोडशिकःक्रतुः ॥ अग्निष्टोमस्त्रिरात्रश्चराजसूयोमहाधनः ॥ ९८ ॥ सौत्रामणिर्वाजपेयोमानुषोऽथपशुस्त
था ॥ अन्नमूलात्प्रवर्तन्तेसर्वेयज्ञाःसविस्तराः ॥ ९९ ॥ सपर्वतनदीवापिपृथिवीसर्वकानना॥ विधिनातेनसादत्तायोऽन्नंददातिसर्वदा ॥३००॥ क्षुधि
तेनित्यमन्नंवैददच्छ्रद्धासमन्वितः ॥ ब्रह्महत्यादिकंपापंअन्नदश्चापकर्षति ॥ १ ॥ किमज्ञानंतुतेसौम्ययेनास्मान्परिपृच्छसि ॥ ब्राह्मणेभ्योमहाभाग
क्षुधितेभ्योविशेषतः ॥ २ ॥ सर्वदानानिदत्तानिसर्वेयज्ञाःसदक्षिणाः ॥ देवताःपूजिताःसर्वायोऽन्नंददातिनित्यशः ॥३॥ सस्नातःसर्वतीर्थेषुससर्वव्रत
पारगः ॥ तदेवंसंप्रयच्छेतअन्नंश्रद्धासमन्वितः ॥ ४ ॥ ब्रह्मभूतस्ततःसोऽथब्रह्मणासहमोदते ॥ सुसंस्कृतंचयोऽप्यन्नंदद्यादहरहर्द्विजे ॥५॥ यःपठेदन्न

दानंतुश्राद्धेचैवविशेषतः ॥ एकाग्रमानसोभूत्वाअमावस्येन्दुसंक्षये ॥ ६ ॥ भूतोपघातसंपूर्णेश्राद्धेश्रावयतेसदा ॥ पितरस्तस्यतुष्यन्तियावज्जीवं
नसंशयः ॥ ७ ॥ देवद्विजसमीपस्थोऽन्नस्यदाताविमुच्यते ॥ प्रबुद्धोवाप्रमत्तोवाप्रसंगादागतोऽपिवा ॥ ८ ॥ भक्त्याविरहितोवापिशृण्वन्पापा
द्विमुच्यते ॥ दानेनसंयुताविप्राःसुखिनोधर्मभागिनः ॥ ९ ॥ यमोदमोवैनियमःप्रोक्तस्तत्त्वार्थदर्शिभिः ॥ ब्राह्मणानांविशेषेणदमोधर्मः
सनातनः ॥ २१० ॥ दमस्तेजोवर्द्धयतिपवित्रोदमउत्तमः ॥ विपाप्माचैवतेजस्वीपुरुषोदमतोभवेत् ॥ ११ ॥ येकेचिन्नियमालोकेयेचधर्माश्शु
भान्वयाः ॥ सर्वयज्ञफलंचापिदमस्तेभ्योविशिष्यते ॥१२॥ तपोयज्ञस्तथादानंदमादेवप्रवर्तते ॥ किमरण्येत्वदान्तस्यदान्तस्यापिकिमाश्रमे ॥१३॥
यत्रयत्रवसेद्दान्तस्तत्तदरण्यंमहाश्रमः ॥ शीलवृत्तसमेतस्यनिगृहीतेन्द्रियस्यच॥आर्जवेवर्तमानस्यआश्रमैःकिंप्रयोजनम् ॥ १४॥ ॥ वनेऽपिदोषाःप्रभव
न्तिरागिणांगृहेऽपिपञ्चेन्द्रियनिग्रहस्तपः॥ अकुत्सितेकर्मणियःप्रवर्ततेनिवृत्तरागस्यगृहंतपोवनम् ॥१५॥ सुकर्मधर्मार्जितजीवितानांसदाचसंतुष्यगृहे
रतानाम्॥जितेंद्रियाणामतिथिप्रियाणांगृहेऽपिधर्मोनियमस्थितानाम् ॥१६॥ नशब्दशास्त्रेनिरतस्यमोक्षोनचैवरम्यावसथप्रियस्य॥ नभोजनाच्छादन
तत्परस्यनलोकचित्तग्रहणेरतस्य ॥१७॥ एकांतशीलस्यदृढव्रतस्यसर्वेन्द्रियप्रीतिनिवर्तकस्य ॥ अध्यात्मयोगेगतमानसस्यमोक्षोध्रुवंनित्यमहिंसक
स्य ॥ १८ ॥ सुखंचदान्तःस्वपितिसुखेनप्रतिबुध्यते ॥ समःसर्वेषुभूतेषुमनोयस्यप्रबुध्यते ॥ १९ ॥ नरथेनसुखंयातिनहयेननदन्तिना ॥ यथात्म
नाविनीतेनसुखंयातिमहापथे ॥ १२० ॥ नतुकुर्याद्धरिःस्पृष्टःसर्पोवाप्यतिरोषितः ॥ अरिर्वानित्यसंक्रुद्धोयथात्मादमवर्जितः ॥ २१ ॥ नयमं
यममित्याहुरात्मावैयमउच्यते ॥ आत्मावैयमितोयेनसयमस्तुविशिष्यते ॥ २२ ॥ यमोयमइतिप्रोक्तोवृथातूद्विजतेजनः ॥ आत्मावैयमितोयेनय
मस्तस्यकरोतिकिम् ॥२३॥ क्रव्यादेभ्यश्चभूतेभ्योऽदान्तेभ्यश्चसदाभयम् ॥ तेषांविप्रतिषेधार्थंदण्डःसृष्टःस्वयंभुवा ॥२४॥ दण्डोरक्षतिभूतानिदण्डः
पालयतेप्रजाः॥ निवारयतिपापिष्ठान्दण्डोदुर्जयएववा ॥२५॥ श्यामोयुवालोहिताक्षःसर्वभूतभयावहः ॥दण्डःशास्तामनुष्याणांयस्मिन्धर्मःप्रतिष्ठि
तः ॥ २६॥ अथाश्रमेषुसर्वेषुदमएवोत्तमव्रतम् ॥ तानिलिंगानिवक्ष्यामियैर्दान्तइतिकीर्त्यते ॥२७॥ अकार्पण्यमपारुष्यंसंतोषःसुविधानता ॥ अन
सूयागुरोःपूजादयाभूतेष्वपैशुनम् ॥२८॥ षड्भिरेषदमःप्रोक्तऋषिभिःशांतबुद्धिभिः॥दयाधीनोधर्ममोक्षौतथास्वर्गश्चपार्थिव॥२९॥ अपमानेनकुप्येत
संमानेनप्रहृष्यति॥समदुःखसुखोधीरःसशांतइतिकीर्त्यते॥१३०॥शेतेसुखंहिशान्तस्तुसुखंहिप्रतिबुध्यते॥श्रेयस्तरमतस्तिष्ठेदवमन्ताविनश्यति॥३१॥
अपमानितस्तुनध्यायेत्तस्यपापंकदाचन॥ स्वधर्ममपिचावेक्ष्यपरधर्मंनदूषयेत् ॥३२॥ आत्मानमपिजानीयात्परंदोषैस्तुनाक्षिपेत् ॥ मन्त्रैर्हीनंक्रिया

भिर्वाजन्मनाप्यथवापुनः ॥ ३३ ॥ दमश्छादयतेसवहीनमंगपटोयथा ॥ अधीयतेनिरर्थंतेनाभिजानंन्तियेदमम् ॥३४॥ श्रुतस्यहिदमोमूलंदमोधर्मः
सनातनः ॥ योह्यात्मनस्तुलयतेसुवर्णंतुलयादमम् ॥ ३५ ॥ सतेनधृतिमान्ख्यातोनतुद्रव्यंणमोहितः ॥ व्रतानामपिसर्वेपांदमएवपरायणम् ॥३६ ॥
यद्यधींतिपडङ्गानिवेदतत्त्वार्थविद्द्विजः ॥ दमेनतुविहीनश्चपूज्यत्वंनेहगच्छति ॥३७॥ दमेनहीनंनपुनंतिवेदायद्यप्यधीताःसहपड्भिरंगैः ॥ साङ्ख्यंच
योगश्चकुलंचजन्मतीर्थाभिषेकश्चनिरर्थकानि ॥ ३८ ॥ अमृतस्येवतृप्येनअपमानस्ययोगवित् ॥ विपवच्चजुगुप्सेतसंमानस्यसदाद्विजः ॥ ३९ ॥
अपमानात्तपोवृद्धिःसंमानाच्चतपःक्षयः ॥ अर्चितःपूजितोविप्रोदुग्धागौरिवगच्छति ॥ ३४० ॥ पुनराप्यायतेधेनुःसतृणैःसलिलैर्यथा ॥ एवंजपैश्चहो
मैश्चपुनराप्यायतेद्विजः ॥४१॥ आक्रोशकसमोलोकेसुहृदन्योनविद्यते ॥ यस्तुदुष्कृतमादायसुकृतंस्वंप्रयच्छति ॥४२॥ आक्रोशमानानाक्रोशेन्म
न्युंस्वंविनिवर्तयेत् ॥ सन्नियम्सतदात्मानममृतेनाभिषिञ्चति ॥ ४३ ॥ कपालंवृक्षमूलानिकुचेलमसहायता ॥ अनपेक्षाब्रह्मचर्यंनयन्तिपरमांगतिम्
॥ ४४ ॥ कामक्रोधौविनिर्जित्यकिमरण्येकरिष्यति ॥ अभ्यासेनतुवैशास्त्रंकुलंशीलेनधार्यते ॥ ४५ ॥ गुणैर्मन्त्राविधार्यन्तेक्रोधस्सत्त्वेनधार्यते ॥
यस्तुक्रोधंसमुत्पन्नंसंधारयतिचात्मनः ॥ ४६ ॥ अक्रोधेनजपेद्धीरःकस्तेनसदृशोभुवि ॥ यस्तुक्रोधंसमुत्पन्नंसन्तंसंयम्यतिष्ठति ॥ ४७ ॥ तंसत्सारत
मम्मन्यनास्मिन्सीदतियःपुमान् ॥ एषपैतामहोगुह्योब्रह्मराशिस्सनातनः ॥ ४८ ॥ धर्मस्यनियमोयोहिमयातेकथितोभृशम् ॥ अन्येचयज्वनांलो
काअन्येचापितपस्विनाम् ॥४९॥ अन्येदमवतांलोकास्तेवैपरमपूजिताः ॥ एकःक्षमावतांदोषोद्वितीयोनोपपद्यते ॥३५०॥ यदिदंक्षमयायुक्तमशक्त
म्मन्यतजनः ॥ नचैपदोषोमन्तव्यःक्षमाप्रज्ञावतांबलम् ॥५१॥ प्रशमंयोऽभिजानातिइष्टापूर्तमहीयते ॥ यत्क्रोधयुक्तोजपतिजुहोतिचयदर्चति॥५२॥
सर्वंक्षरतिवत्तस्यभिन्नकुम्भादिवोदकम् ॥ दमाध्यायमिमंपुण्यंप्रातरुत्थाययःपठेत् ॥ ५३ ॥ सधर्मनावमारुह्यदुर्गाण्यतितरिष्यति ॥ दमाध्याय
मिमंपुण्यंसततंश्रावयेद्द्विजः ॥५४॥ सब्रह्मलोकमाप्नोतितस्मान्नच्यवतेपुनः ॥ श्रूयतांधर्मसर्वस्वंश्रुत्वाचैतत्प्रधार्यताम् ॥ ५५ ॥ आत्मनःप्रतिकूला
निपरेषांनसमाचरेत् ॥ मातृवत्परदारांश्चपरद्रव्याणिलोष्टवत् ॥५६॥ आत्मवत्सर्वभूतानियःपश्यतिसपश्यति ॥ पचनंवैश्वदेवार्थेपरार्थेयच्चजीवि
तम् ॥५७॥ पुत्रार्थंमैथुनंयस्यस्वर्गार्थंतस्यजीवितम् ॥ एतद्धवेच्चसर्वस्वंधातूनामिवकाञ्चनम् ॥५८॥ सर्वभूतहितंराजन्नधीत्यामृतमश्नुते॥ एवंवैधर्म
सर्वस्वमुक्त्वातेतुशुनःसखम् ॥ ५९ ॥ तेनैवसहिताःसर्वेनिविष्टास्सरसस्तटे ॥ सरोऽपश्यन्सुविस्तीर्णंपद्मोत्पलजलावृतम् ॥३६०॥ तत्रावतारंकृत्वा
तेबिसानिचकलापशः॥ तीरेनिक्षिप्यसरसश्चक्रुःपुण्यांजलक्रियाम् ॥६१॥ अथोत्तीर्यजलात्तस्मात्तसमेत्यपरस्परम्॥ बिसान्येतान्यपश्यन्तइदंवचन

मब्रुवन्॥६२॥ ऋषयऊचुः ॥ केनक्षुधाभितप्तानामस्माकंपापकर्मणाम् ॥ नृशंसेनापनीतानिबिसान्याहारकाङ्क्षिणा ॥६३॥ तेशङ्कमानास्त्वन्योन्यं
पर्यपृच्छन्द्विजोत्तमाः ॥ चक्रुश्चनिश्चयंसर्वेशपथंप्रतिपार्थिव ॥ ६४ ॥ कश्यपउवाच ॥ सर्वत्रसर्वंहरतुन्यासलोपंकरोतुच ॥ कूटसाक्षित्वमभ्येतुबि
सस्तैन्यंकरोतियः ॥ ६५॥ दम्भेनधर्मंचरतुराजानंचोपसेवताम् ॥ मधुमांसंसमश्नातुबिसस्तैन्यंकरोतियः ॥ ६६ ॥ अनृतंभाषतुसदाविषयांश्चोपसे
वतु ॥ ददातुकन्यांशुल्केनबिसस्तैन्यंकरोतियः ॥ ६७॥ वसिष्ठउवाच ॥ अनृतौमैथुनंयातुदिवास्वप्नंनिषेवतु ॥ अन्योन्यातिथितामेतुबिसस्तैन्यं
करोतियः ॥ ६८॥ एककूपेवसेद्ग्रामेब्राह्मणोवृषलीपतिः ॥ तस्यसालोक्यतांयातुबिसस्तैन्यंकरोतियः ॥६९॥ भरद्वाजउवाच ॥ नृशंसस्सोऽस्तुसर्वेषु
समृद्ध्याचाप्यहङ्कृतः ॥ मत्सरीपिशुनश्चैवबिसस्तैन्यंकरोतियः ॥३७०॥ प्रत्याक्रोशत्ववाक्कुष्टस्ताडयत्वन्यताडितः ॥ विक्रीणातुरसांश्चैवबिसस्तै
न्यंकरोतियः ॥७१॥ गौतमउवाच ॥ अतिथिंत्वागतंप्राप्यपाकभेदंकरोतुसः ॥ शूद्रान्नंचसदाश्नातुबिसस्तैन्यंकरोतियः ॥७२॥ दत्त्वादानंकीर्तयतु
परभार्यासुतुष्यतु ॥ एकाकीमिष्टमश्नातुबिसस्तैन्यंकरोतियः ॥ ७३ ॥ विश्वामित्रउवाच ॥ नित्यकामपरःसोऽस्तुदिवसेचैवमैथुनी ॥ नित्यंतु
पातकीचैवबिसस्तैन्यंकरोतियः ॥७४॥ परापवादंवदतुपरदारांश्चसेवतु॥ परनिन्दारतश्चास्तुबिसस्तैन्यंकरोतियः ॥७५॥ मातरंपितरंचैवसोऽवमन्ये
तुदुर्मतिः ॥ समातर्य[illegible]बुद्धिःस्याद्बिसस्तैन्यंकरोतियः ॥ ७६ ॥ परपाकंसदाश्नातुपरनारींचसेवतु ॥ वेदविक्रयकृच्चास्तुबिसस्तैन्यंकरोतियः
॥७७॥ जमदग्निरुवाच ॥ परस्ययातुप्रेष्यत्वंसतुजन्मनिजन्मनि॥ सर्वधर्मक्रियाहीनोबिसस्तैन्यंकरोतियः ॥७८॥ शुनःसखउवाच ॥ न्यायेनवेदा
नध्येतुगृहस्थोऽस्तुप्रियातिथिः ॥ सत्यंवदतुवाजस्रंबिसस्तैन्यंकरोतियः ॥७९॥ अग्निंजुहोतुविधिवद्यज्ञंयजतुनित्यशः ॥ ब्रह्मणस्सदनंयातुबिसस्तै
न्यंकरोतियः ॥ ३८०॥ ऋषयऊचुः ॥ इष्टमेवद्विजातीनांयदिदंशपथीकृतम् ॥ त्वयाकृतंबिसस्तैन्यंसर्वेषांनःशुनःसख ॥८१ ॥ शुनःसखउवाच ॥
मयाह्यन्तर्हितान्यासन्बिसानीमानिवोद्विजाः ॥ धर्मंचश्रोतुकामेनजानीध्वंमांचवासवम् ॥८२॥ अलोभादक्षयालोकाजितावोमुनिसत्तमाः॥विमान
मधितिष्ठध्वंगच्छामस्त्रिदशालयम् ॥ ८३ ॥ ततोमहर्षयस्तेतुविज्ञायाथपुरन्दरम् ॥ ऊचुःपुरन्दरंचेदंवाक्यंवाक्यविशारदाः ॥ ८४ ॥ इहागत्यनरो
यस्तुमध्यमंपुष्करंविशेत् ॥ त्रिरात्रोपोषितोभूत्वालभेदावश्यकंफलम् ॥ ८५ ॥ द्वादशेवार्षिकीदीक्षास्मृतायातुवनौकसाम् ॥ तस्याःफलंसमग्रंचल
भेदिहनसंशयः ॥ ८६ ॥ नासौदुर्गतिमाप्नोतिस्वगणैःसहमोदते ॥ विरिञ्चिस्थानमासाद्यतिष्ठेद्वैब्रह्मणोदिनम् ॥८७॥ पुलस्त्यउवाच ॥ इन्द्रेणसहसं
प्रीतास्तदाजग्मुस्त्रिविष्टपम्॥एवंविलोभ्यमानास्तेलोभैर्बहुविधैरिह॥८८॥ नैवलोभंतथाचक्रुस्तेनजग्मुस्त्रिविष्टपम्॥इदंयःशृणुयान्नित्यमृषीणांचरितंशु

भम्॥८९॥विमुक्तःसर्वपापेभ्यःस्वर्गलोकेमहीयते॥९०॥इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेसप्तर्षिसंवादोनामैकोनविंशोऽध्यायः॥१९॥भीष्मउवाच॥
अत्याश्चर्यवतीरम्याकथेयंपापनाशिनी॥विस्तरेणचमेब्रूहियाथातथ्येनपृच्छतः॥१॥माहात्म्यंमध्यमस्यापिऋषिभिःपरिकीर्तितम्॥फलंचाम्रस्यकथितं
माहात्म्यंचदमस्यतु॥२॥विष्णुनाचपदन्यासःकृतोयत्रमहामुने॥कनीयसस्तथोत्पत्तिर्यथाभूतावदस्वमे॥३॥पुलस्त्यउवाच॥पुरारथन्तरेकल्पेराजासी
त्पुष्पवाहनः॥नाम्नालोकेषुविख्यातस्तेजसासूर्यसन्निभः॥ ४ ॥तपसातस्यतुष्टेनचतुर्वक्त्रेणभारत ॥ कमलंकाञ्चनंदत्तंयथाकामगमंनृप ॥ ५ ॥ सप्त
द्वीपानिलोकंचयथेष्टंविचरत्सदा ॥ कल्पादौतुसमंद्वीपंतस्यपुष्करवासिना ॥ ६ ॥ लोकेनपूजितंतस्मात्पुष्करद्वीपमुच्यते ॥ तदेवब्रह्मणादत्तंयान
मस्यततोऽम्बुजम् ॥ पुष्पवाहनइत्याहुस्तस्मात्तंदेवदानवाः ॥७॥ नौपम्यमस्तीहजगत्त्रयेऽपिब्रह्माम्बुजस्थस्यचतस्यराज्ञः ॥ ८ ॥ तपोऽनुभावाद
थतस्यराज्ञीनारीसहस्रैरभिवन्द्यमाना ॥नाम्नाचलावण्यवतीबभूवयापार्वतीवेष्टतमाभवस्य ॥ ९ ॥ तस्यात्मजानामयुतंबभूवधर्मात्मनामग्र्यधनुर्धरा
णाम् ॥ तदात्मजांस्तानभिवीक्ष्यराजामुहुर्मुहुर्विस्मयमाससाद ॥ १० ॥ सोऽभ्यागतंपूज्यमुनिप्रवीरंप्रचेतसंवाक्यमिदंबभाषे ॥ कस्माद्विभूतिर
चलामरमर्त्यपूजाजाताकथंकमलजासदृशीसुराज्ञी ॥ ११ ॥ भार्यामयाल्पतपसापरितोषितेनदत्तंममाम्बुजगृहंचमुनीन्द्रधात्रा ॥ यस्मिन्प्रविष्टमपि
कोटिशतंनृपाणांसामात्यकुञ्जररथौघजनावृतानाम् ॥१२॥ नालक्ष्यतेक्वगतमम्बरगामिभिश्चतारागणेन्दुरविरश्मिभिरप्यगम्यम्॥तस्मात्किमन्यज
ननीजठरोद्भवेनधर्मादिकंकृतमशेषजनातिगंयत् ॥ १३ ॥ सर्वैर्मयाथतनयैरथवानयापिसद्भार्ययातदखिलंकथयप्रचेतः ॥ सोऽप्यभ्यधादथभ
वान्तरितंनिरीक्ष्यपृथ्वीपतेशृणुतदद्भुतहेतुवृत्तम्॥१४॥ जन्माभवत्तवतुलुब्धकुलेऽपिघोरंजातस्त्वमप्यनुदिनंकिलपापकारी ॥वपुरप्यभूत्तवपुनःपरुषा
ङ्गसन्धिदुर्गन्धिसत्त्वकुनखाभरणंसमन्तात् ॥१५॥ नोतेसुहृन्नसुतबन्धुजनोनतादृङ्नैवस्वसानजननीचतदाभिशस्ता॥ अतिसंमतापरमभीष्टतमाभि
मुखीजातामहीशतवयोषिदियंसुरूपा ॥ १६ ॥ अभूदनावृष्टिरतीवरौद्राकदाचनाहारनिमित्तमस्याम् ॥ क्षुत्पीडितेनभवतातुयदानकिञ्चिदासादि
तंवन्यफलादिभक्ष्यम् ॥ १७॥ अथाभिदृष्टंमहदम्बुजाढ्यंसरोवरंपङ्कपरीतरोधः ॥पद्मान्यथादायततोबहूनिगतःपुरंवैदिशनामधेयम् ॥ १८ ॥ तन्मू
ल्यलाभायपुरंसमस्तंभ्रान्तंत्वयाशेषमहस्तदासीत् ॥ क्रेतानकश्चित्कमलेषुजातःक्लान्तःपरंक्षुत्परिपीडितश्च ॥ १९ ॥ उपविष्टस्त्वमेकस्मिन्सभार्यो ॥ ७१ ॥
भवनाङ्गणे॥ ततोरात्रौभवांस्तत्रअश्रौषीन्मङ्गलध्वनिम् ॥२०॥ सभार्यस्तत्रगतवान्यत्रासौमङ्गलध्वनिः॥तत्रमण्डलमध्यस्थाविष्णोरर्चाविलोकिता ॥
॥ २१ ॥ वेश्यानङ्गवतीनामबिभ्रतीद्वादशीव्रतम् ॥ समाप्यमाघमासस्यद्वादश्यांलवणाचलम् ॥ २२ ॥ न्यवेदयत्तुगुरवेशय्यांचोपस्करान्विताम् ॥

अलङ्कृत्यहृषीकेशंसौवर्णसममादरात् ॥ २३ ॥ सातुदृष्टाततस्ताभ्यामिदंचपरिचिन्तितम् ॥ किमेभिःकमलैःकार्यवरंविष्णुरलंकृतः ॥ २४ ॥ इति
भक्तिस्तदाजातादम्पत्योस्तुनरेश्वर ॥ तत्प्रसङ्गात्समभ्यर्च्यकेशवंलवणाचलम् ॥ २५ ॥ शय्याचपुष्पप्रकरैःपूजिताभूच्चसर्वशः ॥ अथानङ्गवतीतुष्टा
तयोर्धान्यशतत्रयम् ॥ २६ ॥ दीयतामादिदेशाथकलधौतपलत्रयम् ॥ नगृहीतंततस्ताभ्यांमहासत्त्वावलम्बनात् ॥ २७ ॥ अनङ्गवत्याचपुनस्त
योरन्नंचतुर्विधम् ॥ आनीयव्याहृतंचान्नंभुज्यतामितिभूपते ॥ २८ ॥ ताभ्यांचतदपित्यक्तंभोक्ष्यावःश्वोवरानने ॥ प्रसङ्गादुपवासोनौतवाद्यास्तुशु
भावहः ॥ २९ ॥ जन्मप्रभृतिपापिष्ठावावांदेविदृढव्रतं ॥ त्वत्प्रसङ्गाद्भवद्गेहेधर्मलेशोऽस्तुनाविह ॥ ३० ॥ इतिजागरणंताभ्यांतत्प्रसङ्गादनुष्ठितम् ॥
प्रभातेचतयादत्ताशय्यासलवणाचला ॥ ३१ ॥ ग्रामश्वशुरवेभक्त्याविप्रेभ्योद्वादशैवतु ॥ वस्त्रालंकारसंयुक्तागावश्चकनकान्विताः ॥ ३२ ॥
भोजनंचसुहृन्मित्रदीनान्धकृपणैःसह ॥ तच्चलुब्धकदाम्पत्यंपूजयित्वाविसार्जितम् ॥ ३३ ॥ संभवांल्लुब्धकोजातःसपत्नीकोनृपेश्वरः ॥ पुष्करप्र
करात्तस्मात्केशवस्यतुपूजनात् ॥ ३४ ॥ विनष्टाशेषपापस्यतवपुष्करमन्दिरम् ॥ तस्यसत्यस्यमाहात्म्यादलोभतपसानृप ॥ ३५ ॥ प्रादात्कामग
मंयानंलोकनाथश्चतुर्मुखः ॥ संतुष्टस्तवराजेन्द्रपुष्करंत्वंसमाश्रय ॥३६॥ कल्पंसत्वंसमासाद्यविभूतिद्वादशीव्रतम् ॥ कुरुराजेन्द्रनिर्वाणमवश्यंसमवा
प्स्यसि ॥ ३७ ॥ एतदुक्त्वातुसमुनिस्तत्रैवान्तरधीयत ॥ राजायथोक्तंचपुनरकरोत्पुष्पवाहनः ॥ ३८ ॥ इदमाचरतोराजन्नखण्डव्रतताभवेत् ॥
यथाकथंचित्कालेनद्वादशद्वादशीर्नृप ॥ ३९ ॥ कर्तव्याशक्तितोदेवविप्रेभ्योदक्षिणानृप ॥ ज्येष्ठेगावःप्रदातव्यामध्यमेभूमिरुत्तमा ॥ ४० ॥
कनिष्ठेकाञ्चनंदेयमित्येषादक्षिणास्मृता ॥ प्रथमंब्रह्मदैवत्यंद्वितीयंवैष्णवंतथा ॥ ४१ ॥ तृतीयंरुद्रदैवत्यंत्रयोदेवास्त्रिषुस्थिताः ॥ इतिकलुष
विदारणंजनानांपठतिचयस्तुशृणोतिचापिभक्त्या ॥ ४२ ॥ मतिमपिचसयातिदेवलोकेवसतिचरोमसमानिवत्सराणि ॥ अथातःसंप्रव
क्ष्यामिव्रतानामुत्तमंव्रतम् ॥ ४३ ॥ कथितंतेनरुद्रेणमहापातकनाशनम् ॥ नक्तमब्दंचरित्वातुगवासार्धंकुटुम्बिने ॥ ४४ ॥ हैमं
चक्रंत्रिशूलंचदद्याद्विप्रायवाससी ॥ एवंयःकुरुतेपुण्यंशिवलोकेसमोदते ॥ ४५ ॥ एतदेवव्रतंनाममहापातकनाशनम् ॥ यस्त्वेकभक्तेनक्षिपेद्धेनुं
वृषसमन्विताम् ॥ ४६ ॥ धेनुंतिलमयींदद्यात्सपदंयातिशांकरम् ॥ एतद्रुद्रव्रतंनामभयशोकविनाशनम् ॥ ४७ ॥ यश्चनीलो
त्पलंहैमंशर्करापात्रसंयुतम् ॥ एकान्तरितनक्ताशीसमांतेवृषसंयुतम् ॥ ४८ ॥ वैष्णवंसपदंयातिनीलव्रतमिदंस्मृतम् ॥ आषाढादिच
तुर्मासमभ्यंगंवर्जयेन्नरः ॥ ४९ ॥ भोजनोपस्करंदद्यात्सयातिभवनंहरेः ॥ जनप्रीतिकरंनृणांप्रीतिव्रतमिहोच्यते ॥ ५० ॥

वर्जयित्वामधौयस्तुदधिक्षीरघृतैक्षवम् ॥ दद्याद्वस्त्राणिसूक्ष्माणिरसपात्रेणसंयुतम् ॥ ५१ ॥ संपूज्यविप्रमिथुनंगौरीमेप्रीयतामिति ॥ एतद्गौरी
व्रतंनामभवानीलोकदायकम् ॥५२॥ पुष्यादौयस्त्रयोदश्यांकृत्वानक्तमथोपुनः ॥अशोकंकाञ्चनंदद्यादिक्षुयुक्तंदशाङ्गुलम्॥५३॥ विप्रायवस्त्रसंयुक्तंप्रद्यु
म्नःप्रीयतामिति ॥ कल्पंविष्णुपुरेस्थित्वाविशोकस्स्यात्पुनर्नृप ॥ ५४ ॥ एतत्कामव्रतंनामसदाशोकविनाशनम् ॥ आषाढादिव्रतंयस्तुवर्जयेद्यःफला
शनम् ॥५५॥ चातुर्मास्येनिवृत्तेतुघटंसार्पिर्गुडान्वितम् ॥ कार्तिक्यांतत्पुनर्हैमंब्राह्मणायनिवेदयेत् ॥५६॥ सरुद्रलोकमाप्नोतिशिवव्रतमिदंस्मृतम् ॥
वर्जयेद्यस्तुपुष्पाणिहेमन्तेशिशिरावृते ॥ ५७॥ पुष्पत्रयंचफाल्गुन्यांकृत्वाशक्त्याचकाञ्चनम् ॥ दद्याद्द्विकालवेलायांप्रीयेतांशिवकेशवौ ॥५८॥दत्त्वा
परंपदंयातिसौम्यव्रतमिदंस्मृतम् ॥ फाल्गुनादितृतीयायांलवणंयस्तुवर्जयेत् ॥५९॥समांतेशयनंदद्याद्गृहंचोपस्करान्वितम् ॥संपूज्यविप्रमिथुनंभवा
नीप्रीयतामिति ।६०॥ गौरीलोकेवसेत्कल्पंसौभाग्यव्रतमुच्यते॥सन्ध्यामौनंनरःकृत्वासमांतेघृतकुम्भकम्॥६१॥वस्त्रयुग्मंतिलान्घण्टांब्राह्मणायनिवेद
येत् ॥ लोकंसारस्वतंयातिपुनरावृत्तिदुर्लभम् ॥ ६२ ॥ एतत्सारस्वतंनामरूपविद्याप्रदायकम् ॥ लक्ष्मीमभ्यर्च्यपञ्चम्यामुपवासीभवेन्नरः ॥ ६३ ॥
समांतेहेमकमलंदद्याद्धेनुसमन्वितम् ॥ सवैविष्णुपदंयातिलक्ष्मीःस्याज्जन्मजन्मनि ॥ ६४ ॥ एतल्लक्ष्मीव्रतंनामदुःखशोकविनाशनम् ॥ कृत्योपलेप
नंशम्भोरग्रतःकेशवस्यच ॥ ६५ ॥ यावदब्दंपुनर्देयाधेनुर्जलघटस्तथा ॥ जन्मायुतंसराजास्यात्ततःशिवपुरंव्रजेत् ॥ ६६ ॥ एतदायुर्व्रतंनाम
सर्वकामप्रदायकम् ॥ अश्वस्थंभास्करंगङ्गांप्रणम्यैकाग्रमानसः ॥ ६७ ॥ एकभक्तंनरःकुर्यादब्दमेकंविमत्सरः ॥ व्रतांतेविप्रमिथुनंपूज्यंधेनुत्रया
न्वितम् ॥६८॥ वृक्षंहिरण्मयंदद्यात्सोऽश्वमेधफलंलभेत् ॥ एतत्कीर्तिव्रतंनामभूतिकीर्तिफलप्रदम् ॥६९॥ घृतेनस्नपनंकृत्वाशम्भोर्वाकेशवस्यवा॥अ
क्षताभिःसपुष्पाभिःकृत्वागोमयमण्डलम् ॥७०॥ समांतेहमकमलंतिलधेनुसमन्वितम् ॥ शूलमष्टाङ्गुलंदद्याच्छिवलोकेमहीयते॥७१॥ सामगायनकं
चैवसामव्रतमिहोच्यते ॥ नवम्यामेकभक्तंतुकृत्वाकन्याश्चशक्तितः ॥७२॥ भोजयित्वासमंदद्याद्धेमकंचुकवाससी॥ हैमंसिंहंचविप्रायदद्याच्छिवपदंव्र
जेत ॥७३॥ जन्मार्बुदसुरूपःस्याच्छत्रुभिश्चापराजितः ॥ एतद्वीरव्रतंनामनराणांचसुखप्रदम् ॥७४॥चैत्रादिचतुरोमासाञ्जलंदद्याद्दयान्वितः॥व्रतान्ते
मणिकंदद्यादन्नवस्त्रसमन्वितम् ॥ ७५॥ तिलपात्रंहिरण्यंचब्रह्मलोकेमहीयते ॥ कल्पान्तेभूतिजननमानंदव्रतमुच्यते॥७६॥ पंचामृतेनस्नपनंकृत्वासंव
त्सरंविभोः ॥ वत्सरान्तेपुनर्दद्याद्धेनुंपञ्चामृतान्विताम्॥७७॥विप्रायदद्याच्छंखंचसपदंयातिशांकरम् ॥राजाभवतिकल्पान्तेधृतिव्रतमिदंस्मृतम्॥७८॥
वर्जयित्वापुमान्मांसंव्रतान्तेगोप्रदोभवेत् ॥तद्वद्धेममृगंदद्यात्सोऽश्वमेधफलंलभेत्॥७९॥ अहिंसाव्रतमित्युक्तंकल्पांतेभूपतिर्भवेत् ॥कल्यमुत्थायवैस्नानं

कृत्वादाम्पत्यमर्चयेत् ॥८०॥ भोजयित्वायथाशक्तिमाल्यवस्त्रविभूषणैः॥सूर्यलोकेवसेत्कल्पंसूर्यव्रतमिदंस्मृतम् ॥८१॥ आषाढादिचतुर्मासंप्रातःस्ना
यीभवेन्नरः ॥ विप्रायभोजनंदत्त्वाकार्तिक्यांगोप्रदोभवेत् ॥८२॥ सवैष्णवंपदंयातिविष्णुव्रतमिदंस्मृतम् ॥ अयनादयनंयावद्वर्जयेत्पुष्पसर्पिषी॥८३॥
तदन्तेपुष्पमन्नानिघृतधेन्वासहैवतु ॥ दत्त्वाशिवपदंयातिविप्रायघृतपायसम् ॥८४॥ एतच्छीलव्रतंनामशीलारोग्यफलप्रदम्॥यावत्समंभवेद्यस्तुपञ्चद
श्यांपयोव्रतः ॥८५ ॥ समान्तेश्राद्धकृद्दद्याद्गाश्चपञ्चपयस्विनीः ॥ वासांसिचपिशङ्गानिजलकुम्भयुतानिच ॥८६॥ सयातिवैष्णवंलोकंपितॄणांतारयं
च्छतम् ॥कल्पान्तेराजराजेन्द्रपितृव्रतमिदंस्मृतम्॥८७॥ सन्ध्यादीपप्रदोयस्तुघृतैस्तैलंविवर्जयेत्॥ समान्तेदीपकंदद्याच्चक्रंशूलंचकाञ्चनम् ॥८८॥
वस्त्रयुग्मंचविप्रायसतेजस्वीभवेन्नरः ॥ रुद्रलोकमवाप्नोतिदीप्तिव्रतमिदंस्मृतम् ॥ ८९ ॥ कार्तिकादितृतीयायांप्राश्यगोमूत्रयावकम् ॥ नक्तं
चरेदब्दमेकमब्दान्तेगोप्रदोभवेत् ॥ ९० ॥ गौरीलोकेवसेत्कल्पंततोराजाभवेदिह ॥ एतद्रुद्रव्रतंनामसदाकल्याणकारकम् ॥ ९१ ॥ वर्जयेच्चतुरो
मासान्यस्तुगन्धानुलेपनम् ॥ शुक्तिगन्धाक्षतान्दद्याद्विप्रायसितवाससी ॥ ९२ ॥ वारुणंपदमाप्नोतिदृढव्रतमिदंस्मृतम् ॥ वैशाखेपुष्पल
वणंवर्जयेदथगोप्रदः ॥ ९३ ॥ भूत्वाविष्णुपदेकल्पंस्थित्वाराजाभवेदिह ॥ एतच्छान्तिव्रतंनामकीर्तिकामफलप्रदम् ॥ ९४ ॥ ब्रह्माण्डंकाञ्चनं
कृत्वातिलराशिसमन्वितम् ॥ घृतेनान्यप्रदोभूत्वावह्निंसंतर्प्यसद्विजम् ॥ ९५ ॥ संपूज्यविप्रदाम्पत्यंमाल्यवस्त्रविभूषणैः ॥ शक्तितस्त्रिप
लादूर्ध्वंविश्वात्माप्रीयतामिति ॥९६॥ पुण्येऽह्निदद्यादपरेब्रह्मयात्यपुनर्भवम् ॥एतद्ब्रह्मव्रतंनामनिर्वाणफलदंनृणाम् ॥९७॥ यश्चोभयमुखींदद्यात्प्रभूत
सकलान्विताम् ॥ दिनंपयोव्रतंतिष्ठेत्सयातिपरमंपदम् ॥ ९८ ॥ एतद्वैसुव्रतंनामपुनरावृत्तिदुर्लभम् ॥ त्र्यहंपयोव्रतःस्थित्वाकाञ्चनंकल्पपा
दपम् ॥९९॥ पलादूर्ध्वंयथाशक्तितण्डुलप्रस्थसंयुतम् ॥ दत्त्वाब्रह्मपदंयातिर्भीमव्रतमिदंस्मृतम् ॥ १०० ॥ मासोपवासीयोदद्याद्धेनुंविप्रायशोभना
म् ॥ सवैष्णवपदंयातिभीमतव्रमिदंस्मृतम् ॥ १ ॥ दद्याद्विंशत्पलादूर्ध्वंमहींकृत्वातुकाञ्चनीम् ॥ दिनंपयोव्रतस्तिष्ठेद्रुद्रलोकेमहीय
ते ॥२॥ धनप्रदमिदंप्रोक्तंसप्तकल्पशतानुगम् ॥ माघेमास्यथचैत्रेवागुडधेनुप्रदोभवेत् ॥ ३ ॥ गुडव्रतंतृतीयायांगौरीलोकेमहीयते ॥ महा
व्रतमिदंनामपरमानन्दकारकम् ॥ ४ ॥ पक्षोपवासीयोदद्याद्विप्रायकपिलाद्वयम् ॥ सब्रह्मलोकमाप्नोतिदेवासुरसुपूजितः ॥ ५ ॥ कल्पान्तेसर्वराजा
स्यात्प्रभाव्रतमिदंस्मृतम् ॥ वत्सरंत्वेकभक्ताशीसभक्ष्यजलकुम्भदः ॥ ६ ॥ शिवलोकेवसेत्कल्पंप्राप्तिव्रतमिदंस्मृतम् ॥ नक्ताशीत्वष्टमी
षुस्याद्वत्सरान्तेतुधेनुदः ॥७॥ पौरन्दरंपुरंयातिसुगतिव्रतमुच्यते ॥इन्धनंयोददेद्विप्रेवर्षादींश्चतुरस्त्वृतून् ८ ॥घृतधेनुप्रदोऽन्तेचसपरंब्रह्मगच्छति ॥

वैश्वानरव्रतंनामसर्वपापप्रणाशनम्॥९॥एकादश्यांतुनक्ताशीयश्चक्रंविनिवेदयेत्॥कृत्वासमान्तेसौवर्णंविष्णोःपदमवाप्नुयात् ॥११०॥ एतत्कृष्णव्रतं
नामकल्पान्तेराज्यलाभकृत्॥पायसाशीसमान्तेतुदद्याद्विप्रायगोयुगम् ॥११॥ लक्ष्मीलोकेवसेत्कल्पमेतद्देवीव्रतंस्मृतम् ॥ सप्तम्यांनक्तभुग्दद्यात्समाप्ते
गांपयस्विनीम् ॥१२॥ सूर्यलोकमवाप्नोतिभानुव्रतमिदंस्मृतम् ॥ चतुर्थ्यांनक्तभुग्दद्याद्धेमन्तेगोयुगंतथा ॥१३॥ एतद्वैनायकंनामशिवलोकफलप्र
दम् ॥ महाफलानियस्त्यक्त्वा चातुर्मास्येद्विजातये ॥ १४ ॥ हैमानिकार्तिकेदद्याद्धोमान्तेगोयुगंतथा ॥ एतत्सौरव्रतंनामसूर्यलोकफलप्रदम्॥१५॥
द्वादशद्वादशीर्यस्तुसमाप्योपोषणेनृप ॥ गोवस्त्रकाञ्चनैर्विप्रान्पूजयेच्छक्तितोनरः ॥ १६ ॥ परंपदमवाप्नोतिविष्णुव्रतमिदंस्मृतम् ॥ चतुर्दश्यांतुनक्ता
शीसमान्तेगोयुगप्रदः ॥ १७ ॥ शैवंपदमवाप्नोतित्रैयम्बकमिदंस्मृतम्॥सप्तरात्रोषितोदद्याद्घृतकुम्भंद्विजातये ॥१८ ॥ वरव्रतमिदंप्राहुर्ब्रह्मलोकफल
प्रदम् ॥ असौकाशींसमासाद्यधेनुंदत्तेपयस्विनीम् ॥१९॥ शक्रलोकेवसेत्कल्पमिदंमन्त्रव्रतंस्मृतम् ॥ मुखवासंपरित्यज्यसमांतेगोप्रदोभवेत्॥१२०॥
वारुणंलोकमाप्नोतिवारुणव्रतमुच्यते॥चान्द्रायणंचयःकुर्याद्धैमंचन्द्रंनिवेदयेत्॥२१॥चन्द्रव्रतमिदंप्रोक्तंचन्द्रलोकफलप्रदम्॥ ज्येष्ठेपञ्चतपायोऽन्तेहेम
धेनुप्रदोदिवम् ॥२२॥ यात्यष्टमीचतुर्दश्योरुद्रव्रतमिदंस्मृतम्॥सकृद्विधानकंकुर्यात्तृतीयायांशिवालये ॥२३॥ समाप्तेधेनुदोयातिभवानीव्रतमुच्यते ॥
माघेनिश्यार्द्रवासाःस्यात्सप्तम्यांगोप्रदोभवेत् ॥२४॥ दिविकल्पंवसित्वेहराजास्यात्पवनव्रतम् ॥ त्रिरात्रोपोषितोदद्यात्फाल्गुन्यांभवनंशुभम् ॥२५॥
आदित्यलोकमाप्नोतिधामव्रतमिदंस्मृतम्॥त्रिसन्ध्यंपूज्यदाम्पत्यमुपवासीविभूषणैः ॥२६॥दद्न्मोक्षमवाप्नोतिमोक्षव्रतमिदंस्मृतम्॥दत्त्वासितद्वितीं
यायामिन्दौलवणभाजनम् ॥२७॥ समाप्तेगोप्रदोयातिविप्रायशिवमन्दिरम् ॥ कांस्यंसवस्त्रंराजेन्द्रदक्षिणासहितंतथा ॥२८॥ समाप्तेगांचयोदद्यात्स
यातिशिवमन्दिरम् ॥ कल्पान्तेराजराजस्स्यात्सोमव्रतमिदंस्मृतम् ॥ २९ ॥ प्रतिपत्स्वेकभक्ताशीसमाप्तेचफलप्रदः ॥ वैश्वानरपदंयातिशिखिव्रत
मिदंस्मृतम् ॥१३०॥ हैमंपलद्वयादूर्ध्वंरथमश्वयुगान्वितम्॥दद्यात्कृतोपवासःसदिविकल्पशतंवसेत् ॥३१॥ तदन्तेराजराजस्स्यादश्वव्रतमिदंस्मृतम् ॥
तद्वद्धेमरथंदद्यात्करिभ्यांसंयुतंपुनः ॥३२॥ सत्यलोकेवसेत्कल्पंसहस्रमपिभूमिपः ॥ भवेदिहागतोभूम्यांकरिव्रतमिदंस्मृतम् ॥ ३३ ॥ दशम्यामेक
भक्ताशीसमाप्तेदशधेनुदः ॥ दीपंचकाञ्चनंदद्याद्ब्रह्माण्डाधिपतिर्भवेत् ॥ ३४ ॥ एतद्विश्वव्रतंनाममहापातकनाशनम् ॥ कन्यादानंतु
कार्तिक्यांपुष्करेयःकरिष्यति ॥३५॥ एकविंशद्गुणोपेतोब्रह्मलोकंगमिष्यति ॥ कन्यादानात्परंदानंनैवचास्त्यधिकंक्वचित् ॥ ३६ ॥ पुष्करेतुवि
शेषेणकार्तिक्यांतुविशेषतः ॥ विप्रायविधिवद्दयन्तेपांलोकोऽक्षयोभवेत् ॥ ३७ ॥ तिलपिष्टमयंकृत्वागजंरत्नसमन्वितम् ॥ विप्राययेप्रयच्छन्ति

जलमध्येस्थितानराः ॥३८॥ तेषांचैवाक्षयोलोकोभविताभूतसंप्लवम् ॥ यःपठेच्छृणुयाद्वापिव्रतषट्कमनुत्तमाम् ॥३९॥ मन्वन्तरशतंसोऽपिगन्धर्वाधि
पतिर्भवेत् ॥ षट्व्रतंभारतपुण्यमेतत्तवोदितंविश्वजनीनमद्य ॥ १४० ॥ श्रोतुंयदीच्छातवराजराजश्शृणुद्विजातेःकरणीयमेतत् ॥ नैर्मल्यं
भावशुद्धिश्चविनास्नानंनविद्यते ॥ ४१ ॥ तस्मान्मनोविशुद्ध्यर्थंस्नानमादौविधीयते ॥ अनुद्धृतैरुद्धृतैर्वाजलैःस्नानंसमाचरेत् ॥ ४२ ॥ तीर्थंप्रक
ल्पयेद्विद्वान्मूलमन्त्रेणमन्त्रवित् ॥ नमोनारायणायेतिमूलमन्त्रउदाहृतः ॥ ४३ ॥ सदर्भपाणिर्विधिनाआचान्तःप्रयतःशुचिः ॥ चतुर्हस्त
समायुक्तंचतुरस्रंसमन्ततः ॥ ४४ ॥ प्रकल्प्यावाहयेद्गंगामेभिर्मन्त्रैर्विचक्षणः ॥ विष्णोःपादप्रसूतासिवैष्णवीविष्णुदेवता ॥ ४५ ॥ त्राहिनस्त्वेन
सस्तस्मादाजन्ममरणान्तिकात् ॥ तिस्रःकोट्योऽर्धकोटीचतीर्थानांवायुरब्रवीत ॥ ४६ ॥ दिविभुव्यंतरिक्षेचतानितेसन्तिजाह्नवि ॥ नन्दि
नीत्यवतेनामदेवेषुनलिनीतिच ॥ ४७ ॥ दक्षापृथ्वीचसुभगाविश्वकायाशिवासिता ॥ विद्याधरीसुप्रसन्नातथालोकप्रसादिनी ॥ ४८ ॥ क्षेमाचजाह्नवी
चैवशान्ताशान्तिप्रदायिनी ॥ एतानिपुण्यनामानिस्नानकालेप्रकीर्तयेत् ॥ ४९ ॥ भवेत्सन्निहितातत्रगङ्गात्रिपथगामिनी ॥ सप्तवाराभि
जप्तेनकरसंपुटयोजितम् ॥१५०॥ मूर्ध्निकुर्याज्जलंभूयस्त्रिचतुःपञ्चसप्तधा ॥ स्नानंकुर्यान्मृदातद्वदामन्त्र्यतुविधानतः ॥ ५१ ॥ अश्वक्रान्तेरथक्रान्तेवि
ष्णुक्रान्तेवसुन्धरे ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ ५२ ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ नमस्तेसर्वलोकानांप्रभवारणि
सुव्रते ॥५३॥ एवंस्नात्वाततःपश्चादाचम्यतुविधानतः ॥ उत्थायवाससीशुभ्रेशुद्धेतुपरिधायवै ॥ ५४ ॥ ततस्तुतर्पणंकुर्यात्त्रैलोक्याप्यायनायवै॥
ब्रह्माणंतर्पयेत्पूर्वंविष्णुंरुद्रंप्रजापतीन् ॥ ५५ ॥ देवायक्षास्तथानागागन्धर्वाप्सरसांगणाः ॥ क्रूरास्सर्पास्सुपर्णाश्चतरवोजम्भकादयः ॥ ५६ ॥
विद्याधराजलधरास्तथैवाकाशगामिनः ॥ निराधाराश्चयेजीवापापधर्मरताश्चये ॥ ५७ ॥ तषामाप्यायनायैतद्दीयतेसलिलंमया ॥ कृतोपवी
तोदेवेभ्योनिवीतीचभवेत्ततः ॥५८॥ मनुष्यांस्तर्पयेद्भक्त्याऋपिपुत्रानृषींस्तथा ॥ सनकश्चसनन्दश्चतृतीयश्चसनातनः ॥५९॥ कपिलश्चासुरिश्चैववो
ढुःपंचशिखस्तथा ॥ सर्वेतेतृप्तिमायान्तुमद्दत्तेनाम्बुनासदा ॥ १६० ॥ मरीचिमत्र्यंगिरसौपुलस्त्यंपुलहंक्रतुम् ॥ प्रचेतसंवसिष्ठंच
भृगुंनारदमेवच ॥६१॥ देवब्रह्मऋषीन्सर्वांस्तर्पयेत्साक्षतोदकैः ॥ अपसव्यंततःकृत्वासव्यंजानुचभूतले ॥ ६२ ॥ अग्निष्वात्तांस्तथासौम्यान्हवि
ष्मन्तस्तथोष्मपान् ॥ सुकालिनोबर्हिषदस्तथाचैवाज्यपान्पुनः ॥ ६३ ॥ संतर्पयेत्पितॄन्भक्त्यासतिलोदकचन्दनैः ॥ सदर्भपाणिर्विधिनापितॄ
न्स्वांस्तर्पयेत्ततः ॥६४॥ पित्रादीन्नामगोत्रेणतथामातामहानपि ॥ संतर्प्यविधिवद्भक्त्याइमंमन्त्रमुदीरयेत् ॥ ६५ ॥ येऽबान्धवाबान्धवायेयेऽन्य

जन्मनिबान्धवाः ॥ तेतृप्तिमखिलायान्तुयेऽप्यस्मत्तोयकाङ्क्षिणः ॥६६॥आचम्यविधिनासम्यगालिखेत्पद्ममग्रतः॥ साक्षताद्भिस्सपुष्पाभिःसति
लागरुचन्दनैः॥६७॥अर्घ्यंदद्यात्प्रयत्नेनसूर्यनामानुकीर्तनैः ॥ नमस्तेविश्वरूपायनमस्तेविष्णुरूपिणे ॥६८॥ सर्वदेवनमस्तेऽस्तुप्रसीदममभास्कर ॥
दिवाकरनमस्तेऽस्तुप्रभाकरनमोऽस्तुते॥६९॥एवंसूर्यंनमस्कृत्यत्रिःकृत्वाचप्रदक्षिणम्॥द्विजंगांकाञ्चनंचैवदृष्ट्वास्पृष्ट्वागृहंव्रजेत्॥१७०॥ स्वगेहस्थांततः
पुण्यांप्रतिमांचापिपूजयेत्॥ भोजनंचततःपश्चाद्द्विजपूर्वंचकारयेत्॥७१॥अनेनविधिनासर्वऋषयःसिद्धिमागताः॥१७२॥इतिश्रीपाद्मपुराणेप्रथमेसृष्टि
खण्डेस्नानविधिर्नामविंशोऽध्यायः ॥२०॥ पुलस्त्यउवाच ॥ आसीत्पुराबृहत्कल्पेधर्ममूर्तिर्जनाधिपः॥सुहृच्छक्रस्यनिहतायेनदैत्यास्सहस्रशः॥१॥
सोमसूर्यादयोयस्यतेजसाविगतप्रभाः ॥ भवन्तिशतशोयेनदानवाश्चपराजिताः ॥ २ ॥ यथेच्छरूपधारीचमानुषोऽप्यपराजितः॥तस्यभानुमतीभा
र्यासतीत्रैलोक्यसुन्दरी ॥ ३॥लक्ष्मीसदृशरूपेणनिर्जितामरसुन्दरी ॥ राज्ञस्तस्याग्रमहिषीप्राणेभ्योऽपिगरीयसी॥४॥दशनारीसहस्राणांमध्यश्रीरिवरा
जते ॥ नृपकोटिसहस्रेणनकदाचित्समुच्यते ॥ ५ ॥ कदाचिदास्थानगतःपप्रच्छस्वपुरोहितम् ॥ विस्मयेनावृतोनत्वावसिष्ठमृषिसत्तमम् ॥६॥ भग
वन्केनधर्मेणममलक्ष्मीरनुत्तमा ॥ कस्माच्चविपुलंतेजोमच्छरीरेसदोत्तमम् ॥ ७ ॥ वसिष्ठउवाच ॥ पुरालीलावतीनामवेश्याशिवपरायणा ॥तयादत्त
श्चतुर्दश्यांपुष्करेलवणाचलः॥८॥ हेमवृक्षामरैःसार्द्धंयथावद्विधिपूर्वकम्॥शूद्रःसुवर्णकारश्चकर्मकृत्सोऽभवत्तदा॥९॥ भृत्योलीलावतीगेहेतेनहैमीर्विनि
र्मिताः ॥ तरवोहेमपुष्पाश्चश्रद्धायुक्तेनपार्थिव ॥ १० ॥ अतिरूपेणसंपन्नाघटितास्तेसुशोभनाः ॥ धर्मकार्यमितिज्ञात्वानगृहीतंचवेतनम् ॥ ११ ॥
उज्ज्वालिताश्चतेपत्न्यासुवर्णमयपादपाः ॥ लीलावतीगृहेचापिपरिचर्याचपार्थिव ॥ १२ ॥ कृताताभ्यामशाठ्येनद्विजशुश्रूषणादिका ॥ साचली
लावतीवेश्याकालेनमहतानघ ॥ १३ ॥ सर्वपापविनिर्मुक्ताजगामशिवमन्दिरम् ॥ योऽसौसुवर्णकारश्चदरिद्रोऽप्यतिसत्त्ववान् ॥ १४ ॥ नमूल्यमा
दाद्वेश्यातःसभवानिहसाम्प्रतम् ॥ सप्तद्वीपपतिर्जातःसूर्यायुतसमप्रभः ॥ १५ ॥ ययासुवर्णकारस्यतरवोहेमनिर्मिताः॥सम्यगुज्ज्वलिताःपत्न्यासेयं
भानुमतीतव ॥१६॥ तस्मान्नृलोकेष्वपराजितस्त्वमारोग्यसौभाग्ययुताचलक्ष्मीः ॥ तस्मात्त्वमप्यत्रविधानपूर्वंधान्याचलादीन्नृपतेकुरुष्व ॥ १७ ॥
पुलस्त्यउवाच ॥ तथेतिसंपूज्यसुधर्ममूर्तिर्वचोवसिष्ठस्यददौचसर्वान् ॥ धान्याचलादीन्विधिनास्मरारेर्लोकंगतोऽसौसुरपूज्यमानः ॥१८॥ पश्येद्य
दीमानुपनीयमानान्स्पृशेन्मनुष्यैरिहदीयमानान् ॥ शृणोतिभक्त्याथमतिंददातिविकल्मषःसोऽपिदिवंप्रयाति ॥१९॥ दुःस्वप्नप्रशममुपैतिपठ्यमानैः
शैलेन्द्रैर्भवभयभेदनैर्मनुष्यः॥यःकुर्यात्किमुनृपपुङ्गवेहसम्यक्शान्तात्मासकलगिरीन्द्रसंप्रदानम् ॥२०॥भीष्मउवाच॥ किमभीष्टवियोगशोकसंघान

लमुद्धर्तुमुपोषणंव्रतंवा ॥ विभवध्रुवकारिभूतलेऽस्मिन्भवभीतेरपिसूदनंचपुंसः ॥२१॥ पुलस्त्यउवाच ॥ परिपृष्टमिदंजगत्प्रियंतेविबुधानामपिदुर्ल
भंमहत्त्वात् ॥ तवभक्तिमतस्तथापिवक्ष्येव्रतमिन्द्रासुरमानवेषुगुह्यम् ॥२२॥ पुण्यमाश्वयुजेमासिविशोकद्वादशीव्रतम् ॥ दशम्यांलघुभुग्विद्वान्प्रारभे
तयमेनतु ॥२३॥ उदङ्मुखःप्राङ्मुखोवादन्तधावनपूर्वकम्॥ एकादश्यांनिराहारःसम्यगभ्यर्च्यकेशवम् ॥२४॥ श्रियंचाभ्यर्च्यविधिवद्भोक्ष्येऽहंचा
परेऽहनि ॥ एवंनियमकृत्सुप्त्वाप्रातरुत्थायमानवः ॥२५॥ स्नानंसर्वौषधैःकुर्यात्पञ्चगव्यजलेनतु ॥ शुभ्रमाल्याम्बरधरःपूजयेच्छ्रीशमुत्पलैः ॥२६॥
विशोकायनमःपादौजंघेचवरदायवै॥श्रीशायजानुनीतद्वदूरूचजलशायिने॥२७॥कन्दर्पायनमोगुह्यंमाधवायनमःकटिम् ॥ दामोदरायेत्युदरंपार्श्वेच
विपुलायवै ॥ २८ ॥ नाभिंचपद्मनाभायहृदयंमन्मथायवै ॥ श्रीधरायविभोर्वक्षःकरौमधुभिदेनमः ॥२९ ॥वैकुण्ठायनमःकण्ठमास्यंपद्ममुखायवै॥
नासामशोकनिधयेवासुदेवायचाक्षिणी ॥३०॥ ललाटंवामनायेतिहरयेचपुनर्भुवौ ॥ अलकंमाधवायेतिकिरीटंविश्वरूपिणे ॥३१॥ नमःसर्वात्मनेत
द्वच्छिरइत्यभिपूजयेत् ॥ एवंसम्पूज्यगोविन्दंधूपमाल्यानुलेपनैः ॥३२॥ ततस्तुमण्डलंकृत्वास्थण्डिलंकारयेन्मृदा ॥ चतुरस्रंसमन्ताच्चारत्निमात्रमु
दक्प्लवम् ॥३३॥ श्लक्ष्णंदृढंचपरितोवप्रत्रयसमावृतम् ॥ त्रिरङ्गुलोच्छ्रितावप्रास्तद्विस्तारोद्विरङ्गुलः ॥ ३४ ॥ स्थण्डिलस्योपरिष्टात्तुभित्तिरष्टांगु
लाभवेत् ॥ नदीवालुकयासूर्येलक्ष्म्याःप्रतिकृतिंन्यसेत् ॥३५॥ स्थण्डिलेसूर्यमध्यस्थलक्ष्मीमभ्यर्चयेद्बुधः॥ नमोदेव्यैनमःशान्त्यैनमोलक्ष्म्यैनमः
श्रियै॥३६ ॥ नमस्तुष्ट्यैनमःपुष्ट्यैसृष्ट्यैदृष्ट्यैनमोनमः॥विशोकादुःखनाशायविशोकावरदास्तुते ॥३७॥ विशोकामेऽस्तुसंपत्त्यैविशोकासर्वसिद्धये ॥
ततःशुभ्राम्बरैःसूर्यवेष्ट्यसम्पूजयेत्फलैः ॥ ३८ ॥ भक्ष्यैर्नानाविधस्तद्वत्सुवर्णकमलेनच ॥ राजतीषुचपात्रीषुन्यसेद्दर्भोदकंबुधः ॥ ३९ ॥ ततस्तु
नृत्यगीतानिकारयेत्सकलांनिशाम् ॥ यामत्रयंव्यतीतेतुततउत्थायमानवः ॥४०॥ अभिगम्यचविप्राणांमिथुनानिचपूजयेत् ॥ शक्तितस्त्रीणिचैकंवा
वस्त्रमाल्यानुलेपनैः ॥४१॥ शयनस्थानिपूज्यानिनमोऽस्तुजलशायिने ॥ ततस्तुगीतवाद्येनरात्र्यांजागरणेकृते ॥ ४२ ॥ प्रभातेचततःस्नानंकृत्वा
दाम्पत्यमर्चयेत् ॥ भोजयेच्चयथाशक्तिवित्तशाठ्येनवर्जितः ॥४३॥ भक्त्याश्रुत्वापुराणानितद्दिनंचातिवाहयेत् ॥ अनेनविधिनासर्वंमासिमासिस
माचरेत्॥४४ ॥व्रतान्तेशयनंदद्याद्गुडधेनुसमन्वितम् ॥ सोपधानंसविश्रामंस्वास्तरावरणंशुभम् ॥४५॥ यथालक्ष्मीर्नरेशत्वांनपरित्यज्यगच्छति ॥
तथासुरूपतारोग्यमशोकंचास्तुमेसदा ॥४६॥ यथादेवेनरहितानलक्ष्मीर्जायतेक्वचित् ॥ तथाविशोकतामेऽस्तुभक्तिरग्र्याचकेशवे ॥ ४७ ॥ मन्त्रेणा

१ 'यज्ञ' इ० पा०।

नेनशयनंगुडधेनुसमन्वितम्॥ सूर्यश्चलक्ष्म्यासहितोदातव्योभूतिमिच्छता॥४८॥उत्पलंकरवीरंवाप्यम्लानंचैवकुङ्कुमम् ॥ केतकंसिन्धुवारंचमल्लिका
गन्धपाटला ॥४९॥ कदम्बंकुब्जकंजातीशस्तान्येतानिसर्वदा ॥ भीष्मउवाच ॥ गुडधेनुविधानंचसमाचक्ष्वमुनीश्वर ॥५०॥ किंरूपाकेनमन्त्रेणदा
तव्यानदिहोच्यताम्॥ पुलस्त्यउवाच ॥ गुडधेनुविधानस्ययद्रूपमिहयत्फलम् ॥५१॥ तदिदानींप्रवक्ष्यामिसर्वपापविनाशनम्॥ कृष्णाजिनंचतुर्हस्तं
प्राग्ग्रीवंविन्यसेद्भुवि ॥५२॥ गोमयेनानुलिप्तायांदर्भानास्तीर्यसर्वतः ॥ लघ्वैणकाजिनंतद्वद्वत्सस्यपरिकल्पयेत् ॥५३॥ प्राङ्मुखींकल्पयेद्धेनुंमृदावा
गांसवत्सकाम् ॥ उत्तमागुडधेनुःस्यात्सदाभारचतुष्टयम् ॥ ५४ ॥ वत्संभारेणकुर्वीतभाराभ्यांमध्यमास्मृता ॥ अर्द्धभारेणवत्सस्स्यात्कनिष्ठाभारकेण
तु ॥५५॥ चतुर्थांशेनवत्सःस्याद्गृहवित्तानुसारतः॥ धेनुवत्सौकृतौचोभौसितसूक्ष्माम्बरावृतौ ॥५६॥शुक्तिकर्णाविक्षुपादौशुचिमुक्ताफलेक्षणौ॥सित
सूत्रसिराजालौसितकम्बलकम्बलौ ॥ ५७॥ ताम्रगण्डकपृष्ठौद्रौसितचामरलोमकौ ॥ विद्रुमभ्रूयुगावेतौनवनीतस्तनान्वितौ ॥५८॥ काञ्चनाक्षियुगो
पेताविन्द्रनीलकनीनिकौ ॥ क्षौमपुच्छौकांस्यदोहौशुभ्रातिकमनीयकौ ॥ ५९ ॥ सुवर्णशृङ्गाभरणौराजताढ्यखुरौचतौ ॥ नानाफलसमायुक्तौघ्राण
गन्धकरण्डकौ ॥ ६० ॥ इत्येवंरचयित्वातुधूपदीपैस्तथार्चयेत् ॥ यालक्ष्मीस्सर्वभूतानांयाचदेवेष्ववस्थिता ॥ ६१ ॥ धेनुरूपेणसादेवीममपापंव्य
पोहतु ॥ विष्णोर्वक्षसियालक्ष्मीःस्वाहायाचविभावसौ ॥६२॥ चन्द्रार्कशक्रशक्तिर्यासाधेनुर्वरदास्तुमे ॥ स्वधात्वंपितृमुख्यानांस्वाहायज्ञभुजांयतः
॥ ६३ ॥ सर्वपापहराधेनुस्तस्माद्भूतिंप्रयच्छमे ॥ एवमामन्त्र्यतांधेनुंब्राह्मणायनिवेदयेत् ॥ ६४ ॥ विधानमेतद्धेनूनांसर्वासामपिपठ्यते ॥ यास्तु
पापविनाशिन्यःपठ्यन्तेदशधेनवः ॥६५॥ तासांस्वरूपंवक्ष्यामिनामानिचनराधिप॥प्रथमागुडधेनुःस्याद्घृतधेनुरथापरा ॥६६॥ तिलधेनुस्तृतीया
चचतुर्थीजलनामिका॥क्षीरधेनुःपञ्चमीचमधुधेनुस्तथापरा ॥६७॥ सप्तमीशर्कराधेनुरष्टमीदधिकल्पिता॥रसधेनुश्चनवमीदशमीस्यात्स्वरूपतः॥६८॥
कुम्भास्स्यूरसधेनूनामितरासांस्वराशयः॥सुवर्णधेनुंचाप्यत्रकेचिदिच्छन्तिमानवाः ॥६९॥ नवनीतेनतैलैश्चतथान्येऽपिमहर्षयः॥एतदेवविधानंस्यात्त
एवोपस्करास्स्मृताः ॥७०॥ मन्त्रवाहनसंयुक्ताःसदापर्वणिपर्वणि ॥ यथाश्राद्धंप्रदातव्याभुक्तिमुक्तिफलप्रदाः ॥७१॥ गुडधेनुप्रसङ्गेनसर्वास्तवमयो
दिताः ॥ अशेषयज्ञफलदाःसर्वपापहराःशुभाः ॥ ७२ ॥ व्रतानामुत्तमंयस्माद्विशोकद्वादशीव्रतम् ॥ तदङ्गत्वेनचैवात्रगुडधेनुःप्रशस्यते ॥ ७३ ॥
अयनेविषुवेपुण्येव्यतीपातेतथापुनः ॥ गुडधेन्वादयोदेयाउपरागादिपर्वसु ॥ ७४ ॥ विशोकद्वादशीचैषासर्वपापहराशुभा ॥ यामुपोष्यनरोयातित
द्विष्णोःपरमंपदम् ॥ ७५ ॥ इहलोकेससौभाग्यमायुरारोग्यमेवच ॥ वैष्णवंपुरमाप्नोतिमरणेस्मरणंहरेः ॥ ७६ ॥ नवार्बुदसहस्राणिदशचाष्टौचधर्म

वित् ॥ नशोकदुःखदौर्गत्यंतस्यसञ्जयतेनृप ॥ ७७ ॥ नारीवाकुरुतेयातुविशोकद्वादशीमिमाम् ॥ नृत्यगीतपरानित्यंसापितत्फलमाप्नुयात् ॥
यस्मादग्रेहरेर्नृत्यमनन्तंगीतवादनम् ॥ ७८ ॥ इतिपठतियइत्थंयःशृणोतीहसम्यङ्मधुमुरनरकारेरर्चनंवाथपश्येत् ॥ मतिमपिचजनानांयोददा
तीन्द्रलोकेसवसतिविबुधौघैःपूज्यतेकल्पमेकम् ॥ ७९ ॥ भीष्मउवाच ॥ भगवञ्छ्रोतुमिच्छामिदानमाहात्म्यमुत्तमम् ॥ यदक्षयंपरेलोकेदेवर्षिगण
पूजितम् ॥८०॥ पुलस्त्यउवाच ॥ मेरोःप्रदानंवक्ष्यामिदशधानृपसत्तम ॥ ८१॥ यत्प्रदातानन्तलोकान्प्राप्नोतिसुरपूजितान् ॥ पुराणेषुचवेदेषुयज्ञ
ष्वायतनेषुच ॥ ८२ ॥ नतत्फलमधीतेषुकृतेष्विहयदश्नुते ॥ तस्माद्दानंप्रवक्ष्यामिपर्वतानामनुक्रमात् ॥ ८३ ॥ प्रथमोधान्यशैलःस्याद्द्वितीयो
लवणाचलः ॥ गुडाचलस्तृतीयस्तुचतुर्थोहेमपर्वतः ॥ ८४ ॥ पञ्चमस्तिलशैलस्स्यात्षष्ठःकार्प्पासपर्वतः ॥ सप्तमोघृतशैलःस्याद्रत्नशैलस्तथा
ष्टमः ॥ ८५ ॥ राजतोनवमस्तद्वद्दशमःशर्कराचलः ॥ वक्ष्येविधानमेतेषांयथावदनुपूर्वशः ॥८६॥ अयनेविषुवेपुण्येव्यतीपातेदिनक्षये ॥ शुक्लपक्षे
तृतीयायामुपरागेशशिक्षये ॥ ८७ ॥ विवाहोत्सवयज्ञेषुद्वादश्यामथवापुनः ॥ शुक्लायांपञ्चदश्यांवापुण्यर्क्षेवाविधानतः ॥ ८८ ॥ धान्यशैलादयो
देयाःकार्तिक्यांज्येष्ठपुष्करे ॥ तीर्थेष्वायतनेवापिगोष्ठेवाभवनाङ्गणे ॥ ८९ ॥ मण्डपंकारयेद्भक्त्याचतुरस्रमुदङ्मुखम् ॥ प्रागुदक्प्रवणंपुण्यंप्रा
ङ्मुखंवाविधानतः ॥ ९० ॥ गोमयेनानुलिप्तायांभूमावास्तीर्यवैकुशान् ॥ तन्मध्येपर्वतंकुर्याद्विष्कम्भंपर्वतान्वितम् ॥९१॥ धान्यद्रोणसहस्रेणभवे
द्गिरिरिहोत्तमः ॥ मध्यमःपञ्चशतकैःकनिष्ठश्चत्रिभिःशतैः ॥ ९२ ॥ मेरुर्महाव्रीहिमयस्तुमध्येसुवर्णवृक्षत्रयसंयुतःस्यात ॥ मूर्द्धन्यवस्थानम
थाम्बरेणकार्यंत्वनेकंचपुनर्द्विजाग्र्यैः ॥९३॥ चत्वारिशृङ्गाणिचराजतानिनितम्बभागाअपिराजतास्स्युः ॥ पूर्वेणमुक्ताफलवज्रयुक्तोयाम्येनगोमेदक
पद्मरागैः ॥९४ ॥ पश्चाच्चगारुत्मतनीलरत्नैःसौम्येनवैडूर्यकपुष्परागैः ॥ श्रीखण्डखण्डैरभितःप्रवालैर्लतान्वितोमौक्तिकप्रस्तराढ्यः ॥९५ ॥ ब्रह्माथ
विष्णुर्भगवान्पुरारिर्दिवाकरोऽप्यत्रहिरण्मयःस्यात् ॥ तथेक्षुवंशावृतकन्दरस्तुघृतोदकप्रस्रवणोदिशासु ॥९६॥ शुभ्राम्बराण्यम्बुधरावलिःस्यात्पूर्वेण
पीतानिचदक्षिणेन ॥ वासांसिपश्चादथकर्बुराणिरक्तानिचैवोत्तरतोघनानि ॥ ९७ ॥ रौप्यान्महेन्द्रप्रमुखांस्तथाऽष्टौसंस्थाप्यलोकाधिपतीन्क्रमेण ॥
नानावनालीचसमन्ततःस्यान्मनोरमम्माल्यविलेपनंच ॥९८ ॥ वितानकंचोपरिपञ्चवर्णमम्लानपुष्पाभरणंसितंच ॥ इत्थंनिवेश्यामरशैलमग्र्यंमेरो
स्तुविष्कम्भगिरीन्क्रमेण ॥ ९९ ॥ तुरीयभागेनचतुर्दिशंचसंस्थापयेत्पुष्पविलेपनाढ्यम् ॥ पूर्वेणमन्दरमनेकफलैश्चयुक्तंकामेनकाञ्चनमयेनविराज
मानम् ॥१००॥ याम्येनगन्धमदनोविनिवेशनीयोगोधूमसंचयमयःकलधौतवांश्च ॥ हैमेनयज्ञपतिनाघृतमानसेनवस्त्रेणराजतवनैश्चससंयुतःस्यात्

॥ १ ॥ पश्चात्तिलाचलमनेकसुगन्धपुष्पसौवर्णपिप्पलहिरण्मयहंसयुक्तम् ॥ आकारयेद्रजतपुष्पवनेनतद्वद्वस्त्रान्वितंदधिसितोदसरस्तथाग्रे ॥ २ ॥
संस्थाप्यतंविपुलशैलमथोत्तरेणशैलंसुपार्श्वमपिमाषमयंसवस्त्रम् ॥ पुष्पैश्वहेमवटपादपशेखरंतमाकारयेत्कनककेतुविराजमानम् ॥३॥ माक्षीकभद्रस
रमाचवनेनतद्वद्रौप्येणभासुरवितानयुतंविधाय ॥ होमश्चतुर्भिरथवेदपुगणविद्भिर्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः॥४ ॥ पूर्वेणहस्तमितमत्रविधाय
कुण्डंकार्यस्तिलैर्यवघृतेनसमित्कुशैश्च ॥ रात्रौचजागरमनुद्धतगीतरूपैरावाहनंचकथयामिशिलोच्चयानाम् ॥ ५ ॥ त्वंसर्वदेवगणधामनिधेविरुद्ध
मस्मद्गृहेष्वमरपर्वतनाशयाशु ॥ क्षेमंविधत्स्वकुरुशान्तिमनुत्तमांचसंपूजितःपरमभक्तिमतामयांहि ॥ ६ ॥ त्वमेवभगवानीशोब्रह्माविष्णुर्दिवाकरः॥
मूर्तामूर्तमयंबीजमतःपाहिसनातन॥७॥यस्मात्त्वंलोकपालानांविश्वमूर्तेश्चमन्दिरम् ॥रुद्रादित्यवसूनांचतस्माच्छान्तिंप्रयच्छमे॥८॥यस्मादशून्यममरै
र्नारीभिश्चशिरस्तव॥तस्मान्मामुद्धरामुष्माद्दुःखसंसारसागरात्॥९ ॥एवमभ्यर्च्यतंमेरुंमंदरंचाभिपूजयेत्॥यस्माच्चैत्ररथेनत्वंभद्राश्वेनचपर्वत॥१०॥
शोभसेमन्दरक्षिप्रमतस्तुष्टिकरोभव ॥ यस्माच्चूडामणिर्जम्बूद्वीपेत्वंगन्धमादन ॥ ११ ॥ गन्धर्वगणशोभावांस्ततःकीर्तिर्दृढास्तुमे ॥ यस्मात्त्वंकेतु
मालेनवैभ्राजेनवनेनच ॥ १२ ॥ हिरण्मयाश्मशोभावांस्तस्मात्पुष्टिर्ध्रुवास्तुमे ॥ उत्तरैःकुरुभिर्यस्मात्सावित्रेणवनेनच ॥ १३ ॥ सुपार्श्वरा
जसेनित्यमतःश्रीरक्षयास्तुमे ॥ एवमामन्त्र्यतान्सर्वान्प्रभातेविमलेपुनः ॥ १४ ॥ स्नात्वातुगुरवेदद्यान्मध्यमंपर्वतोत्तमम् ॥ विष्कम्भपर्वतान्द
द्यादृत्विग्भ्यःक्रमशोनृप ॥ १५ ॥ गावोदेयाश्चतुर्विंशदथवादशपार्थिव ॥ शक्तिनःसप्तचाष्टौवापञ्चदद्यादशक्तिमान् ॥ १६ ॥ एकापिगुरवेदेया
कपिलाथपयस्विनी ॥ पर्वतानामशेषाणामेषएवविधिःस्मृतः ॥ १७ ॥ तएवपूजनेमन्त्रास्तएवोपस्कराःस्मृताः ॥ ग्रहाणांलोकपालानांब्रह्मादीनांचस
र्वतः ॥ १८ ॥ स्वमन्त्रेणैवसर्वेषुहोमःशैलेषुपठ्यते ॥ उपवासीभवेन्नित्यमशक्तोनक्तमिष्यते ॥ १९ ॥ विधानंसर्वशैलानांक्रमशःशृणुपार्थिव ॥
दानेषुचैवयेमन्त्राःपर्वतेषुयथाफलम् ॥ १२० ॥अन्नंब्रह्मयतःप्रोक्तमन्नंप्राणाःप्रकीर्तिताः॥ अन्नाद्भवन्तिभूतानिजगदन्नेनवर्धते ॥ २१ ॥ अन्नमेवयतो
लक्ष्मीरन्नमेवजनार्दनः ॥ धान्यपर्वतरूपेणपाहितस्मान्नगोत्तम ॥ २२ ॥ अनेनविधिनायस्तुदद्याद्धान्यमयंगिरिम् ॥ मन्वन्तरशतंसाग्रंदेवलोकेमही
यते ॥ २३ ॥ अप्सरोगणगन्धर्वैराकीर्णेनविराजितः ॥ विमानेनदिवःपृष्ठमायातिनृपसत्तम ॥ २४ ॥ कर्मक्षयेराजराज्यमाप्नोतीहनसंशयः ॥अ
थातःसंप्रवक्ष्यामिलवणाचलमुत्तमम् ॥ २५ ॥ यत्प्रदानान्नरोलोकमाप्नोतिशिवसंयुतम् ॥ उत्तमःषोडशद्रोणैःकर्तव्योलवणाचलः॥ २६ ॥ मध्यम
श्चतदर्धेनचतुर्भिरधमस्स्मृतः ॥ वित्तहीनोयथाशक्तिद्रोणादूर्द्ध्वंचकारयेत् ॥ २७ ॥ चतुर्थांशेनविष्कम्भपर्वतान्कारयेत्पृथक् ॥ विधानंपूर्ववत्कुर्या

द्रह्मादीनांचसर्वदा ॥ २८ ॥ तद्वद्धेममयंसर्वलोकपालनिवशनम् ॥ सर्गांसिवनवृक्षादितद्वचान्यान्निवेशयेत् ॥ २९ ॥ कुर्याज्जागरमत्रापिदानमन्त्रा
न्निबोधत ॥ सौभाग्यरससंयुक्तोयतोऽयंलवणेरसः ॥ १३० ॥ तदात्मकत्वेनचमांपाह्यापन्नंनगोत्तम ॥ यस्मादन्येरसाःसर्वेनोत्कटालवणंविना ॥
॥ ३१ ॥ प्रियश्चशिवयोर्नित्यंतस्माच्छान्तिप्रदोभव ॥ विष्णुदेहसमुद्भूतोयस्मादारोग्यवर्धनः ॥ ३२ ॥ तस्मात्पर्वतरूपेणपाहिसंसारसागरात् ॥
अनेनविधिनायस्तुदद्याल्लवणपर्वतम् ॥ ३३ ॥ उमालोकेवसेत्कल्पंततोयातिपरांगतिम् ॥ अतःपरंप्रवक्ष्यामिगुडपर्वतमुत्तमम् ॥ ३४ ॥ यत्प्र
दानान्नरःस्वर्गंप्राप्नोतिसुरपूजितः ॥ उत्तमोदशभिर्भारैर्मध्यमःपञ्चभिर्मतः ॥ ३५ ॥ त्रिभिर्भारैःकनिष्ठःस्यात्तदर्धेनाल्पवित्तवान् ॥ तद्वदामन्त्र
णंपूजांहैमवृक्षान्सुरार्चनम् ॥ ३६ ॥ विष्कम्भपर्वतांस्तद्वत्सर्गांसिवनदेवताः ॥ होमंजागरणंतद्वल्लोकपालाधिवासनम् ॥३७ ॥ धान्यपर्वतवत्कुर्यादि
ममन्त्रमुदीरयेत् ॥ यथादेवेषुविश्वात्माप्रवरोऽयंजनार्दनः॥३८॥ सामवेदस्तुवेदानांमहादेवस्तुयोगिनाम् ॥ प्रणवःसर्वमन्त्राणांनारीणांपार्वतीयथा ॥
॥ ३९॥ तथारसानांप्रवरःसदैवेक्षुरसोमतः ॥ ममतस्मात्परांलक्ष्मींददातुगुडपर्वतः॥ १४०॥ यस्मात्सौभाग्यदायिन्याधामत्वंगुडपर्वत॥ निर्मितश्चा
दिपार्वत्यातस्मान्मांपाहिसर्वदा ॥ ४१ ॥अनेनविधिनायस्तुदद्याद्गुडमयंगिरिम् ॥ सम्पूज्यमानोगन्धर्वैर्गौरीलोकेमहीयते ॥ ४२ ॥ पुनःकल्पशता
न्तेचसप्तद्वीपाधिपोभवेत् ॥ आयुरारोग्यसंपन्नःशत्रुभिश्चापराजितः ॥ ४३ ॥ अथपापहरंवक्ष्येसुवर्णाचलमुत्तमम् ॥ यस्यप्रदानाद्भवनंवैरिञ्चंयान्ति
मानवाः ॥ ४४ ॥ उत्तमःपलसाहस्रोमध्यमःपञ्चभिःशतैः ॥ तदर्धेनाधमस्तद्वदल्पवित्तोऽपिमानवः ॥ ४५ ॥ दद्यादेकपलादूर्ध्वंयथाशक्ति
विमत्सरः ॥ धान्यपर्वतवत्सर्वंविदध्याद्राजसत्तम ॥ ४६ ॥ विष्कम्भशैलांस्तद्वच्चऋत्विग्भ्यःप्रतिपादयेत् ॥ नमस्तेसर्वबीजायब्रह्मगर्भायवैनमः ॥
॥ ४७ ॥ यस्मादनन्तफलदस्तस्मात्पाहिशिलोच्चय ॥ यस्मादग्नेरपत्यंत्वंयस्मात्पुत्रोजगत्पतेः ॥ ४८ ॥ हेमपर्वतरूपेणतस्मात्पाहिनगोत्तम ॥
अनेनविधिनायस्तुदद्यात्कनकपर्वतम् ॥ ४९ ॥ सयातिपरमंब्रह्मलोकमानन्दकारकम् ॥ तत्रकल्पशतंतिष्ठेत्ततोयातिपरांगतिम् ॥ १५० ॥ अ
थातःसंप्रवक्ष्यामितिलशैलंविधानतः ॥ यत्प्रदानान्नरोयातिविष्णुलोकमनुत्तमम् ॥ ५१ ॥ उत्तमोदशभिर्द्रोणैर्मध्यमःपञ्चभिःस्मृतः ॥ त्रिभिः
कनिष्ठोराजेन्द्रतिलशैलःप्रकीर्तितः ॥ ५२ ॥ पूर्ववच्चापरंसर्वंविष्कम्भपर्वतादिकम् ॥ दानमन्त्रंप्रवक्ष्यामियथाचनृपपुङ्गव ॥ ५३ ॥ यस्मा
न्मधुवधेविष्णोर्देहस्वेदसमुद्भवाः ॥ तिलाःकुशाश्चमाषाश्चतस्माच्छान्तिप्रदोभव ॥ ५४ ॥ हव्यकव्येषुयस्माच्चतिलाएवहिरक्षणम् ॥ लक्ष्मींचकुरु
शैलेन्द्रतिलाचलनमोऽस्तुते ॥ ५५ ॥ इत्यामन्त्र्यचयोदद्यात्तिलाचलमनुत्तमम् ॥ सवैष्णवंपदंयातिपुनरावृत्तिदुर्लभम् ॥ ५६ ॥ कार्पासपर्व

तथैवविंशद्भागैरिहोत्तमः ॥ दशभिर्मध्यमःप्रोक्तःकनिष्ठःपञ्चभिर्मतः ॥ ५७ ॥ भारेणाल्पधनोदद्याद्वित्तशाठ्यविवर्जितः ॥ धान्यपर्वतवत्सर्वमा
साद्यराजसत्तम ॥ ५८ ॥ प्रभातायांचशर्वर्यांदद्यादिदमुदीरयेत् ॥ त्वमेवावरणंयस्माल्लोकानामिहसर्वदा ॥ ५९ ॥ कार्पासाद्रेनमस्त
स्मादघौघध्वंसनोभव ॥ इतिकार्पासशैलेन्द्रंयोदद्याच्छर्वसंनिधौ ॥ १६० ॥ रुद्रलोकेवसेत्कल्पंततोराजाभवेदिह ॥ अथातःसंप्रवक्ष्यामिघृता
चलमनुत्तमम् ॥ ६१ ॥ तेजोमयंघृतंपुण्यंमहापानकनाशनम् ॥ विंशत्याघतकुम्भानामुत्तमःस्याद्घृताचलः ॥ ६२ ॥ दशभिर्मध्य
मःप्रोक्तःपञ्चभिस्त्वधमःस्मृतः ॥ अल्पवित्तोऽपिकुर्वीतद्वाभ्यामिहविधानतः ॥ ६३ ॥ विष्कम्भपर्वतांस्तद्वच्चतुर्भागेनकल्पयेत् ॥ शा
लितण्डुलपात्राणिकुम्भोपरिनिवेशयेत् ॥ ६४ ॥ कारयेत्संहतानुच्चान्यथाशोभंविधानतः ॥ वेष्टयेच्छुक्लवासोभिरिक्षुदण्डफलादिकैः ॥ ६५ ॥
धान्यपर्वतवत्सर्वंविधानमिहपठ्यते ॥ अधिवासनपूर्वंहितद्वद्धोमसुरार्चनम् ॥ ६६ ॥ प्रभातायांचशर्वर्यांगुरवेविनिवेदयेत् ॥ विष्कम्भपर्वतांस्तद्व
हत्विग्भ्यःशान्तमानसः ॥६७॥ संयोगाद्घृतमुत्पन्नंयस्मादमृततेजसि ॥ तस्माद्घृतार्चिर्विश्वात्माप्रीयतामत्रशंकरः ॥ ६८ ॥ यस्मात्तेजोमयंब्रह्मघृ
तेचैवव्यवस्थितम् ॥ घतपर्वतरूपेणतस्मान्नःपाहिभूधर ॥६९॥ अनेनविधिनादद्याद्घृताचलमनुत्तमम् ॥ महापातकयुक्तोऽपिलोकमायातिशाम्भव
म् ॥ १७० ॥ हंससारसयुक्तेनकिङ्किणीजालमालिना ॥ विमानेनाप्सरोभिश्चसिद्धविद्याधरैर्वृतः ॥ ७१॥ विचरेत्पितृभिःसार्धंयावदाभूतसम्प्लवम्॥
अथातःसंप्रवक्ष्यामिरत्नाचलमनुत्तमम् ॥ ७२ ॥ मुक्ताफलसहस्रेणपर्वतस्स्यादनुत्तमः ॥ मध्यमःपञ्चशतिकस्त्रिशतेनाधमःस्मृतः ॥ ७३ ॥ चतुर्थां
शेनविष्कम्भपर्वताःस्युःसमन्ततः॥पूर्वेणवज्रगोमेदैर्दक्षिणेनेन्द्रनीलकैः ॥७४॥ पुष्परागैर्युतःकार्योविद्वद्भिर्गन्धमादनः ॥ वैडूर्यविद्रुमैःपश्चात्संमिश्रो
विपुलाचलः ॥ ७५ ॥ पद्मरागैःससौवर्णैरुत्तरेणापिविन्यसेत् ॥ धान्यपर्वतवत्सर्वमत्रापिपरिकल्पयेत् ॥ ७६ ॥ तद्वदावाहनंकृत्वावृक्षान्देवांश्च
काञ्चनान् ॥ पूजयेत्पुष्पगन्धाद्यैःप्रभातेस्याद्विसर्जनम ॥ ७७ ॥ पूर्ववद्गुरुऋत्विग्भ्यइमंमन्त्रमुदीरयेत् ॥ यथादेवगणाःसर्वेसर्वरत्नेष्ववस्थिताः ॥
॥ ७८ ॥ त्वंचरत्नमयोनित्यमतःपाहिमहाचल ॥ यस्माद्रत्नप्रदानेनतुष्टिमेतिजनार्दनः ॥ ७९॥ पूजामन्त्रप्रसादेनतस्मान्नःपाहिपर्वत ॥ अनेनविधि
नायस्तुदद्याद्रत्नमयंगिरिम् ॥ १८० ॥ सयातिवैष्णवंलोकममरेश्वरपूजितः ॥ यावत्कल्पशतंसाग्रंवसेत्तत्रनराधिप ॥ ८१ ॥ रूपारोग्यगुणोपेतःसप्त
द्वीपाधिपोभवेत् ॥ ब्रह्महत्यादिकंकिञ्चिदत्रामुत्राथवाकृतम् ॥ ८२ ॥ तत्सर्वंनाशमायातिगिरिर्वज्राहतोयथा ॥ अथातःसंप्रवक्ष्यामिरौप्याचल
मनुत्तमम् ॥ ८३ ॥ यत्प्रदानान्नरोयातिसोमलोकंनगोत्तम ॥ दशभिःपलसाहस्रैरुत्तमोरजताचलः ॥ ८४ ॥ पञ्चभिर्मध्यमःप््रोक्तस्तदर्धे

नाधमःस्मृतः ॥ अशक्तोविंशतेरूर्द्ध्वंकारयेच्छक्तितःसदा ॥ ८५ ॥ विष्कंभपर्वतांस्तद्वत्तुरीयांशेनकल्पयेत् ॥ पूर्ववद्राजतान्कुर्यान्मन्दरादी
न्विधानतः ॥ ८६ ॥ कलधौतमयांस्तद्वल्लोकेशान्कारयेद्बुधः ॥ ब्रह्मविष्ण्वर्कवान्कार्योनितम्बोऽत्रहिरण्मयः ॥ ८७ ॥ राजतंस्यात्तदन्ये
षांपर्वतानांचकाञ्चनम् ॥ शेषंचपूर्ववत्कुर्याद्धोमजागरणादिकम् ॥ ८८ ॥ दद्यात्तद्वत्प्रभातेतुगुरवेरौप्यपर्वतम् ॥ विष्कंभशैलानृत्विग्भ्यः
पूज्यवस्त्रविभूषणैः ॥ ८९ ॥ इमंमन्त्रंपठन्दद्याद्दर्भपाणिर्विमत्सरः ॥ पितॄणांवल्लभंयस्मादिन्दोर्वाशङ्करस्यच ॥ १९० ॥ रजतंपाहित
स्मान्नःशोकसंसारसागरात् ॥ इत्थंनिवेश्ययोदद्याद्रजताचलमुत्तमम् ॥ ९१ ॥ गवामयुतसाहस्रफलमाप्नोतिमानवः ॥ सोमलोकेसगंधर्वैःकिन्नरा
प्सरसांगणैः ॥ ९२ ॥ पूज्यमानोवसेद्विद्वान्यावदाभूतसंप्लवम् ॥ अथातःसंप्रवक्ष्यामिशर्करचलमुत्तमम् ॥ ९३ ॥ यस्यप्रदानाद्विष्ण्वर्करुद्रास्तुष्य
न्तिसर्वदा ॥ अष्टभिःशर्कराभारैरुत्तमःस्यान्महाचलः ॥९४॥ चतुर्भिर्मध्यमःप्रोक्तोभाराभ्यामधमःस्मृतम् ॥ भारेणचार्द्धभारेणकुर्याद्यःस्वल्पवित्त
वान् ॥९५॥ विष्कंभपर्वतान्कुर्यात्तुरीयांशेनमानवः॥ धान्यपर्वतवत्सर्वंहैमाम्बरसुसंयुतम् ॥९६॥ मेरोरुपरितःस्थाप्यंहैमंतत्रतरुत्रयम् ॥ मंदारःपारि
जातश्चतृतीयःकल्पपादपः ॥९७॥ एतद्वृक्षत्रयंमूर्ध्निसर्वेष्वपिनिवेशयेत्॥हरिचन्दनसंतानौपूर्वपश्चिमभागयोः ॥९८॥ निवेश्यौसर्वशैलेषुविशेषाच्छर्क
राचले ॥ मन्दरेकामदेवस्तुप्रत्यग्वक्त्रःसदाभवेत् ॥९९॥ गंधमादनशृंगेतुधनदःस्यादुदङ्मुखः॥ प्राङ्मुखोवेदमूर्तिस्तुहंसःस्याद्विपुलाचले ॥२००॥
हैमीभवेत्सुपार्श्वेतुसुरभीदक्षिणामुखी ॥ धान्यपर्वतवत्सर्वमावाहनमखादिकम् ॥ १ ॥ कृत्वाथगुरवेदद्यान्मध्यमंपर्वतोत्तमम् ॥ ऋत्विग्भ्यश्चतुरः
शैलानिमान्मन्त्रानुदीरयेत् ॥२॥ सौभाग्यामृतसारोऽयंपरमःशर्कराचलः ॥ तस्मादानन्दकारीत्वंभवशैलेन्द्रसर्वदा ॥ ३ ॥ अमृतंपिबतांयेतुपतितां
भुविशीकराः ॥ देवानांतत्समुत्थस्त्वंपाहिनःशर्कराचल ॥ ४ ॥ मनोभवधनुर्मध्यादुद्भूताशर्करापुनः ॥ तन्मयोऽसिमहाशैलपाहिसंसारसागरात्॥
॥ ५ ॥ योदद्याच्छर्कराशैलमनेनविधिनानरः ॥ सर्वपापविनिर्मुक्तःप्रयातिब्रह्ममन्दिरम् ॥ ६ ॥ चन्द्रसूर्यप्रतीकाशमधिरुह्यानुजीविभिः ॥ सहै
वयानमुत्तिष्ठेत्ततोविष्णुप्रभोदिवि ॥ ७ ॥ ततःकल्पशतान्तेतुसप्तद्वीपाधिपोभवेत् ॥ आयुरारोग्यसंपन्नोयावज्जन्मायुतत्रयम् ॥ ८ ॥ भोजनंश
क्तितःकुर्यात्सर्वशैलेष्वमत्सरः ॥ स्वयंचाक्षारलवणमश्नीयात्तदनुज्ञया ॥ ९ ॥ पर्वतोपस्करान्सर्वान्प्रापयेद्ब्राह्मणालयम् ॥ एतत्तेसर्वमाख्यातं
शैलदानमनुत्तमम् ॥ २१० ॥ यदन्यद्रोचतेतुभ्यंतन्मांपृच्छस्वपार्थिव ॥ भीष्मउवाच ॥ भगवन्भवसंसारसागरोत्तारकारकम् ॥ ११ ॥ किञ्चि
द्व्रतंसमाचक्ष्वस्वर्गारोग्यफलप्रदम् ॥ पुलस्त्यउवाच ॥ सौरधर्मंप्रवक्ष्यामिनाम्नाकल्याणसप्तमीम् ॥ १२ ॥ विशोकसप्तमींतद्वत्तृतीयांफलसप्तमी

म् ॥ शर्करासप्तमींकुर्यात्तथाकमलसप्तमीम् ॥ १३ ॥ मन्दारसप्तमींषष्ठींसप्तमींशुभसप्तमीम् ॥ सर्वाःपुण्यफलाःप्रोक्ताःसर्वादेवर्षिपूजिताः॥ १४ ॥
विधानमासांवक्ष्यामियथावदनुपूर्वशः ॥ यदातुशुक्लसप्तम्यामादित्यस्यदिनंभवेत् ॥ १५ ॥ सातुकल्याणिनीनामविजयाचनिगद्यते ॥ प्रातर्ग
व्येनपयसास्नानंनद्यांसमाचरेत् ॥ १६ ॥ शुक्लाम्बरधरःपद्ममक्षतैःपरिकल्पयेत ॥ प्राङ्मुखोऽष्टदलंमध्येतद्वद्वृत्तांचकर्णिकाम् ॥ १७॥ पुष्पाक्षता
द्दैर्देवेशंविन्यसेत्सर्वतःक्रमात् ॥ पूर्वेणतपनायेतिमार्तण्डायेतिवैततः ॥ १८ ॥ याम्येदिवाकरायेतिविधात्रइतिनैर्ऋते ॥ पश्चिमेवरुणायेतिभास्कराये
तिचानिले ॥१९॥ सौम्येविकर्तनायेतिदेवायेत्यष्टमेदले ॥आदावंतेचमध्येचनमोऽस्तुपरमात्मने॥२२०॥मन्त्रैरेतैस्समभ्यर्च्यनमस्कारान्तदापितैः॥
शुक्लैर्वस्त्रैःफलैर्भक्ष्यैर्धूपमाल्यानुलेपनैः ॥२१॥ स्थण्डिलेपूजयेद्भक्त्यागुडेनलवणेनवै॥ततोव्याहृतिमन्त्रेणविसृज्यद्विजपुङ्गवान् ॥२२॥ शक्तितस्तर्प
येद्भक्त्यागुडक्षीरघृतादिभिः ॥ तिलपात्रंहिरण्यंचब्राह्मणायनिवेदयेत् ॥ २३ ॥ एवंनियमकृत्सुप्त्वाप्रातरुत्थायमानवः ॥ कृतस्नानजपोविप्रैःसहैव
घृतपायसम् ॥ २४ ॥ भुक्त्वाचवेदविदुषिवैडालव्रतवर्जिते ॥ घृतपात्रंसकनकंसोदकुंभंनिवेदयेत् ॥ २५ ॥ प्रीयतामत्रभगवान्परमात्मादिवाकरः॥
अनेनविधिनासर्वंमासिमासिसमाचरेत् ॥ २६ ॥ ततस्त्रयोदशमासिगाश्चदद्यात्त्रयोदश ॥ वस्त्रालंकारसंयुक्ताःस्वर्णशृंगाःपयस्विनीः ॥ २७ ॥
एकामपिप्रदद्याच्चवित्तहीनोविमत्सरः ॥ नवित्तशाठ्यंकुर्वीतयतोमोहात्पतत्यधः ॥ २८ ॥ अनेनविधिनायस्तुकुर्यात्कल्याणसप्तमीम् ॥ सर्वपापवि
निर्मुक्तःसूर्यलोकेमहीयते ॥ २९ ॥ आयुरारोग्यमैश्वर्यमनंतमिहजायते ॥ सर्वपापहरांचेयंसर्वदेवतपूजिता ॥ २३० ॥ सर्वदुष्टोपशमनीस
दाकल्याणसप्तमी ॥ इमामनन्तफलदांयस्तुकल्याणसप्तमीम् ॥३१॥ शृणोतियःपठेद्वापिसचपापैःप्रमुच्यते ॥ विशोकसप्तमींतद्वद्वक्ष्यामिनृपसत्तम
॥ ३२ ॥ यामुपोष्यनरःशोकंनकदाचिदिहाश्नुते ॥ माघेकृष्णतिलैःस्नातःपंचम्यांशुक्लपक्षतः ॥ ३३ ॥ कृताहारःकृसरयादन्तधावनपूर्वकम् ॥
उपवासव्रतंकृत्वाब्रह्मचारीनिशिस्वपेत् ॥ ३४ ॥ ततःप्रभातउत्थायकृतस्नानजपःशुचिः ॥ कृत्वातुकाञ्चनंपद्ममर्कायेतिप्रपूजयेत् ॥ ३५ ॥ कर
वीरेणरक्तेनरक्तवस्त्रयुगेनच ॥ यथाविशोकंभुवनंत्वयैवादित्यसर्वदा ॥ ३६ ॥ तथाविशोकतामेस्यात्त्वद्भक्तिःप्रतिजन्मच ॥ एवंसम्पूज्यषष्ठ्यांतुभ
क्त्यासम्पूजयेद्द्विजान् ॥ ३७ ॥ स्वयंसम्प्राश्यगोमूत्रमुत्थायकृतनैत्यकः ॥ सम्पूज्यविप्रान्यत्नेनगुडपात्रसमन्वितम् ॥ ३८ ॥ सद्वस्त्रयुग्मंपद्मंच
ब्राह्मणायनिवेदयेत् ॥ अतैललवणंभुक्त्वासप्तम्यांमौनसंयुतः ॥ ३९ ॥ ततःपुराणश्रवणंकर्तव्यंभूतिमिच्छता ॥ अनेनविधिनासर्वमुभयोरपिपक्ष
योः ॥२४०॥ कुर्याद्यावत्पुनर्माघशुक्लपक्षस्यसप्तमी॥व्रतांतेकलशंदद्यात्सुवर्णकमलान्वितम् ॥४१॥ शय्यांसोपस्करांदद्यात्कपिलांचपयस्विनीम् ॥

अनेनविधिनायस्तुवित्तशाठ्यंनवर्जितः ॥ ४२ ॥ विशोकसप्तमींकुर्यात्सयातिपरमांगतिम् ॥ यावज्जन्मसहस्राणांसाग्रंकोटिशतंभवेत् ॥
॥ ४३ ॥ तावन्नशोकमाप्नोतिरोगदौर्गत्यवर्जितः ॥ यंयंकामयतेकामंतंतंप्राप्नोतिपुष्कलम् ॥ ४४ ॥ निष्कामंकुरुतेयस्तुसपरंब्रह्मगच्छति ॥
यःपठेच्छृणुयाद्वापिविशोकाख्यांतुसप्तमीम् ॥४५॥ सोऽपीन्द्रलोकमासाद्यनदुःखीजायतेक्वचित् ॥ अन्यामपिप्रवक्ष्यामिनाम्नातुफलसप्तमीम्॥४६॥
यामुपोष्यनरःपापैर्विमुक्तःस्वर्गभाग्भवेत् ॥ मार्गशीर्षेशुभेमासिपञ्चम्यांनियतव्रतः ॥४७॥ षष्ठीमुपोष्यकमलंकारयित्वातुकाञ्चनम् ॥ शर्करासंयुतं
दद्याद्ब्राह्मणायकुटुम्बिने ॥ ४८ ॥ रूपंचकाञ्चनंकृत्वाफलस्यैकस्यधर्मवित् ॥ दद्याद्विकालवेलायांभानुर्मेप्रीयतामिति ॥ ४९ ॥ शक्त्यातुविप्रान्स
म्पूज्यसप्तम्यांक्षीरभोजनम् ॥ कृत्वाकुर्यात्फलत्यागंयावत्स्यात्कृष्णसप्तमी ॥२५०॥ तामुपोष्याथविधिवदनेनैवक्रमेणतु ॥ तद्वद्धेमफलंदत्त्वासुवर्ण
कमलान्वितम् ॥ ५१ ॥ शर्करापात्रसंयुक्तंवस्त्रमालासमन्वितम् ॥ संवत्सरमनेनैवविधिनोभयसप्तमीम् ॥ ५२ ॥ उपोष्यदद्यात्क्रमशःसूर्यमन्त्रमु
दीरयेत ॥ भानुरर्कोरविर्ब्रह्मासूर्यःशक्रोहरिःशिवः ॥ ५३ ॥ श्रीमान्विभावसुस्त्वष्टावरुणःप्रीयतामिति ॥ प्रतिमासंचसप्तम्यामेकैकंनामकीर्त्तयेत्
॥ ५४ ॥ प्रतिपक्षंफलत्यागमेतत्कुर्वन्समाचरेत् ॥ व्रतान्तेविप्रमिथुनंपूजयेद्वस्त्रभूषणैः ॥ ५५ ॥ शर्कराकलशंदद्याद्धेमपद्मफलान्वितम् ॥ यथान
विफलःकामस्त्वद्भक्तानांसदाभवेत् ॥ ५६ ॥ तथानन्तफलावाप्तिरस्तुमेजन्मजन्मनि ॥ इमामनन्तफलदांयःकुर्यात्फलसप्तमीम् ॥ ५७ ॥ भूतभ
व्यांश्चपुरुषांस्तारयेदेकविंशतिम् ॥ यःशृणोतिपठेद्वापिसोऽपिकल्याणभाग्भवेत् ॥५८॥ सर्वपापविशुद्धात्मासूर्यलोकेमहीयते ॥ सुरापानादिकंकि
ञ्चिदत्रामुत्रचवाकृतम् ॥ ५९ ॥ तत्सर्वंनाशमायातियःकुर्यात्फलसप्तमीम् ॥ शर्करासप्तमींवक्ष्येतद्वत्कल्मषनाशिनीम् ॥ २६० ॥ आयुरारोग्यमै
श्वर्यंययानन्तंप्रजायते॥माधवस्यसितेपक्षेसप्तम्यांनियतव्रतः॥६१॥ प्रातःस्नात्वातिलैःशुभ्रैःशुद्धमाल्यानुलेपनः ॥ स्थण्डिलेपद्ममालिख्यकुङ्कुमेन
सकर्णिकम् ॥ ६२ ॥ तस्मिन्नमःसवित्रेतिगन्धपुष्पंनिवेदयेत् ॥ स्थापयेदुदकुम्भंचशर्करापात्रसंयुतम् ॥६३॥ शुक्लवस्त्रैरलङ्कृत्यशुक्लमाल्यानुलेपनैः॥
स्वर्णपुष्पसमायुक्तंमन्त्रेणानेनपूजयेत् ॥ ६४ ॥ विश्ववेदमयोयस्मात्त्वंवेदेषुचपठ्यसे ॥ त्वमेवामृतसर्वस्वमतःशान्तिप्रयच्छमे ॥६५॥ पञ्चगव्यंततः
पीत्वास्वपेत्तत्पार्श्वतःक्षितौ ॥ सौरसूक्तंजपन्नास्तेपुराणश्रवणेनच ॥ ६६ ॥ अहोरात्रेगतेपश्चादष्टम्यांकृतनैत्यकः ॥ तत्सर्ववेदविदुषेब्राह्मणायनिवे
दयेत् ॥६७॥ भोजयेच्छक्तितोविप्राञ्शर्कराघृतपायसैः ॥ भुञ्जीतातैललवणंस्वयमप्यथवाग्यतः ॥६८॥ अनेनविधिनासर्वंमासिमासिसमाचरेत् ॥
संवत्सरन्तेशयनंशर्कराकलशान्वितम् ॥ ६९ ॥ सर्वोपस्करसंयुक्तंतथैकांगांपयस्विनीम् ॥ गृहंचशक्तिमान्दद्यात्समस्तोपस्करान्वितम् ॥ २७० ॥

सहस्रेणाथनिष्काणांकृत्वादद्याच्छतेनवा ॥ दशभिर्वात्रिभिर्वापिनिष्केणैकेनवापुनः ॥७१॥ पद्मंस्वशक्तितोदद्यात्पूर्ववन्मन्त्रपाठनम् ॥ वित्तशाठ्यंन
कुर्वीतकुर्वन्दोषान्समश्नुते ॥ ७२ ॥ अमृतंपिबतोवक्रात्सूर्यस्यामृतबिन्दवः ॥ समुत्पेतुर्द्धरण्यांयेशालिमुद्गेक्षवस्तुते ॥७३ ॥ शर्करायारसस्तस्मादि
क्षुसारोऽमृतात्मवान् ॥ इष्टारवेरतःपुण्याशर्कराहव्यकव्ययोः ॥७४॥ शर्करासप्तमीचेयंवाजिमेधफलप्रदा ॥ सर्वदुष्टोपशमनीपुत्रपौत्रविवर्धिनी॥७५॥
यःकुर्यात्परयाभक्त्यासपरंब्रह्मगच्छति ॥ कल्पमेकंवसेत्स्वर्गेततोयातिपरंपदम् ॥ ७६ ॥ इदमनघशृणोतियःस्मरेद्वापरिपठतीहसुरेश्वरस्यलोके
॥ मतिमपिचददातिसोऽपिदेवैरमरपुरेपरिपूज्यतेमुनीन्द्रैः ॥ ७७ ॥ अतःपरंप्रवक्ष्यामितद्वत्कमलसप्तमीम् ॥ यस्यास्संकीर्त्तनादेवतुष्यतीहदि
वाकरः ॥ ७८ ॥ वसन्तामलसप्तम्यांसुस्नातोगौरसर्षपैः ॥ तिलपात्रेचसौवर्णंनिधायकमलंशुभम् ॥ ७९ ॥ वस्त्रयुग्मावृतंकृत्वागन्धपुष्पैरथार्चये
त् ॥ नमस्तेपद्महस्तायनमस्तेविश्वधारिणे ॥ २८० ॥ दिवाकरनमऽस्तेस्तुप्रभाकरनमोऽस्तुते ॥ ततोद्विकालवेलायामुदकुम्भसमन्वितम् ॥
॥ ८१ ॥ विप्रायदद्यात्सम्पूज्यवस्त्रमाल्याविभूषणैः ॥ शक्तितःकपिलांदद्यादलङ्कृत्यविधानतः ॥ ८२ ॥ अहोरात्रेगतेपश्चादष्ट
म्यांभोजयेद्द्विजान् ॥ यथाशक्तिचभुञ्जीतविमांसंतैलवर्जितम् ॥ ८३ ॥ अनेनविधिनाशुक्लसप्तम्यांमासिमासिच ॥ सर्वंसमाचरेद्भक्त्यावि
त्तशाठ्यविवर्जितः ॥ ८४ ॥ व्रतान्तेशयनंदद्यात्सुवर्णकमलान्वितम् ॥ ८५ ॥ गाश्चप्रदद्याच्छक्त्यातुसुवर्णस्यपयस्विनीः ॥ भाजना
सनदीपादीन्दद्यादिष्टानुपस्करान् ॥ ८६ ॥ अनेनविधिनायस्तुकुर्यात्कमलसप्तमीम् ॥ लक्ष्मीमनन्तामभ्येतिसूर्यलोकेचमोदते ॥ ८७ ॥
कल्पेकल्पेततोलोकान्सप्तगत्वापृथक्पृथक् ॥ अप्सरोभिःपरिवृतस्ततोयातिपरांगतिम् ॥ ८८ ॥ पश्येदिमांयःशृणुयान्मुहूर्तंपठेच्चभक्त्या
थमतिंददाति ॥ सोऽप्यत्रलक्ष्मीममलामवाप्यगन्धर्वविद्याधरलोकमेति ॥ ८९ ॥ अतःपरंप्रवक्ष्यामिसर्वपापप्रणाशिनीम् ॥ सर्वकाम
प्रदांपुण्यांनाम्नामन्दारसप्तमीम् ॥ २९० ॥ माघस्यामलपक्षेतुपञ्चम्यांलघुभुङ्नरः ॥ दन्तकाष्ठंततःकृत्वाषष्ठीमुपवसेद्बुधः ॥ ९१ ॥
विप्रान्सम्पूजयित्वातुमन्दारंप्राशयेन्निशि ॥ ततःप्रभातउत्थायकृत्वास्नानंपुनर्द्विजान् ॥ ९२ ॥ भोजयेच्छक्तितःकुर्यान्मन्दारकुसुमाष्टकम् ॥
सौवर्णंपुरुषंतद्वत्पद्महस्तंसुशोभनम् ॥ ९३ ॥ पद्मंकृष्णतिलैःकृत्वाताम्रपात्रेऽष्टपत्रकम् ॥ हेममन्दारकुसुमैर्भास्करायेतिपूर्वतः ॥ ९४ ॥
नमस्कारेणतद्वच्चसूर्यायेत्यमलेदले ॥ दक्षिणेतद्वदर्कायतथार्यम्णेचनैर्ऋते ॥ ९५ ॥ पश्चिमेवेदधाम्नेचवायव्येचण्डभानवे ॥ पूष्णेचोत्तर
तःपूज्यआनन्दायेतितत्परम् ॥ ९६ ॥ कर्णिकायांचपुरुषःस्थाप्यःसर्वात्मनेऽपिच ॥ शुक्लवस्त्रैःसमावेष्ट्यभक्ष्यैर्माल्यफलादिभिः ॥ ९७ ॥ एवमभ्य

र्च्यतत्सर्वंदद्याद्वेदविदेपुनः ॥ भुञ्जीतातैलवणंवाग्यतःप्राङ्मुखोगृही ॥ ९८ ॥ अनेनविधिनासर्वंसप्तम्यांमासिमासिच ॥ कुर्यात्संवत्सरंया
वद्वित्तशाठ्यविवर्जितः ॥ ९९ ॥ एतदेवव्रतान्तेतुनिधायकलशोपरि ॥गोभिर्विभवतःसार्द्धंदातव्यंभूतिमिच्छता॥३००॥ नमोमन्दारनाथायमन्दार
भवनायच ॥ त्वंरवेतारयस्वास्मानस्मात्संसारसागरात् ॥ १ ॥ अनेनविधिनायस्तुकुर्यान्मन्दारसप्तमीम् ॥ विपाप्मासुखीमर्त्यःकल्पंचदिविमोद
ते ॥ २ ॥ इमामघौघपटलभीषणध्वान्तदीपिकाम् ॥ गच्छन्सङ्कुलसंसारशर्वर्यांनस्खलेन्नरः ॥ ३ ॥ मन्दारसप्तमीमेतामीप्सितार्थफलप्रदाम्॥यःपठे
च्छृणुयाद्वापिसोऽपिपापैःप्रमुच्यते ॥ ४ ॥ अथान्यामपिवक्ष्यामिशोभनांशुभसप्तमीम् ॥ यामुपोष्यनरोरोगशोकौघात्तुप्रमुच्यते ॥ ५ ॥ पुण्य
माश्वयुजेमासिकृतस्नानजपःशुचिः ॥ वाचयित्वाततोविप्रानारभेच्छुभसप्तमीम् ॥ ६ ॥ कपिलांपूजयेद्भक्त्यागन्धमाल्यानुलेपनैः ॥ नमामिसूर्य
सम्भूतामशेषभुवनालयाम् ॥ ७ ॥ त्वामहंशुभकल्याणिस्वशरीरविशुद्धये ॥ अथकृत्वातिलप्रस्थंताम्रपात्रेणसंयुतम् ॥ ८ ॥ काञ्चनंवृषभंतद्वद्वस्त्रमा
ल्यगुडान्वितम् ॥ सोपधानंचविश्रामभाजनासनसंयुतम् ॥ ९ ॥ फलैर्नानाविधैर्भक्ष्यैर्घृतपायससंयुतैः ॥ दद्याद्विकालवेलायामर्यमाप्री
यतामिति ॥ ३१० ॥ पञ्चगव्यंचसंप्राश्यस्वपेद्भूमावसंस्तरे ॥ततःप्रभातेसञ्जातेभक्त्यासंतर्पयेद्विजान् ॥ ११ ॥ अनेनविधिनादद्यान्मासिमासिस
दानरः ॥ वाससीवृषभंहैमंतद्वद्गांकाञ्चनोद्भवाम् ॥१२॥ संवत्सरान्तेशयनमिक्षुदण्डगुडान्वितम् ॥ ताम्रपात्रेतिलप्रस्थंसौवर्णंवृषभंतथा॥१३॥ दद्याद्वे
दविदेसर्वंविश्वात्माप्रीयतामिति ॥ अनेनविधिनाविद्वान्कुर्याद्यःशुभसप्तमीम् ॥ १४ ॥ तस्यश्रीर्विमलाकीर्त्तिर्भवेज्जन्मनिजन्मनि ॥ अप्सरोगण
गन्धर्वैःपूज्यमानःसुरालये ॥ १५ ॥ वसेद्गणाधिपोभूत्वायावदाभूतसम्प्लवम् ॥ कल्पादाववतीर्णश्चसप्तद्वीपाधिपोभवेत्॥१६॥ भ्रूणहत्यासहस्रस्यब्र
ह्महत्याशतस्यच ॥ नाशायालमियंपुण्यापठचतेशुभसप्तमी ॥ १७ ॥ इमांपठेद्यःशृणुयान्मुहूर्तंपश्येत्प्रसंगादपिदीयमानम् ॥ सोऽप्यत्रसर्वाघवि
मुक्तदेहःप्राप्नोतिविद्याधरनायकत्वम्॥१८॥यावत्समास्सप्तनरःकरोतियःसप्तमींसप्तविधानयुक्ताम्॥ससप्तलोकाधिपतिःक्रमेणभूत्वापदंयातिपरंमुरारेः
॥ ३१९ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेपुष्करमाहात्म्यएकविंशोऽध्यायः ॥ २१ ॥ भीष्मउवाच ॥ भूर्लोकोऽथभुवर्लोकःस्वर्लोकोऽथमहर्ज
नः ॥ तपःसत्यंचसप्तैतेदेवलोकाःप्रकीर्त्तिताः ॥ १ ॥ पर्यायेणतुसर्वेषामाधिपत्यंकथंभवेत् ॥ इहलोकेशुभंरूपमायुरारोग्यमेवच ॥ २ ॥ लक्ष्मीश्चवि
पुलाब्रह्मन्कथंस्यात्सुरपूजित ॥ पुलस्त्यउवाच ॥ पुराहुताशनःसार्द्धंमारुतेनमहीतले ॥ ३ ॥ आदिष्टःपुरुहूतेनविनाशायसुरद्विषाम् ॥ निर्दग्धे
षुततस्तेनदानवेषुसहस्रशः ॥ ४ ॥ तारकःकमलाक्षश्चकालदंष्ट्रःपरावसुः ॥ विरोचनस्तुसंह्रादःप्रयातास्तेतदावसन् ॥ ५ ॥ अन्तःसमुद्रमा

विश्यसन्निवेशमकुर्वत ॥ अशक्ताइतितेऽप्यग्निमारुताभ्यामुपेक्षिताः ॥ ६ ॥ ततःप्रभृतिवैदेवान्मानुषान्सभुजङ्गमान् ॥ सम्पीड्यचमुनीन्सर्वा
न्प्रविशन्तिपुनर्जलम् ॥ ७ ॥ एवंयुगसहस्राणितेवीराःसततपश्चच ॥ जलदुर्गबलाद्राजन्पीडयन्तिजगत्त्रयम् ॥ ८ ॥ ततःपुनरथोवह्निमारुता
वमराधिपः ॥ आदिदेशाचिरादम्बुनिधिर्गेपविशोष्यताम् ॥ ९ ॥ यस्मादस्मद्विषांचैपशरणंवरुणालयः ॥ तस्माद्भवद्भ्यामद्यैवशोपमेपप्रणीयताम्
॥ १० ॥ तावूचतुस्ततःशक्रंमयशम्बरसूदनम् ॥ अधर्मएषदेवेन्द्रसागरस्यविनाशनम् ॥ ११ ॥ यस्मार्ज्जीवनिकायस्यमहतःसंक्षयोभवेत् ॥
तस्मादुपायमन्यंतुसमाश्रयपुरन्दर ॥ १२ ॥ यस्ययोजनमात्रेऽपिपिर्जीवकोटिशतानिच॥निवसन्तिसुरश्रेष्ठसकथंनाशमर्हति॥१३॥ पुलस्त्यउवाच॥
एवमुक्तःसुरेन्द्रस्तुक्रोधसंरक्तलोचनः॥उवाचेदंवचोरोपादमरावग्निमारुतौ॥१४॥इन्द्रउवाच॥नधर्माधर्मसंयोगंप्राप्नुवन्त्यमगःक्वचित्॥भवन्तौतुविशेष
णमहात्मानौचतिष्ठतः ॥ १५ ॥ ममाज्ञानकृतायस्मान्मारुतेनसमंत्वया ॥ मुनिव्रतपरोभूत्वापरिगृह्यकलेवरम् ॥ १६ ॥ धर्मार्थशास्त्रगहितांयोनिंप्र
तिविभावसो ॥ तस्मादेकेनवपुपामुनिरूपेणमानुषे ॥१७॥ मारुतेनसमंलोकेतवजन्मभविष्यति ॥ यदातुमानुषत्वेऽपित्वयागण्डूपशोपितः ॥१८॥
भविष्यत्युदधिर्वह्नेतदादेवत्वमाप्स्यसि॥पुलस्त्यउवाच॥इतीन्द्रशापात्पतितौतत्क्षणात्तौमहीतले॥१९॥अवाप्तवन्तौदेहंचकुम्भाज्जन्मततोऽभवत्॥ मि
त्रावरुणयोर्वीर्याद्वसिष्ठश्चात्मजोऽभवत्॥२०॥ततोऽगस्त्यउग्रतपाबभूवमुनिसत्तमः॥अस्माद्भ्रातुःसवैभ्रातावसिष्ठस्यानुजोमुनिः ॥२१॥भीष्मउवाच॥
कथंचमित्रावरुणौपितरावस्यतौस्मृतौ॥जन्मकुम्भादगस्त्यस्ययथाभूत्तद्वदाधुना ॥२२॥ पुलस्त्यउवाच ॥ पुरापुराणपुरुषःकदाचिद्गन्धमादने॥भूत्वा
धर्मसुतोविष्णुश्चचारविपुलंतपः ॥ २३ ॥ तपसाचास्यभीतेनविघ्नार्थेप्रेपितावुभौ ॥ शक्रेणमाधवानङ्गावप्सरोगणसंयुतौ ॥ २४ ॥ यदाचगीतवाद्येन
भावहावादिनाहरिः ॥ नकाममाधवाभ्यांचमोहंनेतुमशक्यत ॥ २५ ॥ तदाकाममधुस्त्रीणांविपादमभजद्गणः ॥ संक्षोभायततस्तेषामूरुदेशान्नराग्रजः
॥२६॥ नारीमुत्पादयामासत्रैलोक्यस्यापिमोहिनीम्॥ संमोहितास्तयादेवास्तौतुचैवसुरावुभौ ॥२७॥ अप्सराणांसमक्षंहिदेवानामब्रवीद्धरिः॥उर्वशी
तिचनाम्नेयंलोकेख्यातिंगमिष्यति॥२८॥ततःकामयमानेनमित्रेणाहूयतोर्वशी॥प्रोक्तामांरमयस्वेतिवाढमित्यब्रवीच्चसा ॥२९ ॥ गच्छन्तीतुततःसूर्यलो
कीमिन्दीवरेक्षणा ॥ वरुणेनवृतापश्चाद्वचनंतमभाषत ॥ ३० ॥ मित्रेणाहंवृतापूर्वंममसूर्यःपतिःप्रभो ॥ उवाचवरुणश्चित्तंमयिसंन्यस्यगम्यताम् ॥
॥ ३१ ॥ गातायांबाढमित्युक्त्वामित्रःशापमदादथ ॥ अद्यैवमानुषेलोकेगच्छसोमसुतात्मजम् ॥ ३२ ॥ भजस्वेतियतोमिथ्याधर्मएषत्वयाकृतः ॥
जलकुम्भेततोवीर्यंमित्रेणवरुणेनच ॥ ३३ ॥ प्रक्षिप्तमथसञ्जातौद्वावेवमुनिसत्तमौ ॥ निमिर्नामनृपःस्त्रीभिःपुराद्यूतमदीव्यत ॥३४॥ तदन्तरेऽभ्याज

गामवसिष्ठोब्रह्मसम्भवः ॥ तस्यपूजामकुर्वाणंशशापसमुनिर्नृपम् ॥ ३५ ॥ विदेहस्त्वंभवस्वेतिशप्तस्तेनाप्यसौमुनिः ॥ अन्योन्यशापादुभयो र्विशरीरेतुतेजसी ॥ ३६ ॥ जग्मतुश्शापनाशायब्रह्माणंजगतःपतिम् ॥ अथब्रह्मसमादेशाह्लोचनेष्ववसन्निमिः ॥ ३७ ॥ निमेषाःस्युश्चलोकानां तद्विश्रामायपार्थिव ॥ वसिष्ठोऽप्यभवत्तस्मिञ्जलकुम्भेचपूर्ववत् ॥ ३८ ॥ ततोजातश्चतुर्बाहुःसाक्षसूत्रकमण्डलुः ॥ अगस्त्यइतिशान्तात्माबभूवऋषिसत्तमः ॥ ३९ ॥ मलयस्यैकदेशेतुवैखानसविधानतः ॥ सभार्यःसंवृतोविप्रैस्तपश्चक्रेसुदुष्करम् ॥ ४० ॥ ततःकालेनमहतातारकादिनिपीडितम् ॥ जगद्वीक्ष्यसकोपेनपीतवान्वरुणालयम् ॥ ४१ ॥ ततोऽस्यवरदास्सर्वेबभूवुःशङ्करादयः ॥ ब्रह्माविष्णुश्चभगवान्वरदानायजग्मतुः ॥ ४२ ॥ वरंवृणीष्वभद्रंतयश्चाभीष्टोऽत्रवैमुने ॥ अगस्त्यउवाच ॥ यावद्ब्रह्मसहस्राणांपञ्चविंशतिकोटयः ॥ ४३ ॥ वैमानिकोभविष्यामिदक्षिणाम्बरवर्त्मनि ॥ मद्विमानोदयात्कुर्याद्यःकश्चित्पूजनंमम ॥ ४४ ॥ ससप्तलोकाधिपतिःपर्यायेणभविष्यति ॥ यस्त्वाश्रमंपुष्करेतुमन्नाम्नापरिकीर्तयेत् ॥ ४५ ॥ सचैवपुण्यतांयातुवरएष्वृतोमया ॥ श्राद्धंयेऽत्रकरिष्यन्तिपिण्डपूर्वंतुभक्तितः ॥४६॥ तेषांपितृगणास्सर्वेमयासहदिविस्थिताः ॥ एतत्कालंवसिष्यन्तिएषएववरोमम ॥४७॥ एवमस्त्वितितेऽप्युक्त्वाजग्मुर्देवायथागतम् ॥ तस्मादर्घःप्रदातव्योह्यगस्त्यायसदाबुधैः ॥ ४८ ॥ भीष्मउवाच ॥ कथमर्घप्रदानंचकर्तव्यंतस्यवैमुनेः ॥ विधानंयदगस्त्यस्यपूजनेतद्वदस्वमे ॥ ४९ ॥ पुलस्त्यउवाच ॥ प्रत्यूपसमयेविद्वान्कुर्यादस्योदयेनिशि ॥ स्नानंशुक्लतिलैस्तद्वच्छुक्लमाल्याम्बरोगृही ॥ ५० ॥ स्थापयेदव्रणंकुम्भंमाल्यवस्त्रविभूषितम् ॥ पञ्चरत्नसमायुक्तंघृतपात्रेणसंयुतम् ॥५१॥ अङ्गुष्ठमात्रंपुरुषंतथैवसुवर्णमध्यायतबाहुदण्डम् ॥ चतुर्भुजंकुम्भमुखेनिधायधान्यानिसप्ताचलसंयुतानि ॥५२॥ सकांस्यपात्राक्षतशुक्लयुक्तंमन्त्रेणदद्याद्द्विजपुङ्गवाय ॥ उत्क्षिप्यकुम्भोपरिदीर्घबाहुमनन्यचेतायमदिङ्मुखस्थम् ॥५३॥ श्वेतांचदद्याद्यदिशक्तिरस्तिरौप्यैःखुरैर्हेममुखींसवत्साम् ॥ धेनुंनरःक्षीरवतींप्रणम्यस्रग्वस्त्रघण्टाभरणांद्विजाय ॥ ५४ ॥ आसप्तरात्रादुदयेनृपास्यदातव्यमेतत्सकलंनरेण ॥ यावत्समास्सप्तदशाथवास्युरथोर्द्ध्वमप्यत्रवदन्तिकेचित् ॥ ॥ ५५ ॥ काशपुष्पप्रतीकाशअग्निमारुतसम्भव ॥ मित्रावरुणयोःपुत्रकुम्भयोनेनमोऽस्तुते ॥ ५६ ॥ प्रत्यब्दंचफलत्यागमेवंकुर्वन्नसीदति ॥ होमंकृत्वाततःपश्चाद्वर्तयेन्मानवःफलम् ॥ ५७ ॥ अनेनविधिनायस्तुपुमानर्घंनिवेदयेत् ॥ इमंलोकमवाप्नोतिरूपारोग्यफलप्रदम् ॥ ५८ ॥ द्वितीयेनभुवर्लोकंस्वर्लोकंचततःपरम् ॥ सप्तैवलोकानाप्नोतिसप्तार्घान्यःप्रयच्छति ॥ ५९ ॥ इतिपठतिशृणोतियोहिसम्यक्चरितमगस्त्यसमर्चनंचपश्येत् ॥ मतिमपिचददातिसोऽपिविष्णोर्भवनगतःपरिपूज्यतेऽमरौघैः ॥ ६० ॥ भीष्मउवाच ॥ सौभाग्यारोग्यफलदममित्रक्षयकारकम् ॥ भुक्ति

मुक्तिप्रदंयच्चतन्मेब्रूहिमहामते ॥ ६१ ॥ पुलस्त्यउवाच ॥ यदुमायांपुरादेवउवाचान्धकसूदनः ॥ कथासुसम्प्रवृत्तासुधर्म्यासुललितासुच ॥ ६२ ॥
तदिदानींप्रवक्ष्यामिभुक्तिमुक्तिफलप्रदम् ॥ गौर्युवाच ॥ दत्तःशापोहिसावित्र्यामह्यंलक्ष्म्यैसुरेश्वर ॥६३ ॥ यथालक्ष्मीप्रधानत्वमहंयामितथावद ॥
शङ्करउवाच॥ शृणुष्वावहितादेवितथैवान्यत्स्वयङ्कृतम् ॥ ६४ ॥ नराणामथनारीणामाराधनमनुत्तमम् ॥ नभस्येवाथवैशाखेपुण्येमार्गशिरस्यथ
॥ ६५ ॥ शुक्लपक्षेतृतीयायांस्नातःसगौरसर्षपैः ॥ गोरोचनंसगोमूत्रंगोदुग्धंचघृतंतथा ॥ ६६॥ दधिचन्दनसंमिश्रंललाटेतिलकंन्यसेत्॥सौभाग्यारो
ग्यकृद्यस्मात्सदाचललिताप्रियम् ॥ ६७ ॥ प्रतिपक्षंतृतीयायांपुमान्वापिसुवासिनी ॥ धारयेद्रक्तवस्त्राणिकुसुमानिसितानिच ॥ ६८ ॥ विधवा
शुक्लवस्त्रंवैत्वेकमेवहिधारयेत् ॥ कुमारीशुक्लसूक्ष्मेचपरिदध्यात्तुवाससी ॥ ६९ ॥ देवींचपञ्चगव्येनततःक्षीरेणकेवलम् ॥ स्नापयेन्मधुनातद्वत्पुष्प
गन्धोदकेनतु ॥ ७० ॥ पूजयेच्छुक्लपुष्पैस्तुफलैर्नानाविधैरपि ॥ धान्यलाजादिलवणगुडक्षीरघृतान्वितैः ॥ ७१ ॥ शुक्लाक्षततिलैरर्चाकार्यादेवि
सदात्वया ॥ पादयोरर्चनंकुर्यात्प्रतिपक्षंवरानने ॥७२॥ वरदायैनमःपादौतथागुल्फौश्रियैनमः ॥ अशोकायैनमोजङ्घेपार्वत्यैजानुनीतथा ॥७३॥
ऊरूमाङ्गल्यकारिण्यैवामदेव्यैतथाकटिम् ॥ पद्मोदरायैजठरंनमःकण्ठेश्रियैनमः ॥७४॥ करौसौभाग्यदायिन्यैबाहूंचसुमुखश्रियै ॥ मुखंदर्पविनाशि
न्यैस्मरदायैस्मितंपुनः ॥ ७५ ॥ गौर्यैनमस्तथानासामुत्पलायैचलोचने ॥ तुष्ट्यैललाटमलकंकात्यायन्यैनमःशिरः ॥ ७६ ॥ नमोगौर्य्यैनमः
पुष्ट्यैनमःकान्त्यैनमःश्रियै ॥ रम्भायैललितायैचवामदेव्यैनमोनमः॥ ७७ ॥ एवंसम्पूज्यविधिवदग्रतःपद्ममालिखेत् ॥ पत्रैःषोडशभिर्युक्तंक्रमेणैवस
कर्णिकम् ॥ ७८ ॥ पूर्वेणविन्यसेद्गौरीमपर्णांचततःपरम् ॥ भवानींदक्षिणेतद्वद्रुद्राणींचततःपरम् ॥ ७९ ॥ विन्यसेत्पश्चिमेभागेसौम्यांमदनवासि
नीम् ॥ वायव्येपाटलामुग्रामुत्तरेणतथाउमाम् ॥ ८० ॥ साध्यांपथ्यांतथासौम्यांमङ्गलांकुमुदांसतीम् ॥ भद्रांचमध्येसंस्थाप्यललितांकर्णिको
परि ॥ ८१ ॥ कुसुमैरक्षताद्भिर्वानमस्कारेणविन्यसेत् ॥ गीतमङ्गलघोषंचकारयित्वासुवासिनीम् ॥ ८२ ॥ पूजयेद्रक्तवासोभीरक्तमाल्यानुले
पनैः ॥ सिन्दूरंस्नानचूर्णंचतासांशिरसिपातयेत् ॥ ८३ ॥ सिन्दूरंकुङ्कुमंस्नानमतीवेष्टंयतस्ततः ॥ तथोपदेष्टारमपिपूजयेद्यत्नतोगुरुम् ॥ ८४ ॥
नपूज्यतेगुरुर्यत्रसर्वास्तत्राफलाःक्रियाः ॥ जप्यैश्चपूजयेद्गौरीमुत्पलैरसितैःसदा ॥ ८५ ॥ बन्धुजीवैःप्रियेपूज्याकार्तिकेमासियत्नतः ॥
जातीपुष्पैर्मार्गशिरेपौषेपीतैःकुरण्टकैः ॥ ८६ ॥ कुन्दैःकुमुदपुष्पैश्चदेवींमाघेऽपिपूजयेत् ॥ सिन्दुवारेणजात्यावाफाल्गुनेऽप्यर्चयेन्न
रः ॥ ८७ ॥ चैत्रेतुमल्लिकाशोकैर्वैशाखेगन्धपाटलैः ॥ ज्येष्ठेकमलमन्दारैराषाढेचजलाम्बुजैः ॥ ८८ ॥ मन्दारैरथमालत्याश्रावणेपूजयेत्सदा ॥

गोमूत्रंगोमयंक्षीरंदधिसर्पिः कुशोदकम् ॥ ८९ ॥ बिल्वपत्रार्ककुसुमाम्बुजगोशृङ्गवारिच ॥ पञ्चगव्यंचबिल्वंचप्राशयेत्क्रमशः सदा ॥९०॥ एतद्बाद्वप
दादौतुप्राशनंसमुदाहृतम् ॥ प्रतिपक्षंचमिथुनंतृतीयायांवरानने ॥ ९१ ॥ भोजयित्वार्चयेद्भक्त्यावस्त्रमाल्यानुलेपनैः ॥ पुंसःपीताम्बरेदद्यात्स्त्रि
याःकौशेयवाससी ॥ ९२ ॥ निष्पावजीरलवणमिक्षुदण्डगुडान्वितम् ॥ स्त्रियैदद्यात्फलंपुंसःसुवर्णोत्पलसंयुतम् ॥ ९३॥ यथानदेवदेवस्त्वांसम्परि
त्यज्यगच्छति ॥ तथामामुद्धराशेषदुःखसंसारसागरात् ॥ ९४ ॥ कुमुदाविमलानंदाभवानीवसुधांशिवा ॥ ललिताकमलागौरीसतीरम्भाथपार्व
ती ॥ ९५ ॥ नभस्यादिषुमासेषुप्रीयतामित्युदीरयेत् ॥ व्रतान्तेशयनन्दद्यात्सुवर्णकमलान्वितम् ॥ ९६ ॥ मिथुनानिचतुर्विंशद्द्वादशाथसमर्च
येत् ॥ अष्टावष्टाथवाभूयश्चतुर्मासेऽथवार्चयेत् ॥ ९७ ॥ पूर्वंदत्त्वाथगुरवेपश्चादन्यान्समर्चयेत् ॥ उक्तानन्ततृतीयैषासदानन्तफलप्रदा ॥ ९८ ॥ सर्व
पापहरादेवीसौभाग्यारोग्यवर्धिनी ॥ नचैनान्वित्तशाठ्येनकदाचिदपिलङ्घयेत् ॥ ९९ ॥ नरोवायदिवानारीसोपवासव्रतंचरेत् ॥ गर्भिणीसूतिकान
क्तंकुमारीवाथरोगिणी ॥ १०० ॥ यदाऽशुद्धातदान्येनकारयेत्प्रयतास्वयम् ॥ इमामनन्तफलदांयस्तृतीयांसमाचरेत् ॥ १ ॥ कल्पकोटिशतंसा
ग्रंशिवलोकेमहीयते ॥ वित्तहीनोऽपिकुर्वीतयावद्वर्षमुपोषणम् ॥ २ ॥ पुष्पमन्त्रविधानेनसोऽपितत्फलमाप्नुयात् ॥ नारीवाकुरुतेयातुआत्मनःशुभ
मिच्छती ॥ जन्मपौरुपमाप्नोतिगौर्यनुग्रहकारितम् ॥ ३ ॥ इतिपठतिशृणोतिवायइत्थंगिरितनयाव्रतमिन्द्रलोकसंस्थः ॥ मतिमपिचद
दातियोऽपिदेवैरमरवधूजनकिन्नरैःसपूज्यः ॥४॥ अन्यामपिप्रवक्ष्यामितृतीयांपापनाशिनीम् ॥ रसकल्याणिनींमेतांपुराकल्पभवाविदुः ॥ ५ ॥ माघे
मासितुसम्प्राप्यतृतीयांशुक्लपक्षतः ॥ प्रातर्गव्येनपयसातिलैःस्नानंसमाचरेत् ॥ ६ ॥ स्नापयेन्मधुनादेवींतथैवेक्षुरसेनतु ॥ गन्धोदकेनचपुनः
पूजनंकुङ्कुमेनतु॥७॥दक्षिणाङ्गानिसंपूज्यततोवामानिपूजयेत् ॥ ललितायैपदन्देव्यैवामगुल्फौततोऽर्चयेत्॥८॥जङ्घेजानुतथाशान्त्यैतथैवोरुंश्रियैन
मः ॥ ९ ॥ मदालसायैचकटिममलायैतथोदरम् ॥ स्तनौमदनवासिन्यैकुमुदायैचकन्धराम् ॥ ११० ॥ भुजंभुजाग्रंमाधव्यैकमलायैसुखस्मि
ते ॥ भ्रूललाटंचरुद्राण्यैशङ्करायैतथालकम् ॥ ११ ॥ मदनायैललाटंतुमोहनायैपुनर्भ्रुवौ ॥ नेत्रेचन्द्रार्धधारिण्यैतुष्ट्यैचवदनंपुनः ॥ १२ ॥ उत्क
ण्ठिन्यैनमःकण्ठममृतायैनमस्तनुम् ॥ रम्भायैचमहाबाहूविशोकायैनमःकरौ ॥१३॥ हृदयंमन्मथाह्वायैपाटलायैतथोदरम् ॥कटिंसुरतवासिन्यैतथो
रूपङ्कजश्रियै ॥ १४ ॥ जानुजङ्घेनगौर्यैगुल्फौशान्त्यैतथार्चयेत् ॥ धराधरायैपादौतुविश्वकायैनमःशिरः ॥ १५ ॥ नमोभवान्यैकामिन्यैवासु
देव्यैजगच्छ्रियै ॥ आनन्ददायैनन्दायैसुभद्रायैनमोनमः ॥१६॥ एवंसम्पूज्यविधिवद्द्विजदाम्पत्यमर्चयेत् ॥ भोजयित्वातथान्नेनमधुरेणविमत्सरः ॥

॥ १७ ॥ समोदकंवारिकुम्भंशुक्लाम्बरयुगद्वयम् ॥ दत्त्वासुवर्णकमलंगन्धमाल्यैरथार्चयेत् ॥१८॥ प्रीयतामत्रकुमुदागृह्णीयाल्लवणव्रतम् ॥ अनेन
विधिनादेवींमासिमासिसदार्चयेत् ॥ १९ ॥ लवणंवर्जयन्माघेफाल्गुनेचगुडंपुनः ॥ नवनीतंतथाचैत्रेवर्ज्यंमधुचमाधवे ॥ १२० ॥ पानीयं
ज्येष्ठमासेतुतथाषाढेचजीरकम् ॥ श्रावणेवर्जयेत्क्षीरंदधिभाद्रपदेतथा ॥ २१ ॥ घृतमाश्वयुजेतद्वदूर्जेवर्ज्यंचमाक्षिकम् ॥ धान्याकंमार्गे
शीर्षेतुपौषेवर्ज्याचशर्करा ॥ २२ ॥ व्रतान्तेकरकंपूर्णमेतेषांमासिमासिच ॥ दद्याद्विकालवेलायांभक्ष्यपात्रेणसंयुतम् ॥ २३ ॥
लड्डुकास्स्वेवकाश्चैवसंयावमथपूरिका ॥ नारिकाघृतपूर्णाश्चपिष्टपूर्णाचनन्दिकी ॥ २४ ॥ क्षीरशाकंचदध्यन्नंपिण्डशाकंतथैवच ॥ माघादौ
क्रमशोदद्यादेतानिकरकोपरि ॥ २५ ॥ कुमुदामाधवीरम्भासुभद्राचाशिवाजया ॥ ललिताकमलानङ्गामङ्गलारतिलालसा ॥ २६ ॥ क्रमा
न्माघादिमासेषुप्रीयतामितिकीर्तयेत् ॥ सर्वत्रपञ्चगव्यंचप्राशनंसमुदाहृतम् ॥ २७ ॥ उपवासीभवेन्नित्यमशक्तौनक्तमिष्यते ॥ कुर्यादेवमिदं
नारीरसकल्याणिनीव्रतम् ॥ २८ ॥ पुनर्माघेचसंप्राप्तेशर्कराकलशोपरि ॥ कृत्वातुकाञ्चनींगौरींपञ्चरत्नसमन्विताम् ॥ २९ ॥ स्वकीयाङ्गुष्ठ
मात्रंचसाक्षमूत्रकमण्डलुम् ॥चतुर्भुजामिंदुयुतांसितनेत्रपटावृताम् ॥१३०॥तद्वद्गोमिथुनंचैवसुवर्णस्यसिताम्बरम् ॥ सवस्त्रंभाजनंदद्याद्भवानीप्रीयतामि
ति ॥ ३१ ॥ अनेनविधिनायस्तुरसकल्याणिनीव्रतम् ॥ कुर्याच्चसर्वपापेभ्यस्तत्क्षणादेवमुच्यते ॥ ३२ ॥ भवानांचसहस्रंतुनदुःखीजायतेक्वचित् ॥
अग्निष्टोमसहस्रेणयत्फलंतदवाप्नुयात् ॥ ३३ ॥ नारीवाकुरुतेयातुकुमारीवावरानने ॥ विधवाचवराकीवासापितत्फलभागिनी ॥ सौभाग्यारोग्यसंप
न्नागौरीलोकेमहीयते ॥३४॥ इतिपठतियइत्थंयःशृणोतिप्रसङ्गात्सकलकलुषमुक्तःपार्वतीलोकमेति ॥ मतिमपिचविधत्तेयोनराणांप्रियार्थंविबुधपति
जनानांलोकगःस्यादमोघः ॥ ३५ ॥ तथैवान्यांप्रवक्ष्यामितृतीयांपापनाशिनीम् ॥ नाम्नाचलोकविख्यातामग्यानन्दकरीमिमाम् ॥ ३६ ॥ य
दाशुक्लतृतीयायामषाढर्क्षंभवेत्क्वचित् ॥ ३७ ॥ ब्रह्मर्क्षंवाथचमघाहस्तोमूलमथापिवा ॥ दर्भगन्धोदकैःस्नानंतदासम्यक्समाचरेत् ॥ ३८ ॥
शुक्लमाल्याम्बरधरःशुक्लगन्धानुलेपनः ॥ भवानीमर्चयेद्भक्त्याशुक्लपुष्पैःसुगन्धिभिः ॥ ३९ ॥ महादेवंचसकलमुपविष्टंमहासने ॥ वासुदे
व्यैनमःपादौशङ्करायैनमोहरेः ॥ १४० ॥ जङ्घेशोकविनाशिन्यैमानदायैनमःप्रभोः ॥ रम्भायैपूजयेदूरूशिवायचपिनाकिने ॥ ४१ ॥
आनन्दिन्यैकटिंदेव्याःशूलिनश्शूलपाणये ॥ माधव्यैचतथानाभिमथशम्भोर्भवायवै ॥ ४२ ॥ स्तनौचानन्दकारिण्यैशंकरस्येन्दुधारिणे ॥ उत्क
ण्ठिन्यैनमःकण्ठंनीलकण्ठायवैहरेः ॥ ४३ ॥ करावुत्पलधारिण्यैरुद्रायजगतःप्रभोः ॥ वाहूचपरिरम्भिण्यैनृत्यप्रीतायवैहरेः ॥ ४४ ॥ देव्यामुखंवि

लासिन्यैवृषभायपुनर्विभोः ॥ स्मितंचस्मरणीयायैविश्वक्कायवैविभोः ॥ ४५ ॥ नेत्रमन्दारवासिन्यैविश्वधाम्नेत्रिशूलिनः ॥ भ्रुवौनृत्यप्रियायैचशं
भोर्वैपाशशूलिने ॥ ४६ ॥ देव्याललाटमिन्द्राण्यैवृषवाहायवैविभोः ॥ स्वाहायैमुकुटंदेव्या विभोगङ्गाधरायवै ॥४७॥विश्वकायौविश्वभुजौविश्वपदा
मुखौशिवौ ॥ प्रसन्नवरदौवन्देपार्वतीपरमेश्वरौ ॥ ४८ ॥ एवंसम्पूज्यविधिवदग्रतःशिवयोःपुनः ॥ पद्मोत्पलानिरजसानानावर्णेनकारयेत् ॥ ४९ ॥
शङ्खचक्रेसकटकेस्वस्तिकंशुभकाग्कम् ॥ यावन्तःपांसवस्तत्ररजसःपतिताभुवि ॥१५०॥ तावद्वर्षसहस्राणिशिवलोकेमहीयते ॥ चत्वारिघृतपात्रा
णिसहिरण्यानिशक्तितः ॥ ५१ ॥ दत्त्वाद्विजायकरकमुदकेनसमन्वितम् ॥ प्रतिपक्षंचतुर्मासंयावदेतान्निवेदयेत् ॥ ५२ ॥ ततस्तुचतुरोमासान्पू
र्ववत्करकोपरि॥चत्वारिघृतपात्राणितिलपात्राण्यनन्तरम्॥५३॥ गन्धोदकंपुष्पवारिचन्दनंकुङ्कुमोदकम्॥अपक्कंदधिदुग्धंचगोश्रृङ्गोदकमेवच॥५४॥
अब्दोदकंतथावारिकुष्ठचूर्णान्वितम्पुनः॥उशीरसलिलंचैवयवचूर्णोदकंपुनः ॥५५॥ तिलोदकंचसम्प्राश्यस्वपेन्मार्गशिरादिषु ॥ मासेषुपक्षद्वितयंप्राश
नंसमुदाहृतम् ॥ ५६ ॥ सर्वत्रशुक्लपुष्पाणिप्रशस्तानिसदार्चने ॥ दानकालेचसर्वत्रमन्त्रमेतमुदीरयेत् ॥ ५७ ॥ गौरीमेप्रीयतांनित्यमघनाशाय
मङ्गला ॥ सौभाग्यायास्तुललिताभवानीसर्वसिद्धये ॥ ५८ ॥ संवत्सरान्तेलवणंगुडकुङ्कुमसंयुतम् ॥ चन्दनेनयुतंकुम्भंसहस्वर्णाम्बुजेनच ॥५९॥
उमायाःप्रीतयेहैमंतद्विदिक्षुफलैर्युतम् ॥ सास्तरवरणांशय्यांसविश्रामांनिवेदयेत् ॥.१६० ॥ सपत्नीकायविप्रायगौरीमेप्रीयतामिति ॥ आत्मान
न्दकरींनामप्राप्नुयात्सम्पदंनरः ॥ ६१ ॥ आयुरानन्दसम्पन्नोनक्कचिच्छोकमाप्नुयात् ॥ नारीवाकुरुतेयातुकुमारीविधवातथा ॥६२॥ सापितत्फल
माप्नोतिदेव्यनुग्रहलालिता ॥ प्रतिपक्षमुपोष्यैवंमन्त्रार्चनविधानतः ॥ ६३ ॥ रुद्राणांलोकमाप्नोतिपुनरावृत्तिदुर्लभम् ॥ इमांयःश्रृणुयान्नित्यंश्राव
येद्वापिभक्तितः ॥ ६४ ॥ शक्रलोकंसगत्वातुपूज्यतेकल्पसंस्थितः ॥ शङ्करउवाच ॥ एवंविधाभवतिचेन्नारीव्रतपरायणा ॥ ६५ ॥ सावित्रीतुवरा
कीसातस्याःशापस्तुकीदृशः ॥ नकाचिद्गणनाचास्तियतस्त्रैलोक्यसुन्दरी ॥ ६६ ॥ सापूर्वस्यापिवन्ध्याचलक्ष्मीर्विष्णुप्रतिग्रहात् ॥ मयापूर्वन्तवा
र्थायदक्षयज्ञस्तुनाशितः ॥६७ ॥ लक्ष्म्यर्थंविष्णुनाचापिवारिधिर्मथितः पुरा ॥ आज्ञाकरौभवत्योश्चमाकुरुष्वभयंक्वचित् ॥ ६८ ॥ सावित्र्यामान
नाकार्याकुपितायाःप्रसादनम् ॥ मयात्रविष्णुनाचैवब्रह्मणामानमीप्सुना ॥ ६९ ॥ गमिष्यब्रह्मसदनंत्वंचतिष्ठवरानने ॥ एवमुक्त्वागतोरुद्रोगौरी
तत्रव्यवस्थिता ॥ १७० ॥ कृतंयुगंसमग्रंचयज्ञतस्मिन्हुताशनः ॥ वहंस्तुहव्यंदेवानांप्रीणयानोजगत्त्रयम् ॥ ७१ ॥ भोजनंद्विजमुख्येषुभो
गान्विद्याधरेगणे ॥ कामावाप्तिंमनुष्येषुमर्वमेवददौप्रभुः ॥ ७२ ॥ रुद्रेणोक्तस्तदा विष्णुर्धर्मांस्तत्वंप्रकीर्त्तय ॥ गौरीधर्मान्सरस्वत्याव्रतं

यत्परिकीर्तितम् ॥ ७३ ॥ इत्येवमुक्तेरुद्रेणविष्णुःप्रोवाचसादरम् ॥ विष्णुरुवाच ॥ नाहंधर्मख्यापयिष्येस्वकीयंशङ्कराधुना ॥ ७४ ॥ भवाना
ख्यातुमाहात्म्यंमदीयंसुरसत्तम ॥ त्वयावैकथितंपूर्वंकृतेवैपापसंक्षयः ॥ ७५ ॥ भविष्यतिनसन्देहोभवान्पूतोभविष्यति ॥ भीष्मउवाच ॥
मधुरगीर्भवेत्केनव्रतेनमुनिसत्तम ॥ ७६ ॥ तथैवजनसौभाग्यंमतिर्विद्यासुकौशलम् ॥ अभेदश्चापिदाम्पत्येसङ्गोबन्धुजनेनच ॥ ७७ ॥
आयुश्चविपुलंपुंसांतन्मेकथयसत्तम ॥ पुलस्त्यउवाच ॥ सम्यक्पृष्टंत्वयागजञ्शृणुसारस्वतंव्रतम् ॥ ७८ ॥ यस्यसंकीर्तनादेवदेवीतुष्येत्सरस्वती ॥
यावद्भक्तःस्तवंकुर्यादेतद्व्रतमनुत्तमम् ॥ ७९ ॥ प्राग्वासरादौसम्पूज्यदिव्यंस्तवंसमारभेत ॥ अथवाग्विवारेणग्रहतागबलेनच ॥ १८० ॥ पाय
संभोजयेद्विप्रान्कुर्याद्ब्राह्मणवाचनम् ॥ शुक्लवस्त्राणिदत्त्वाचसहिरण्यानिशक्तितः ॥ ८१ ॥ गायत्रींपूजयेद्भक्त्याशुक्लमाल्यानुलेपनैः ॥ यथा
नदेविभगवान्ब्रह्मालोकपितामहः ॥ ८२ · ॥ त्वांपरित्यज्यतिष्ठेच्चतथाभववरप्रदा ॥ वेदशास्त्राणिधर्माणिनृत्यागीतादिकंचयत् ॥ ८३ ॥
नविहीनंत्वयादेवितथामेसन्तुसिद्धयः ॥ लक्ष्मीर्मेधाधरापुष्टिर्गौरीतुष्टिर्जयामतिः ॥ ८४ ॥ एताभिःपाहिचाष्टाभिर्मूर्तिभिर्मांसरस्वति ॥ एवं
सम्पूज्यगायत्रींवीणाकमलधारिणीम् ॥ ८५ ॥ शुक्लपुष्पाक्षतैर्भक्त्यासकमण्डलुपुस्तकाम् ॥ मौनव्रतेनभुञ्जीतसायंप्रातश्चधर्मवित् ॥ ८६ ॥ पञ्च
म्यांप्रतिपक्षंचगांचविप्रायशोभनाम् ॥ तथैवतण्डुलप्रस्थंघृतपात्रेणसंयुतम् ॥ ८७ ॥ क्षीरंदद्याद्धिरण्यंचगायत्रीप्रीयतामिति ॥ सन्ध्यायांचतथा
मौनमेतत्कुर्वन्समाचरेत् ॥ ८८ ॥ नरात्र्यांभोजनंकुर्याद्यावन्मासास्त्रयोदश ॥ समाप्तेतुव्रतेदद्याद्भोजनंशुक्लतण्डुलैः ॥ ८९ ॥ पूर्णंसद्वस्त्रयुग्मंतुगांच
विप्रायशोभनाम् ॥दिव्यांवितानंघण्टांचसितनेत्रपटान्विताम् ॥१९० ॥ चन्दनंवस्त्रयुग्मंचदध्यन्नंसुरसंपुनः ॥ अथोपदेष्टारमपिभक्त्यासंपूजयेद्गुरु
म् ॥ ९१ ॥ वित्तशाठ्येनरहितोवस्त्रमाल्यानुलेपनैः ॥ अनेनविधिनायस्तुकुर्यात्सारस्वतंव्रतम् ॥ ९२ ॥ सौभाग्यमतियुक्तस्तुसूक्ष्मकण्ठश्चजा
यते ॥ सरस्वत्याःप्रसादेनब्रह्मलोकेमहीयते ॥ ९३ ॥ नारीवाकुरुतेयातुसापितत्फलभागिनी ॥ ब्रह्मलोकेवसेद्राजन्यावत्कल्पायुतत्रयम् ॥
॥ ९४ ॥ सारस्वतंव्रतंयस्तुशृणुयादपिवापठेत् ॥ विद्याधरपुरेसोऽपिवसेदब्दायुतत्रयम् ॥ १९५ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेव्रता
ध्यायोनामद्वाविंशोऽध्यायः ॥ २२ ॥ भीष्मउवाच ॥ वैष्णवायेतुवैधर्मायान्रुद्रःप्रोक्तवानिह ॥ तान्मेकथयविप्रेन्द्रकीदृशास्तेफलंतुकिम् ॥ १ ॥ 
॥ पुलस्त्यउवाच ॥ पुरारथन्तरेकल्पेपरिपृष्टोमहात्मना ॥ मन्दरस्थोमहादेवःपिनाकीब्रह्मणास्वयम् ॥ २ ॥ कथमारोग्यमैश्वर्यमनन्तममरेश्वर ॥
अल्पेनतपसादेवभवेन्मोक्षःसदानृणाम् ॥ ३ ॥ किंतज्ज्ञानंमहादेवत्वत्प्रसादादधोक्षज ॥ अल्पकेनापितपसामहाफलमिहोच्यते ॥ ४ ॥ इतिपृष्टस्स

विश्वात्माब्रह्मणालोकभावनः ॥ उमापतिरुवाचेदंमनसःप्रीतिकारकम् ॥ ५ ॥ ईश्वरउवाच ॥ अस्माद्रथन्तरात्कल्पाद्भूयोविंशतिमोयदा ॥ वाराहो
भविताकल्पस्तदामन्वन्तरेशुभे ॥६॥ वैवस्वताख्यसंप्राप्तेसप्तमेसप्तलोकधृक् ॥द्वापराख्यंयुगंतस्मिन्सप्तविंशतिमंयदा॥७॥तस्यान्तेतुमहातेजावासुदेवो
जनार्दनः ॥ भारावतरणार्थायत्रिधाविष्णुर्भविष्यति ॥ ८ ॥ द्वैपायनऋषिस्तत्ररौहिणेयोऽथकेशवः ॥ कंसारिःकेशिमथनःकेशवःक्लेशनाशनः ॥
॥ ९ ॥ पुरींद्वारवतींनामसाम्प्रतंयाकुशस्थली ॥ दिव्यानुभावसंयुक्तामधिवासायशार्ङ्गिणः ॥१०॥ त्वष्टातदाज्ञयाब्रह्मन्करिष्यतिजगत्पतेः॥तस्यांक
दाचिदासीनःसभायांसोऽमितद्युतिः॥११॥भार्याभिर्वृष्णिविद्भिर्भूरिभिर्भूरिदक्षिणैः॥ कुरुभिर्देवगन्धर्वैरन्वितःकैटभार्दनः ॥१२॥ प्रवृत्तासुपुराणासु
धर्मसम्बन्धिनीषुच ॥ कथासुभीमसेनेनपरिपृष्टःप्रतापवान् ॥१३॥ त्वयापृष्टस्यधर्मस्यवक्ष्यत्यस्यचभेदकृत्॥ भवितासतदाब्रह्मन्कर्ताचैववृकोदरः॥
॥ १४ ॥ प्रवर्तकोऽस्यधर्मस्यपाण्डुसूनुर्महाबलः ॥ यस्यतीक्ष्णोवृकोनामजठरेहव्यवाहनः ॥ १५ ॥ संभाष्यतेसधर्मात्मातेनचासौवृकोदरः ॥
अतीवस्वादशीलश्चनागायुतबलोमहान् ॥ १६ ॥ धार्मिकस्याप्यशक्तस्यतीव्राग्नित्वादुपोषणे ॥ इदंव्रतमशेषाणांव्रतानामधिकंयतः ॥ १७ ॥
कथयिष्यतिविश्वात्मावासुदेवोजगद्गुरुः॥अशेषयज्ञफलदमशेषाघविनाशनम् ॥१८॥ अशेषदुष्टशमनमशेषसुरपूजितम्॥पवित्राणांपवित्रंयन्मङ्गलानां
चमङ्गलम् ॥ भविष्यंचभविष्याणांपुराणानांपुरातनम् ॥ १९ वासुदेवउवाच ॥ यद्यष्टमीचतुर्दश्योर्द्वादशीषुचभारत ॥ अन्येष्वपिदिनर्क्षे
षुनशक्तस्त्वमुपोषितुम् ॥ २० ॥ ततस्त्वंस्यामिमांभीमतिथिंपापप्रणाशिनीम् ॥ उपोष्यविधिनानेनगच्छविष्णोःपरंपदम् ॥ २१ ॥ माघ
मासस्यदशमीयदाशुक्लाभवेत्तदा ॥ घृतेनाभ्यञ्जनंकृत्वातिलैःस्नानंसमाचरेत् ॥ २२ ॥ तथैवविष्णुमभ्यर्च्यन्नमोनारायणायच ॥ कृष्णा
यपादौसंपूज्यशिरःकृष्णात्मनेतिच ॥ २३ ॥ वैकुण्ठायेतिवैकण्ठमुरःश्रीवत्सधारिणे ॥ शङ्खिनेगदिनेचैवचक्रिणेवरदायवै ॥२४॥ सर्वंनारायण
न्त्वेवंसम्पूज्यावाहनक्रमात् ॥ दामोदरायेत्युदरंकटिंपञ्चजनायवै॥२५॥ऊरूसौभाग्यनाथायजानुनीभूतधारिणे॥ नमोनीलायवैजङ्घेपादौविश्वभुजेपु
नः ॥ २६ ॥ नमोदेव्यैनमःशान्त्यैनमोलक्ष्म्यैनमःश्रियै ॥ नमस्तुष्ट्यैनमःपुष्ट्यैधृत्यैव्युष्ट्यैनमोनमः ॥ २७ ॥ नमोविहङ्गनाथायवायुवेगायपक्षि
णे ॥ विषप्रमथनायेतिगरुडंचाभिपूजयेत् ॥ २८ ॥ एवंसम्पूज्यगोविन्दमुमापतिविनायकौ ॥ गन्धैर्माल्यैस्तथाधूपैर्भक्ष्यैर्नानाविधैरपि ॥२९॥
गव्येनपयसासिक्तांकृसरामथपायसम् ॥ सर्पिषासहभुक्त्वातुगत्वास्थानान्तरंपुनः ॥ ३० ॥ नैयग्रोधंदन्तकाष्ठमथवाखादिरंबुधः ॥ गृहीत्वाधा
वयेद्दन्तानाचांतःप्रागुदङ्मुखः ॥ ३१ ॥ ब्रूयात्सायन्तनींकृत्वासन्ध्यामस्तमितेरवौ ॥ नमोनारायणायेतित्वामहंशरणंगतः ॥ ३२ ॥

एकादश्यांनिराहारःसमभ्यर्च्यचकेशवम् ॥ तांरात्रिंसकलांस्थित्वाशेषपर्यङ्कशायिनम् ॥ ३३ ॥ सर्पिषाविश्वदहनंहुत्वाब्राह्मणपुङ्गवैः ॥
सहैवपुण्डरीकाक्षंद्वादश्यांक्षीरभोजनम् ॥ ३४ ॥ करिष्यामियथात्मानंनिर्विघ्नेनास्तुतच्चमे ॥ एवमुक्त्वास्वपेद्भूमावितिहासकथांपुनः ॥
॥ ३५ ॥ श्रुत्वाप्रभातेसंजातेनदींगत्वाविशांपते ॥ स्नानंकृत्वामुदातद्वत्पापण्डानभिवर्जयेत् ॥ ३६ ॥ उपास्यसन्ध्यांविधिवत्कृत्वाचपितृ
तर्पणम् ॥ प्रणम्यचहृषीकेशंशेषपर्यङ्कशायिनम् ॥ ३७ ॥ गृहस्यपुरतोभक्त्यामण्डपंकारयेद्बुधः ॥ चतुर्हस्तांशुभांकुर्याद्वेदीमार्गनिषूदन ॥३८॥
चतुर्हस्तप्रमाणंतुविन्यसेत्तत्रतोरणम् ॥ मध्यंचकलशंतत्रमाषमात्रेणसंयुतम् ॥३९॥ छिद्रेणजलसम्पूर्णमधःकृष्णाजिनेस्थितः ॥ तस्यधारांचशिरसा
धारयेत्सकलांनिशाम् ॥ ४० ॥ धाराभिर्भूरिभिर्भूरिफलंवेदविदोविदुः॥ यस्मात्तस्मात्कुरुश्रेष्ठकारयेत्प्रयतोद्विजः ॥४१॥ दक्षिणंचार्धचन्द्रन्तुपश्चि
मेवर्तुलंतथा ॥ अश्वत्थपत्राकारंचउत्तरेणतुकारयेत् ॥ ४२ ॥ मध्येतुपद्माकारंचकारयेद्वैष्णवोद्विजः ॥ पूर्वतोवेदिकास्थानंस्थानंयाम्येचकल्प
येत् ॥ ४३ ॥ पानीयधारांशिरसिधारयेद्विष्णुतत्परः ॥ द्वितीयावेदीदेवस्यतत्रपद्मंसकर्णिकम् ॥ ४४ ॥ तस्यमध्येस्थितंदेवंकुर्याद्वैपुरुषोत्तमम्॥
हस्तमात्रंचतत्कुण्डंकृत्वानत्रत्रिमेखलम् ॥ ४५ ॥ योनिवक्त्रंततस्तस्मिन्ब्राह्मणैर्यवसर्पिषी ॥ तिलांश्चविष्णुदेवत्यैर्मन्त्रैर्वानलेहुनेत् ॥ ४६ ॥
कृत्वातुवैष्णवंसम्यग्यागंतत्रप्रकल्पयेत ॥ आज्यधाराभध्यमेतुकुण्डेदद्यात्तुयत्नतः ॥ ४७ ॥ क्षीरधारांदेवदेवेबारिधारात्मनोपरि ॥ निष्पावार्धप्र
माणांवैधारामाज्यस्यपातयेत् ॥ ४८ ॥ स्वेच्छयाक्षीरजलयोरविच्छिन्नांचशर्वरीम् ॥ जलकुम्भान्महावीर्यस्थापयित्वात्रयोदश ॥ ४९ ॥ भक्ष्यै
र्नानाविधैर्युक्तान्सितवस्त्रैरलङ्कृतान् ॥ प्रतानौदुम्बरैःपात्रैःपञ्चरत्नसमन्वितैः ॥ ५० ॥ चतुर्भिर्बह्वृचैर्होमःकार्यस्तत्रउदङ्मुखैः ॥ रुद्रजाप्यश्चतु
र्भिश्चयजुर्वेदपरायणैः ॥ ५१ ॥ वैष्णवानिचसामानिचतुर्भिःसामवेदिभिः ॥ अग्निवर्गसहितान्यभितःपरिपाठयेत् ॥ ५२ ॥ एवंद्वाद
शवैविप्रान्वस्त्रमाल्यानुलेपनैः ॥ पूजयेदङ्गुलीयैश्चकटकैर्हेममूत्रकैः ॥ ५३ ॥ वासोभिःशयनीयैश्चवित्तशाठ्यविवर्जितः ॥ एवंक्षपातिवाह्यावै
गीतमङ्गलनिःस्वनैः ॥ ५४ ॥ उपाध्यायस्यचपुनर्द्विगुणंसर्वमेवतु ॥ ततःप्रभातेविमलेसमुत्थायत्रयोदश ॥ ५५ ॥ गावोदेयाःकुरुश्रेष्ठसौ
वर्णशृङ्गसंवृताः ॥ पयस्विन्यःशीलवत्यःकांस्यदोहसमन्विताः ॥ ५६ ॥ रौप्यखुराःसवत्साश्चचन्दनेनाभिभूषिताः ॥ तास्तुतेषांततोदत्त्वा
भक्ष्यभोज्यैरनर्पितान् ॥ ५७ ॥ कृत्वावैब्राह्मणान्सर्वाञ्छत्रैर्नानाविधैस्तथा ॥ भुक्त्वाचाक्षारलवणमात्मनाचविसर्जयेत् ॥ ५८ ॥ अनुगम्य
पदान्यष्टौपुत्रभार्यासमन्वितः ॥ प्रीयतामत्रदेवेशःकेशवःक्लेशनाशनः ॥ ५९ ॥ एवंगुर्वाज्ञयाकुम्भान्गाश्चैवशयनानिच ॥ वासांसिचैवसर्वेषां

गृहाणिप्रापयेद्बुधः ॥ ६० ॥ अभावेबहुशय्यानामेकामपिसुसंस्कृताम् ॥ शय्यांदद्याद्वहीभीमसर्वोपस्करसंयुताम् ॥ ६१ ॥ इतिहासपु
राणानिवाचयित्वातुवाहयेत् ॥ तद्दिनंकुरुशार्दूलयइच्छेद्विपुलांश्रियम् ॥ ६२ ॥ तस्मात्त्वंसत्त्वमालम्ब्यभीमसेनविमत्सरः ॥ कुरुव्रत
मिदंसम्यक्स्नेहाद्गुह्यंमयोदितम् ॥ ६३ ॥ त्वयाकृतमिदंवीरत्वन्नाम्नाचभविष्यति ॥ साभीमद्वादशीह्येषासर्वपापहराशुभा ॥ या
तुकल्याणिनीनामपुराकल्पेषुपठ्यत ॥ ६४ ॥ त्वंचादिकर्ताभवसौकरेऽस्मिन्कल्पेमहावीरवरप्रधान ॥ यस्याःस्मृतेःकीर्तनतोऽप्यशेषंपा
पंप्रनष्टंत्रिदशाधिपस्य ॥ ६५ ॥ दृष्ट्वाचतामप्सरसामभीष्टावेश्याकृतामन्यभवान्तरेषु ॥ आभीरकन्याहिकुतूहलेनसैवोर्वशीसम्प्रति
नाकपृष्ठे ॥ ६६ ॥ जाताथसावैश्यकुलोद्भवापिपुलोमकन्यापुरुहूतपत्नी ॥ तत्रापितस्याः परिचारिकेयंममप्रियासम्प्रतिसत्यभामा ॥६७ ॥
कृतंपुरामङ्गलमेतदेवद्विजात्मजावेदवतीबभूव ॥ ६८ ॥ अस्यांचकल्याणतिथौविवस्वान्सहस्रधारेणसहस्ररश्मिः ॥ स्नातःपुरामण्डलमेत्यत
द्वत्तेजोमयंखेटपतिर्बभूव ॥६९॥ इदमेवकृतंमहेन्द्रमुख्यैर्बहुभिर्देवसुरारिकोटिभिश्च ॥ फलमस्येहनशक्यतेहिवक्तुंयदिजिह्वायुतकोटयोमुखेस्युः ॥७०॥
कलिकलुषविदारिणीमनन्तामपिकथयिष्यतियादवेन्द्रसूनुः ॥ अथनरकगतान्पितॄनथैपाह्यलमुद्धर्तुमिहैवयःकरोति ॥७१॥ इदमनघशृणोतिवक्तिभ
क्त्यापरिपठतीहपरोपकारहेतोः॥ इहपङ्कजनाभभक्तिमान्भवेदथशक्रस्यसपूज्यतामुपैति ॥७२॥ कल्याणिनीनामपुराविसर्गेयाद्वादशीमाघसितेऽभिपू
ज्या॥सापाण्डुपुत्रेणकृताभविष्यत्यनन्तपुण्यानघभीमपूर्वा ॥७३॥ ब्रह्मोवाच ॥ वर्णाश्रमाणांप्रभवःपुराणेषुमयाश्रुतः॥सदाचारश्चभगवन्धर्मशास्त्राद्
विस्तरैः ॥७४॥ पण्यस्त्रीणांसमाचारंश्रोतुमिच्छामितत्त्वतः ॥ ईश्वरउवाच॥तस्मिन्नेवपुरेब्रह्मन्सहस्राणितुषोडश॥७५॥वासुदेवस्यनारीणांभविष्यत्य
म्बुजोद्भव॥ताभिर्वसन्तसमयेकोकिलालिकुलाकुले॥७६॥पुष्पितोपवनेफुल्लकह्लारसरसस्तटे॥निर्भरंसहपत्नीभिःप्रशस्ताभिरलङ्कृतः ॥७७॥ रमयिष्य
तिविश्वात्माकृष्णोयदुकुलोद्वहः ॥ कुरङ्गनयनःश्रीमान्मालतीकृतशेखरः ॥७८॥ गच्छन्समीपमार्गेणसाम्बोजाम्बवतीसुतः॥साक्षात्कन्दर्परूपेणसर्वा
भरणभूषितः॥७९ ॥अनङ्गशरतप्ताभिःसाभिलाषमवेक्षितः॥प्रबुद्धोमन्मथस्तासांभविष्यतियदात्मनि॥८०॥तदवेक्ष्यजगन्नाथस्सर्वज्ञोध्यानचक्षुषा ॥
स्वयंप्रभुर्वक्ष्यतितावोहरिष्यन्तिदस्यवः ॥८१॥ अपरोक्षंयतस्त्वेवंस्निग्धमेतद्विचिन्तितम् ॥ ततःप्रसादितोदेवइदंवक्ष्यतिशार्ङ्गभृत् ॥ ८२॥ ताभिः
शापाभितप्ताभिर्भगवान्भूतभावनः ॥ उत्तराश्रितदाशानामुद्धर्ताब्राह्मणप्रियः ॥८३॥ उपदेक्ष्यत्यनन्तात्माभाविकल्याणकारकम् ॥ भवतीनामृषिर्दा
ल्भ्योयद्व्रतंकथयिष्यति॥८४॥इत्युक्त्वाताःपरित्यज्यगतोऽन्तर्धानमीश्वरः ॥ ततःकालेनमहताभारावतरणेकृते ॥८५॥ निवृत्तेमौसलेतद्वत्केशवेदिव

मागते॥शून्येयदुकुलेसर्वेचौरैरपिजितेऽर्जुने॥८६॥हृतासुकृष्णपत्नीषुदाशभोग्यासुचार्बुदे ॥ तिष्ठन्तीषुचदौर्गत्यसन्तप्तासुचतुर्मुख॥८७॥आगमिष्यतियोगात्मादाल्भ्योनाममहातपाः ॥ तांस्तमर्घ्येणसंपूज्यप्रणिपत्यपुनःपुनः ॥८८॥ लालप्यमानाबहुशोबाष्पपर्याकुलेक्षणाः॥ स्मरन्त्योविविधान्भोगान्दिव्यमाल्यानुलेपनान् ॥८९॥भर्तारंजगतामीशमनन्तमपराजितम्॥दिव्यानुभावांचपुरींनानारत्नगृहाणिच॥९०॥द्वारकावासिनःसर्वान्देवरूपान्कुमारकान् ॥ प्रश्नमेतंकरिष्यन्तिमुनेरभिमुखंस्थिताः ॥ ९१ ॥ दस्युभिर्भगवन्सर्वाःपरिभुक्तावयंबलात् ॥ स्वधर्मच्याविताऽस्माकमस्मिन्नःशरणंभवान् ॥९२॥ आदिष्टोऽसिपुराब्रह्मन्केशवेनचधीमता ॥ कस्मादीशेनसंयोगंप्राप्यवेश्यात्वमागताः ॥९३॥ वेश्यानामपियोधर्मस्तंनोब्रूहितपोधन ॥ कथयिष्येऽवदत्तासांयद्दाल्भ्यश्चैकितायनः ॥९४॥ दाल्भ्यउवाच ॥ जलक्रीडाविहारेषुपुरासरसिमानसे ॥ भवतीनांसगर्वाणांनारदोऽभ्याशमागतः ॥ ९५ ॥हुताशनसुताःसर्वाभवत्योऽप्सरसःपुरा ॥ अप्रणम्यावलेपेनपरिपृष्टःसयोगवित् ॥९६॥ कथंनारायणोऽस्माकंभर्त्तास्यादित्युपादिश ॥ तस्माद्वरप्रदानंचशापश्चायमभूत्पुरा ॥९७॥ शय्याद्वयप्रदानेनमधुमाधवमासयोः ॥ सुवर्णोपस्करोत्सङ्गंद्वादश्यांशुक्लपक्षतः॥९८॥ भर्तानारायणोनूनंभविष्यत्यन्यजन्मनि॥यदकृत्वाप्रणामंमेरूपसौभाग्यमत्सरात् ॥९९॥परिपृष्टोऽस्मितेनाशुवियोगोवोभविष्यति॥चौरैरपहृताःसर्वावेश्यात्वंसमवाप्स्यथ ॥ १०० ॥ एवंनारदशापेनकेशवस्यचशापतः ॥ वेश्यात्वमागताःसर्वाभवत्यःकाममोहिताः ॥ १ ॥ इदानीमपियद्वक्ष्येतच्छृणुध्वंवराङ्गनाः ॥ पुरादेवासुरेयुद्धेहतेषुशतशःसुरैः ॥ २ ॥ दानवासुरदैत्येषुराक्षसेषुततस्ततः ॥ तेषांदारसहस्राणिशतशोऽथसहस्रशः ॥ ३ ॥ परिणीतानियानिस्युर्बलाद्भुक्तानियानिवै ॥ तानिसर्वाणिदेवेशःप्रोवाचवदतांवरः ॥ ४ ॥ वेश्याधर्मेणवर्तध्वमधुनानृपमन्दिरे ॥ भक्तिमत्योवरारोहास्तथादेवकुलेषुच ॥ ५ ॥ गजतःस्वामिनश्चापिजीविकांचप्रलप्स्यथ ॥ भविष्यतिचसौभाग्यंसर्वासामपिशक्तितः ॥ ६ ॥ यःकश्चिच्छुल्कमादायगृहमेष्यतिवःसदा ॥ निश्छद्मनैवोपचर्यःप्रीतिभावैरदाम्भिकैः ॥ ७ ॥ देवतानांपितॄणांचपुण्येऽह्निसमुपस्थिते ॥ गोभूहिरण्यधान्यानिप्रदेयानिचशक्तितः ॥ ८ ॥ यद्व्रतंचोपदेक्ष्यामितत्कुरुध्वंचसर्वशः ॥ संसारोत्तारणायालमेतद्वेदविदोविदुः ॥ ९ ॥ यदासूर्यदिनेहस्तःपुष्योवाथपुनर्वसुः ॥ ॥ भवेत्सर्वौषधिस्नानंसम्यङ्नारीसमाचरेत् ॥ ११० ॥ तदापञ्चशरात्मातुहरिस्सन्निधिमेष्यति ॥ अर्चयेत्पुण्डरीकाक्षमनङ्गस्यानुकीर्तनैः ॥ ११ ॥ कामायपादौसम्पूज्यजङ्घेवैमोहकारिणे ॥ मेढ्रंकन्दर्पनिधयेकटिंप्रीतिमतेनमः ॥ १२ ॥ नाभिंसौख्यसमुद्रायवामनायतथोदरम् ॥ हृदयंहृदयेशायस्तनावाह्लादकारिणे ॥१३॥ उत्कण्ठायेतिवैकण्ठमास्यमानन्दकारिणे ॥ वामांसंपुष्पचापायपुष्पबा

णायदक्षिणम् ॥ १४ ॥ मानसायेतिवैमौलिंविलोलायेतिमूर्द्धजम् ॥ सर्वात्मनेशिरस्तद्वद्देवदेवस्यपूजयेत् ॥ १५ ॥ नमःशिवायशान्ताय
पाशाङ्कुशधरायच ॥ गदिनेपीतवस्त्रायशङ्खचक्रधरायच ॥ १६ ॥ नमोनारायणायेतिकामदेवात्मनेनमः ॥ नमःशान्त्यैनमःप्रीत्यैनमोरत्यै
नमःश्रियै ॥ १७ ॥ नमःपुष्ट्यैनमस्तुष्ट्यैनमःसर्वार्थसम्पदे ॥ एवंसम्पूज्यगोविन्दमनङ्गात्मकमीश्वरम् ॥ १८ ॥ गन्धमाल्यैस्तथाधूपैर्नैवे
द्येनचभामिनी ॥ ततआहूयधर्मज्ञंब्राह्मणंवेदपारगम् ॥ १९ ॥ अव्यङ्गमथसम्पूज्यगन्धपुष्पार्चनादिभिः ॥ शालेयतण्डुलप्रस्थंघृतपात्रेणसंयु
तम् ॥ १२० ॥ तस्मैविप्रायवैदद्यान्माधवःप्रीयतामिति ॥ यथेष्टाहारसम्भुक्तमेनंद्विजमनुत्तमम् ॥ २१ ॥ रत्यर्थंकामदेवोऽयमितिचित्तेच
धारयेत् ॥ यद्यदिच्छतिविप्रेन्द्रस्तत्तत्कुर्याद्विलासिनी ॥२२॥ सर्वभावेनचात्मानमर्पयेत्स्मितभाषिणी ॥ एवमादित्यवारेणसर्वमेतत्समाचरेत
॥२३॥तण्डुलप्रस्थदानंचयावन्मासास्त्रयोदश॥ततस्त्रयोदशेमासिसम्प्राप्तेचास्यभामिनी॥२४॥विप्रस्योपस्करैर्युक्ताशय्यांदद्याद्विचक्षणा॥सोपधानां
सविन्यासांस्वास्तगवरणांशुभाम्॥२५॥दीपिकोपानहच्छत्रपादुकासनसंयुताम्॥सपत्नीकमलङ्कृत्यहेमसूत्राङ्गुलीयकैः॥२६॥सूक्ष्मवस्त्रैःसकटकैर्धूप
माल्यानुलेपनैः ॥ कामदेवंसपत्नीकंगुडकुम्भोपरिस्थितम् ॥ २७ ॥ ताम्रपात्रासनगतंहेमनेत्रपटावृतम् ॥ सुकांस्यभाजनोपेतमिक्षुदण्डसमन्वितम्
॥ २८ ॥ दद्यादनेनमन्त्रेणतथैकांगांपयस्विनीम् ॥ यथान्तरंनपश्यामिकामकेशवयोःसदा ॥ २९ ॥ तथैवसर्वकामाप्तिरस्तुविप्रसदामम ॥ तथाच
काञ्चनंदेवंप्रतिगृह्यद्विजोत्तमः ॥१३०॥ कोऽदात्कामोऽदादितिवैदिकंमन्त्रमुदीरयेत् ॥ ततःप्रदक्षिणीकृत्यविसृज्यद्विजपुङ्गवम् ॥ ३१ ॥ शय्यासना
दिकंसर्वंब्राह्मणस्यगृहंनयेत् ॥ ततःप्रभृतियोऽन्योऽपिरत्यर्थंगेहमागतः ॥ ३२ ॥ संम्मान्यसूर्यवारेणससम्पूज्योभवेत्सदा ॥ एवंत्रयोदशंयावन्मासमे
कंद्विजोत्तमम् ॥ ३३ ॥ तर्पयित्वायथाकामंप्रेषयेच्चैवमन्दिरम् ॥ तदनुज्ञयारूपवन्तंयावदस्यागमोभवेत् ॥ ३४ ॥ आत्मनोऽपियदाविघ्नंगर्भसूत
कराजकम् ॥ दैवंवामानुषंवास्यादुपगगणवाततः ॥३५॥ सावाराननष्टपश्चाशद्यथाशक्तिसमर्पयेत् ॥ एतद्धिकथितंसम्यग्भवतीनांविशेषतः ॥ ३६ ॥
स्वधर्मोऽयंयतोभाव्योवेश्यानामिहसर्वदा ॥ शय्ययात्यज्यतेदेवनकदाचिद्यथाभवान् ॥ ३७ ॥ शय्याममाप्यशून्येयंतथास्तुमधुसूदन ॥ गीतवा
दित्रनिर्घोषंदेवदेवस्यकारयेत् ॥ ३८ ॥ एतद्वःकथितंसर्वंवेश्याधर्ममशेषतः ॥ पुरुहूतेनयत्प्रोक्तंदानवीषुपुरामया ॥ ३९ ॥ तदिदंसाम्प्रतंसर्वंभवती
ष्वपियुज्यते ॥ सर्वपापप्रशमनमनन्तफलदायकम् ॥ कल्याणिनीनांकथितंतदेतद्दुश्चरंव्रतम् ॥ १४० ॥ करोतियाशेषमुदग्रमेतत्कल्याणिनीमा
धवलोकसंस्था ॥ सापूजितादेवगणैरशेषैरानन्दकृत्स्थानमुपैतिविष्णोः ॥ ४१ ॥ तपोधनःसोऽप्यभिधायचैतदनङ्गदानव्रतमङ्गनानाम् ॥

स्वस्थानमेष्यन्तिसमस्तमित्थंव्रतंकरिष्यन्तिचदेवयोने ॥१४२॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेवश्याव्रतकथनंनामत्रयोविंशोऽध्यायः ॥ २३ ॥
ब्रह्मोवाच ॥ भगवन्पुरुषस्येहस्त्रियाश्चवरदायकम् ॥ शोकव्याधिभयन्दुःखंनभवेद्येनतद्वद ॥ १ ॥ शङ्करउवाच ॥ श्रावणस्यद्वितीयायांकृष्णायांम
धुसूदनः ॥ क्षीरार्णवेसपत्नीकःसदावसतिकेशवः ॥२॥ तस्यांसम्पूज्यगोविन्दंसर्वान्कामानवाप्नुयात् ॥ गोभूहरिण्यदानादिसप्तकल्पशतानुगम्॥३॥
आवाहनादिकाम्पूजांपूर्ववत्परिकल्पयेत् ॥ अशून्यशयनानामद्वितीयाऽसौप्रकीर्तिता ॥४ ॥ तस्यांसम्पूजयेद्विष्णुमेभिमन्त्रैर्विधानतः ॥ श्रीवत्सधा
रिञ्छ्रीकान्तश्रीपतेश्रीधराव्यय ॥ ५ ॥ गार्हस्थ्यंमाप्रणाशंमेयातुधर्मार्थकामदम् ॥ अग्नयोमाप्रणश्यन्तुदेवताःपुरुषोत्तम ॥ ६ ॥ पितरोमाप्रण
श्यन्तुममदाम्पत्यभेदतः ॥ लक्ष्म्यावियुज्यतेदेवोनकदाचिद्यथाहरिः ॥ ७ ॥ तथाकलत्रसम्बन्धोदेवमामेवियुज्यताम् ॥ लक्ष्म्यानशून्यंवरदय
थातेशयनंसदा ॥ ८ ॥ शय्याममाप्यशून्यास्तुतथैवमधुसूदन ॥ गीतवादित्रनिर्घोषान्देवदेवस्यकारयेत् ॥ ९ ॥ घण्टाभवेदशक्तस्यसर्ववाद्यमयी
यतः ॥ एवंसम्पूज्यगोविन्दमश्नीयात्तैलवर्जितम् ॥ १० ॥ नक्तमक्षारलवणंयावत्तस्याचतुष्टयम् ॥ ततःप्रभातेसञ्जातेलक्ष्मीपतिसमन्विताम् ॥११॥
दीपान्नभाजनैर्युक्तांशय्यांदद्याद्विलक्षणाम् ॥ पादुकोपानहच्छत्रचामरासनसंयुताम् ॥ १२ ॥ अभीष्टोपस्करैर्युक्तांशुक्लपुष्पाम्बरावृताम् ॥ अव्यङ्गाय
चविप्रायवैष्णवायकुटुम्बिने ॥ १३ ॥ दातव्यावेदविदुषेनवन्ध्यापतयेक्वचित् ॥ तत्रोपवेश्यदाम्पत्यमलङ्कृत्यविधानतः ॥ १४ ॥ पत्न्यास्तु
भाजनंदद्याद्भक्ष्यभोज्यसमन्वितम् ॥ ब्राह्मणस्यापिसौवर्णीमुपस्करसमन्विताम् ॥ १५ ॥ प्रतिमांदेवदेवस्यसोदकुम्भांनिवेदयेत् ॥ एवंयस्तुपुमा
न्कुर्यादशून्यशयनंहरेः ॥१६॥ वित्तशाठ्येनरहितोनारायणपरायणः ॥ नतस्यपत्न्याविरहःकदाचिदपिजायते ॥१७॥ नारीवाविधवाब्रह्मन्यावच्चन्द्रा
र्कतारकम् ॥ नविरूपौनशोकार्तौदम्पतीभवतःक्वचित् ॥ १८ ॥ नपुत्रपशुरत्नानिक्षयंयान्तिपितामह ॥ सप्तकल्पसहस्राणिसप्तकल्पशतानिच॥१९॥
कुर्वन्नशून्यशयनंविष्णुलोकेमहीयते ॥ ब्रह्मोवाच ॥ कथमारोग्यमैश्वर्यंमतिर्धर्मस्थितिस्सदा ॥ २० ॥ अव्यङ्गाथपरेभक्तिर्विष्णौचापिभवे
त्कथम् ॥ ईश्वरउवाच ॥ साधुब्रह्मंस्त्वयापृष्टमिदानींकथयामिते ॥ २१ ॥ विरोचनस्यसंवादंभार्गवस्यचधीमतः ॥ प्रह्लादस्यसुतंदृष्ट्वाद्विरष्टपरि
वत्सरम् ॥ २२ ॥ तस्यरूपमिदंब्रह्मन्सोऽहसद्भृगुनन्दनः ॥ साधुसाधुमहाबाहोविरोचनशिवंतव ॥ २३ ॥ तत्तथाहसितंतस्यपप्रच्छसुरसूदनः ॥
ब्रह्मन्किमर्थमेतत्तेहास्यंवैमामकंकृतम् ॥ २४ ॥ साधुसाध्वितिमामेवमुक्तवांस्त्वंवदस्वमे ॥ तमेवंवादिनंयुक्तमुवाचवदतांवरः ॥ २५ ॥ विस्मयाद्व्रत
माहात्म्याद्धास्यमेतत्कृतंमया ॥ पुरादक्षविनाशायकुपितस्यत्रिशूलिनः ॥ २६ ॥ अपतद्भीमवक्त्रस्यस्वेदबिन्दुर्ललाटजः ॥ भित्त्वासप्तपाता

लानदहत्सप्तसागरान् ॥ २७ ॥ अनेकवक्त्रनयनोऽज्वलज्ज्वलनभीषणः ॥ वीरभद्रइतिख्यातःकरपादायुतैर्युतः ॥ २८ ॥ कृत्वासयज्ञमथनंपुनर्भूत
स्यसंप्लुवः ॥ त्रिजगद्दहनाद्भूयःशिवेनविनिवारितः ॥ २९ ॥ कृतंत्वयावीरभद्रदक्षयज्ञविनाशनम् ॥ इदानीमलमेतेनलोकदाहेनकर्मणा ॥ ३० ॥
शान्तिप्रदानात्सर्वेषांग्रहाणांप्रथमोभव ॥ प्रहृष्टाभिजनाःपूजांकरिष्यन्तिकृतात्मनः ॥ ३१ ॥ अङ्गारकइतिख्यातिंगमिष्यसिधरात्मज ॥ देवलोके
द्वितीयंचतवरूपंभविष्यति ॥ ३२ ॥ येचत्वांपूजयिष्यन्तिचतुर्थ्यांतुदिनेनराः ॥ रूपमारोग्यमैश्वर्यतेष्वनन्तंभविष्यति ॥ ३३ ॥ एवमुक्तस्ततः
शान्तिमगमत्कामरूपधृक् ॥ सजातस्तत्क्षणाद्राजन्ग्रहत्वमगमत्पुनः ॥ ३४ ॥ सकदाचिद्भवांस्तस्यपूजार्घादिकमुत्तमम् ॥ दृष्टवान्क्रियमा
णंचशूद्रेणत्वंव्यवस्थितः ॥ ३५ ॥ तेनत्वंरूपवाञ्जातोसुरःशत्रुकुलाशनिः ॥ विविधाचरुचिर्जातायस्मात्तवविदूरग ॥ ३६ ॥ विरोचनइतिप्राहु
स्तस्मात्त्वांदेवदानवाः ॥ शूद्रेणक्रियमाणस्यव्रतस्यतवदर्शनात् ॥ ३७ ॥ ईदृशीरूपसंपत्तिरितिविस्मितवानहम् ॥ साधुसाध्वितितेनोक्तमहोमाहा
त्म्यमुत्तमम् ॥ पश्यतोऽपिभवेद्रूपमैश्वर्यंकिमुकुर्वतः ॥ ३८ ॥ यस्माच्चभक्त्याधरणीसुतस्यविनिन्द्यमानेनगवादिदानम् ॥ आलोकितंतेन
सुरारिगर्भेसम्भूतिरेषातवदैत्यजाता ॥ ३९ ॥ अथतद्वचनंश्रुत्वाभार्गवस्यमहात्मनः ॥ प्रह्लादनन्दनोवीरःपुनःपप्रच्छभार्गवम् ॥ ४० ॥ विरोचन
उवाच ॥ भगवंस्तद्व्रतंसम्यक्श्रोतुमिच्छामितत्त्वतः ॥ दीयमानंतुयद्दानंमयादृष्टंभवान्तरे ॥ ४१ ॥ माहात्म्यंचविधिंतस्ययथावद्व
क्तुमर्हसि ॥ इतितद्वचनंश्रुत्वाविप्रःप्रोवाचसादरम् ॥ ४२ ॥ चतुर्थ्यङ्गारकदिनेयदाभवतिदानव ॥ मृदास्नानंतदाकुर्यात्पद्मरागविभूषितः ॥ ४३ ॥
अग्निर्मूर्द्धादिवोमन्त्रंजपेत्स्नातउदङ्मुखः ॥ शूद्रस्तूष्णींस्मरन्भौममास्तांभोगविवार्जितः ॥ ४४ ॥ अथास्तमितआदित्येगोमयेनानुलेपयेत् ॥
प्राङ्गणंपुष्पमालाभिरक्षताद्भिःसमन्ततः ॥ ४५ ॥ तदभ्यर्च्यालिखेत्पद्मंकुङ्कुमेनाष्टपत्रकम् ॥ कुङ्कुमस्याप्यभावेनरक्तचन्दनमिष्यते ॥ ४६ ॥
चत्वारःकरकाःकार्याभक्ष्यभोज्यसमन्विताः ॥ तण्डुलरक्तशालयःपद्मरागैश्चसंयुताः ॥ ४७ ॥ चतुष्कोणेषुतान्कृत्वाफलानिविविधानिच ॥ गन्ध
माल्यादिकंसर्वंतथैवविनिवेशयेत् ॥ ४८ ॥ सुवर्णशृङ्गांकपिलामथार्च्यरौप्यैःखुरैःकांस्यदोहांसवस्त्राम् ॥ धुरन्धरंरक्तखुरंचसौम्यंधान्यानिसप्ताम्बर
संयुतानि ॥ ४९ ॥ अङ्गुष्ठमात्रंपुरुषंतथैवसौवर्णमप्यायतबाहुदण्डम् ॥ चतुर्भुजंहेममयंचताम्रपात्रेगुडस्योपरिसर्पियुक्तम् ॥ ५० ॥ सामस्वरज्ञाय
जितेन्द्रियायवाग्रूपशीलान्वयसंयुताय ॥ दातव्यमेतत्सकलंद्विजायकुटुम्बिनेनैवतुदम्भयुक्ते ॥ ५१ ॥ भूमिपुत्रमहाभागस्वेदोद्भवपिनाकिनः ॥ रूपा
र्थीत्वांप्रपन्नोऽहंगृहाणार्घ्यंनमोऽस्तुते ॥ ५२ ॥ मन्त्रेणानेनदत्त्वार्घ्यंरक्तचन्दनवारिणा ॥ ततोऽर्चयेद्विप्रवरंरक्तमाल्याम्बरादिभिः ॥ ५३ ॥ दद्यात्तेनैव

मन्त्रेणभौमंगोमिथुनान्वितम् ॥ शय्यांचशक्तिमान्दद्यात्सर्वोपस्करसंयुताम् ॥ ५४ ॥ यद्यदिष्टतमंलोकेयच्चास्यदयितंगृहे ॥ तत्तद्गुणवतेदेयंदत्तस्या क्षयमिच्छता ॥ ५५ ॥ ततःप्रदक्षिणंकृत्वाविसृज्यद्विजसत्तमम् ॥ नक्तंक्षीराशनंकुर्यादेवंचाङ्गारकाष्टकम् ॥ ५६ ॥ चतुरोवाथवातस्ययत्पुण्यं तद्वदामिते ॥ रूपसौभाग्यसंपन्नःपुमाञ्जन्मनिजन्मनि ॥ ५७ ॥ विष्णौवाथशिवेभक्तःसप्तद्वीपाधिपोभवेत् ॥ सप्तकल्पसहस्राणिरुद्रलोकेमही यते ॥ तस्मात्त्वमपिदैत्येन्द्रव्रतमेतत्समाचर ॥ ५८ ॥ इत्येवमुक्तोभृगुनन्दनेनचकारसवर्वंतमेवदैत्यः ॥ त्वंचापिराजन्कुरुसर्वमेतद्यतोऽक्षयं वेदविदोवदन्ति ॥५९॥ शृणोतियश्चैनमनन्यचेतास्तस्यापिसर्वंभगवन्विधत्त ॥ ६० ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेअङ्गारकचतुर्थीव्रतंनामचतु र्विंशोऽध्यायः ॥ २४ ॥ भीष्मउवाच ॥ उपवासेष्वशक्तस्यतदेवफलमिच्छतः ॥ अनभ्यासेनरोगाद्वाकिमिष्टंव्रतमुच्यताम् ॥ १ ॥ पुलस्त्यउवाच॥ उपवासेष्वशक्तानांनक्तंभोजनमिष्यते ॥ यस्मिन्व्रतेतदप्यत्रश्रूयतांवैव्रतंमहत् ॥ २ ॥ आदित्यशयनंनामयथावच्छङ्कराचनम् ॥ येषुनक्षत्रयोगेषु पुराणज्ञाःप्रचक्षते ॥ ३ ॥ यदाहस्तेनसप्तम्यामादित्यस्यदिनंभवेत् ॥ सूर्यस्यचापिसङ्क्रातिस्तिथिस्सासार्वकामिकी ॥ ४ ॥ उमामहेश्वरंस्यार्चा मर्चयेत्सूर्यनामभिः ॥ सूर्यार्चांशिवलिङ्गंचउभयंपूजयेद्यतः ॥ ५ ॥ उमापतेरवेश्चापिनभेदःक्वचिदिष्यते ॥ यस्मात्तस्मान्नृपश्रेष्ठगृहेभानुंसमर्च येत् ॥ ६॥ हस्तेनसूर्यायनमोऽस्तुपादावर्कायचित्रासुचगुल्फदेशम् ॥ स्वातीषुजङ्घेपुरुषोत्तमायधात्रेविशाखासुचजानुदेशम् ॥ ७ ॥ तथानुराधासुन मोऽभिपूज्यमूरुद्वयंचैवसहस्रभानोः ॥ ज्येष्ठास्वनङ्गायनमोऽस्तुगुह्यमिन्द्रायभीमायकटिंचमूले॥८॥ पूर्वोत्तराषाढयुगेचनाभिंत्वष्ट्रेनमःसप्ततुरङ्गमाय॥ तीक्ष्णांशवेश्रवणेचाथकुक्षिंपृष्ठंधनिष्ठासुविकर्तनाय ॥ ९ ॥ वक्षस्थलंध्वान्तविनाशनायजलाधिपर्क्षेप्रतिपूजनीयम् ॥ पूर्वोत्तराभाद्रपदद्वयेचबाहू तमश्चण्डकरायपूज्यौ ॥१०॥ साम्नामधीशायकरद्वयंचसम्पूजनीयंनृपरेवतीषु ॥ नखानिपूज्यानितथाश्विनीषुनमोऽस्तुसप्ताश्वधुरन्धराय ॥ ११ ॥ कठोरधाम्नेभरणीषुकण्ठंदिवाकरायेत्यभिपूजनीयम् ॥ ग्रीवाग्निपर्क्षेऽधरसम्पुटेतुसम्पूजयेद्धारतरोहिणीषु ॥१२॥ मृगेऽचनीयारसनापुरारेरौद्रेतुदन्ता हरयेनमस्ते ॥ नमःसवित्रेइतिशङ्करस्यनासाभिपूज्याचपुनर्वसौच ॥ १३ ॥ ललाटमम्भोरुहवल्लभायपुष्येऽलकान्वेदशरीरधारिणे ॥ सार्पेच मौलिंविबुधप्रियायमघासुकर्णावितिपूजनीयौ ॥ १४ ॥ पूर्वासुगोब्राह्मणनन्दनायनेत्राणिसंपूज्यतमानिशम्भोः ॥ अथोत्तराफाल्गुनिभेभ्रुवौचवि श्वेश्वरायेतिचपूजनीये ॥ १५ ॥ नमोऽस्तुपाशाङ्कुशपद्मशूलकपालसर्पेन्दुधनुर्धराय ॥ गयासुरानङ्गपुरान्धकादिविनाशमूलायनमःशिवाय ॥ १६ ॥ इत्यादिकाङ्गानिचपूजयित्वाविश्वेश्वरायेतिशिरोऽभिपूज्यम् ॥ अत्रापिभोक्तव्यमतैलमन्नममांसमक्षारमभुक्तशेषम् ॥ १७ ॥ इत्येवंनृ

पनक्तानिकृत्वादद्यात्पुनर्वसौ ॥ शालेयतण्डुलप्रस्थमौदुम्बरमथोघृतम् ॥ १८ ॥ संस्थाप्यपात्रेविप्रायसहिरण्यंनिवेदयेत् ॥ सप्तमेवस्त्रयुग्मंतुपारणे
त्वधिकंभवेत् ॥ १९ ॥ चतुर्दशेतुसम्प्राप्तेपारणंभारतादिके ॥ ब्राह्मणंभोजयेद्भक्त्यागुडक्षीरघृतादिभिः ॥ २० ॥ कृत्वाचकाञ्चनंपद्ममष्टपत्रंसक
र्णिकम् ॥ शुद्धमष्टाङ्गुलंतच्चपद्मरागदलान्वितम् ॥२१॥ शय्यांसुलक्षणांकृत्वाविरुद्धग्रन्थिवर्जिताम् ॥ सोपधानवितानांचस्वास्तरावरणाश्रयाम्
॥ २२ ॥ पादुकोपानहच्छत्रचामरासनदर्पणैः ॥ भूषणैरपिसंयुक्तांफलवस्त्रानुलेपनैः ॥ २३ ॥ तस्यांविधायतत्पद्ममलङ्कृत्यगुणान्विताम् ॥ कपि
लांवस्त्रसंयुक्तामतिशीलांपयस्विनीम् ॥ २४ ॥ रौप्यखुरांहेमशृङ्गींसवत्सांकांस्यदोहनाम् ॥ दद्यान्मन्त्रेणतांधेनुंपूर्वाह्णंनातिलङ्घयेत् ॥ २५ ॥
यथैवादित्यशयनमशून्यंतवसर्वदा ॥ कान्त्याधृत्याश्रियापुष्ट्यातथामेसन्तुवृद्धयः ॥ २६ ॥ तथानदेवाःश्रेयांसंत्वदन्यमनघंविदुः ॥ तथामामुद्धरा
शेषदुःखसंसारसागरात् ॥ २७ ॥ ततःप्रदक्षिणीकृत्यप्रणम्यचविसर्जयेत् ॥ शय्यांगवादितत्सर्वंद्विजस्यभवननयेत् ॥ २८ ॥ नैतद्विशीला
यनदाम्भिकायप्रकाशनीयंव्रतमिन्दुमौलेः ॥ गोविप्रदेवर्षिविकर्मयोगिनांयश्चापिनिन्दामधिकांविधत्ते ॥ २९ ॥ भक्तायदान्तायचगुह्यमेतदाख्ये
यमानन्दकरंशिवञ्च ॥ इदंमहापातकिनांनराणांअघक्षयंवेदविदोवदन्ति ॥ ३० ॥ नबन्धुपुत्रैर्नधनैर्वियुक्तःपत्नीभिरानन्दकरःसुराणाम् ॥ नाभ्ये
तिरोगंनचदुःखमोहंयाचापिनारीकुरुतेऽथभक्त्या ॥ ३१ ॥ इदंवसिष्ठेनपुरार्जुनेनकृतंकुबेरेणपुरन्दरेण ॥ यत्कीर्तनादप्यखिलानिनाशमायान्ति
पापानिनसंशयोऽत्र ॥ ३२ ॥ इतिपठतिशृणोतिवायइत्थंरविशयनंपुरुहूतवल्लभःस्यात् ॥ अपिनरकगतान्पितॄनशेषानपिदिवमानयतीहयःकरोति ॥ ३३ ॥ अश्वत्थंचवटंचैवोदुम्बरंवृक्षमेवच ॥ नन्दीशंजम्बुवृक्षंचबिल्वंप्राहुर्महर्षयः ॥ ३४ ॥ मार्गशीर्षादिमासाभ्यांद्वाभ्यांद्वाभ्यामथ
क्रमात् ॥ एकैकंदन्तधवनंवृक्षस्यैवेनपुकारयेत् ॥३५॥ दद्यात्समाप्तेदध्यन्नंवितानध्वजचामरम् ॥ द्विजानामुदकुम्भांश्चपञ्चरत्नसमन्वितान् ॥ ३६ ॥
नवित्तशाठ्यंकुर्वीतकुर्वन्दोषानवाप्नुयात् ॥३७॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेआदित्यशयनव्रतंनामपञ्चविंशोऽध्यायः ॥ २५ ॥ भीष्मउवाच ॥
दीर्घायुरारोग्यकुलाभिवृद्धिभिर्युक्तःपुमान्रूपकुलान्वितःस्यात् ॥ मुहुर्मुहुर्जन्मनियनसम्यग्व्रतंसमाचक्ष्वचशीतरश्मेः ॥ १ ॥ पुलस्त्यउवाच ॥
त्वयापृष्टमिदंसम्यगक्षयस्वर्गकारकम् ॥ रहस्यंतुप्रवक्ष्यामियत्पुराणविदोविदुः ॥ २ ॥ रोहिणीचन्द्रशयनंनामव्रतमिहोच्यते ॥ तस्मिन्नारायणस्या
र्चामर्चयेदिन्दुनामभिः ॥ ३ ॥ यदासोमदिनेशुक्लाभवेत्पञ्चदशीक्वचित् ॥ अथवाब्रह्मनक्षत्रंपौर्णमास्यांप्रजायते ॥ ४ ॥ तदास्नानंनरःकुर्यात्प
ञ्चगव्येनसर्षपैः ॥ आप्यायस्वेतिचजपेद्विद्वानष्टशतंपुनः ॥ ५ ॥ शूद्रोऽपिपरयाभक्त्यापाषण्डालापवर्जितः ॥ सोमायवरदायाथविष्णवेचनमो

नमः ॥ ६ ॥ कृतजप्यःस्वभवनमागत्यमधुसूदनम् ॥ पूजयेत्फलपुष्पैश्चसोमनामानिकीर्तयन् ॥ ७ ॥ सोमायशान्तायनमोऽस्तुपादावनन्तधाम्नेतिचजानुजङ्घे ॥ ऊरुद्वयंचापिजलोदरायसम्पूजयेन्मेढ्रमनङ्गधाम्ने ॥ ८ ॥ नमोनमःकामसुखप्रदायकटिःशशाङ्कस्यसदार्चनीयः ॥ तथोदरंचाप्यमृतोदरायनाभिःशशाङ्कायनमोऽभिपूज्या ॥ ९ ॥ नमोऽस्तुचन्द्रायमुखंचनित्यंदन्ताद्विजानामधिपायपूज्याः ॥ हास्यंनमश्चन्द्रमसेऽभिपूज्यमोष्ठौतुकौमोदवनप्रियाय ॥ १० ॥ नासाचनाथायवरौषधीनामानन्दबीजायपुनर्भ्रुवौच ॥ नेत्रद्वयंपद्मनिभंतथेन्दोरिन्दीवरव्यासकरायशौरेः ॥ ॥ ११ ॥ नमःसमस्ताध्वरपूजितायकर्णद्वयंदैत्यनिषूदनाय ॥ ललाटमिन्दोरुदधिप्रियायकेशाःसुषुम्नाधिपतेःप्रपूज्याः ॥ १२ ॥ शिरःशशाङ्कायनमोमुरारेर्विश्वेश्वरायाथनमःकिरीटम् ॥ पद्मप्रियेरोहिणीनामलक्ष्मिसौभाग्यसौख्यामृतसागराय ॥ १३ ॥ देवींचसम्पूज्यसुगन्धिपुष्पैर्नैवेद्यधूपादिभिरिन्दुपत्नीम् ॥ सुप्त्वातुभूमौपुनरुत्थितोयःस्नात्वाचविप्रायहविष्यभुक्तः ॥ १४ ॥ देयःप्रभातेसहिरण्यवारिकुम्भोनमःपापविनाशनाय ॥ सम्प्राश्यगोमूत्रममांसमन्नमक्षारमष्टावथविंशतिंच ॥ १५ ॥ ग्रासांश्वत्रीन्सर्पियुतानुपोष्यभुक्तेतिहासंशृणुयान्मुहूर्तम् ॥ कदम्बनीलोत्पलकेतकानिजातिःसरोजंशतपत्रिकाच ॥ १६ ॥-अम्लानपुष्पाण्यथसिन्दुवारंपुष्पंपुनर्भारतमल्लिकायाः ॥ शुक्लंचपुष्पंकरवीरपुष्पंश्रीचम्पकंचन्द्रमसेप्रदेयम् ॥ १७ ॥ श्रावणादिषुमासेषुक्रमादेतानिसर्वदा ॥ यस्मिन्मासेव्रतादिःस्यात्तत्पुष्पैरर्चयेद्धरिम् ॥ १८ ॥ एवंसंवत्सरंयावदुपोष्यविधिवन्नरः ॥ व्रतान्तेशयनंदद्याच्छयनोपस्करान्वितम् ॥१९॥ रोहिणीचन्द्रमिथुनंकारयित्वातुकाञ्चनम् ॥ चन्द्रःषडङ्गुलःकार्योरोहिणीचतुरङ्गुला ॥२०॥ मुक्ताफलाष्टकयुतांसितनेत्रसमन्विताम् ॥ क्षीरकुम्भोपरिपुनःकांस्यपात्राक्षतान्विताम् ॥ २१ ॥ दद्यान्मन्त्रेणपूर्वाह्णेशालीक्षुफलसंयुताम् ॥ श्वेतामथसुवर्णास्यांरौप्यखुरसमन्विताम् ॥२२॥ सवस्त्रभाजनांधेनुंतथाशङ्खंचभाजनम् ॥ भूषणैर्द्विजदाम्पत्यमलङ्कृत्यगुणान्वितम् ॥२३॥ चन्द्रोऽयंविप्ररूपेणसभार्यइतिकल्पयेत् ॥ यथातेरोहिणीकृष्णशय्यांत्यक्त्वानगच्छति ॥ २४ ॥ सोमरूपस्यवैतद्वन्ममेभेदोविभूतिभिः ॥ यथात्वमेवसर्वेषांपरमानन्दमुक्तिदः ॥ २५ ॥ भुक्तिर्मुक्तिस्तथाभक्तिस्त्वयिचन्द्रदृढास्तुमे ॥ इतिसंसारभीतस्यमुक्तिकामस्यचानघ ॥ २६ ॥ रूपारोग्यायुषामेतद्विधायकमनुत्तमम् ॥ इदमेवपितॄणांचसर्वदावल्लभंनृप ॥ २७ ॥ त्रलोक्याधिपतिर्भूत्वासप्तकल्पशतत्रयम् ॥ चन्द्रलोकमवाप्नोतिपुनरावृत्तिदुर्लभम् ॥ २८ ॥ नारीवारोहिणीचन्द्रशयनंयासमाचरेत् ॥ सापितत्फलमाप्नोतिपुनरावृत्तिदुर्लभम् ॥ २९ ॥ इतिपठतिशृणोतिवायइत्थंमधुमथनार्चनमिन्दुकीर्तनेन॥ मतिमपिचददातिसोऽपिशौरेर्भवनगतःपरिपूज्यतेऽमरौघैः॥३०॥ इति श्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेरोहिणीचन्द्रशयनव्रतंनामष

द्विंशोऽध्यायः ॥ २६ ॥ भीष्मउवाच ॥ तटाकारामकूपेषुवापीषुनलिनीषुच ॥ विधिंवदस्वमेब्रह्मन्देवतायतनेषुच ॥ १ ॥ केतत्रऋत्विजोविप्रावे
दीवाकीदृशीभवेत् ॥ दक्षिणाबलयःकालःस्थानमाचार्यएवच ॥ २ ॥ द्रव्याणिकानिशस्तानिसर्वमाचक्ष्वसुव्रत ॥ पुलस्त्यउवाच ॥ शृणुराजन्महा
बाहोतटाकादिषुयोविधिः ॥ ३ ॥ पुराणेष्वितिहासोऽयपठ्यतेराजसत्तम ॥ प्राप्यपक्षंशुभंशुक्कंसंप्राप्तेचोत्तरायणे ॥ ४ ॥ पुण्येऽह्निविप्रैःकथितेकृ
त्वाब्राह्मणवाचनम् ॥ अशुभैर्वर्जितेदेशेतटाकस्यसमीपतः ॥५॥ चतुर्हस्तांसमांवेदींचतुरस्रांचतुर्मुखीम् ॥ तथाषोडशहस्तःस्यान्मण्डपश्चचतुर्मुखः॥
॥ ६ ॥ वेद्यास्तुपरितोगर्तारत्निमात्रास्त्रिमेखलाः ॥ नवसप्ताथवापञ्चऋजुवक्रानृपात्मज ॥ ७ ॥ वितस्तिमात्रायोनिःस्यात्षट्सप्ताङ्गुलिविस्तृता॥
गर्ताश्चहस्तमात्रास्स्युस्त्रिपर्वोच्छ्रितमेखलाः ॥ ८ ॥ सर्वतस्तुसवर्णाःस्युःपताकाध्वजसंयुताः ॥ अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानितु ॥ ९ ॥ मण्ड
पस्यप्रतिदिशंद्वाराण्येतानिकारयेत् ॥ शुभास्तत्राष्टहोतारोद्वारपालास्तथाष्टवै ॥ १० ॥ अष्टौतुजापकाःकार्याब्राह्मणावेदपारगाः ॥ सर्वलक्षणस
म्पूर्णान्मन्त्रज्ञान्विजितेन्द्रियान् ॥ ११ ॥ कुलशीलसमायुक्तान्स्थापयेद्वैद्विजोत्तमान् ॥ प्रतिगर्तेषुकलशायज्ञोपकरणानिच ॥ १२ ॥ व्यजनेचा
सनंशुभ्रंताम्रपात्रंसुविस्तरम् ॥ ततस्त्वनेकवर्णास्स्युर्बलयःप्रतिदैवतम् ॥ १३ ॥ आचार्यःप्रक्षिपेद्भूमावनुमन्त्र्यविचक्षणः ॥ अरत्निमात्रोयूपःस्या
त्क्षीरवृक्षविनिर्मितः ॥ १४ ॥ यजमानप्रमाणोवासंस्थाप्योभूतिमिच्छता ॥ हेमालङ्कारिणःकार्याःपञ्चविंशतिऋत्विजः ॥१५॥ कुण्डलानिचहैमानि
केयूरकटकानिच ॥ तथाङ्गुलिपवित्राणिवासांसिविविधानिच ॥ १६ ॥ दद्यात्समानिसर्वेषामाचार्येद्विगुणंस्मृतम् ॥ दद्याच्छयनसंयुक्तमात्मनश्चाप
पियत्प्रियम् ॥ १७ ॥ सौवर्णौकूर्ममकरौराजतौमत्स्यडुण्डुभौ ॥ ताम्रौकम्भीरमण्डूकावायसःशिशुमारकः ॥ १८ ॥ एवमासाद्यतत्सर्वमादावेवविशां
ते॥शुक्लमाल्याम्बरधरःशुक्लगन्धानुलेपनः॥१९॥सर्वौषध्युदकैःसर्वैःस्नापितोवेदपारगैः ॥ यजमानःसपत्नीकःपुत्रपौत्रसमन्वितः ॥२०॥ पश्चिमद्वार
मासाद्यप्रविशेद्यागमण्डपम् ॥ ततोमङ्गलशब्देनभेरीणांनिःस्वनेनच ॥ २१ ॥ रजसामण्डलंकुर्यात्पञ्चवर्णेनतत्त्ववित् ॥ षोडशारंततश्चक्रंपद्मगर्भं
चतुर्मुखम् ॥ २२ ॥ चतुरस्रंतुपरितोवृत्तंमध्येसुशोभनम् ॥ वेद्याश्चोपरितःकृत्वाग्रहाँल्लोकपतींस्ततः ॥ २३ ॥ संन्यसेन्मन्त्रतःसर्वान्प्रतिदिक्षुवि
चक्षणः ॥ कलशंस्थापयेन्मध्येवारुणंमन्त्रमाश्रितम् ॥ २४ ॥ ब्रह्माणंचशिवंविष्णुंतत्रैवस्थापयेद्बुधः ॥ विनायकंचविन्यस्यकमलामम्बिकान्तथा
॥ २५ ॥ शान्त्यर्थंसर्वलोकानांभूतग्रामंन्यसेत्ततः ॥ पुष्पभक्ष्यफलैर्युक्तमेवंकृत्वाधिवासनम् ॥२६॥ कुम्भांश्चरत्नगर्भांस्तान्वासोभिःपरिवेष्टयेत् ॥
पुष्पगन्धैरलङ्कृत्यद्वारपालान्समन्ततः ॥ २७ ॥ यजध्वमितितान्ब्रूयादाचार्यमभिपूजयेत् ॥ बह्वृचौपूर्वतःस्थाप्यौदक्षिणेनयजुर्विदौ ॥ २८ ॥

सामगौपश्चिमेस्थाप्यावुत्तरेणाप्यथर्वणौ ॥ उदङ्मुखोदक्षिणतोयजमानउपाविशेत् ॥ २९ ॥ यजध्वमितितान्ब्रूयाद्याजकान्पुनरेवतान् ॥
उत्कृष्टमन्त्रजाप्येनतिष्ठध्वमितिजापकान् ॥ ३० ॥ एवमादिश्यतान्सर्वान्संधुक्ष्याग्निंसमन्त्रवित् ॥ जुहुयादाहुतीर्मन्त्रैराज्यंचसमिधस्तथा ॥३१॥
ऋत्विग्भिश्चैवहोतव्यंवारुणैरेवसर्वतः ॥ ग्रहेभ्योविधिवद्धुत्वातथेन्द्रायेश्वरायच ॥ ३२ ॥ मरुद्भ्योलोकपालेभ्योविधिवद्विश्वकर्मणे ॥ शान्तिसू
क्तंचरौद्रंचपावमानंचमङ्गलम् ॥३३॥ जपेयुःपौरुषंसूक्तंपूर्वतोबहृचःपृथक् ॥ शाक्रंरौद्रंचसौम्यंचकौष्माण्डंजातवेदसम् ॥३४॥ सौरंसूक्तंजपेयुस्तेदक्षि
णेनयजुर्विदः ॥ वैराजंपौरुषंसूक्तंसौपर्णंरुद्रसंहितम् ॥ ३५ ॥ शैशवंपञ्चनिधनंगायत्रंज्येष्ठसामच ॥ वामदेव्यंबृहत्सामरौरवंचरथन्तरम्
॥ ३६ ॥ गवांव्रतंविकीर्णंचरक्षोघ्नंचयमंतथा ॥ गायेयुःसामगाराजन्पश्चिमद्वारमाश्रिताः ॥ ३७ ॥ आथर्वणाश्चोत्तरतःशान्तिकंपौष्टिकंतथा ॥
जपेयुर्मनसादेवमाश्रितावरुणंप्रभुम् ॥ ३८ ॥ पूर्वेद्युरभितोरात्रावेवंकृत्वाधिवासनम् ॥ गजाश्वरथवल्मीकसंगमाद्व्रजगोकुलात् ॥ ३९ ॥
मृदमादायकुम्भेषुप्रक्षिपेदोषधीस्तथा ॥ रोचनांचससिद्धार्थांगन्धान्गुग्गुलुमेवच ॥ ४० ॥ स्नापनंतस्यकर्तव्यंपञ्चगव्यसमन्वितम् ॥ पूर्वंक
र्तुर्महामन्त्रैरेवंकृत्वाविधानतः ॥ ४१ ॥ अतिवाह्यक्षपामेवंविधियुक्तेनकर्मणा ॥ ततःप्रभातेविमलेसञ्जातेतुशतंगवाम् ॥ ४२ ॥ ब्राह्मणेभ्यःप्र
दातव्यमष्टषष्टचथवापुनः ॥ पञ्चाशद्वाथषट्त्रिंशत्पञ्चविंशतिवापुनः ॥ ४३ ॥ ततश्चावसरप्राप्तेशुद्धेलग्नेसुशोभने ॥ वेदशब्दैःसगन्धर्वैर्वाद्यैश्च
विविधैःपुनः ॥ ४४ ॥ कनकालङ्कृतांकृत्वाजलेगामवतारयेत् ॥ सामगायचसादेयाब्राह्मणायविशांपते ॥ ४५ ॥ पात्रीमादायसौवर्णींपञ्च
रत्नसमन्विताम् ॥ ततोनिक्षिप्यमकरान्मत्स्यादींश्चैवसर्वशः ॥ ४६ ॥ धृतांचतुर्भिर्विप्रैश्चवेदवेदाङ्गपारगैः ॥ महानदीजलोपेतांदध्यक्षतविभू
षिताम् ॥४७॥ उत्तराभिमुखांन्युब्जांजलमध्येतुकारयेत् ॥ आथर्वणेनसुस्नातांपुनर्मायांतथैवच ॥४८॥ आपोहिष्ठेतिमन्त्रेणक्षिप्त्वागत्यचमण्डपम् ॥
पूजयित्वासदस्यान्वैबलिंदद्यात्समन्ततः ॥ ४९ ॥ पुनर्दिनानिहोतव्यंचत्वारिराजसत्तम ॥ चतुर्थीकर्मकर्तव्यंदेयंतत्रापिशक्तितः ॥ ५० ॥
कृत्वातुयज्ञपात्राणियज्ञोपकरणानिच ॥ ऋत्विग्भ्यस्तुसमंदद्यान्मण्डपंविभजेत्पुनः ॥ ५१ ॥ हेमपात्रींचशय्यांचविप्रायचनिवेदयेत् ॥ ततः
सहस्रंविप्राणामथवाऽष्टशतंतथा ॥ ५२ ॥ भोजनीयंयथाशक्तिपञ्चाशद्वाथविंशतिः ॥ एवमेषपुराणेषुतटाकविधिरुच्यते ॥ ५३ ॥ कूप
वापीषुसर्वासुतथापुष्करिणीषुच ॥ एषएवविधिर्दृष्टःप्रतिष्ठासुतथैवच ॥ ५४ ॥ मन्त्रतस्तुविशेषःस्यात्प्रासादोद्यानभूमिषु ॥ अयंत्वशक्तावर्
धेनविधिर्दृष्टःस्वयंभुवा ॥ ५५ ॥ स्वल्पेष्वेकाग्निवत्कार्योवित्तशाठ्यविवर्जितैः ॥ प्रावृट्कालेस्थितंतोयमग्निष्टोमसमंस्मृतम् ॥ ५६ ॥

शरत्कालस्थितंयत्स्यात्तदुक्तफलदायकम् ॥ वाजपेयातिरात्राभ्यांहेमन्तेशिशिरेस्थितम् ॥ ५७ ॥ अश्वमेधसमंप्रावृड्वसन्तसमयेस्थितम् ॥
ग्रीष्मेऽपियत्स्थितंतोयंराजसूयाद्विशिष्यते ॥ ५८ ॥ एतान्महाराजविशेषधर्मान्करोतिचोर्व्यामतिशुद्धबुद्धिः ॥ सयातिब्रह्मालयमेवशुद्धःकल्पान
नेकान्दिविमोदतेच ॥ ५९ ॥ अनेकलोकान्विचरन्स्वर्गादीन्भुक्त्वापरार्धद्वयमङ्गनाभिः ॥ सहैवविष्णोःपरमंपदंयत्प्राप्नोतितद्योगबलेनभूयः
॥ ६० ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेतटाकप्रतिष्ठाविधिर्नामसप्तविंशोऽध्यायः ॥ २७ ॥ भीष्मउवाच ॥ पादपानांविधिंब्रह्म
न्यथावद्विस्तराद्वद ॥ विधिनायेनकर्त्तव्यंपादपारोपणंबुधैः ॥ १ ॥ येचलोकाःस्मृतायेषांतानिदानींवदस्वमे ॥ पुलस्त्यउवाच ॥ पादपानां
विधिंवक्ष्येतथैवोद्यानभूमिषु ॥ २ ॥ तटाकविधिवत्सर्वंसमाप्यजगतीश्वर ॥ ऋत्विङ्मण्डपसंभारमाचार्यंचापितद्विधम् ॥ ३ ॥ पूजयेद्ब्राह्म
णांस्तद्वद्धेमवस्त्रानुलेपनैः ॥ सर्वौषध्युदकैःसिक्तान्दध्यक्षतविभूषितान् ॥ ४ ॥ वृक्षान्माल्यैरलङ्कृत्यवासोभिरभिवेष्टयेत ॥ सूच्यासौवर्णया
कार्यंसर्वेषांकर्णवेधनम् ॥ ५ ॥ अञ्जनंचापिदातव्यंतद्वद्धेमशलाकया ॥ फलानिसप्तचाष्टौवाकालधौतानिकारयेत् ॥ ६ ॥ प्रत्येकंसर्ववृक्षाणां
वेद्यांतान्यधिवासयेत् ॥ धूपोऽत्रगुग्गुलुःश्रेष्ठस्ताम्रपात्रेष्वधिष्ठितान् ॥ ७ ॥ सप्तधान्यस्थितान्कृत्वावस्त्रगन्धानुलेपनैः ॥ कुम्भान्सर्वेषुवृक्षेषुस्थाप
यित्वावनीश्वर ॥ ८ ॥ पूजयित्वादिनान्तेचकृत्वाबलिनिवेदनम् ॥ यथावल्लोकपालानामिन्द्रादीनांविधानतः ॥ ९ ॥ वनस्पतेरधिवासएवंका
र्योद्विजातिभिः ॥ ततःशुक्लाम्बरधरांसौवर्णकृतमेखलाम् ॥ १० ॥ सकांस्यदोहांसौवर्णशृङ्गाभ्यामतिशालिनीम् ॥ पयस्विनींवृक्षमध्यादुत्सृजेद्गामुद
ङ्मुखीम् ॥ ११ ॥ ततोऽभिषेकमन्त्रेणवाद्यमङ्गलगीतकैः ॥ ऋग्यजुःसाममन्त्रैश्चवारुणैरभितस्तदा ॥ १२ ॥ तैरेवकुम्भैःस्नपनंकुर्युर्ब्राह्मणपुङ्गवाः
स्नातःशुक्लाम्बरधरोयजमानोऽभिपूजयेत् ॥ १३ ॥ गोभिर्विभवतःसर्वानृत्विजःससमाहितान् ॥ हेमसूत्रैःसकटकैरङ्गुलीयैःपवित्रकैः ॥ १४ ॥
वासोभिःशयनीयैश्चतथोपस्करपादुकैः ॥ क्षीरभिषेचनंकुर्याद्यावद्दिनचतुष्टयम् ॥ १५ ॥ होमश्चसर्षपाकार्योयवैःकृष्णतिलैरपि ॥ पलाशसमिधः
शस्ताश्चतुर्थेऽह्नितथोत्सवः ॥ १६ ॥ दक्षिणाचपुनस्तद्वद्देयात्तत्रापिशक्तितः ॥ यद्यदिष्टतमंकिञ्चित्तत्तद्द्यादमत्सरी ॥ १७ ॥ आचार्येद्विगुणं
दत्त्वाप्रणिपत्यक्षमापयेत् ॥ अनेनविधिनायस्तुकुर्याद्वृक्षोत्सवंबुधः ॥ १८ ॥ सर्वान्कामानवाप्नोतिपदंचानन्तमश्नुते ॥ यश्चैवमपिराजेन्द्र
वृक्षंसंस्थापयेद्बुधः ॥ १९ ॥ सोऽपिस्वर्गेवसेद्राजन्यावदिन्द्रायुतत्रयम् ॥ भूतान्भव्यांश्चमनुजांस्तारयेद्रोमसम्मितान् ॥ २० ॥ परमांसिद्धिमा
प्नोतिपुनरावृत्तिदुर्लभाम् ॥ यइदंशृणुयान्नित्यंश्रावयेद्वापिमानवः ॥ २१ ॥ सोऽपिसम्पूज्यतेदेवैर्ब्रह्मलोकेमहीयते ॥ अपुत्रस्यचपुत्रित्वंपादपाएव

कुर्वते ॥ २२ ॥ नीर्थेषुपिण्डदानादीन्नोपकाणांददन्तिते ॥ यत्नेनापिचगजेन्द्रअश्वत्थारोपणंकुरु ॥ २३ ॥ सतेपुत्रसहस्रस्यकृत्यमेकःकरि
ष्यति ॥ धनीचाश्वस्थवृक्षेणअशोकःशोकनाशनः ॥ २४ ॥ प्लक्षोयज्ञप्रदःप्रोक्तःक्षीरीचायुःप्रदःस्मृतः ॥ जम्बुकीकन्यकादात्रीभार्यादादाडि
मीतथा ॥ २५ ॥ अश्वत्थोरोगनाशायपलाशोब्रह्मदस्तथा ॥ प्रेतत्वंजायतेपुंसोरोपयेद्योविभीतकम् ॥ २६ ॥ अङ्कोलेकुलवृद्धिस्तुखादिरेणापि
रोगिता ॥ निम्बप्ररोहकाणांतुनित्यंतुष्येद्दिवाकरः ॥ २७ ॥ श्रीवृक्षेशङ्करोदेवःपाटलायांतुपार्वती ॥ शिंशपायामप्सरसःकुन्देगन्धर्वसत्तमाः ॥
॥ २८ ॥ तिन्तिडीकेदासवर्गोवञ्जुलेदस्यवस्तथा ॥ पुण्यप्रदःश्रीप्रदश्चचन्दनःपनसस्तथा ॥ २९ ॥ सौभाग्यदश्चम्पकश्चकरीरःपारदारि
कः ॥ अपत्यनाशकस्तालोबकुलःकुलवर्द्धनः ॥ ३० ॥ बहुभार्योनारिकेलाद्राक्षासर्वाङ्गसुन्दरी ॥ गतिप्रदातथाकोलीकेतकीशत्रुनाशिनी ॥
॥ ३१ एवमादिनगाश्चान्येयेनोक्तास्तेऽपिदायकाः ॥ प्रतिष्ठांतेगमिष्यन्तियैस्तुवृक्षाःप्ररोपिताः ॥ ३२ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेवृ
क्षारोपणविधिर्नामाष्टाविंशोऽध्यायः ॥ २८ ॥ पुलस्त्यउवाच ॥ तथैवान्यत्प्रवक्ष्यामिसर्वकामफलप्रदम् ॥ सौभाग्यशयनंनामयत्पुराणविदो
विदुः ॥ १ ॥ पुरादग्धेषुलोकेषुभूर्भुवःस्वर्महादिषु ॥ सौभाग्यंसर्वभूतानामेकस्थमभवत्तदा ॥ २ ॥ वैकुण्ठंसर्वमासाद्यविष्णोर्वक्षस्थलेस्थित
म् ॥ ततःकालेनकियतापुनःसर्गविधौनृप ॥ ३ ॥ अहङ्कारावृतेलोकेप्रधानपुरुषान्विते ॥ स्पर्द्धायांचप्रवृद्धायांकमलासनकृष्णयोः ॥ ४ ॥
पिङ्गाकारसमुद्भूतावह्निज्वालातिभीषणा ॥ तयाभितप्तस्यहरेर्वक्षसस्तद्विनिःसृतम् ॥ ५ ॥ यद्वक्षस्थलमाश्रित्यविष्णोःसौभाग्यमास्थितम् ॥
रसरूपंनतद्यावदाप्नोतिवसुधातले ॥ ६ ॥ उत्क्षिप्तमन्तरिक्षात्तुब्रह्मपुत्रेणधीमता ॥ दक्षेणपीतमात्रंतद्रूपलावण्यकारकम् ॥ ७ ॥ बलंतेजोम
हज्जातंदक्षस्यपरमेष्ठिनः ॥ शेषंयदपतद्भूमावष्टधातद्व्यजायत ॥ ८ ॥ ततस्त्वोषधयोजाताःसप्तसौभाग्यदायिकाः॥इक्षवस्तरुराजश्चनिष्पावाश्शालि
धान्यकम् ॥ ९ ॥ विकारवच्चगोक्षीरंकुसुम्भंकुसुमंतथा ॥ लवणंचाष्टमंतद्वत्सौभाग्याष्टकमुच्यते ॥ १० ॥ पीतंयद्ब्रह्मपुत्रेणयोगज्ञानविदापुरा ॥
दुहितासाऽभवत्तस्माद्यासतीत्यभिधीयते ॥ ११ ॥ लोकानतीत्यलालित्याल्ललितातेनचोच्यते ॥ त्रैलोक्यसुन्दरींदेवीमुपयेमेपिनाकधृक् ॥ १२ ॥
त्रिविश्वसौभाग्यमयींभुक्तिमुक्तिफलप्रदाम् ॥ तामाराध्यपुमान्भक्त्यानारीवाकिंनविन्दति ॥ १३ ॥ भीष्मउवाच ॥ कथमाराधनंतस्याललितायामु
नेवद ॥ यद्विधानंचजगतःशान्तयेतद्वदस्वमे ॥ १४ ॥ पुलस्त्यउवाच ॥ वसन्तमासमासाद्यतृतीयायांजनप्रियः ॥ शुक्लपक्षस्यपूर्वाह्णेतिलैःस्नानं
समाचरेत् ॥१५॥ तस्मिन्नहनिसादेवीकिलविश्वात्मनामती ॥ पाणिग्रहणिकैर्मन्त्रैरुदूढावरवर्णिनी ॥१६॥ तयासहैवविश्वेशंतृतीयायामथार्चयेत् ॥

फलैर्नानाविधैर्दीपैर्धूपैर्नैवेद्यसंयुतैः ॥१७॥ प्रतिमांपञ्चगव्येनतथागन्धोदकेनच ॥ स्नापयित्वार्चयेद्गौरीमिन्दुशेखरसंयुताम् ॥१८॥ नमोऽस्तुपाटलायैतुपादौदेव्याःशिवस्यच ॥ शिवायेतिचसङ्कीर्त्यजयायैगुल्फयोर्द्वयोः ॥ १९ ॥ त्र्यम्बकायेतिरुद्रस्यभवान्यैजङ्घयोर्युगम् ॥ शिरोरुद्रेश्वरायेतिविजयायैचजानुनी ॥ २० ॥ सङ्कीर्त्यहरिकेशायतथोरुवरदेनमः ॥ ईशायेतिकटिंरत्यैशङ्करायेतिशङ्करम् ॥ २१ ॥ कुक्षिद्वयंचकोटव्यैशूलिनंशूलपाणये ॥ मङ्गलायैनमस्तुभ्यमुदरंचाभिपूजयेत् ॥ २२ ॥ सर्वात्मनेनमोरुद्रमीशान्यैचकुचद्वयम् ॥ शिवंवेदात्मनेतद्वद्रुद्राण्यैकण्ठमर्चयेत् ॥ २३ ॥ त्रिपुरघ्नायविश्वेशमनन्तायैकरद्वयम् ॥ त्रिलोचनायेतिहरंवाहूकालानलप्रिये ॥ २४ ॥ सौभाग्यभवनायेतिभूषणानिसदार्चयेत् ॥ स्वाहास्वधायैचमुखमीश्वरायेतिशूलिनम् ॥ २५ ॥ अशोकवनवासिन्यैपूज्यावोष्ठौचभूतिदौ ॥ स्थाणवेचहरंतद्वदास्यंचन्द्रमुखप्रिये ॥ २६ ॥ नमोऽर्धनारीशहरमसिताङ्गेतिनासिकाम् ॥ नमउग्रायलोकेशंललितेतिपुनर्भ्रुवौ ॥ २७ ॥ शर्वायपुरहन्तारंवासुदेव्यैतथालकम् ॥ नमःश्रीकण्ठनाथायशिवकेशांस्तथार्चयेत् ॥ २८ ॥ भीमोग्रभीमरूपिण्यैशिरःसर्वात्मनेनमः ॥ हरमभ्यर्च्यविधिवत्सौभाग्याष्टकमग्रतः ॥ २९ ॥ स्थापयेत्स्निग्धनिष्पावान्कुसुम्भक्षीरजीरकम् ॥ तरुराजेक्षुलवणंकुस्तुम्बुरुमथाष्टमम् ॥ ३० ॥ दद्यात्सौभाग्यकृद्यस्मात्सौभाग्याष्टकमित्युत ॥ एवंनिवेद्यतत्सर्वमग्रतःशिवयोःपुनः ॥ ३१ ॥ चैत्रेशृङ्गाटकान्प्राश्यस्वपेद्भूमावरिन्दम ॥ पुनःप्रभातेचतथाकृतस्नानजपःशुचिः ॥ ३२ ॥ सम्पूज्यद्विजदाम्पत्यंमाल्यवस्त्रविभूषणैः ॥ सौभाग्याष्टकसंयुक्तंसौवर्णप्रतिमाद्वयम् ॥ ३३ ॥ प्रीयतांमेऽत्रललिताब्राह्मणायनिवेदयेत् ॥ एवंसंवत्सरंयावत्तृतीयायांसदानृप ॥ ३४ ॥ प्राशनेदानमन्त्रेचविशेषोऽयंनिबोधमे ॥ गोशृङ्गाम्बुमधौप्रोक्तंवैशाखेगोमयंपुनः ॥ ३५ ॥ ज्येष्ठेमन्दारकुसुमंविल्वपत्रंशुचौस्मृतम् ॥ श्रावणेदधिसम्प्राश्यंनभस्येतुकुशोदकम् ॥ ३६ ॥ क्षीरंचाश्वयुजेमासिकार्तिकेपृषदाज्यकम् ॥ मार्गशीर्षेतुगोमूत्रंपौषेसम्प्राशयेद्घृतम् ॥ ३७ ॥ माघेकृष्णतिलांस्तद्वत्पञ्चगव्यंचफाल्गुने ॥ ललिताविजयाभद्राभवानीकुमुदाशिवा ॥ ३८ ॥ वासुदेवीतथागौरीमङ्गलाकमलासती ॥ उमाचदानकालेतुप्रीयतामितिकीर्तयेत् ॥ ३९ ॥ तस्मिंस्तुद्वादशेमासिद्वादश्यांकृष्णमर्चयेत् ॥ तथालक्ष्मींचतत्रैवभर्त्रासार्धमथार्चयेत् ॥ ४० ॥ पौर्णमास्यामतस्तद्वत्सपत्नीकःपितामहः ॥ उपासनीयोविदुषापरत्राभीतिमिच्छता ॥ ४१ ॥ सौभाग्याष्टकंतद्वच्चदातव्यंभूतिमिच्छता ॥ मल्लिकाशोककमलंकदम्बोत्पलचम्पकम् ॥ ४२ ॥ कुब्जकंकरवीरंचबाणमम्लानपङ्कजम् ॥ सिन्दुवारंचसर्वेषुमासेषुकुसुमंस्मृतम् ॥ ४३ ॥ जपाकुसुम्भकुसुमंमालतीशतपत्रिका ॥ यथालाभंप्रशस्तानिकरवीरंचसर्वदा ॥ ४४ ॥ एवंसंवत्सरंयावदु

१६

पोष्यविधिवन्नरः ॥ स्त्रीचनक्तंकुमारीचशिवमभ्यर्च्यभक्तितः ॥ ४५ ॥ व्रतान्तेशयनंदद्यात्सर्वोपस्करसंयुतम् ॥ उमामहेश्वरौहैमौवृषभश्चगवा
सह ॥ ४६ ॥ स्थापयित्वाचशयनंब्राह्मणायनिवेदयेत् ॥ द्वादश्यांवत्सरंत्वेकंमहालक्ष्म्याचकेशवम् ॥ ४७ ॥ ब्राह्मणंसहसावित्र्यापूजयित्वानर
स्त्विह ॥ सर्वान्कामानवाप्नोतिमनसासमभीप्सितान् ॥ ४८ ॥ अन्यान्यपियथाशक्तिमिथुनान्यम्बरादिभिः ॥ धान्यालङ्कारगोदानैरन्यैश्चधनस
ञ्चयैः ॥ ४९ ॥ वित्तशाठ्येनरहितःपूजयेद्गतविस्मयः ॥ एवंकरोतियःसम्यक्सौभाग्यशयनव्रतम् ॥ ५० ॥ सर्वान्कामानवाप्नोतिपदंवानित्यम
श्नुते ॥ फलस्यैकस्यचत्यागमेतत्कुर्वन्समाचरेत् ॥ ५१ ॥ यशःकीर्तिमवाप्नोतिप्रतिमासंनराधिप ॥ सौभाग्यारोग्यरूपैश्चवस्त्रालङ्कारभूषणैः
॥ ५२ ॥ नवियुक्तोभवेद्राजन्सौभाग्यशयनप्रदः ॥ यस्तुद्वादशवर्षाणिसौभाग्यशयनव्रतम् ॥ ५३ ॥ करोतिसप्तचाष्टौवाब्रह्मलोकेमहीयते ॥ पूज्य
मानोवसेत्सम्यग्यावत्कल्पायुतंनरः ॥ ५४ ॥ विष्णोर्लोकमथासाद्यशिवलोकगतस्तथा ॥ नारीवाकुरुतेयातुकुमारीवानरेश्वर ॥ ५५ ॥ सापित
त्फलमाप्नोतिदेव्यनुग्रहलालिता ॥ शृणुयादपियश्चैवप्रदद्यादथवामतिम् ॥ ५६ ॥ सोऽपिविद्याधरोभूत्वास्वर्गलोकेचिरंवसेत् ॥ ५७ ॥ इदमिहमद
नेनपूर्वसृष्टंशतधनुषाचकृतंनरेणतद्वत् ॥ कृतमथपवनेननन्दिनाचकिमुजननाथमहाद्भुतंनवास्यात् ॥ ५८ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेव्रता
ध्यायोनामएकोनत्रिंशोऽध्यायः ॥ २९ ॥ भीष्मउवाच ॥ यज्ञपर्वतमासाद्यविष्णुनाप्रभविष्णुना ॥ पदानिचेहदत्तानिकिमर्थंपदपद्धतिः ॥ १ ॥
कृतावैदेवदेवेनतन्मेवदमहामते ॥ कतमोदानवस्तेनविष्णुनादमितोऽत्रवै ॥ २ ॥ कृत्वावैपदविन्यासंतन्मेशंसमहामुने ॥ स्वर्लोकेवसतिर्विष्णोर्वै
कुण्ठेऽस्यमहात्मनः ॥ ३ ॥ सकथंमानुषेलोकेपदन्यासंचकारह ॥ देवलोकेषुवैदेवदेवाःसेन्द्रपुरोगमाः ॥ ४ ॥ तपसामहताब्रह्मन्भक्तायेसततंप्रभुम् ॥
श्रीवराहस्यवसतिर्महर्लोकेप्रकीर्तिता ॥ ५ ॥ नृसिंहस्यतथाप्रोक्ताजनलोकेमहात्मनः ॥ त्रिविक्रमस्यवसतिस्तपोलोकेप्रकीर्तिता ॥ ६ ॥ लोकाने
तान्परित्यज्यकथंभूमौपदद्वयम् ॥ क्षत्रेपैताभहेचास्मिन्पुष्करेयज्ञपर्वते ॥ ७ ॥ पदानिकृतवान्ब्रह्मन्विस्तरान्ममकीर्तय ॥ श्रुतेनसर्वपापस्यनाशो
वैभविताध्रुवम् ॥ ८ ॥ पुलस्त्यउवाच ॥ सम्यक्पृच्छसिभोस्त्वंयत्संशृणुत्वंसमाहितः ॥ यथापूर्वंपदन्यासःकृतोदेवेनविष्णुना ॥ ९ ॥ यज्ञ
पर्वतमासाद्यशिलापर्वतरोधसि ॥ पुराकृतयुगेभीष्मदेवकार्यार्थसिद्धये ॥ १० ॥ विष्णुनाचकृतंपूर्वंपृथिव्यर्थेपरन्तप ॥ त्रिदिवंसर्वमानीतंदान
वैर्बलवत्तरैः ॥ ११ ॥ त्रैलोक्यंवशमानीयजित्वादेवान्सवासवान् ॥ दानवायज्ञभोक्तारस्तत्रासन्बलवत्तराः ॥ १२ ॥ कृताबाष्कलिनासर्वेदानवे
नबलीयसा ॥ एवम्भूतेतदालोकेत्रैलोक्येसचराचरे ॥ १३ ॥ परमार्तिययौशक्रोनिराशोजीवितेकृतः ॥ सबाष्कलिर्दानवेन्द्रोऽवध्योऽयंममसंयुगे

॥ १४ ॥ ब्रह्मणोवरदानेनसर्वेषांतुदिवौकसाम् ॥ तदहंब्रह्मणोलोकवृतःसर्वैर्दिवौकसैः ॥ १५ ॥ व्रजामिशरणंदेवंगतिरन्यानविद्यते ॥ एवं
विचिन्त्यदेवेन्द्रोवृतःसर्वैर्दिवौकसैः ॥ १६ ॥ जगामत्वरितोभीष्मयत्रदेवःपितामहः ॥ ब्रह्मणःसपदंप्राप्यवृतस्तैश्चदिवौकसैः ॥ १७ ॥
अब्रवीज्जगतःकार्यंप्राप्तामापदमुत्तमाम् ॥ किंनजानासिवैदेवयतोनोभयमागतम् ॥ १८ ॥ दैत्यैर्यदाहृतंसर्ववरदानाच्चतेप्रभो ॥ कथितंवैमयासर्वं
बाष्कलेश्चदुरात्मनः ॥ १९ ॥ क्रियतांचाविलम्बेनपितात्वंनःपितामहः ॥ तत्त्वंचिन्तयदेवेशशान्त्यर्थंजगतस्त्विह ॥ २० ॥ तेषांचपश्य
तांकिंचिच्छ्रौतस्मार्तादिकाःक्रियाः ॥ नप्रावर्तन्तहानिस्तुतैरस्माकंदिनेदिने ॥ २१ ॥ यथाहिप्राकृतःकश्चित्स्वार्थमुद्दिश्यभाषते ॥ विज्ञा
प्यसेतथास्माभिर्निरस्तोपकृतैःसदा ॥ २२ ॥ यद्येनोपकृतंयस्यसहस्रगुणितंपुनः ॥ योनतस्योपकारायतत्करोतिवृथामतिः ॥ २३ ॥ तस्यो
पकारदग्धस्यनिस्त्रपस्यासतः पुनः ॥ नरकेष्वपिसंवासस्तस्यदुष्कृतकारिणः ॥ २४ ॥ नैतावतैवसाधुत्वंकृतेयातुप्रतिक्रिया ॥ स्वार्थैकनिष्ठ
बुद्धीनामेतन्नापिप्रवर्तते ॥ २५ ॥ यद्यस्यनाभवत्स्थानंजगतोह्यत्रदुःखदम् ॥ शतधाहृदयंदीर्णंतन्नतृप्तिमुपागतम् ॥ २६ ॥ तत्रवायत्रगन्ता
स्मिनिमग्नातुद्धरस्वनः ॥ उपायकथनेनास्ययेनतेजःप्रवर्तते ॥ २७ ॥ यथाऽऽख्यातंमयाहृष्टंजगतत्तस्थमवेक्ष्यताम् ॥ निस्स्वाध्यायवषट्कारं
निवृत्तोत्सवमङ्गलम् ॥ २८ ॥ त्यक्ताध्ययनसंयोगंमुक्तवार्तापरिग्रहम् ॥ दण्डनीत्यापरित्यक्तंश्वासमात्रावशेषितम् ॥ २९ ॥ जगदार्ति
मपिप्राप्तंपुनःकष्टतरांदशाम् ॥ एतावताहिकालेनवयंग्लानिमुपागताः ॥ ३० ॥ ब्रह्मोवाच ॥ जानामिबाष्कलिंतंतुवरदानाच्चगर्वितम् ॥
अजेयंभवतांमन्येविष्णुसाध्योभविष्यति ॥ ३१ ॥ निरुध्यसंस्थितोब्रह्माभावंतत्त्वमयंतदा ॥ समाधिस्थस्यतस्यैवध्यानमात्राच्चतुर्भुजः
॥ ३२ ॥ स्तोकेनैवहिकालेनचिन्त्यमानःस्वयम्भुवा ॥ आजगाममुहूर्तेनसर्वेषामेवपश्यताम् ॥ ३३ ॥ विष्णुरुवाच ॥ भोभोब्रह्मन्निवर्त्त
स्वध्यानादस्मान्निवारितः ॥ यदर्थमिष्यतेध्यानंसोऽहंत्वांसमुपागतः ॥ ३४ ॥ ब्रह्मोवाच ॥ महाप्रसादएषोऽत्रस्वामिनोहिप्रदर्शनम् ॥
कस्यान्यस्यभवेच्चैषाचिन्तायाजगतःप्रभोः ॥ ३५ ॥ ममैवतावदुत्पत्तिर्जगदर्थेविनिर्मिता ॥ जगदेतत्त्वदर्थीयंतत्त्वतोनास्तिविस्मयः ॥ ३६ ॥
भवतापालनंकार्यंसंहरेद्रुद्रएवतु॥एवम्भूतेजगत्यस्मिञ्शक्रस्यास्यमहात्मनः ॥३७॥ हृतंराज्यंबाष्कलिनात्रैलोक्यंसचराचरम्॥भृत्यस्यक्रियतांसाह्यं
मन्त्रदानेनकेशव॥३८॥ वासुदेवउवाच ॥ भवतोवरदानेनअवध्यःसतुसांप्रतम्॥बुद्धिसाध्यःसर्वैकार्योबन्धनादिहदानवः ॥३९॥ वामनोऽहंभविष्या
मिदानवानांविनाशकः ॥ मयासहव्रजत्वेषबाष्कलेस्तुनिवेशनम् ॥४०॥तत्रगत्वावरंत्वेषमदर्थेयाचतामिमम्॥वामनस्यास्यविप्रस्यभूमेराजन्पदत्रयम्

॥४१॥ प्रयच्छस्वमहाभागयाच्ञैषातुमयाकृता॥शक्रेणोक्तोदानवेन्द्रोदद्यात्स्वमपिजीवितम् ॥४२॥ गृह्यप्रतिग्रहंतस्यदानवस्यपितामह॥ तंबद्धाचव
तोयत्नात्कृत्वापातालवासिनम् ॥४३॥ सौकरंरूपमास्थायवधार्थंचदुरात्मनः ॥ भविष्यामिनसन्देहोव्रजशक्रत्वरान्वितः ॥४४॥ विररामतमुक्त्वै
वमन्तर्द्धानंगतश्चवै ॥ अथकालान्तरेविष्णावदितेर्गर्भतांगते ॥ ४५ ॥ निमित्तान्यतिघोराणिप्रादुर्भूतान्यनेकशः ॥ समस्तजगदाधारेविष्णौगर्भत्व
मागते ॥ ४६ ॥ शोभनंहितदाजातंनिमित्तंचैवमूर्जितम् ॥ मालतीकुसुमानांतुसुगन्धःसुरभिर्ववौ ॥ ४७ ॥ अथविहितविधानंकालमासाद्य
देवस्त्रिदशगणहितार्थंसर्वभूतानुकम्पी ॥ विमलविरलकेशश्चन्द्रशङ्खोदयश्रीरदिततिनयभावंदेवदेवश्चकार ॥ ४८ ॥ अवतरतिचविष्णौसिद्धदे
वासुराणामनिमिषनयनानांविप्रसेदुर्मुखानि ॥ अतिविरतरजोभिर्वायुभिःसंवहद्भिर्दिनमपिचतदासीज्जन्मविष्णोःसुगर्भे ॥ ४९ ॥ अदितिरजन
गर्भासापिदेवीप्रयान्तीनतजघनभरातामन्दसंचाररम्या ॥ अलसवदनखेदंपाण्डुभावंवहन्तीगुरुतरमवगाढंगर्भमेवोद्वहन्ती ॥ ५० ॥ ततःप्रविष्टेख
लुगर्भवासंनारायणेभूतभविष्ययोगात् ॥ विनापदंप्राप्तमनोरथानिभूतानिसर्वाणितदाबभूवुः ॥ ५१ ॥ समीरणोवातिचमन्दमन्दम्पतत्सुवर्षेषुनगो
द्भवेषु ॥ विविक्तमार्गेषुदिगन्तरेषुजनेषुवैसत्यमुपागतेषु ॥ ५२ ॥ विमुच्यमानेगगनेरजोभिःशनैश्शनैर्नश्यतिचान्धकारे ॥ ५३ ॥ उदरा
न्तर्गतेविष्णौद्रोहबुद्धिस्तदाभवत् ॥ तांनिशामयराजेन्द्रदेवमातुर्यथाक्रमम् ॥ ५४ ॥ किमनुक्रमणेनैवलङ्घयामित्रिविष्टपम् ॥ बाष्कलिंदानवे
न्द्रंतंकुर्यांपातालवासिनम् ॥ ५५ ॥ शक्रस्यतुमयादत्तंधनंलावण्यमेवच ॥ दानवानांविनाशायएकैवप्रभवाम्यहम् ॥ ५६ ॥ क्षिपामिशर
जालानिचक्रयानान्यनेकशः ॥ गदाव्रातांश्चविविधान्दानवानांविनाशने ॥ ५७ ॥ विबुधान्देवलोकस्थानधोभूमेस्तुदानवान् ॥. करोमिकाल
योगेनतत्तुकार्यंव्रतेनमे ॥ ५८ ॥ निस्सृतासहसावाणीवक्त्रमेवाभिसंस्थिता ॥ येनेदंचिन्त्यतेपूर्वंयन्नदृष्टंनचश्रुतम् ॥ ५९ ॥ बन्धंवैदनुमुख्य
स्यकृतंकोपेनपश्यमे ॥ कश्यपायपुरादत्तंधनंलावण्यमेवच ॥ ६० ॥ किमयंविगतोत्साहोवायवोऽथसमाकुलाः ॥ भ्रमतीवहिमेदृष्टिर्मैतद्रूपंप्रचि
न्तितम् ॥ ६१ ॥ आविष्टाकिमहंवच्मिकेनाप्यसदृशंवचः ॥ विकल्पवशमापन्नाभीक्ष्णंहृदिममर्शसा ॥ ६२ ॥ दधारदिव्यंवर्षाणांसहस्रंदि
व्यमीश्वरम् ॥ ततःसमभवत्तस्यांवामनोभूतवामनः ॥ ६३ ॥ जातेनयेनचक्षूंषिदानवानांहृतानिवै ॥ जातमात्रेततस्तस्मिन्देवदेवेजनार्दने
॥ ६४ ॥ नद्यःस्वच्छाम्बुवाहिन्योववौगन्धवहोऽनिलः ॥ कश्यपोऽपिसुखंलेभेतेनपुत्रेणभास्वता ॥ ६५ ॥ सर्वेषांमानसोत्साहस्त्रैलोक्यान्त
रवासिनाम् ॥ सञ्जातमात्रेतुततोजनाधिपजनार्दने ॥ स्वर्गेलोकेदुन्दुभयोविनेदुस्तैश्चताडिताः ॥ ६६ ॥ अतिप्रहर्षात्तुजगत्त्रयस्यमोहश्चदुः

खानिचनाशमीयुः ॥ जगौचगन्धर्वगणोऽतिमात्रंभावस्वरैर्भर्तृविमिश्रिताश्च ॥ ६७ ॥ सुराङ्गनाश्चापिचभावयुक्तानृत्यन्तितत्राप्सरसांस
मूहाः ॥ तथैवविद्याधरसिद्धसङ्घाविमानयानैर्मुदिताश्रमन्ति ॥ ६८ ॥ वदन्तिसत्यानृतकार्यनिर्णयंतथाभिरङ्गंप्रतिदर्शयन्ति ॥ गायन्ति
गेयंविनिवृत्तरागामुहुर्मुहुर्दुःखसुखप्रभूताः ॥ ६९ ॥ नृत्यन्तिवैस्वर्गगताश्चतेतुधर्मार्जितंस्वर्गमितोव्रजन्ति ॥ ७० ॥ इतिविगतविषा
देनिर्मलेजीवलोकेतिमिरनिकरमुक्तानिर्वृतिंप्राप्तुकामाः ॥ ७१ ॥ तत्रोचुःकेचिदुर्व्यांजयजयभगवन्संप्रहृष्टाश्चकेचित्त्वेवंप्रोक्तप्रणादैरविरलमन
सश्चानुवादैस्तथान्ये ॥ ध्यायन्तेऽन्येनिगूढंजननभयजरामृत्युविच्छेदहेतोरित्येवंकृत्स्नमासीज्जगदिदमखिलंसर्वतःसम्प्रहृष्टम् ॥७२॥ परमासाद्यंयंवि
ष्णुंब्रह्माहजगतःकृते ॥ जातोऽयंभवतामर्थेवामनोयदपीश्वरः ॥ ७३ ॥ एषब्रह्माचविष्णुश्चएषएवमहेश्वरः ॥ एषवेदाश्चयज्ञाश्चस्वर्गश्चैषनसंश
यः ॥ ७४ ॥ विष्णुर्व्याप्तमिदंसर्वंजगत्स्थावरजङ्गमम् ॥ एकःसतुपृथक्त्वेनस्वयम्भूरितिविश्रुतः ॥ ७५ ॥ यथार्थवर्णकेस्थानेविचित्रःस्फाटि
कोमणिः ॥ ततोगुणवशात्तस्यस्वयम्भोरनुवर्त्तनम् ॥ ७६ ॥ यथाहिगार्हपत्योऽग्निरन्यसंज्ञांपुनर्व्रजेत् ॥ लभेतसंज्ञांभगवान्ब्राह्मा
दिषुतथाह्यसौ ॥ ७७ ॥ सर्वथावामनोदेवोदेवकार्यंकरिष्यति ॥ एवंचिन्तयतांतेषांभावितानांदिवौकसाम् ॥ ७८ ॥ जगामशक्रसहितो
वाष्कलेश्चनिवेशनम् ॥ दूरादेवचतांदृष्ट्वापुरींतस्यसमावृताम् ॥ ७९ ॥ पाण्डुरैःखगमागम्यैःसर्वरत्नोपशोभितैः ॥ शोभितांभवनैर्मुख्यैस्सुवि
भक्तमहापथैः ॥ ८० ॥ नित्यप्रभिन्नैर्मातङ्गैरञ्जनाचलसन्निभैः ॥ देवनागकुलोत्पन्नैःशतसङ्ख्यैर्विराजिताम् ॥ ८१ ॥ निर्मांसगात्रैस्तुरगैरल्पक
र्णैर्मनोजवैः ॥ दीर्घग्रीवाक्षिकूटैश्चमनोज्ञैरुपशोभिताम् ॥ ८२ ॥ पद्मगर्भसुवर्णाभाःपूर्णचन्द्रनिभाननाः ॥ सँल्लापोल्लापकुशलास्तत्रवेश्याःसह
स्रशः ॥ ८३ ॥ नतत्पुण्यंनसाविद्यानतच्छिल्पंनसाकला ॥ वाष्कलेर्नपुरेयत्तुनिवासंप्रतिगच्छति ॥ ८४ ॥ उद्यानशतसम्बाधेसमाजो
त्सवमालिनि ॥ अन्वितेदनुमुख्यैश्चसर्वैरन्तकवार्जितैः ॥ ८५ ॥ वीणावेणुमृदङ्गानांशब्दैःसर्वत्रनादिते ॥ सदाप्रहृष्टादनुजाबहुरत्नोपशोभिताः
॥ ८६ ॥ क्रीडमानाःप्रदृश्यन्तेमेराविवयथामराः ॥ ब्रह्मघोषोमहांस्तत्रदनुवृद्धैरुदीरितः ॥ ८७ ॥ साज्यधूमेनचाग्नीनांवायुनानष्टकिल्बिषे ॥
सुगन्धधूपविक्षेपसुरभीकृतमारुते ॥ ८८ ॥ सुगन्धिदनुजाकीर्णेपुरेतस्मिंस्तुवाष्कलिः ॥ त्रैलोक्यंतुवशेकृत्वासुखेनास्तेसदानवः ॥ ८९ ॥
तत्रस्थःपालयन्नास्तेत्रैलोक्यंसचराचरम् ॥ धर्मज्ञश्चकृतज्ञश्चसत्यवादीजितेन्द्रियः ॥ ९० ॥ सुदर्शःपूर्वदेवानांनयानयविचक्षणः ॥ ब्रह्मण्यश्चशरण्य
श्चदीनानामनुकम्पकः ॥ ९१ ॥ वेदमन्त्रप्रभूत्साहसर्वशक्तिसमन्वितः ॥ षाड्गुण्यविषयोत्साहःस्मितपूर्वाभिभाषितः ॥ ९२ ॥ वेदवेदाङ्ग

तत्त्वज्ञोयज्ञयाजीतपोरतः ॥ नचदुःशीलंनिरतःससर्वत्राविहिंसकः ॥ ९३ ॥ मान्यमानयिताशुद्धःसुमुखःपूज्यपूजकः॥सर्वार्थविदनाधृष्यःसुभगःप्रिय
दर्शनः ॥९४॥ बहुधान्योबहुधनोबहुयानश्चदानवः॥त्रिवर्गसाधकोनित्यंत्रैलोक्येवरपूरुषः ॥९५॥ स्वपुरीनिलयोनित्यंदेवदानवदर्पहा॥सचैवपालया
मासत्रैलोक्येसकलाःप्रजाः॥९६॥नाधमःकश्चिदप्यास्तेतस्मिन्राजनिदानवे॥दीनोवाव्यधितोवापिरल्पायुर्वाथदुःखितः॥ मूर्खोवामन्दरूपोवादुर्भगोवा
निराकृतः॥९७॥एवंयुतंतंविमलैर्गुणौघैर्दृष्ट्वाचमत्वाचनिविष्टबुद्धिम्॥प्रसादयन्दैत्यवरंमहात्मापुरन्दरस्तंतुदनुप्रधानम् ॥९८॥ तेजोयुक्तंदानवंतंतपन्त
मिवभास्करम्॥त्रैलोक्यधारणेशक्तंविस्मितःसोऽभवत्तदा ॥९९॥ इन्द्रंपुरागतंदृष्ट्वादानवेन्द्रायपार्थिव॥ इदमूचुस्तदागत्वादानवायुद्धदुर्मदाः ॥१००॥
आश्चर्यमितिवैकृत्वाइन्द्रोऽभ्येतिपुरींतव ॥ एकाकीद्विजमुख्येनवामनेनसहप्रभो ॥१॥ अस्माभिर्यदनुष्ठेयंसाम्प्रतंनोवदस्वराट्॥दानवानब्रवीत्सर्वान्पु
रेतिष्ठतसङ्कुलम् ॥ प्रवेश्यतांदेवराजःपूज्यःसतुममाद्यवै ॥२ ॥ एतस्मिन्नेवकालेतुवामनःसचवासवः ॥ आगतौदनुनाथेनप्रेम्णाचैवावलोकितौ ॥३॥
कृतार्थमन्यतात्मानंप्रणिपातपुरःसरम् ॥ उवाचवचनंराजादानवानांधुरन्धरः ॥ ४ ॥ अद्यवैत्रिपुलोकेषुनास्तिधन्यतरोमया ॥ योऽहंश्रियावृतःशक्रं
पश्यामिगृहमागतम्॥५॥ अर्थित्वकाम्ययायस्तुमामयंयाचयिष्यति ॥ गृहागतस्यतस्याहंदास्येप्राणानपिध्रुवम् ॥६॥ दारान्पुत्रांस्तथागारंत्रैलोक्ये
काकथामम ॥ आगत्यसंमुखंतस्यअङ्कमानीयसादरम् ॥ ७ ॥ परिष्वज्याभिनन्द्यैनंगृहंप्रावेशयत्स्वकम् ॥ तस्यस्वागतमर्घ्याद्यैःकृत्वापूजां
प्रयत्नतः ॥८॥ अद्यमेसफलंजन्मपूर्णाःसर्वेमनोरथाः ॥ यस्त्वांपश्यामिशक्राद्यस्वयमेवगृहागतम् ॥९॥ ख्यापितोऽहंदनुमुख्यानांदेवराजत्वयाकृतः ॥
आगच्छताममगृहंपुण्यतातुपराहिमे ॥ ११० ॥ अग्निष्टोमादिभिर्यज्ञैस्सम्यगिष्टैस्तुयत्फलम् ॥ तत्फलंसमवाप्यैतत्त्वयिदृष्टेपुरन्दर ॥ ११ ॥ यत्फलं
भूमिदानेनगवांदानेनऋत्विजे ॥ ममाद्यतत्फलंभूतमथवाराजसूयकम् ॥ १२ ॥ नाल्पेनतपसालभ्यंदर्शनंतववासव ॥ एवंगेहेमयायत्तेप्रियंकार्यं
तदुच्यताम् ॥१३॥ विकल्पोऽन्योनभवताह्रदिकार्यःकथञ्चन ॥ कृतंचतद्विजानीयायद्यपिस्यात्सुदुष्करम् ॥१४ ॥ पुण्योऽहंपुण्यतांप्राप्तोदर्शनात्तव
शत्रुहन् ॥ यत्तेदेववरैर्वन्द्यौवन्दितौचरणौमया ॥ १५ ॥ किमागमनकृत्यंतेवदसर्वंमयिप्रभो ॥ अत्याश्चर्यमिदंमन्येतवागमनकारणम् ॥ १६ ॥ इन्द्र
उवाच ॥ जानेऽहंदनुमुख्यानांप्रधानंत्वांतुवाष्कले॥नात्याश्चर्यमिदंभातित्वयिदृष्टेऽसुरोत्तम ॥ १७ ॥ विमुखानार्थिनोयान्तिभवतोगृहमागताः ॥
अर्थिनांकल्पवृक्षोऽसिदाताचान्योनविद्यते ॥ १८ ॥ प्रभायांसूर्यतुल्योऽसिगाम्भीर्येसागरोपमः ॥ सहिष्णुत्वेधराचैवश्रियानारायणोपमः ॥ १९ ॥
ब्राह्मणःकश्यपकुलेजातोऽयंवामनःशुभे ॥ प्रार्थितोऽहमनेनैवंभूमेर्देहिपदत्रयम् ॥ १२० ॥ ममाग्निशरणार्थाययत्रकुर्यामखंत्वहम् ॥ तदस्यकारणं

कृत्वाअर्थितैषाममप्रभो ॥२१॥ लोकत्रयंमेऽपहृतन्त्वयाविक्रम्यवाष्कले ॥ निर्वृत्तिकोनिर्धनोऽस्मियद्दित्सेनतदस्तिमे॥२२॥ भवन्तंयाचयिष्यामि
परार्थेनापिचात्मना ॥ अर्थित्वेनममाप्यस्त्ययद्योग्यंतत्समाचर ॥ २३ ॥ जातोऽसिकाश्यपेचत्वंवंशेवंशविवर्द्धनः ॥ दित्यास्त्वंगर्भसम्भूतः
पितात्रैलोकपूजितः ॥२४॥ एवंभूतमहंज्ञात्वातेनत्वांयाचयाम्यहम्॥अस्याग्निशरणार्थायदीयतांभूपदत्रयम् ॥२५॥ अतीवह्रस्वगात्रस्यवामनस्यास्य
दानव ॥ भूमिभागेचपारक्येदातुंनत्वहमुत्सहे ॥ २६ ॥ एतदेवमयादत्तंयद्भवानर्थितोऽसिमे ॥ गुरवोयदिमन्यन्तेमन्त्रिणोवापदत्रयम् ॥ २७ ॥
अर्थित्वेनमदीयेनस्वकुलेबान्धवेऽपिच ॥ गृहायातेमयितथायद्योग्यंतत्समाचर ॥ २८ ॥ यदितेरुचितंवीरदानवेन्द्रमहाद्युते ॥ तदस्मैदीयतांशीघ्रं
वामनायमहात्मने ॥ २९ ॥ वाष्कलिरुवाच ॥ देवेन्द्रस्वागतंतेऽस्तुस्वस्तिप्राप्नुहिमाचिरम् ॥ त्वंसमीक्षस्वधात्मानंसर्वेषांचपरायणम् ॥ १३० ॥
त्वयिभारंसमावेश्यसुखमास्तेपितामहः ॥ ध्यानधारणयायुक्तश्चिन्तयानःपरंपदम् ॥ ३१ ॥ सङ्ग्रामैर्बहुभिःखिन्नोजंगच्चिन्तामपास्यतु ॥ क्षीराब्धि
द्वीपमाश्रित्यसुखंस्वपितिकेशवः ॥ ३२ ॥ कैलासेपर्वतश्रेष्ठेकृत्तिवासाउमापतिः ॥ रमतंभार्ययासार्धंभारंत्वयिनिवेश्यवै ॥ ३३ ॥ अन्येचदानवाः
सर्वेबलिनःसायुधास्त्वया ॥ असहायेनैवशक्रसर्वेऽपिविनिपातिताः ॥ ३४ ॥ आदित्याद्वादशैवेहरुद्रास्त्वेकादशापिवा ॥ अश्विनौवसवश्चैवधर्मश्चैव
सनातनः ॥ ३५ ॥ त्वद्बाहुबलमाश्रित्यत्रिदिवेमखभागिनः ॥ त्वयाक्रतुशतैरिष्टंसमाप्तवरदक्षिणैः ॥ ३६ ॥ त्वयाचघातितोवृत्रोनमुचिःपाक
शासन ॥ त्वदाज्ञाकारिणापूर्वंविष्णुनाप्रभविष्णुना ॥ ३७ ॥ हिरण्यकशिपोर्भ्राताहिरण्याक्षोऽपिघातितः ॥ हिरण्यकशिपुर्योऽत्रजङ्घेचारोप्यघातितः
॥ ३८ ॥ वज्रपाणिनमायान्तमैरावणशिरोगतम् ॥ सङ्ग्रामभूमौदृष्ट्वात्वांसर्वेनश्यन्तिदानवाः ॥ ३९ ॥ येत्वयाविजिताःपूर्वंदानवाबलवत्तराः ॥
सहस्रांशेनतत्तुल्योनभवामिकथञ्चन ॥ १४० ॥ एवंविधोऽसिदेवेन्द्रममकागणनाभवेत् ॥ मांसमुद्धर्तुकामेनत्वयैवागमनंकृतम् ॥ ४१ ॥ करिष्यामि
नसन्देहोदास्येप्राणानपिध्रुवम् ॥ किमर्थंदेवराजोक्ताभूमिरेषात्वयाहिमे ॥ ४२ ॥ इमेदाराःसुतागावोयच्चान्यद्विद्यतेवसु ॥ त्रैलोक्यराज्यमखिलंविप्र
स्यास्यप्रदीयताम् ॥ ४३ ॥ अपकीर्तिर्भवेन्मह्यंपूर्वेषांचनसंशयः ॥ गृहायातस्यशक्रस्यदत्तंवाष्कलिनानतु ॥ ४४ ॥ अन्योऽपियोऽर्थीमेप्राप्तःसमे
प्रियतरःसदा ॥ भवानत्रविशेषेणविचारंमाकृथाःक्वचित् ॥ ४५ ॥ बृहत्त्रपामेदेवेन्द्रयद्भूमेस्तुपदत्रयम् ॥ ब्राह्मणस्यविशेषेणप्रार्थितंतुत्वयाविभो
॥ ४६ ॥ दास्येग्रामवरानस्यभवतस्तुत्रिविष्टपम् ॥ अश्वान्गजान्भूमिधनंस्त्रियश्चोद्भिन्नचूचुकाः ॥ ४७ ॥ यासांदर्शनमात्रेणवृद्धोऽपितरुणायते ॥
ताःस्त्रियोवसुधांचैतांवामनस्यप्रतिग्रहम्॥ ४८ ॥ प्रतिदास्यामिदेवेन्द्रप्रसादःक्रियतांहिमे ॥ एतावदुक्तेवचनेतदाबाष्कलिनानृप ॥ ४९ ॥ पुरोधा

स्तूशनाप्राहदानवेन्द्रंतदावचः ॥ भवान्राजादानवेन्द्रऐश्वर्येऽष्टविधेस्थितः ॥ १५० ॥ युक्तायुक्तंनजानासिदेयंकस्यमयाक्वचित् ॥ मन्त्रिभिःसुसमा
लोच्ययुक्तायुक्तंपरीक्ष्यच ॥५१॥ प्राप्तंत्रैलोक्यराज्यत्वंजित्वादेवान्सवासवान् ॥ वाक्यस्यास्यावसानेचभवान्प्राप्स्यतिवन्धनम् ॥ ५२ ॥ यएष
वामनोराजन्विष्णुरेवसनातनः ॥ नास्यवैभवतादेयंपितातेघातितःस्वयम् ॥ ५३ ॥ अयंतेपितृहाप्राप्तोमातृहावन्धुघातकः ॥ वंशोच्छेदकर
स्तुभ्यंभूतश्चैवभविष्यति ॥ ५४ ॥ नचैषधर्मंजानातिशक्रादीनांहितेरतः ॥ मायाविनादानवायेमाययायेननिर्जिताः ॥ ५५ ॥ माययाब्राह्मणंरूपं
वामनंचप्रदर्शितम् ॥ अत्रकिंबहुनोक्तेननास्यदेयंतुकिञ्चन ॥ ५६ ॥ मक्षिकापादमात्रंतुभूमिरस्यप्रतिग्रहः ॥ विनाशमेप्यसिक्षिप्रं
सत्यंसत्यंमयाश्रुतम् ॥ ५७ ॥ गुरुणाप्येवमुक्तस्तुभूयोवाक्यमथाब्रवीत् ॥ धर्मार्थिनामयासर्वंप्रतिज्ञातंगुरोत्विदम् ॥ ५८ ॥ प्रतिज्ञापालनं
कार्यंसतांधर्मःसनातनः ॥ यद्येषभगवान्विष्णुर्नास्तिधन्यतरोमया ॥ ५९ ॥ गृह्यप्रतिग्रहंमत्तोयदिदेवान्वुभूपति ॥ भूयोऽपिधन्यतां
नीतोदेवेनानेनवैगुरो ॥ १६० ॥ यंयोगिनोध्यानयुक्ताध्यायमानाहिदर्शनम् ॥ नलभन्तेतथाविप्रास्सोऽयंदृष्टोमयाद्यवै ॥ ६१ ॥ दानानि
येप्रयच्छन्तिसकुशोदकपाणिना ॥ प्रीयतांभगवान्विष्णुःपरमात्मासनातनः ॥६२॥ एवमुक्तंतुवचनंअपवर्गस्यभागिनः ॥ यदत्रकार्यकरणेविकल्पो
मेवभूवह ॥६३॥ उपदिष्टोऽस्मिभवतावालत्वेचावधारितम्॥शत्रावपिगृहायातोमास्त्वदेयंतुकिञ्चन ॥६४॥ एतदेवविचिन्त्याहंप्राणानपिस्वकान्गुरो॥
वामनस्यप्रदास्यामिशक्रस्यापित्रिविष्टपम् ॥६५॥ अपीडाकारियद्दानंतद्दानमिहदीयते ॥ पीडाकारिचयद्दानंतद्दानंसमलंस्मृतम् ॥ ६६ ॥ पुलस्त्य
उवाच ॥ एतच्छ्रुत्वागुरुस्तत्रत्रपयाधोमुखःस्थितः ॥ बाष्कलिरुवाच ॥ अर्थिताभवतादेवदेयासर्वाधरामया ॥ ६७ ॥ त्रपाकरंभवेन्मह्यंयदस्य
भूपदत्रयम् ॥ इन्द्रउवाच ॥ सत्यमेतद्दानवेन्द्रयदुक्तंभवताहिमे ॥ ६८ ॥ भूमेःपदत्रयार्थित्वंद्विजेनानेनमेकृतम् ॥ एतावतात्वयंचार्थीमयाप्यस्यकृ
तेभवान् ॥ ६९ ॥ दनुपुत्रोयाचितोऽसिवरमेतत्प्रदीयताम् ॥ बाष्कलिरुवाच ॥ पदत्रयंवामनायदेवराजप्रतीच्छमे ॥ १७० ॥ तत्रत्वंसुचिरंकालं
सुखीसुरपतेवस ॥ पुलस्त्यउवाच ॥ एवमुक्त्वाबाष्कलिनावामनायपदत्रयम् ॥ ७१ ॥ तोयपूर्वंतदादत्तंप्रीयतांमेहरिःस्वयम् ॥ दत्तेतुदानवेन्द्रेणत्य
क्त्वारूपंचवामनम् ॥ ७२ ॥ हरिराचक्रमेलोकान्देवानांहितकाम्यया ॥ यज्ञपर्वतमासाद्यगत्वाचैवउदङ्मुखः ॥ ७३ ॥ देवस्यवामचरणेनिविष्टो
दानवालयः ॥ तत्रक्रमंसप्रथमंददौसुर्येजगत्पतिः ॥ ७४ ॥ द्वितीयंचध्रुवेदेवस्तृतीयेनचपार्थिव ॥ ब्रह्माण्डस्ताडितस्तेनदेवेनाद्भुतकर्मणा ॥
॥७५॥ अङ्गुष्ठाग्रेणभिन्नेऽण्डेजलंभूरिविनिःसृतम् ॥ प्लावयित्वाब्रह्मलोकान्सर्वांल्लोकाननुक्रमात् ॥ ७६ ॥ ध्रुवस्थानंसूर्यलोकंप्लाव्यतंयज्ञपर्वतम् ॥

प्रविष्टापुष्करंधाराधौत्वाविष्णुपदानिसा ॥ ७७ ॥ पदानियानिजातानिवैष्णवानिधरातले ॥ तत्राश्रमेतुयोगत्वास्नानंवाप्यांसमाचरेत् ॥
॥ ७८ ॥ अश्वमेधफलंतस्यदर्शनादेवजायते ॥ एकविंशकुलोपेतोवैकुण्ठेवासमाप्नुयात् ॥ ७९ ॥ भुक्त्वातुविपुलान्भोगान्कल्पानांतुशतत्रयम् ॥
तदन्तेजायतेराजासार्वभौमःक्षिताविह ॥ १८० ॥ तोयधारातुसाभीष्मअङ्गुष्ठाग्राद्विनिःसृता ॥ नदीसावैष्णवीप्रोक्ताविष्णुपादसमुद्भवा ॥ ८१ ॥
अनेनकारणेनाभूद्गङ्गाविष्णुपदीनृप ॥ ययासर्वमिदंव्याप्तंत्रैलोक्यंसचराचरम् ॥ ८२ ॥ अङ्गुष्ठाग्रक्षतादण्डाद्यत्प्रविष्टंजलंशुभम् ॥ प्राप्तंदेवनदीत्वं
तुयातुविष्णुपदीनदी ॥ ८३ ॥ देवनद्यातयाव्याप्तंब्रह्माण्डंसचराचरम् ॥ विभूतिभिर्महाभागसर्वानुग्रहकाम्यया ॥ ८४ ॥ सबाष्कलिर्वामनेनउक्तः
पूरयमेक्रमान् ॥ अधोमुखस्तदाजातउत्तरंनास्यविन्दति ॥ ८५ ॥ मौनीभूतंतुतंदृष्ट्वापुरोधावाक्यमब्रवीत् ॥ शुक्रउवाच ॥ स्वाभाविकीदानशक्ति
र्नतुस्त्रष्टुंवयंक्षमाः ॥ ८६ ॥ यावतीयंधरादेवसादत्तानेनतेप्रभो ॥ पुलस्त्यउवाच ॥ उक्तोबाष्कलिनाविष्णुर्यावन्मात्रावसुन्धरा ॥ ८७ ॥ यास्र
ष्टाभवतापूर्वंसामयानचगोपिता ॥ अल्पाभूमिर्भवान्दीर्घोनतुस्रष्टेरहंक्षमः ॥ ८८ ॥ इच्छाशक्तिःप्रभवतिप्रभोस्तेदेवसर्वदा ॥ निरुत्तरस्तदावि
ष्णुर्मत्वातंसत्यवादिनम् ॥ ८९ ॥ ब्रूहिदानवमुख्यत्वंकंतेकामंकरोम्यहम् ॥ ममहस्तगतंतोयंत्वयादत्तंतुदानव ॥ १९० ॥ तेनत्वंवरयोग्योऽसि
वराणांभाजनंशुभम् ॥ दास्येऽहंभवतःकाममर्थीयनवृणुष्वह ॥ ९१ ॥ विज्ञप्तोहितदातेनदेवदेवोजनार्दनः ॥ बाष्कलिरुवाच ॥ भक्तिंवृणोमिदे
वेशत्वद्धस्तान्मरणंहिमे ॥ ९२ ॥ ब्रजामिश्वेतद्वीपंतेदुर्लभंतुतपस्विनाम् ॥ पुलस्त्यउवाच ॥ आहैवमुक्तेविष्णुस्तांतिष्ठस्वैकंयुगान्तरम् ॥ ९३ ॥
वाराहरूपीयदाहंप्रवक्ष्यामिधरातलम् ॥ तदाहनिष्येऽहंत्वांतुमदग्रेचयदेष्यसि ॥ ९४ ॥ उक्तोऽथदानवस्तेनअपासर्पत्तदग्रतः ॥ वामनेनसमा
क्रान्ताःसर्वेलोकास्तदानृप ॥ ९५ ॥ असुरैस्तैस्तदात्यक्तंदेवानांसत्यरक्षणैः ॥ देवोहृत्वातुत्रैलोक्यंजगामादर्शनंविभुः ॥ ९६ ॥ पातालनि
लयश्चापिसुखमास्तेसबाष्कलिः ॥ शक्रोऽपिपालयामासविपश्चिद्भुवनत्रयम् ॥ ९७ ॥ अयंत्रैविक्रमोनामप्रादुर्भावोजगद्गुरोः ॥ गङ्गासम्भवसं
युक्तस्सर्वकल्मषनाशनः ॥ ९८ ॥ विष्णोःपदानामेषातउत्पत्तिःकथितानृप ॥ यांश्रुत्वातुनरोलोकेसर्वपापैःप्रमुच्यते ॥ ९९ ॥ दुःस्वप्नं
दुर्विचिन्त्यंचदुष्करंदुष्कृतानिच ॥ क्षिप्रंहिनाशमायान्तिदृष्टेविष्णुपदत्रये ॥ २०० ॥ युगानुक्रमशोदृष्ट्वापापिनोजन्तवस्तथा ॥ सूक्ष्मता
दर्शिताभीष्मविष्णुनापददर्शने ॥ १ ॥ यस्त्वारोहतितस्मिंस्तुमौनवान्मानवोभुवि ॥ कृत्वात्रिपुष्करीयात्रामश्वमेधफलंव्रजेत् ॥ २ ॥ मुच्य
तेसर्वपापैश्चमृतोविष्णुपुरंव्रजेत् ॥ २०३ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेविष्णुपदोत्पत्तिर्नामत्रिंशोध्यायः ॥ ३० ॥ भीष्मउवाच ॥

भगवन्महदाश्चर्यंबाष्कलेर्बन्धनंहियत् ॥ कृतंत्रिविक्रमंरूपंयदासंयमितोवलिः ॥ १ ॥ एतन्मयाश्रुतंपूर्वंकथ्यमानंद्विजोत्तमैः ॥ पातालेवसतेऽ
द्यापिवैरोचनसुतोवलिः ॥ २ ॥ नागतीर्थंयथाभूतंपिशाचानांतुसम्भवम् ॥ शिवदूतीकथंचात्रकेनेयंमङ्गलीकृता ॥ ३ ॥ अन्तरिक्षेपुष्करंतु
केननीतंमहामुने ॥ एतदाचक्ष्वमेसर्वंयथाबाष्कलिबन्धनम् ॥ ४ ॥ भूमिप्रक्रमणंपूर्वंकृतंदेवेनविष्णुना ॥ द्वितीयेकारणंकिंचयेनंदेवश्चकारह ॥
॥ ५ ॥ तत्त्वतस्त्वंहितत्सर्वंयथाभूतंतथावद ॥ पापक्षयकरंह्येतच्छ्रोतव्यंभूतिमिच्छता ॥ ६ ॥ पुलस्त्यउवाच ॥ प्रश्नभारस्त्वयाराजन्कौतु
कादेवकीर्तितः ॥ कथयामिहितत्सर्वंयथाभूतंनृपोत्तम ॥ ७ ॥ विष्णोःपदानुषङ्गेणबन्धनंबाष्कलेरिह ॥ श्रुतन्तद्भवतासर्वंमयातेपरिकीर्तित
म् ॥ ८ ॥ भूयोऽपिविष्णुनाभीष्मप्राप्तेवैवस्वतेऽन्तरे ॥ त्रैलोक्यंबलिनाक्रान्तंविष्णुनाप्रभविष्णुना ॥ ९ ॥ गत्वात्वेकाकिनायज्ञेतथासंयमितो
बलिः ॥ भूयोऽपिदेवदेवेनभूमेःप्रक्रमणंकृतम् ॥ १० ॥ प्रादुर्भावोवामनस्यतथाभूतोनराधिप ॥ पुनस्त्रिविक्रमोभूत्वावामनोऽभूदवामनः ॥ ११ ॥
उत्पत्तिरेषातेसर्वाकथिताकुरुनन्दन ॥ नागानांतुयथातीर्थंतच्छृणुष्वमहाव्रत ॥ १२ ॥ अनन्तोवासुकिश्चैवतक्षकश्चमहाबलः ॥ कर्कोटकश्च
नागेन्द्रःपद्मश्चान्यःसरीसृपः ॥ १३ ॥ महापद्मस्तथाशङ्खःकुलिकश्चापराजितः ॥ एतेकश्यपदायादाएतैरापूरितंजगत् ॥ १४ ॥ एतेषांतु
प्रसूत्यातुइदमापूरितंजगत् ॥ कुटिलाभीमकर्माणस्तीक्ष्णास्याश्चविषोल्बणाः ॥ १५ ॥ दष्ट्वामन्दांश्चमनुजान्कुर्युर्भस्मक्षणात्तुते ॥ तद्दर्शनाद्भवेन्नाशो
मनुष्याणांनराधिप ॥ १६ ॥ अहन्यहनिजायंतक्षयःपरमदारुणः ॥ आत्मनस्तुक्षयंदृष्ट्वाप्रजाःसर्वास्समन्ततः ॥ १७ ॥ जग्मुःशरण्यंशरणंब्रह्माणं
परमेश्वरम् ॥ इममेवार्थमुद्दिश्यप्रजाःसर्वामहीपते ॥ १८ ॥ ऊचुःकमलजंदृष्ट्वापुराणंब्रह्मसंज्ञकम् ॥ प्रजाऊचुः ॥ देवदेवेशलोकानांप्रसूतेपर
मेश्वर ॥ १९ ॥ त्राहिनस्तीक्ष्णदंष्ट्राणांभुजगानांमहात्मनाम् ॥ दिनेदिनेभयंदेवपश्यामःकृपणाभृशम् ॥ २० ॥ मनुष्यपशुपक्ष्यादितत्सर्वं
भस्मसाद्भवेत् ॥ त्वयासृष्टिःकृतादेवक्षीयतेतुभुजङ्गमैः ॥ २१ ॥ एतज्ज्ञात्वायदुचितंतत्कुरुष्वपितामहः ॥ ब्रह्मोवाच ॥ अहंरक्षांविधास्यामि
भवतीनांनसंशयः ॥ २२ ॥ व्रजध्वंस्वनिकेतानिनीरुजोगतसाध्वसाः ॥ पुलस्त्यउवाच ॥ एवमुक्तेप्रजाःसर्वाब्रह्मणाव्यक्तमूर्तिना ॥ २३ ॥
आजग्मुःपरमप्रीताःस्तुत्वाचैवस्वयम्भुवम् ॥ प्रयातासुप्रजास्वेवंतानाहूयभुजङ्गमान् ॥ २४ ॥ शशापपरमक्रुद्धोवासुकिप्रमुखांस्तदा ॥ ब्रह्मोवाच ॥
अहन्यहनिभूतानिभक्ष्यन्तेवैदुरात्मभिः ॥ २५ ॥ नश्यन्तितूरगैर्दष्टामनुष्याःपशवस्तथा ॥ यस्मान्मत्प्रभवान्नित्यंक्षयंनयथमानुषान् ॥ २६ ॥
अतोऽन्यस्मिन्भवेभूयान्ममकोपात्सुदारुणात् ॥ भवतांहिक्षयोघोरोभाविवैवस्वतेऽन्तरे ॥ २७ ॥ तथान्यःसोमवंशीयोराजावैजनमेजयः ॥ धक्ष्य

तेसर्वसत्रेणप्रदीप्तेहव्यवाहने ॥२८॥ मातृष्वसुश्चतनयांस्ताक्ष्योंवोभक्षयिष्यति ॥ एववोभवितानाशःसर्वेषांदुष्टचेतसाम् ॥२९॥ शप्त्वाकुलसहस्रन्तु
यावदेकंकुलंस्थितम् ॥ पुलस्त्यउवाच ॥ एवमुक्तेतुवेपन्तोब्रह्मणाभुजगोत्तमाः॥३०॥निपत्यपादयोस्तस्यइदमूचुर्वचस्तदा ॥सर्पाऊचुः ॥ भगवन्कुटि
लाजातिरस्माकंभूतभावन ॥३१॥ विषोल्बणत्वंक्रूरत्वंदन्दशूकत्वमेवच ॥ सम्पादितंत्वयादेवइदानींशपसेकथम् ॥३२॥ ब्रह्मोवाच॥यदिनाममयासृ
ष्टाभवन्तःकुटिलाशयाः ॥ ततःकिंबहुनानित्यंभक्षयध्वंगतव्यथाः ॥ ३३ ॥ नागाऊचुः ॥ मर्यादांकुरुदेवेशस्थानंचैवपृथक्पृथक् ॥ मनुष्याणां
तथास्माकंसमयंदेवकारय ॥ ३४ ॥ शापोयोभवतादत्तोमनुष्योजनमेजयः ॥ नाशंनःसर्पसत्रेणउल्बणंचकरिष्यति ॥ ३५ ॥ ब्रह्मोवाच ॥ जरत्का
रुरितिख्यातोभविताब्रह्मवित्तमः ॥ जरत्कन्यातस्यदेयातस्यामुत्पत्स्यतेसुतः ॥ ३६ ॥ रक्षांकर्त्तासवोविप्रोभवतांकुलपावनः ॥ तथाकरोमिना
गानांसमयंमनुजैःसह ॥३७॥ तदेकमनसःसर्वेशृणुध्वंममशासनम् ॥ सुतलंवितलंचैवतृतीयंचतलातलम् ॥३८॥ दत्तंचत्रिप्रकारंवोगृहंतत्रगमिष्यथ॥
तत्रभोगान्बहुविधान्भुञ्जानाममशासनात् ॥ ३९ ॥ तिष्ठध्वंसप्तमंयावत्कालंततुपुनःपुनः ॥ ततोवैवस्वतस्यादौकाश्यपेयोभविष्यति ॥ ४० ॥
दायादःसर्वदेवानांसुपर्णस्सर्पभक्षकः ॥ तदाप्रसूतिःसर्पाणांदग्धावैचित्रभानुना ॥ भवतांचैवसर्वेषांभविष्यतिनसंशयः ॥ ४१ ॥ येयेक्रूराभो
गिनोदुर्विनीतास्तेषामन्तोभाविताान्यथैतत् ॥ कालव्याप्तंभक्षयध्वंचसत्त्वंतथापकरिचकृतंमनुष्यम् ॥४२॥ मन्त्रौषधैर्गारुडैश्चैवतन्त्रैर्बन्धैर्जुष्टामा
नवायेभवन्ति ॥ तेभ्योभीतैर्वर्तितव्यंनचान्यच्चित्तेकार्यंचान्यथावोविनाशः ॥ ४३ ॥पुलस्त्यउवाच॥इतीरितेब्रह्मणावैभुजङ्गाजग्मुःस्थानंसुतलाख्यं
हिसर्वे ॥ तस्थुर्भोगान्भुञ्जमानाश्चसर्वेरसातलेलीलयासंस्थितास्ते ॥ ४४ ॥ एवंशापंतुतेलब्ध्वाप्रसादंचचतुर्मुखात् ॥ तस्थुःपातालनिलयेमुदिते
नान्तरात्मना ॥ ४५ ॥ ततःकालान्तरेभूतेपुनरेवंव्यचिन्तयन् ॥ भविताभरतोराजापाण्डवेयोमहायशाः ॥ ४६ ॥ अस्माकंतुक्षयकरोदैवयोगे
नकेनचित् ॥ कथंत्रिभुवनेनाथःसर्वेषांचपितामहः ॥ ४७ ॥ सृष्टिकर्ताजगद्वन्द्यःशापमस्मासुदत्तवान् ॥ देवंविरञ्चिनंत्यक्त्वांगतिरन्या
नविद्यते ॥ ४८ ॥ वैराजेभवनश्रेष्ठेतत्रदेवःसतिष्ठति ॥ सदेवःपुष्करस्थोवैयज्ञंयजतिसाम्प्रतम् ॥ ४९ ॥ गत्वाप्रसादयामस्तंवरंतुष्टःप्रदा
स्यति ॥ एवंविचिन्त्यतेसर्वेनागागत्वाचपुष्करम् ॥ ५० ॥ यज्ञपर्वतमासाद्यशैलभित्तिमुपाश्रिताः ॥ दृष्ट्वानागांस्तथाश्रान्तान्वारिधाराश्चशी
तलाः ॥ ५१ ॥ उदङ्मुखावैनिष्क्रान्तास्सर्वेषांतुसुखप्रदाः ॥ नागतीर्थंततोजातंपृथिव्यांभरतर्षभ ॥ ५२ ॥ नागकुण्डंचवैकेचित्सरितंचापरेऽब्रु
वन् ॥ पुण्यंतत्सर्वतीर्थानांसर्पाणांविषनाशनम् ॥ ५३ ॥ मज्जन्तितत्रयेमर्त्याअधिश्रावणपञ्चमि ॥ नतेषांतुकुलेसर्पाःपीडांकुर्वन्तिकर्हिचित् ॥

॥ ५४ ॥ श्राद्धंपितॄणांयेतत्रकरिष्यन्तिनराभुवि ॥ ब्रह्मातेषांपरंस्थानंदास्यतनात्रसंशयः ॥ ५५ ॥ नागानांतुभयंज्ञात्वाब्रह्मालोकपितामहः ॥
पूर्वोक्तंतुपुनर्वाक्यंनागानश्रावयत्तदा ॥ ५६ ॥ पञ्चमीसातिथिर्धन्यासर्वपापहराशुभा ॥ यतोऽस्यामेवसुतिथौनागानांकार्यमुद्धृतम् ॥ ५७ ॥
एतस्यांसर्वतोयस्तुकट्वम्लंपरिवर्जयेत् ॥ क्षीरेणस्नापयेन्नागांस्तस्यतेयान्तिमित्रताम् ॥ ५८ ॥ भीष्मउवाच ॥ शिवदूतीयथाजातायेनचैवनि
वेशिता ॥ तन्मेसर्वंयथातत्त्वंभवान्शंसितुमर्हति ॥ ५९ ॥ पुलस्त्यउवाच ॥ शिवानीलगिरिंप्राप्तातपसेधृतमानसा ॥ रौद्रीजटोद्भवाशक्ति
स्तस्याःशृणुनृपव्रतम् ॥ ६० ॥ तपःकृत्वाचिरंकालंग्रसिष्याम्यखिलंजगत् ॥ एवमुद्दिश्यपञ्चाग्निंसाधयामासभामिनी ॥ ६१ ॥ तस्याः
कालान्तरेदेव्यास्तपन्त्यास्तपउत्तमम् ॥ रुरुर्नाममहातेजाब्रह्मदत्तवरोऽसुरः ॥ ६२ ॥ समुद्रमध्येरत्नाख्यंपुरमस्तिमहाधनम् ॥ तत्रातिष्ठत्सदै
त्येन्द्रस्सर्वदेवभयङ्करः ॥ ६३ ॥ अनेकशतसाहस्रकोटिकोटिशतोत्तमैः ॥ असुरैरर्चितःश्रीमान्द्वितीयोनमुचिर्यथा ॥ ६४ ॥ कालेनमहता
सोऽथलोकपालपुरंययौ ॥ जिगीषुःसैन्यसंवीतोदेवैर्वैरमरोचयत् ॥ ६५ ॥ उत्तिष्ठतस्तस्यमहासुरस्यसमुद्रतोयंववृधेऽतिवेगात् ॥ अनेकना
गग्रहमीनजुष्टमाप्लावयत्पर्वतसानुदेशान् ॥ ६६ ॥ अन्तस्थितानेकसुरारिसङ्घंविचित्रवर्मायुधचित्रशोभम् ॥ भीमंबलंचलितंचारुयोधंविनि
र्ययौसिन्धुजलाद्विशालम् ॥ ६७ ॥ तत्रद्विपादैत्यभटाभ्युपेताःसयानघण्टाश्वसमृद्धियुक्ताः ॥ विनिर्ययुःस्वाकृतिभिर्झषाणांसमत्वमुच्चैःखलु
दर्शयन्तः ॥ ६८ ॥ अश्वास्तथाकाञ्चनसूत्रनद्धारोहीतमत्स्याइवतेजलान्तं ॥ व्यवस्थितास्तैःसममेवतूर्णंविनिर्ययुर्लक्षशःकोटिशश्च ॥
॥ ६९ ॥ तथारविस्यन्दनतुल्यवेगाःसचक्रदण्डाक्षतवेणुयुक्ताः ॥ रथाश्वयन्त्रोपरिपीडिताङ्गाश्चलत्पताकाःस्वनितंविचक्रुः ॥ ७० ॥ तथै
वयोधाःस्थगितास्तरीभिस्तितीर्षवस्तेप्रवरास्त्रपाणयः ॥ रणेरणेलब्धजयाःप्रहारिणोविरेजुरुच्चैरसुरानुगाभृशम् ॥ ७१ ॥ देवेषुवैरणेतेषुवि
द्रुतेषुविशेषतः ॥ असुरास्सर्वदेवानामन्वधावंस्ततस्ततः ॥ ७२ ॥ ततोदेवगणाःसर्वेद्रवन्तोभयविह्वलाः ॥ नीलंगिरिवरंजग्मुर्यत्रदेवी
स्वयंस्थिता ॥ ७३ ॥ रौद्रीतपोन्विताधन्याशाम्भवीशक्तिरुत्तमा ॥ संहारकारिणीदेवीकालरात्रीतियांविदुः ॥ ७४ ॥ सातुदृष्ट्वातदा
देवान्भयत्रस्तान्विचेतसः ॥ पप्रच्छविस्मयाद्देवीप्रोत्फुल्लाम्बुजलोचना ॥ ७५ ॥ देव्युवाच ॥ पृष्ठतोवोनपश्यामिभयंकिञ्चिदुपागतम् ॥ कथं
तुविद्रुतादेवाःसर्वेशक्रपुरःसराः ॥ ७६ ॥ देवाऊचुः ॥ अयमायातिदैत्येन्द्रोरुरुर्भीमपराक्रमः ॥ चतुरङ्गेणसैन्येनमहतापरिवारितः ॥ ७७ ॥
तस्माद्दीनावयंदेवींभवतींशरणंगताः॥पुलस्त्यउवाच ॥ देवानामितिवैश्रुत्वावाक्यमुच्चैर्जहाससा ॥७८॥ तस्यांहसन्त्यांनिश्चेरुर्वराङ्ग्योवदनात्ततः ॥

पाशाङ्कुशधराः सर्वाः पीनोन्नतपयोधराः ॥ ७९ ॥ सर्वाश्शूलधराभीमाः सर्वादंष्ट्राङ्कुशाननाः ॥ आबद्धमुकुटाः सर्वाः सन्दष्टदशनच्छदाः ॥ ८० ॥
फूत्काररावैरशिवैस्त्रासयन्त्यश्चराचरम् ॥ काश्चिच्छुक्लाम्बरधराः काश्चिच्चित्राम्बरास्तथा ॥८१॥ सुनीलवसनाः काश्चिद्रक्तपानातिलालसाः ॥ नाना
रूपैर्मुखैस्तास्तुनानावेषवपुर्धराः ॥ ८२ ॥ ताभिरेवंवृतादेवीदेवानामभयङ्करी ॥ माभैष्टदेवाभद्रंवोयावद्धदतिदानवः ॥ ८३ ॥ चतुरङ्गबलोपेतोरुरु
स्तावत्समागतः ॥ तंनीलपर्वतवरंदेवानांमार्गमार्गिणः ॥ ८४ ॥ देवानामग्रतः सैन्यंदृष्ट्वादेवीसमाकुलम् ॥ तिष्ठतिष्ठेतिजल्पन्तोदैत्यास्तेसमुपागताः
॥ ८५ ॥ ततः प्रववृतेयुद्धंतासांतेषांमहाभयम् ॥ नाराचैर्भिन्नदेहानांदैत्यानांभुविसर्पताम् ॥ ८६ ॥ रोषाद्दण्डप्रभग्नानांसर्पाणामिवसर्पताम् ॥
शक्तिनिर्भिन्नहृदयांगदासञ्चूर्णितोरसः ॥ ८७ ॥ कुठारैर्भिन्नशिरसोमुसलैर्भिन्नमस्तकाः ॥ विद्धोदरास्त्रिशूलाग्रैश्छिन्नग्रीवावरासिभिः ॥ ८८ ॥
क्षताश्वरथमातङ्गपादाताः पेतुराहवे ॥ रणभूमिंसमासाद्यदैत्याः सर्वेरुरुंविना ॥ ८९ ॥ ततोबलंहतंदृष्ट्वारुरुर्मायांन्तदाददे ॥ तयासंमोहितादेव्यो
देवाश्चापिरणाजिरे ॥ ९० ॥ तामस्यामाययादेव्यासर्वमन्धन्तमोऽभवत् ॥ ततोदेवीमहाशक्त्यातंदैत्यंसमताडयत् ॥ ९१ ॥ तयातुताडितस्या
जौदैत्यस्यप्रगतंतमः ॥ मायायामथनष्टायांतामस्यांदानवोरुरुः ॥ ९२ ॥ पातालमाविशत्तूर्णंतत्रापिपरमेश्वरी ॥ देवीभिः सहिताक्रुद्धापुरतोऽभिमु
खीस्थिता ॥ ९३ ॥ रुरोस्तुदानवेन्द्रस्यभीतस्याग्रगतस्यच ॥ नखाग्रेणशिरश्छित्त्वाचर्मचादायवेगिता ॥ ९४ ॥ निर्ययावथपातालात्पुष्करंचपुन
र्गिरिम् ॥ कन्यासैन्येनमहताबहुरूपेणभास्वता ॥ ९५ ॥ देवैस्तुविस्मितैर्दृष्टाचर्ममुण्डधरारुरोः ॥ स्वकीयंतपसः स्थानेनिविष्टापरमेश्वरी ॥ ९६ ॥
ततोदेव्योमहाभागाः परिवार्यव्यवस्थिताः ॥ याचयामासुरव्यग्रास्तांतुदेवींबुभुक्षिताः ॥ ९७ ॥ देव्यऊचुः ॥ बुभुक्षितावयंदेविदेहिनोभोजनंवरम् ॥
पुलस्त्यउवाच ॥ एवमुक्ताततोदेवीदध्यौतासांतुभोजनम् ॥ ९८ ॥ नाध्यगच्छत्तदातासांभोजनंचिन्तितम्महत् ॥ तदादध्यौमहादेवंरुद्रंपशुपतिंवि
भुम् ॥ ९९ ॥ सोऽपिध्यानात्समुत्तस्थौपरमात्मात्रिलोचनः ॥ उवाचरुद्रस्तांदेवींकिंतेकार्यंविवक्षितम् ॥ १०० ॥ ब्रूहिदेविमहामायेयत्तेमनसि
वर्तते ॥ शिवदूत्युवाच ॥ छागमध्यंतुवैदेवछागरूपेणवर्तसे ॥ १ ॥ एतास्त्वांभक्षयिष्यन्तिभक्ष्यमीप्सितमादरात् ॥ भक्षार्थमासांदेवे
शकिञ्चिद्दातुमिहार्हसि ॥ २ ॥ शूलीकुर्वन्तिमामेताभक्षार्थिन्योमहाबलाः ॥ अन्यथामामपिबलाद्भक्षयेयुर्बुभुक्षिताः ॥ ३ ॥ एवंमांतुसमालक्ष्य
भक्ष्यंकल्पयसत्वरम् ॥ रुद्रउवाच ॥ शिवदूतिब्रवीम्येकंप्रवृत्तंयद्युगान्तरे ॥ ४ ॥ गङ्गाद्वारेदक्षयज्ञोगणैर्विध्वंसितोमम ॥ तत्रयज्ञोमृगोभूत्वाप्रदुद्रा
वसुवेगवान् ॥ ५ ॥ मयाबाणेननिर्विद्धोरुधिरेणप्रसेचितः ॥ अजगन्धस्तदाभूतोनामदेवैस्तुमेकृतम् ॥ ६ ॥ अजगन्धस्त्वमेवेतिदास्येचान्यत्तु

भोजनम् ॥ एतासांशृणुमेदेविभक्ष्यमेकंमयोचितम् ॥ ७ ॥ कथ्यमानंवरारोहेकालरात्रिमहाप्रभे ॥ यास्त्रीसगर्भादेवेशिअन्यस्त्रीपरिधान
कम् ॥ ८ ॥ परिधत्तेस्पृशेद्वापिपुरुषस्यविशेषतः ॥ सभागोऽस्तुवरारोहेकासाश्चित्पृथिवीतले ॥ ९ ॥ अथ्येकवर्षंबालंतुगृहीत्वातत्रवैबलात् ॥
भुक्त्वातिष्ठन्तुसुप्रीताअपिवर्षशतान्बहून् ॥ ११० ॥ अन्याःसूतिगृहेच्छिद्रंगृह्णीयुस्तुह्यपूजिताः ॥ निवसिष्यन्तिदेवेशितथावैजातहारिकाः
॥ ११ ॥ गृहेक्षेत्रेतटाकेचवाप्युद्यानेषुचैवहि ॥ अन्येषुचरुदन्त्योयाःस्त्रियस्तिष्ठन्तिनित्यशः ॥ १२ ॥ तासांशरीरगाश्चान्याःकाश्चित्तृप्ति
मवाप्नुयुः ॥ शिवदूत्युवाच ॥ कुत्सितंभवतादत्तंप्रजानांपरिपीडनम् ॥ १३ ॥ नचत्वंबुध्यसेदातुंशङ्करस्यविशेषतः ॥ त्रपाकरंयद्भवतिप्रजा
नांपरिपीडकम् ॥ १४ ॥ नतुतद्युज्यतेदातुंनासांभक्ष्यंतुशङ्कर ॥ रुद्रउवाच ॥ अवन्त्यांतुयदास्कन्दोमयापूर्वंतुभद्रितः ॥ १५ ॥ चूडा
कर्मणिवृत्तेतुकुमारस्यतदाशुभे ॥ आगत्यमातरोभक्ष्यमपूर्वंतुप्रचक्रिरे ॥ १६ ॥ देवलोकाद्देवगणामातृणांभोक्तुमागताः ॥ तासांगृहेयदापूर्वं
ब्रह्माद्यास्सुरसत्तमाः ॥ गन्धर्वाप्सरसश्चैवयक्षास्सर्वेचगुह्यकाः ॥ १७ ॥ मेर्वादयःशिखरिणोगङ्गाद्याःसरितस्तथा ॥ १८ ॥ सर्वेनागागजास्सिद्धाः
पक्षिणोऽसुरसूदनाः ॥ डाकिन्यःसहवेतालैर्वृताःसर्वैर्ग्रहैस्तदा ॥ १९ ॥ किमुक्तेनामुनादेवियत्सृष्टंब्रह्मणात्विह ॥ तत्सर्वंभोजनंदत्तंस्वेच्छान्न
चनभोगतम् ॥ १२० ॥ शिवदूत्युवाच ॥ आसांकृतंदेहिभोज्यंदुर्लभंयत्त्रिविष्टपे ॥ स्नेहाक्तंसगुडंहृद्यंसुपक्वंपरिकल्पितम् ॥ २१ ॥
कचिन्नान्यंनयद्भुक्तमपूर्वंपरमेश्वरं ॥ पुलस्त्यउवाच ॥ एवमुक्तस्तदासोऽपिदेवदेवोमहेश्वरः ॥ २२ ॥ भक्ष्यार्थंतास्तदाप्राहपार्वत्याश्चैवसन्निधौ ॥
शिवउवाच॥मयावैसाधितंचान्नंप्रकारैर्बहुभिःकृतम् ॥२३॥ तत्सर्वंचव्ययंयातंनचान्यद्दिहदृश्यत ॥ भवतीष्वागतास्वद्यकिंमयादेयमुच्यताम् ॥२४॥
अपूर्वंभवतीनांयन्मयादेयंविशेषतः ॥ आम्वादितंनचान्येनभक्ष्यार्थेचददाम्यहम् ॥२५॥ अधोभागेचमेनाभेर्वर्तुलौफलसन्निभौ॥भक्षयध्वंहितौहिता
लम्बौमेवृषणाविमौ॥२६॥अनेनचापिभोज्येनपरातृप्तिर्भविष्यति ॥ पुलस्त्यउवाच॥महाप्रसादंताल्लब्ध्वादेव्यस्सर्वास्तदाशिवम्॥२७॥प्रणिपत्यस्थि
ताश्शर्वइदंवचनमब्रवीत्॥करिष्यन्तिशुभाचारान्विनाहास्येनयेनराः॥२८॥तेषांधनंपशुःपुत्रादाराश्चैवगृहादिकम्॥ भविष्यतिमयादत्तंयच्चान्यन्मनसि
स्थितम् ॥२९॥ हास्येनदीर्घदशनादरिद्राश्चभवन्तिते॥तस्मान्ननिन्दाहास्यंचकर्तव्यहिविजानता॥१३०॥भवत्योमातरःख्याताह्यस्मिँल्लोकेभविष्यथ॥
उपहारेनरायेतुकरिष्यन्तिचकौमुदीम् ॥ ३१ ॥ चणकान्पूरिकाश्चैववृषणैःसहपूपकान् ॥ बन्धुभिःस्वजनैश्चैवतेषांवंशोनछिद्यते ॥ ३२ ॥ अपु
त्रोलभतेपुत्रंधनार्थीलभतेधनम् ॥ रूपवान्सुभगोभोगीसर्वशास्त्रविशारदः ॥३३॥ हंसयुक्तेनयानेनब्रह्मलोकेमहीयते ॥ शिवदूतिमयाप्येवंतासांदत्तंच

भक्षणम् ॥ ३४ ॥ त्रपाकरंकिंभवत्याउक्तोऽहंतन्निशामय ॥ जयस्वदेविचामुण्डेजयभूतापहारिणि ॥ ३५ ॥ जयसर्वगतंदेविकालरात्रिनमोऽस्तुते॥
विश्वमूर्तियुतंशुद्धेविरूपाक्षित्रिलोचने ॥ ३६ ॥ भीमरूपेशिवेविद्येमहामायेमहोदरे ॥ मनोजयेमनोदुर्गेभीमाक्षिक्षुभितक्षये ॥ ३७ ॥ महामारिवि
चित्राङ्गिगीतनृत्यप्रियेशुभे ॥ विकरालिमहाकालिकालिकेपापहारिणि ॥ ३८ ॥ पाशहस्तेदण्डहस्तेभीमहस्तेभयानके ॥ चामुण्डेज्वलमानास्येती
क्ष्णदंष्ट्रेमहाबले ॥ ३९ ॥ शिवयानप्रियेदेविप्रेतासनगतेशिवे ॥ भीमाक्षिभीषणेदेविसर्वभूतभयङ्करि ॥ १४० ॥ करालिविकरालेचमहाकालिक
रालिनि ॥ कालिकरालविक्रान्तेकालरात्रिनमोऽस्तुते॥ ४१॥ सर्वशस्त्रभृतेदेविनमोदेवनमस्कृते ॥ पुलस्त्यउवाच॥एवंस्तुताशिवदूतीरुद्रेणपरमेष्ठिना
॥ ४२ ॥ तुतोषपरमादेवीवाक्यंचवमुवाचह ॥ वरंवृणीष्वदेवेशयत्तेमनसिवर्तते ॥ ४३ ॥ रुद्रउवाच ॥ स्तोत्रेणानेनयेदेविस्तोष्यन्तित्वांवरानने
तेषांत्वंवरदादेविभवसर्वगतासती ॥ ४४ ॥ इमंपर्वतमारुह्ययःपूजयतिभक्तितः ॥ सपुत्रपौत्रपशुमान्समृद्धिमुपगच्छतु ॥ ४५ ॥ यश्चैवंशृणुयाद्भ
क्त्यास्तवंदेविसमुद्भवम् ॥ सर्वपापविनिर्मुक्तःपरंनिर्वाणमृच्छतु ॥ ४६ ॥ भ्रष्टराज्योयदाराजानवम्यांनियतःशुचिः ॥ अष्टम्यांचचतुर्दश्यांसोपवा
सोनरोत्तम ॥ ४७ ॥ संवत्सरेणलभतांराज्यंनिष्कण्टकंपुनः ॥ एषाज्ञानान्विताशक्तिःशिवदूतीतिचोच्यते ॥ ४८ ॥ यएवंशृणुयान्नित्यंभक्त्यापरम
यानृप ॥ सर्वपापविनिर्मुक्तःपरंनिर्वाणमाप्नुयात् ॥ ४९ ॥ यश्चैनंपठतेभक्त्यास्नात्वावैपुष्करेजले ॥ सर्वमेतत्फलंप्राप्यब्रह्मलोकेमहीयते ॥ १५० ॥
यत्रैतल्लिखितंगेहेसदातिष्ठतिपार्थिव ॥ नतत्राग्निभयंघोरंसर्वचोरादिसम्भवम् ॥ ५१ ॥ यश्चेदंपूजयद्भक्त्यापुस्तकेऽपिस्थितंबुधाः ॥ तेनचेष्टंभवेत्सर्वं
त्रैलोक्यंसचराचरम् ॥५२॥जायन्तेबहवःपुत्राधनंधान्यंवरस्त्रियः ॥रत्नान्यश्वागजाभृत्यास्तेषामाशुभवन्तिच॥५३॥ यत्रेदंलिख्यतेगेहेतत्राप्येवंध्रुवं
भवेत् ॥ १५४ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेशिवदूतीचरितंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥ भीष्मउवाच ॥ केनकर्मविपाकेनप्रेतत्वंजायते
पुनः ॥ केनवात्रप्रमुच्यंततन्मेब्रूहिमहामते ॥ १ ॥ पुलस्त्यउवाच ॥ अहंतेकथयिष्यामिसर्वमेतदशेषतः ॥ यच्छ्रुत्वानपुनर्मोहंयास्यतेनृपसत्तम ॥
॥२॥ येनजायेतप्रेतत्वंयेनचास्मात्प्रमुच्यते ॥ प्राप्नोतिनरकंघोरंदुस्तरंत्रिदशैरपि ॥३॥ सतांसम्भाषणंचैवपुण्यतीर्थानुकीर्त्तने ॥ मानवास्तुप्रमुच्य
न्तेआपन्नाःप्रेतयोनिषु ॥ ४ ॥ श्रूयतेहिपुरोभीष्मब्राह्मणःसंशितव्रतः ॥ पृथुस्सर्वत्रविख्यातःसन्तोषेचसदास्थितः ॥ ५ ॥ स्वाध्याययुक्तोगेहेषु
नित्ययोगश्चयोगवित ॥ जपयज्ञविधानेनयुक्तंकालंक्षिपेच्चसः ॥ ६ ॥ युक्तःक्षमादयाभ्यांचक्षान्त्यायुक्तश्चतत्त्ववित् ॥ अहिंसाहितचित्तश्चमार्दवेच
तथास्थितः ॥ ७ ॥ ब्रह्मचर्यसमायुक्तस्तपोयोगसमन्वितः ॥ युक्तःसपितृकार्येषुयुक्तोवैदिककर्मसु ॥ ८ ॥ परलोकभययुक्तोयक्तस्सत्यवचः

प्रति ॥ युक्तोमधुरवाक्येषुयुक्तश्चातिथिपूजने ॥ ९ ॥ इष्टापूर्तसमायुक्तोयुक्तोद्वन्द्वविवर्जने ॥ स्वकर्मविधिसंयुक्तोयुक्तःस्वाध्यायकर्मसु ॥ १० ॥ एवं
कर्माणिकुर्वतस्संसारविजिगीषया ॥ बहून्यब्दान्यतीतानिब्राह्मणस्यगृहेसतः ॥ ११ ॥ तस्यबुद्धिरियंजातातीर्थाभिगमनंप्रति ॥ पुण्यैस्तीर्थजलैरे
तत्क्लिन्नंकुर्यांकलेवरम् ॥ १२ ॥ प्रयतःपुष्करेस्नात्वाभास्करस्योदयंप्रति ॥ कृतजप्यनमस्कारोऽप्यद्धानंप्रत्यपद्यत ॥ १३ ॥ अग्रतःपञ्चपुरुषान
पश्यत्सोऽतिभीषणान् ॥ वनेकण्टकवृक्षाढ्येनिर्जनेपक्षिवर्जिते ॥ १४ ॥ तान्दृष्ट्वाविकृताकारान्सुघोरान्पापदर्शनान् ॥ ईषत्सन्त्रस्तहृदयोव्यतिष्ठ
न्निश्चलाकृतिः ॥ १५ ॥ अवलम्ब्यततोधैर्य्यंभयमुत्सज्यदूरतः ॥ पप्रच्छमधुराभाषीकेयूयंविकृताःकुतः ॥ १६ ॥ किंवाचैवकृतंकर्मयेनप्राप्ताश्च
वैकृतम् ॥ कथमेवंविधाःसर्वेप्रस्थिताःकुत्रचाध्वनि ॥ १७ ॥ प्रताऊचुः ॥ क्षुत्पिपासान्वितानित्यंमहादुःखसमावृताः ॥ हृतप्रज्ञावयंसर्वेनष्टसञ्ज्ञा
विचेतसः ॥ १८ ॥ नजानीमोदिशंचापिप्रदिशंचापिकाञ्चन ॥ नान्तरिक्षंमहींचापिनजानीमोदिवंतथा ॥ १९ ॥ यदेतद्दुःखमाख्यातं
मेतदेवसुखंभवेत् ॥ प्रभातमिदमाभातिभास्करोदयदर्शनात् ॥ २० ॥ अहंपर्युषितोनामसूचीमुखस्तथापरः ॥ शीघ्रगोरोहकश्चैवपञ्चमोलेखकस्तथा
॥ २१ ॥ ब्राह्मणउवाच ॥ प्रेतानांकर्मजातानांनाम्नांवैसम्भवःकुतः ॥ किंतत्कारणमुद्दिश्ययतोयूयंसनामकाः ॥ २२ ॥ प्रेताऊचुः ॥ अहंस्वादुसदा
भुञ्जेदद्यांपर्युषितंद्विजे ॥ एतत्कारणमासाद्यनामपर्युषितोमम ॥२३॥ सूचिताबहवोऽनेनविप्राश्चान्नाद्यकाङ्क्षिणः ॥ एतत्कारणमुद्दिश्यसूचीमुखाभि
धोमतः ॥ २४ ॥ शीघ्रंगतोऽस्मिविप्रेणयाचितःक्षुधितेनच ॥ एतत्कारणमुद्दिश्यशीघ्रगोद्विजसत्तम ॥ २५ ॥ गृहोपरिसदास्वादुभुङ्क्तेद्विजभयेनहि ॥
उद्विग्नमानसस्तत्रतेनासौरोहकःस्मृतः ॥ २६ ॥ मौनेचापिस्थितोनित्यंयाचितोविलिखन्महीम् ॥ अस्माकमपिपापिष्ठोलेखकोनामनामतः ॥२७॥
कृच्छ्रेणलेखकोयातिरोहकस्तुअवाक्छिराः॥शीघ्रगःपङ्गुतांप्राप्तःसूचीसूचीमुखोऽभवत्॥२८॥पर्युषितोलम्बग्रीवोलम्बोदरउदाहृतः॥बृहद्वृषणलम्बोष्ठः
पापादस्मादजायत ॥२९॥ एतत्तेसर्वमाख्यातमात्मवृत्तंसहेतुकम्॥पृच्छस्वयदितेश्रद्धापृष्टाश्चकथयामहे ॥३०॥ ब्राह्मणउवाच ॥ येजीवाभुवितिष्ठ
न्तिसर्वेऽप्याहारमूलकाः॥युष्माकमपिचाहारंश्रोतुमिच्छामितत्त्वतः॥३१॥प्रेताऊचुः॥शृणुष्वाहारमस्माकंसर्वसत्त्वविगर्हितम्॥ यच्छ्रुत्वानिन्दसेविप्र
भूयोभूयश्चनित्यशः॥३२॥श्लेष्ममूत्रपुरीषेणयोषिदङ्गमलेनच॥गृहाणित्यक्तशौचानिप्रेताभुञ्जन्तितत्रवै ॥३३ ॥ स्त्रीभिर्दग्धानिकीर्णानिप्रकीर्णोच्छिष्ट
कानिच॥मलेनापिजुगुप्स्यानिप्रेताभुञ्जन्तितत्रवै॥३४ ॥चित्तलज्जाविहीनानिहोमहीनानियानिच ॥ व्रतैश्चैवविहीनानिप्रेताभुञ्जन्तितत्रवै॥३५॥गुरवो
नैवपूज्यन्तेस्त्रीजितानिगृहाणिच ॥ क्रोधलोभगृहीतानिप्रेताभुञ्जन्तितत्रवै ॥ ३६ ॥ त्रपामेजायतेतातकथ्यमानेस्वभोजने ॥ अस्मात्परतरंचान्यन्न

वक्तुमपिशक्यते ॥ ३७ ॥ निवृर्त्तिप्रेतभावस्यपृच्छामस्त्वांदृढव्रत ॥ यथानभवतिप्रेतस्तन्मेवदतपोधन ॥ ३८ ॥ ब्राह्मणउवाच ॥ एकरात्रद्विरात्रा
दिकृच्छ्रचान्द्रायणादिभिः ॥ व्रतैरन्यैःकृतैर्नित्यंनप्रेतोजायतेनरः ॥ ३९ ॥ त्रीनग्नीन्पञ्चचैकंवायोऽहन्यहनिसेवते ॥ सर्वभूतदयापन्नोनप्रेतोजायते
नरः ॥ ४० ॥ तुल्योमानेऽपमानेचतुल्यःकाञ्चनलोष्टयोः ॥ तुल्यःशत्रौचमित्रेचनप्रेतोजायतेनरः ॥ ४१ ॥ देवतातिथिपूजासुगुरुपूजासुनित्यशः ॥
रतोवैपितृपूजासुनप्रेतोजायतेनरः ॥ ४२ ॥ शुक्लाङ्गारकसंयुक्ताचतुर्थीजायतेयदा ॥ श्रद्धयाश्राद्धकृत्तस्यांनप्रेतोजायतेनरः ॥ ४३ ॥ जितक्रोधवि
मर्शोयस्तृष्णासङ्गविवर्जितः ॥ क्षमावान्दानशीलश्चनप्रेतोजायतेनरः ॥ ४४ ॥ गोब्राह्मणांश्चतीर्थानिपर्वतांश्चनदीस्तथा ॥ देवांश्चैवतुयोवन्द्या
न्नप्रेतोजायतेनरः ॥ ४५ ॥ प्रेताऊचुः ॥ श्रुताश्चविविधाधर्माःपृच्छामोदुःखितामुने ॥ यनवैजायतेप्रेतस्तन्नोवदमहामते ॥४६॥ ब्राह्मणउवाच ॥
शूद्रान्नेनतुभुक्तेनब्राह्मणेनविशेषतः ॥ म्रियतेह्युदरस्थेनसर्वेप्रेतोभवेन्नरः ॥ ४७ ॥ मातरंपितरंभ्रातॄन्भगिनींसुतमेवच ॥ अदृष्टदोषांस्त्यजतिसप्रेतो
जायतेनरः ॥ ४८ ॥ अयाज्ययाजनाच्चैवयाज्यस्यचविवर्जनात् ॥ रतोवैशूद्रसेवासुसप्रेतोजायतेनरः ॥ ४९ ॥ न्यासापहर्तामित्रध्रुक्छद्रपाकरतः
सदा ॥ विस्रम्भघातीकूटस्थःसप्रेतोजायतेनरः ॥ ५० ॥ ब्रह्महागोघ्नकःस्तेनःसुरापोगुरुतल्पगः ॥ भूमिकन्यापहर्त्ताचसप्रेतोजायतेनरः ॥ ५१ ॥
सामान्यांदक्षिणांलब्ध्वाएकएवनिगूहति ॥ नास्तिकोभावनिरतःसवैप्रेतोऽभिजायते ॥ ५२ ॥ एवंब्रुवाणेविप्रेन्द्रआकाशदुन्दुभिस्वनः ॥ पुष्पवृष्टिः
पपातोर्व्यांदेवैर्मुक्तासहस्रशः ॥ ५३ ॥ प्रेतानांतुविमानानिआगतानिसमन्ततः ॥ अस्यविप्रस्यसम्भाषात्पुण्यसङ्कीर्तनेनच ॥ ५४ ॥ तस्मात्सर्व
प्रयत्नेनसतांसम्भाषणंकुरु ॥ यदितंश्रेयसाकार्यंगङ्गासुतअतन्द्रितः ॥५५॥ तिलकंसर्वधर्मस्यपञ्चप्रेतकथामिमाम् ॥ पठेद्यक्षयोऽस्यकुलेनप्रेतोजाय
तेनरः ॥ ५६ ॥ शृणोतिवाप्यभीक्ष्णंवाश्रद्धयापरयाऽन्वितः ॥ भक्त्यासमन्वितोवापिनप्रेतोजायतनरः ॥ ५७ ॥ भीष्मउवाच ॥ अन्तरिक्षेकिम
र्थंतुपुष्करंपरिकीर्त्यते॥मुनिभिर्धर्मशीलैश्चलभ्यतेतत्कथंत्विह ॥५८॥ येनतल्लभ्यतेलब्धंलब्धंचैवफलप्रदम् ॥ तन्मेसर्वंसमाचक्ष्वकौतुकादेवपृच्छतः
॥ ५९ ॥ पुलस्त्यउवाच ॥ ऋषिकोटिस्समायातादक्षिणापथवासिनी ॥ स्नानार्थंपुष्करेराजन्पुष्करश्चवियद्गतम् ॥ ६० ॥ मत्वातेमुनयःसर्वे
प्राणायामपरायणाः ॥ ध्यायमानाःपरंब्रह्मस्थिताद्वादशवत्सरान् ॥ ६१ ॥ ब्रह्मामहर्षयस्तत्रदेवास्सेन्द्रास्समागताः ॥ ऋषयोऽन्तर्हिताःप्रोचुर्नियमां
स्तेसुदुष्करान् ॥ ६२ ॥ आकारणंपुष्करस्यमन्त्रेणक्रियतांद्विजाः ॥ आपोहिष्ठेतितिसृभिर्ऋग्भिःसान्निध्यमेष्यति ॥ ६३ ॥ अघमर्षणजप्येन
भवेद्वैफलदायकम् ॥ विप्रैर्वाक्यावसानेतुसर्वैस्तैस्तुतथाकृतम् ॥ ६४ ॥ कृतेनपुण्यतांप्राप्तायेनिदेशाच्चतेद्विजाः ॥ गर्हिताधर्मशास्त्रेषुतेविप्रादक्षि

णोत्तराः ॥ ६५ ॥ येचान्येपार्वतीयाश्चश्राद्धेनार्हन्तिकेतनम् ॥ एतस्मात्कारणाद्राजन्वियत्त्येवंसमास्थितम् ॥ ६६ ॥ कार्तिक्यांपुष्करंस्नानात्पूत
तामिभयच्छति ॥ ब्रह्मणासहितंराजन्सर्वेषांपुण्यदायकम् ॥ ६७ ॥ तत्रागतास्तुयेवर्णाःसर्वेंनपुण्यभाजनाः ॥ द्विजैस्तुल्यानसन्देहोविना
मन्त्रेणतंनृप ॥ ६८ ॥ आग्नेयंतुयदाऋक्षंकार्तिक्यांभवतिक्वचित् ॥ महतीसातिथिज्ञयास्नानेदानेतथोत्तमा ॥ ६९ ॥ यदायाम्यंतुभवतिऋक्षंत
स्यांतिथौक्वचित् ॥ तिथिःसापिमहापुण्यायतिभिःपरिकीर्तिता ॥ ७० ॥ प्राजापत्यंयदाऋक्षंतिथौतस्यांनराधिप ॥ सामहाकार्तिकीप्रोक्तादेवा
नामपिदुर्लभा ॥ ७१ ॥ यदाचार्केगुरौसोमेवारेष्वेतेषुवैत्रिषु ॥ त्रीण्येतानिचऋक्षाणिस्वयंप्रोक्तानिब्रह्मणा ॥ ७२ ॥ अत्राश्वमेधिकंपुण्यंस्नातस्य
भवतिध्रुवम् ॥ दानमक्षयतांयातिपितॄणांतर्पणंतथा ॥ ७३ ॥ विशाखासुयदाभानुःकृत्तिकासुचचन्द्रमाः ॥ सयोगःपुष्करोनामपुष्करेष्वतिदुर्लभः
॥ ७४ ॥ अन्तरिक्षावतीर्णेतुतीर्थेपैतामहेशुभे ॥ स्नानंयेऽत्रकरिष्यन्तितेषांलोकामहोदयाः ॥ ७५ ॥ नस्पृहान्तेऽन्यपुण्यस्यकृतस्याप्यकृतस्यच ॥
करिष्यन्तिमहाराजसत्यमेतदुदाहृतम् ॥ ७६ ॥ तीर्थानांप्रवरंतीर्थंपृथिव्यामिहपठ्यते ॥ नास्मात्परंपुण्यतीर्थंलोकेषुनृपपठ्यते ॥ ७७ ॥ कार्ति
क्यांतुविशेषेणपुण्यापापहराशुभा ॥ उदुम्बरवनात्तस्मादागताचसरस्वती ॥ ७८ ॥ तयातत्पूरितंतीर्थंपुष्करंमुनिसेवितम् ॥ दक्षिणंशिखरंभातिपर्वत
स्याविदूरतः ॥ ७९ ॥ नीलाभ्रमचयप्रख्यंवर्णतोनीलशाद्वलम् ॥ तयातच्छिखरंतस्यखस्थितंपुष्करंयथा ॥ ८० ॥ प्रावृट्कालेवियत्पूर्णघनवृन्द
मिवोच्छ्रितम् ॥ कदम्बपुष्पगन्धाढ्यंकुटजार्जुनभूषितम् ॥ ८१ ॥ रथमार्गमिवारोढुंरवेस्तच्छिखरंस्थितम् ॥ वृत्तैस्सपुलकैस्स्निग्धैःस्त्रीणामिवपयो
धरैः ॥ ८२ ॥ श्रीफलैःशिखरंभातिसमन्तात्सुमनोहरैः ॥ गुञ्जद्भिःषट्पदकुलैःसमन्तादुपशोभितम् ॥ ८३ ॥ कोकिलारावरुचिरंशिखिकेकारवा
कुलम् ॥ शृङ्गेमनोहरेतस्मिन्नुद्गतासुमनोरमा ॥ ८४ ॥ पुण्यापुण्यजलोपेतानदीयंब्रह्मणस्सुता ॥ वंशस्तम्बात्सुविपुलाप्रवृत्ताचोत्तरामुखी
॥ ८५ ॥ गत्वाततोनातिदूरात्पुनर्यातिपराङ्मुखी ॥ ततःप्रभृतिसादेवीप्रसन्नाप्रकटास्थिता ॥ ८६ ॥ अन्तर्धानंपरित्यज्यप्राणिनाम
नुकम्पया ॥ कनकासुप्रभाचैवनन्दाप्राचीसरस्वती ॥ ८७ ॥ पञ्चस्रोताःपुष्करेषुब्रह्मणापरिभाषिता ॥ तस्यास्तीरेसुरम्याणि
तीर्थान्यायतनानिच ॥ ८८ ॥ संसेवितानिमुनिभिःसिद्धैश्चापिसमन्ततः ॥ तेषुसर्वेषुभविताधर्महेतुःसरस्वती ॥ ८९ ॥ हाटकक्षिति
गौरीणांतत्तीर्थेषुमहोदयम् ॥ दानंदत्तंनरैःस्नातैर्जनयत्यक्षयंफलम् ॥ ९० ॥ धान्यप्रदानंप्रवरंवदन्तितिलप्रदानंचतथामुनीन्द्राः ॥
॥ यैस्तेषुतीर्थेषुनरैःप्रदत्तंतद्धर्महेतुप्रवरंप्रदिष्टम् ॥ ९१ ॥ प्रायोपवेशंप्रयतःप्रयत्नाद्यस्तेषुकुर्यात्प्रमदापुमान्वा ॥ तीर्थेऽपिसंयोज्यमनोऽपिचेत्थं

भुङ्क्तेफलंब्रह्मगृहेयथेप्सम्॥९२॥तस्योपकण्ठेम्रियतेहियैस्तुकर्मक्षयात्स्थावरजङ्गमैश्च॥तेचापिसर्वेसकलंप्रसह्यलभन्तियज्ञस्यफलंदुरापम् ॥९३॥ ततस्तु
माधर्मफलारणीचजन्मादिदुःखार्दितचेतसांतु ॥ सर्वात्मनाचारुफलासरस्वतीसेव्याप्रयत्नात्पुरुषैर्महानदी ॥ ९४ ॥ तत्रयेसलिलंपूतंपिबन्तिसत
तन्नराः ॥ नतेमनुष्यादेवास्तेजगत्यामिहसंस्थिताः ॥ ९५ ॥ यज्ञैर्दानैस्तपोभिश्चयत्फलंप्राप्यतेद्विजैः ॥ तदत्रस्नानमात्रेणशूद्रैरपिस्वभावजैः ॥
॥ ९६ ॥ दर्शनात्पुष्करस्यापिमहापातकिनोऽपिये ॥ तेऽपितत्पापनिर्मुक्ताःस्वर्गंयान्तितनुक्षये ॥ ९७ ॥ तत्रोपवासीयज्ञस्यपुण्डरीकस्ययत्फ
लम् ॥ तत्प्राप्नोतिनरःक्षिप्रमल्पायासेनपुष्करे ॥९८॥ माघमासेतिलान्यस्तुप्रयच्छतिचसद्द्विजे ॥ यथाशक्तिचभक्त्याचसविष्णुभवनेवसेत् ॥९९॥
तत्रोपवासंस्नानंचपञ्चगव्याशनंतथा ॥ यःकरोतिनरःसोऽपिदेहान्तेस्वर्गमाप्नुयात् ॥ १०० ॥ वसन्तितत्समीपस्थायेऽपितस्करजातयः ॥ तेऽपि
तस्यानुभावेनस्वर्यान्तिचनसंशयः ॥ १ ॥ येपुनःशूद्रवृत्तिस्थास्त्रिरात्रोपोषितानराः ॥ प्रयच्छन्तिद्विजेष्वर्थंब्रह्मशक्तिसमन्विताः ॥ २ ॥ तेमृ
तायानमारूढाःपद्मासनचतुर्भुजाः ॥ ब्रह्मणासहसायुज्यंप्राप्नुवन्त्यपुनर्भवम् ॥ ३ ॥ गङ्गोद्भेदंयत्रगङ्गासम्प्राप्तासरितांवराम् ॥ सरस्वतींद्रष्टुकामा
सान्त्वार्थेप्रोद्गताऽम्बरात् ॥ ४ ॥ तत्रगत्वापयःपूतंसुरसिद्धनिषेवितम् ॥ सारस्वतंचविमलंविद्याधरगणार्चितम् ॥ ५ ॥ पीतमेकाञ्जलिमितंयेनामं
तेनतत्परम् ॥ अवलोक्यदिशंपूर्वामाहगङ्गेसखित्वया ॥ ६ ॥ एकाकिनीवियुक्तास्मिकयास्येऽहमबान्धवा ॥ तांविज्ञायततोगङ्गारुदन्तींशोककर्शि
ताम् ॥ ७ ॥ पूर्वदेशात्समायाताद्रष्टुंतांदीनमानसाम् ॥ दृष्ट्वाचतांमहाभागांपरिष्वज्यतुपीडिताम् ॥ ८ ॥ नेत्रेप्रमृज्यचैतस्याःप्राहगङ्गावचस्तदा॥
गङ्गोवाच ॥ मारोदीस्त्वंमहाभागेदुष्करंतेकृतंसखि॥९॥ देवकार्यंयदन्येनकर्तुंशक्यंनतन्नैवहि॥एतस्मात्तेमहाभागेद्रष्टुंदेवाःसमागताः ॥११०॥एषांचक्रि
यतांपूजावाङ्मनःकायकर्मणा ॥ पुलस्त्यउवाच ॥ सरस्वतीसुरेन्द्राणांकृत्वापूजाविधिक्रमम् ॥११॥ क्रमेणब्रह्मजापश्चात्सङ्गतातुसखीजनम् ॥ ज्येष्ठ
मध्यमयोर्मध्येसङ्गमोलोकविश्रुतः ॥१२॥ पश्चान्मुखीब्रह्मसुताजाह्नवीतुउदङ्मुखी ॥ ततस्तेविबुधाःसर्वेपुष्करंयेसमागताः ॥१३॥ विदित्वादुष्करं
कर्मतस्यांस्तुतिमकारयन् ॥ देवाऊचुः ॥ त्वंबुद्धिस्त्वंमतिर्लक्ष्मीस्त्वंविद्यात्वंगतिःपरा ॥१४॥ त्वंश्रद्धात्वंपरानिष्ठाबुद्धिर्मेधारतिःक्षमा॥त्वंसिद्धि
स्त्वंस्वधास्वाहात्वंपवित्रंमतंमहत् ॥१५॥ सन्ध्यारात्रिःप्रभाभूतिर्मेधाश्रद्धासरस्वती॥यज्ञविद्यामहाविद्यागुह्यविद्याचशोभना ॥१६॥ आन्वीक्षिकीतु
यावार्तादण्डनीतिश्चकथ्यते ॥ नमोऽस्तुतेपुण्यजलेनमःसागरगामिनि ॥ १७ ॥ नमस्तेपापनिर्मोकेनमोदेविजगत्प्रिये ॥ पुलस्त्यउवाच ॥
एवंस्तुताहिसादेवीदिव्यास्वार्थपरायणैः ॥ १८ ॥ एवंसाप्राङ्मुखीतत्रस्थितादेवीसरस्वती ॥ सर्वतीर्थमयीदेवीसर्वामरसमन्विता ॥ १९ ॥

प्राचीसेतिबुधैर्ज्ञेयाब्रह्मणोवचनन्तथा ॥ तत्रशुद्धावटंनामतीर्थंपैतामहंस्मृतम् ॥ १२० ॥ दर्शनेनापिवैतस्यमहापातकिनोऽपिये ॥ भोगिभोगान्स
मश्नन्तिविशुद्धाब्रह्मणोऽन्तिके ॥ २१ ॥ प्रायोपवेशंयेतत्रप्रकुर्वन्तिनरोत्तमाः ॥ तेमृताब्रह्मयानेनदिवंयान्त्यकुतोभयाः ॥ २२ ॥ तत्राल्पमपियै
र्दानन्दत्तंब्रह्मविदात्मनाम् ॥ जन्मान्तरशतंतेपांतैर्दत्तंभावितात्मनाम् ॥ २३ ॥ खण्डस्फुटितसंस्कारंतत्रकुर्वन्तियेनगः ॥ तेब्रह्मलोकमासाद्यमो
दन्तेसुखिनस्सदा ॥ २४ ॥ योऽत्रपूजाजपोहोमःकृतोभवतिदेहिनाम् ॥ अनन्तंतत्फलंसर्वंब्रह्मभक्तिरतात्मनाम् ॥ २५ ॥ तत्रदीपप्रदानेनज्ञान
चक्षुरतीन्द्रियः ॥ प्राप्नोतिधूपदानेनस्थानंब्रह्मनिषेवितम् ॥ २६ ॥ अथकिंबहुनोक्तेनसङ्गमेयत्प्रदीयते ॥ तदनन्तफलंप्रोक्तंजीवतोवामृतस्य
च ॥ २७ ॥ तनानाज्ञपात्तथाहोमादनन्तफलसाधकम् ॥ रामेणागत्यवैतत्रपिण्डंदशरथस्यच ॥ २८ ॥ दत्तंश्राद्धंतत्रतेनमार्कण्डेयेनदर्शिते ॥
स्त्रवापीचतुष्कोणातत्रपिण्डप्रदानराः ॥ २९ ॥ हंसयुक्तेनयानेनसर्वेयान्तित्रिविष्टपम् ॥ तस्यांवाप्यांतुवैब्रह्मापितृमेधंचकारह ॥ १३० ॥ य
ज्ञंयज्ञविदांश्रेष्ठःसमाप्तवरदक्षिणम् ॥ वसवःपितरोज्ञेयारुद्राश्चैवपितामहाः ॥ ३१ ॥ आदित्याश्चततस्तेषांविहिताःप्रपितामहाः ॥ त्रिविधाअपिआ
हूयपुनरुक्ताविरिञ्चिना ॥ ३२ ॥ भवद्भिःपिण्डदानाद्यंग्राह्यमत्रस्थितैस्सदा ॥ यत्कृतंपितृकार्यंचतदनन्तफलंभवेत् ॥ ३३ ॥ वृत्त्यर्थंपितरस्तेषां
तुष्टाश्चैवपितामहाः ॥ लभन्तेतर्पणात्तृप्तिंपिण्डदानात्त्रिविष्टपम् ॥ ३४ ॥ तस्मात्सर्वंपरित्यज्यप्राचीनेपिण्डदोभवेत् ॥ दत्त्वापुत्रःप्रयत्नेनपितॄन्स
र्वांश्चतर्पयेत् ॥ ३५ ॥ प्राचीनेश्वरदेवस्यपुरोभूतंप्रतिष्ठितम् ॥ आदितीर्थतदित्युक्तंदर्शनादपिमुक्तिदम् ॥ ३६ ॥ स्पृष्ट्वातुसलिलन्तत्रमुच्यतेजन्म
बन्धनात् ॥ अवगाहनाद्ब्रह्मणोऽसौभवत्यनुचरःसदा ॥ ३७ ॥ आदितीर्थेनरःस्नात्वायःप्रदद्यात्समाधिना ॥ अन्नमल्पमपिप्रायःप्रायशस्स्वर्गमा
प्नुयात् ॥ ३८ ॥ यस्तत्रब्रह्मभक्तानांनरःस्नात्वाददेद्धनम् ॥ कृसरेणापिहेम्नाचसस्वर्गेमोदतेसुखी ॥ ३९ ॥ प्राचीसरस्वतीतत्रनरैःकिंमृग्यतेप
रम् ॥ तस्यांस्नानात्फलंतृप्त्यैतपोयज्ञादिलक्षणम् ॥ १४० ॥ येपिबन्तिनराःपुण्यांप्राचींदेवींसरस्वतीम् ॥ नतेनराःसुराज्ञेयामार्कण्डेयार्षिरब्र
वीत् ॥ ४१ ॥ सरस्वतींनदींप्राप्यनस्नानेनियमःक्वचित् ॥ भुक्तेवानचवाभुक्तेदिवावायदिवानिशि ॥ ४२ ॥ तत्तीर्थंसर्वतीर्थानांप्राचीनप्रवरंस्मृ
तम् ॥ पापघ्नंपुण्यजननंप्राणिनांपरिकीर्तितम् ॥ ४३ ॥ येपुनर्भावितात्मानस्तत्रस्नात्वाजनार्दनम् ॥ पूजयन्तियथाशक्तितेप्रयान्तित्रिविष्ट
पम् ॥ ४४ ॥ देवानांप्रवरोविष्णुस्तेनयत्रसरस्वती ॥ सेवितातत्परंतीर्थंक्षितौब्रह्मसुतोऽब्रवीत् ॥ ४५ ॥ ततस्तस्मान्महातीर्थमन्यमानामहो
दयम् ॥ मन्दाकिनीमुदीक्षन्तीस्थितातत्रसरस्वती ॥ ४६ ॥ तत्तीर्थंसर्वतीर्थानांपरंस्वायम्भुवोऽब्रवीत् ॥ मन्दाकिन्यासमंयत्रप्राप्यपुण्यसमाग

मम् ॥४७॥ तत्रस्थानेस्थितादेवैःस्तुतादेवीसरस्वती ॥ मत्वाचैकाकिनींतांतुदीनास्यांदीनमानसाम् ॥ ४८ ॥ सखींनदास्सृजद्ब्रह्मारूपिणींविमलेक्षणा
म् ॥ हरिणींहरिरप्याशुजज्ञेकमललोचनाम् ॥ ४९ ॥ वज्रिणीमपिदेवेशोवज्रपाणिर्विसृष्टवान् ॥ सुकुरङ्गरुचिंदेवोनीलकण्ठोवृषध्वजः ॥ १५० ॥
सखींसञ्जनयामाससरस्वत्यास्त्रिलोचनः ॥ विलोक्यमानासाराजन्सखीभिःसुरसुन्दरी ॥ ५१ ॥ प्रहृष्टायातुमारब्धादेवादेशान्महानदी ॥ ततःस
खीभिःसार्द्धंसाप्राचीनागन्तुमुद्यता ॥ ५२ ॥ सरस्वतीसमस्तानांतासांश्रेष्ठतमास्मृता ॥ प्राचीसरस्वतीतोयंयेपिबन्तिमृगाभुवि ॥ ५३ ॥ तेऽपि
स्वर्गगमिष्यन्तियज्ञैर्द्विजवरायथा ॥ चिन्तामणिरिवात्रैपाप्राचीज्ञेयासरस्वती ॥ ५४ ॥ तथाक्रमफलस्येयंहेतुभूतामहानदी ॥ दक्षिणांदिश
मालोक्यपुनःपश्चान्मुखीगता ॥ ५५ ॥ उक्तातयातथागङ्गादिशंप्राचींव्रजस्वह ॥ विस्मर्तव्यानचाहंतेव्रजदेवियथागतम् ॥ १५६ ॥ इति
श्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेतीर्थावतारोनामद्वात्रिंशोऽध्यायः ॥ ३२ ॥ भीष्मउवाच ॥ मार्कण्डेयनवैरामःकथमत्रप्रबोधितः ॥ कथंसमागमो
भूतःकस्मिन्कालेक्वदामुने ॥ १ ॥ मार्कण्डेयःकस्यसुतःकथंजातोमहातपाः ॥ नाम्नोऽस्यनिगमंब्रूहियथाभूतंमहामुने ॥ २ ॥ पुलस्त्यउवाच ॥
अथतेसम्प्रवक्ष्यामिमार्कण्डेयोद्भवंपुनः ॥ पुराकल्पेमुनिःपूर्वंमृकण्डुर्नामविश्रुतः ॥ ३ ॥ भृगोःपुत्रोमहाभागःसभार्यस्तप्तवांस्तपः ॥ तस्य
पुत्रस्तदाजातोवसतस्तुवनान्तरे ॥ ४ ॥ सपञ्चवार्षिकोभूतोबालएवगुणाधिकः ॥ ज्ञानिनासतदादृष्टोभ्रमन्बालस्तदाङ्गणे ॥ ५ ॥ स्थित्वासमु
चिरंकालंभाव्यर्थंप्रत्यबुध्यत ॥ तस्यपित्रासवैपृष्टःकियदायुःसुतस्यमे ॥ ६ ॥ सङ्ख्यायाचक्ष्ववर्षाणितस्याल्पान्यधिकानिवा ॥ मृकण्डुनैवमुक्त
स्तुसज्ञानीवाक्यमब्रवीत् ॥ ७ ॥ षण्मासमायुःपुत्रस्यधात्रासृष्टंमुनीश्वर ॥ नैवशोकस्त्वयाकार्यःसत्यमेतदुदाहृतम् ॥ ८ ॥ सतच्छ्रुत्वावचो
भीष्मज्ञानिनायदुदाहृतम् ॥ अथोपनयनंचक्रेबालकस्यपितातदा ॥९॥ आहचैनंपितापुत्रमृषींस्त्वमभिवादय ॥ एवमुक्तःसवैपित्राप्रहृष्टश्चाभिवादने
॥ १० ॥ नवर्णावर्णतांवेत्तिसर्ववर्णाभिवादनः ॥ पञ्चमासास्त्वतिक्रान्तादिवसाःपञ्चविंशतिः ॥ ११ ॥ मार्गेणाथसमायाताऋषयस्तत्रसप्तवै ॥
बालेनतेनतेदृष्टाःसर्वेचाप्यभिवादिताः ॥ १२ ॥ आयुष्मान्भवतेरुक्तःसबालोदण्डमेखली ॥ उक्त्वैवंतेपुनर्बालमपश्यन्क्षीणजीवितम् ॥ १३ ॥ दि
नानिपञ्चतस्यायुर्ज्ञात्वाभीताश्चतेनृप ॥ तंगृहीत्वाबालकंचगतास्तेब्रह्मणोऽन्तिकम् ॥ १४ ॥ प्रतिमुच्यचतंराजन्प्रणिपेतुःपितामहम् ॥ अयमावेदित
स्तैस्तुतेनब्रह्माभिवादितः ॥ १५ ॥ चिरायुर्ब्रह्मणाबालःप्रोक्तःसऋषिसन्निधौ ॥ ततस्तेमुनयःप्रीताःश्रुत्वावाक्यंपितामहात् ॥ ॥ १६ ॥ पिता
महोऋषीन्दृष्ट्वाप्रोवाचविस्मयान्वितः ॥ कार्येणयेनचायातःकोऽयंबालोनिवेद्यताम् ॥१७॥ ततस्तऋषयोराजन्सर्वंतस्मैन्यवेदयन् ॥ पुत्रोमृकण्डोः

क्षीणायुःसायुषंकुरुबालकम् ॥ १८ ॥ अल्पायुषस्त्वस्यमुनिर्बद्धेमांचापिमेखलाम् ॥ यज्ञोपवीतंदण्डंचदत्त्वाचैनमबोधयत् ॥ १९ ॥ यंकंचित्प
श्यसेबालभ्रमन्तंभूतलेजनम् ॥ तस्याभिवादःकर्तव्यएवमाहपितावचः ॥२० ॥ अभिवादनशीलोऽयंक्षितौदृष्टःपरिभ्रमन् ॥ तीर्थयात्राप्रसङ्गेनदैवयो
गात्पितामह ॥ २१ ॥ चिरायुर्भवपुत्रेतिप्रोक्तोऽसौतत्रबालकः ॥ कथंवचोभवेत्सत्यमस्माकंभवतासह ॥ २२ ॥ एवमुक्तस्तदातैस्तुब्रह्मालो
कपितामहः ॥ ऋतवाक्यादियंभूमिःसंस्थितासर्वतोभया ॥ २३ ॥ ब्रह्मोवाच ॥ मत्समश्चायुषाबालोमार्कण्डेयोभविष्यति ॥ ऋषीणांचापि
मुख्यश्चमत्सहायोभविष्यति ॥ २४ ॥ कल्पस्यादौतथाचान्तेमतोमेमुनिसत्तमः ॥ एवंतेमुनयोबालंब्रह्मलोकेपितामहात् ॥ २५ ॥ संसाध्य
प्रेषयामासुभूयोऽप्येनंधरातलम् ॥ तीर्थयात्रांगताविप्रामार्कण्डेयोनिजंगृहम् ॥ २६ ॥ जगामतेषुयातेषुपितरंस्वमथाब्रवीत ॥ ब्रह्मलोकमहंनीतो
मुनिभिर्ब्रह्मवादिभिः ॥ २७ ॥ दीर्घायुश्चकृतश्चास्मिवरान्दत्त्वाविसर्जितः ॥ एतदन्यच्चमेदत्तंगतंचिन्ताकरंतव ॥ २८ ॥ कल्पस्यादौतथाचान्ते
भविष्येसमनन्तरे ॥ लोककर्तुर्ब्रह्मणोऽहंप्रसादात्तस्यवैपितः ॥ २९ ॥ पुष्करंवैगमिष्यामितपस्तप्तुंसमुद्यतः ॥ तत्राहंदेवदेवेशमुपासिष्येपिता
महम् ॥ ३० ॥ सर्वकामावाप्तिकरंसर्वारातिनिबर्हणम् ॥ सर्वसौख्यप्रदंदेवमिन्द्रादीनांपरायणम् ॥ ३१ ॥ ब्रह्माणंतोषयिष्यामिसर्वलोकपिताम
हम् ॥ मार्कण्डेयवचःश्रुत्वामृकण्डुर्मुनिसत्तमः ॥ ३२ ॥ जगामपरमंहर्षक्षणमेकंसमुच्छ्वसन् ॥ धैर्यंसुमनसास्थायइदंवचनमब्रवीत् ॥ ३३ ॥
अद्यमेसफलंजन्मंजीवितंचसुजीवितम् ॥सर्वस्यजगतांस्रष्टायेनदृष्टःपितामहः ॥३४॥ त्वयादायादवानस्मिपुत्रेणवंशधारिणा ॥ त्वंगच्छपश्यदेवेशंपु
ष्करस्थंपितामहम् ॥ ३५ ॥ दृष्टेतस्मिञ्जगन्नाथेनजरामृत्युरेवच ॥ नृणांभवतिसौख्यानितथैश्वर्यंतपोऽक्षयम् ॥ ३६ ॥ त्रीणिशृङ्गाणिशु
भ्राणित्रीणिप्रस्रवणानिच ॥ पुष्कराणितथात्रीणिनविद्मस्तत्रकारणम् ॥ ३७ ॥ कनीयांसंमध्यमंचतृतीयंज्येष्ठपुष्करम् ॥ शृङ्गशब्दाभिधानानि
शुभप्रस्रवणानिच ॥ ३८ ॥ ब्रह्माविष्णुस्तथारुद्रोनित्यंसन्निहितास्त्रयः ॥ पुष्करेषुमहाराजानातःपुण्यंतमंभुवि ॥ ३९ ॥ विरजविमलंतोयंत्रिपुलोके
षुविश्रुतम्॥ब्रह्मलोकस्यपन्थानंधन्याःपश्यन्तिपुष्करम्॥४०॥ यस्तुवर्षशतंसाग्रमग्निहोत्रमुपासिता॥कार्तिकींवावसेदेकांपुष्करेसममेवच ॥४१॥ कर्तु
म्मयानशकितंकर्मणानैवमाधिनम् ॥ तदयत्नात्त्वयातातमृत्युस्सर्वहरोजितः ॥४२॥ तत्रदृष्टस्सदेवेशोब्रह्मालोकपितामहः ॥ नान्योमर्त्यस्त्वयातुल्यो
भविताजगतीतले ॥ ४३॥ अहंवैतोषितोयेनपञ्चवार्षिकजन्मना ॥ वरेणत्वंमदीयेनउपमाचिरजीविनाम् ॥ ४४ ॥गमिष्यसिनसन्देहस्तथाशीर्वचन
म्मम ॥ एवंवदन्तितेसर्वेब्रजलोकान्यथेप्सितान् ॥ ४५ ॥ एवंलब्धप्रसादेनमृकण्डुतनयेनच ॥ आश्रमःस्थापितस्तेनमार्कण्डाश्रमइत्युत ॥ ४६ ॥

तत्रस्नात्वाशुचिर्भूत्वावाजपेयफलंलभेत् ॥ सर्वपापविशुद्धात्माचिरायुर्जायतेनरः ॥ ४७ ॥ पुलस्त्यउवाच ॥ तथान्यंतेप्रवक्ष्यामिइतिहासंपुरातनम् ॥
यथारामेणवैतीर्थंपुष्करंतुविनिर्मितम् ॥ ४८ ॥ चित्रकूटात्पुरारामोमैथिल्यालक्ष्मणेनच ॥ अत्रेरामश्रममासाद्यपप्रच्छमुनिसत्तमम् ॥ ४९ ॥
रामउवाच ॥ कानिपुण्यानितीर्थानिकिंवाक्षेत्रंमहामुने ॥यत्रगत्वानरोयोगिन्वियोगंसहबन्धुभिः॥ ५० ॥ नैवप्राप्नोतिभगवन्स्तन्ममाचक्ष्वसुव्रत ॥
अनेनवनवासेनराज्ञस्तुमरणेनच ॥ ५१॥ भरतस्यवियोगेनपरितप्येह्यहंत्रिभिः ॥ तद्वाक्यंराघवेणोक्तंश्रुत्वाविप्रर्षभस्तदा ॥ ५२ ॥ ध्यात्वाचसुचि
रंकालमिदंवचनमब्रवीत् ॥ अत्रिरुवाच ॥ साधुपृष्टंत्वयावीरघूणांवंशवर्धन ॥ ५३ ॥ ममपित्राकृतंतीर्थंपुष्करंनामविश्रु
तम् ॥ पर्वतौद्वौचविख्यातौमर्यादायज्ञपर्वतौ ॥ ५४ ॥ कुण्डत्रयंतयोर्मध्येज्येष्ठमध्यकनिष्ठकम् ॥ ५५ ॥ तेषुगत्वादशरथंपिण्डदानेनतर्पय ॥
तीर्थानां वरंतीर्थक्षेत्राणामपिचोत्तमम् ॥ अवियोगाचसुरसावापीरघुकुलोद्वह ॥५६॥ तथासौभाग्यकूपोऽन्यःसुजलोरघुनन्दन ॥ तेषुपिण्डप्रदानेन
पितरोमोक्षमाप्नुयुः ॥ ५७ ॥ आभूतसम्प्लवंकालमेतदाहपितामहः ॥ तत्रराघवगच्छस्वभूयोऽप्यागमनंक्रियाः॥५८॥ तथेतिचोक्त्वारामोऽपिगमनाय
मनोदधे ॥ ऋक्षवन्तमभिक्रम्यनगरंवैदिशन्तथा ॥ ५९ ॥ चर्मण्वतींसमुत्तीर्यप्राप्तोऽसौयज्ञपर्वतम् ॥ तमतिक्रम्यवेगेनमध्यमेपुष्करेस्थितः ॥ ६०॥
पितृन्सन्तर्पयामासअद्भिर्देवांश्चसर्वशः ॥ स्नानावसानेगमेणमार्कण्डोमुनिपुङ्गवः ॥ ६१ ॥ आगच्छञ्शिष्यसंयुक्तोदृष्टस्तत्रैवधीमता ॥ गत्वावैस
म्मुखंतस्यप्रणिपत्यचसादरम् ॥ ६२ ॥ पृष्टोऽवियोगदःकूपःकतमस्यांदिशिप्रभो ॥ सुतोदशरथस्याहंरामोनामजनैःस्मृतः ॥६३॥ सौभाग्यवापीं
तांद्रष्टुमहंप्राप्तोऽत्रिशासनात ॥ तत्स्थानंतौचवकूपौभगवान्प्रब्रवीतुमे ॥६४॥ एवमुक्तश्चरामेणमार्कण्डःप्रत्युवाचह ॥ मार्कण्डेयउवाच ॥ साधुराघ
वभद्रंतेसुकृतंभवताकृतम् ॥६५ ॥ तीर्थयात्राप्रसङ्गेनयत्प्राप्तोऽसीहसाम्प्रतम् ॥ एह्यागच्छस्वपश्यस्ववापींनामवियोगदाम् ॥६६॥ अवियोगश्चसवै
श्चकूपएवात्रजायते ॥ आमुष्मिकेचहिकेचजीवनोऽपिमृतस्यवा ॥ ६७ ॥ एतद्वाक्यंमुनीन्द्रस्यश्रुत्वालक्ष्मणपूर्वजः ॥ तस्मात्रामोराजानंतदादशर
थंनृप ॥ ६८ ॥ भरतंसहशत्रुघ्नंभ्रातॄनन्यांश्चनागरान् ॥ एवंचिन्तयतस्तस्यसन्ध्याकालोव्यजायत ॥ ६९ ॥ उपास्यपश्चिमांसन्ध्यांमुनिभिःसहरा
घवः ॥ सुष्वापतांनिशांतत्रभ्रातृभार्यासमन्वितः ॥ ७० ॥ विभावर्यवसानेतुस्वप्नान्तेरघुनन्दनः ॥ पित्रामात्रातथाचान्यैरयोध्यायांस्थितःकिल
॥ ७१॥ विवाहमङ्गलेवृत्तेबहुभिर्बान्धवैःसह ॥ समासीनःसभार्योऽसावृषिभिःपरिवारितः ॥७२॥ लक्ष्मणेनाप्येवमेवदृष्टोऽसौसीतयातथा॥ प्रभाते
तुमुनीनांतत्सर्वमेवप्रकीर्तितम् ॥ ७३ ॥ ऋषिभिश्चतथेत्युक्तःसत्यमेतद्रघूत्तम ॥ मृतस्यदर्शनेश्राद्धंकार्यमावश्यकंस्मृतम् ॥ ७४ ॥ वृद्धिकामास्तु

पितरस्तथाचैवान्नकाङ्क्षिणः ॥ ददन्तिदर्शनस्वप्नेभक्तियुक्तस्यराघव ॥७५॥ अवियोगस्तुतभ्रात्रापित्राचभरतेनच ॥ चतुर्दशानांवर्षाणांभविताराघव
ध्रुवम् ॥७६॥ कुरुश्राद्धंतथावीरगङ्गांदशरथस्यच ॥ अमीचऋषयःसर्वेतवभक्ताःकृतक्षणाः ॥७७॥ अहंचजमदग्निश्चभारद्वाजश्चलोमशः ॥ देवरातः
शर्मीकश्वपडेतेवैद्विजोत्तमाः ॥ ७८ ॥ श्राद्धेचतेमहाबाहोसंभारांस्त्वमुपाहर ॥ मुख्यंचेङ्गुदिपिण्याकंबदरामलकैःसह ॥ ७९ ॥ श्रीफलानिचपक्का
निमूलंचोच्चावचंबहु ॥ मार्गेणचाथमांसेनधान्येनविविधेनच ॥ ८० ॥ तृप्तिंप्रयच्छविप्राणांश्राद्धदानेनसुव्रत ॥ पुष्करारण्यमासाद्यनियतोनियता
शनः ॥८१॥पितॄंस्तर्पयतयस्तुसोऽश्वमेधमवाप्नुयात् ॥स्नानार्थंतुवयंगमगच्छामोज्येष्ठपुष्करम् ॥८२॥ इत्युक्त्वातेगताःसर्वेमुनयोराघवंनृप॥लक्ष्मणं
चाब्रवीद्रामोमेध्यमाहरमेमृगम् ॥ ८३ ॥ शुद्धेक्षणंचशशकंकृष्णशाकन्तथामधु ॥ जम्बीराणिचमुख्यानिमूलानिविविधानिच ॥ ८४ ॥ पक्का
निचकपित्थानिफलान्यन्यानियानिच ॥ तान्याहरस्ववैश्राद्धेक्षिप्रमेवास्तुलक्ष्मण ॥ ८५ ॥ तथातत्कृतवान्सर्वंरामादेशाच्चराघवः ॥ बदरे
ङ्गुदिशाकानिमूलानिविविधानिच ॥ ८६ ॥ तत्राहृत्यचरामेणकूटाकारःकृतोमहान् ॥ परिपक्वंचजानक्यासिद्धंरामेनिवेदितम् ॥ ८७ ॥ स्ना
त्वारामोयोगवाप्यांमुनीस्तानुपालयन् ॥ मध्याह्नाच्चलितेसूर्येकालेकुतपकेतथा ॥ ८८ ॥ आयाताऋषयःसर्वेरामेणानुमन्त्रिताः ॥ तानाग
तान्मुनीन्दृष्ट्वावैदेहीजनकात्मजा ॥ ८९ ॥ रामान्तकंपरित्यज्यव्रीडिताऽन्यत्रसंस्थिता ॥ विस्मयोत्फुल्लनयनाचिन्तयानाचवंपती ॥ ९० ॥
ब्राह्मणानेहजानन्तिश्राद्धकालेह्युपस्थिताः ॥ रामेणभोजिताविप्राःस्मृत्युक्तेनयथाविधि ॥ ९१ ॥ वैदिक्यश्चकृतास्सर्वाःसत्क्रियायास्समीरिताः ॥
पुराणोक्तोविधिश्चैववैश्वदेविकपूर्वकः ॥ ९२ ॥ भुक्तवत्सुचविप्रेषुदत्त्वापिण्डान्यथाक्रमम् ॥ प्रेषितेषुयथाशक्तिदत्त्वातेषुचदक्षिणाम् ॥ ९३ ॥
गतेषुविप्रमुख्येषुप्रियांरामोऽब्रवीदिदम् ॥ किमर्थंसुभ्रुनष्टासिमुनीन्दृष्ट्वात्विहागतान् ॥ ९४ ॥ तत्सर्वंत्वमिदंतत्त्वंकारणंवदमाचिरम् ॥ भवितव्यंका
रणेनतच्चगोप्यंनमेकुरु ॥ ९५ ॥ शापितासिममप्राणैर्लक्ष्मणस्यशुचिस्मित ॥ एवमुक्तातदाभर्त्रात्रपयावाङ्मुखीस्थिता ॥ ९६ ॥
विमुञ्चन्तीसाऽश्रुपातंराघवंवाक्यमब्रवीत् ॥ शृणुत्वंनाथयद्दृष्टमाश्चर्यमिहयादृशम् ॥ ९७ ॥ रामत्वयाचिन्त्यमानोराजेन्द्रस्त्विहचागतः ॥
सर्वाभरणसंयुक्तौद्वौचान्यौचतथाविधौ ॥ ९८ ॥ द्विजानांदेहसंयुक्तास्त्रयस्तेरघुनन्दन ॥ पितरस्तुमयादृष्टाब्राह्मणाङ्गेषुराघव ॥ ९९ ॥ दृष्ट्वात्रपान्वि
ताचाहमपक्रान्तातवान्तिकात्॥त्वयावैभोजिताविप्राःकृतंश्राद्धंयथाविधि ॥१००॥ वल्कलाजिनसंवीताकथंराज्ञःपुरःसरा ॥ भवामिरिपुवीरघ्नमत्य
मेतदुदाहृतम् ॥ १ ॥ कौशेयानिचवस्त्राणिकैकेय्यापट्टनानिच ॥ ततःप्रभृतिचैवाहंचीरिणीतुवनाश्रयम् ॥ २ ॥ ज्ञात्वाहंनवदेकिञ्चिन्माते

दुःखंभवत्विति ॥ नाहंस्मरामिवैमातुर्नपितुश्चपरन्तप ॥ ३ ॥ कदाभविष्यतीहान्तोवनवासस्यराघव ॥ एतदेवानिशंरामचिन्तयन्त्याः
पुनःपुनः ॥ ४ ॥ व्रजन्तिदिवसानाथतवपद्म्यांशपाम्यहम् ॥ स्वहस्तेनकथंराज्ञोदास्येवैभोजनंत्विदम् ॥ ५ ॥ दासानामपियो
दासोनोपभुञ्जीतयत्कचित् ॥ एतादृशीकथंत्वस्मैसम्प्रदातुंसमुत्सहे ॥ ६ ॥ याहंराज्ञापुरादृष्टासर्वालङ्कारभूषिता ॥ वाळव्यजनहस्ताचवी
जयन्तीनराधिपम् ॥ ७ ॥ सास्वेदमलदिग्धाङ्गीकथंपश्यामिभूमिपम् ॥ व्यक्तंत्रिविष्टपंप्राप्तस्त्वयापुत्रेणतारितः ॥ ८ ॥ दृष्ट्वामांदुःखितां
बालांवनेक्लिष्टामनागसम् ॥ शोकःस्यात्पार्थिवस्यास्यतेननष्टास्मिराघव ॥ ९ ॥ भवान्प्राणसमोराममनतेगोप्यंममत्विह ॥ सत्येनतेनचैवाथस्पृशा
मिचरणौतव ॥११०॥ तच्छ्रुत्वाराघवःप्रीतःप्रियांतांप्रियवादिनीम् ॥अङ्कमानीयसुदृढंपरिष्वज्यचसादरम् ॥११ ॥भुक्तौभोज्यंतदावीरौपश्चाद्भुक्ताच
जानकी ॥ एवंस्थितौतदासाचतांरात्रिंतत्रराघवौ ॥ १२॥ उदितेचसहस्रांशौगमनायमनोदधुः ॥प्रत्यङ्मुखंगतःक्रोशंज्येष्ठंयावच्चपुष्करम् ॥१३॥ पूर्वं
भागेपुष्करस्ययावत्तिष्ठतिराघवः ॥ शुश्रावचततोवाचंदेवदूतेनभाषितम् ॥ १४ ॥ भोभोराघवभद्रंतेतीर्थमेतत्सुदुर्लभम् ॥ अस्मिन्स्थाने
स्थितोवीरआत्मनःपुण्यतांकुरु ॥ १५ ॥ देवकार्यंत्वयाकार्यंहन्तव्यादेवशत्रवः ॥ ततोहृष्टमनावीरोह्यब्रवील्लक्ष्मणंवचः ॥ १६ ॥ सौमि
त्रेऽनुगृहीतोऽहंदेवदेवेनब्रह्मणा ॥ अत्राश्रमपदंकृत्वामासमेकंचलक्ष्मण ॥ १७ ॥ व्रतंचरितुमिच्छामिकायशोधनमुत्तमम् ॥ तथेतिलक्ष्मणे
नोक्तेव्रतंपरिसमाप्यतु ॥ १८ ॥ पिण्डदानादिभिर्दानैःश्राद्धैश्चैवपितामहान् ॥ पुष्करेतुतदारामोऽतर्पयद्विधिवत्तदा ॥ १९ ॥ कनकप्रासु
भाचैवनन्दाप्राचीसरस्वती ॥ पञ्चस्रोताःपुष्करेषुपितॄणांतुष्टिदायिनी ॥ १२० ॥ दैनन्दिनींपितॄणांतुपूजांतांपितृपूर्विकाम् ॥ रचयित्वातदा
रामोलक्ष्मणंवाक्यमब्रवीत् ॥ २१ ॥ एहिलक्ष्मणशीघ्रंत्वंपुष्कराज्जलमानय ॥ पादप्रक्षालनंकृत्वाशयनंकुरुसंस्तरे ॥ २२ ॥ विभावर्यां
निवृत्तायांयास्यामोदक्षिणांदिशम् ॥ लक्ष्मणस्त्वब्रवीद्वाक्यंसीतयानीयतांपयः ॥ २३ ॥ नाहंरामसर्वकालेदासभावंकरोमिते ॥ इयंपुष्टाच
सुभृशंपीवरीचममाप्युत ॥ २४ ॥ किंत्वंकरिष्यस्यनयाभार्ययावदसाम्प्रतम् ॥ किंवामृतस्यवैपृष्ठइयंयास्यतितेप्रिया ॥ २५ ॥ रक्षसेत्वंस
दाकालंसुपुष्टांचैवसर्वदा ॥ हृष्टाचैषाक्लेशयतिसततंमांरघूत्तम ॥ २६ ॥ त्वंचक्लेशयसेरामपरत्रजायतेक्षतिः ॥ त्वत्कृतेचसदाचाहंपिपासांक्षु
धयासह ॥ २७ ॥ संसहामिनसन्देहःपरत्रचनिशामय ॥ मृतानांपृष्ठतःकश्चिद्गतोनैवचदृश्यते ॥ २८ ॥ भार्य्यापुत्रौधनंचापिएवमाहुर्मनी
षिणः ॥ मृतश्चतेपितारामत्यक्त्वाराज्यमकण्टकम् ॥ २९॥ विनिक्षिप्यवनेत्वांचकैकेय्याःप्रियकाम्यया ॥ इहस्थितासाकैकेयीधनंसर्वंचबान्धवाः ॥

॥ १३० ॥ महाराजोदशरथएकएवगतोगतिम् ॥ मन्येऽहंनत्वयासार्धंसीतायास्यतिवैध्रुवम् ॥ ३१ ॥ करिष्यसेकिमनयावदराघवसाम्प्रतम् ॥
श्रुत्वाचाश्रुतपूर्वंहिवाक्यंलक्ष्मणभाषितम् ॥ ३२ ॥ विमनाराघवस्तस्थौसीताचापिवरानना ॥ यदुक्तंलक्ष्मणेनाथसीतासर्वंचकारह ॥ ३३ ॥
स्नात्वाभुक्त्वाततोवीरौपुष्करेपुष्करेक्षणौ ॥ नीत्वाविभावरींतत्रगमनायमनोदधुः ॥ ३४ ॥ एह्युत्तिष्ठचसौमित्रिव्रजामोदक्षिणांदिशम् ॥ सौमित्रि
रब्रवीद्रामनाहंयास्येकथञ्चन ॥ ३५ ॥ व्रजत्वमनयासार्धंभार्ययाकमलेक्षण ॥ नान्यद्वनगमिष्यामिनैवायोध्यांचराघव ॥ ३६ ॥ अस्मि
न्वनेवसिष्यामिवर्षाणीहचतुर्दश ॥ मयाविनात्वयोध्यायांयदित्वंनगमिष्यसि ॥ ३७ ॥ अनेनवर्त्मनाभूपआगन्तव्यंत्वयाविभो ॥ यदिजीवा
मितत्कालंपुनर्यास्येपितुःपुरम् ३८ ॥ तपस्सम्भावयिष्यामिमयात्वंकिंकरिष्यसि ॥ व्रजसौम्यशिवःपन्थामाचतेपरिपन्थिनः ॥३९॥ पश्यामि
त्वांपुनःप्राप्तंसभार्यंकमलेक्षणम् ॥ पितृपैतामहंराज्यमयोध्यायांनराधिप ॥ १४० ॥ शत्रुघ्नभरतौचोभौत्वदाज्ञाकरणेस्थितौ ॥ अहंतेप्रति–लस्तु
वनवासेविशेषतः ॥ ४१ ॥ अनारतंदिवाचाहंरात्रौचैवपरन्तप ॥ कर्मकर्तुंनशक्नोमिव्रजसौम्ययथासुखम् ॥ ४२ ॥ एवंब्रुवाणंसौमित्रिमुवाचरघु
नन्दनः ॥ कथंपूर्वमयोध्यायानिर्गतोऽस्मिमयासह ॥४३ ॥ वनेवत्स्याम्यहंरामनववर्षाणिपञ्चच ॥ नतुत्वयाविरहितःस्वर्गेऽपिनिवसेक्वचित् ॥ ४४॥
यागतिस्तेनरव्याघ्रममसापिभविष्यति ॥ प्रसादःक्रियतांमह्यंनयमामपिराघव ॥ ४५ ॥ इदानीमर्धमार्गेत्वंकथंस्थास्यसिशत्रुहन् ॥ लक्ष्मणस्त्वब्र
वीद्रामंनाहंगन्तावनेपुनः ॥ ४६ ॥ लक्ष्मणंसंस्थितंज्ञात्वारामोवचनमब्रवीत् ॥ मामनुव्रजसौमित्रएकोयास्यामिकाननम् ४७ ॥ द्वितीयामेत्वियंसी
तारामेणोक्तस्तुलक्ष्मणः ॥ गृहीत्वाऽथसमुत्तस्थौरामवाक्यंसलक्ष्मणः ॥ ४८ ॥ मर्यादापर्वतंप्राप्तौक्षेत्रसीमांपरन्तपौ ॥ अजगन्धंचदेवेशंदेवदेवं
पिनाकिनम् ॥ ४९ ॥ अष्टाङ्गप्रणिपातेननत्वाराममस्त्रिलोचनम् ॥ तुष्टावप्रयतःस्थित्वाशङ्करंपार्वतीप्रियम् ॥ १५० ॥ कृताञ्जलिपुटोभूत्वारो
माञ्चितशरीरकः ॥ सात्त्विकंभावमापन्नोविनिर्धूतरजस्तमाः ॥५१॥ लोकानांकारणंदेवंबुबुधेविबुधाधिपम् ॥५२॥ रामउवाच ॥ कृत्स्नस्ययोऽस्य
जगतःसचराचरस्यकर्ताकृतस्यचपुनःसुखदुःखदश्च ॥ संहारहेतुरपियःपुनरन्तकालेतंशङ्करंशरणदंशरणंव्रजामि ॥ ५३ ॥ यंयोगिनोविगतमो
हतमोरजस्काभक्त्यैकतानमनसोविनिवृत्तकामाः ॥ ध्यायन्तिनिश्चलधियोऽमितदिव्यभावंतंशङ्करंशरणदंशरणंव्रजामि ॥ ५४ ॥ यश्चेन्दुखण्डम ॥ १०३ ॥
मलंविलसन्मयूखंबद्ध्वासदाप्रियतमांशिरसाबिभर्ति ॥ यश्चार्धदेहमददाद्गिरिराजपुत्र्यैतंशङ्करंशरणदंशरणंव्रजामि ॥ ५५ ॥ योऽयंसकृद्विमलचा
रुविलोलतोयांगङ्गांमहोर्मिविषमांगगनात्पतन्तीम् ॥ मूर्धादधेस्रजमिवप्रविलोलपुष्पांतंशङ्करंशरणदंशरणंव्रजामि ॥ ५६ ॥ कैलासशैलशिखरं

परिकम्प्यमानंकैलासशृङ्गसदृशेनदशाननेन ॥ यत्पादपद्मविधृतंस्थिरतांदधारतंशङ्करंशरणदंशरणंव्रजामि ॥ ५७ ॥ येनासकृद्दनुसुताःसमरेनिरस्ता
विद्याधरोरगगणाश्चवरैःसमग्रैः ॥ संयोजितामुनिवराःफलमूलभक्षास्तंशङ्करंशरणदंशरणंव्रजामि ॥५८॥ दक्षाध्वरेचनयनेचतथाभगस्यपूष्णस्तथाद
शनपङ्क्तिमपातयच्च ॥ तस्तम्भयःकुलिशयुक्तमथेन्द्रहस्तंतंशङ्करंशरणदंशरणंव्रजामि ॥ ५९ ॥ एनःकृतोऽपिविषयेष्वपिसक्तचित्ताज्ञानान्वयश्रुत
गुणैरपिनैवयुक्ताः ॥ यंसंश्रिताःसुखभुजःपुरुषाभवन्तितंशङ्करंशरणदंशरणंव्रजामि ॥१६०॥अत्रिप्रसूतिरविकोटिसमानतेजाःसन्त्रासनंविबुधदानवस
त्तमानाम् ॥ यःकालकूटमपिबत्प्रसभंसुदीप्तंतंशङ्करंशरणदंशरणंव्रजामि ॥ ६१ ॥ ब्रह्मेन्द्ररुद्रमरुतांचसषण्मुखानांदद्याद्वरंसुबहुशोभगवान्महेशः ॥
नन्दिंचमृत्युवदनात्पुनरुज्जहारतंशङ्करंशरणदंशरणंव्रजामि ॥ ६२ ॥ आराधितःसुतपसाहिमवन्निकुञ्जधूमव्रतेनमनसाऽपिपरैरगम्ये ॥ सञ्जीवनी
मकथयद्भृगवेमहात्मातंशङ्करंशरणदंशरणंव्रजामि ॥ ६३ ॥ नानाविधैर्गजबिडालसमानवक्त्रैर्दक्षाध्वरप्रमथनैर्बलिभिर्गणेन्द्रैः ॥ योऽभ्यर्चितोऽमर
गणैश्चसलोकपालैस्तंशङ्करंशरणदंशरणंव्रजामि ॥ ६४ ॥ क्रीडार्थमेवभगवान्भुवनानिसप्तनानानदीविहगपादपमण्डितानि ॥ सब्रह्मकानि
व्यसृजत्सुकृताहितानितंशङ्करंशरणदंशरणंव्रजामि ॥ ६५ ॥ यस्याखिलंजगदिदंवशवर्तिनित्यंयोऽष्टाभिरेवतनुभिर्भुवनानिभुङ्क्ते ॥ यःकारणंसुम
हतामपिकारणानांतंशङ्करंशरणदंशरणंव्रजामि ॥ ६६ ॥ शङ्खेन्दुकुन्दधवलंवृषभप्रवीरमारुह्ययःक्षितिधरेन्द्रसुतानुयातः ॥ यात्यम्बरंप्रलयमेघ
विभूषितंचतंशङ्करंशरणदंशरणंव्रजामि ॥ ६७ ॥ शान्तिंमुनिंयमनियोगपरायणैस्तैर्भीमैर्महोग्रपुरुषैःप्रतिनीयमानम् ॥ भक्त्यानतंस्तुति
परंप्रसभंररक्षतंशङ्करंशरणदंशरणंव्रजामि ॥ ६८ ॥ यःसव्यपाणिकमलाग्रनखेनदेवस्तत्पञ्चमंप्रसभमेवपुरस्सुराणाम् ॥ ब्राह्मंशिरस्तरुणपद्म
निभञ्चकर्ततंशङ्करंशरणदंशरणंव्रजामि ॥ ६९ ॥ यस्यप्रणम्यचरणौवरदस्यभक्त्यास्तुत्वाचवाग्भिरमलाभिरतन्द्रितात्मा ॥ दीप्तस्तमांसिनुदतेस्व
करैर्विवस्वांस्तंशङ्करंशरणदंशरणंव्रजामि ॥ १७० ॥ येत्वांसुरोत्तमगुरुंपुरुषाविमूढाजानन्तिनास्यजगतःसचराचरस्य ॥ ऐश्वर्यमाननिगमानुशयेन
पश्चात्तेयातनामनुभवन्त्यविशुद्धचित्ताः ॥ ७१ ॥ तस्यैवंस्तुवतोऽवोचच्छूलपाणिर्वृषध्वजः ॥ उवाचवचनंहृष्टोराघवंतुष्टमानसः ॥ ७२ ॥
रुद्रउवाच ॥ रामहृष्टोऽस्मिभद्रंतेजातस्त्वंनिर्मलेकुले ॥ त्वंचापिजगतांवन्द्योदेवोमानुषरूपधृक् ॥७३॥ त्वयानाथेनवैदेवाःसुखिनःशाश्वतीःसमाः॥
सेविष्यन्तेचिरंकालंगतेवर्षेचतुर्दशे ॥ ७४ ॥ अयोध्यामागतंत्वांयेद्रक्ष्यन्तिभुविमानवाः ॥ सुखंतेऽत्रभजिष्यन्तिस्वर्गेवासंतथाक्षयम् ॥ ७५ ॥
देवकार्यंमहत्कृत्वाआगच्छेथाःपुनःपुरीम् ॥ राघवस्तुतथादेवंनत्वाशीघ्रंविनिर्गतः ॥ ७६ ॥ इन्द्रमार्गांनदींप्राप्यजटाजूटंनियम्यच ॥ अब्रवीद्ब

क्ष्मणंरामइदमर्पयमेधनुः ॥ ७७ ॥ रामवाक्यंतुतच्छ्रुत्वासीतांवैलक्ष्मणोऽब्रवीत् ॥ किमर्थंदेविरामेणत्यक्तोऽहंकारणंविना ॥ ७८ ॥ अपराधं
नजानामिकुपितोयन्महाभुजः ॥ रामेणाहंपरित्यक्तःप्राणांस्त्यक्ष्याम्यसंशयम् ॥ ७९ ॥ नैवमेजीवितेनार्थोधिग्धिङ्मांकुलपांसनम् ॥
आर्यस्ययेनवैमन्युर्जनितःपापकारिणा ॥ १८० ॥ कांस्तुलोकान्गमिष्यामिअपध्यातोमहात्मना ॥ उभौहस्तौमुखेकृत्वासाश्रुकण्ठोऽब्रवीदि
दम् ॥ ८१ ॥ नापराध्यामिरामस्यकर्मणामनसागिरा ॥ स्पृष्टौतेचरणौदेविममनान्यागतिर्भवेत् ॥ ८२ ॥ ततःसीताब्रवीद्रामंत्यक्तःकिमनुज
स्त्वया ॥ वैषम्यंत्यज्यतांबालेलक्ष्मणेलक्ष्मिवर्धने ॥ ८३ ॥ राघवस्त्वब्रवीत्सीतांनाहंत्यक्ष्यामिलक्ष्मणम् ॥ नकदाचिदपिस्वप्नेलक्ष्मणस्य
मतंप्रिये ॥ ८४ ॥ श्रुतपूर्वंचसुश्रोणिक्षेत्रस्यास्यविचेष्टितम् ॥ अत्रक्षेत्रेजनास्सत्यंसर्वेहिस्वार्थतत्पराः ॥ ८५ ॥ परस्परंनपश्यन्तिस्वात्मनश्च
हितंवचः ॥ नशृण्वन्तिपितुःपुत्राःपुत्राणांपितरस्तथा ॥ ८६ ॥ नशिष्याहिगुरोर्वाक्यंशिष्यस्यापितथागुरुः ॥ अर्थानुबन्धिनीप्रीतिर्नकश्चित्क
स्यचित्प्रियः ॥ ८७ ॥ इत्यंवंकथयन्नेवप्राप्तोरेवांमहानदीम् ॥ चक्रेऽभिषेकंकाकुत्स्थःसानुजःसहसीतया ॥ ८८ ॥ तर्पयित्वाचसलिलैःस्वान्पितॄ
न्दैवतान्यपि ॥ उदीक्ष्यचमुहुःसूर्यदेवताश्चसमाहितः ॥८९॥ कृताभिषेकस्तुरराजरामःसीताद्वितीयःसहलक्ष्मणेन ॥ कृताभिषेकःसहशैलपुत्र्यागुहे
नसार्धंभगवानिवेशः ॥१९० ॥ इति श्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेमार्कण्डेयाश्रमदर्शनंनामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ भीष्मउवाच ॥ कस्मिन्का
लेभगवताब्रह्मणालोककारिणा ॥ यज्ञियैर्यष्टुमारब्धंतद्भवान्वक्तुमर्हति ॥ १ ॥ किंनामानोऋत्विजस्तेब्रह्मणायेप्रकल्पिताः ॥ काचवैदक्षिणातेषांदत्ता
तेनमहात्मना ॥ २ ॥ यथाभूतंयथावृत्तंतथात्वंमेप्रकीर्तय ॥ सुमहत्कौतुकंजातंयज्ञंपैतामहंप्रति ॥ ३ ॥ पुलस्त्यउवाच ॥ पूर्वमेवमयाख्यातंयदा
स्वायम्भुवोमनुः ॥ सृष्ट्वाप्रजापतीन्सर्वानुक्तःसृष्टिंकुरुष्ववै ॥ ४ ॥ स्वयंतुपुष्करंगत्वायज्ञस्याहृत्यविस्तरम् ॥ ससम्भारान्समानाय्यवह्न्यगारेस्थि
तोऽभवत् ॥ ५ ॥ गायन्तिनित्यंगन्धर्वानृत्यन्त्यप्सरसांगणाः ॥ ब्रह्मोद्गाताहोताध्वर्युश्चत्वारोयज्ञवाहकाः ॥ ६ ॥एकैकस्यत्रयश्चान्येपरिवाराःस्वय
ङ्कृताः ॥ ब्रह्माचब्राह्मणाच्छंसीपोताचाग्नीध्रएवच ॥ ७ ॥ आन्वीक्षिकीसर्वविद्याब्राह्मीह्येषाचतुष्टयी ॥ उद्गाताचप्रत्युद्गाताप्रतिहर्तासुब्रह्मण्यः
॥ ८ ॥ चतुष्टयीद्वितीयैषातूद्गातुश्चप्रकीर्तिता ॥ होताचमैत्रावरुणस्तथाऽच्छावाकएवच ॥ ९ ॥ ग्रावस्तुच्चचतुर्थोऽत्रतृतीयाचचतुष्टयी ॥
अध्वर्युश्चप्रतिष्ठातानेष्टोन्नेतातथैवच ॥ १० ॥ चतुष्टयीचतुर्थ्येषाप्रोक्ताशन्तनुनन्दन ॥ एतेवैषोडशप्रोक्ताऋत्विजोवेदचिन्तकैः ॥ ११ ॥
शतानित्रीणिषष्टिश्चयज्ञाःसृष्टाःस्वयम्भुवा ॥ एतांश्चैतेषुसर्वेषुप्रवदन्तिसदाद्विजान् ॥ १२ ॥ सदस्यंकेचिदिच्छन्तित्रिसामाध्वर्युमेवच ॥

ब्रह्माणंनारदंचक्रेब्राह्मणाच्छंसिगौतमम् ॥ १३ ॥ देवगर्भंचपोतारमाग्नीध्रंचैवदेवलम् ॥ उद्गाताङ्गिरसःप्रत्युद्गाताचपुलहस्तथा ॥ १४ ॥ नारायणःप्रतिहर्तासुब्रह्मण्योऽत्रिरुच्यते ॥ तस्मिन्यज्ञेभृगुर्होतावसिष्ठोमैत्रएवच ॥ १५ ॥ अच्छावाकःक्रतुःप्रोक्तोग्रावस्तुच्च्यवनस्तथा ॥ पुलस्त्योऽध्वर्युरेवासीत्प्रतिष्ठाताचवैशिबिः ॥ १६ ॥ बृहस्पतिस्तत्रनेष्टाउन्नेताशांशपायनः ॥ धर्मःसदस्यस्तत्रासीत्पुत्रपौत्रसहायवान् ॥ १७ ॥ भरद्वाजःशमीकश्चपुरुकुत्सोयुगन्धरः ॥ एनकस्तीर्णकश्चैववकेशःकुतपएवच ॥ १८ ॥ गर्गोवेदशिराश्चैवत्रिसामाध्वर्यवःकृताः ॥ कण्वादयस्तथा चान्येमार्कण्डोगण्डिरेवच ॥ १९ ॥ पुत्रपौत्रसमेताश्चसशिष्याःसहबान्धवाः ॥ कर्माणितत्रकुर्वाणादिवानिशमतन्द्रिताः ॥२०॥ मन्वन्तरेव्यतीतेतु यज्ञस्यावभृथोऽभवत् ॥ दक्षिणाब्रह्मणेदत्ताप्राचीहोतुस्तुदक्षिणा ॥ २१ ॥ अध्वर्यवेप्रतीचीतुउद्गातुश्चोत्तरातथा ॥ त्रैलोक्यंसकलंब्रह्माददौतेषां तुदक्षिणाम् ॥ २२ ॥ धेनूनांचशतंप्राज्ञैर्दातव्यंयज्ञसिद्धये ॥ अष्टौतुयज्ञवाहेभ्यश्चत्वारिंशाधिकास्तथा ॥ २३ ॥ द्वितीयस्थानिनांचैवचतु र्विंशत्प्रकीर्तिताः ॥ षोडशैवतृतीयानांदेयावैधेनवःशुभाः ॥ २४ ॥ द्वादशैवतथाचान्याआग्नीध्रादिषुदापयेत् ॥ अनयासङ्ख्ययाचैवग्रामान्दा सीरजाविकम् ॥ २५ ॥ सहस्रभोज्यंदातव्यंस्नात्वाचावभृथेक्रतौ ॥ यजमानेनसर्वस्वंदेयंस्वायम्भुवोऽब्रवीत् ॥ २६ ॥ अध्वर्यूणांसदस्यानां स्वेच्छयादानमिष्यते ॥ विष्णुंचाहूयवैब्रह्मावाक्यमाहमुदान्वितः ॥ २७ ॥ ब्रह्मोवाच ॥ अभिप्रसाद्यसावित्रींत्वमिहस्मयसुव्रत ॥ त्वयिदृष्टेन साकोपंकरिष्यतिशुभानना ॥ २८ ॥ स्निग्धैःसानुनयैर्वाक्यैर्हेतुयुक्तैर्विशेषतः ॥ त्वंसदामधुराभाषीजिह्वातेस्रवतेऽमृतम् ॥ २९ ॥ यःकरोतिनतेवाक्यं त्रैलोक्येनसदृश्यते ॥ गन्धर्वैःसहितोगत्वाप्रियांममसमानय ॥३०॥ त्वयाप्रसादितासाध्वीतुष्टासात्वेष्यतिध्रुवम् ॥ विलम्बोनत्वयाकार्योव्रजमाधव माचिरम् ॥ ३१ ॥ लक्ष्मीस्तेपुरतोयातुसावित्र्याःसदनंशुभा ॥ तस्यास्त्वंपदवींगच्छसान्त्वयस्वप्रियांमम ॥ ३२ ॥ नचतेविप्रियंदेविविविक्तंकर्तुमी हते ॥ मुखंप्रेक्ष्यसदाकालंवर्ततेतवसुन्दरि ॥ ३३ ॥ एवंविधानिवाक्यानिमधुराणिबहूनिच ॥ देवीश्रावयितव्यासायथातुष्टाऽचिराद्भवेत् ॥ ३४ ॥ पुलस्त्यउवाच ॥ एवमुक्तस्तदाविष्णुर्ब्रह्मणालोककारिणा ॥ जगामत्वरितोभूत्वासावित्रीयत्रतिष्ठति ॥ ३५ ॥ दृष्ट्वादेवागच्छमानंपत्न्यासहचके शवम् ॥ उत्तस्थौसत्वराभूत्वाविष्णुनाचाभिवन्दिता ॥ ३६ ॥ विष्णुरुवाच ॥ नमस्तेदेवदेवेशिब्रह्मपत्निनमोऽस्तुते ॥ त्वांनमस्कृत्यसर्वोहिजनः पापात्प्रमुच्यते ॥ ३७ ॥ पतिव्रतामहाभागाब्रह्मणस्त्वंहृदिस्थिता ॥ अहर्निशंचिन्तयंस्त्वांप्रसादंतेऽभिकाङ्क्षति ॥३८॥ तस्यैवंदुःखतप्तस्यप्रसादंक र्तुमर्हसि ॥ सखींचैनांप्रियांपृच्छलक्ष्मींभृगुसुतांसतीम् ॥३९॥ यदिचश्रद्दधानाऽसिवाक्यादस्मात्सुलोचने ॥ पुलस्त्यउवाच ॥ एवमुक्त्वाततःशौरिः

सावित्र्याश्चरणद्वयम्॥४०॥ उभाभ्यांचैवहस्ताभ्यांक्षमदेविनमोऽस्तुते ॥जगद्वन्द्येजगन्मातरितिस्पृष्ट्वाभ्यवन्दत॥४१॥ सङ्कोच्यपादौसादेवीस्वकरेण
करौहरेः ॥ गृहीत्वोवाचतंविष्णुंसर्वंक्षान्तंमयाऽच्युत ॥ ४२ ॥ सावित्र्युवाच ॥ इयंलक्ष्मीःसदावत्सहृदयेतेनिवत्स्यति ॥ विनात्वयानचान्यत्रर
तियास्यतिकर्हिचित् ॥४३॥ भृगोःपत्न्यांसमुत्पन्नापत्न्येषातवसुव्रता ॥ देवदानवयत्नेनसम्भूताचोदधौपुनः ॥ ४४ ॥ भगवान्यत्रतत्रैषाअवतारंच
कुर्वती ॥ देवत्वेदेवदेहावैमानुषत्वेचमानुषी ॥ ४५ ॥ त्वत्सहायानसन्देहोदाम्पत्यव्रतिनीचिरम् ॥ यन्मयाचात्रकर्त्तव्यंप्रभोतन्मांवदस्ववै ॥ ४६ ॥
विष्णुरुवाच ॥ यज्ञावसानंसञ्जातंप्रेषितोऽहंतवान्तिकम् ॥ सावित्रीमानयक्षिप्रंमयास्नानंसमाचरेत् ॥ ४७ ॥ आगच्छत्वरितादेवियाहितत्रमुदा
न्विता ॥ पश्यस्वस्यपतिंगत्वादेवैःसर्वैस्समन्वितम् ॥ ४८ ॥ लक्ष्मीरुवाच॥ आर्येउत्तिष्ठशीघ्रंत्वंयाहियत्रपितामहः ॥विनात्वयानयास्यामिस्पृष्टौ
पादौमयातव ॥ ४९ ॥ पुलस्त्यउवाच ॥ उत्थाप्यसाग्रहीद्धस्तंदक्षिणादक्षिणेकरे ॥ चिरायमाणांसावित्रींज्ञात्वादेवःपितामहः ॥ ५० ॥ समीप
स्थंमहादेवमिदमाहतदावचः ॥ ब्रह्मोवाच॥गच्छत्वमनयासार्द्धंपार्वत्यासुरभूषण ॥ ५१ ॥ गौरीत्वदग्रतोयातुपश्चात्त्वंगच्छशङ्कर ॥ प्रतिबोध्यानय
यथाशीघ्रमायातितत्कुरु॥५२॥पुलस्त्यउवाच॥एवमुक्तोगतोरुद्रःपार्वत्याब्रह्मणःप्रियाम्॥तथादृष्ट्वौदम्पतीतौपार्वतीपरमेश्वरौ ॥५३॥ देवीसासम्मुखी
ताभ्यामुत्थितापरमेश्वरी ॥ दूरादेवतुरुद्रेणब्रह्माणीचाभिवादिता ॥ ५४ ॥ शिवउवाच ॥ ब्रह्माप्रतीक्षतेदेविमाविलम्बस्वशोभने ॥ बृहत्कृत्यंत्वयात्र
करणीयंपतिव्रते ॥५५॥ पृच्छस्वेमांवरारोहांगौरींपर्वतनन्दिनीम् ॥ लक्ष्मींचैतांविशालाक्षीमिन्द्राणींवाशुभानने ॥ ५६ ॥ यासांवाश्रद्धयासित्वं
पृच्छदेविनमोऽस्तुते ॥ आशीर्वादस्तयादत्तोदेवदेवस्यशूलिनः ॥ ५७ ॥ सावित्र्युवाच॥शरीरार्धेचतेगौरीसदास्थास्यतिशङ्कर ॥ अनयाशोभसेदेव
त्वंतुत्रैलोक्यसुन्दर ॥ ५८ ॥ सुखभागिजगत्सर्वंत्वयानाथेनशत्रुहन् ॥ पुलस्त्यउवाच॥एवंब्रुवन्तीसावित्रीगृहीताब्रह्मणःप्रिया ॥ ५९ ॥गौर्य्याचवा
महस्तेतुलक्ष्म्यावैदक्षिणेकरे ॥अभिवन्द्यतुतांदेवींशङ्करोवाक्यमब्रवीत्॥ ६०॥ शिवउवाच॥ एह्यागच्छमहाभागेयत्रतिष्ठतितेपतिः ॥ तत्रगच्छवरारोहे
स्त्रीणांभर्तापरागतिः॥६१॥एषागौरीसमायाताभ्रातृभार्यातवानघा ॥बृहदाग्रहेणदेविप्रणयाद्गन्तुमर्हसि॥६२॥लक्ष्मीसैषापार्वतीचस्थितादेवितवाग्रतः॥
एतयोर्वचसादेविआवयोश्चशुभानने ॥ ६३ ॥ मानभङ्गोनतेकर्तुंयुज्यतेब्रह्मणःप्रिये ॥ अस्मदभ्यर्थितादेवितत्रयाहिमुदान्विता ॥६४॥ गौर्युवाच ॥
अहंचतेप्रियादेविसर्वदावदसिस्वयम्॥लक्ष्मीश्चतेकरेलग्नादक्षिणेचमयाधृता ॥६५ ॥एह्यागच्छमहाभागेयत्रतिष्ठतितेपतिः ॥ पुलस्त्यउवाच ॥ नीता
सातुतदाताभ्यांदेवीसामध्यतःकृता ॥६६ ॥ पुरस्सरौविष्णुरुद्रौशक्राद्याश्चतथासुराः ॥गन्धर्वाप्सरसश्चैवत्रैलोक्यंसचराचरम् ॥ ६७ ॥ तत्रायाताच

सादेवीसावित्रीब्रह्मणःप्रिया ॥ सावित्रींनुमुखींदृष्ट्वासर्वलोकपितामहः ॥ ६८ ॥ गायत्र्यासहितोब्रह्माइदंवचनमब्रवीत् ॥ एषादेवीकर्मकरीअहंतेवश
गःस्थितः॥६९॥ समादिशवरारोहेयत्तेकार्यंमयात्विह ॥एवमुक्ताचसादेवीस्वयंदेवेनब्रह्मणा ॥७०॥ त्रपयाऽधोमुखीदेवीनचकिञ्चिदवोचत॥ पादयोः
पतितादेवीगायत्रीब्रह्मचोदिता ॥ ७१ ॥ कृतवत्यपराधंतेक्षमदेविनमोऽस्तुते ॥ पुलस्त्यउवाच॥आलिङ्ग्यचसादरंकण्ठेसापरिष्वज्यपीडिताम् ॥७२॥
गायत्रींसान्त्वयामासमान्यश्चैषपतिर्मम॥कर्त्तव्यंवचनंतस्यस्त्रीणांप्राणेश्वरःपतिः॥७३॥उक्तंभगवतापूर्वंसृष्टिकालेविरिञ्चिना॥नचस्त्रीणांपृथग्यज्ञोनव्रतं
नाप्युपोषणम् ॥ ७४ ॥ भर्तायद्वदतेवाक्यंतत्तुकुर्यादकुत्सया ॥ भर्तृनिन्दांयाकुरुतेस्वसृनिन्दांतथैवच ॥ ७५ ॥ परिवादंप्रलापंवानरकंसातु
गच्छति ॥ पत्यौजीवतियानारीउपवासव्रतंचरेत ॥ ७६ ॥ आयुष्यंहरतेभर्तुर्मृतानरकमृच्छति ॥ एवंज्ञात्वात्वयाभर्तुर्नकार्यंविप्रियंसति
॥ ७७ ॥ नचास्यदक्षिणंत्वङ्गंत्वयासेव्यंकथञ्चन ॥ सर्वकार्येत्वहंचास्यदक्षिणंपक्षमाश्रिता ॥ ७८ ॥ सव्यंत्वमाश्रयेस्साध्विपार्श्वेनारदपुष्करौ ॥
ब्रह्मस्थानानिचान्यानिस्थितान्यायतनानिच ॥ ७९ ॥ लभेवैशोभमानेहयावत्सृष्टिःप्रजायते ॥ भवत्याचमयाचैवस्थातव्यंचनसंशयः ॥ ८० ॥
पुष्करेब्रह्मणःपार्श्वेवामंचत्वंसमाश्रय ॥ अनेनचोपदेशेनसुखंतिष्ठमयान्विता ॥ ८१ ॥ गायत्र्युवाच ॥ एवमेतत्करिष्यामितवनिर्देशकारिका ॥
तवैवाज्ञामयाकार्यात्वंमेप्राणसमासखी॥८२॥ अहंतेत्वनुजादेविसदामांपातुमर्हसि ॥पुलस्त्यउवाच॥देवदेवस्तदाब्रह्मापुष्करेविष्णुनासह॥८३॥स्नाना
वसानेदेवानांसर्वेषांप्रददौवरान् ॥ देवानांचपतिंशक्रंज्योतिषांचदिवाकरम् ॥ ८४ ॥ नक्षत्राणांतथासोमंरसानांवरुणंतथा ॥ प्रजापतीनांदक्षंचनदीनां
चैवसागरम् ॥८५॥ कुबेरंचधनाध्यक्षंतथाचक्रेचरक्षसाम् ॥ भूतानांचैवसर्वेषांगणानांचपिनाकिनम् ॥ ८६ ॥ मानवानांमनुंचैवपक्षिणांगरुडंतथा ॥
ऋषीणांचवसिष्ठंचग्रहाणांचप्रभाकरम् ॥८७॥एवमादीनिवैदत्त्वादेवदेवःपितामहः॥ विष्णंचशङ्करंचैवब्रह्माप्रोवाचसादरम्॥८८॥ब्रह्मोवाच॥पृथिव्याः
सर्वतीर्थेषुभवन्तौपूज्यसत्तमौ ॥भवद्भ्यांनविनातीर्थपुण्यतामेतिकर्हिचित् ॥८९॥लिङ्गंवाप्रतिमावापिदृश्यतेयत्रकुत्रचित् ॥तत्तीर्थंपुण्यतांयातिसर्वमे
वफलप्रदम् ॥ ९०॥ मानवाह्युपहारैश्चयेकरिष्यन्तिपूजनम्॥ युष्माकंमांपुरस्कृत्यतेषांरोगभयंकुतः ॥९१॥ येषुराष्ट्रेषुयुष्माकमुत्सवाःपूजनादिकाः॥
प्रवर्त्स्यन्तिक्रियाःसर्वायत्फलंतेषुतच्छृणु ॥९२॥ नाधयोव्याधयश्चैवनोपसर्गानक्षुद्भयम् ॥ विप्रयोगोनचापीष्टैर्निष्टैर्नापिसङ्गतिः ॥९३॥नाक्षिरोगः
शिरोर्तिर्वापित्तशूलभगन्दराः॥नाभिचारंभयंतत्रापस्मारोनविषूचिका ॥९४ ॥ वृद्धिर्निकामतस्तस्मिन्सम्यग्बुद्धिरनुत्तमा॥ आरोग्यंसर्वतश्चैवदीर्घायु
श्चप्रजाधनम् ॥ ९५ ॥ नाकालेभवितामृत्युर्गावोनाल्पपयोमुचः ॥ नाकालफलितावृक्षानोत्पातभयमण्वपि ॥ ९६ ॥ एतच्छ्रुत्वाततोविष्णुर्ब्र

ह्माणंस्तोतुमुद्यतः ॥ ९७ ॥ विष्णुरुवाच॥नमोऽस्त्वनन्तायविशुद्धचेतसेस्वरूपरूपायसहस्रबाहवे॥ सहस्ररश्मिप्रभवायवेधसेविशालदेहायविशुद्धकर्म
णे ॥ ९८ ॥ समस्तविश्वार्तिहरायशम्भवेसमस्तसूर्यानलतिग्मतेजसे ॥ नमोऽस्तुविद्याविततायचक्रिणेसमस्तधीस्थानकृतेसदानमः ॥ ९९ ॥
अनादिदेवाच्युतशेखरप्रभोभाव्युद्भवद्भूतपतेमहेश्वर ॥ महत्पतेसर्वपतेजगत्पतेभुवःपतेभुवनपतेसदानमः ॥ १०० ॥ यज्ञेशनारायणजिष्णुशङ्करक्षिती
शविश्वेश्वरविश्वलोचन ॥ शशाङ्कसूर्याच्युतवीरविश्वप्रवृत्तमूर्तेऽमृतमूर्तअव्यय ॥ १ ॥ ज्वलद्धुताशार्चिनिरुद्धमण्डलप्रदेशनारायणविश्वतोमुख ॥ स
मस्तदेवार्तिहरामृताव्ययप्रपाहिमांशरणगतंतथाविभो ॥ २ ॥ वक्राण्यनेकानिविभोतवाहंपश्यामियज्ञस्यगतिंपुराणम् ॥ ब्रह्माणमीशंजगतांप्रसू
तिंनमोऽस्तुतुभ्यंप्रपितामहाय ॥ ३ ॥ संसारचक्रक्रमणैरनेकैःक्वचिद्भवान्देववराधिदेवः ॥ तत्सर्वविज्ञानविशुद्धसत्त्वैरुपास्यसेकिंप्रणमाम्यहंत्वा
म् ॥ ४ ॥ एवंभवन्तंप्रकृतेःपुरस्ताद्योवेत्त्यसौसर्वविदांवरिष्ठः ॥ गुणान्वितेषुप्रसभंविवेद्योविशालमूर्तिस्त्विहसूक्ष्मरूपः ॥ ५ ॥ वाक्पा
णिपादैर्विगतेन्द्रियोऽपिकथंभवान्वैसुगतिस्सुकर्मा ॥ संसारबन्धेनिहितेन्द्रियोऽपिपुनःकथंदेववरोऽसिवेद्यः ॥६॥ मूर्त्तादमूर्त्तंनतुलभ्यतेपरंपरंवपुर्देव
विशुद्धभावैः ॥ संसारविच्छित्तिकरैर्यजद्भिरतोऽवसीयेतचतुर्मुखत्वम् ॥ ७ ॥ परंनजानन्तियतोवपुस्तेदेवादयोऽप्यद्भुतरूपधारिन्॥ विभोऽवतारेऽग्र
तरंपुराणमाराधयेद्यत्कमलासनस्थाम् ॥ ८ ॥ नतेतत्त्वंविश्वसृजोऽपियोनिमेकान्ततोवेत्तिविशुद्धभावः ॥ परंत्वहंवेद्मिकथंपुराणंभवन्तमाद्यंतपसा
विशुद्धम् ॥ ९ ॥ पद्मासनोवैजनकःप्रसिद्धएवंप्रसिद्धिर्ह्यसकृत्पुराणात् ॥ सञ्चिन्त्यतेनाथविभुंभवन्तंजानातिनैवंतपसाविहीनः ॥ ११० ॥
अस्मादृशैश्चप्रवरैर्विबोध्यंत्वांदेवमूर्खाःस्वमतिंविभज्य ॥ प्रबोद्धुमिच्छन्तिनतेषुबुद्धिरुदारकीर्तिष्वपिवेदहीनाः ॥११॥ जन्मान्तरैर्वेदविवेकबुद्धिभि
र्भवेद्यथावायदिवाप्रकाशः ॥ तल्लाभलुब्धस्यनमानुषत्वंनदेवगन्धर्वपतिःशिवःस्यात् ॥ १२ ॥ नविष्णुरूपोभगवान्सुसूक्ष्मःस्थूलोऽसिदेवःकृतकृ
त्यतायाः ॥ स्थूलोऽपिसूक्ष्मःसुलभोऽसिदेवत्वद्बाह्यकृत्यानरकेपतन्ति ॥ १३॥ विमुच्यतेवाभवतिस्थितेऽस्मिन्दस्रेन्दुवह्न्यर्कमरुन्महीभिः ॥ तत्त्वैः
स्वरूपैःसमरूपधारिभिरात्मस्वरूपेविततस्वभावः ॥ १४ ॥ इतिस्तुतिंमेभगवन्ह्यनन्तजुषस्वभक्तस्यविशेषतश्च ॥ समाधियुक्तस्यविशुद्धचेतस
स्त्वद्भावभावैकमनोऽनुगस्य ॥ १५ ॥ सदाहृदिस्थोभगवन्नमस्तेनमामिनित्यंभगवन्पुराण ॥ इतिप्रकाशंनवमेनदी॰स्तवमयासर्वगतिप्रबुद्ध ॥१६॥
संसारचक्रेभ्रमणादियुक्तार्भ.तिंपुनर्नःप्रतिपालयस्व ॥ १७॥ ब्रह्मोवाच ॥ सर्वज्ञस्त्वंनसन्देहोप्रज्ञाराशिश्चकेशव ॥ देवानांप्रथमःपूज्यःसर्वदात्वंभ
विष्यसि ॥ १८ ॥ नारायणादनन्तरंरुद्रोभक्त्याविरिञ्चनम् ॥ तुष्टावप्रणतोभूत्वाब्रह्माणंकमलोद्भवम् ॥ १९ ॥ नमःकमलपत्राक्षनमस्तेपद्मज

न्मने ॥ नमःसुरासुरगुरोकारिणेपरमात्मने ॥ १२० ॥ नमस्तेसर्वदेवेशनमोवमोहनाशन ॥ विष्णोर्नाभिस्थितवतेकमलासनजन्मने ॥ २१ ॥ नमोविद्रुमरक्ताङ्गपाणिपल्लवशोभिने ॥ शरणंत्वांप्रपन्नोऽस्मित्राहिमांभवसंसृतेः ॥ २२ ॥ पूर्वंनीलाम्बुदाकारंकुड्मलंतेपितामह ॥ दृष्ट्वारक्तमुखंभूयःपत्रकेसरसंयुतम् ॥२३॥ पद्मंचानेकपत्रान्तमसङ्ख्यातंनिरञ्जनम् ॥ तत्रस्थितेनत्वयैषासृष्टिश्चैवप्रवर्तिता ॥२४ ॥ त्वांमुक्त्वानान्यतस्त्राणंजगद्वन्द्यनमोऽस्तुते ॥ सावित्रीशापदग्धोऽहंलिङ्गंमेपतितंक्षितौ ॥ २५॥ इदानींकुरुमेशान्तिंत्राहिमांसहभार्यया ॥ ब्रह्मावैपातुमेपादौजङ्घेवैकमलासनः ॥ २६ ॥ विरिञ्चोमेकटिंपातुसृष्टिकृद्गुह्यमेवच ॥ नाभिपद्मनिभःपातुजठरंचतुराननः ॥ २७ ॥ उरस्तुविश्वसृक्पातुहृदयंपातुपद्मजः ॥ सावित्रीपतिर्मेकण्ठंहृषीकेशोमुखंमम ॥ ॥ २८ ॥ पद्मवर्णश्चनयनेपरमात्माशिरोमम ॥ एवंन्यस्यगुरोर्नामशङ्करोनामशङ्करः ॥ २९ ॥ नमस्तेभगवन्ब्रह्मन्नित्युक्त्वाविरराम ह ॥ ततस्तुष्टोहरंब्रह्मावाक्यमेतदुवाचह ॥ १३० ॥ ब्रह्मोवाच ॥कंतेकामंकरोम्यद्यपृच्छमांयद्यदिच्छसि ॥ रुद्रउवाच ॥ यदिप्रसन्नोमेनाथवरदोयदिवामम ॥ ३१ ॥ तदेकंमेवदविभोयस्मिन्स्थानेभवान्स्थितः ॥ केषुकेषुचस्थानेषुत्वांपश्यन्तिसदाद्विजाः ॥ ३२ ॥ नाम्नाचकेनतेस्थानंशोभतेधरणीतले ॥ तन्मेवदस्वसर्वेशतवभक्तिरतस्यच ॥ ३३ ॥ ब्रह्मोवाच ॥ पुष्करेऽहंसुरश्रेष्ठोगयायांचचतुर्मुखः ॥ कान्यकुब्जेदेवगर्भोभृगुकक्षेपितामहः ॥ ३४ ॥ कावेर्य्यांसृष्टिकर्ताचनन्दिपुर्य्यांबृहस्पतिः ॥ प्रभासेपद्मजन्माचवानर्यांचसुरप्रियः ॥ ३५ ॥ द्वारवत्यांतुऋग्वेदीवैदिशेभुवनाधिपः ॥ पौण्ड्रकेपुण्डरीकाक्षःपिङ्गाक्षोहस्तिनापुरे ॥ ३६ ॥ जयन्त्यांविजयश्चास्मिजयन्तःपुष्करावते ॥ उग्रेषुपद्महस्तोऽहंतमोनद्यांतमोनुदः ॥ ३७ ॥ अहिच्छत्रेजयानन्दीकाञ्चीपुर्यांजनप्रियः ॥ ब्रह्माहंपाटलीपुत्रऋषिकुण्डेमुनिस्तथा ॥ ३८ ॥ महितारेमुकुन्दश्चश्रीकण्ठःश्रीनिवासिते ॥ कामरूपेशुभाकारोवाराणस्यांशिवप्रियः ॥ ३९ ॥ मल्लिकाक्षेतथाविष्णुर्महेन्द्रेभार्गवस्तथा ॥ गोनर्देस्थविराकारउज्जयिन्यांपितामहः ॥ १४० ॥ कौशाम्ब्यांतुमहाबोधिरयोध्यायांचराघवः ॥ मुनीन्द्रश्चित्रकूटेतुवाराहोविन्ध्यपर्वते ॥ ४१ ॥ गङ्गाद्वारेपरमेष्ठीहिमवत्यपिशङ्करः ॥ देविकायांस्रुचाहस्तःस्रुवहस्तश्चतुर्वटे ॥ ४२ ॥ वृन्दावनेपद्मपाणिःकुशहस्तश्चनैमिषे ॥ गोप्लक्षेचैवगोपीन्द्रःसचन्द्रोयमुनातटे ॥ ४३ ॥ भागीरथ्यांपद्मतनुर्जलानन्दोजलन्धरे ॥ कौङ्कणेचैवमद्राक्षःकाम्पिल्येकनकप्रियः ॥ ४४ ॥ वेङ्कटेचान्नदाताचशम्भुश्चैवक्रतुस्थले ॥ लङ्कायांचपुलस्त्योऽहंकाश्मीरेहंसवाहनः ॥ ४५ ॥ वसिष्ठश्चार्बुदेचैवनारदश्चोत्पलावते ॥ मेलकेश्रुतिदाताहंप्रातेयादसांपतिः ॥ ४६ ॥ सामवेदस्तथायज्ञेमधुरेमधुरप्रियः ॥ अङ्कोटेयज्ञभोक्ताचब्रह्मवादेसुरप्रियः ॥ ४७ ॥ नारायणश्चगोमन्तेमा

यापुर्यांद्विजप्रियः ॥ ऋषिर्वेदेदुराधर्षोदेवायांसुरमर्दनः ॥ ४८ ॥ विजयायांमहारूपःस्वरूपोराष्ट्रवर्द्धने ॥ पृथूदरस्तुमालव्यांशाकम्भर्यांरस
प्रियः ॥ ४९ ॥ पिण्डारकेतुगोपालःशङ्खोद्धारेऽङ्गवर्द्धनः ॥ कादम्बकेप्रजाध्यक्षोदेवाध्यक्षःसमस्थले ॥ १५० ॥ गङ्गाधरोभद्रपीठेजलशाय्यहमर्बु
दे ॥ त्र्यम्बकेत्रिपुराधीशःश्रीपर्वतेत्रिलोचनः ॥ ५१ ॥ महादेवःपद्मपुरेकापालेवैधसस्तथा ॥ शृङ्गवेरपुरेशौरिर्नैमिषेचक्रपाणिकः ॥ ५२ ॥ दण्ड
पुर्यांविरूपाक्षोगौतमोधूतपापके ॥ हंसनाथोमाल्यवतिद्विजेन्द्रोवलिकेतथा ॥ ५३ ॥ इन्द्रपुर्यांदेवनाथोधूतपायांपुरन्दरः ॥ हंसवाहस्तुलम्बायांच
ण्डायांगरुडप्रियः ॥ ५४ ॥ महोदयेमहायज्ञःसुयज्ञोयज्ञकेतने ॥ सिद्धिस्मरेपद्मवर्णेविभायांपद्मबोधनः ॥ ५५ ॥ देवदारुवनेलिङ्गंमहापत्तौवि
नायकः ॥ त्र्यम्बकोमातृकास्थानेअलकायांकुलाधिपः ॥ ५६ ॥ त्रिकूटेचैवगोनर्दःपातालेवासुकिस्तथा ॥ पद्माध्यक्षश्चकेदारेकूष्माण्डेसुरतप्रि
यः ॥ ५७ ॥ कुण्डवाप्यांशुभाङ्गस्तुसारण्यांतक्षकस्तथा ॥ अक्षोटेपापहाचैवअम्बिकायांस्वदर्शनः ॥ ५८ ॥ वरदायांमहावीरःकान्तारेदुर्गना
शनः ॥ अनन्तश्चैवपर्णाटेप्रकाशायांदिवाकरः ॥ ५९ ॥ विराजायांपद्मनाभःस्वरुद्रश्चवृकस्थले॥ मार्कण्डोवटकेचैववाहिन्यांमृगकेतनः॥१६०॥
पद्मावत्यांपद्मगृहोगगनेपद्मकेतनः ॥ अष्टोत्तरंस्थानशतंमयातेपरिकीर्तितम् ॥ ६१ ॥ यत्रवैममसान्निध्यंत्रिसन्ध्यंत्रिपुरान्तक ॥ एतेषामपियस्त्वे
कंपश्यतेभक्तिमान्नरः ॥ ६२ ॥ स्थानंसुविरजंलब्ध्वामोदतेशाश्वतीःसमाः ॥ मानसंवाचिकंचैवकायिकंयच्चदुष्कृतम् ॥ ६३ ॥ तत्सर्वंनाशमा
यातिनात्रकार्याविचारणा ॥ यस्त्वेतानिचसर्वाणिगत्वामांपश्यतेनरः ॥ ६४ ॥ भवतेमोक्षभागीचयत्राहंतत्रवैस्थितः ॥ पुष्पोपहारैर्धूपैश्चब्राह्मणा
नांचतर्पणैः ॥ ६५ ॥ ध्यानेनचस्थिरेणाशुप्राप्यतेपरमेश्वरः ॥ तस्यपुण्यफलंचाग्र्यमन्तेमोक्षफलंतथा ॥ ६६ ॥ सब्रह्मलोकमासाद्यतत्कालंतत्र
तिष्ठति ॥ पुनःसृष्टौभवेद्देवोवैराजानांमहातपाः ॥ ६७ ॥ ब्रह्महत्यादिपापानिइहलोकेकृतान्यपि ॥ अकामतःकामतोवातानिनश्यन्तितत्क्ष
णात् ॥ ६८ ॥ इहलोकेदरिद्रोयोभ्रष्टराज्योऽथवापुनः ॥ स्थानेष्वेतेषुवैगत्वामांपश्यतिसमाधिना ॥ ६९ ॥ कृत्वापूजोपहारंचस्नानंचपितृत
र्पणम् ॥ कृत्वापिण्डप्रदानंचसोऽचिराद्दुःखवर्जितः ॥ १७० ॥ एकच्छत्रोभवेद्राजासत्यमेतन्नसंशयः ॥ इहराज्यानिसौभाग्यंधनंधान्यंवरस्त्रियः
॥ ७१ ॥ भवन्तिविविधास्तस्ययैर्यात्रापुष्करेकृता ॥ इदंयात्राविधानंयःकुरुतेकारयेतवा ॥ ७२ ॥ शृणोतिवासपापैस्तुसर्वैरेवप्रमुच्यते ॥ अग
म्यागमनंयेनकृतंजानातिमानवः ॥ ७३ ॥ ब्रह्मक्रियायालोपेनबहुवर्षकृतेनच ॥ यात्रांचेमांसकृत्कृत्वावेदसंस्कारमाप्नुयात् ॥ ७४ ॥ किम
त्रबहुनोक्तेनइदमस्तीहशङ्कर ॥ अप्राप्यंप्राप्यतेतेनपापंचापिविनश्यति ॥ ७५ ॥ सर्वयज्ञफलैस्तुल्यंसर्वतीर्थफलप्रदम्॥सर्वेषांचैववेदानांसमाप्तिस्ते

नवैकृता ॥ ७६ ॥ यःकृत्वापुष्करेसन्ध्यांसावित्रींसमुपासिता ॥ स्वपत्नीहस्तदत्तेनपौष्करेणजलेनतु ॥ ७७ ॥ भृङ्गारेणवरेणैव
मृन्मयेनापिशङ्कर ॥ आनीयतज्जलंपुण्यंसन्ध्योपास्तिर्दिनक्षये ॥७८॥ समाधिनासमाधेयासप्राणायामपूर्विका ॥ तस्यांकृतायांयत्पुण्यंतच्छृणुष्वह
राद्यमे ॥ ७९ ॥ तेनद्वादशवर्षाणिभवेत्सन्ध्यासुवन्दिता ॥ अश्वमेधफलंस्नानेदानेदशगुणंतथा ॥ १८० ॥ उपवासेऽप्यनन्तंचस्वयंप्रोक्तंमयाऽनघ ॥
सावित्र्याःपुरतोयस्तुदम्पत्योर्भोजनंददेत् ॥ ८१ ॥ तेनाहंभोजितस्तत्रभवामीहनसंशयः ॥ द्वितीयंभोजयेद्यस्तुभोजितस्तेनकेशवः ॥ ८२ ॥
लक्ष्मीसहायोवरदोवरांस्तस्यप्रयच्छति ॥ उमासहायस्तार्तीयेभोजितोऽसिनसंशयः ॥ ८३ ॥ अथवाथकुमारीणांभक्त्यादद्याच्चभोजनम् ॥ तस्याः
कुलेभवेद्वन्ध्यानकदाचिच्चदुर्भगा ॥ ८४ ॥ नकन्याजननीक्वापिनभर्तुर्यानवल्लभा ॥ पुलस्त्यउवाच ॥ तस्मात्सर्वप्रयत्नेनसावित्र्यग्रेतुभोजनम्
॥ ८५ ॥ पारत्रमैहिकंवापिकामयद्भिर्नरैःसदा ॥ दातव्यंसर्वदाभीष्मकटुतैलविवर्जितम् ॥ ८६ ॥ नचाम्लंनचवैक्षारंस्त्रीणांभोज्यंकदाचन॥
भक्ष्यंपञ्चप्रकारंचरसैःसर्वैस्सुसंस्कृतम् ॥ ८७ ॥ घृतपूर्यःसुपक्वाश्चबहुक्षीरसमन्विताः ॥ शिखरिणीतथापेयादधिक्षीरसमन्विता ॥ ८८ ॥
आह्लादकारिणीपुंसांस्त्रीणांचातीववल्लभा ॥ धनधान्याञ्जनोपेतनारीणांचशताकुलम् ॥ ८९ ॥ पूपकंशष्कुलंतस्यांजायतेनात्रसंशयः ॥ नज्वरेन
चसन्तापोनदुःखंनवियोगिता ॥ १९० ॥ असौतारयतेस्वानांकुलानामेकविंशतिम् ॥ बन्धुभिश्चसुतैश्चैवदासीदासैरनन्तकैः ॥ ९१ ॥ पूरितं
चकुलंतस्याःपूरिकांयाप्रदास्यति ॥ एधतेचचिरंकालंपुत्रपौत्रसमन्वितम् ॥ ९२ ॥ कुलंचसकलंतस्यशष्कुलंयःप्रयच्छति ॥ पुत्रिण्योवैदुहि
तरोबन्धुभिःसहितंकुलम् ॥ ९३ ॥ शिखरिणीप्रदात्रीणांयुवतीनांनसंशयः ॥ मोदतेतुकुलंतस्याःसर्वसिद्धिप्रपूरितम् ॥ ९४ ॥ मोदकानां
प्रदानेनएवमाहप्रजापतिः ॥ एतदेवतुगौरीणांभोजनंहरशस्यते ॥ ९५ ॥ सुभगापुत्रिणीसाध्वीधनऋद्धिसमन्विता ॥ सहस्रभोजिनीशम्भो
जन्मजन्मभविष्यति ॥ ९६ ॥ पूपानिचैवपुण्यानिकृतानिमधुराणिच ॥ द्राक्षारसप्रधानंचगुडखण्डसमन्वितम् ॥ ९७ ॥ शारदेनतुधान्येन
कृत्वाखण्डंविमिश्रितम् ॥ स्त्रीणांचैवतुपेयानिभक्ष्याणिचद्विजन्मनाम् ॥ ९८ ॥ इहचाविकवासांसिवर्षायोग्यानिसर्वशः ॥ यानियानिच
पेयानितानियोग्यानिदापयेत् ॥ ९९ ॥ प्रतिपूज्यविधानेनवसुदानैःसकञ्चुकैः ॥ कुङ्कुमेनानुलिप्ताङ्ग्याःस्रग्दामभिरलङ्कृताः ॥ २०० ॥
दत्त्वातूपानहावङ्घ्र्योर्नारिकेलंकरेतथा ॥ अक्ष्णोश्चैवाञ्जनंदत्त्वासिन्दूरंचैवमस्तके ॥ १॥ गुडंफलानिहृद्यानिवाञ्छितानिमृदूनिच ॥ हस्तेदत्त्वा
सपात्राणिप्रणिपत्यविसर्जयेत् ॥ २ ॥ स्वयंभुञ्जीतवैपश्चात्सबन्धुर्बालकैःसह ॥ अथवानैवसम्पत्तिस्तीर्थेदानंचभाजनम् ॥ ३ ॥

गृहेगतःप्रदास्यामितुष्टोदेवप्रसीदमे ॥ एवमेवपितॄणांचआगत्यस्वीयमन्दिरे ॥ ४ ॥ पिण्डप्रदानपूर्वंतुश्राद्धंकुर्याद्विधानतः ॥
पितरस्तस्य[illegible]तृप्ताभवन्तिब्रह्मणोदितम् ॥ ५ ॥ तीर्थाद्दष्टगुणंपुण्यंस्वगृहेददतांशिव ॥ नचपश्यन्तिवैनीचाःश्राद्धंद्विजातिभिःकृतम् ॥ ६ ॥
एकान्तेतुगृहेगुप्तेपितॄणांश्राद्धमिष्यते ॥ नीचदृष्ट्याहतंतच्चपितॄन्नैवोपतिष्ठति ॥ ७ ॥ तस्मात्सर्वप्रयत्नेनश्राद्धंगुप्तंचकारयेत् ॥
पितॄ[illegible]ांतृप्तिदंप्रोक्तंस्वयमेवस्वयम्भुवा ॥ ८ ॥ गौरीभक्त्याधिकायातुशस्ताज्ञातक्रियातुसा ॥ राजसीमनमाज्ञाताजनानांकीर्तिदायिनी ॥
॥ ९ ॥ गुप्तंदानंसदादेयमात्मनोहितमिच्छता ॥ पक्वान्नंदृश्यतामेतिदीयमानंजनैर्भुवि ॥ २१० ॥ दृश्यमानंतुतत्तुष्ट्यैदृश्यतेनेहक
र्हिचित् ॥ एकस्मिन्भोजितेविप्रेकोटिर्भवतिभोजिता ॥ ११ ॥ भवनेनात्रसन्देहःसत्यंपौराणिकंवचः ॥ तीर्थेतुब्राह्मणंनैवपरीक्षेतकथञ्चन ॥
॥ १२ ॥ अन्नार्थिनमनुप्राप्तंभोज्यंतंमनुरब्रवीत् ॥ सक्तुभिःपिण्डदानंचसंयावैःपायसेनवा ॥ १३ ॥ कर्त्तव्यमृषिभिर्दृष्टंपिण्याकेनेङ्गुदेनवा ॥
तिलपिण्याककैर्देयंभक्तिमद्भिर्नरैःसदा ॥ १४ ॥ श्राद्धंतत्रतुकर्तव्यमर्घ्यावाहनवर्जितम् ॥ स्वधांतुगृध्राःकाकावानैवदृष्ट्याहरन्तिते ॥ १५ ॥ श्रा
द्धंतत्तैर्थिकंप्रोक्तंपितॄणांतृप्तिदंपरम् ॥ कर्तव्यंतत्प्रयत्नेनभक्तिरेवात्रकारणम् ॥ १६ ॥ भक्त्यातुष्यन्तिपितरस्तुष्टाःकामान्दिशन्तिते ॥ पुत्रंपौत्रं
धनंधान्यंकामान्यान्मनसेच्छति ॥ १७ ॥ भक्त्याचाराधितोदद्यात्तृणांप्रीतःपितामहः ॥ अकालेऽप्यथकालेवातीर्थेश्राद्धंसदानरैः ॥ १८ ॥ प्राप्तैरे
वसदास्नानंकर्तव्यंपितृतर्पणम् ॥ पिण्डदानंचकर्तव्यंपितॄणांचातिवल्लभम् ॥ १९ ॥ पितरोहिनिरीक्षन्तेगोत्रजंसमुपागतम् ॥ आशयापरयायु
क्ताःकाङ्क्षन्तस्सलिलंचते ॥ २२० ॥ विलम्बोनैवकर्तव्योनैवविघ्नंसमाचरेत् ॥ अच्छिन्नासन्ततिस्तेषांसदाकालंभविष्यति ॥ २१ ॥ पितरःपुत्रदा
तारोवृद्धिश्राद्धाभिकाङ्क्षिणः ॥ तेनतेसन्ततिच्छेदंनकुर्वन्तिहिकर्हिचित् ॥ २२ ॥ अतःश्राद्धंपुराप्रोक्तंस्वयमेवस्वयम्भुवा ॥ गुणोत्तरंतुयत्कार्यंद्विजैः
पितृपरायणैः ॥ २३ ॥ तीर्थक्षेत्रेगृहेवापिसङ्क्रान्तौग्रहणेऽपिवा ॥ विषुवेअयनेचापिजन्मर्क्षेचप्रपीडितं ॥ २४ ॥ एतान्वैश्राद्धकालांस्तुपुरा
स्वायम्भुवोऽब्रवीत् ॥ कृतेश्राद्धेनवैपुंसांपीडाभवतिदेहजा ॥ २५ ॥ तदापुत्रकृतंवापिसर्वंत्यजतिदुष्कृतम् ॥ यथानभवितापीडाग्रहचोरनृपादिकात्
॥ २६ ॥ दुष्कृतंनश्यतेसर्वंपरत्रचगतिंशुभाम् ॥ लभतेनात्रसन्देहःप्रजापतिवचोयथा ॥ २७ ॥ कृतेयुगेपुष्कराणित्रेतायांनैमिषंस्मृतम् ॥
द्वापरेचकुरुक्षेत्रंकलौगङ्गांसमाश्रयत् ॥ २८ ॥ दुष्करःपुष्करेवासोदुष्करंपुष्करेतपः ॥ दुष्करंपुष्करेदानंदुष्करःपुष्करेजपः ॥ २९ ॥ य
दन्यत्रकृतंपापंतीर्थेतद्यातिलाघवम् ॥ नतीर्थकृतमन्यत्रक्वचित्पापंव्यपोहति ॥ २३० ॥ सायंप्रातःस्मरेद्यस्तुपुष्कराणिकृताञ्जलिः ॥

उपस्पृष्टंभवेत्तेनसर्वतीर्थेषुभारत ॥ ३१ ॥ सायम्प्रातरुपस्पृश्यपुष्करेनियतन्द्रियः ॥ क्रतून्सर्वानवाप्नोतिब्रह्मलोकंचगच्छति ॥ ३२ ॥ द्वा
दशाब्दंद्वादशाहंमासंमासार्धमेवच ॥ योवसेत्पुष्करेनित्यंसगच्छेत्परमांगतिम् ॥ ३३ ॥ सर्वेषामेवलोकानांब्रह्मलोकोपरिस्थितः ॥ यइच्छेत्पु
ष्करंगन्तुंसोऽनुसेवेतपुष्करम् ॥ ३४ ॥ यथालोमविलोमाभ्यांतथाव्यस्तसमस्तयोः ॥ स्नातस्तुपुष्करेसम्यक्कोटयाश्वफलमश्नुते ॥ ३५ ॥
विधिवत्क्रियमाणेषुसर्वतीर्थेषुयत्फलम् ॥ पुष्करालोकनादेवनरःप्राप्नोतितत्फलम् ॥ ३६ ॥ दशकोटिसहस्राणितीर्थानांवैमहीतले ॥
सान्निध्यंपुष्करेतेषांत्रिसन्ध्यंकुरुनन्दन ॥ ३७ ॥ यावत्तिष्ठन्तिगिरयोयावत्तिष्ठन्तिसागराः ॥ तावत्पुष्करमृत्यूनांब्रह्मलोकोनसंशयः
॥ ३८ ॥ जन्मान्तरसहस्रैश्चआजन्ममरणान्तिकम् ॥ निर्दहेद्दुष्कृतंसर्वंसकृत्स्नात्वातुपुष्करे ॥ पुष्करंदुष्करंक्षेत्रंसर्वपापप्रणाशनम् ॥ ३९ ॥
पुष्करेवाऽजगन्धंयेप्रपश्यन्तिस्मभानवाः ॥ तेऽप्यशेषाघनिर्मुक्तायान्तिरुद्रसलोकताम् ॥ ४० ॥ तत्रोष्यरजनीमेकांभवस्यसदनेशुचिः ॥
अम्बुभक्षोवायुभक्षःशिवसायुज्यतांव्रजेत् ॥ ४१ ॥ अजकर्णेह्रदेस्नात्वादृष्ट्वामाहेश्वरंपदम् ॥ सुवर्णमौलिमालोक्यकिंपुनःपरितप्यते ॥ ४२ ॥
एकहंसंकुरुक्षेत्रेगङ्गाभेदंचनैमिषं ॥ पुष्करेतुअजंदृष्ट्वामुक्तिरेपाविशिष्यते ॥४३॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेब्रह्मयज्ञवर्णनंनामचतुस्त्रिंशत्तमो
ऽध्यायः ॥ ३४ ॥ भीष्मउवाच ॥ क्षेमङ्करीतुयादेवीस्थितापुष्करपर्वते ॥ तस्याउत्पत्तिमाचक्ष्वपरंकौतूहलंहिमे ॥ १ ॥ पुलस्त्यउवाच ॥
यासाक्षेमङ्करीदेवीसर्वसत्त्वबलोत्कटा ॥ सात्त्विकीपरमाशक्तिःपुष्करंप्रापकारणे ॥ २ ॥ शुभवक्राम्बुजादेवीनीलायतविलोचना ॥ तस्यास्तपन्त्याः
कालेनमहत्त्वात्कुपितंमनः ॥ ३ ॥ तस्यक्रोधात्समुत्तस्थुःकुमार्यस्सौम्यलोचनाः ॥ नीलकुञ्चितकेशान्ताबिम्बोष्ठाःपद्मलोचनाः ॥ ४ ॥
नितम्बरशनादामनूपुराढ्याःसुवर्चसः ॥ एवंविधाःस्त्रियोदेव्याःक्षुभितंमनसिद्रुतम् ॥ ५ ॥ सहस्रशःसमुत्तस्थुःकोटिशोविविधामलाः ॥
सृष्ट्वाकुमारीस्तादेवीस्तस्मिन्नेवागिरौशुभाः ॥ ६ ॥ तपसानिर्मितंदेव्यापुरमाकाशगंमहत् ॥ विशालरथसौवर्णप्राकारेणोपशोभितम् ॥ ७ ॥
अन्तर्जलानिवेश्मानिमणिसोपानवन्तिच ॥ रत्नजालगवाक्षाणिआसन्नोपवनानिच ॥ ८ ॥ प्राधान्येनप्रवक्ष्यामिकन्यानामानितेऽनघ ॥
विद्युत्प्रभाचन्द्रकान्तिस्सूर्यकान्तिस्तथापरा ॥९॥ गम्भीरादारुकेशीचसुकेशीचापिसुन्दरी ॥ नीलकेशीघृताचीचउर्वशीशीलमण्डना ॥१०॥ चारु
कर्णाविशालाक्षीवन्यार्पीनपयोधरा ॥ चन्द्रप्रभागिरिसुतातथासूर्यप्रभानना ॥ ११ ॥ स्वयम्प्रभाचारुमुखीसर्वदूतीविभावरी॥जयाचविजया
चैवतथाचैवापराजिता ॥ १२ ॥ एताश्चान्याश्चशतशःकन्यास्तस्मिन्पुरोत्तमे ॥ देव्याअनुचर्यःसर्वाःपाशाङ्कुशधराःशुभाः ॥ १३ ॥ ताभिःपरिवृता

देवीसिंहासनगतास्थिता ॥ यौवनस्थामहाभागापीनोन्नतपयोधरा ॥ १४ ॥ चम्पकाशोकपुन्नागनागकेसरदामभिः ॥ सचामरार्चितादेवी यावदास्तेतपोऽन्विता ॥ १५ ॥ तावदागतवांस्तत्रनारदोब्रह्मणःसुतः ॥ तंदृष्ट्वासहसाऽऽयातंब्रह्मपुत्रंतपोनिधिम् ॥ १६ ॥ विद्युत्प्रभामुवाचेद मासनंदीयतामिति ॥ पाद्यमाचमनीयंचक्षिप्रमस्मैप्रदीयताम् ॥ १७ ॥ एवमुक्तातदादेवीकन्याविद्युत्प्रभाशुभा ॥ आसनंपाद्यमर्घ्यंचनारदाय न्यवेदयत् ॥ १८ ॥ ततःकृतासनंदृष्ट्वाप्रणतंनारदंमुनिम् ॥ उवाचवचनंदेवीहर्षेणमहताऽन्विता ॥ १९ ॥ देव्युवाच ॥ स्वागतंतेमुनिश्रेष्ठ कस्माल्लोकादिहागतः ॥ किंकार्यंदेवयत्कृत्यंमानःकालात्ययोभवेत् ॥ २० ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तःसमुनिर्नारदःप्राहलोकवित् ॥२१॥ नारदउवाच ॥ ब्रह्मलोकादिन्द्रलोकंतस्माद्रौद्रमथाचलम् ॥ इहस्थांत्वांचवेदेविद्रष्टुमभ्यागतोह्यहम् ॥ २२ ॥ पुलस्त्यउवाच ॥ एवमुक्त्वा मुनिवरस्तांदेवींसन्निरीक्ष्यच ॥ अहोऽभयमहोधैर्यमहोकान्तिरहोवयः ॥ २३ ॥ अहोनिष्कामतादेव्याइतिखेदमुपाययौ ॥ देवगन्धर्वसिद्धानां यक्षकिन्नररक्षसाम् ॥ २४ ॥ न रूपमीदृशंक्वापिस्त्रीष्वन्यास्विहदृश्यते ॥ एवंसञ्चिन्त्यमनसानारदोविस्मयान्वितः ॥ २५ ॥ प्रणम्यदेवीं वरदामुत्पपातनभस्तलम् ॥ गतश्चत्वरयायुक्तःपुरींदैत्येन्द्रपालिताम् ॥ २६ ॥ महिषाख्येनयाभीष्मसमुद्भ्रान्तःस्थितातदा ॥ तत्रासससादभ गवान्महिषंदानवाकृतिम् ॥ २७ ॥ दृष्ट्वालब्धवरंवीरंदेवसैन्यान्तकंमहत् ॥ सतेनपूजितोभक्त्यानारदोमुनिपुङ्गवः ॥ २८ ॥ प्रीतात्मा नारदस्तस्मैदेव्यारूपमनुत्तमम् ॥ आचख्यौतद्यथान्यायंयद्दृष्टंपुष्करेतथा ॥ २९ ॥ नारदउवाच ॥ असुरेन्द्रशृणुष्वैकंकन्यारत्नसमन्वितम् ॥ येनलब्धेनलब्धंस्यात्त्रैलोक्यंसचराचरम् ॥ ३० ॥ ब्रह्मलोकादहंदैत्यपुष्करारण्यमागतः ॥ तत्रदेवीपुरंदृष्टंकुमारीशतसङ्कुलम् ॥ ३१ ॥ तत्रप्रधानायाकन्यातापसीव्रतधारिणी ॥ आदेवदैत्ययक्षाणांमध्येकाचिन्नदृश्यते ॥ ३२ ॥ तादृशीतुशुभादैत्यतादृग्ब्रह्माण्डमध्यतः ॥ तादृशीभ्रमतादृष्टानकदाचिन्मयासती ॥ ३३ ॥ तस्याश्चदेवगन्धर्वाःसिद्धकिन्नरचारणाः ॥ उपासाञ्चक्रिरेसर्वेयेचान्येदेवनायकाः ॥ ३४ ॥ तांदृष्ट्वाचशुभांदेवींत्वांद्रष्टुंसमुपागतः ॥ अजित्वादेवताःसर्वानतांलभेतकर्हिचित् ॥ ३५ ॥ पुलस्त्यउवाच ॥ एवमुक्त्वाक्षणंस्थित्वा तमनु ज्ञाप्यनारदः ॥ यथागतंययौधीमानन्तर्धानेनतत्क्षणात् ॥ ३६ ॥ गतेतुनारदेदैत्यश्चिन्तयामासतांशुभाम् ॥ श्रुतायानारदमुखात्स्मृत्वाविस्मि तमानसः ॥ ३७ ॥ तामेवचिन्तयञ्छर्मनलेभेदैत्यसत्तमः ॥ तत्त्वज्ञान्सर्वमन्त्राणांमन्त्रिणःसमुपाह्वयत् ॥ ३८ ॥ तस्याष्टौमन्त्रिणोवीरा नीतिमन्तोबहुश्रुताः ॥ प्रघसोविघसश्चैवशङ्कुकर्णोविभावसुः ॥ ३९ ॥ विद्युन्मालीसुमालीचपर्जन्योऽक्रूरएवच ॥ एतेमन्त्रिवराःसर्वेप्राधान्ये

नग्रकीर्तिताः ॥ ४० ॥ तेदानवेन्द्रमासाद्यऊचुःकृत्यंविधीयताम् ॥ तेषांतद्वचनंश्रुत्वादानवेन्द्रोमहाबलः ॥ ४१ ॥ उवाचकन्यालाभाय
नारदावाप्तनिश्चयः ॥ ४२ ॥ महिषासुरउवाच ॥ मह्यंहिकथिताबालानारदेनसुरर्षिणा ॥ बिम्बोष्ठीचारुसर्वाङ्गीचन्द्रकान्ततराहिसा ॥ ४३ ॥
स्तनौचपीनौकठिनौसंहतौचारुदर्शनौ ॥ मृणालकोमलौबाहूनयनेचसुतारके ॥ ४४ ॥ गम्भीरावर्तुलानाभिस्त्रिवलीशोभनोदरा ॥ विस्तीर्ण
जघनाचैवसुश्रोणीमृदुगामिनी ॥ ४५ ॥ कदलीगर्भसङ्काशमूरुयुग्मंचशोभनम् ॥ चरणौसुप्रभौतस्याधरण्यांसुप्रतिष्ठितौ ॥ ४६ ॥
परोपकारिणातेनमुनिनाभावितात्मना ॥ एवंविधामेकथिताश्रुतायावीर्यहारिणी ॥ ४७ ॥ पुंसांवैश्राविंतलिङ्गःदृष्टाप्राणहराहिसा ॥ अवश्यं
सामयाग्राह्यायुष्माकंसन्निधौगणं ॥ ४८ ॥ सावाऽजित्वासुगान्यक्षान्नलभ्येनकिलाङ्गना ॥ एतदर्थंभवन्तोमेकथयन्तुविनिश्चयम् ॥ ४९ ॥
कथंसालभ्यतेबालाकथंदेवाश्चनिर्जिताः ॥ भवेयुरितितेसर्वेमन्त्रिणोदानवेश्वरम् ॥ ५० ॥ ऊचुःसम्मन्त्रिताःसर्वेकथयामोवयंतव ॥ एवमुक्त्वा
वचोऽवोचत्प्रघसोदानवेश्वरम् ॥ ५१ ॥ प्रघसउवाच ॥ यासातेकथितादैत्यनारदेनमहासती ॥ साशक्तिःपरमादेवीवष्णवीलोकधारिणी ॥५२॥
गुरुपत्नींभृत्यपत्नींनथासामन्तयोषितः ॥ जिघृक्षन्म्रियतेराजन्नगम्यागमनेनच ॥ ५३ ॥ साग्निज्वालातृणंत्वंचसाचत्वांनिर्दहिष्यति ॥
एवंज्ञात्वानभावंतुकर्तुमर्हसिदानव ॥ ५४ ॥ सुरर्षिणासुरकार्यंकर्तुकामेनकीर्तिता ॥ ५५ ॥ पुलस्त्यउवाच ॥ प्रघसेनैवमुक्तेतुतद्देवींप्रतिपा
र्थिव॥ दैत्येश्वरमथाहेदंविघसोनयकोविदः ॥५६॥विघसउवाच॥वारणीयाकदाचित्तुसर्वदाविजिगीषुभिः॥अन्यतन्त्रेणकन्यायाःकार्यंकापिप्रधर्षणम्
॥५७॥यदितेगेचतेवाक्यंमदीयंराजसत्तम ॥इदानींतांशुभांदेवींगत्वायाचतुकश्चन॥५८॥योमहात्माभवेत्तस्यबन्धुस्तंयाचयामहे॥साम्नैवादौततःपश्चा
त्करिष्यामःप्रयाणकम् ॥५९॥ ततोभेदंकरिष्यामस्ततोदण्डंक्रमेणवै ॥ अनेनक्रमयोगेनयदिसानैवलभ्यते ॥६०॥ ततःसन्नह्यगच्छामबलाद्ग्रहामतां
तदा ॥ महिषासुरउवाच ॥ साधूक्तोविघसेनैषयत्नःप्रतिवराजनाम् ॥६१॥ तदेवक्रियतांशीघ्रंदूतस्तत्रविसृज्यताम् ॥ यःसर्वशास्त्रनीतिज्ञःशुचिःशौच
समन्वितः ॥ ६२ ॥ सत्यंज्ञात्वातुतांदेवींवर्णतोरूपतोगुणः ॥ पराक्रमेणशौर्येणवयसाचबलेनच ॥ ६३ ॥ बन्धुवर्गेणसामग्र्यामानेना
भरणेन च ॥ एवंज्ञात्वातुनांदेवींततःकार्यंविधीयताम् ॥ ६४ ॥ पुलस्त्यउवाच ॥ प्रशस्यतस्यतद्वाक्यंविघसंमन्त्रिसत्तमम् ॥ प्रशस्य
सर्वेतंदूतंसन्देष्टुमुपचक्रमुः ॥ ६५ ॥ विद्युत्प्रभंमहाभागंबहुमायाविदंशुभम् ॥ विसर्जयित्वातंदूतंविघसोवाक्यमब्रवीत् ॥ ६६ ॥ विघसउवाच ॥
सन्नह्यतांदानवेन्द्रचतुरङ्गबलेनच ॥ क्रियतांविजयंतावद्देवसैन्यंप्रतिप्रभो ॥ ६७ ॥ असुरेन्द्रसुरैर्भग्नैस्त्वत्पराक्रमभीषितः ॥ साकन्या

वश्यतामेतित्वयिशक्रत्वमागते ॥ ६८ ॥ लोकपालैर्जितैःसर्वैस्तथैवमरुतांगणैः ॥ नागैर्विद्याधरैःसिद्धैर्गन्धर्वैःसर्वतोजितैः ॥ ६९ ॥
रुद्रैर्वसुभिरादित्यैस्त्वमेवेन्द्रोभविष्यसि ॥ इन्द्रस्यतेसतःकन्यादेवगन्धर्वयोषितः ॥ वशमेवागमिष्यन्तिसर्वदाभयपीडिताः ॥ ७० ॥ पुल
स्त्यउवाच ॥ एवमुक्तस्तदादैत्यःसेनापतिमुवाचह ॥ विरूपाक्षंमहामेघंनीलाञ्जनसमप्रभम् ॥ ७१ ॥ महिषासुरउवाच ॥ आनीयतांद्रुतं
सैन्यंहस्त्यश्वरथपत्तिमत् ॥ येनदेवांश्चगन्धर्वाञ्जयामोयुधिदुर्जयान् ॥ ७२ ॥ पुलस्त्यउवाच ॥ एवमुक्तोविरूपाक्षस्तंगृहीत्वासमूर्धनि ॥ उवाच
तंदानवेन्द्रंप्रणिपत्यप्रशस्यच ॥ ७३ ॥ विरूपाक्षउवाच ॥ अविरोधेनदेवानांतिष्ठराजञ्छतंसमाः ॥ जीवद्भिःप्राप्यतेराज्यंभोगाःसौख्यंधना
निच ॥ ७४ ॥ एतन्मत्वानविरोधंसुरैर्गच्छमहाद्युते ॥ ब्रह्मणातेवरोदत्तस्त्वजेयस्त्वंदिवौकसाम् ॥ ७५ ॥ अनेनैववरेणत्वंस्वस्थानेतिष्ठवै
सुखम् ॥ देवानांदानवानांचकन्यायारूपतोऽधिकाः ॥ ७६ ॥ पतिस्तासांदानवेन्द्रसवकर्तास्मितेवचः ॥ अतीवस्पर्धनेलोकोजेतुंस्वेनबलेन
च ॥ ७७ ॥ तेषांप्रधानभूतानांकोटयस्त्वर्बुदानिच ॥ येषांस्वबलमायातिशतकोट्यायुताधिकम् ॥ ७८ ॥ तेषांदैत्यसहस्राणिदानवानां
महात्मनाम् ॥ संमतंचक्रुरव्यग्रास्तदादैत्याःप्रहारिणः ॥ प्रयाणंरोचयामासदेवसैन्यजिघांसया ॥ ७९ ॥ पुलस्त्यउवाच ॥ ततोमहिषदैत्यस्तु
कामरूपीमहाबलः ॥ मत्तंनागंसमारूढोयियासुर्मेरुपर्वतम् ॥ ८० ॥ तत्रेन्द्रपुरमासाद्यदेवैःसहशतक्रतुम् ॥ अभिदुद्रावदैत्येन्द्रस्ततोदेवाःक्रुधा
न्विताः ॥ ८१ ॥ शितान्यादायशस्त्राणिवाहनानिविशेषतः ॥ अधिष्ठायसुरानाजौदुद्रुवुर्मुदिताभृशम् ॥८२॥ तेषांप्रववृतेयुद्धंमहतांभीमविक्रमम्॥
घोरंप्रचण्डयोधानामन्योन्यमतिगर्जताम्॥८३॥तत्राञ्जनोर्नीलकुक्षिर्मेघवर्णोबलाहकः॥उदराक्षोललाटाक्षोमहाक्षोर्भीमविक्रमः ॥८४॥ स्वर्भानुर्वसुर
ष्टौघःसर्वेदुद्रुवुराहवे ॥ ८५ ॥ यथासङ्ख्येनतद्वच्चदैत्याद्वादशचापरे ॥ आदित्यान्दैत्यसङ्घास्तेतेषांप्राधान्यतःशृणु ॥ ८६ ॥ भीमाक्षोगजकर्ण
श्चशङ्कुकर्णस्तथैवच ॥ रक्ताक्षोभीमदंष्ट्रश्चविद्युज्जिह्वस्तथैवच ॥ ८७ ॥ अतिकायोमहाकायोदीर्घबाहुःकृतान्तकृत् ॥ एतेद्वादशदैत्येन्द्राआदित्या
नभिदुद्रुवुः ॥ ८८ ॥ स्वंस्वंबलमुपादायतद्वदन्येऽपिदानवाः ॥ यथासङ्ख्येनरुद्रांस्तुदुद्रुवुर्भीमविक्रमाः ॥ ८९ ॥ शेषान्देवाञ्शेषदैत्यायथायोग्य
मुपाद्रवन् ॥ स्वयंमहिषदैत्यस्तुइन्द्रंदुद्राववेगतः ॥९०॥ सचातिबलवान्दैत्योब्रह्मणोवरदर्पितः ॥ अवध्यःपुरुषेणाजौयद्यपिस्यात्पिनाकधृक् ॥९१॥
आदित्यैर्वसुभिःसर्वैरुद्रैश्चापिमहद्भृशम्॥असुरायातुधानाश्चसङ्ख्यापूरणकेवलाः॥९२॥देवानामपिसैन्यानिनिहतान्यसुरैर्युधि॥एवम्भूतेतदाभग्नेदेवे
न्द्रेविद्रुताःसुराः॥९३॥ अर्दिताविविधैःशस्त्रैःशूलपट्टिशमुद्गरैः॥गतवन्तोब्रह्मलोकमसुरैरर्दिताःसुराः॥९४॥ अथविद्युत्प्रभोदैत्यस्तदादूतोविसर्जितः ॥

देव्याःसकाशंगत्वातुउवाचतनुमध्यमाम् ॥ ९५ ॥ प्रणम्यप्रणतोभूत्वाकुमारीशतसङ्कुलाम् ॥ आस्थानेविनयायत्तस्तथावचनमब्रवीत् ॥९६॥ देवि
पूर्वमृषिस्त्वासीदादिसर्गेषुसम्भवः ॥ संवत्सरशताज्जातःसुपार्श्वोनामवैभुवि ॥९७॥ तस्याभवन्महातेजाःसिन्धुद्वीपःप्रतापवान् ॥ सहितीव्रंतपस्तेपे
माहिष्मत्यांसुरोत्तमे ॥ ९८ ॥ कुर्वन्स्थितस्तपोघोरंनिराहारस्त्वशोभने ॥ दैत्यस्यविप्रचित्तेस्तुसुतासुरम्तोपमा ॥ ९९ ॥ माहिष्मतीतिविख्या
तारूपेणासदृशीभुवि ॥ सखीभिःसापरिवृताविहरन्तीयदृच्छया ॥ १०० ॥ आगतामन्दरद्रोणींतत्रापश्यत्तपोवनम् ॥ मुनेरम्बरसंसक्तविविधद्रुम
मालिकम् ॥ १ ॥ लतागृहैःसुविहितैर्बकुलैराम्रतिन्दुकैः ॥ चन्दनैर्बदरैःशालैःसरलैरुपशोभितम् ॥ २ ॥ विचित्रवनखण्डैश्चभूषितंतन्महात्मभिः ॥
दृष्ट्वोत्तमंवनंरम्यमासुरीकन्यकाशुभा ॥ ३ ॥ माहिष्मतीवरारोहाचिन्तयामासभामिनी ॥ भीषयित्वाऽहमेतांस्तुतापसानाश्रमेस्वयम् ॥ ४ ॥ तिष्ठा
मिक्रीडतीसार्धंसखिभिःपरमार्चिता ॥ एवंसंचिन्त्यसादवीमहिषीसम्बभूवह ॥ ५ ॥ महिषीभिःसहान्याभिस्तीक्ष्णशृङ्गाग्रधारिणी ॥ तमृषिंभीषितुं
ताभिर्महानादंननादसा ॥ ६ ॥ असौचभीषितस्ताभिस्तांज्ञात्वाज्ञानचक्षुषा ॥ आसुरींक्रोधसम्पन्नःशशापचसुलोचनाम् ॥ ७ ॥ यस्माद्भीषयसेमां
त्वंमहिषीरूपधारिणी॥अतोभवमहिष्येवपापकर्मेशतंसमाः ॥८॥ एवमुक्तातदासातुसखीभिःसहवेपती ॥ पादयोरंपतत्तस्यशापान्तंकुरुजल्पती ॥९॥
तस्यास्तद्वचनंश्रुत्वासमुनिःकरुणान्वितः ॥ शापान्तमकरोत्तस्यावाक्यंचेदमुवाचह ॥ ११० ॥ मुनिरुवाच ॥ अनेनैवतुरूपेणपुत्रमेकंप्रसूयसे ॥
शापान्तोभविताभद्रेमद्वाक्यंनमृषाभवेत् ॥११॥ पुलस्त्यउवाच ॥ एवमुक्तागतासातुनर्मदातीरमुत्तमम्॥ यत्रतेपेतपोघोरंसिन्धुद्वीपःप्रतापवान्॥१२॥
तत्रविद्युन्मतीनामदैत्यकन्याऽतिरूपिणी ॥ सादृष्टातेनमुनिनाविवस्त्रामज्जतीजले ॥ १३ ॥ चस्कन्दचमुनिःशुक्रंशिलाद्रोण्यांमहातपाः ॥ तच्चमा
हिष्मतीदृष्ट्वादिव्यगन्धिसुगन्धिच ॥ १४ ॥ निजांसखीमुवाचेदंपिबामिचजलंशुभम् ॥ एवमुक्त्वातुसापीत्वातच्छुक्रंमुनिसम्भवम् ॥ १५ ॥ प्राप
गर्भंमुनेर्वीर्याद्वत्सरंजठरेधृतम् ॥ तस्याःपुत्रोऽभवच्छ्रीमान्महाबलपराक्रमः ॥१६॥ महिषेतिस्मृतोनाम्नाब्रह्मवंशविवर्धनः ॥ सुराणामपहृत्याजौत्रैलो
क्यंसम्मतोऽनघे ॥ १७॥ आगम्यदास्यतेसुभ्रुतवदेविमहासुरः ॥ तस्यात्मनःप्रदानेनकुरुदेविमहत्कृतम् ॥ आत्मनास्वयमात्मानंशोचमानासुखीभव
॥ १८ ॥ वृथात्वंयौवनंप्राप्तापीनौचेमौपयोधरौ ॥ यदितस्याङ्गसंलग्नौसफलंजीवितंभवेत् ॥ १९ ॥ भवत्यानतुसन्देहःप्राप्तंवैजन्मनःफलम् ॥ मा
क्लेशयवृथादेविवयश्चेदंसयौवनम् ॥ १२० ॥ सभाग्याभवसुश्रोणिपतिंप्राप्नुहिदानवम् ॥ किमनेनतुवक्त्रेणयन्मुखेतस्यनार्प्यते ॥ २१ ॥
सुधारसस्याभ्यधिकमास्वादंलभशोभनम् ॥ एवमुक्तातदादेवीतेनदूतेनशोभना ॥ जहासपरमादेवीवाचंनोवाचकिञ्चना ॥ २२ ॥

तस्याहसन्त्याःसहितंत्रैलोक्यंसचराचरम् ॥ ददर्शकुक्षौसम्भ्रान्तःतत्क्षणात्समपद्यत ॥ २३ ॥ ततोदेव्याःप्रतीहारीजयानामासितेक्षणा ॥ देव्या
हृदिस्थितंवाक्यमुवाचतनुमध्यमा ॥ २४ ॥ कन्यार्थंयत्त्वयादूतवचनंसमुदीरितम् ॥ इदंनामव्रतंवास्याःकौमारंसार्वकालिकम् ॥ २५ ॥
अन्याअपिकुमार्योऽत्रसन्तिदेव्याःपदानुगाः ॥ तासामेकापिनोलभ्याकिमुदेवीस्वयंशुभा ॥ २६ ॥ याहिदूतत्वरावांस्त्वंकिञ्चिदन्यद्भविष्यति ॥
एवमुक्तस्ततोदूतस्तावद्धयोम्निमहामुनिः ॥ २७ ॥ आयातोनारदस्तूर्णमेतदूचेमहातपाः ॥ देविदेवैरहंप्रीत्याप्रेपितोऽस्मितवान्तिकम् ॥ २८ ॥
देवाःसर्वेजितामेरुंविहायब्रह्मणोऽन्तिकम् ॥ २८ ॥ विगतादेविदैत्येनमहिषाख्येननिर्जिताः ॥ २९ ॥ त्वांग्रहीतुंहियत्नंसकृतवान्देविदैत्यराट् ॥
एवमुक्तासिदेवित्वंयोधयस्ववरानने ॥ १३० ॥ स्थिरीभूत्वामहादेवितंदैत्यंप्रतिघातय ॥ उक्त्वैवान्तर्हितःसद्योनारदःस्वेच्छयाययौ ॥ ३१ ॥
देवीचकन्याकोट्यस्ताःसन्नह्यन्तमुवाचह ॥ ततःकन्यामहाभागाःसर्वास्तादेविशासनात् ॥ ३२ ॥ बभूवुर्घोररूपिण्यःखड्गचर्मधनुर्धराः ॥
सङ्ग्रामहेतोःसन्तस्थुःसैन्यविध्वंसनायवै ॥ ३३ ॥ तच्चदेवबलंत्यक्त्वासावैदैत्यचमूर्द्रुतम् ॥ आगतायत्रसादेवीसंनद्धस्त्रीबलंमहत् ॥ ३४ ॥
ततस्तायुयुधुःकन्यादानवैःसहदर्पिताः ॥ क्षणेनतद्बलंताभिश्चतुरङ्गंनिपातितम् ॥ ३५ ॥ शिरांसितत्रकेषाञ्चिच्छिन्नानिपतितानिच ॥
इतरेषांविदार्याशुक्रव्यादाःशोणितंपपुः ॥ ३६ ॥ अन्येकबन्धभूतास्तुननृतुस्तत्रदानवाः ॥ एवंक्षणेनतेसर्वेविध्वस्ताःपापचेतसः ॥ ३७ ॥
अपरेविद्रुताःसर्वेयत्रासौमहिषासुरः ॥ ततोहाहाकृतंसर्वतदादैत्यबलंमहत् ॥ ३८ ॥ एवंतदाकुलंदृष्ट्वामहिषोवाक्यमब्रवीत् ॥
सेनापतेकिमेतद्धिबलंभग्नंममाग्रतः ॥ ३९ ॥ ततोयज्ञहतोनामदैत्योहस्तिस्वरूपवान् ॥ उवाचहतमेतद्धिकुमारीभिःसमन्ततः ॥ १४० ॥
भवानपूर्वकन्यार्थीकथितंनारदेनते ॥ तयाहतमिदंसर्वंमन्येत्वांतुहनिष्यति ॥ ४१ ॥ ततोदुद्रावमहिषस्तांकन्यांशुभलोचनाम् ॥ गदामुसलह
स्तश्चकन्यांदुद्रावतांबलात् ॥ ४२ ॥ यत्रतिष्ठतिसादेवीदेवगन्धर्वपूजिता ॥ तत्रैवसोऽसुरःप्रापयन्नदेवीव्यवस्थिता ॥ ४३ ॥ सातुदृष्ट्वातमायान्तं
विंशत्पाणिर्बभूवह ॥ धनुःखड्गंतथाशक्तिःशरःशूलंतथागदा ॥४४॥ सहस्रारंतथाचक्रंमुसलंभिण्डिपालकम् ॥ परशुर्डमरुश्चैवतथाघण्टाविशालिनी
॥ ४५ ॥ शतघ्नीमुद्गरोघोरोभुशुण्डीकुन्तमेवच ॥ दण्डपाशौध्वजश्चवपद्मंचेतीहविंशतिः ॥ ४६ ॥ भूत्वाविंशद्भुजादेवीसिंहमास्थायदंशिता ॥
सस्माररुद्रंदेवेशंरौद्रंसंहारकारिणम् ॥ ४७ ॥ ततोवृषध्वजःसाक्षाद्रुद्रस्तत्रैवसंययौ ॥ तयाप्रणम्यविज्ञप्तःसर्वान्दैत्याञ्जयाम्यहम् ॥ ४८ ॥
त्वयिसन्निहितेदेवेविष्णौचापिपरन्तप ॥ युष्मत्सन्निधिमात्रेतुपश्यदेवसनातन ॥ ४९ ॥ एवमुक्त्वाऽसुरान्सर्वाञ्जिघांसुःपरमेश्वरी ॥ मुक्त्वातमेकं

महिषंवधार्थंसातमभ्यगात् ॥ १५० ॥ तथादेवींततःसोऽपिदृष्ट्वादुद्रावचेश्वरीम् ॥ क्वचिद्युध्यतिदैत्येन्द्रःक्वचिन्नैवपलायते ॥ ५१ ॥ क्वचित्पुन
र्भृशंचक्रेक्वचित्पुनरुपागमत् ॥ एवंवर्षसहस्राणिदशतस्यतयासह ॥ ५२ ॥ देव्याविनिर्गतानिस्युर्युध्यतस्तस्यशोभने ॥ बभ्रामसकलन्त्वाजौ
ब्रह्माण्डंभीतमानसम् ॥५३॥ततःकालेनमहताशतशृङ्गेमहागिरौ ॥ दैत्येश्वरंचतंदृष्ट्वादेवीवचनमब्रवीत् ॥ ५४ ॥ रूपलोभात्त्वयानीचदृतोयोऽसौम
मान्तिकम् ॥ प्रेषितोयत्त्वयातस्यसन्दिष्टंतद्वदस्वमे ॥ ५५ ॥ नमयातच्छ्रुतपूर्वमिदानींत्वन्मुखात्पुनः ॥ श्रोतुमिच्छामितद्वाक्यंभवाननुभविष्यति
॥ ५६ ॥ पद्भ्यामाक्रम्यशूलेननिहतोदैत्यसत्तमः ॥ छिन्नेशिरसिखड्गेनतत्कण्ठादुत्थितःपुमान् ॥ रौद्रोऽपिसगतःस्वर्गंदेव्याशस्त्रनिपा
तितः॥५७॥ततोदेवगणाःसर्वेमहिषंवीक्ष्यनिर्जितम्॥सेन्द्राद्यास्तुस्तुतिंचक्रुर्देव्यास्तुष्टेनचेतसा॥५८॥देवाऊचुः॥नमोदेविमहाभागेगम्भीरेभीमदर्शने॥
नयस्थेस्थितिसिद्धान्तेत्रिनेत्रेविश्वतोमुखि ॥५९॥ विद्याविद्येजयेजाप्येमहिषासुरमर्दिनि ॥ सर्वगेसर्वदेवेशिविश्वरूपिणिवैष्णवि॥१६०॥वीतशोके
ध्रुवेदेविपद्मपत्रायतेक्षणे ॥ शुद्धसत्वव्रतस्थेचचण्डरूपेविभावरि ॥ ६१ ॥ ऋद्धिसिद्धिप्रदेदेविसर्वसत्वमयेध्रुवे ॥ विद्यापुराणशिल्पानांजननिभूत
धारिणि ॥ ६२ ॥ सर्वदेवरहस्यानांसर्वसत्त्ववतांशुभे ॥ नमोऽस्तुतेमहादेविनमोऽस्तुपरमेश्वरि ॥ ६३ ॥ नमोऽस्तुसर्वभूतानांमातर्नित्येऽक्षयेऽव्यये
॥ नतेषांजायतेकिञ्चिदशुभंरणसङ्कटे ॥ ६४ ॥ येतुव्याघ्रभयेघोरेचौरराजभयेतथा ॥ सर्वभूताभयादेवीक्षेम्याक्षेमङ्करीतिच ॥ ६५ ॥ विभावरीभा
वरीचसर्वस्थितिकरीतथा ॥ सर्वांसांभगवान्रुद्रःसर्वगत्वात्पतिःस्मृतः ॥ ६६॥ यावत्यस्तुमहाशक्त्यस्तावद्रूपस्तुशङ्करः ॥ निगडस्थोऽपियोदेवि
त्वांस्मरिष्यतिमानवः ॥ सोऽपिबन्धात्प्रमुच्येतससुखंवसतेसुखी ॥ ६७ ॥ पुलस्त्यउवाच ॥ एवंस्तुतासुरैर्देवीप्रणिपातपुरस्कृता ॥ उवाचदेवीसु
श्रोणीवृणुध्वंवरमुत्तमम् ॥ ६८ ॥ देवाऊचुः ॥ देविपुष्करसंस्थांत्वांस्तुवन्त्यनेनभक्तितः ॥ तेसर्वकामसम्पन्नाभवन्तुवरएषवै ॥ ६९ ॥ पुलस्त्य
उवाच ॥ एवमस्त्वितितान्देवानुक्त्वादेवीपरावरान् ॥ विसर्जयित्वातान्देवीस्वयंतत्रैवसंस्थिता ॥ १७० ॥ एवंयःशृणुतेजन्मदेव्याः
कुरुकुलोद्वह ॥ सदासेवेतविरजइदंप्राप्नोत्यनामयम् ॥ ७१ ॥ यःक्षेमङ्करिवृत्तान्तंब्रह्मशक्तिसमुद्भवम् ॥ सपुत्रपौत्रपशुमान्समृ
द्धिमुपगच्छति ॥ ७२ ॥ यश्चेदंशृणुयाद्भक्त्यादेवीस्तोत्रमनुत्तमम् ॥ सर्वबाधाविनिर्मुक्तंपदंनिर्वाणमृच्छति ॥ ७३ ॥ यएनांवेद
वैदेव्याउत्पत्तिंत्रिविधांस्थिताम् ॥ सर्वपापविनिर्मुक्तःपदंनिर्वाणमृच्छति ॥ ७४ ॥ ॥ अष्टगजयपदोराजांसप्तम्यांनियतःशुचिः ॥ अष्टम्यां
चनवम्यांचउपवासीनरोत्तम ॥ ७५ ॥ संवत्सरेणलभतेराज्यंनिष्कण्टकंनृपः ॥ यासात्रिविदसम्भूतावेदशक्तिःपरावरा ॥ ७६ ॥ एषाज्ञाना

त्मिकासर्वासात्त्विकीब्रह्मसंज्ञिता ॥ एषैवरक्ताराजसीवैष्णवीपरिकीर्तिता ॥ ७७ ॥ एषैवकृष्णातामसीरौद्रीदेवीप्रकीर्तिता ॥ परमात्मायथा
देवएकएवत्रिधास्थितः ॥ ७८ ॥ अपराचपराचैवतथैवान्यापरावरा ॥ त्रिधाव्यवस्थिताशक्तिरेकैकात्रिविधाभवेत् ॥ ७९ ॥ यएवं
शृणुयात्सर्वंक्षेम्यायाःपरमंशिवम् ॥ सर्वपापविनिर्मुक्तःपदंनिर्वाणमाप्नुयात् ॥ १८० ॥ यश्चैवंपठतेभक्त्यानवम्यांनियतःशुचिः ॥ सरा
ज्यापत्यलाभेनभयेभ्यःपरिमुच्यते ॥ ८१ ॥ यत्रैवंलिखितागेहेसदातिष्ठतिधारिता ॥ नतत्राग्निभयंघोरंचौर्यसर्पादिकंनृप ॥ ८२ ॥ यश्चै
तत्पूजयेद्भक्त्यापुस्तकेलिखितंबुधः ॥ तेनचेष्टंभवेत्सर्वंत्रैलोक्यंसचराचरम् ॥ ८३ ॥ जायन्तेपशवःपुत्रास्तथाधान्यंवरस्त्रियः ॥ रत्नान्य
श्वागजाभृत्याग्रामाश्चाशुभवन्त्युत ॥ ८४ ॥ यस्येदंतिष्ठतेगेहेतस्याप्येतद्ध्रुवंभवेत् ॥ एतदेवरहस्यंमेकीर्तितंनृपसत्तम ॥ ८५ ॥ क्षेमङ्करी
भवंतेतुसर्वंक्षेमङ्करंशुभम् ॥ क्षेम्याक्षेमङ्करीदेवीसर्वेषांभयनाशिनी ॥ ८६ ॥ रुद्रस्यखलुमाहात्म्यंदेवीनांसम्भवस्तथा ॥ नवकोटयस्तुचा
मुण्डाभेदभिन्नाव्यवस्थिताः ॥ ८७ ॥ यारौद्रीतामसीशक्तिःसाचामुण्डाप्रकीर्तिता ॥ अष्टादशतथाकोटयोवैष्णव्याभेदउच्यते ॥ ८८ ॥ यासातु
राजसीशक्तिःपालनेचैववैष्णवी ॥ याब्राह्मीशक्तिःसत्त्वस्थासाचानन्ताप्रकीर्तिता ॥ ८९ ॥ क्षेमङ्कर्यानसङ्ख्यातुब्राह्मीशक्तिःपरावरा ॥ ब्रह्माणी
साधुविज्ञेयासृष्टिरूपाजगत्स्थिता ॥१९०॥ एतासांसर्वभेदेषुपृथगेकैकशोभनाः ॥ सर्वासांभगवान्रुद्रःसर्वगत्वात्पतिःस्मृतः ॥ ९१ ॥ यावत्यस्ता
महाशक्त्यस्तावद्रूपाणिशङ्करः ॥ कृत्तिवासास्तुभजतेपतिरूपेणसर्वदा ॥ ९२ ॥ यश्चाराधयतेतास्तुतस्यरुद्रोऽपितुष्यति ॥ सिध्यन्तेतास्तदादेव्यो
मन्त्रिणोनात्रसंशयः ॥ १९३ ॥ इतिश्रीपद्मपुराणेप्रथमेसृष्टिखण्डेक्षेमङ्कर्युत्पत्तिर्नामपञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥ भीष्मउवाच ॥ यासम्भूता
शरीरात्तुब्रह्मणोऽव्यक्तजन्मनः ॥ गायत्र्यष्टभुजाभूत्वाख्याताविंशभुजातथा ॥ १ ॥ सैवचान्याभवद्देवीदेवकार्यचिकीर्षया ॥ महिषाख्यासुरवधंकु
र्वतीब्रह्मणोरता ॥ २ ॥ वैष्णव्यानिहतोदैत्यःकतमोयोमहाबलः ॥ चामुण्डयारुद्रशक्त्याकतमोदानवोहतः ॥ ३ ॥ पुलस्त्यउवाच ॥ इदंजग
त्स्थितंभीष्मगङ्गासिकतसङ्ख्यया ॥ यत्किञ्चिद्भवतेवृत्तंतत्सववेदसर्ववित् ॥ ४ ॥ स्वायम्भुवोहतोदैत्योवैष्णव्यामन्दरेगिरौ ॥ महिषाख्योऽभि
भाष्यश्चसचवैवस्वतेपुनः ॥ ५ ॥ नन्दयानिहतोविन्ध्येमहाबलपराक्रमः ॥ अथवाज्ञानशक्तिश्चमहिषोऽज्ञानमूर्तिमान् ॥ ६ ॥ अज्ञानंज्ञानसाध्यं
तुभवतीहनसंशयः ॥ मूर्तिपक्षेचेतिहासोमन्मूर्तिःस्वेनबाध्यत ॥ ७ ॥ ख्याप्यतेवेदवादैस्तुअहन्तैर्वेदवादिभिः ॥ ८ ॥
इदानींशृणुमेराजन्पञ्चपातकनाशनम् ॥ यजनंदेवदेवस्यब्रह्मपुत्रवसुप्रदम् ॥ ९ ॥ इहजन्मनिदारिद्र्यव्याधिकुष्ठादिपीडितः ॥ अलक्ष्मीवानपुत्रस्तु

योभवेत्पुरुषोभुवि ॥ १० ॥ तस्यसद्योभवेल्लक्ष्मीरायुःपूर्णंसुतास्सुखम् ॥ कृत्वातुमण्डलगतंलोकपालसमन्वितम् ॥ ११ ॥ ब्रह्माणंतुपरंदेवंयःपश्यतिविधानतः ॥ पूजितंनवनाभेनमन्त्रमूर्तिमयोनिजम् ॥ १२ ॥ कार्तिकेमासिशुक्लायांपौर्णमास्यांविशेषतः ॥ सर्वासुवायजेदेवंपूर्णिमासुविधानतः ॥१३॥ सङ्क्रान्तौचमहाबाहोचन्द्रसूर्यग्रहेऽपिवा ॥ यःपश्यतिविभुंदेवंपूजितंगुरुणानृप ॥१४॥ तस्यसद्योभवेत्तुष्टिःपापध्वंसश्चजायते ॥ समान्योदेवतानांचभवतीहनराधिप ॥ १५ ॥ ब्राह्मणक्षत्रियविशांभक्तानांतुपरीक्षणम् ॥ संवत्सरंगुरुःकुर्याज्जातिशौचक्रियादिभिः ॥ १६ ॥ उपपन्नमितिज्ञात्वाहृदयेनावधारयेत् ॥ तेऽपिभक्तियुताध्यात्वात्वाचार्यंपरमेश्वरम् ॥ १७ ॥ संवत्सरंगुरौभक्तिंकुर्युर्विष्णौयथातथा ॥ प्रसादयेयुश्चततःपूर्णेसंवत्सरेगुरुम् ॥ १८ ॥ भगवंस्त्वत्प्रसादेनसंसारार्णवतारणम् ॥ परब्रह्मोपासनेनविरिञ्च्याराधनेनच ॥ १९ ॥ सहस्रशीर्षजप्येनमण्डलब्राह्मणेनच॥ध्यानेनस्यात्तथास्माकमुपदेशःप्रदीयताम् ॥ २० ॥ इच्छामोवैदिकींलक्ष्मींविशेषेणप्रसद्यताम् ॥ अभ्यर्थितोगुरुस्त्वेवंमेधावीतैस्तदाततः ॥ २१ ॥ यथाविधिसमभ्यर्च्यब्रह्माणंविष्णुमग्रतः ॥ तंबद्धनेत्राःस्वाप्यास्तुकार्तिकस्यचतुर्दशीम् ॥ २२ ॥ ब्राह्ममुहूर्तेचोत्थायबद्धपद्मासनास्तुते ॥ ध्यात्वागुरुंसहस्रारेश्वेतवस्त्रोपवीतकम् ॥ २३ ॥ श्वेतमाल्याम्बरधरंश्वेतगन्धानुलेपनम् ॥ निर्गम्यचबहिर्नद्यांकुर्युर्नित्यमतन्द्रिताः ॥ २४ ॥ क्षीरवृक्षोत्थमाचार्योदापयेद्दन्तधावनम् ॥ तेचतंभक्षयेयुर्हिनदींगत्वासमुद्रगाम् ॥ २५ ॥ इतरद्वातटाकंवागृहेवापिविधानतः॥तद्भक्षयेयुर्मन्त्रेणमन्त्रितंपरमेष्ठिनः ॥ २६ ॥ आपोहिष्ठेतिमन्त्रेणसप्तकृत्वोऽभिमन्त्रितम् ॥ देवस्यत्वेतिवैजप्त्वायुञ्जानेतिकरेन्यसेत ॥ २७ ॥ इरावत्येतिप्रक्षाल्यब्रह्मोदनेतिवैमुखे ॥ भक्षयित्वाक्षिपेद्दूरंपतितंचनिरीक्षयेत् ॥ २८ ॥ सम्मुखंप्राङ्मुखंवापिविदिशंचापिवागतम् ॥ संमुखेदेवतालब्धिर्मन्त्रसिद्धिश्चजायते ॥२९॥ पराङ्मुखेदन्तकाष्ठेसर्वेदेवाःपराङ्मुखाः ॥ उत्तरेणगतेतस्मिन्सिद्धिर्भवतिवानवा ॥ ३० ॥ दक्षिणेनभवेन्मृत्युर्गुरोस्तस्यनसंशयः ॥ प्रेक्ष्याशुभंस्वपेद्भूमौदेवदेवस्यसन्निधौ ॥ ३१ ॥ स्वप्नान्दृष्ट्वागुरोरग्रेश्रावयेयुर्विचक्षणाः ॥ ततःशुभाशुभंतत्रलक्षयेत्परमोगुरुः ॥ ३२ ॥ पौर्णमास्यामथस्नात्वाततोदेवालयंव्रजेत्॥गुरुश्चमण्डलंभूमौकल्पितायांतुवर्तयेत् ॥३३॥ लक्षणैर्विविधैर्भूमिंलक्षयित्वाविधानतः ॥ षोडशारंलिखेत्पद्मंनवधारमथापिवा॥३४॥अष्टपत्रमथोवापिलिखित्वादर्शयेद्बुधः ॥ नेत्रबन्धंतुकुर्वीतसितवस्त्रेणयत्नतः॥३५॥वर्णानुक्रमतःशिष्यान्पुष्पहस्तान्प्रवेशयेत्॥ नवनाभंयदाकुर्यान्मण्डलंवर्णकैर्बुधः॥ ३६॥इन्द्राणीपूर्वकंदेवमिन्द्रमैन्द्र्यांतुपूजयेत्॥लोकपालैःसमंतद्वदग्निंसम्पूजयेन्नृपः॥३७॥दिशिवह्नेर्यमंयाम्यांनैरृत्यांचैवनिरृतिम् ॥ वरुणंवारुणाशायांवायुंवायव्यगोचरे॥३८॥धनदंचोत्तरेन्यस्यरुद्रमीशानगोचरे॥कमण्डलुंपूर्वतोहिस्रुचंवैदक्षिणेतथा ॥३९॥ हंसंवैपश्चिमायांतुउत्तरा

यांस्तुवंतथा ॥ आग्नेय्यांचबृसींदद्यान्नैर्ऋत्यांपादुकेतथा ॥ ४० ॥ वायव्यांयोगपट्टंचऐशान्यांचगन्तिकाम् ॥ विष्णुस्तुपूर्वतःपूज्योदक्षिणे
चापिशङ्करः ॥४१॥ पश्चिमेतुरविर्देवऋषयश्चोत्तरेतथा ॥ मध्येस्वयंपद्मजन्मासावित्रीदक्षिणेतथा ॥ ४२ ॥ उत्तरेचैवगायत्रीदेवीपद्मदलेक्षणा ॥ ऋ
ग्वेदंपूर्वतोन्यस्ययजुर्वेदंचदक्षिणे ॥ ४३ ॥ पश्चिमेसामवेदंचअथर्वंचोत्तरेतथा ॥ इतिहासपुराणानिच्छन्दोज्यौतिषमेवच ॥ ४४ ॥ धर्मशा
स्त्राणिचान्यानिइन्द्रादिदिक्षुविन्यसेत् ॥ पूर्वपत्रेवलंपूज्यप्रद्युम्नंदक्षिणदले ॥ ४५ ॥ पश्चिमेचानिरुद्धंचवासुदेवमथोत्तरे ॥ पूर्वतोवामदेवंचसद्योजा
तंतुदक्षिणे ॥ ४६ ॥ ईशानंपश्चिमेस्थाप्यतत्पुरुषंचोत्तरेतथा ॥ अघोरस्सर्वतःपूज्यएषापूजातुमण्डले ॥ ४७ ॥ पूर्वतोभास्करंपूज्यदक्षिणेन
दिवाकरम् ॥ प्रभाकरंपश्चिमेतुग्रहराजमथोत्तरे ॥ ४८ ॥ एवंपूज्यविधानेनब्रह्माणंपरमेश्वरम् ॥ दिङ्मण्डलेतुविन्यस्यअष्टौकुम्भान्विधानतः ॥ ४९ ॥
ब्राह्मंतुकलशंमध्येनवमंतत्रकल्पयेत् ॥ स्नापयेन्मुक्तिकामंतुब्रह्मणोवैघटेनतु ॥ ५० ॥ श्रीकामंवैष्णवेनेहकलशेनतुपार्थिव ॥ राज्यार्थिनंस्नापये
च्चऐन्द्रेणकलशेनतु ॥ ५१ ॥ द्रव्यप्रतापकामंतुआग्नेयघटवारिणा ॥ मृत्युञ्जयविधानाययाम्येनस्नापयेन्नरम् ॥ ५२ ॥ दुष्टप्रध्वंसनाया
लंनैर्ऋतेनविधीयते ॥ स्नापयेद्वारुणेनाशुपापनाशायमानवम् ॥ ५३ ॥ शरीरारोग्यकामंतुवायव्येनाभिषेचयेत् ॥ द्रव्यसम्पत्तिकामस्यकौबे
रेणविधीयते ॥ ५४ ॥ रौद्रेणज्ञानकामस्यलोकपालघटास्त्विमे ॥ एकैकेननरःस्नात्वासर्वदोषविवर्जितः ॥ ५५ ॥ जायतेब्रह्मसदृशोराजास
द्योऽथवानरः ॥ अथवादिक्षुसर्वासुयथासङ्ख्येनलोकपान् ॥ ५६ ॥ पूजयंत्तुस्वनाम्नातुकुम्भैरेवविधानतः ॥ एवंसम्पूज्यदेवांस्तुलोकपालान्प्रसन्नधीः
॥ ५७ ॥ पश्चात्परीक्षिताञ्शिष्यान्बद्धनेत्रान्प्रवेशयेत् ॥ दग्ध्वाग्नेय्याधारणयावायुनाविधुनेत्ततः ॥ ५८ ॥ सोमेनाप्यायितान्कृत्वाश्रावयेत्समयां
स्ततः ॥ ननिन्द्याद्ब्राह्मणान्देवान्विष्णुंब्राह्मणमेवच ॥ ५९ ॥ इन्द्रमादित्यमग्निंचलोकपालान्ग्रहांस्तथा ॥ गुरुंचब्राह्मणंवापिमुनीन्द्रंपूर्वदीक्षितम्
॥६०॥एवंतुसमयाञ्श्राव्यपश्चाद्धोमंतुकारयेत् ॥ ॐनमोभगवतेब्रह्मणेसर्वरूपिणेहुंफट्स्वाहा ॥६१॥ षोडशाक्षरमन्त्रेणहोमयेज्ज्वलितेऽनले ॥ गर्भा
धानादिकास्सर्वाआहुतीस्सम्प्रदापयेत् ॥ ६२ ॥ तिसृभिस्तुव्याहृतिभिर्देवदेवस्यसन्निधौ ॥ होमान्तेदीक्षितःपश्चाद्दापयेद्गुरुदक्षिणाम् ॥ ६३ ॥
हस्त्यश्वयानशकटहेमधान्यादिकंनृप ॥ दापयेद्गुरवेप्राज्ञोमध्यमेमध्यमंतथा ॥ ६४ ॥ दापयेदपरेयुग्मंसहिरण्यन्तुलङ्गुरोः ॥ एवंकृतेतुयत्पु
ण्यंमहत्सञ्जायतेतथा ॥ ६५ ॥ तन्नशक्यंनिगदितुमपिवर्षशतैरपि ॥ दीक्षितोऽथपुराभूत्वापाद्मंवैशृणुयाद्यदि ॥ ६६ ॥ तनवेदाःपुराणा
निसर्वमन्त्रास्ससङ्ग्रहाः ॥ जप्तास्स्युःपुष्करेतीर्थेप्रयागेसिन्धुसागरे ॥ ६७ ॥ देवह्रदकुरुक्षेत्रेवाराणस्यांविशेषतः ॥ ग्रहणेविषुवेचैवयत्फलं

जपतांभवेत् ॥ ६८ ॥ फलंशतगुणंतच्चपुष्करस्थंपितामहम् ॥ दृष्ट्वाप्राप्नोतिविविधान्कामान्कामयतेयदि ॥ ६९ ॥ पूजांवैधानिकींकृत्वादीक्षितो
यःशृणोतिच ॥ देवाअपितपःकृत्वाध्यायन्तिचवदन्तिच ॥ ७० ॥ कदामेभारतेवर्षेजन्मस्यादितिपार्थिव ॥ दीक्षिताश्चभविष्यामःपाद्मंश्रोष्याम
हेकदा ॥ ७१ ॥ पाद्मंतुषोडशात्मानंन्यस्यदेहेकदावयम् ॥ यास्यामस्तुपरंस्थानंयद्गत्वानपुनर्भवेत् ॥ ७२ ॥ एवंजल्पन्तिविबुधामनसाचिन्तय
न्तिच ॥ ब्रह्मयज्ञंचकार्तिक्यांकदाद्रक्ष्यामहेनृप ॥ ७३ ॥ एवंतेविधिरुद्दिष्टोमयायंकुरुसत्तम ॥ देवगन्धर्वयक्षाणांसर्वदादुर्लभोह्यसौ ॥ ७४ ॥
एवंयोवेत्तितत्त्वेनयश्चपश्यतिमण्डलम् ॥ यश्चेमंशृणुयाच्चैवसर्वेमुक्ताइतिश्रुतिः ॥ ७५ ॥ अतःपरंप्रवक्ष्यामिरहस्यमिदमुत्तमम् ॥ येनलक्ष्मीर्धृ
तिस्तुष्टिःपुष्टिश्चापिभवेन्नृणाम् ॥ ७६ ॥ सर्वेग्रहास्सदासौम्याजायन्तेयेनपार्थिव ॥ आदित्यवारंहस्तेनपूर्वमादायभक्तितः ॥ ७७ ॥ भक्तैकेन
क्षिपेत्तावद्यावत्सप्तचसंख्यया ॥ ततस्तुसप्तमेपूर्णेकुर्याद्ब्राह्मणभोजनम् ॥ ७८ ॥ आदित्यंचैवसौवर्णंकृत्वायत्नेनमानवः ॥ रक्तवस्त्रयुगच्छत्रंछत्रिकां
पादुकेतथा ॥ ७९ ॥ उपानहौचदातव्येस्थापयेत्ताम्रभाजने ॥ घृतेनस्नपनंकृत्वासम्पूर्णाङ्गंद्विजातये ॥ ८० ॥ दापयेत्कृत्यविदुषेब्राह्मणाय
विशेषतः ॥ एवंकृतौफलंतस्यभवेदारोग्यमुत्तमम् ॥ ८१ ॥ द्रव्यसम्पत्समग्रास्तिरितिपौराणिकीक्रिया ॥ अविसंवादिनीचेयंशान्तिपुष्टिप्रदानृणाम्
॥ ८२ ॥ तद्वच्चित्रासुसङ्गृह्यसोमवारंविचक्षणः ॥ रात्रिभक्षःक्षिपेदष्टौसोमवारान्प्रयत्नतः ॥ ८३ ॥ प्रत्येकंब्राह्मणाभोज्यायथाशक्तिविचक्षणाः ॥
नवमेतुततःपूर्णेकुर्याद्ब्राह्मणभोजनम् ॥ ८४ ॥ वस्त्रयुग्मंचदातव्यंततःसोमंप्रदापयेत् ॥ कांस्यभाजनसंस्थंतुक्षीरसम्पूरितंततः ॥ ८५ ॥
तद्वच्छत्रंपादुकेचतथोपानत्समन्वितम् ॥ सम्पूर्णाङ्गायदातव्यंब्राह्मणायविशेषतः ॥ ८६ ॥ स्वात्यामङ्गारकंपूज्यक्षपयेन्नक्तभोजनैः ॥ अष्टवे
वंचयावच्चकुर्याद्ब्राह्मणभोजनम् ॥ ८७ ॥ अङ्गारकंचसौवर्णंस्थापितंताम्रभाजने ॥ दापयेद्ब्राह्मणायाथसम्पूर्णाङ्गायचैवहि ॥ ८८ ॥ नक्षत्रानु
क्रमेणैवक्षिपेन्नक्तानिसप्तवै ॥ अष्टमेतुक्रमात्खेटान्सौवर्णान्दापयेद्बुधः ॥८९॥ अग्निकार्यंचकुर्वीतयथादृष्टंविधानतः ॥ एवंकृतेभवेद्यद्वैतन्निबोधनरा
धिप ॥ ९० असौम्याश्चग्रहास्सर्वेसौम्यरूपाभवन्तिच ॥ सर्वेरोगाविनश्यन्तितुष्टिमायान्तिदेवताः ॥ ९१ ॥नविरुन्धन्तितंनागाःपितरस्तर्पितास्त
था॥दुस्स्वप्ननाशोभवतिशृण्वतांपठतांतथा ॥ ९२॥ यदिभौमोरविसुतोभास्करोराहुणासह ॥ केतुश्चमूर्ध्नितिष्ठन्तिरौद्राःपीडाकराग्रहाः ॥ ९३ ॥ अनेन
कृतमात्रेणससौभाग्याभवन्तिहि ॥ यएवंकुरुतेराजन्सदाभक्तिसमन्वितः ॥९४॥ तस्यसानुग्रहाःसर्वेशान्तिंगच्छन्तिनान्यथा ॥ शनैश्चरंराहुकेतूलो
हपात्रेषुविन्यसेत् ॥९५॥ लोहेनकारयेच्चैनान्ब्राह्मणेभ्यश्चदापयेत्॥कृष्णंवस्त्रयुगंदेयमेतेषांप्रीणनायवै ॥ ९६ ॥ सौवर्णाङ्गाश्चदातव्याःशान्तिश्रीविज

र्प्सुभिः॥व्रतान्तेसर्वएतेहिग्रहास्सौवर्गकानृप ॥९७॥ दातव्याःशान्तिमिच्छद्भिर्व्रतान्तेद्विजभोजनम्॥यथाशक्तिदक्षिणाचग्रहाणांप्रीतयेतथा ॥९८॥
अल्पायासेनराजेन्द्रसर्वान्कामानवाप्नुयात्॥ शङ्कराज्ज्ञानमन्विच्छेदारोग्यंभास्करात्तथा ॥९९॥ हुताशनाद्धनंहीच्छेद्गतिमिच्छेज्जनार्दनात् ॥ ब्राह्मं
पितामहाच्चैवसर्वजन्तुप्रशान्तिदम्॥१००॥भीष्मउवाच॥यस्त्वयाकथितोयज्ञोयज्वनांतुफलंमहत् ॥तथायुपस्स्वल्पतयाअन्यैःप्राप्तुंनशक्यते॥१॥
स्वल्पायासेनयत्पुण्यंसंवत्सरमुपोषणम् ॥ भवेत्तन्मेमुनिश्रेष्ठकथयस्वमहाफलम् ॥ २ ॥ पुलस्त्यउवाच ॥ इदमर्थंमहाराजश्वेतोराजामहायशाः ॥
वसिष्ठंपृष्टवान्प्रश्नंक्षुधयापीडितोभृशम् ॥ ३ ॥ आसीदिलावृतेवर्षेश्वेतोराजामहाबलः ॥ समहींसकलांजिग्येसप्तद्वीपांसपत्तनाम् ॥ ४ ॥ ब्रह्म
पुत्रोवसिष्ठश्चआसीत्तस्यपुरोहितः ॥ सकदाचिन्नृपश्रेष्ठोजित्वापरमधार्मिकः ॥ ५ ॥ पुरोहितमुवाचेदंवसिष्ठंजपतांवरम् ॥ श्वेतउवाच ॥ भगवन्न
श्वमेधानांसहस्रंकर्तुमुत्सहे ॥६॥ सुवर्णरूप्यरत्नानांदानंकर्तुंद्विजातिषु ॥ पृथिव्यामन्नदानंतुदातुंनेच्छामिवैगुरो ॥७॥ नान्नेनकिंचिद्दत्तेनदत्तेहन्नेद्विजे
प्रभो ॥ पुलस्त्यउवाच ॥ नकिंचिद्वस्त्वितिज्ञात्वानदत्तंतत्कदाचन ॥ ८ ॥ रक्तवस्त्रमलङ्कारंग्रामांश्चनगराणिच ॥ अददाद्ब्राह्मणेभ्योऽसौश्वेतोराजा
महायशाः ॥ ९ ॥ नान्नंजलंतेनराज्ञादत्तमासीत्कदाचन ॥ ततोऽश्वमेधैर्बहुभिर्यज्वासौनृपसत्तम ॥ ११० ॥ स्वर्गंगतःपुण्यजितंतपस्तस्वार्बुदत्र
यम् ॥ ब्राह्मींसलोकतांप्राप्तःसर्वालङ्कारभूषितः ॥ ११ ॥ नृत्यन्त्यप्सरसस्तत्रगायन्तेसिद्धयोषितः ॥ तुम्बुरुर्नारदस्तत्रद्वावप्यनुगतौसदा ॥ १२ ॥
अगायेतांमहाप्राज्ञौमुनयश्चतपोऽन्विताः ॥ वेदोक्तमन्त्रैःस्तुन्वन्तिअनेकक्रतुयाजिनम् ॥ १३ ॥ एवंविभवयुक्तस्यराज्ञस्तस्यमहात्मनः ॥ क्षुधयापी
डचतेदेहंतृष्णयाचविशेषतः ॥ १४ ॥ सतयापीडचमानस्तुक्षुधयाराजसत्तमः ॥ विमानेनाप्यसौस्वर्गंत्यक्त्वागाद्दक्षपर्वतम् ॥१५॥ यत्रात्ममूर्तिस्त
त्रागात्पुरादग्धामहावने ॥ तत्रास्थीनिस्वयंगृह्यलिहन्नास्तेसपार्थिवः ॥ १६ ॥ पुनर्विमानमारुह्यययौनाकंनराधिपः ॥ अथकालेनमहतासराजासं
शितव्रतः ॥ १७ ॥ स्वान्यस्थीनिलिहन्दृष्टोवसिष्ठेनपुरोधसा ॥ उक्तश्चकिन्नुराजेन्द्रस्वास्थिभक्षोनराधिप ॥ १८ ॥ एवमुक्तस्ततोराजावसिष्ठेनम
हर्षिणा ॥ उवाचवचनंचेदंश्वेतोराजाथतंमुनिम् ॥ १९ ॥ भगवंस्तृट्क्षुधार्तोऽहमन्नदानंपुरामया ॥ नदत्तंमुनिशार्दूलतेनमांक्षुत्प्रबाधते ॥ १२० ॥
एवमुक्तस्तदाराज्ञावसिष्ठोमुनिपुङ्गवः ॥ उवाचतंनृपंभूयोवाक्यमेतन्महामुनिः ॥ २१ ॥ किंतंकरोमिराजेन्द्रक्षुधितस्यविशेषतः ॥ वस्तुकस्यापि
किञ्चिद्धिनादत्तमुपतिष्ठति ॥ रत्नहेमप्रदानेनभोगवाञ्जायतेनरः ॥ २२ ॥ अन्नदानप्रदानेनसर्वकामैःप्रदीपितः ॥ तन्नदत्तंत्वयाराजन्स्तोकंमत्वान
राधिप ॥ २३ ॥ श्वेतउवाच ॥ अदत्तस्यचसम्भूतिर्यथाभवतिमेगुरो ॥ वसिष्ठत्वत्प्रसादेनतन्ममाचक्ष्वपृच्छतः ॥ २४ ॥ वसिष्ठउवाच ॥ अस्त्ये

कंकारणंयेनजायतेनात्रसंशयः ॥ तच्छृणुष्वनरव्याघ्रकथ्यमानंमयातव ॥ २५ ॥ आसीद्राजापुराकल्पेविनीताश्वेतिकीर्तितः ॥ सचाश्वमेधमारे
भयज्ञंकर्तुंवरंनृपः ॥ २६ ॥ यजनान्तेद्विजेन्द्रेभ्योदत्तंगोऽश्वादियाचितम् ॥ नान्नंदत्तंतेनकिञ्चित्स्वल्पंमत्वायथात्वया ॥ २७॥ ततःकालेनमहतामृ
तोऽसौजाह्नवीतटे ॥ मायापुर्यांविनीताश्वःसार्वभौमोऽभवन्नृपः ॥ २८ ॥ स्वर्गंचगतवान्सोऽपियथाराजाभवान्प्रभो ॥ असावपिक्षुधाविष्टएवमेवा
गतोऽभवत् ॥ २९ ॥ मर्त्यलोकेनदीतीरेगङ्गायांनीलपर्वते ॥ विमानेनार्कवर्णेनभास्वतादेववन्नृप ॥ १३० ॥ ददर्शतत्स्वकंदेहंतथास्वंचपुरोहितम्॥
होतारंब्राह्मणंनामयजन्तंजाह्नवीतटे ॥ ३१ ॥ तंदृष्ट्वासावपिपुनःपर्यपृच्छद्द्विजोत्तमम् ॥ क्षुधायाःकारणंराजन्सहोतातमुवाचह ॥ ३२ ॥ तिलधेनुं
चवैराजन्घृतधेनुंचसत्तम ॥ जलधेनुंचधेनुंचरसधेनुंचपार्थिव ॥ ३३ ॥ देहिशीघ्रंयेनभवांस्तृट्क्षुधावर्जितोदिवि ॥ रमेतयावदादित्यस्तपतेदिविच
न्द्रमाः ॥ ३४ ॥ एवमुक्तस्ततोराजातंपुनःपृष्टवानिदम् ॥ तिलधेनुस्थितिंब्रूहितथाकृत्वाददाम्यहम् ॥ ३५ ॥ पुरोहितउवाच ॥ विधानंतिलधेनो
स्तुतच्छृणुष्वनराधिप ॥ धेनुस्स्यात्षोडशाढक्याचतुर्भिर्वत्सकोभवेत् ॥ ३६ ॥ इक्षुदण्डमयाःपादादन्ताःपुष्पमयाःशुभाः ॥ नासागन्धमयी
तस्याजिह्वागुडमयींतथा ॥ ३७ ॥ पुच्छेस्रक्कल्पनीयास्याद्घण्टाभरणभूषिता ॥ ईदृशींकल्पयित्वातुस्वर्णशृङ्गींतुकल्पयेत् ॥ ३८ ॥ रौप्यखुरांकांस्य
दोहांपूर्वंधेनुविधानतः ॥ कृत्वातांब्राह्मणायाशुदापयेन्मन्त्रतोनृप ॥ ३९ ॥ स्थितांकृष्णाजिनेधेनुंवासोभिर्गोपितांशुभाम् ॥ सूत्रेणासूत्रितांकृत्वा
पञ्चरत्नसमन्विताम् ॥ १४० ॥ सर्वौषधिसमायुक्तांमन्त्रपूतांतुदापयेत् ॥ अन्नंमेजायतांसद्यःपानंसर्वरसास्तथा ॥ ४१ ॥ कामान्सम्पा
दयास्माकंतिलधेनोद्विजेऽर्पिता ॥ गृह्णामिदेवित्वांभक्त्याकुटुम्बार्थेविशेषतः ॥ ४२ ॥ देहिकामान्वितान्सर्वांस्तिलधेनोनमोऽस्तुते ॥ एवंविधान
तोदत्तातिलधेनुर्नृपोत्तम ॥ ४३ ॥ सर्वकामसमावाप्तिंकुरुतेनात्रसंशयः ॥ जलधेनुस्तथैवेहकुम्भैरेवप्रकल्पिता ॥ ४४ ॥ दत्तातुविधिनाकामा
न्सद्यःसर्वान्प्रयच्छति॥धेनुशतंतथादत्तंपूर्णिमानियमेनहि ॥४५॥ सावित्रीइववैस्वर्गेसर्वकामप्रदाभवेत्॥घृतधेनुस्तथादत्ताविधानेनविचक्षणैः॥४६॥
सर्वकामसमावाप्तिंकुरुतेकान्तिदाभवेत् ॥ रसधेनुस्तथादत्ताकार्तिकेमासिपार्थिव ॥ ४७ ॥ सर्वान्कामान्प्रयच्छेत्तुंनित्यंसागतिदाभवेत् ॥ एतत्तेस
र्वमाख्यातंसमासाद्बहुविस्तरम् ॥४८॥ अपारंफलमुद्दिष्टंब्रह्मणासर्वकर्मणा ॥ तृष्णयाक्षुधयायद्वापीडितोराजसत्तम ॥ ४९ ॥ तद्दानंकार्तिकेदेयंपूर्वं
देहिनराधिप॥ब्रह्माण्डंसर्वसम्पन्नंभूतरत्नौषधीयुतम् ॥१५०॥ देवदानवयक्षैश्चयुक्तमेतत्सदाविभो॥एतत्तुसकलंकृत्वासर्वतोरजतान्वितम् ॥५१॥ सुरत्न
सूर्यचन्द्राढ्यंकार्तिकेद्वादशीदिने ॥ अथवापञ्चदश्यांतुकार्तिकस्यैवनान्यतः ॥५२ ॥ पुरोहितायगुरवेदापयेद्भक्तिमान्नरः ॥ ब्रह्माण्डोदरवर्तीनियानि

भूतानिपार्थिव ॥५३॥ तानिदत्तानिवैतेनसमासात्कथितंतव ॥ यद्यज्ञैर्यजतोराजन्समाप्तवरदक्षिणैः॥५४॥सर्वंफलंतत्खण्डस्यब्रह्माण्डस्यविशेषतः ॥
यःपुनःसकलंचेदंब्रह्माण्डंप्रदिशेन्नरः ॥५५॥ तेनजप्तंहुतंदत्तंपठितंकीर्तितंभवेत् ॥ राजोवाच ॥ विधिंब्रह्माण्डदानस्यकृत्वातन्मोक्षभाग्भवेत् ॥५६॥
कालंदेशंविप्रतीर्थंसर्वंत्वंवदमेऽनघ ॥ कृतेनयेनसर्वस्यफलभागीभवाम्यहम् ॥५७॥ कुत्सितस्यास्यभावस्यक्षमस्मास्यादचिराच्चमे॥वसिष्ठउवाच ॥
एवंश्रुत्वाततोराजन्पुरोधास्तस्यसद्विजः ॥ ५८ ॥ ब्रह्माण्डंकारयामाससौवर्णंसर्वधातुभिः ॥ युतंनिष्कसहस्रेणपद्मंतत्रह्यकल्पयत् ॥ ५९ ॥तत्रब्रह्मा
तस्यमध्येपद्मरागैरलङ्कृतः ॥ सावित्र्याचैवगायत्र्याऋषिभिर्मुनिभिःसह ॥ १६० ॥ नारदाद्याःसुताःसर्वइन्द्राद्याश्चदिवौकसः ॥ सौवर्णविग्रहाः
सर्वेब्रह्मणस्तुपुरःसराः ॥६१॥ वराहरूपीभगवाँल्लक्ष्म्यासहसनातनः ॥ नीलंमरकतंचैवभूपायांतस्यकारयेत् ॥६२॥ गोमेदैस्तस्यवैशोभांकारयेतच
बुद्धिमान्॥मौक्तिकैश्चापिसोमस्यशोभांवज्रैर्दिवाकरे ॥६३॥ ग्रहाणांचैवसर्वेषांसुवर्णानिचदापयेत्॥स्वर्णात्सप्तगुणंरौप्यंरौप्यात्ताम्रंतथाविधम् ॥६४॥
ततःसप्तगुणंकायकांस्यंसप्तगुणंतथा ॥ कांस्यात्सप्तगुणंकार्यंत्रपुचैवनगाधिप ॥६५॥ त्रपुसप्तगुणंसीसंसीसाल्लोहंचकारयेत् ॥ सप्तद्वीपास्समुद्राश्चसप्त
वैकुलपर्वताः ॥ ६६ ॥ अनयासङ्ख्ययाकृत्वानिपुणैःशिल्पिभिस्ततः ॥ पादपादीनिभूतानिराजतान्येवकारयेत् ॥ ६७ ॥ आरण्यानिचसत्त्वानि
सौवर्णानिचकारयेत् ॥ वृक्षान्वनस्पतीन्गुल्मतृणपर्णानिवीरुधः ॥ ६८ ॥ सर्वंप्रकल्प्यविधिवत्तीर्थेदेयंविचक्षणः ॥ कुरुक्षेत्रेगयायांचप्रयागेऽमरक
ण्टके ॥ ६९ ॥ द्वारवत्यांप्रभासेचगङ्गाद्वारेचपुष्करे ॥ तीर्थेष्वेतेषुवैदेयंग्रहणेशशिसूर्ययोः ॥ १७० ॥ दिनच्छिद्रेषुसर्वेषुअयनेदक्षिणोत्तरे ॥
व्यतीपातेबहुगुणंविषुवेचविशेषतः ॥ ७१ ॥ दातव्यमेतद्राजेन्द्रविचारंनैवकारयेत् ॥ शालाग्निहोत्रिणंकृत्वासुरूपंचगुणान्वितम् ॥ ७२ ॥ सपत्नी
कंचसम्पूज्यभूषयित्वाचभूषणैः ॥ पुरोहितंमुख्यतमंकृत्वान्येचतथाद्विजाः ॥ ७३ ॥ चतुर्विंशद्गुणोपेताःसपत्नीकानिमन्त्रिताः ॥ अङ्गुलीयानि
चतथाकर्णवेष्टंचदापयेत् ॥ ७४ ॥ एवंविधांस्तुतान्पूज्यतेषामग्रेसुसंस्थितः ॥ अष्टाङ्गप्रणिपातेनप्रणम्यचपुनःपुनः ॥ ७५ ॥पुरोहितायपुरतःकृत्वा
वैकरसम्पुटम् ॥ यूयंवैब्राह्मणाःप्रीतामैत्रत्वेनानुगृह्णत ॥ ७६ ॥ सांमुख्येनद्विजश्रेष्ठाभूयःपूततरस्त्वह ॥ भवतांप्रीतियोगेनस्वयंप्रीतःपितामहः
॥ ७७ ॥ ब्रह्माण्डेनतुदत्तेनतोषंयातुजनार्दनः ॥ पिनाकपाणिभगवाञ्शक्रश्चत्रिदशेश्वरः ॥ ७८ ॥ एतेतोषंसमायान्तुअनुध्यानाद्द्विजोत्तमाः ॥
एवंस्तुत्वाततोराजाब्राह्मणान्वेदपारगान् ॥ ७९ ॥ ब्रह्माण्डंतुगुरोःप्रादात्सविधानंपुनःक्षणात् ॥ सर्वकामैस्ततस्तृप्तोययौस्वर्गंनराधिपः ॥ १८०॥
तेनैवगुरुणातच्चविभक्तंब्राह्मणैःसह ॥ दत्तंतेनापिचान्येभ्योब्रह्माण्डंचनगाधिप ॥ ८१ ॥ ब्रह्माण्डेभूमिदानेचग्राहीचैकोनवैभवेत् ॥ गृह्णन्दोषमवाप्नो

तिब्रह्महत्यांनसंशयः ॥ ८२ ॥ सर्वेषांचैवप्रत्यक्षंदातव्यंपरिकीर्त्यते ॥ दीयमानंचपश्यन्तितेऽपिपूताभवन्तिहि ॥ ८३ ॥ दर्शनादेवते
मुक्ताभवन्त्येवनसंशयः ॥ याभीमद्वादशीप्रोक्तास्वणतोयंमृगाजिनम् ॥ ८४ ॥ एतानिकृत्वापश्यन्तुदृष्टैरेतैःक्रियाफलम् ॥ अयत्नादेव
लभ्येतकर्तुश्चैवसलोकता ॥ ८५ ॥ सदागावःप्रणम्याश्चमन्त्रेणानेनपार्थिव ॥ नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच ॥ ८६ ॥ नमो
ब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ मन्त्रस्यचास्यस्मरणाद्गोदानफलमाप्नुयात् ॥ ८७ ॥ तस्मात्त्वमपिराजेन्द्रपुष्करेतीर्थउत्तमे॥कार्तिक्यांतु
विशेषेणगोदानफलमाप्स्यसि ॥ ८८ ॥ यत्किञ्चिद्क्रियतेपापंस्त्रियोवापुरुषस्यवा ॥ पुष्करेस्नानमात्रेणतदशेषंप्रणश्यति ॥ ८९ ॥ पृथिव्यांया
नितीर्थानिआसमुद्रात्तुभारत ॥ पुष्करेतान्युपायान्तिकार्तिक्यांतुविशेषतः ॥ १९० ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेब्रह्माण्डदानंनामषड्त्रिंश
त्तमोऽध्यायः ॥ ३६ ॥ भीष्मउवाच ॥ उक्तंभगवतासर्वपुराणाश्रयसंयुतम् ॥ तथाश्वेतेनब्रह्माण्डंगुरवेप्रतिपादितम् ॥ १ ॥ श्रुत्वैतत्कौतुकंजा
तंयथातेनास्थिलेह्नम् ॥ कृतंक्षुधापनोदार्थेअन्नदानाद्विनाद्विज ॥ २ ॥ तदहंश्रोतुमिच्छामिपृथिव्यांयेचपार्थिवाः ॥ अन्नदानाद्दिवंप्राप्ताःकृतवश्चा
न्नमूलकाः ॥ ३ ॥ कथंतस्यमतिर्नष्टाश्वेतस्यचमहात्मनः ॥ नदत्तंतेनान्नदानमृषिभिर्वानदर्शितम् ॥ ४ ॥ अहोमाहात्म्यमन्नस्यइहदत्तस्यय
त्फलम् ॥ परत्रभुज्यतेपुम्भिःस्वर्गश्चाक्षयतांव्रजेत् ॥ ५ ॥ अन्नदानंपरंविप्राःकीर्तयन्तिसदोत्थिताः ॥ अन्नदानात्सुरेन्द्रेणत्रैलोक्यमिहभुज्यते
॥ ६ ॥ शतक्रतुरितिप्रोक्तःसर्वैरेवद्विजोत्तमैः ॥ तेनावस्थांतत्सदृशींप्राप्तवांस्त्रिदशेश्वरः ॥ ७ ॥ दानादेवगतःस्वर्गंत्वत्तःसर्वंश्रुतंमया ॥ अप
रंचपुरावृत्तंनिवृत्तंयदिकर्हिचित् ॥ ८ ॥ भूयोऽपिश्रोतुमिच्छामितन्मेवदमहामते ॥ पुलस्त्यउवाच ॥ एतदाख्यानकंपूर्वमगस्त्येनमहात्मनो
॥ ९ ॥ रामायकथितंराजंस्तत्तेवक्ष्यामिसाम्प्रतम् ॥ भीष्मउवाच ॥ कस्मिन्वंशेसमुत्पन्नोरामोऽसौनृपसत्तमः ॥ १० ॥ यस्यागस्त्येनकथित
श्चेतिहासःपुरातनः ॥ पुलस्त्यउवाच ॥ रघुवंशेसमुत्पन्नोरामोनाममहाबलः ॥ ११ ॥ देवकार्यंकृतंतेनलङ्कायांरावणोहतः ॥ पृथिवीराज्यसंस्थ
स्यऋषयोऽभ्यागतागृहे ॥ १२ ॥ प्राप्तास्तेतुमहात्मानोराघवस्यनिवेशनम् ॥ प्रतीहारस्ततोराममगस्त्यवचनाद्रुतम् ॥ १३ ॥ आवेदया
मासऋषीन्प्राप्तांस्तांश्चत्वरान्वितः ॥ दृष्ट्वारामंद्वारपालःपूर्णचन्द्रमिवोदितम् ॥ १४ ॥ द्वारपालउवाच ॥ कौसल्यासुतभद्रंतेसुप्रभाताद्यशर्वरी ॥
द्रष्टुमभ्युदयन्तेऽद्यसम्प्राप्तोरघुनन्दन ॥ १५ ॥ अगस्त्योमुनिभिःसार्धंद्वारितिष्ठतितेनृप ॥ पुलस्त्यउवाच ॥ श्रुत्वाप्राप्तान्मुनीन्रामस्तान्भास्कर
समद्युतीन् ॥ १६ ॥ प्राहवाक्यंतदाद्वाःस्थंप्रवेशयत्वरान्वितः ॥ किमर्थंतुत्वयाद्वारिनिरुद्धामुनिसत्तमाः ॥ १७ ॥ रामवाक्यान्मुनींस्तांस्तु

प्रावेशयद्यथासुखम् ॥ दृष्ट्वातुतान्मुनीन्प्राप्तान्प्रत्युवाचकृताञ्जलिः ॥ १८ ॥ रामोऽभिवाद्यप्रणतआसनेषुन्यवेशयत् ॥ तेतुकाञ्चनचित्रेषुस्वा
स्तीर्णेषुसुखेषुच ॥ १९ ॥ कुशोत्तरेषुचासीनाःसमन्तान्मुनिपुङ्गवाः ॥ पाद्यमाचमनीयंचददौचार्घ्यंपुरोहितः ॥ २० ॥ रामेणकुशलंपृष्टाऋषयः
सर्वएवते ॥ महर्षयोवेदविदइदंवचनमब्रुवन् ॥ २१ ॥ ऋषयऊचुः॥कुशलंनोमहाबाहोसर्वत्ररघुनन्दन ॥ त्वांतुदिष्ट्याकुशलिनंपश्यामोहत
विद्विषम् ॥ २२ ॥ हृतासीताऽतिपापेनरावणेनदुरात्मना ॥ पत्नीतेरघुशार्दूलतस्याएवौजसाहतः ॥ २३ ॥ असहायेनचैकेनत्वया
रामरणेहतः ॥ यादृशंतंकृतंकर्मतस्यकर्तानविद्यते ॥ २४ ॥ इहसम्भाषितुंप्राप्तादृष्ट्वापूताःस्मसाम्प्रतम् ॥ दर्शनात्तवराजेन्द्रसर्वेजातास्तप
स्विनः ॥ २५ ॥ रावणस्यवधात्तेऽद्यकृतमश्रुप्रमार्जनम् ॥ दत्त्वापुण्यामिमांवीरजगत्यभयदक्षिणाम् ॥ २६ ॥ दिष्ट्यावर्धसिका
कुत्स्थजयेनामितविक्रम ॥ दृष्टस्सम्भाषितश्चासियास्यामश्चाश्रमान्स्वकान् ॥ २७ ॥ अरण्यंतेप्रविष्टस्यमयाचेन्द्रशरासनम् ॥ अर्पितंचाक्षयौतू
णौकवचंचपरन्तप ॥ २८ ॥ भूयोऽप्यागमनंकार्यमाश्रमेमेरघूद्वह ॥ पुलस्त्यउवाच ॥ एवमुक्त्वातुतेसर्वेमुनयोऽन्तर्हिताभवन् ॥ २९ ॥ गतेषुमु
निमुख्येषुरामोधर्मभृतांवरः ॥ चिन्तयामासतत्कार्यंकिंस्यान्मेमुनिनोदितम् ॥ ३० ॥ भूयोऽप्यागमनंकार्यमाश्रमेरघुनन्दन ॥ अवश्यमेवगन्त
व्यंमयागस्त्यस्यसन्निधौ ॥ ३१ ॥ श्रोतव्यंदेवगुह्यंतुकार्यमन्यच्चयद्वदेत् ॥ एवंचिन्तयतस्तस्यरामस्यामिततेजसः ॥ ३२ ॥ करिष्येनियतं
धर्मंधर्मोहिपरमागतिः ॥ सतुवर्षसहस्राणिदशराज्यमकारयत् ॥ ३३ ॥ ददतोजुह्वतश्चैवजग्मुस्तान्येकवर्षवत् ॥ प्रजाःपालयतस्तस्यराघव
स्यमहात्मनः ॥ ३४ ॥ एतस्मिन्नेवदिवसेवृद्धोजानपदोद्विजः ॥ मृतंपुत्रमुपादायराजद्वारमुपागतः ॥ ३५ ॥ उवाचविविधंवाक्यंस्नेहाक्षर
समन्वितम् ॥ ब्राह्मणउवाच ॥ दुष्कृतंकिन्नुमेपुत्रपूर्वदेहान्तरेकृतम् ॥ ३६ ॥ त्वामेकपुत्रंयदहंपश्यामिनिधनंगतम् ॥ अप्राप्तयौवनंबालंपञ्चवर्षं
गतायुषम् ॥ ३७ ॥ अकालेकालमापन्नंदुःखायममपुत्रक ॥ अकृत्वापितृकार्याणिगतोवैवस्वतक्षयम् ॥ ३८ ॥ रामस्यदुष्कृतंव्यक्तंयेनतेमृ
त्युरागतः ॥ बालवध्याब्रह्मवध्यास्त्रीवध्याचैवराघवम् ॥ ३९ ॥ प्रवेक्ष्यतिनसन्देहःसभार्येतुमृतेमयि ॥ पुलस्त्यउवाच ॥ शुश्रावराघवःसर्वं
दुःखशोकसमन्वितम् ॥ ४० ॥ निवार्यतंद्विजंरामोवसिष्ठंवाक्यमब्रवीत् ॥ रामउवाच ॥ किंमयाद्यचकर्तव्यंकार्यमेवंविधेस्थिते ॥ ४१ ॥ प्रा
णानहंजुहोम्यग्नौपर्वताद्वापतेह्यहम् ॥ कथंशुद्धिमहंयामिश्रुत्वाब्राह्मणभाषितम् ॥ ४२ ॥ पुलस्त्यउवाच ॥ वसिष्ठस्याग्रतःस्थित्वाराज्ञोदीनस्यनार
दः ॥ प्रत्युवाचश्रुतंवाक्यमृषीणांसन्निधौतदा ॥ ४३ ॥ नारदउवाच ॥ शृणुरामयथाऽकालेप्राप्तोवैबालसंक्षयः ॥ पुराकृतयुगेरामसर्वत्रब्राह्मणोत्त

रम् ॥ ४४ ॥ अब्राह्मणोनवैकश्चित्तपस्तपतिराघव ॥ अमृत्यवस्तदासर्वेजायन्तेचिरजीविनः ॥ ४५ ॥ त्रेतायुगेपुनःप्राप्तेब्रह्मक्षत्रमनुत्तमम् ॥ अध
र्मोद्वापरेतेषांवैश्याञ्शूद्रांस्तथाविशत् ॥ ४६ ॥ एवंनिरन्तरंजुष्टमुद्भूतमनृतंपुनः ॥ अधर्मस्यत्रयःपादाएकोधर्मस्यचागतः ॥ ४७ ॥ ततःसर्वेभृशं
त्रस्तावर्णाब्राह्मणपूर्वकाः ॥ भूयःपादस्तुधर्मस्यद्वितीयःसमपद्यत ॥४८॥ तस्मिन्द्वापरसंज्ञेतुतपोवैश्यंसमाविशत् ॥ युगत्रयस्यवैधर्म्यंधर्मस्यप्रतिति
ष्ठति ॥ ४९ ॥ कलिसंज्ञेततःप्राप्तेवतमानेयुगेऽन्तिमे ॥ अधर्मश्चानृतंचैववधातेनरर्षभ ॥ ५० ॥ नशूद्रोलभतेकर्तुंतपउग्रंनरर्षभ ॥ भविताशूद्रयो
न्यांतुतपश्चर्याकलौयगे ॥ ५१ ॥ सतेविपयपर्यन्तेराजन्नुग्रतरन्तपः ॥ शूद्रस्तपतिदुर्बुद्धिस्तेनबालवधःकृतः ॥ ५२ ॥ यस्याधर्ममकार्यंवाविषयेपा
र्थिवस्यहि ॥ पुरेवाराजशार्दूलकुरुतेदुर्मतिर्नरः ॥ ५३ ॥ क्षिप्रंसनरकंयातियावदाभूतसम्प्लवम् ॥ चतुर्थंतस्यपापस्यभागमश्नातिपार्थिवः ॥५४॥
सत्वंपुरुषशार्दूलगच्छस्वविषयंस्वकम् ॥ दुष्कृतंयत्रपश्येथास्तत्रयत्नंसमाचर ॥ ५५ ॥ एवंतेधर्मवृद्धिश्चबलस्यवर्धनंतथा ॥ भविष्यतिनरश्रे
ष्ठबालस्यास्यचजीवनम् ॥ ५६ ॥ पुलस्त्यउवाच ॥ नारदेनैवमुक्तस्तुसाश्चर्योरघुनन्दनः ॥ प्रहर्षमतुलंलेभेलक्ष्मणंचेदमब्रवीत् ॥ ५७ ॥ राम
उवाच ॥ गच्छसौम्यद्विजश्रेष्ठंसमाश्वासयलक्ष्मण ॥ बालस्यचशरीरंत्वंतैलद्रोण्यांनिधापय ॥ ५८ ॥ गन्धैश्चपरमोदारैस्तैलैश्चैवसुगन्धिभिः ॥
यथानशीर्यतेबालस्तथासौम्यविधीयताम् ॥ ५९ ॥ यथाशरीरंगुप्तंस्याद्बालस्याक्लिष्टकर्मणः ॥ विपत्तिःपरिभेदोवानभवेत्ततथाकुरु ॥ ६० ॥
पुलस्त्यउवाच॥तथासन्दिश्यसौमित्रिंलक्ष्मणंशुभलक्षणम् ॥ मनसापुष्पकंदध्यावागच्छेतिमहायशाः ॥६१॥ इङ्गितंतत्तुविज्ञायकामगंहेमभूषितम् ॥
आजगाममुहूर्तात्तुसमीपंराघवस्यहि ॥ ६२ ॥ सोऽब्रवीत्प्राञ्जलिर्वाक्यमहमस्मिनराधिप ॥ अग्रेतवमहाबाहोकिङ्करःसमुपस्थितः ॥ ६३ ॥
भाषितंसुचिरंश्रुत्वापुष्पकस्यनराधिप ॥ अभिवाद्यमहर्षींस्तान्विमानंसोऽध्यरोहत ॥ ६४ ॥ धनुर्गृहीत्वातूणौचखड्गंचापिमहाप्रभम् ॥ नि
क्षिप्यनगरेवीरौसौमित्रिभरतावुभौ ॥ ६५ ॥ प्रायात्प्रतीचींत्वरितोविचिन्वन्सुसमाहितः ॥ उत्तरामगमत्पश्चाद्दिशंहिमवदाश्रिताम् ॥ ६६ ॥
पूर्वामपिदिशांगत्वातथापश्यन्नराधिपः ॥ सर्वांशुद्धसमाचारामादर्शमिवनिर्मलाम् ॥ ६७ ॥ ततोदिशंसमाक्रामद्दक्षिणांरघुनन्दनः ॥ शैल
स्यचोत्तरेपार्श्वेददर्शसुमहत्सरः ॥ ६८ ॥ तस्मिन्सरसितप्यन्तंतापसंसुमहत्तपः ॥ ददर्शराघवोभीमंलम्बमानमधोमुखम् ॥ ६९ ॥ तमुपा
गम्यकाकुत्स्थस्तप्यमानंतुतापसम् ॥ उवाचराघवोवाक्यंधन्यस्त्वममरप्रभ ॥ ७० ॥ कस्यांयोनौतपोवृद्धिर्वर्ततेदृढनिश्चय ॥ अहंदाश
रथीरामःपृच्छामित्वांकुतूहलात् ॥ ७१ ॥ कोऽर्थोऽध्यवसितस्तुभ्यंस्वर्गलोकोऽथवेतरः ॥ किमर्थंतप्यसेवात्वंश्रोतुमिच्छामितापस ॥ ७२ ॥

ब्राह्मणोवासिभद्रंतेक्षत्रियोवाथदुर्जयः ॥ वैश्यस्तृतीयवर्णोवाशूद्रोवासत्यमुच्यताम् ॥ ७३ ॥ तपःसत्यात्मकंनित्यंस्वर्गलोकपरिग्रहे ॥
सात्विकंराजसंचैवतच्चसत्यात्मकंतपः ॥ ७४ ॥ जगदुपकारहेतुर्हिसृष्टंतद्वैविरिञ्चिना ॥ रौद्रंक्षत्रियतेजोजंतत्तुराजसमुच्यते ॥ ७५ ॥ पर
स्योत्सादनार्थायतच्चासुरमुदाहृतम् ॥ अज्ञानिनिहुतेयोवाअसृग्दिग्धानिभागशः ॥ ७६ ॥ पञ्चाग्निंसाधयेद्वापिसिद्धिंवामृत्युमेववा ॥ आ
सुरोह्येषतेभावोनचमेत्वंद्विजोमतः ॥ ७७ ॥ सत्यंतंवदतःसिद्धिरनृतेनास्तिजीवितम् ॥ तस्यतद्भाषितंश्रुत्वारामस्याक्लिष्टकर्मणः ॥ ७८ ॥
अवाक्छिरास्तथाभूतोवाक्यमेतदुवाचह ॥ शूद्रतापसउवाच ॥ स्वागतंतेनृपश्रेष्ठचिराद्दृष्टोऽसिराघव ॥ ७९ ॥ पुत्रभूतोऽस्मितेचाहंपितृभूतोऽ
सिमेऽनघ ॥ अथवानैतदेवंहिसर्वेषांनृपतिःपिता ॥ ८० ॥ सत्वमर्च्योऽसिभोराजन्वयंतेविषयेतपः ॥ चरामस्तत्रभागोऽस्तिपूर्वंसृष्टःस्वय
म्भुवा ॥ ८१ ॥ नधन्याःस्मोवयंरामधन्यस्त्वमसिपार्थिव ॥ यस्यतेविषयेह्येवंसिद्धिमिच्छन्तितापसाः ॥ ८२ ॥ तपसात्वंमदीयेनसिद्धिमाप्नुहिरा
घव ॥ यदेतद्भवताप्रोक्तंयोनौकस्यांतुतेतपः ॥ ८३ ॥ शूद्रयोनिप्रसूतोऽहंतपउग्रंसमास्थितः ॥ देवत्वंप्रार्थयेरामस्वशरीरेणसुव्रत ॥ ८४ ॥ नमिथ्या
हंवदेभूपदेवलोकजिगीषया॥शूद्रंमांविद्धिकाकुत्स्थशम्बूकंनामनामतः॥८५॥पुलस्त्यउवाच॥भाषतस्तस्यकाकुत्स्थःखड्गंतुरुचिरप्रभम्॥निष्कृष्यको
शाद्विमलंशिरश्चिच्छेदराघवः ॥ ८६ ॥ तस्मिञ्शूद्रेहतेदेवाःसेन्द्राश्चाग्निपुरोगमाः ॥ साधुसाध्वितिकाकुत्स्थंप्रशशंसुर्मुहुर्मुहुः ॥ ८७ ॥ पुष्प
वृष्टिश्चमहतीदेवानांसुसुगन्धिनी ॥ आकाशाद्विप्रमुक्तातुराघवंसर्वतोऽकिरत् ॥ ८८ ॥ सुप्रीताश्चाब्रुवन्देवारामंवाक्यविदांवरम् ॥ देवाऊचुः ॥
सुरकार्यमिदंसौम्यकृतंतेरघुनन्दन ॥ ८९ ॥ गृहाणचवरंरामयमिच्छसिमहाव्रत ॥ पुलस्त्यउवाच ॥ देवानांभाषितंश्रुत्वाराघवःसुसमाहितः
॥ ९० ॥ उवाचप्राञ्जलिर्वाक्यंसहस्राक्षंपुरन्दरम् ॥ रामउवाच ॥ यदिदेवाःप्रसन्नामेवरार्होयदिवाप्यहम् ॥ ९१ ॥ कर्मणायदिमेप्रीताद्विजपुत्रः
सजीवतु ॥ वरमेतद्धिभवतांकाङ्क्षितंपरमंहिमे ॥ ९२ ॥ ममापराधाद्बालोऽसौब्राह्मणस्यैकपुत्रकः ॥ अप्राप्तकालःकालेननीतोवैवस्वतक्षयम्
॥ ९३ ॥ तंजीवयतभद्रंवोनानृतीस्यामहंगुरोः ॥ द्विजस्यसंश्रुतोह्यर्थोजीवयिष्यामितेसुतम् ॥ ९४ ॥ मदीयेनायुषाबालंपादेनार्द्धेनवा
सुराः ॥ जीवेदयंवरोमह्यंवरकोटयधिकोवृतः ॥ ९५ ॥ पुलस्त्यउवाच ॥ राघवस्यतुतद्वाक्यंश्रुत्वाविबुधसत्तमाः ॥ प्रत्यूचुस्तेमहात्मानं
प्रीताःप्रीतिसमन्विताः ॥ ९६ ॥ देवाऊचुः ॥ निर्वृतोभवकाकुत्स्थब्राह्मणस्यैकपुत्रकः ॥ जीवितंप्राप्तवान्भूयःसमेतश्चापिबन्धुभिः ॥ ९७ ॥
यस्मिन्मुहूर्तेकाकुत्स्थशूद्रोऽयंविनिपातितः ॥ तस्मिन्मुहूर्तेसहसाजीवेनसमयुज्यत ॥ ९८ ॥ स्वस्तिप्राप्नुहिभद्रंतेसाधयामःपरंतप ॥ अग-

स्त्यस्याश्रमपदेद्दृष्टारःस्ममहामुनिम् ॥ ९९ ॥ सतथंनिप्रतिज्ञायदेवानांरघुनन्दनः ॥ आरुरोहविमानंतंपुष्पकंहेमभूषितम् ॥ १०० ॥ इति
श्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेशूद्रतापसवधोनामसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ पुलस्त्यउवाच ॥ ततोदेवाःप्रयातास्तेविमानैर्बहुभिस्तदा ॥
रामोऽप्यनुजगामाशुकुम्भयोनेस्तपोवनम् ॥ १ ॥ उक्तंभगवतातेनभूयोऽप्यागमनंकथाः ॥ पूर्वमेवसभायांचयोमांद्रष्टुंसमागतः ॥ २ ॥ तदहंदेवता
देशात्तत्कार्यार्थेमहामुनिम् ॥ पश्यामितंमुनिंगत्वादेवदानवपूजितम् ॥ ३ ॥ उपदेशंचमेतुष्टःस्वयंदास्यतिसत्तमः ॥ दुःखीयेनपुनर्म
र्त्येनभवामिकदाचन ॥ ४ ॥ पितादशरथोमह्यंकौसल्याजननीतथा ॥ सूर्यवंशेसमुत्पन्नस्तथाप्यवंसुदुःखितः ॥ ५ ॥ राज्यकालेवनेवासो
भार्ययाचानुजेनच ॥ हरणंचापिभार्यायारावणेनकृतंमम ॥ ६ ॥ असहायेनतुमयातीर्त्वासागरमुत्तमम् ॥ रुद्धातुतांपुरींसर्वांकृत्वातस्यकुलक्षयम्
॥७॥ दृष्टासीतामयात्यक्तादेवानांतुपुरस्तदा ॥ शुद्धांतांमांतथोचुस्तमयासीतातथागृहम् ॥ ८ ॥ समानीताप्रीतिमतालोकवाक्याद्विसर्जिता ॥ वनेव
सतिसादेवीपुरेचाहंवसामिवै ॥ ९ ॥ जातोऽहमुत्तमेवंशउत्तमोऽहंधनुष्मताम् ॥ उत्तमंदुःखमापन्नोहृदयंनैवभिद्यते ॥ १० ॥ वज्रसारस्य
सारेणधात्राहंनिर्मितोध्रुवम् ॥ इदानींब्राह्मणादेशाद्भ्रमामिधरणीतले ॥ ११ ॥ तपःस्थितस्तुशूद्रोऽसौमयापापोनिपातितः ॥ देववाक्यात्तु
मेभूयःप्राणोमेहृदिसंस्थितः ॥ १२ ॥ पश्यामितंमुनिंवन्द्यंजगतोऽस्यहितेरतम् ॥ दृष्टेनमेनथादुःखंनाशमेष्यतिसत्वरम् ॥ १३ ॥ उदयेन
सहस्रांशोर्हिमंयद्वद्विलीयते ॥ तद्वन्मेदुःखसम्प्राप्तिःसर्वथानाशमेष्यति ॥ १४ ॥ दृष्ट्वाचदेवान्सम्प्राप्तानगस्त्योभगवानृषिः ॥ अर्घ्य
मादायसुप्रीतःसर्वांस्तानभ्यपूजयत् ॥ १५ ॥ ततुगृह्यततःपूजांसम्भाष्यचमहामुनिम् ॥ जग्मुस्तेत्रिदशाहृष्टानाकपृष्ठंसहानुगाः ॥ १६ ॥
गतेषुतेषुकाकुत्स्थःपुष्पकादवरुह्यच ॥ अभिवादयितुंप्राप्तःसोऽगस्त्यमृषिमुत्तमम् ॥ १७ ॥ रामउवाच ॥ सुतोदशरथस्याहंभवन्तम
भिवादितुम् ॥ आगतोवैमुनिश्रेष्ठसौम्येनेक्षस्वचक्षुषा ॥ १८॥ निर्धूतपापस्त्वांदृष्ट्वाभवामीहनसंशयः ॥ पुलस्त्यउवाच ॥एतावदुक्त्वासमुनिमभि
वाद्यपुनःपुनः ॥ १९ ॥ कुशलंभृत्यवर्गस्यमृगाणांतनयस्यच ॥ भगवद्दर्शनाकाङ्क्षीशूद्रंहत्वात्विहागतः ॥ २० ॥ अगस्त्यउवाच ॥ स्वागतंते
रघुश्रेष्ठजगद्वन्द्यसनातन ॥ दर्शनात्तवकाकुत्स्थपूतोऽहंमुनिभिःसह ॥ २१ ॥ त्वत्कृतेरघुशार्दूलगृहाणार्घमहाद्युते ॥ स्वागतंनरशार्दूलदिष्ट्या
प्राप्तोऽसिशत्रुहन् ॥ २२ ॥ त्वंहिनित्यंबहुमतोगुणैर्बहुभिरुत्तमैः ॥ अतस्त्वंपूजनीयोवैममनित्यंहृदिस्थितः ॥ २३ ॥ सुराहिकथयन्तित्वांशूद्र
घातिनमागतम् ॥ ब्राह्मणस्यचधर्मेणत्वयावैजीवितःसुतः ॥ २४ ॥ उष्यतांचेहभगवन्सकाशेममराघव ॥ प्रभातेपुष्पकेणासिगन्तायोध्यां

महामते ॥ २५ ॥ इदंचाभरणंसौम्यसुकृतंविश्वकर्मणा ॥ दिव्यंदिव्येनवपुषादीप्यमानंस्वतेजसा ॥ २६ ॥ प्रतिगृह्णीष्वराजेन्द्रमत्प्रियंकुरु
राघव ॥ लब्धस्यहिपुनर्दानेसुमहत्फलमुच्यते ॥ २७ ॥ त्वंहिशक्तःपरित्रातुंसेन्द्रानपिसुरोत्तमान् ॥ तस्मात्प्रदास्येविधिवत्प्रतीच्छस्वनरर्षभ
॥ २८ ॥ पुलस्त्यउवाच ॥ अथोवाचमहाबाहुरिक्ष्वाकूणांमहारथः ॥ कृताञ्जलिर्मुनिश्रेष्ठंस्वंचधर्ममनुस्मरन् ॥ २९ ॥ श्रीरामउवाच ॥ प्रति
ग्रहोवैभगवंस्तवमेऽत्रविगर्हितः ॥ क्षत्रियेणकथंविप्रप्रतिग्राह्यंविजानता ॥ ३० ॥ ब्राह्मणेनतुयद्दत्तंतन्मेत्वंवक्तुमर्हसि ॥ सपुत्रोगृहवान
स्मिसमर्थोऽस्मिमहामुने ॥ ३१ ॥ आपदाचनचाक्रान्तःकथंग्राह्यःप्रतिग्रहः ॥ भार्यामेसुचिरंनष्टानचान्याममविद्यते ॥ ३२ ॥
केवलंदोषभागीचभवामीहनसंशयः ॥ कष्टांचैवदशांप्राप्यक्षत्रियोऽपिप्रतिग्रहम् ॥ ३३ ॥ कुर्वन्नदोषमाप्नोतिमनुरेवात्रकारणम् ॥
वृद्धौचमातापितरौसाध्वीभार्याशिशुःसुतः ॥ ३४ ॥ अप्यकार्यशतंकृत्वाभर्तव्यामनुरब्रवीत् ॥ नाहंप्रतीच्छेविप्रर्षेत्वयादत्तंप्रतिग्रहम्
॥ ३५ ॥ नचमेभवताकोपःकार्योवैमुसुरपूजित ॥ ३६ ॥ अगस्त्यउवाच ॥ नचप्रतिग्रहेदोषोगृहीतःपार्थिवैर्नृप ॥ भवान्वैतारणेशक्तस्त्रैलो
क्यस्यापिराघव ॥ ३७ ॥ तारयब्राह्मणंरामविशेषेणतपस्विनम् ॥ तस्मात्प्रदास्यविधिवत्प्रतीच्छस्वनराधिप ॥ ३८ ॥ रामउवाच ॥
क्षत्रियेणकथंविप्रप्रतिग्राह्यंविजानता ॥ ब्राह्मणेनयथादत्तंतन्मेत्वंवक्तुमर्हसि ॥ ३९ ॥ अगस्त्यउवाच ॥ आसन्कृतयुगेरामब्रह्मभूतेपुरा
तने ॥ अपार्थिवाःप्रजाःसर्वाःपुराणांचचतुर्मुखम् ॥ ४० ॥ ताःप्रजादेवदेवेशंराजार्थंसमुपागमन् ॥ सुराणांविद्यतेराजादेवदेवःशतक्रतुः
॥ ४१ ॥ श्रेयसेऽस्मासुलोकेशपार्थिवंकुरुसाम्प्रतम् ॥ यस्मिन्पूजांप्रयुञ्जानाःपुरुषाभुञ्जतेमहीम् ॥ ४२ ॥ ततोब्रह्मासुरश्रेष्ठोलोकपालान्सवास
वान् ॥ समाहूयाब्रवीत्सर्वांस्तेजोभागोऽत्रयुज्यताम् ॥ ४३ ॥ ततोददुर्लोकपालाश्चतुर्भागंस्वतेजसा ॥ अक्षयश्चततोब्रह्मायतोजातोऽक्षयोनृप
॥ ४४ ॥ तंब्रह्मालोकपालानामंशंपुंसामयोजयत् ॥ ततोनृपस्तदातासांप्रजानांक्षेमपण्डितः ॥ ४५ ॥ तत्रैन्द्रेणतुभागेनसर्वानाज्ञा
पयेन्नृपः ॥ वारुणेनचभागेनसर्वान्पुष्णातिदेहिनः ॥ ४६ ॥ कौबेरेणतथांशेनत्वर्थान्दिशतिपार्थिवः ॥ यश्चयाम्योनृपभागस्तेनशास्ति
चवैप्रजाः ॥ ४७ ॥ तत्रचैन्द्रेणभागेननरेन्द्रोऽसिरघूत्तम ॥ प्रतिगृह्णीष्वाभरणंतारणार्थेममप्रभो ॥ ४८ ॥ पुलस्त्यउवाच ततोरामःप्रजाग्राहमुनेर्ह
स्तान्महात्मनः ॥ दिव्यमाभरणंचित्रंप्रदीप्तमिवभास्करम् ॥ ४९ ॥ प्रतिगृह्यततोऽगस्त्याद्राघवःपरवीरहा ॥ निरीक्ष्यसुचिरंकालंविचार्यच
पुनःपुनः ॥ ५० ॥ मौक्तिकानिविचित्राणिधात्रीफलसमानिच ॥ जाम्बूनदनिबद्धानिवज्रविद्रुमनीलकैः ॥ ५१ ॥ पद्मरागैःसगोमेधैर्वैडूर्यैः

पुष्परागकैः ॥ सुनिबद्धंसुविभक्तंसुकृतंविश्वकर्मणा ॥ ५२ ॥ दृष्ट्वाप्रीतिसमायुक्तोभूयश्चेदंव्यचिन्तयत् ॥ नेदृशानिचरत्नानिमयादृष्टानिकानि
चित् ॥ ५३ ॥ उपशोभानिबद्धानिपृथ्वीमूल्यसमानिच ॥ विभीषणस्यलङ्कायांनदृष्टानिमयापुरा ॥ ५४ ॥ इतिसञ्चिन्त्यमनसाराघव
स्तमृषिंपुनः ॥ आगमंतस्यदिव्यस्यप्रष्टुंसमुपचक्रमे ॥ ५५ ॥ रामउवाच ॥ अत्यद्भुतमिदंब्रह्मन्नप्राप्यंचमहीक्षिताम् ॥ कथंभगवताप्राप्तंकुतोवा
केननिर्मितम् ॥ ५६ ॥ कुतूहलवशाच्चैवपृच्छामित्वांमहामते ॥ करतलेस्थितेरत्नेकरमध्यंप्रकाशते ॥ ५७ ॥ अधमंतद्विजानीयात्सर्वशा
स्त्रेषुगर्हितम् ॥ दिशःप्रकाशयेद्यत्तन्मध्यमंमुनिसत्तम ॥ ५८ ॥ ऊर्ध्वगंत्रिशिखंयत्स्यादुत्तमंतदुदाहृतम् ॥ एतान्युत्तमजातीनिऋषिभिः
कीर्तितानितु ॥ ५९ ॥ आश्चर्याणांबहूनांहिदिव्यानांभगवान्निधिः ॥ एवंवदतिकाकुत्स्थेमुनिर्वाक्यमथाब्रवीत् ॥ ६० ॥ अगस्त्यउवाच ॥
शृणुरामपुरावृत्तंपुरात्रेतायुगेमहत् ॥ द्वापरेसमनुप्राप्तेवनेयद्दृष्टवानहम् ॥ ६१ ॥ आश्चर्यंसुमहाबाहोनिबोधरघुनन्दन ॥ पुरात्रेतायुगेह्या
सीदरण्यंबहुविस्तरम् ॥ ६२ ॥ समन्ताद्योजनशतंमृगव्याघ्रविवर्जितम् ॥ तस्मिन्निष्पुरुषेऽरण्येचिकीर्षुस्तपउत्तमम् ॥ ६३ ॥ अहमाक्रमितुं
सौम्यतदरण्यमुपागतः ॥ तस्यारण्यस्यमध्यंतुयुक्तंमूलफलैःसदा ६४ ॥ शाकैर्बहुविधाकारैर्नानारूपैःसुकाननैः ॥ तस्यारण्यस्यमध्येतुपञ्चयो
जनमायतम् ॥ ६५ ॥ हंसकारण्डवाकीर्णंचक्रवाकोपशोभितम् ॥ तत्राश्चर्यंमयादृष्टंसरःपरमशोभितम् ॥ ६६ ॥ विसारिकच्छपाकीर्णंवकप
ङ्क्तिगणैर्युतम् ॥ समीपेतस्यसरसस्तपस्तप्तुंगतःपुरा ॥ ६७ ॥ देशंपुण्यमुपेत्यैवंसर्वहिंसाविवर्जितम् ॥ तत्राहमवसंरात्रिंनैदाघींपुरुषर्षभ ॥
॥ ६८ ॥ प्रभातेपुनरुत्थायसरस्तदुपचक्रमे ॥ अथापश्यंशवमहमस्पृष्टजरसंक्वचित् ॥ ६९ ॥ तिष्ठन्तंपरयालक्ष्म्यासरसोनातिदूरतः ॥ तदर्थं
चिन्तयानोऽहंमुहूर्तमिवराघव॥७०॥अस्यतीरेनवैप्राणीकोवाप्येषसुरर्षभः ॥ मुनिर्वापार्थिवोवापिकमुनिःपार्थिवोऽपिवा ॥ ७१ ॥ अथवापार्थिवसुत
स्तस्यैवंसम्भवःकृतः ॥ अतीतेऽहनिरात्रौवाप्रातर्वापिमृतोयदि ॥ ७२ ॥ अवश्यंतुमयाज्ञेयासरसोऽस्यविनिष्क्रिया ॥ यावदेवंस्थितश्चाहं
चिन्तयानोरघूत्तम ॥ ७३ ॥ अथापश्यंमुहूर्तात्तुदिव्यमद्भुतदर्शनम् ॥ विमानंपरमोदारंहंसयुक्तंमनोजवम् ॥ ७४ ॥ पुरस्तत्रसहस्रंतुविमानेऽ
प्सरसांनृप ॥ गन्धर्वाश्चैवतत्संख्यारमयन्तिवरंनरम् ॥ ७५ ॥ गायन्तिदिव्यगेयानिवादयन्तितथापरे ॥ अथापश्यंनरंतस्माद्विमानादवरुह्यतु
॥ ७६ ॥ शवमांसंभक्षयन्तंस्नात्वारघुकुलोद्वह ॥ ततोभुक्त्वायथाकामंसमांसंबहुपीवरम् ॥ ७७ ॥ अवतीर्यसरःशीघ्रमारुरोहदिवंपुनः ॥ तमहं
देवसङ्काशंश्रियापरमयान्वितम् ॥ ७८ ॥ भोभोस्स्वर्गिन्महाभागपृच्छामित्वांकथंत्विदम् ॥ जुगुप्सितस्तवाहारोगतिश्चेयंतवोत्तमा ॥ ७९ ॥

यदिगुह्यंनचैतत्तेकथयत्वद्यमेभवान् ॥ कामतःश्रोतुमिच्छामिकिमेतत्परमंवचः ॥ ८० ॥ कोभवान्वदसन्देहमाहारश्चविगर्हितः ॥ त्वये
दंभुज्यतेसौम्यकिमर्थंक्वचवर्तसे ॥ ८१ ॥ कस्यायमैश्वरोभावःशवत्वेनविनिर्मितः ॥ आहारंचकथंनिन्द्यंश्रोतुमिच्छामितत्त्वतः ॥ ८२ ॥ श्रुत्वा
चभाषितंतत्रममरामसतांवर ॥ प्राञ्जलिःप्रत्युवाचेदंसस्वर्गीरघुनन्दन ॥ ८३ ॥ श्वेतउवाच ॥ शृणुष्वाद्ययथावृत्तंममेदंसुखदुःखजम् ॥ कामो
हिदुरतिक्रम्यःशृणुयत्पृच्छसेद्विज ॥८४॥ पुरावैदर्भकोराजापितामेहिमहायशाः॥वासुदेवइतिख्यातस्त्रिषुलोकेषुधार्मिकः ॥८५॥ तस्यपुत्रद्वयंब्रह्मन्द्वा
भ्यांस्त्रीभ्यामजायत॥अहंश्वेतइतिख्यातोयवीयान्सुरथोऽभवत् ॥८६॥ पितर्युपरतेतस्मिन्पौरामामभ्यषेचयन्॥तत्राहंकारयन्राज्यंधर्मेचासंसमाहितः
॥८७॥एवंवर्षसहस्राणिबहूनिसमुपाव्रजन् ॥ ममराज्यंकारयतःपरिपालयतःप्रजाः ॥८८॥ सोऽहंनिमित्तेकस्मिंश्चिद्वैराग्येणद्विजोत्तम ॥ मरणंहृदये
कृत्वातपोवनमुपागमम् ॥८९॥ सोऽहंवनमिदंरम्यंभृशंपक्षिविवार्जितम्॥प्रविष्टस्तपआस्थातुमस्यैवसरसोऽन्तिके ॥९०॥ राज्येऽभिषिच्यसुरथंभ्रातरं
तंनराधिपम् ॥ इदंसरःसमासाद्यतपस्तप्तंसुदारुणम् ॥ ९१ ॥ दशवर्षसहस्राणितपस्तप्त्वामहावने ॥ शुभंतुभवनंप्राप्तोब्रह्मलोकमनामयम् ॥९२॥ स्व
र्गस्थमपिमांब्रह्मन्क्षुत्पिपासेद्विजोत्तम ॥ अबाधेतांभृशंचाहमभवंव्यथितेन्द्रियः ॥ ९३ ॥ ततस्त्रिभुवनश्रेष्ठमवोचंवैपितामहम् ॥ भगवन्स्वर्गलोकोऽ
यंक्षुत्पिपासाविवर्जितः॥९४॥ कस्येयंकर्मणःपक्तिःक्षुत्पिपासेयतोहिमे ॥ आहारःकश्चमेदेवब्रूहित्वंश्रीपितामह ॥९५ ॥ ततःपितामहःसम्यक्चिरंध्या
त्वामहामुने॥मामुवाचततोवाक्यंनास्तिभोज्यंस्वदेहजम्॥९६॥ऋतेस्वानितुमांसानिभक्षयत्वंतुनित्यशः॥स्वशरीरंत्वयापुष्टंकुर्वतातपउत्तमम् ॥९७॥
नादत्तंजायतेतातश्वेतपश्यमहीतले ॥ आग्रहाद्भिक्षमाणायभिक्षापिप्राणिनेपुरा ॥ ९८ ॥ नहिदत्तागृहेभ्रान्त्यामोहादतिथयेतदा ॥ तेनस्वर्गगतस्या
पिक्षुत्पिपासेतवाधुना ॥ ९९ ॥ सत्वंप्रपुष्टमाहारैःस्वशरीरमनुत्तमम् ॥ भक्षयस्वचराजेन्द्रसातेतृप्तिर्भविष्यति ॥१००॥ एवमुक्तस्ततोदेवंब्रह्माणमह
मुक्तवान्॥ भक्षितेचस्वकेदेहेपुनरन्यन्नमेविभो ॥ १ ॥ क्षुधानिवारणनवदेहस्यास्यविनोदनम्॥खादाम्यक्षयंदेवप्रियंमेनहिजायते ॥ २ ॥ ततोऽब्र
वीत्पुनर्ब्रह्मातवदेहोऽक्षयःकृतः ॥ दिनेदिनेतेपुष्टात्माशवःश्वेतभविष्यति ॥ ३ ॥ यावद्वर्षशतंपूर्णंस्वमांसंखादभोनृप ॥ यदागच्छतिचागस्त्यः
श्वेतारण्यंमहातपाः ॥ ४ ॥ भगवानतिदुधर्षस्तदाकृच्छ्राद्विमोक्ष्यसे ॥ सहितारयितुंशक्तःसेन्द्रानपिसुरासुरान्॥५॥ आहारंकुत्सितंचेमंराजर्षेकिंपुन
स्तव ॥ सुरकार्यंमहत्तेनसुकृतंतुमहात्मना ॥ ६ ॥ उदधिंनिर्जलंकृत्वादानवाश्चनिपातिताः ॥ विन्ध्यश्चादित्यविद्वेषाद्वर्धमानोनिवारितः
॥ ७ ॥ लम्बमानामहीचैषागुरुत्वेनाधिवासिता ॥ दक्षिणादिग्दिवंयातात्रैलोक्यंविषमंस्थितम् ॥ ८ ॥ मयागत्वासुरैःसार्द्धंप्रेषितोदक्षिणां

दिशम् ॥ समांकुरुमहाभागगुरुत्वेनजगत्समम् ॥९॥ एवंचतेनमुनिनास्थित्वासर्वाधरासमा ॥ कृताराजेन्द्रमुनिनाएवमद्यापिदृश्यते ॥ ११० ॥
सोऽहंभगवतःश्रुत्वादेवदेवस्यभाषितम् ॥ भुञ्जेचकुत्सिताहारंस्वशरीरमनुत्तमम् ॥ ११ ॥ पूर्णवर्षशतंचाद्यभोजनंकुत्सितंचमे ॥ क्षयंनाभ्येति
तद्विप्रतृप्तिश्चापिममोत्तमा ॥ १२ ॥ तंमुनिंकृच्छ्रसन्तप्तश्चिन्तयामिदिवानिशम् ॥ कदावैदर्शनंमह्यंसमुनिर्दास्यतेवने ॥ १३ ॥ एवंमेचि
न्तयानस्यगतंवर्षशतन्त्विह ॥ सोऽगस्त्योहिगतिर्ब्रह्मन्मुनिर्मेभविताध्रुवम् ॥ १४ ॥ नगतिर्भवितामह्यंकुम्भयोनिमृतेद्विजम् ॥ श्रुत्वेत्थंभाषितं
रामदृष्ट्वाहारंचकुत्सितम् ॥ १५ ॥ कृपयापरयायुक्तस्तंनृपंस्वर्गगामिनम् ॥ करोम्यहंसुधाभोज्यंनाशयामिचकुत्सितम् ॥ १६ ॥ चिन्तयन्नित्य
वोचंतमगस्त्यःकिंकरिष्यति ॥ अहमेतत्कुत्सितंतेनाशयामिमहामते ॥ १७ ॥ ईप्सितंप्रार्थयस्वास्मान्मनःप्रीतिकरंपरम् ॥ सस्वर्गीमांततःप्राहक
थंब्रह्मवचोऽन्यथा ॥१८॥ कर्तुंमुनेमयाशक्यंनचान्यस्तारयिष्यति ॥ ऋतेवैकुम्भयोनिंतंमैत्रावरुणसम्भवम् ॥१९॥ अपृष्टोऽपिमयाब्रह्मन्नेवमूचेपिता
महः ॥ एवंब्रुवाणंतंश्वेतमुक्तवानहमस्मिसः ॥ १२० ॥ आगतस्तवभाग्येनदृष्टोऽहंनात्रसंशयः ॥ ततःस्वर्गीसमांज्ञात्वादण्डवत्पतितोभुवि ॥२१॥
तमुत्थाप्यततोरामाब्रवंकिंतेकरोम्यहम् ॥ राजोवाच ॥ आहारात्कुत्सिताद्ब्रह्मंस्तारयस्वाद्यदुष्कृतात् ॥ २२ ॥ येनलोकोऽक्षयःस्वर्गोभवि
तात्वत्कृतेनमे ॥ ततःप्रतिग्रहोदत्तोजगद्वन्द्यनृपेणहि ॥ २३ ॥ भवान्मामनुगृह्णातुप्रतीच्छस्वप्रतिग्रहम् ॥ इदमाभरणंसौम्यतारणार्थंद्विजोत्तम
॥ २४ ॥ ब्रह्मर्षेप्रतिगृह्णीष्वप्रसादंकर्तुमर्हसि ॥ इहगाश्चसुवर्णंचधनंवस्त्रसमन्वितम् ॥ २५ ॥ भक्ष्यंभोज्यंचविप्रर्षेददाम्याभरणंत्वहम् ॥
सर्वकामप्रदंतुभ्यंसर्वान्भोगांश्चवैद्विज ॥ २६ ॥ तारणेतुभवान्मह्यंप्रसादंकर्तुमर्हति ॥ तस्याहंस्वर्गिणोवाक्यंश्रुत्वादुःखसमन्वितम् ॥ २७ ॥
कृतामतिस्तारणायनलोभाद्रघुनन्दन ॥ गृहीतेभूषणेराममममहस्तगतेतदा ॥ २८ ॥ मानुषःपौर्विकोदेहस्तदानष्टोऽस्यभूपते ॥ प्रनष्टेतुशरीरेचराजर्षिः
परयामुदा ॥ २९ ॥ मयोक्तोऽसौविमानेनजगामत्रिदिवंपुनः॥ तेनमेशक्रतुल्येनदत्तमाभरणंशुभम् ॥१३०॥ तस्मिन्निमित्तेकाकुत्स्थदत्तमद्भुतकर्मणा
श्वेतोवैदर्भकोराजातदाभूद्गतकल्मषः ॥ १३१ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेरामागस्त्यसंवादोनामाष्टात्रिंशोऽध्यायः ॥३८॥ पुलस्त्यउवाच ॥
तदद्भुततमंवाक्यंश्रुत्वाचरघुनन्दनः ॥ गौरवाद्विस्मयाच्चापिभूयःप्रष्टुंप्रचक्रमे ॥ १ ॥ रामउवाच ॥ भगवंस्तद्वनंघोरंयत्रासौतप्तवांस्तपः ॥ श्वेतोवैद
र्भकोराजातदद्भुतमभूत्कथम् ॥ २ ॥ विषमंतद्वनंराजाशून्यंमृगविवर्जितम् ॥ प्रविष्टस्तपआस्थातुंकथंवदमहामुने ॥ ३ ॥ समन्ताद्योजनशतंनिर्म
नुष्यमभूत्कथम् ॥ भवान्कथंप्रविष्टस्तद्येनकार्येणतद्वद ॥ ४ ॥ अगस्त्यउवाच ॥ पुराकृतयुगेराजामनुर्दण्डधरःप्रभुः ॥ तस्यपुत्रोऽथना

म्नासीदिक्ष्वाकुरमितद्युतिः ॥ ५ ॥ तंपुत्रंपूर्वजंराज्येनिक्षिप्यभुविसंमतम् ॥ पृथिव्यांराजवंशानांभवराजेत्युवाचह ॥ ६ ॥ तथेतिचप्रतिज्ञातंपितुः
पुत्रेणराघव ॥ ततःपरमसंहृष्टःपुनस्तंप्रत्यभाषत ॥७॥ मनुरुवाच ॥ प्रीतोऽस्मिपरमोदारकर्मणातेनसंशयः ॥ दण्डेनचप्रजारक्षनचदण्डमकारणम्
॥ ८ ॥ अपराधिषुयोदण्डःपात्यतेमानवैरिह ॥ सदण्डोविधिवन्मुक्तःस्वर्गंनयतिपार्थिवम् ॥ ९ ॥ तस्माद्दण्डेमहाबाहोयत्नवान्भवपुत्रक ॥
धर्मस्तेपरमोलोकेकृतएवंभविष्यति ॥ १० ॥ अगस्त्यउवाच ॥ इतितंबहुसंदिश्यमनुपुत्रंसमाधिना ॥ :जगामत्रिदिवंहृष्टोब्रह्मलोकमनुत्तमम्
॥ ११ ॥ जनयिष्येकथंपुत्रानितिचिन्तापरोऽभवत् ॥ कर्मभिर्बहुभिस्तैस्तैस्ससुतैस्संयुतोऽभवत् ॥ १२ ॥ तोषयामासपुत्रैस्सपितॄन्देवसुतोपमैः ॥
सर्वेषामुत्तमस्तेषांकनीयान्रघुनन्दन ॥ १३ ॥ शूरश्चकृतविद्यश्चगुरुश्चजनपूजया ॥ नामतस्याथदण्डेतिपिताचक्रेसबुद्धिमान् ॥ १४ ॥ भवि
ष्यद्दण्डपतनंशरीरेतस्यवीक्ष्यच ॥ सम्पश्यमानस्तंदोषंघोरंपुत्रस्यराघव ॥ १५ ॥ सविन्ध्यनीलयोर्मध्येराज्यमस्यददौप्रभुः ॥ सदण्डस्तत्र
राजाभूद्रम्येपर्वतमूर्द्धनि ॥ १६ ॥ पुरंचाप्रतिमंतेननिवेशायतथाकृतम् ॥ नामतस्यपुरस्याथमधुमत्तमितिस्वयम् ॥ १७ ॥ तथादेशेनसम्पन्नः
शूरोवासमथाकरोत् ॥ एवंराजासतद्राज्यंचकारसपुरोहितः ॥ १८ ॥ प्रहृष्टसुप्रजाकीर्णंदेवराजोयथादिवि ॥ ततःसदण्डःकाकुत्स्थबहुवर्षगणा
युतम् ॥ १९ ॥ अकारयत्तुधर्मात्माराज्यंनिहतकण्टकम् ॥ अथकालेतुकस्मिंश्चिद्राजाभार्गवमाश्रमम् ॥ २० ॥ रमणीयमुपाक्रामच्चैत्रमासेमनोरमे॥
तत्रभार्गवकन्यांतुरूपेणाप्रतिमांभुवि ॥ २१ ॥ विचरन्तींवनोद्देशेदण्डोऽपश्यदनुत्तमाम् ॥ उत्तुङ्गपीवरींश्यामांचन्द्राभवदनांशुभाम् ॥ २२ ॥
सुनासांचारुसर्वाङ्गींपीनोन्नतपयोधराम् ॥ मध्येक्षामांचविस्तीर्णांदृष्ट्वातांकुरुतेमुदम् ॥ २३ ॥ एकवस्त्रांवनेचैकांप्रथमेयौवनेस्थिताम् ॥ सतांदृष्ट्वा
त्वधर्मेणअनङ्गशरपीडितः ॥ २४ ॥ अभिगम्यसुविश्रान्तांकन्यांवचनमब्रवीत् ॥ दण्डउवाच ॥ कुतस्त्वमसिसुश्रोणिकस्यचासिसुशोभने ॥२५ ॥
पीडितोऽहमनङ्गेनपृच्छामित्वांसुशोभने ॥ त्वयामेऽपहृतंचित्तंदर्शनादेवसुन्दरि ॥ २६ ॥ इदंतेवदनंरम्यंमुनीनांचित्तहारकम् ॥ यद्यहंनलभेभोक्तुं
मृतंमामवधारय ॥ २७ ॥ त्वयाहृताममप्राणामांजीवयसुलोचने ॥ दासोऽस्मितेवरारोहेभक्तंमांभजशोभने ॥ २८ ॥ अगस्त्यउवाच ॥
तस्यैवंतुब्रुवाणस्यमदोन्मत्तस्यकामिनः ॥ भार्गवीप्रत्युवाचेदंवचःसविनयंनृपम् ॥ २९ ॥ अरजोवाच ॥ भार्गवस्यसुतांविद्धिशुक्रस्याक्लिष्टक
र्मणः ॥ अरजांनामराजेन्द्रज्येष्ठामाश्रमवासिनः ॥ ३० ॥ शुक्रःपितामेराजेन्द्रत्वंचशिष्योमहात्मनः ॥ धर्मतोभगिनीचाहंभवामि
नृपनन्दन ॥ ३१ ॥ एवंविधंवचोवक्तुंनत्वमर्हसिपार्थिव ॥ अन्येभ्योऽपिसुदुष्टेभ्योरक्ष्याचाहंसदात्वया ॥ ३२ ॥ क्रोधनोमेपितारौद्रो

भस्मत्वंत्वांसमानयेत् ॥ अथवाराजधर्मेणासम्बन्धंकुरुषेबलात् ॥ ३३ ॥ पितरंयाचयस्वत्वंधर्मदृष्टेनकर्मणा ॥ वरयस्वनृपश्रेष्ठपितरं मेमहाद्युतिम् ॥ ३४ ॥ अन्यथाविपुलंदुःखंतवघोरंभवेद्ध्रुवम् ॥ क्रुद्धोहिमेपितासर्वंत्रैलोक्यमभिनिर्दहेत ॥३५॥ अगस्त्यउवाच ॥ ततोऽशुभंमहाघोरंश्रुत्वादण्डःसुदारुणम् ॥ प्रत्युवाचमदोन्मत्तःशिरसाभिनतःपुनः ॥३६॥ दण्डउवाच ॥ प्रसादंकुरुसुश्रोणिकामोन्मत्तस्यकामिनि ॥ त्वयारुद्धां ममप्राणाविशीर्यन्तेशुभानने ॥ ३७ ॥ त्वांप्राप्यवैरंमेऽत्रास्तुवधोवापिमहत्तरः ॥ भक्तंभजस्वमांभीरुत्वयिभक्तिर्हिमेपरा ॥ ३८ ॥ अगस्त्यउवाच ॥ एवमुक्त्वातुतांकन्यांबलात्सङ्गृह्यबाहुना ॥ अन्येनराज्ञाहस्तेनविवस्त्रासातथाकृता ॥ ३९ ॥ अङ्गमङ्गेसमाश्लिष्यमुखेचैवमुखंकृतम् ॥ विस्फुरन्तींयथाकामंमैथुनायोपचक्रमे ॥ ४० ॥ तमनर्थंमहाघोरंदण्डःकृत्वासुदारुणम् ॥ नगरंस्वंजगामाशुमदोन्मत्तइवद्विपः ॥ ४१ ॥ भार्गवीरुदतीदीनाआश्रमस्याविदूरतः ॥ प्रत्यपालयदुद्विग्नापितरंदेवसम्मितम् ॥ ४२ ॥ समुहूर्तादुपस्पृश्यदेवर्षिरमितद्युतिः ॥ स्वमाश्रमंशिष्यवृतंक्षुधार्तःसन्न्यवर्तत ॥ ४३ ॥ सोऽपश्यदरजांदीनांरजसासमभिप्लुताम् ॥ चन्द्रस्यघनसंयुक्तांज्योत्स्नामिवपराजिताम् ॥ ४४ ॥ तस्यरोषःसमभवत्क्षुधार्तस्यमहात्मनः ॥ निर्दहन्निवलोकांस्त्रींस्तान्शिष्यान्समुवाचह ॥ ४५ ॥ भार्गवउवाच ॥ पश्यध्वंविपरीतस्यदण्डस्यादीर्घदर्शिनः ॥ विपत्तिंघोरसङ्काशांदीप्तामग्निशिखामिव ॥ ४६ ॥ यन्नाशंदुर्गतिंप्राप्तस्सानुगश्चनसंशयः ॥ यस्तुदीप्तहुताशस्यअर्चिःसंस्पृष्टवानिह ॥ ४७ ॥ यस्मात्सकृतवान्पापमीदृशंघोरसम्मितम् ॥ तस्मात्प्राप्स्यतिदुर्मेधाःपांसुवर्षमनुत्तमम् ॥ ४८ ॥ कुराजादेशसंयुक्तःसभृत्यबलवाहनः ॥ पापकर्मसमाचारोवधंप्राप्स्यतिदुर्मतिः ॥ ४९ ॥ समन्ताद्योजनशतंविषयंचास्यदुर्मतेः ॥ धुनोतुपांसुवर्षेणमहतापाकशासनः ॥ ५० ॥ सर्वसत्त्वानियानीहजङ्गमस्थावराणिवै ॥ सर्वेषांपांसुवर्षेणक्षयःक्षिप्रंभविष्यति ॥ ५१ ॥ दण्डस्यविषयोयावत्तावत्सवनमाश्रमम् ॥ पांसुवर्षमिवाकस्मात्सप्तरात्रंभविष्यति ॥ ५२ ॥ अगस्त्यउवाच ॥ इत्युक्त्वाक्रोधसन्तप्तस्तमाश्रमनिवासिनम् ॥ जनंजनपदस्यान्तेस्थीयतामित्युवाचह ॥ ५३ ॥ उक्तमात्रेउशनसाआश्रमावसथोजनः ॥ क्षिप्रंतुविषयात्तस्मात्स्थानंचक्रेचबाह्यतः ॥ ५४ ॥ तंतथोक्त्वामुनिजनमरजामिदमब्रवीत् ॥ भार्गवउवाच ॥ आश्रमेत्वंसुदुर्मेधेवसचेहसमाहिता ॥ ५५ ॥ इदं योजनपर्यन्तमाश्रमंरुचिरप्रभम् ॥ अरजेविरजास्तिष्ठकालमत्रसमाश्वस्तम् ॥ ५६ ॥ अगस्त्यउवाच ॥ श्रुत्वानियोगंविप्रर्षेररजाभार्गवीतदा ॥ तथेतिपितरंप्राहभार्गवंभृशदुःखिता॥ ॥ ५७ ॥ इत्युक्त्वाभार्गवोवासंतस्मादन्यमुपाक्रमत् ॥ सप्ताहेभस्मसाद्भूतंयथोक्तंब्रह्मवादिना ॥ ५८ ॥ तस्माद्दण्डस्यविषयोविन्ध्यशैलस्य

मानुष ॥ शप्तोह्युशनसागमतदाभूद्धर्षणेकृते ॥ ५९ ॥ ततःप्रभृतिकाकुत्स्थदण्डकारण्यमुच्यते ॥ एतत्तेसर्वमाख्यातंयन्मांपृच्छसिराघव
॥ ६० ॥ सन्ध्यामुपासितुंवीरसमयोह्यतिवर्तते ॥ एतेमहर्षयोरामपूर्णकुम्भाःसमन्ततः ॥ ६१ ॥ कृतोदकानरव्याघ्रपूजयन्तिदिवाकरम् ॥
सर्वैर्ऋषिभिरभ्यस्तैःस्तोत्रैर्ब्रह्मादिभिःकृतैः ॥६२ ॥ रविरस्तंगतोरामगत्वोदकमुपस्पृश ॥ पुलस्त्यउवाच ॥ ऋषेर्वचनमादायरामःसन्ध्यामुपासितुम्
॥ ६३ ॥ उपचक्रामतत्पुण्यंससरोरघुनन्दनः ॥ अथतस्मिन्वनोद्देशेरम्येपादपशोभिते ॥ ६४ ॥ नदीपुण्येगिरिवरेकोकिलाशतमण्डिते ॥ नाना
पक्षिरवोद्यानेनानामृगसमाकुले ॥ ६५ ॥ सिंहव्याघ्रसमाकीर्णेनानाद्विजसमावृते ॥ गृध्रोलूकौप्रवसितौवहून्वर्षगणानपि ॥ ६६ ॥ अथो
लूकस्यभवनंगृध्रःपापविनिश्चयः ॥ ममेदमितिकृत्वासौकलहंतेनचाकरोत् ॥ ६७ ॥ राजासर्वस्यलोकस्यरामोराजीवलोचनः ॥ तंप्रपद्यावहै
शीघ्रंकस्यैतद्भवनंभवेत् ॥ ६८ ॥ गृध्रोलूकौप्रपद्येतांजातकोपावमर्षिणौ ॥ रामंप्रपद्यतौशीघ्रंकलिव्याकुलचेतसौ ॥ ६९ ॥ तौपरस्प
रविद्वेषौस्पृशतश्चरणौतथा ॥ अथदृष्ट्वाराघवेन्द्रंगृध्रोवचनमब्रवीत् ॥ ७० ॥ गृध्रउवाच ॥ सुराणामसुराणांचत्वंप्रधानोमतोमम ॥ बृहस्पतेश्च
शुक्राच्चत्वंविशिष्टोमहामतिः . ॥ ७१ ॥ परावरज्ञोभूतानांमर्त्येशक्रइवापरः ॥ दुर्निरीक्षोयथासूर्योहिमवानिवगौरवे ॥ ७२ ॥ सागर
श्चासिगाम्भीर्येलोकपालोयमोह्यसि ॥ क्षान्त्याधरण्यातुल्योऽसिशीघ्रत्वेह्यनिलोपमः ॥ ७३ ॥ गुरुस्त्वंसर्वसम्पन्नोविष्णुरूपोऽसिराघव ॥
अमर्षीदुर्जयोजेतासर्वास्त्रविधिपारगः ॥ ७४ ॥ शृणुत्वंममदेवेशविज्ञाप्यंनरपुङ्गव ॥ ममालयंपूर्वकृतंबाहुवीर्येणवैप्रभो ॥ ७५ ॥ उलूको
हरतेराजंस्त्वत्समीपेविशेषतः ॥ ईदृशोऽयंदुराचारस्त्वदाज्ञालङ्घकोनृप ॥ ७६ ॥ प्राणान्तिकेनदण्डेनरामशासितुमर्हसि ॥ एवमुक्तेतु
गृध्रेणउलूकोवाक्यमब्रवीत् ॥ ७७ ॥ शृणुदेवममज्ञाप्यमेकचित्तोनराधिप ॥ सोमाच्छक्राच्चसूर्याच्चधनदाच्चयमात्तथा ॥ ७८ ॥ जायतेवै
नृपोरामकिञ्चिद्भवतिमानुषः ॥ त्वंतुसर्वमयोदेवोनारायणपरायणः ॥ ७९ ॥ प्रोच्यतेसोमताराजन्सम्यक्कार्येविचारिते ॥ सम्यग्रक्षसि
तापेभ्यस्तमोघ्नोह्यियतोभवान् ॥ ८० ॥ दोषेदण्डात्प्रजानांत्वंयतःपापभयापहः ॥ दाताप्रहर्तागोप्ताचतेनेन्द्रइवनोभवान् ॥ ८१ ॥ अधृ
ष्यःसर्वभूतेषुतेजसाचानलोमतः ॥ अभीक्ष्णंतपसेपापांस्तेनत्वंरामभास्करः ॥ ८२ ॥ साक्षाद्वित्तेशतुल्यस्त्वमथवाधनदाधिकः ॥ चित्ता
यत्तातुपत्नीश्रीर्नित्यंतेराजसत्तम ॥ ८३ ॥ धनदस्यतुकोशेनधनदस्तेनवैभवान् ॥ समःसर्वेषुभूतेषुस्थावरेषुचरेषुच ॥ ८४ ॥ शत्रौमित्रेचतेदृष्टिः
समन्ताद्यातिराघव ॥ धर्मेणशासनंनित्यंव्यवहारविधिक्रमैः ॥ ८५ ॥ यस्यरुष्यसिवैराममृत्युस्तस्याभिधीयते ॥ गीयसेतेनवैराजन्यम

इत्यभिविश्रुतः ॥ ८६ ॥ यश्चासौमातुषोभावोभवतोनृपसत्तम ॥ आनृशंस्यपरोराजासर्वेषुकृपयान्वितः ॥ ८७ ॥ दुर्बलस्यत्वनाथस्य
राजाभवतिवैबलम् ॥ अचक्षुषोभवेच्चक्षुरमतेषुमतिर्भवेत् ॥ ८८ ॥ अस्माकमपिनाथस्त्वंश्रूयतांममधार्मिक ॥ भवतातत्रमन्तव्यंयथैते
किलपक्षिणः ॥ ८९ ॥ योऽस्मन्नाथःसपक्षीन्द्रोभवतोविनियोज्यकः॥ अस्वाम्यंदेवनास्माकंसन्निधौभवतःप्रभो ॥ ९० ॥ भवतैवकृतंपूवभूतग्रामंचतु
र्विधम् ॥ ममालयप्रविष्टस्तुगृध्रोमांबाधतेनृप ॥ ९१ ॥ भवान्देवमनुष्येषुशास्तावैनरपुङ्गव ॥ पुलस्त्यउवाच ॥ एतच्छ्रुत्वातुवैरामःसचिवानाहूय
त्स्वयम् ॥ ९२ ॥ विष्टिर्जयन्तोविजयःसिद्धार्थोराष्ट्रवर्धनः ॥ अशोकोधर्मपालश्चसुमन्त्रश्चमहाबलः ॥ ९३ ॥ एतेरामस्यसचिवाराज्ञोदश
रथस्यच ॥ नीतियुक्तामहात्मानःसर्वशास्त्रविशारदाः ॥ ९४ ॥ सुशान्ताश्चकुलीनाश्चनयेमन्त्रेचकोविदाः ॥ तानाहूयसधर्मात्मापुष्पकादव
रुह्यच ॥ ९५ ॥ गृध्रोलूकौविवदन्तौपृच्छतिस्मरघूत्तमः ॥ रामउवाच ॥ कतिवर्षाणिभोगृध्रतवेदंनिलयंकृतम् ॥ ९६ ॥ एतन्मेकौतुकंब्रू
हियदिजानासितत्त्वतः ॥ एतच्छ्रुत्वावचोगृध्रोबभाषेराघवंस्थितम् ॥ ९७ ॥ गृध्रउवाच ॥ इयंवसुमतीराममानुषैर्बहुबाहुभिः ॥ उच्छ्रितैरा
चितासर्वातदाप्रभृतिमद्गृहम् ॥ ९८ ॥ उलूकस्त्वब्रवीद्रामंपादपैरुपशोभिता ॥ यदैवपृथिवीराजंस्तदाप्रभृतिमेगृहम् ॥ ९९ ॥ एतच्छ्रुत्वातु
रामोवैसभासदउवाचह ॥ १०० ॥ रामउवाच ॥ नसासभायत्रनसन्तिवृद्धाःवृद्धानतेयेनवदन्तिधर्मम् ॥ नासौधर्मोयत्रनचास्तिसत्यंनतत्स
त्यंयच्छलमभ्युपैति ॥ १ ॥ येतुसभ्याःसभांगत्वातूष्णींध्यायन्तआसते ॥ यथाप्राप्तंनब्रुवतेसर्वेतेऽनृतवादिनः ॥ २ ॥ नवक्तिचश्रुतंयश्चका
मक्रोधात्तथाभयात् ॥ सहस्रंवारुणाःपाशाःप्रतिमुञ्चन्तितंनरम् ॥ ३ ॥ तेषांसंवत्सरेपूर्णेपाशएकःप्रमुच्यते ॥ तस्मात्सत्यंतुवक्तव्यंजानतास
त्यमञ्जसा ॥ ४ ॥ एतच्छ्रुत्वातुसचिवाराममेवाब्रुवंस्तदा ॥ उलूकःशोभतेराजन्नतुगृध्रोमहामते ॥ ५ ॥ त्वंप्रमाणंमहाराजराजाहिपरमागतिः ॥
राजमूलाःप्रजाःसर्वाराजाधर्मःसनातनः ॥ ६ ॥ शास्ताराजानृणांयेषांनतेगच्छन्तिदुर्गतिम् ॥ वैवस्वतेनमुक्ताश्चभवन्तिपुरुषोत्तमाः ॥ ७ ॥ सचि
वानांवचःश्रुत्वारामोवचनमब्रवीत् ॥ श्रूयतामभिधास्यामिपुराणंयदुदाहृतम् ॥ ८ ॥ द्यौःसचन्द्रार्कनक्षत्रासपर्वतमहीद्रुमम् ॥ सलिलार्णवसं
मग्नंत्रैलोक्यंसचराचरम् ॥ ९ ॥ एकमेवतदाह्यासीत्सर्वमेकमिवाम्बरम् ॥ पुनर्भूःसहलक्ष्म्याचविष्णोर्जठरमाविशत् ॥ ११० ॥ तांनिगृह्यमहा
तेजाःप्रविश्यसलिलार्णवम् ॥ सुष्वापहिकृतात्मासबहुवर्षशतान्यपि ॥ ११ ॥ विष्णौसुप्तेततोब्रह्माविवेशजठरंततः ॥ बहुस्रोतंचतंज्ञात्वामहा
योगीसमाविशत् ॥ १२ ॥ नाभ्यांविष्णोःसमुद्भूतंपद्मंहेमविभूषितम् ॥ सतुनिर्गम्यवैब्रह्मायोगीभूत्वामहाप्रभुः ॥ १३ ॥ सिसृक्षुःपृथिवींवायुंप

वतांश्चमहीरुहान् ॥ तदन्तराःप्रजाःसर्वामानुषांश्चसरीसृपान् ॥ १४ ॥ जरायुजाण्डजान्सर्वान्ससर्जसमहातपाः ॥ तस्यगात्रसमुत्पन्नःकैटभो
मधुनासह ॥ १५ ॥ दानवौतौमहावीर्यौघोरौलब्धवरौतदा ॥ दृष्ट्वाप्रजापतिंतत्रक्रोधाविष्टावुभौनृप ॥ १६ ॥ वेगेनमहताभोक्तुंस्वयम्भु
वमधावताम् ॥ दृष्ट्वासत्त्वानिसर्वाणिनिस्सरन्तिपृथक्पृथक् ॥ १७ ॥ ब्रह्मणासंस्तुतोविष्णुर्हत्वातौमधुकैटभौ ॥ पृथिवींवर्धयामासस्थित्य
र्थंमेदसातयोः ॥ १८ ॥ मेदोगन्धातुधरणीमेदिनीत्यभिधांगता ॥ तस्मान्नगृध्रस्यगृहमुलूकस्यतदाऽभवत् ॥ १९ ॥ तस्माद्गृध्रस्त्वसत्योवै
पापकर्मापरालयम् ॥ स्वीयंकरोतिपापात्मादण्डनीयोनसंशयः ॥ १२० ॥ ततोऽशरीरिणीवाणीअन्तरिक्षात्प्रभाषते ॥ मावधीरामगृध्रंत्वंपू
र्वंदग्धंतपोबलात् ॥ २१ ॥ पुरागौतमदग्धोऽयंप्रजानाथोजनेश्वर ॥ ब्रह्मदत्तस्तुनामैपशूरःसत्यव्रतःशुचिः ॥ २२ ॥ गृहमागत्यविप्रोऽस्य
भोजनंप्रत्ययाचत ॥ साग्रंवर्षशतंचैवभुक्तवान्नृपसत्तम ॥ २३ ॥ ब्रह्मदत्तस्तुवैतस्यपाद्यमर्घ्यंस्वयंततः ॥ आत्मनैवाकरोत्सम्यग्भोजनार्थंमहा
द्युते ॥ २४ ॥ समाविश्यगृहंतस्यआहारेतुमहात्मनः ॥ नारींपूर्णस्तनींदृष्ट्वाहस्तेनाथपरामृशत् ॥ २५ ॥ अथक्रुद्धेनमुनिनाशापोदत्तःसुदारुणः ॥
गृध्रत्वंगच्छवैमूढराजामुनिमथाब्रवीत् ॥ २६ ॥ कृपांकुरुमहाभागशापोद्धारोभविष्यति ॥ दयालुस्तद्वचःश्रुत्वापुनराहनराधिप ॥ २७ ॥
उत्पत्स्यतेरघुकुलेरामोनाममहायशाः ॥ इक्ष्वाकूणांमहाभागोराजाराजीवलोचनः ॥ २८ ॥ तनदृष्टोविपापस्त्वंभवितानरपुङ्गव ॥ दृष्टोरा
मेणतच्छ्रुत्वाबभूवंपृथिवीपतिः ॥ २९ ॥ गृध्रत्वंत्यज्यवैशीघ्रंदिव्यगन्धानुलेपनः ॥ पुरुषोदिव्यरूपोऽसौबभाषेतंनराधिपम् ॥ १३० ॥
साधुराघवधर्मज्ञत्वत्प्रसादादहंविभो ॥ विमुक्तोनरकाद्घोरादपापस्तुत्वयाकृतः ॥ ३१ ॥ विसर्जितंमयागाध्र्यंनररूपीमहीपतिः ॥ उलूकंप्रा
हधर्मज्ञस्वगृहंविशकौशिक ॥ ३२ ॥ अहंसन्ध्यामुपासित्वागमिष्येयत्रवैमुनिः ॥ अथोदकमुपस्पृश्यसन्ध्यामन्वास्यपश्चिमाम् ॥ ३३ ॥
आश्रमंप्राविशद्रामःकुम्भयोनेर्महात्मनः ॥ तस्यागस्त्योबहुगुणंफलमूलंचसादरम् ॥ ३४ ॥ रसवन्तिचशाकानिभोजनार्थमुपाहरत् ॥
सभुक्तवान्नरव्याघ्रस्तदन्नममृतोपमम् ॥ ३५ ॥ प्रीतश्चपरितुष्टश्चतांरात्रिंसमुपावसत् ॥ प्रभातेकाल्यमुत्थायकृत्वाह्निकमरिन्दम ॥ ३६ ॥
ऋषिंसमभिचक्रामगमनायरघूत्तमः ॥ अभिवाद्याब्रवीद्रामोमहर्षिंकुम्भसम्भवम् ॥ ३७ ॥ आपृच्छेसाधयेब्रह्मन्ननुज्ञातुंत्वमर्हसि ॥ धन्योऽ
स्म्यनुगृहीतोऽस्मिदर्शनेनमहामुने ॥ ३८ ॥ दिष्ट्याचाहंभविष्यामिपावितात्मामहात्मनः ॥ एवंब्रुवतिकाकुत्स्थेवाक्यमद्भुतदर्शनम् ॥ ३९ ॥
उवाचपरमप्रीतोबाष्पनेत्रस्तपोधनः ॥ अत्यद्भुतमिदंवाक्यंतवरामशुभाक्षरम् ॥ १४० ॥ पावनंसर्वभूतानांत्वयोक्तंरघुनन्दन ॥ मुहूर्तमपिरा

मत्वांमैत्रेणेक्षन्तियेनराः ॥ ४१ ॥ पाविताःस्सर्वसूक्तैस्तेकथ्यन्तेत्रिदिवौकसः ॥ यचत्वांघोरचक्षुर्भिरीक्षन्तेप्राणिनोभुवि ॥ ४२ ॥ तेहताब्रह्म
दण्डेनसद्योनरकगामिनः ॥ ईदृशस्त्वंरघुश्रेष्ठपावनःसर्वदेहिनाम् ॥ ४३ ॥ कथयन्तश्चलोकास्त्वांसिद्धिमेष्यन्तिराघव ॥ गच्छस्वानातुरोऽविघ्नं
पन्थानमकुतोभयः ॥ ४४ ॥ प्रशाधिराज्यंधर्मेणगतिस्तुजगतांभवान् ॥ एवमुक्तस्तुमुनिनाप्राञ्जलिःप्रग्रहोनृपः ॥ ४५ ॥ अभिवादयितुंच
क्रेसोऽगस्त्यमृषिसत्तमम् ॥ अभिवाद्यमुनिश्रेष्ठांस्तांश्चसर्वांस्तपोऽधिकान् ॥ ४६ ॥ अथारोहत्तदाव्यग्रःपुष्पकंहेमभूषितम् ॥ तंप्रयान्तंमुनिगणा
आशीर्वादैस्समन्ततः ॥ ४७ ॥ अपूपुजन्नरेन्द्रंतंसहस्राक्षमिवामराः ॥ ततोऽर्धदिवसेप्राप्तेरामःसर्वार्थकोविदः ॥ ४८ ॥ अयोध्यांप्राप्यकाकु
त्स्थःपद्भ्यांकक्षामवातरत् ॥ ततोविसृज्यरुचिरंपुष्पकंकामवाहितम् ॥ ४९ ॥ कक्षान्तराद्विनिष्क्रम्यद्वास्स्थान्राजाब्रवीदिदम् ॥ लक्ष्म
णंभरतंचैवगच्छध्वंलघुविक्रमाः ॥ १५० ॥ ममागमनमाख्यायसमानयतमाचिरम् ॥ श्रुत्वाथभाषितंद्वाःस्थारामस्याक्लिष्टकर्मणः
॥ ५१ ॥ गत्वाकुमारावाहूयराघवायन्यवदेयन् ॥ द्वास्थैःकुमारावानीतौराघवस्यनिदेशतः ॥ ५२ ॥ दृष्ट्वातुराघवःप्राप्तौप्रियौभरतलक्ष्मणौ ॥
समालिङ्ग्यतुरामस्तौवाक्यंचेदमुवाचह ॥५३॥ कृतंमयायथातथ्यंद्विजकार्यमनुत्तमम् ॥ धर्महेतुमतोभूयःकर्तुमिच्छामिराघवौ ॥५४॥ भवद्भ्यामा
त्मभूताभ्यांराजसूयंक्रतूत्तमम्॥सहितोयष्टुमिच्छामियत्रधर्मश्चशाश्वतः ॥ ५५ ॥ पुष्करस्थेनवैपूर्वब्रह्मणालोककारिणा ॥शतत्रयेणयज्ञानामिष्टंपद्मचधि
केनच ॥ ५६ ॥ इष्ट्वाहिराजसूयेनसोमोधर्मेणधर्मवित् ॥ प्राप्तःसर्वेषुलोकेषुकीर्तिस्थानमनुत्तमम् ॥ ५७ ॥ इष्ट्वाहिराजसूयेनमित्रःशत्रुनिबर्ह
णः ॥ मुहूर्तेनसुशुद्धेनवरुणत्वमुपागतः ॥ ५८ ॥ तस्माद्भवन्तौसञ्चिन्त्यकार्येऽस्मिन्वदतंहितम् ॥ भरतउवाच ॥ त्वंधर्मःपरमःसाधोत्वयि
सर्वावसुन्धरा ॥ ५९ ॥ प्रतिष्ठितामहाबाहोयशश्चामितविक्रम ॥ महीपालाश्चसर्वेत्वांप्रजापतिमिवामराः ॥ १६० ॥ निरीक्षन्तेमहात्मा
नोलोकनाथतथावयम् ॥ प्रजाश्चपितृवद्राजन्पश्यन्तित्वांमहामते ॥ ६१ ॥ पृथिव्यांगतिभूतोऽसिप्राणिनामिहराघव ॥ सत्वमेवंविधंयज्ञंना
हर्तासिपरन्तप ॥ ६२ ॥ पृथिव्यांसर्वभूतानांविनाशोदृश्यतेयतः ॥ श्रूयतेराजशार्दूलसोमस्यमनुजेश्वर ॥ ६३ ॥ ज्योतिषांसुमहद्युद्धं
सङ्ग्रामेतारकामये ॥ तारावृहस्पतेर्भार्याहृतासोमेनकामतः ॥ ६४ ॥ तत्रयुद्धंमहद्वृत्तंदेवदानवनाशनम् ॥ वरुणस्यक्रतौघोरेसङ्ग्रामेमत्स्य
कच्छपाः ॥ ६५ ॥ निवृत्तेराजशार्दूलसर्वेनष्टाजलेचराः ॥ हरिश्चन्द्रस्ययज्ञान्तेराजसूयस्यराघव ॥ ६६ ॥ आडीबकंमहद्युद्धंस
र्वलोकविनाशनम् ॥ पृथिव्यांयानिसत्त्वानितिर्यग्योनिगतानिवै ॥ ६७ ॥ दिव्यानांपार्थिवानांचराजसूयेक्षयःश्रुतः ॥ सत्वंपुरुषशार्दूल

बुद्ध्यासञ्चिन्त्यपार्थिव ॥ ६८ ॥ प्राणिनांचहितसौम्यंपूर्णंधर्मंसमाचर ॥ भरतस्यवचःश्रुत्वाराघवःप्राहसादरम् ॥ ६९ ॥ रामउवाच ॥
प्रीतोऽस्मितवधर्मज्ञवाक्येनानेनशत्रुहन् ॥ निवर्तिताराजसूयान्मतिर्मेधर्मवत्सल ॥ १७० ॥ पूर्णंधर्मंकरिष्यामिकान्यकुब्जेचवामनम् ॥ स्थापयि
ष्याम्यहंवीरसामेख्यातिर्दिवंगता ॥ ७१ ॥ भविष्यतिनसन्देहोयथागङ्गाभगीरथात् ॥ १७२ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेयज्ञनि
वारणंनामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ भीष्मउवाच ॥ कथंरामेणविप्रर्षेकान्यकुब्जेतुवामनः ॥ स्थापितःक्वचलब्धोऽसौविस्तरान्ममकी
र्तय ॥ १ ॥ तथाहिमधुराचैषायावाणीरामकीर्तने ॥ कीर्तिताभगवन्मह्यंमनःकर्णसुखावहा ॥ २ ॥ अनुरागेणतंलोकाःस्नेहात्पश्यन्तिराघवम् ॥
धर्मज्ञश्चकृतज्ञश्चबुद्ध्याचपरिनिष्ठितः ॥ ३ ॥ प्रशास्तिपृथिवींसर्वांधर्मेणसुसमाहितः ॥ तस्मिञ्शासतिवैराज्यंसर्वकामफलाद्रुमाः
॥ ४ ॥ रसवन्तःप्रभूताश्चवासांसिविविधानिच ॥ अकृष्टपच्यापृथिवीनिःसपत्नामहात्मनः ॥ ५ ॥ देवकार्यंकृतंतेनरावणोलोककण्टकः ॥
सपुत्रोऽमात्यसहितोलीलयैवनिपातितः ॥ ६ ॥ तस्यबुद्धिस्समुत्पन्नापूर्णेधर्मेद्विजोत्तम ॥ तस्याहंचरितंसर्वंश्रोतुमिच्छामिवैमुने ॥ ७ ॥ पुल
स्त्यउवाच ॥ कस्यचित्त्वथकालस्यरामोधर्मपथेस्थितः ॥ यच्चकारमहाबाहोशृणुष्वैकमनानृप ॥ ८ ॥ संस्माररावघवेन्द्रस्तुकथंराजाविभीषणः ॥
लङ्कायांसंस्थितोराज्यंकरिष्यतिचराक्षसः ॥ ९ ॥ गीर्वाणेषुप्रातिकूल्यंविनाशस्यतुलक्षणम् ॥ मयातस्यतुतद्दत्तंराज्यंचन्द्रार्ककालिकम् ॥
॥ १० ॥ तस्याविनाशतःकीर्तिःस्थिरामेशाश्वतीभवेत् ॥ रावणेनतपस्तप्तंविनाशायात्मनस्त्विह ॥ ११ ॥ विध्वस्तःसचपापिष्ठोदे
वकार्येमयाधुना ॥ तदिदानींमयान्वेष्यःस्वयंगत्वाविभीषणः ॥ १२ ॥ सन्देष्टव्यंहितंतस्ययेनतिष्ठेत्सशाश्वतम् ॥ एवंचिन्तयतस्तस्यरामस्या
मिततेजसः ॥ १३ ॥ आजगामाथभरतोरारामंदृष्ट्वाब्रवीदिदम् ॥ किंत्वंचिन्तयसेदेवनरहस्यंवदस्वमे ॥ १४ ॥ देवकार्येधरायांवास्व
कार्येवानरोत्तम ॥ एवंब्रुवन्तंभरतंध्यायमानमवस्थितम् ॥ १५ ॥ ॥ अब्रवीद्राघवोवाक्यंरहस्यंतुनवैतव ॥ भवान्बहिश्चरःप्राणोलक्ष्म
णश्चमहायशाः ॥ १६ ॥ अवेद्यंभवतोनास्तिममसत्यंविधारय ॥ एषामेमहतीचिन्ताकथंदेवैर्विभीषणः ॥ १७ ॥ वर्ततेयद्धितार्थंवै
दशग्रीवोनिपातितः ॥ गमिष्येतदहंलङ्कांयत्रचासौविभीषणः ॥ १८ ॥ तंचदृष्ट्वापुरींतांतुकार्यमुक्त्वाचराक्षसम् ॥ आलोक्यसर्ववसुधांसुग्री
वंवानरेश्वरम् ॥ १९ ॥ महाराजंचशत्रुघ्नंभ्रातृपुत्रांश्चसर्वशः ॥ एवंवदतिकाकुत्स्थेभरतःपुरतःस्थितः ॥ २० ॥ उवाचराघवंवाक्यंगमिष्येभवता
सह ॥ एवंकुरुमहाबाहोसौमित्रिरिहतिष्ठतु ॥ २१ ॥ इत्युक्त्वाभरतंरामस्सौमित्रिंचाहवैपुरे ॥ रक्षाकार्यात्वयावीरयावदागमनंहिनौ ॥

॥ २२ ॥ एवंलक्ष्मणमादिश्यध्यात्वावैपुष्पकंनृप ॥ आरुरोहसवैयानंकौसल्यानन्दवर्धनः ॥ २३ ॥ पुष्पकंतुततःप्राप्तंगान्धारविषयोय
तः ॥ भरतस्यसुतौदृष्ट्वाजगन्नीतिंनिरीक्ष्यच ॥ २४ ॥ पूर्वांदिशंततोगत्वालक्ष्मणस्यसुतौयतः ॥ पुरेषुतेषुषड्रात्रमुषित्वारघुनन्दनौ ॥ २५ ॥
गतौतेनविमानेनदक्षिणामभितोदिशम् ॥ गङ्गायामुनसम्भेदंप्रयागमृषिसेवितम् ॥ २६ ॥ अभिवाद्यभरद्वाजमत्रेराश्रममीयतुः ॥ सम्भाष्यचमु
नींस्तत्रजनस्थानमुपागतौ ॥ २७ ॥ रामउवाच ॥ अत्रपूर्वंहतासीतारावणेनदुरात्मना ॥ हत्वाजटायुषंगृध्रंयोऽसौपितृसखोहिनौ ॥ २८ ॥
अत्रास्माकंमहद्युद्धंकबन्धेनकुबुद्धिना ॥ हतेनतेनदग्धेनसीतास्तेरावणालये ॥ २९ ॥ ऋष्यमूकेगिरिवरेसुग्रीवोनामवानरः ॥ सतेकरिष्यतेसाह्यं
पम्पांव्रजसंहानुजः ॥ ३० ॥ पम्पासरःसमासाद्यशबरींगच्छतापसीम् ॥ इत्युक्तोदुःखितोवीरनिराशोजीवितेस्थितः ॥ ३१ ॥ इयंसान
लिनीवीरयस्यांवैलक्ष्मणोऽवदत् ॥ माकृथाःपुरुषव्याघ्रशोकंशत्रुविनाशन ॥ ३२ ॥ आज्ञाकारिणिभृत्येचमयिप्राप्स्यसिमैथिलीम्
अत्रमेवार्षिकामासागतावर्षशतोपमाः ॥ ३३ ॥ अत्रैवनिहतोवालीसुग्रीवार्थेपरन्तप ॥ एषासादृश्यतेनूनंकिष्किन्धावालिपालिता
॥ ३४ ॥ यस्यांवैसहिधर्मात्मासुग्रीवोवानरेश्वरः ॥ वानरैःसहितोवीरतावदास्तेसमाःशतम् ॥ ३५ ॥ वानरैस्सहसुग्रीवोयावदास्तेसभांग
तः ॥ तावत्तत्रागतौवीरौपुर्यांभरतराघवौ ॥ ३६ ॥ दृष्ट्वासभ्रातरौप्राप्तौप्रणिपत्याब्रवीदिदम् ॥ क्वयुवांप्रस्थितौवीरौकार्यंकिंतुकरिष्यथः
॥ ३७ ॥ विनिवेश्यासनेतौचददावर्घ्यंस्वयंतदा ॥ एवंसभास्थितेतत्रधर्मिष्ठेरघुनन्दने ॥ ३८ ॥ अङ्गदोऽथहनूमांश्चनलोनीलश्चपाटलः ॥ गजो
गवाक्षोगवयःपनसश्चमहायशाः ॥ ३९ ॥ पुरोधसोमन्त्रिणश्चदैवज्ञोदधिवक्त्रकः ॥ नीलश्शतबलिर्मैन्दोद्विविदोगन्धमादनः ॥ ४० ॥ वीरबाहु
स्सुबाहुश्चवीरसेनोविनायकः ॥ सूर्याभःकुमुदश्चैवसुषेणोहरियूथपः ॥ ४१ ॥ ऋषभोविनतश्चैवगवाख्योभीमविक्रमः ॥ ऋक्षराजश्चधूम्रश्च
सहसैन्यैरुपागताः ॥ ४२ ॥ अन्तःपुराणिसर्वाणिरुमातारातथैवच ॥ अवरोधोऽङ्गदस्यापितथान्याःपरिचारिकाः ॥ ४३ ॥
प्रहर्षमतुलंप्राप्यसाधुसाध्वितिचाब्रुवन् ॥ वानराश्चमहात्मानःसुग्रीवसहितास्तदा ॥ ४४ ॥ वानर्यश्चमहाभागास्ताराद्यास्तत्रराघवम् ॥
अभिप्रेक्ष्याश्रुकण्ठ्यश्चप्रणिपत्येदमब्रुवन् ॥ ४५ ॥ क्वसादेवीत्वयादेवयाविनिर्जित्यरावणम् ॥ शुद्धिंकृत्वाहितेवह्नौपितुरग्रउमापतेः ॥ ४६ ॥
त्वयानीतांपुरींरामनतांपश्यामितेऽग्रतः ॥ नविनात्वंतयादेवशोभसेरघुनन्दन ॥ ४७ ॥ त्वयाविनापिसाध्वीसाक्वनुतिष्ठतिजानकी ॥
अन्यांभार्यांनतेवेद्मिभार्याहीनोनशोभसे ॥४८॥ क्रौञ्चयुग्मंमिथोयद्वच्चक्रवाकयुगंयथा ॥ एवंवदन्तींतांतारांताराधिपसमाननाम् ॥ ४९ ॥ प्राहप्रवच

सश्रिष्ठोरामोराजीवलोचनः ॥ चारुदंष्ट्रेविशालाक्षिकालोहिदुरतिक्रमः ॥ ५० ॥ सर्वंकालकृतंविद्धिजगदेतच्चराचरम् ॥ विसृज्यताःस्त्रियःसर्वाः
सुग्रीवोऽभिमुखःस्थितः ॥ ५१ ॥ सुग्रीवउवाच ॥ भवन्तौयेनकार्येणइहायातौनरेश्वरौ ॥ तच्चापिकथ्यतांशीघ्रंकृत्यकालोहिवर्तते ॥ ५२ ॥ ब्रुवाण
मेवंसुग्रीवंभरतोरामचोदितः ॥ आचचक्षेचगमनंलङ्कायांराघवस्यतु ॥ तौचाब्रवीच्चसुग्रीवोभवद्भ्यांसहितःपुरीम् ॥ ५३ ॥ गमिष्येराक्षसंदेवद्रष्टुंतत्र
विभीषणम् ॥ सुग्रीवेणैवमुक्तेतुगच्छस्वेत्याहराघवः ॥५४॥ सुग्रीवोराघवौतौचपुष्पकेतुस्थितास्त्रयः ॥ तावत्प्राप्तेविमानंतुसमुद्रस्योत्तरंतटम् ॥५५॥
अब्रवीद्भरतंरामोह्यत्रमेराक्षसेश्वरः ॥ चतुर्भिःसचिवैःसार्धंजीवितार्थेविभीषणः ॥ ५६ ॥ प्राप्तस्ततोलक्ष्मणेनलङ्काराज्येऽभिषेचितः ॥ अत्रचाहंस
मुद्रस्यपरेपारेस्थितस्त्र्यहम् ॥५७॥ दर्शनंदास्यतेमेऽसौज्ञातिकार्यंभविष्यति ॥ तावन्नदर्शनंमह्यंदत्तमेतेनशत्रुहन् ॥ ५८॥ ततःकोपःसमुद्भूतश्चतुर्थेऽ
हनिराघव॥धनुरायम्यवेगेनदिव्यमस्त्रंकरेधृतम् ॥५९॥ दृष्ट्वामांशरणान्वेषीभीतोलक्ष्मणम,श्रितः ॥ सुग्रीवेणानुनीतोऽस्मिक्षम्यतांराघवत्वया ॥६०॥
ततोमयोत्क्षिप्तशरोमरुदेशह्यपाकृतः ॥ ततस्समुद्रराजेनभृशंविनयशालिना ॥ ६१ ॥ उक्तोऽहंसेतुबन्धेनलङ्कांत्वंव्रजराघव ॥ लङ्घयित्वानरव्याघ्रं
वारिपूर्णंमहोदधिम् ॥ ६२ ॥ एषसेतुर्मयाबद्धःसमुद्रेवरुणालये ॥ त्रिभिर्दिनैःसमाप्तिंवैनीतोवानरसत्तमैः ॥ ६३ ॥ प्रथमेदिवसेबद्धोयोजना
निचतुर्दश ॥ द्वितीयेऽहनिषड्विंशत्तृतीयेऽर्धशतंतथा ॥६४॥ इयंस्वाद्दश्यतेलङ्कास्वर्णप्राकारतोरणा ॥ अवरोधोमहानत्रकृतोवानरसत्तमैः ॥ ६५ ॥
चैत्रशुक्लचतुर्दश्यांमहद्युद्धमभूदिह ॥ अष्टचत्वारिंशद्दिनंयत्रासौरावणोहतः ॥ ६६ ॥ अत्रप्रहस्तोनीलेनहतोराक्षसपुङ्गवः ॥ हनूमताचधूम्रा
क्षोह्यत्रैवविनिपातितः ॥ ६७ ॥ महोदरातिकायौचसुग्रीवेणमहात्मना ॥ हतोमयाकुम्भकर्णोलक्ष्मणेनेन्द्रजित्तथा ॥ ६८ ॥ मयाचात्रदशग्री
वोहतोराक्षसपुङ्गवः ॥ अत्रसम्भाषितुंप्राप्तोब्रह्मालोकपितामहः ॥ ६९ ॥ पार्वत्यासहितोदेवःशूलपाणिर्वृषध्वजः ॥ महेन्द्राद्याःसुरगणाःसगन्धर्वाः
सकिन्नराः ॥ ७० ॥ पितामेचसमायातोमहाराजस्त्रिविष्टपात् ॥ वृतश्चाप्सरसांसङ्घैर्विद्याधरगणैस्तथा ॥ ७१ ॥ तषांसमक्षंसर्वेषांजानकीशुद्धि
मिच्छता ॥ उक्तासीताहव्यवाहंप्रविष्टाशुद्धिमागता ॥ ७२ ॥ असुरैश्चसुरैर्दृष्टागृहीतापितृशासनात् ॥ अथाप्युक्तोऽथराज्ञाहमयोध्यांगच्छ
पुत्रक ॥ ७३ ॥ नमेस्वर्गोबहुमतस्त्वयाहीनस्यराघव ॥ तारितोऽहंत्वयापुत्रप्राप्तोऽस्मीन्द्रसलोकताम् ॥ ७४ ॥ लक्ष्मणंचाब्रवीद्राजापुत्र
पुण्यंत्वयार्जितम् ॥ भ्रात्रासममथोदिव्याँल्लोकान्प्राप्स्यसिचोत्तमान् ॥ ७५ ॥ आहूयजानकींराजावाक्यंचेदमुवाचह ॥ नचमन्युस्त्वयाकार्यो
भर्तारंप्रतिसुव्रते ॥ ७६ ॥ ख्यातिर्भविष्यत्येवाग्र्याभर्तुस्तेशुभलोचने ॥ एवंवदतिरामेतुपुष्पकेचव्यवस्थिते ॥ ७७ ॥ तत्रयेराक्षसवरास्तेगत्वा

शुविभीषणम् ॥ प्राप्तोरामःससुग्रीवश्चाराइत्थंतदाऽवदन् ॥ ७८ ॥ विभीषणस्तुतच्छ्रुत्वारामागमनमन्तिके ॥ चारांस्तान्पूजयामाससर्वकाम
धनादिभिः ॥ ७९ ॥ अलङ्कृत्यपुरींतांतुनिष्क्रान्तःसचिवैःसह ॥ दृष्ट्वारामंविमानस्थंमेराविवदिवाकरम् ॥ ८० ॥ अष्टाङ्गप्रणिपातेननत्वा
राघवमब्रवीत् ॥ अद्यमेसफलंजन्मप्राप्ताःसर्वेमनोरथाः ॥ ८१ ॥ यद्दृष्टौदेवचरणौजगद्वन्द्यावनिन्दितौ ॥ कृतःश्लाघ्योऽस्म्यहंदेवशक्रादीनांदि
वौकसाम् ॥ ८२ ॥ आत्मानमधिकंमन्येत्रिदशेशात्पुरन्दरात् ॥ देवस्यदर्शनात्तेऽद्यस्पृहणीयोदिवौकसाम् ॥ ८३ ॥ अभिवन्द्यसरामंतुआ
लिङ्गचभरतंहरिम् ॥ लङ्कांप्रवेशयामासविशिष्टायात्रिविष्टपात् ॥८४ ॥ रावणस्यगृहेदीप्तेसर्वरत्नोपशोभिने ॥ उपविष्टेतुकाकुत्स्थेअर्घंदत्त्वाविभीषणः
॥ ८५ ॥ उवाचप्राञ्जलिर्भूत्वासुग्रीवंभरतंतथा ॥ इहागतस्यरामस्ययद्दास्येनतदस्तिमे ॥ ८६ ॥ इयंचलङ्कारामेणरिपुंत्रैलोक्यकण्टकम् ॥ हत्वातु
पापकर्माणंदत्तापूर्वंपुरीमम ॥ ८७ ॥ इयंपुरीइमेदाराअमीपुत्रास्तथाह्यहम् ॥ सर्वमेतन्मयादत्तंसर्वमक्षयमस्तुते ॥ ८८ ॥ ततःप्रकृतयःसर्वालङ्का
वासिजनाश्चये ॥ आजग्मूराघवंद्रष्टुंकौतूहलसमन्विताः ॥ ८९ ॥ उक्तोविभीषणस्तैस्तुरामंदर्शयनःप्रभो ॥ विभीषणेनकथिताराघवायमहा
त्मने ॥ ९० ॥ तेषामुपायनंसर्वंभरतोरामचोदितः ॥ जग्राहवानरेन्द्रश्चधनरत्नौघसञ्चयम् ॥ ९१ ॥ एवंतत्रत्र्यहंरामोह्यवसद्राक्षसालये ॥ चतुर्थेऽ
हनिसम्प्राप्तेरामेचापिसभास्थिते ॥ ९२ ॥ केकसीपुत्रमाहेदंरामंद्रक्ष्यामिपुत्रक ॥ वधूभिस्सहितागत्वात्वंविज्ञापयपुत्रक ॥ ९३ ॥ दृष्टेतस्मिन्मह
त्पुण्यंप्राप्यतेमुनिसत्तमैः ॥ विष्णुरेषमहाभागश्चतुर्मूर्तिस्सनातनः ॥ ९४ ॥ सीतालक्ष्मीर्महाभागनबुद्धःसाग्रजेनते ॥ पित्रातेपूर्वमाख्यातंदेवानां
दिविसङ्गमे ॥ ९५ ॥ कुलेरघूणांवैविष्णुःपुत्रोदशरथस्यतु ॥ भविष्यतिविनाशायदशग्रीवस्यरक्षसः ॥ ९६ ॥ विभीषणउवाच ॥ एवंकुरुष्व
वैमातगृहाणनवमम्बरम् ॥ पात्रंचन्दनसंयुक्तंदधिक्षौद्राक्षतैःसह ॥ ९७ ॥ दूर्वयार्घंसहकुरुराजपुत्रस्यदर्शनम् ॥ सरमामग्रतःकृत्वायाश्चान्या
देवकन्यकाः ॥ ९८ ॥ व्रजस्वराघवाभ्याशंतस्मादग्रेव्रजाम्यहम् ॥ एवमुक्त्वागतंरक्षोयत्ररामोव्यवस्थितः ॥ ९९ ॥ उत्सार्यदानवान्सर्वान्रामं
द्रष्टुंसमागतान् ॥ सभांतांविमलांकृत्वारामंस्वाभिमुखेस्थितम् ॥ १०० ॥ विभीषणउवाच ॥ विज्ञाप्यंशृणुमेदेववदतश्चविशांपते ॥ दशग्रीवं
कुम्भकर्णंयाचमांचाप्यजीजनत् ॥ १ ॥ इयंसादेवमातानःपादौतेद्रष्टुमिच्छति ॥ तस्यास्तुत्वंकृपांकृत्वादर्शनंदातुमर्हसि ॥ २ ॥ राम
उवाच ॥ अहंतस्याःसमीपंतुमातृदर्शनकाङ्क्षया ॥ गमिष्येराक्षसेन्द्रत्वंशीघ्रंयाहिममाग्रतः ॥ ३ ॥ प्रतिज्ञायतुतंवाक्यमुत्तस्थौचवरास
नात् ॥ मूर्ध्निचाञ्जलिमाधायप्रणाममकरोद्विभुः ॥४॥ अभिवादयेऽहंभवतींमाताभवसिधर्मतः ॥ महतातपसाचापिपुण्येनविविधेनच ॥ ५ ॥ इमौ

तेचरणौदेविमानवोयदिपश्यति ॥ पूर्णस्स्यात्तदहंप्रीतोदृष्ट्वेमोपुत्रवत्सले ॥ ६ ॥ कौसल्यामेयथामाताभवतीचतथामम ॥ केकसीचाब्रवीद्रामं
चिरंजीवसुखीभव ॥ ७ ॥ भर्त्रामेकथितंवीरविष्णुर्मानुषरूपधृत ॥ अवतीर्णोरघुकुलेहितार्थेत्रिदिवौकसाम् ॥ ८ ॥ दशग्रीवविनाशायभूतिं
दातुंविभीषणे ॥ वालिनोनिधनंचवसेतुबन्धंचसागरे ॥ ९ ॥ पुत्रोदशरथस्यैवसर्वंसचकरिष्यति ॥ इदानींत्वंमयाज्ञातःस्मृत्वातद्भर्तृभाषितम् ॥
॥ ११० ॥ सीतालक्ष्मीर्भवान्विष्णुर्देवावैवानरास्तथा ॥ गृहंपुत्रगमिष्यामिस्थिरकीर्तिमवाप्नुहि ॥ ११ ॥ सरमोवाच ॥ इहैववत्सरंपूर्णमशो
कवनिकास्थिता ॥ सेविताजानकींदेवीसुखंतिष्ठतितेप्रिया ॥ १२ ॥ नित्यंस्मरामिवैपादौसीतायास्तुपरन्तप ॥ कदाद्रक्ष्यामितांदेवींचिन्तयाना
त्वहर्निशम् ॥ १३ ॥ किमर्थंदेवदेवेनननानीताजानकीत्विह ॥ एकाकीनैवशोभेथायोपिताचतयाविना ॥ १४ ॥ समीपेशोभतेसीतात्वंच
तस्याःपरन्तप ॥ एवंब्रुवन्त्यांनरतःकेयमित्यब्रवीद्वचः ॥ १५ ॥ ततश्चेङ्गितविद्रामोभरतंप्राहसत्वरम् ॥ विभीषणस्यभार्यावैसरमानामनामतः
॥ १६ ॥ प्रियासखीमहाभागासीतायास्सुदृढंमता ॥ सर्वकालकृतंपश्यनजानेकिंकरिष्यति ॥ १७ ॥ गच्छत्वंसुभगेभर्तृगेहंपालयशोभने ॥
मांत्यक्त्वाहिगतादेवीभाग्यहीनंगतिर्यथा ॥ १८ ॥ तयाविरहितःसुधृतिंविन्देनकर्हिचित् ॥ शून्याएवदिशःसर्वाःपश्यामीहपुनर्भ्रमन्
॥ १९ ॥ विसृज्यतांचसरमांसीतायास्तुप्रियांसखीम् ॥ गतायामथकेकस्यांरामःप्राहविभीषणम् ॥ १२० ॥ देवतेभ्यःप्रियंकार्यंनापराध्या
स्त्वयासुराः ॥ आज्ञयाराजराजस्यवर्तितव्यंत्वयानघ ॥ २१ ॥ लङ्कायांमानुषोयोवैसमागच्छेत्कथञ्चन ॥ राक्षसैर्नचहन्तव्योद्रष्टव्योऽसौ
यथात्वहम् ॥ २२ ॥ विभीषणउवाच ॥ आज्ञयाहंनरव्याघ्रकरिष्येसर्वमेवतु ॥ विभीषणेहिवदतिवायूराममुवाचह ॥ २३ ॥ इहास्तिवैष्णवी
मूर्तिःपूर्वंबद्धोबलिर्यया ॥ तांनयस्वमहाभागकान्यकुब्जेप्रतिष्ठय ॥ २४ ॥ विदित्वातदभिप्रायंवायुनासमुदाहृतम् ॥ विभीषणस्त्वलङ्कृत्यरत्नैः
सर्वैश्चवामनम् ॥ २५ ॥ आनीयचार्पयद्रामेवाक्यंचेदमुवाचह ॥ यदावैनिर्जितःशक्रोमेघनादेनराघव ॥ २६ ॥ तदावैवामनस्त्वेषआनीतो
जलजेक्षण ॥ नयस्वतमिमंदेवदेवदेवंप्रतिष्ठय ॥ २७ ॥ तथेतिराघवःकृत्वापुष्पकंचसमारुहत् ॥ धनंरत्नमसङ्ख्येयंवामनंचसुरोत्तमम् ॥ २८ ॥ 
गृह्यसुग्रीवभरतावारूढौवामनादनु ॥ व्रजन्नेवाम्बरेरामस्तिष्ठेत्याहविभीषणम् ॥ २९ ॥ राघवस्यवचःश्रुत्वाभूयोऽप्याहसराघवम् ॥ करिष्येसर्व
मेतद्धियदाज्ञप्तंविभोत्वया ॥ १३० ॥ सेतुनानेनराजेन्द्रपृथिव्यांसर्वमानवाः ॥ आगत्यप्रतिबाधेरन्नाज्ञाभङ्गोभवेत्तव ॥ ३१ ॥ कोऽत्रमेनियमो
देवकिन्नुकार्यंमयाविभो ॥ श्रुत्वैतद्राघवोवाक्यंराक्षसोत्तमभाषितम् ॥ ३२ ॥ कार्मुकंगृह्यहस्तेनरामःसेतुंद्विधाच्छिनत् ॥ त्रिर्विभज्यचवेगेन

मध्येवैदशयोजनम् ॥ ३३ ॥ छित्वातुयोजनंचैकमेकंखण्डत्रयंकृतम् ॥ वेलावनंसमासाद्यरामःपूंजांरमापतः ॥ ३४ ॥ कृत्वारामेश्वरंनाम्नादेवदेवं
जनार्दनम् ॥ अभिषिच्याथसंगृह्यवामनंरघुनन्दनः ॥ ३५ ॥ दक्षिणादुदधेश्चैवनिर्जगामत्वरान्वितः ॥ अन्तरिक्षादभूद्वाणीमेघगम्भीरनिःस्वना ॥
॥ ३६ ॥ रुद्रउवाच ॥ भोभोरामास्तुभद्रंतेस्थितोऽहमिहसाम्प्रतम् ॥ यावज्जगदिदंरामयावदेषाधरास्थिता ॥ ३७ ॥ तावदेवचतेसेतुतीर्थं
स्थास्यतिराघव ॥ श्रुत्वैवंदेवदेवस्यगिरंताममृतोपमाम् ॥ ३८ ॥ रामउवाच ॥ नमस्तेदेवदेवेशभक्तानामभयङ्कर ॥ गौरीकान्तनमस्तुभ्यंदक्षय
ज्ञविनाशन ॥ ३९ ॥ नमोभवायशर्वायरुद्रायवरदायच ॥ पशूनांपतयेनित्यंचोग्रायचकपर्दिने ॥ १४० ॥ महादेवायभीमायत्र्यम्बकाय
दिशांपते ॥ ईशानायभगघ्नायनमोऽस्त्वन्धकघातिने ॥ ४१ ॥ नीलग्रीवायघोरायवेधसेवेधसास्तुतं ॥ कुमारशत्रुनिघ्नायकुमारजननायच ॥
॥ ४२ ॥ विलोहितायधूम्रायशिवायक्रथनायच ॥ नमोनीलशिखण्डायशूलिनेदैत्यनाशिने ॥ ४३ ॥ उग्रायचत्रिनेत्रायहिरण्यवसुरेतसे ॥
अनिन्द्यायाम्बिकाभर्त्रेसर्वदेवस्तुतायच ॥ ४४ ॥ अभिगम्यायकाम्यायसद्योजातायवैनमः ॥ वृषध्वजायमुण्डायजटिनेब्रह्मचारिणे ॥ ४५ ॥
तप्यमानायतप्यायब्रह्मण्यायजय्यायच ॥ विश्वात्मनेविश्वसृजेविश्वमावृत्यतिष्ठते ॥ ४६ ॥ नमोनमोऽस्तुदिव्यायप्रपन्नार्तिहरायच ॥ भक्ता
नुकम्पिनेदेवविश्वतेजोमनोगते ॥ ४७ ॥ पुलस्त्यउवाच ॥ एवंसंस्तूयमानस्तुदेवदेवोहरोनृप ॥ उवाचराघवंवाक्यंभक्तिनम्रंपुरःस्थितम् ॥
॥ ४८ ॥ रुद्रउवाच ॥ भोभोराघवभद्रंतेब्रूहियत्तेमनोगतम् ॥ यावदेवप्रयच्छामिनास्त्यदेयंमयाहिते ॥ ४९ ॥ पुष्कराक्षमहादेवदेवदेवस्स
नातनः ॥ भवान्नारायणोनूनंगूढोमानुषयोनिषु ॥ १५० ॥ अवतीर्णोदेवकार्यंकृतंतच्चानघत्वया ॥ इदानींस्वंव्रजस्थानंकृतकार्योऽसि
शत्रुहन् ॥५१॥ त्वयाकृतंपरंतीर्थंसेत्वाख्यंरघुनन्दन ॥ आगत्यमानवाराजन्पश्येयुरिहसागरे ॥५२ ॥ महापातकयुक्तायेतेपांपापंविलीयते ॥ ब्रह्मव
ध्यादिपापानियानिकष्टानिकानिचित् ॥५३॥ दर्शनादेवनश्यन्तिनात्रकार्याविचारणा॥ गच्छत्वंवामनंस्थाप्यगङ्गातीरेरघूत्तम॥५४॥पृथिव्यांसर्वशः
कृत्वाभागानष्टौपरन्तप॥श्वेतद्वीपंस्वकंस्थानंत्रजदेवनमोऽस्तुते॥५५॥ पुलस्त्यउवाच॥प्रणिपत्यततोरामस्तीर्थंप्रातश्चपुष्करम्॥ विमानंतुनयात्यूर्ध्वं
वेष्टितंतत्तुराघवः॥५६॥किमिदंवेष्टितंयानंनिरालम्बेऽम्बरेस्थितम्॥भवितव्यंकारणेनपश्येत्याहस्मवानरम्॥५७॥सुग्रीवोरामवचनादवतीर्यधरातले॥स
चपश्यतिब्रह्माणंसुरसिद्धसमन्वितम्॥५८॥ब्रह्मर्षिसङ्घसहितंचतुर्वेदसमन्वितम्॥दृष्ट्वागत्याब्रवीद्रामंसर्वलोकपितामहः॥५९॥सहितोलोकपालैश्चवस्वा

१ पूजामुमापतेः । इति पाठान्तरम् । २ देवदेवमुमापतिम् । इति पाठान्तरम् ।

दित्यमरुद्गणैः ॥ तंदेवपुष्पकंनैवलङ्घयेद्धिपितामहम्॥१६०॥अवतीर्यततोरामःपुष्पकाद्धमभूपितात्॥ नत्वाविरिञ्चनदेवंगायत्र्यासहसंस्थितम्॥६१॥
अष्टाङ्गप्रणिपातेनपश्चाङ्गालिङ्गितावनिः॥तुष्टावप्रणतोभूत्वादेवदेवंविरिञ्चनम्॥६२॥ रामउवाच॥नमामिलोककर्तारंप्रजापतिसुरार्चितम् ॥देवनाथंलो
कनाथंप्रजानाथंजगत्पतिम्॥६३॥नमस्तेदेवदेवेशसुरासुरनमस्कृत॥भूतभव्यभवन्नाथहरिपिङ्गललोचन॥६४॥बालस्त्वंवृद्धरूपीचमृगचर्मासनाम्बरः॥
तारणश्चासिदेवस्त्वंत्रैलोक्यप्रभुरीश्वरः ॥ ६५ ॥ हिरण्यगर्भपद्मगर्भवेदगर्भस्मृतिप्रद ॥ महासिद्धोमहापद्मीमहादण्डीचमेखली ॥ ६६ ॥ काल
श्चकालरूपीचनीलग्रीवोविदांवरः ॥ वदकर्ताभर्भकोनित्यःपशूनांपतिरव्ययः ॥ ६७ ॥ दर्भपाणिर्हंसकेतुःकर्ताहर्ताहरोहरिः ॥ जटीमुण्डीशिखी
दण्डीलगुडीचमहायशाः ॥ ६८ ॥ भूतेश्वरःसुराध्यक्षःसर्वात्मासर्वभावनः ॥ सर्वगःसर्वहारीचस्रष्टाचगुरुरव्ययः ॥ ६९ ॥ कमण्डलुधरोदेवःस्रुक्
स्रुवादिधरस्तथा ॥ हवनीयोऽर्चनीयश्चओंकारोज्येष्ठसामगः ॥ १७० ॥ मृत्युश्चैवामृतश्चैवपारियात्रश्चसुव्रतः ॥ ब्रह्मचारीव्रतधरोगुहावासीसुप
ङ्कजः ॥ ७१ ॥ अमरोदर्शनीयश्चबालसूर्यनिभस्तथा ॥ पद्मवासीचभगवान्सावित्रीपतिरच्युतः ॥ ७२ ॥ वरप्रदोदानवानांविष्णोर्लब्धवर
स्तथा ॥ कर्मकर्ताऽधर्महर्ताअभयहस्तएवच ॥ ७३ ॥ अग्निमुखोह्यग्निकेतुर्मुनिरूपोदिशांपतिः ॥ उत्सवोवेदस्रष्टासिचतुर्वर्गाधिपस्तथा ॥ ७४ ॥
दक्षिणवामतश्चापिपत्नीभ्यामुपसेवितः ॥ भिक्षुश्चभिक्षुरूपश्चत्रिजटीलब्धनिश्चयः ॥ ७५ ॥ चित्तवृत्तिकरःकामोमधुर्मधुकरस्तथा ॥ वानप्र
स्थोवनगतआश्रमीपूजितस्तथा ॥ ७६ ॥ जगद्धाताचकर्ताचपुरुषःशाश्वतोध्रुवः ॥ धर्माध्यक्षोविरूपाक्षस्त्रिधर्मोभूतभावनः ॥ ७७ ॥
त्रिवेदोबहुरूपश्चसूर्यायुतसमप्रभः ॥ मोहकोवन्धकश्चैवदानवानांविशेषतः ॥ ७८ ॥ देवदेवश्चपद्माङ्कस्त्रिनेत्रोऽब्जजटस्तथा ॥ हरिश्मश्रुर्धनुर्धारी
भीमोधर्मपराक्रमः॥७९॥पुलस्त्यउवाच ॥ एवंस्तुतस्तुरामेणब्रह्माब्रह्मविदांवरः॥ उवाचप्रणतंरामंकरेगृह्यपितामहः॥१८०॥ ब्रह्मोवाच ॥ विष्णुस्त्वंमा
नुषेदेहेऽवतीर्णोवसुधातले ॥ कृतंतद्भवतासर्वंदेवकार्यंमहाविभो ॥ ८१ ॥ संस्थाप्यवामनंदेवंजाह्नव्यादक्षिणेतटे ॥ अयोध्यांस्वपुरींगत्वा
सुरलोकंव्रजस्वच ॥ ८२ ॥ पुलस्त्यउवाच ॥ विसृष्टोब्रह्मणारामःप्रणिपत्यपितामहम् ॥ आरूढःपुष्पकंयानंसम्प्राप्तोमधुरांपुरीम् ॥ ८३ ॥
समीक्ष्यपुत्रसहितंशत्रुघ्नंशत्रुघातिनम् ॥ तुतोषराघवःश्रीमान्भरतःसहरीश्वरः ॥ ८४ ॥ शत्रुघ्नोभ्रातरौप्राप्तौशक्रोपेन्द्राविवागतौ ॥ प्रणिपत्य
ततोमूर्ध्नापश्चाङ्गालिङ्गितावनिः ॥ ८५ ॥ उत्थाप्यचाङ्कमारोप्यरामोभ्रातरमञ्जसा ॥ भरतश्चततःपश्चात्सुग्रीवस्तदनन्तरम् ॥ ८६ ॥ उपविष्टोऽ
थरामायसोऽर्घमादायसत्वरम् ॥ राज्यंनिवेदयामासचाष्टाङ्गंराघवेतदा ॥ ८७ ॥ श्रुत्वाप्राप्तंततोरामंसर्वोवैमाथुरोजनः ॥ वर्णाब्राह्मणभूयिष्ठा

द्रष्टुमेनंसमागताः ॥ ८८ ॥ सम्भाष्यप्रकृतीःसर्वानैगमान्ब्राह्मणैःसह ॥ दिनानिपञ्चोषित्वाऽत्ररामोगन्तुंमनोदधे ॥ ८९ ॥ शत्रुघ्नश्च
ततोरामेवाजिनोऽथगजांस्तथा ॥ कृताकृतंचकनकंतत्रोपायनमाहरत् ॥ १९० ॥ रामस्त्वाहततःप्रीतःसर्वमेतन्मयातव ॥ दत्तंपुत्रौतेऽभिषि
ञ्चराजानौमाथुरेजने ॥ ९१ ॥ एवमुक्त्वाततोरामःप्राप्तोमध्यन्दिनेरवौ ॥ महोदयंसमासाद्यगङ्गातीरेसवामनम् ॥ ९२ ॥ प्रतिष्ठाप्यद्विजा
नाहभाविनःपार्थिवांस्तथा ॥ मयाकृतोऽयधर्मस्यसेतुर्भूतिविवर्धनः ॥ ९३ ॥ प्राप्तेकालेपालनीयोनचलोप्यःकथञ्चन ॥ प्रसारितकरेणै.प्रा
र्थनैषामयाकृता ॥ ९४ ॥ नृपाःकृतेमयार्थित्वेयत्क्षेमंक्रियतामिह ॥ नित्यंदैनन्दिनीपूजाकार्यासर्वैरतन्द्रितैः ॥ ९५ ॥ ग्रामान्दत्त्वाधनंत
त्रलङ्कायांआहृतंचयत् ॥ प्रेषयित्वाचकिष्किन्धांसुग्रीवंवानरेश्वरम् ॥ ९६ ॥ अयोध्यामागतोरामःपुष्पकंतमथाब्रवीत् ॥ नागन्तव्यंत्व
याभूयस्तिष्ठयत्रधनेश्वरः ॥ कृतकृत्यस्ततोरामःकर्तव्यंनाप्यमन्यत ॥ ९७ ॥ पुलस्त्यउवाच ॥ एवंतेभीष्मरामस्यकथायोगेनपार्थिव ॥
उत्पत्तिर्वामनस्योक्ताकिंभूयःश्रोतुमिच्छसि ॥ ९८ ॥ कथयामितुतत्सर्वंयत्रकौतूहलंनृप ॥ सर्वंतेकीर्त्तयिष्यामियेनार्थीनृपनन्दन ॥ १९९ ॥
इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेवामनप्रतिष्ठानामचत्वारिंशोऽध्यायः ॥ ४० ॥ भीष्मउवाच ॥ कथितंवामनस्यैवमाहात्म्यंविस्तरेणवै ॥
पुनस्तस्यैवमाहात्म्यमन्यद्विष्णोरतोवद ॥ १ ॥ पद्मंकथमभूद्देवनाभौयेनाभवज्जगत ॥ कथंचवैष्णवीसृष्टिःपद्ममध्येऽभवत्पुरा ॥ २ ॥ कथंपा
द्ममहाकल्पेऽभवत्पद्ममयंजगत् ॥ जलार्णवगतस्येहनाभौजातंजलानुगम् ॥३॥ प्रभावंपद्मनाभस्यस्वपतःसागराम्भसि॥पुष्करेतुकथंजातादेवाऋषि
गणाःपुरा ॥ ४ ॥ एतदाख्याहिनिखिलंयोगंयोगविदांवर ॥ शृण्वतस्तस्यमेकीर्तिंनतृप्तिरुपजायते ॥ ५ ॥ कियताचैवकालेनशोभतेपुरुषोत्तमः ॥
कियन्तंवैस्वपितिचकतिकालस्यसम्भवाः ॥ ६ ॥ कियतावाथकालेनप्रोत्तिष्ठतिमहायशाः ॥ कथंचोत्थायभगवान्सृजतेनिखिलंजगत् ॥ ७ ॥
केप्रजापतयस्तावदासन्पूर्वेमहामुने ॥ कथंनिर्मितवांस्तत्रचैतंलोकंसनातनम् ॥८॥ कथमेकार्णवेशून्येनष्टेस्थावरजङ्गमे ॥ भूगोलकेप्रदग्धेतुप्रनष्टोरग
राक्षसे ॥ ९ ॥ नष्टानलानिलाकाशेनष्टधर्मेमहीतले ॥ क्वेवलेगह्वरीभूतेमहाभूतविपर्यये ॥ १० ॥ किंनुविश्वपतिःसाक्षान्महातेजामहाद्युतिः ॥ आस्ते
यथाध्याननिष्ठोविधिंमास्थाययोगवित् ॥ ११ ॥ शृण्वतःपरयाभक्त्याब्रह्मन्नेतदशेषतः ॥ वक्तुमर्हसिधर्मज्ञयशोनारायणात्मकम् ॥ १२ ॥
श्रद्दिनःसूपविष्टस्यभगवन्वक्तुमर्हसि ॥ १३ ॥ पुलस्त्यउवाच ॥ नारायणस्ययशसःश्रवणेयातवस्पृहा ॥ सद्वंशान्वयपूतस्यन्याय्यंकुरुकु
लोद्वह ॥ १४ ॥ शृणुष्वादिपुराणेषुदेवेभ्यश्चयथाश्रुति ॥ ब्राह्मणानांचवदतांश्रुत्वावैसुमहात्मनाम् ॥ १५ ॥ यथाचतपसादृष्ट्वाबृहस्पतिसमद्युतिः ॥

पराशरसुतःश्रीमान्गुरुर्द्वैपायनोऽब्रवीत् ॥ १६ ॥ तत्तेऽहंकथयिष्यामियथाभक्तियथाश्रुति ॥ यद्विज्ञातंमयासम्यगृषिमार्गेणसत्तम ॥ १७ ॥
कःसमुत्सहतेज्ञातुंपरंनारायणात्मकम् ॥ विश्वावितारंब्रह्मायंनवेदयतितत्त्वतः ॥ १८ ॥ तत्कर्मविश्वदेवानांतद्रहस्यंमहर्षिषु ॥ सइज्यस्सर्व
यज्ञानांमतत्त्वंतत्त्वदर्शिनाम् ॥ १९ ॥ अध्यात्ममध्यात्मविदांनरकंचविकर्मिणाम् ॥ अधिदैवंचतद्दैवमधिदैवतसंज्ञितम् ॥ २० ॥
अधिभूतंचतद्भूतंपरंचपरमार्थिनाम् ॥ सयज्ञोवेदनिर्दिष्टस्तत्तपःकवयोविदुः ॥ २१ ॥ यःकर्त्ताकारकोबुद्धिर्मनःक्षेत्रज्ञएवच ॥ प्रणवः
पुरुषःशास्ताएकश्चेतिविभाव्यते ॥ २२ ॥प्राणःपञ्चविधश्चैवध्रुवमक्षरमेवच ॥ कालःपाकश्चयज्ञश्चयष्टाचार्धातमेवच ॥ २३ ॥ उच्यतेविविधैर्भावैः
सएवायंतुतत्परम् ॥ सएवभगवान्सर्वंकरोतिनकरोतिच ॥ २४ ॥ सोऽस्मिन्कारयतेसर्वंस्थानिनांचकृतिःकृता ॥ यजामहेतमेवाद्यंसएवोत्थाननि
र्वृतः ॥ २५ ॥ योवक्तायच्चवक्तव्यंयश्चाहंतद्ब्रवीमिते ॥ श्रूयतेयच्चवैश्राव्यंयच्चान्यत्परिजल्पितम् ॥ २६ ॥ याःकथायाश्चश्रुतयोयोधर्मीधर्मतत्परः॥
विश्वंविश्वपतिर्यश्चसतुनारायणःस्मृतः ॥ २७ ॥ यत्सत्यंयदनृतमादिमध्यभूतंयच्चान्त्यंनिरवधिकंचयद्भविष्यम् ॥ यत्किञ्चिच्चरमचरंयदस्तिचान्य
त्सर्वंतत्पुरुषवरःप्रधानभूतः॥२८॥चत्वार्य्याहुःसहस्राणिवर्षाणांतत्कृतंयुगम्॥ तस्यतावच्छतीसन्ध्याद्विगुणाकुरुनन्दन ॥२९॥ यत्रधर्मश्चतुष्पादस्त्व
धर्मःपादविग्रहः॥स्वधर्मनिरताःशान्ताजायन्तेयत्रमानवाः ॥३०॥ विप्राःस्थिताधर्मपराराजवृत्तिस्थितानृपाः॥कृष्यामभिरतावैश्याःशूद्राःशुश्रूषव
स्तथा ॥३१ ॥ तदासत्यंचसत्वंचधर्मश्चैवविवर्धत ॥ सद्भिराचरितोधर्मोयेनलोकःप्रवर्त्तते ॥३२॥ एतत्कृतयुगेवृत्तंसर्वेषामेवपार्थिव ॥ प्राणिनांधर्मसं
ज्ञानांनराणांनीचजन्मनाम् ॥ ३३ ॥ त्रीणिवर्षसहस्राणित्रेतायुगमिहोच्यते ॥ तस्यतावच्छतीसन्ध्याद्विगुणापरिकीर्तिता ॥ ३४ ॥ द्वाभ्याम
धर्मःपादाभ्यांत्रिभिर्धर्मोव्यवस्थितः ॥ यत्रसत्यंचसत्वंचक्रियाधर्मोविधीयते ॥ ३५ ॥ त्रेतायांविकृतिंयान्तिवर्णालोभेनसंयुताः ॥ चातुर्वर्ण्यस्य
वैकृत्यंक्षान्तिदौर्बल्यमेवच ॥ ३६ ॥ एषात्रेतायुगगतिर्विचित्रादेवनिर्मिता ॥ द्वापरंद्विसहस्रंतुवर्षाणांकुरुनन्दन ॥ ३७ ॥ तस्यतावच्छतीस
न्ध्याद्विगुणंयुगमुच्यते ॥ तत्राप्यर्तीवार्थपराःप्राणिनोरजसाहताः ॥३८॥ शठानैष्कृतिकाःक्षुद्राजायन्तेकुरुनन्दन ॥ द्वाभ्यांधर्मःस्थितःपद्भ्याम
धर्मस्त्रिभिरुत्थितः ॥३९॥ विपर्ययशतैर्धर्मःक्षयमेतिकलौयुगे ॥ ब्रह्मण्यभावश्च्यवतेतथास्तिक्यंविवर्ज्यते ॥ ४० ॥ व्रतोपवासास्त्यज्यन्तेकलौवैयु
गपर्यये ॥ तदावर्षसहस्रंतुवर्षाणांद्वेशतेतथा ॥ ४१ ॥ सन्ध्ययासहसङ्ख्यातःक्रूरःकलियुगस्तथा ॥ यत्राधर्मश्चतुष्पादोधर्मःपादपरिग्रहः ॥ ४२ ॥
कामिनस्तापसाःक्षुद्राजायन्तेयत्रमानवाः ॥नचावसायिकःकश्चिन्नसाधुर्नचसत्यवाक् ॥४३॥ नास्तिकाब्राह्मणाभक्ताजायन्तेतत्रमानवाः॥अहङ्कार

गृहीताश्चप्रक्षीणस्नेहबन्धनाः ॥४४॥ विप्राःशूद्रसमाचारास्सन्तिसर्वेकलौयुगे ॥ आश्रमाणांविपर्यासःकलौसम्प्रतिवर्तते ॥४५॥ वर्णानांचैवसन्देहो
युगान्तेकुरुनन्दन ॥ एषाद्वादशसाहस्रीयुगाख्यापूर्वनिर्मिता ॥ ४६ ॥ सहस्रयुगपर्यन्तंतदहर्ब्राह्ममुच्यते ॥ ततोऽहनिगतेतस्मिन्सर्वेषामेवजीविनाम्॥
॥ ४७ ॥ शरीरनिर्वृतिंदृष्ट्वाकालःसंहारबुद्धिमान् ॥ देवतानांचसर्वेषांब्राह्मणानांमहीपते ॥ ४८ ॥ दैत्यानांदानवानांचयक्षराक्षसपक्षिणाम् ॥
गन्धर्वाणामप्सरसांभुजङ्गानांचपार्थिव ॥ ४९ ॥ पर्वतानांनदीनांचपशूनांचैवसत्तम ॥ तिर्यग्योनिगतानांचक्रिमीणांदंशिनांतथा ॥ ५० ॥
सर्वभूतपतिःपञ्चभूतःभूतानिभूतकृत् ॥ जगत्संहरणार्थायकुरुतेवैशसंमहत् ॥ ५१ ॥ भूत्वासूर्यश्चक्षुषीआददानोभूत्वावायुःप्राणिनांप्राणिजातम्॥
भूत्वार्वा निर्दहन्सर्वलोकान्भूत्वामेघोभूयउग्रोऽभ्यवर्षत् ॥ ५२ ॥ भूत्वानारायणोयोगीसर्वमूर्तिर्विभावसुः ॥ गभस्तिभिःप्रदीप्ताभिःसंशोषयतिसा
गरान् ॥ ५३ ॥ ततःपीत्वार्णवान्सर्वान्नदीकूपांश्चसर्वतः ॥ पर्वतानांचसलिलंसर्वमादाययोगवित् ॥ ५४॥ भूत्वाचैवसहस्रार्चिर्महींभित्वारसातले॥
रमतेजलमादायपिबन्नसमनुत्तमम् ॥ ५५ ॥ मूर्त्तामूर्त्तेतदन्यच्चयदस्तिप्राणिषुध्रुवम् ॥ तत्सर्वमरविन्दाक्षआदत्तेपुरुषोत्तमः ॥ ५६ ॥ वायुश्चबलवा
न्भूत्वाविधुन्वानोऽखिलंजगत्॥प्राणापानंसमासाद्यवायुनाक्रमतेहरिः ॥५७॥ ततोदेवगणानांचसर्वेषांचैवदेहिनाम्॥पञ्चेन्द्रियगुणास्सर्वेभूतान्येवचया
निच ॥५८॥ घ्रेयंघ्राणंशरीरंचपृथिवीसंश्रितागुणाः॥लोकयात्राभगवतामुहूर्तेनविनाशिता ॥५९॥ जिह्वारसश्चस्नेहश्चसंश्रिताःसलिलेगुणाः ॥ रूपं
चक्षुर्विभागश्चनेत्रंज्योतिःश्रितागुणाः ॥ ६० ॥ स्पर्शःप्राणश्चचेष्टाचपवनंसंश्रितागुणाः ॥ शब्दःश्रोत्रंचश्रवणंगगनंसंश्रितागुणाः ॥ ६१ ॥ मनो
बुद्धिश्चचित्तंचक्षेत्रज्ञंचेतिसंश्रिताः ॥ परेणपरमेष्ठीचहृषीकेशमुपाश्रिताः ॥ ६२ ॥ ततोभगवतस्तस्यरश्मिभिःपरिवारिताः ॥ वायुनापरिणुन्नाश्च
भूमिशाखामपाश्रिताः ॥ ६३ ॥ तेषांसंहरणोद्भूतःपावकःशतधाज्वलन् ॥ प्रदहन्नखिलंविश्वंवृत्तःसंवर्त्तकोऽनलः ॥ ६४ ॥ सपर्वतद्रुमान्गुल्माल्लँ
तावल्लीस्तृणानिच ॥ विमानानिचदिव्यानिपुराणिविविधानिच ॥६५॥ यानिचाश्रयणीयानिसर्वाण्यप्यदहद्भृशम् ॥ भस्मीकृत्यतुतान्सर्वाँल्लो
काँल्लोकगुरोर्गुरुः ॥ ६६ ॥ सभूतिंधारयामासयुगान्तेलोकसंभवाम् ॥ सहस्रवृष्टिःशतधाभूत्वाकृष्णोमहाघनः ॥६७॥ दिव्यतोयेनहविषातर्पयामास
मेदिनीम् ॥ ततःक्षीरनिकाशंनस्वादुनापरमाम्भसा ॥ ६८ ॥ शिशिरेणचपुण्येनमहीनिर्वाणमागमत् ॥ तेनतोयेनसम्पृक्तापयस्साधर्म्यतोधरा
॥ ६९ ॥ एकार्णवजलीभूतासर्वसत्त्वविवर्जिता ॥ महासत्त्वान्यपिविभुंप्रविष्टान्यमितौजसम् ॥ ७० ॥ नष्टार्कपवनाकाशेसूक्ष्मेजगतिसंवृते ॥
संशोषमात्मनाकृत्वासमुद्राणांचदेहिनः ॥ ७१ ॥ दग्ध्वासङ्कोच्यचतथास्वपित्येकःसनातनः ॥ पौगणांरूपमास्थायस्वपित्यमितविक्रमः ॥ ७२ ॥

एकार्णवजलेव्यापीयोगीयोगमुपासितः ॥ अनेकानिसहस्राणियुगान्येकार्णवाम्भसि ॥ ७३ ॥ नचैवकश्चिदव्यक्तंव्यक्तोवेदितुमर्हति ॥ कश्चैषपुरु
षोनामकिंयोगःकश्चयोगवान् ॥ ७४ ॥ नपृष्ठेनैवमभितोनैवपार्श्वेनचाग्रतः ॥ कश्चिद्विज्ञायतेतस्यद्दश्यतेदेवसत्तमः ॥ ७५ ॥ नभःक्षितिंपव
नमपःप्रकाशनंप्रजापतिंभुवनधरंसुरेश्वरम् ॥ पितामहंश्रुतिनिलयंमुनिंप्रभुंसमापयञ्छयनमरोचयत्प्रभुः ॥ ७६ ॥ एवमेकार्णवीभूतेशेतेलोके
महाद्युतिः ॥ प्रच्छाद्यसलिलेनोर्वीहंसोनारायणायते ॥ ७७ ॥ महतोरजसोमध्येमहार्णवसमस्यव ॥ वारिजाक्षोमहाबाहुरक्षयंब्रह्मयद्विदुः ॥ ७८ ॥
आत्मरूपसरूपेणतमसासंवृतःप्रभुः ॥ मनःसात्विकमादाययत्रतत्सत्वमाहितम् ॥ ७९ ॥ याथातथ्यंपरंज्ञानंभूतायब्रह्मणेततः ॥ रहस्यंचतथोदि
ष्टंयथोपनिषदांस्मृतम् ॥ ८० ॥ पुरुषोयज्ञइत्येतत्परमंपरिकीर्तितम् ॥ यश्चान्यःपुरुषाख्यःस्यात्सएवपुरुषोत्तमः ॥ ८१ ॥ येचयज्ञकरा
विप्रायऋत्विजइतिस्मृताः ॥ अस्मादेवपुराभूतावक्रेभ्यःश्रूयतेतथा ॥ ८२ ॥ ब्रह्माणंप्रथमंवक्त्रादुद्गातारंचसामगम् ॥ होतारंचतथाध्वर्युंबाहु
भ्यामसृजत्प्रभुः ॥ ८३ ॥ ब्रह्माणंब्राह्मणाच्छंसिस्तोतारौचैवसर्वशः ॥ मेढ्राच्चमैत्रावरुणंप्रतिष्ठातारमेवच ॥ ८४ ॥ उदरात्प्रतिहर्तारंपोतारंचैव
पार्थिव ॥ पाणिभ्यामथचाग्नीध्रमुन्नेतारंचयाज्ञुषम् ॥ ८५ ॥ अच्छावाकमथोरुभ्यांसुब्रह्मण्यंचसामगम् ॥ एवमेवंसभगवान्षो
डशैताञ्जगत्पतिः ॥ ८६ ॥ स्वयम्भूःसर्वयज्ञानामृत्विजोऽसृजदुत्तमान् ॥ तदाचैषमहायोगीपुरुषोयज्ञसंज्ञितः ॥ ८७ ॥
वेदाश्चैवतथासर्वेसहाङ्गोपनिषत्क्रियाः ॥ स्वपित्येकार्णवेचैवयदाश्चर्यमभूत्पुरा ॥ ८८ ॥ श्रूयतांतुतदाविप्रोमार्कण्डेयःकुतूहलात् ॥
गीर्णोभगवतातेनकुक्षावासीन्महामुनिः ॥ ८९ ॥ वहुवर्षसहस्रायुस्तस्यैववरतेजसः ॥ अटंस्तीर्थप्रसङ्गेनपृथिवीतीर्थगोचरः ॥ ९० ॥
आश्रमाश्चिपुण्यानिदेवतायतनानिच ॥ देशान्राष्ट्राणिचित्राणिपुराणिविविधानिच ॥ ९१ ॥ जपहोमपराःशान्तास्तपोभिरमलाःस्मृताः ॥
मार्कण्डेयस्ततस्तस्यशनैर्वक्त्राद्विनिर्गतः॥९२॥निष्क्रामन्तंनचात्मानंजानीतेदेवमायया॥निष्क्रम्यतस्यउदरादेकार्णवमथोजगत्॥९३॥ सर्वतस्तमसा
च्छन्नंमार्कण्डेयोऽन्ववैक्षत ॥ तस्योत्पन्नंभयंतीव्रंव्यत्ययंचात्मजीवितम् ॥ ९४ ॥ देवदर्शनसंहृष्टोविस्मयंपरमंगतः ॥ सोऽचिन्तयदमोघात्मा
मार्कण्डेयोऽथशङ्कितः ॥ ९५ ॥ किंनुस्याच्चित्तसंमोहःकिंनुस्वप्नोऽनुभूयते ॥ व्यक्तमन्यतरोभावएतयोर्भवितामम ॥ ९६ ॥ नहिस्वप्नोह्य
यंसत्ययुक्तंयत्सत्यमर्हति ॥ नष्टचन्द्रार्कपवनोनष्टपर्वतभूतलः ॥ ९७ ॥ कतमःस्यादयंलोकइतिशोकमुपागतः ॥ ददर्शचापिपुरुषंस्वपन्तंपर्वतो
पमम् ॥ ९८ ॥ सलिलेऽर्धमथोमग्नंजीमूतमिवसागरे ॥ तपन्तमिवतेजोभिरामुक्तशशिभास्करम् ॥ ९९ ॥ गाम्भीर्यात्सागरमिवभासमानम्महौ

जसा ॥ देवंद्रष्टुमिहायातःकोभवानितिविस्मयात् ॥ १०० ॥ तथैवचमुनिःकुक्षिंपुनरेवप्रवशितः ॥ सप्रविष्टःपुनःकुक्षिंमार्कण्डेयःसविस्मयम्॥१॥
तथैवचपुनर्भूयोविजानन्स्वप्नदर्शनम् ॥ सतथैवयथापूर्वंपृथिवीमटतेवनम् ॥ २ ॥ पुण्यतीर्थजलोपेतंविविधान्याश्रमाणिच ॥ क्रतुभिर्यजमानांश्चसमाप्तगुरुदक्षिणैः ॥ ३ ॥ अपश्यद्देवकुक्षिस्थान्यज्ञस्थाञ्शतशोद्विजान् ॥ सद्वृत्तमाश्रिताःसर्वेवर्णाब्राह्मणपूर्वकाः ॥ ४ ॥ चत्वारआश्रमाः
सम्यग्यथापूर्वंविलोकिताः ॥ एवंवर्षशतंसाग्रंमार्कण्डेयेनधीमता ॥ ५ ॥ चरतापृथिवीसर्वातत्कुक्षौहिसमीक्ष्यते ॥ ततःकदाचिदथवैपुनः
कुक्षेर्विनिर्गतः ॥ ६ ॥ सुप्तंन्यग्रोधशाखायांबालमेकंनिरीक्ष्यच ॥ तथैवैकार्णवजलेनीहारेणावृतान्तरे ॥ ७ ॥ अव्यक्तक्रीडितेलोकेसर्वभूतविव
र्जिते ॥ समुनिर्विस्मयाविष्टःकौतूहलसमन्वितः ॥ ८ ॥ बालमादित्यसङ्काशंनशक्नोत्यभिवीक्षितुम् ॥ सोऽप्यचिन्तयदेकान्तेस्थित्वास
लिलसन्निधौ ॥ ९ ॥ पूर्वदृष्टमिदंमेनेशङ्कितोदेवमायया॥अगाधेसलिलेश्रान्तेमार्कण्डेयःसविस्मयः ॥ ११० ॥ पूर्ववत्तमथोद्रष्टुमत्रजत्त्रस्तलोचनः ॥
सतस्मैभगवानाहस्वागतंबालभोइति ॥ ११ ॥ बभाषेमेघतुल्येनस्वरेणपुरुषोत्तमः ॥ मार्कण्डेयनभेतव्यमागच्छस्वममान्तिकम् ॥ १२ ॥
मार्कण्डेयउवाच ॥ कोनाम्नाकीर्तयतिमांकुर्वन्परिभवंमम ॥ दिव्यवर्षसहस्राख्यंधर्षयंश्चैवमेवयः ॥ १३ ॥ नह्येषचसदाचारोदेवेष्वपिममो
चितः ॥ मांब्रह्मापिहिसस्नेहोदीर्घायुरितिभाषते ॥ १४ ॥ कस्तपोघोरमासाद्यममाद्यत्यक्तजीवितः ॥ मार्कण्डेयेतिमामुक्त्वामृत्युर्मीक्षितु
मर्हसि ॥ १५ ॥ एवंप्रक्षुभितःक्रोधान्मार्कण्डेयोमहामुनिः ॥ तदैनंभगवान्भूयोबभाषेमधुसूदनः ॥ १६ ॥ श्रीभगवानुवाच ॥ अहंते
जनकोवत्सहृषीकेशःपितागुरुः ॥ आयुःप्रदातापौराणःकिंमांत्वंनोपसर्पसि ॥ १७ ॥ मांपुत्रकामःप्रथमंत्वत्पिताङ्गिरसोमुनिः ॥ पूर्वमाराधया
मासतपस्तीव्रंसमाश्रितः ॥ १८ ॥ तंदृष्ट्वाघोरतपसंत्रिदशोत्तमतेजसम् ॥ दत्तवांस्त्वामहंपुत्रंमहर्षिममितौजसम् ॥ १९ ॥ कस्समुत्सहतेचा
न्योयोगिभूतात्मगात्मकम् ॥ द्रष्टुमेकार्णवगतंक्रीडन्तंयोगमायया ॥ १२० ॥ ततःप्रहृष्टहृदयोविस्मयोत्फुल्ललोचनः ॥ मूर्ध्निबद्धाञ्जलिपुटो
मार्कण्डेयोमहातपाः ॥ २१ ॥ नामगोत्रेतुसम्प्रोच्यदीर्घायुर्लोकपूजितः ॥ तस्मैभगवतेभक्त्यानमस्कारमथाकरोत् ॥ २२ ॥ मार्कण्डेय
उवाच ॥ इच्छामितत्त्वतोज्ञातुमिमांमायांतवानघ ॥ यदेकार्णवमध्यस्थःशेषेत्वंबालरूपवान् ॥ २३ ॥ किंसंज्ञश्चैवभगवाँल्लोकेविज्ञायसे
प्रभो ॥ तर्कयेऽहंमहात्मानंकोह्यन्यःस्थातुमर्हसि ॥ २४ ॥ श्रीभगवानुवाच ॥ अहंनारायणोब्रह्मन्सर्वभूतविनाशनः ॥ अहंसहस्रशी
र्षास्यःसहस्रपदसंयुतः ॥ २५ ॥ आदित्यवर्णःपुरुषोमुखेब्रह्ममयोह्यहम् ॥ अहमग्निर्हव्यवहःसप्तसप्तिभिरन्वितः ॥ २६ ॥ अहमिन्द्रपदः

शक्रक्रतूनांपरिवत्सरः ॥ अहयोगिषुसाङ्ख्याख्योयुगान्तावर्तएवच ॥ २७ ॥ अहंसर्वाणिसत्त्वानिदैवतान्यखिलानिच ॥ भुजगानामहंशेष
स्ताक्ष्योऽहंसर्वपक्षिणाम् ॥ २८ ॥ कृतान्तःसर्वभूतानांविज्ञेयःकालसंज्ञितः ॥ अहंधर्मस्तपश्चाहंसर्वाश्रमनिवासिनाम् ॥ २९ ॥ अहंदया
परोधर्मःक्षीरोदोऽहंमहार्णवः ॥ यत्सत्यंतत्परंत्वेकअहमेवप्रजापतिः ॥ १३० ॥ अहंसाङ्ख्यमहंयोगोह्यहंतत्परमंपदम् ॥ अहमिज्याक्रियाचाहमहं
विद्याधिपःस्मृतः ॥ ३१ ॥ अहंज्योतिरहंवायुरहंभूमिरहंजलम् ॥ आकाशोऽहंसमुद्राश्चनक्षत्राणिदिशोदश ॥ ३२ ॥ अहंवर्षमहंसोमःपर्जन्योऽहमहं
रविः ॥ अहंपुराणंपरमंतथैवाहंपरायणम् ॥ ३३ ॥ भविष्येचापिसर्वत्रभविष्यत्सर्वसङ्ग्रहः ॥ यत्किञ्चित्पश्यसेविप्रयच्छृणोपिचकिञ्चन ॥ ३४ ॥
यच्चानुभवसेलोकेतत्सर्वंमामनुस्मर ॥ विश्वंसृष्टंमयापूर्वंसृजेऽद्यापिचपश्यमाम् ॥ ३५ ॥ युगेयुगेचरक्षामिमार्कण्डेयाखिलंजगत् ॥ तदेतत्कथितंसर्वं
मार्कण्डेयावधारय ॥ ३६ ॥ शुश्रूपुरपिधर्मेपुकुक्षौचरसुखंमम ॥ ममब्रह्माशरीरस्थोदेवाश्चऋपिभिःसह ॥ ३७ ॥ व्यक्तमव्यक्तयोगंमामवगच्छमुर
द्विषम् ॥ अहमेकाक्षरोमन्त्रस्त्र्यक्षरश्चपितामहः ॥ ३८ ॥ परस्त्रिवर्गओंकारःपरमात्मप्रदर्शनः ॥ एवमादिपुराणंचवदतेमांमहामते ॥ ३९ ॥
पुलस्त्यउवाच ॥ वक्त्रमाहृतवानीशोमार्कण्डेयमथोहरिः ॥ ततोभगवतःकुक्षिंप्रविष्टोमुनिसत्तमः ॥ १४० ॥ यदक्षयंविविधमुपाश्रितंतुतन्महार्णवे
व्यपगतचन्द्रभास्करे ॥ शनैश्चरन्प्रभुरथहंससंज्ञितःसृजञ्जगद्विहरतिकालपर्यये ॥ ४१ ॥ अथचैवंशुचिर्भूत्वाचचारसतुवैतपः ॥ छादयित्वाऽऽत्मनो
देहंपयसाम्बुजसम्भवः ॥ ४२ ॥ ततोमहात्मातिबलोमर्त्यलोकविसर्जने ॥ महतांचैवभूतानांविश्वोविश्वमचिन्तयत् ॥ ४३ ॥
तस्यचिन्तयमानस्यनियतेसंस्थितेऽर्णवे ॥ निराकाशेतोयमयेसूक्ष्मेजगतिसंक्षये ॥ ४४ ॥ ईशःसंक्षोभयामाससोऽर्णवंसलिलंगतः ॥ अथान्त
रादपांसूक्ष्ममथच्छिद्रमभूत्पुरा ॥ ४५ ॥ शब्दंप्रतिततोभूतोमारुतश्छिद्रसम्भवः ॥ संलब्ध्वान्तरसंक्षोभंव्यवर्धतसमीरणः ॥ ४६ ॥ नभस्वताब
लवतावेगाद्विक्षोभितोऽर्णवः ॥ तस्यार्णवस्यक्षुब्धस्यतस्मिन्नम्भसिमथ्यतः ॥ ४७ ॥ कृष्णवर्त्मासमभवत्प्रभुर्वैश्वानरोमहान् ॥ ततःसंशोषया
मासपावकःसलिलंबहु ॥ ४८ ॥ समस्तजलधिश्छिद्रमभवद्विसृतंनभः ॥ आत्मतेजोभवाःपुण्याआपोऽमृतरसोपमाः ॥ ४९ ॥ आकाशंछिद्र
सम्भूतंवायुराकाशसम्भवः ॥ अथसङ्घर्षसम्भूतंपावकंचास्यसम्भवम् ॥ १५० ॥ दृष्ट्वापितामहोदेवोमहाभूतविभावनः ॥ दृष्ट्वाभूतानिभग
वाँल्लोकसृष्ट्यर्थमुत्तमम् ॥ ५१ ॥ ब्रह्मणोजन्मसहितंबहुरूपोह्यचिन्तयत् ॥ चतुर्युगानांसंख्यातंसहस्रंयुगपर्यये ॥ ५२ ॥ यत्पृथिव्यांद्विजे
न्द्राणांतपसाभावितात्मनाम् ॥ बहुजन्मविशुद्धात्माब्रह्मणोहरिरुच्यते ॥ ५३ ॥ ज्ञानंदृष्ट्वातुविश्वात्मायोगिनांयातियोग्यताम् ॥ तंयोगवन्तं

विज्ञायसम्पूर्णैश्वर्यमुत्तमम् ॥ ५४ ॥ पदेब्रह्मणिविश्वम्भन्ययोजयतयोगवित् ॥ ततस्तस्मिन्महातोयेमहेशोहरिरच्युतः ॥ ५५ ॥ जलक्री
डांचविधिवत्सचक्रेसर्वलोककृत् ॥ पद्मंनाभ्युद्भवंचैकंसमुत्पादितवांस्ततः ॥ ५६ ॥ सहस्रवर्णविरजंभास्कराभंहिरण्मयम् ॥ ५७ ॥ हुताश
नज्वलितशिखोज्ज्वलप्रभंसमुत्थितंशरदमलार्कतेजसम् ॥ विराजतेकमलमुदारवर्चसंमहात्मनस्तनुरुहचारुशैवलम् ॥ १५८ ॥ इतिश्रीपाद्म
पुराणेप्रथमेसृष्टिखण्डेपद्मप्रादुर्भावोनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ पुलस्त्यउवाच ॥ अथयोगवतांश्रेष्ठमसृजद्भूरिवर्चसम् ॥ स्रष्टारंसर्व
लोकानांब्रह्माणंसर्वतोमुखम् ॥ १ ॥ तस्मिन्हिरण्मयेपद्मेबहुयोजनविस्तृते ॥ सर्वतेजोगुणमयेपार्थिवैर्लक्षणैर्वृते ॥ २ ॥ तच्चपद्मंपुराभूतंपृथिवी
रूपमुत्तमम् ॥ नारायणसमुद्भूतंप्रवदन्तिमहर्षयः ॥ ३ ॥ यत्पद्मंसारसादेवीपृथिवीपरिकथ्यते ॥ येपद्मकेशरामुख्यास्तान्दिव्यान्पर्वतान्वि
दुः ॥ ४ ॥ हिमवन्तंचनीलंचमेरुंनिषधमेवच ॥ कैलासंशृङ्गवन्तंचतथाद्रिंगन्धमादनम् ॥ ५ ॥ पुण्यंत्रिशिखरंचैवकान्तंमन्दरमेवच ॥
उदारंपिञ्जरंचैवविन्ध्यमस्तंचपर्वतम् ॥ ६ ॥ एतएवगणानांचसिद्धानांचमहात्मनाम् ॥ आश्रयाःपुण्यशीलानांसर्वकामफलप्रदाः ॥ ७ ॥
एतेषामन्तरेद्वीपोजम्बूद्वीपइतिस्मृतः ॥ जम्बूद्वीपस्यसंस्थानंयज्ञियायत्रचक्रियाः ॥ ८ ॥ तेभ्योयद्द्रवतेतोयंदिव्यामृतरसोपमम् ॥ दिव्यतीर्थ
शताधाराःसरस्यःसर्वतःस्मृताः ॥ ९ ॥ यान्येतानीहपद्मस्यकेसराणिसमन्ततः ॥ असङ्ख्येयाःपृथिव्यांतेविविधाश्चैवपर्वताः ॥ १० ॥
यानिपर्णानिपद्मस्यभूरिपूर्वाणिपार्थिव ॥ तेदुर्गमाःशलचितास्म्लेच्छदेशाःप्रकीर्तिताः ॥ ११ ॥ यान्यधोभागपत्राणितानिवासास्तुभागशः ॥
दैत्यानामसुराणांचपन्नगानांचपार्थिव ॥ १२ ॥ तेषांमध्येऽन्तरंयत्तुतद्रसातलसंज्ञितम् ॥ महापातककर्माणोमज्जन्तेयत्रमानवाः ॥ १३ ॥ पद्म
स्यचान्तरेपद्मएकार्णवगतामही ॥ चतुर्दिशासुसङ्ख्याताश्चत्वारःसलिलाकराः ॥ १४ ॥ एवंनारायणस्यार्थेमहीपुष्करसम्भवा ॥ प्रादुर्भावोऽ
प्ययंतस्मान्नाम्नापुष्करसंज्ञितः ॥ १५ ॥ एतस्मात्कारणाद्यज्ञेपुराणःपरमर्षिभिः ॥ यज्ञियैर्वेददृष्टान्तैयज्ञेयूपचितिःकृता ॥ १६ ॥ एवंभगवता
तेनविश्वंव्याप्यधराचिता ॥ पर्वतानांनदीनांचरचनात्रैवनिर्मिता ॥ १७ ॥ विश्वस्ययश्चाप्रतिमप्रभावःप्रभाकराभोवरुणोऽमितद्युतिः ॥ शनैःस्वय
म्भूर्व्यसृजत्सुषुप्तंजगन्मयःपद्मनिधिंमहार्णवे ॥ १८ ॥ विप्रस्तपसिसम्भूतोमधुर्नाममहासुरः ॥ तेनैवचसहोद्भूतोह्यसुरोनामकैटभः ॥ १९ ॥ तौर
जस्तमसोभूतौसम्भूतौतामसौगणौ ॥ एकार्णवंजगत्सर्वंक्षोभयेतांमहाबलौ ॥ २० ॥ दिव्यरक्ताम्बरधरौश्वेतदीप्तोग्रदंष्ट्रिणौ ॥ किरीटमकुटोदग्रौकेयू
रवलयोज्ज्वलौ ॥ २१ ॥ महाविवृतताम्राक्षौपीनोरस्कौमहाभुजौ ॥ महागिरेःसंहननौजङ्गमाविवपर्वतौ ॥ २२ ॥ नवमेघप्रतीकाशावादित्यप्रतिमा

ननौ ॥ विपुलाभोगकेयूरकराभ्यामतिभीषणौ ॥ २३ ॥ पादसञ्चारविन्यासैर्विक्षिपन्ताविवार्णवम् ॥ कम्पयन्तौहरिमिवशयानंमधुसूदनम् ॥ २४ ॥
तौतत्रविचरन्तौतुपुष्करेविश्वतोमुखौ ॥ योगिनांश्रेष्ठमत्यन्तंदीप्तंददृशतुस्तदा ॥ २५ ॥ ॥ नारायणसमाज्ञातंसृजन्तमखिलाःप्रजाः ॥ देवतानिच
विश्वानिमानसांश्चसुतानृषीन् ॥ २६ ॥ ततस्तावूचतुस्तत्रब्रह्माणमसुरोत्तमौ ॥ दुष्टौयुयुत्सूसङ्क्रुद्धौक्रोधव्याकुलितेक्षणौ ॥ २७ ॥ कस्त्वंपु
ष्करमध्यस्थःसितोष्णीषश्चतुर्भुजः ॥ आवामगणयन्मोहादास्सेत्वंविगतस्पृहः ॥ २८ ॥ एह्यागच्छावयोर्युद्धंदेहित्वंकमलोद्भव ॥ आवाभ्यांपरमे
शाभ्यामशक्तःस्थातुमर्णवे ॥ २९ ॥ तत्रकश्चभवेत्तुभ्यंयेनचात्रनियोजितः ॥ कःस्रष्टाकश्चतेगोप्ताकेननाम्नाभिधीयते ॥ ३० ॥ ब्रह्मोवाच ॥ ईश्व
रःप्रोच्यतेलोकेविष्णुश्चानन्तशक्तिधृत् ॥ ॥ तत्सकाशात्तुजातंमांस्रष्टारमवगच्छतम् ॥ ३१ ॥ मधुकैटभावूचतुः ॥ नावयोःपरमंलोकेकिंचिदस्तिम
हामुने ॥ आवाभ्यांछाद्यतेविश्वंतमसारजसाचवै ॥ ३२ ॥ रजस्तमोमयावावामृषीणामतिलङ्घिनौ ॥ धर्मशीलंछादयन्तौनाशकौसर्वदेहि
नाम् ॥ ३३ ॥ आवाभ्यांयुज्यतेलोकोदुस्तराभ्यांयुगेयुगे ॥ आवामर्थश्चकामश्चयज्ञस्सर्वपरिग्रहः ॥ ३४ ॥ सुखंयत्रमदोयत्रयत्रश्रीःकीर्तिरेवच ॥
येषांयत्काङ्क्षितंकिञ्चित्तत्तदावांविचिन्तय ॥ ३५ ॥ ब्रह्मोवाच ॥ आवाभ्यांसंहृतौदृष्टायुवांपूर्वपराजितौ ॥ तंसमाधायगुणिनंसत्वंचास्मिस
माश्रितः ॥ ३६ ॥ यःपरोयोगयुक्तात्मायोऽक्षरःसत्वमेवच ॥ रजसस्तमसश्चैवयःस्रष्टाविश्वसम्भवः ॥ ३७ ॥ ततोभूतानिजायन्तेसात्विका
नीतराणिच ॥ सएवयुवयोर्नाशंवासदेवःकरिष्यति ॥ ३८ ॥ स्वपन्नेवततोदेवोबहुयोजनविस्तृतौ ॥ बाहूनारायणोब्रह्मकृतवानात्ममायया ॥ ३९ ॥
कृष्यमाणौततस्तस्यबाहुभ्यांबाहुशालिनौ ॥ चेरतुस्तौविगलितौशकुनाविवपीवरौ ॥ ४० ॥ ततस्तावाहतुर्गत्वावासुदेवंसनातनम् ॥ पद्मनाभंहृ
षीकेशंप्रणिपत्यनतावुभौ ॥ ४१ ॥ जानीवस्त्वांविश्वयोनिंत्वामेकंपुरुषोत्तमम् ॥ आवयोश्चैवहेतुंत्वांजानन्तौबुद्धिकारणम् ॥ ४२ ॥ अमोघ
दर्शनंसत्यंयतस्त्वांविद्मश्शाश्वतम् ॥ ततस्त्वामभितोदेवकाङ्क्षावःप्रसमीक्षितुम् ॥ ४३ ॥ अमोघदर्शनोऽसित्वंनमस्तेसमिति
ञ्जय ॥ तमिच्छावोवरंदेवत्वयाहितमरिन्दम ॥ ४४ ॥ श्रीभगवानुवाच ॥ किमर्थंमामनुब्रूथयुवामसुरसत्तमौ ॥ गतायुष्कौयुवांभूयस्त्वहोजीवितुमि
च्छथः ॥ ४५ ॥ मधुकैटभावूचतुः ॥ यस्मिन्नकश्चिन्मृतवान्देवतस्मिन्वधंप्रभो ॥ इच्छावःपुत्रतांचैवभवतःसुमहातपः ॥ ४६ ॥
श्रीभगवानुवाच ॥ युवयोर्बाढमेतत्स्याद्भविष्येकलिसम्भवे ॥ भविष्यथोनसन्देहःसत्यमेतद्ब्रवीमिवाम् ॥ ४७ ॥ पुलस्त्यउवाच ॥ वरंप्रदा
याथमहासुराभ्यांसनातनोविश्वधरःसुरोत्तमः ॥ रजस्तमोजौतुतदाऽनोपमौममर्दतावूरुतलेऽमरप्रभुः ॥ ४८ ॥ स्थित्वातस्मिंस्तुकमलेब्रह्माब्रह्म

विदांवरः ॥ ऊर्ध्वबाहुर्महातेजास्तपोघोरंसमाश्रितः ॥ ४९ ॥ प्रज्वलन्निवतेजोभिर्भाभिःस्वाभिस्तमोनुदः ॥ बभासेसतुधर्मात्मासहस्रांशुरि
वांशुभिः ॥ ५० ॥ अथान्यद्रूपमास्थायप्रभुर्नारायणोऽव्ययः ॥ आजगाममहातेजायोगाचार्योमहायशाः ॥ ५१ ॥ साङ्ख्याचार्यश्चमति
मान्कपिलोब्रह्मणांवरः ॥ उभावपिमहात्मानौपूजितौतत्रतत्परौ ॥ ५२ ॥ तौप्राप्तावूचतुस्तत्रब्रह्माणममितौजसम् ॥ परावरविशेषज्ञौपूजितौ
चमहर्षिभिः ॥ ५३ ॥ ब्रह्मसम्परिवेद्यन्तेविशालंजगदास्थितौ ॥ ग्रामणीस्सर्वभूतानांब्रह्मात्रैलोक्यपूजितः ॥ ५४ ॥ तयोस्तद्वचनंश्रुत्वा
विबोध्यगतयोःपरम् ॥ त्रीनिमान्कृतवाँल्लोकान्यथेयंब्रह्मणःश्रुतिः ॥ ५५ ॥ पुत्रंस्वसम्भवंचैकंसमुत्पादितवान्भुवम् ॥ तदाग्रेचागतस्तस्यब्रह्म
मानससम्भवः ॥ ५६ ॥ उत्पन्नमात्रोब्रह्माणमुक्तवान्मानसःसुतः ॥ किंकुर्मस्तवसाहाय्यंब्रवीतुंभगवानिति ॥ ५७ ॥ ब्रह्मोवाच ॥ यदे
षकपिलोनामब्रह्मनारायणस्तथा ॥ वदतोभवतस्त्वंतुतत्कुरुष्वमहामते ॥ ५८ ॥ ब्रह्मणासतथोक्तस्तौप्राहभूपसमुत्थितः ॥ शुश्रूषुरस्मियु
वयोःकिंकरोमिकृताञ्जलिः ॥ ५९ ॥ श्रीभगवानुवाच ॥ यत्सत्यमक्षरंब्रह्मअष्टादशविधंचतत् ॥ यत्सत्यममृतंतत्तुपरंपदमनुस्मर ॥ ६० ॥
एतद्वचोनिशम्यैवंसययौदिशमुत्तराम् ॥ गत्वाचतत्रसब्रह्मअगमज्ज्ञानचक्षुषा ॥ ६१ ॥ ततोब्रह्माभवर्नामद्वितीयमसृजत्प्रभुः ॥ सङ्कल्पयित्वामन
सातमेवचमहामनाः ॥ ६२ ॥ ततःसोऽप्यब्रवीद्वाक्यंकिंकरोमिपितामह ॥ पितामहसमाज्ञातोब्रह्माणंसमुपस्थितः ॥ ६३ ॥ ब्राह्मणस्यामृतरसोऽनु
भूतस्तेनवैततः ॥ प्राप्तःसपरमंस्थानंसतयोःपार्श्वमागतः ॥ ६४ ॥ तस्मिन्नपिगतेसोऽथनृतीयमसृजत्प्रभुः ॥ मोक्षप्रवृत्तिकुशलंसुवर्नामयुतंप्रभुः ॥
॥६५॥ सोऽपितंधर्ममास्थायतयोरेवागमद्गतिम् ॥ एवंपुत्रास्त्रयोऽप्येतेगताःशम्भोर्महात्मनः ॥६६॥ तान्गृहीत्वासुतांस्तस्यतौगतावूर्जितांगतिम् ॥
नारायणश्चभगवान्कपिलश्चयतीश्वरः ॥ ६७ ॥ यंकालंतेगताब्रह्मब्रह्मातंकालमेवच ॥ तपोघोरतरंभूयःसंश्रितःपरमंपदम् ॥ ६८ ॥ नचशक्त
स्ततोब्रह्माप्रभुरेकस्तपश्चरन् ॥ शरीरार्धात्ततोभार्यामुत्पादयतितच्छुभाम् ॥ ६९ ॥ आत्मनःसदृशान्पुत्रानसृजद्वैपितामहः ॥ विश्वेप्रजानांपतयो
येभ्योलोकाविनिःसृताः ॥ ७० ॥ विश्वेशंप्रथमंतावन्महात्मातपसात्मजम् ॥ सर्वत्रसंहतंपुण्यंनाम्नाधर्मंससृष्टवान् ॥ ७१ ॥ दक्षंमरीचिमत्रिंचपु
लस्त्यंपुलहंक्रतुम् ॥ वसिष्ठंगौतमंचैवभृगुमङ्गिरसंमुनिम् ॥ ७२ ॥ अत्यद्भुतास्स्वकृत्येनज्ञेयास्तेतुमहर्षयः ॥ त्रयोदशगुणारम्भायेवंशास्तुमहर्षि
णाम् ॥ ७३ ॥ अदितिर्दितिर्दनुःकालाअनायुःसिंहिकाखसा ॥ प्राचीक्रोधाचसुरसाविनताकद्रुरेवच ॥ ७४ ॥ दक्षस्यापत्यमेतद्वैकन्यद्वादशपार्थि
व ॥ नक्षत्राणिचचन्द्रस्यविंशतिस्सप्तचोर्जिताः ॥ ७५ ॥ मरीचेःकश्यपःपुत्रस्तपसानिर्मितःकिल ॥ तस्मैद्वादशकन्याश्चदक्षस्ताश्चान्वमन्यत ॥

॥ ७६ ॥ नक्षत्राणिचसोमायतथैवंदत्तवानृषिः ॥ रोहिण्यादीनिसर्वाणिपुण्यानिकुरुनन्दन ॥७७॥ तथैवदशधर्मायदत्ताश्चापिमनोरमाः ॥ लक्ष्मी
स्सरस्वतीसन्ध्याविश्वेशाचमहायशाः ॥ देवीसरस्वतीचैवब्रह्मणानिर्मिताःपुरा ॥ ७८ ॥ एताःपञ्चवरिष्ठावैसुरश्रेष्ठायपार्थिव ॥ दत्ताधर्मायभद्रंतेब्र
ह्मणादृष्टकर्मणा ॥ ७९ ॥ यारूपार्धवतीपत्नीब्रह्मणःकामरूपिणी ॥ सुरभिःसहसाभूत्वाब्रह्माणंसमुपस्थिता ॥ ८० ॥ ततस्तामगमद्ब्रह्मामैथुनेलोक
पूजितः ॥ लोकसर्जनहेतुज्ञोगवामर्थायसत्तम ॥ ८१ ॥ जज्ञेचैकादशसुतान्विपुलान्धर्मसंज्ञितान् ॥ रक्तसन्ध्याभ्रसङ्काशान्महतस्तिग्मतेजसः ॥
॥ ८२ ॥ तेरुदन्तोद्रवन्तश्चगतवन्तःपितामहम् ॥ रोदनाद्द्रवणाच्चैवरुद्राएवेतितेस्मृताः ॥ ८३ ॥ निर्हतिश्चैवसन्ध्यश्चतृतीयश्चाप्ययोनिजः ॥ मृग
व्याधःकपर्दीचमहाविश्वेश्वरश्चयः ॥ ८४ ॥ अहिर्बुध्न्यश्चभगवान्कपालीचवपिङ्गलः ॥ सेनानीश्चमहातेजारुद्राश्चैकादशस्मृताः ॥ ८५॥ तस्यामे
वसुरभ्यांचगावोजाताःसुराश्चये ॥ अजश्चैवतुहंसश्चतथैवनृपसत्तम ॥ ८६ ॥ ओषध्यःप्रवरायाश्चमरभ्यास्तास्समुत्थिताः ॥ धर्माल्लक्ष्मीस्तथाका
मंसाध्यान्साध्याव्यजायत ॥ ८७॥ भवंचप्रभवंचवक्रुशाश्वंमवहंतथा ॥ अरुणंवरुणंचैवविश्वामित्रचलध्रुवौ ॥८८॥ हविष्मन्तंतनूजंचविधानाभि
मतावपि ॥ वत्सरंचैवभर्तिंचसर्वासुरनिषूदनम् ॥८९॥ सुपर्वाणंबृहत्कान्तिमहालोकनमस्कृतम् ॥ वासवानुगतादेवीजनयामासवैसुरान्॥९०॥ धरंवै
प्रथमंदेवंद्वितीयंध्रुवमव्ययम् ॥ विश्वावसुंतृतीयंचचतुर्थंसोममीश्वरम् ॥९१॥ ततोऽनुरूपमायंचयमंतस्मादनन्तरम् ॥ सप्तमंचतथावायुमष्टमंनिर्हतिं
तथा ॥ ९२ ॥ धर्मस्यापत्यमेतद्वैसुरभ्यांतदजायत ॥ विश्वेदेवाश्चविश्वायांधर्माज्जाताइतिस्मृताः ॥ ९३ ॥ दक्षश्चैवमहाबाहुःपुष्करस्तमएवच ॥
चाक्षुषश्चततोऽत्रिश्चतथाभद्रमहोरगौ ॥९४॥ विश्वान्तकवसुर्बालोनिकुम्भश्चमहायशाः ॥ रुरुदुश्चातिसिद्धौजाभास्करप्रमितद्युतिः ॥९५ ॥ विश्वा
न्देवान्देवमाताविश्वेषांजनयत्सुतान् ॥ मरुत्वतीमरुत्वतोदेवानजनयत्सुतान् ॥ ९६ ॥ अग्निश्चक्षूरविर्ज्योतिःसावित्रीमित्रमेवच ॥ अमरंशरवृष्टिंच
सुकर्षंचमहत्तरम्॥९७॥विराजंचैवराजंचविश्वायुंसुमतिंतथा ॥अश्वगंचित्ररश्मिंचतथाचनिषधंनृपम् ॥९८॥ भूयएवंचात्मविधिंचारित्रपादमात्रगम् ॥
बृहन्तंवैबृहद्रूपंतथाचैवसनाभिगम् ॥९९॥ मरुत्वतीप्रजाजज्ञ्ज्येष्ठान्तंमरुतांगणम् ॥अदितिःकश्यपाज्जज्ञेआदित्यान्द्वादशैवहि ॥१००॥ इन्द्रोविष्णु
र्भगस्त्वष्टावरुणोंऽशोऽर्यमारविः॥पूषामित्रश्चवरदोधातापर्जन्यएवहि ॥१॥ इत्येतेद्वादशादित्यावरिष्ठास्त्रिदिवौकसाम्॥आदित्यस्यसरस्वत्यांजज्ञाते
द्वौसुतौवरौ ॥२॥ तपःश्रेष्ठौगुणश्रेष्ठौत्रिदिवस्यातिसंमतौ॥दनुस्तुदानवाञ्जज्ञेदितिर्दैत्यान्व्यजायत॥३॥ कालातुकालकेयांस्तानसुरान्राक्षसांस्तथा॥
अनायुषायास्तनयाव्याधयश्चमहाबलाः ॥ ४ ॥ सिंहिकाग्रहमाताचगन्धर्वजननीमुनिः ॥ प्राचीत्वप्सरसांमातापुण्यानांभारतेतरा ॥ ५ ॥

क्रोधाद्याः सर्वभूतानि पिशाचायाश्च पार्थिव ॥ जज्ञेयक्षगणांश्चैव राक्षसांश्च विशांपते ॥ ६ ॥ चतुष्पदानि सत्त्वानि एतागाश्चैव सौरभी ॥ पुराणपुरुषश्चैव मायां विष्णुर्हरिः प्रभुः ॥ ७ ॥ कथितस्तेऽनुपूर्वेण संस्तुतश्च महर्षिभिः ॥ ८ ॥ यश्चेदमग्र्यं शृणुयात्पुराणं सदा नरः पर्वसु चेत्पठेत ॥ अवाप्य लोकं स हि वीतरागः परत्र च स्वर्गफलानि भुङ्क्ते ॥ ९ ॥ चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ॥ प्रसादयति यः कृष्णं तस्य कृष्णः प्रसीदति ॥ ११० ॥ राज्यं च लभते राजा निर्धनश्चोत्तमं धनम् ॥ क्षीणायुर्लभते चायुः पुत्रकामोऽथ सन्ततिम् ॥ ११ ॥ यज्ञार्थिनस्तथा कामांस्तपांसि विविधानि च ॥ यं यं कामयते कामं तं तं लोके श्वराल्लभेत् ॥ १२ ॥ सर्वं विहाय य इमं पठेद्वै पौष्करं हरेः ॥ प्रादुर्भावं नरश्रेष्ठ न तस्य ह्यशुभं भवेत् ॥ १३ ॥ एष पौष्करको नाम प्रादुर्भावो महात्मनः ॥ कीर्तितस्तु महाराज व्यासश्रुतिनिदर्शनात् ॥ १४ ॥ विष्णुत्वं शृणु मे विष्णोर्हरित्वं च कृते युगे ॥ वैकुण्ठत्वं च देवेषु कृष्णत्वं मानुषेषु च ॥ १५ ॥ ईश्वरस्य हि तस्यैषा कर्मणां गहना गतिः ॥ साम्प्रतं भूतभव्यं च शृणु राजन्यथातथम् ॥ १६ ॥ अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः ॥ नारायणो ह्यनन्तात्मा प्रभवोऽव्यय एव च ॥ १७ ॥ एष नारायणो भूत्वा हरिरासीत्सनातनः ॥ ब्रह्मा वायुश्च सोमश्च धर्मः शक्रो बृहस्पतिः ॥ १८ ॥ अदितेरपि पुत्रत्वमेत्य यजः कुरुनन्दन ॥ एष विष्णुरिति ख्यात इन्द्रस्यावरजो विभुः ॥ १९ ॥ प्रसादनं तस्य विभोरदित्याः पुत्रकारणम् ॥ वधार्थं सुरशत्रूणां दैत्यदानवरक्षसाम् ॥ १२० ॥ प्रधानात्मा पुरा ह्येष ब्रह्माणमसृजत्प्रभुः ॥ ससर्जाथ सुरान्कल्पे ब्रह्माणं च प्रजापतीन् ॥ २१ ॥ असृजन्मानसांस्तत्र ब्रह्मवंशाननुत्तमान् ॥ तेभ्योऽभवन्महात्मभ्यः परं ब्रह्म सनातनम् ॥ २२ ॥ एतदाश्चर्यभूतस्य विष्णोः कर्मानुकीर्तिनम् ॥ कीर्तनीयस्य लोकेषु कीर्त्यमानं निबोध मे ॥ २३ ॥ वृत्ते वृत्रवधे भीष्म वर्तमाने कृते युगे ॥ आसीत्त्रैलोक्यविख्यातः सङ्ग्रामस्तारकामयः ॥ २४ ॥ यत्र ते दानवा घोराः सर्वे सङ्ग्रामदुर्जयाः ॥ घ्नन्ति देवान्सुरान्सर्वान्सयक्षोरगराक्षसान् ॥ २५ ॥ ते वध्यमाना विमुखाश्छिन्नप्रहरणा रणे ॥ त्रातारं मनसा जग्मुर्देवं नारायणं प्रभुम् ॥ २६ ॥ एतस्मिन्नन्तरे मेघा निर्वाणाङ्गारवर्चसः ॥ सार्कचन्द्रग्रहगणं छादयन्तो नभस्तलम् ॥ २७ ॥ चण्डविद्युद्गणोपेता घोरनिर्ह्रादकारिणः ॥ अन्योन्यवेगाभिहताः प्रववुः सप्त मारुताः ॥ २८ ॥ दीप्ततोयाः सनिर्घातैः सहवज्रानलानिलैः ॥ खेऽस्मिन्घोरैरुत्पातैर्दह्यमानमिवाम्बरम् ॥ २९ ॥ पेतुरुल्कासहस्राणि निपेतुः खचराण्यपि ॥ दैवानि च विमानानि प्रपतन्त्युत्पतन्ति च ॥ १३० ॥ चतुर्युगान्तसमये लोकानां यद्भयं भवेत् ॥ अरूपवन्ति रूपाणि तस्मिन्नुत्पातलक्षणे ॥ ३१ ॥ तस्माद्दुष्प्रथितं सर्वं न प्राज्ञायत किंचन ॥ तिमिरौघपरिक्षिप्ता न रेजुश्च दिशो दश ॥ ३२ ॥ विवेश रूपिणी काली कालमेघावगुण्ठिता ॥ द्यौर्न भान्यभिभूतार्का घोरेण तमसावृता ॥ ३३ ॥ तान्घनौघान्सतिमिरान्दोर्भ्यामाच्छिद्य स प्रभुः ॥ वपुः स्वं दर्शयामास दिव्यं कृष्णवपुर्हरिः ॥ ३४ ॥ बलाहकाञ्जननिभं बलाहकतनूरुहम् ॥ तेजसा वपु

पाचैवकृष्णंकृष्णमिवाचलम्॥३५॥दीप्तपीताम्बरधरंतप्तकाञ्चनभूषणम्॥धूम्रान्धकारवपुषंयुगान्ताग्निमिवोत्थितम्॥३६॥वृत्तद्विगुणपीनांसंकिरीटाच्छ
न्नमूर्धजम्॥चामीकरप्रख्यैरायुधैरुपशोभितम्॥३७॥चन्द्रार्ककिरणोद्योतंगिरिकूटमिवोच्छ्रितम्॥नन्दकानन्दितकरंकौस्तुभोद्भासितोरसम्॥३८॥
शक्तिचित्रफलोदग्रंशङ्खचक्रगदाधरम् ॥ विष्णुशैलंक्षमाशीलंश्रीवत्संशार्ङ्गपाणिनम् ॥ ३९ ॥ त्रिदशोदारफलदंस्वर्गस्त्रीचारुवल्लभम् ॥ सर्वलोकमनः
कान्तंसर्वसत्वमनोहरम् ॥ १४० ॥ मायाविशालविटपंतोयदौघसमप्रभम् ॥ विद्याहङ्कारमानाढ्यमहाभूतप्ररोहणम् ॥ ४१ ॥ विशेषपत्रैर्निचितं
ग्रहनक्षत्रपुष्पितम् ॥ दैत्यलोकमहास्कन्धंमर्त्यलोकप्रकाशितम् ॥ ४२ ॥ सागराकारनिह्रादंरसातलतलाश्रयम् ॥ नागेन्द्रपाशैर्विततंपक्षिजन्तुसम
न्वितम् ॥४३॥ शीलानाहार्यगन्धाढ्यंसर्वलोकमहाद्रुमम् ॥ अव्यक्तानन्दसलिलंव्यक्ताहङ्कारफेनिलम् ॥४४॥ महाभूतकरौघौघंग्रहनक्षत्रबुद्बुदम्॥
विमानवाहनैर्व्याप्तंतोयदाडम्बराकुलम् ॥ ४५ ॥ जन्तुमत्स्यगणाकीर्णंशैलशङ्खकुलैर्युतम् ॥ त्रैगुण्यविषयावर्तंसर्वलोकतिमिङ्गिलम् ॥ ४६ ॥
वीरवृक्षलतागुल्मंभुजगोत्सृष्टशैवलम् ॥ द्वादशार्कमहाद्वीपंरुद्रैकादशपत्तनम् ॥४७॥ वस्वष्टपर्वतोपेतंत्रैलोक्याम्भोमहोदधिम् ॥ सन्ध्यासन्ध्योर्मिस
लिलमापूर्णानिलशोभितम्॥ ४८॥दैत्ययक्षगणग्रामंरक्षोगणझषाकुलम्॥ पितामहमहावीर्यंस्वर्गस्त्रीरत्नसङ्कुलम्॥४९॥श्रीकीर्तिकान्तिलक्ष्मीभिर्नदीभि
श्चसमाकुलम् ॥ कालयोगमहावर्षप्रलयोत्पत्तिवेगितम् ॥ १५०॥ सत्संयोगमहापारंनारायणमहार्णवम् ॥ देवातिदेवंवरदंभक्तानांभक्तवत्सलम्॥५१॥
अनुग्रहकरंदेवंप्रशान्तिकरणंशुभम् ॥ हर्यश्वरथसंयुक्तसुपर्णध्वजशोभिते ॥ ५२ ॥ चन्द्रार्कचक्ररचितउदाराक्षवृतान्तरे ॥ अनन्तरश्मिसंयुक्तेदु
र्दर्शेमेरुकूबरे ॥ ५३ ॥ तारकाचित्रकुसुमेग्रहनक्षत्रवन्धुरे ॥ भयेष्वभयदेव्योम्निदेवदैत्यापराजिते ॥ ५४ ॥ हर्यश्वरथसंयुक्तमुक्ताशो
भासमन्वितम् ॥ ददृशुस्तेस्थितंदेवंदिव्यलोकमयेरथे ॥ ५५ ॥ तेकृताञ्जलयःसर्वेदेवाइन्द्रपुरोगमाः ॥ जयशब्दंपुरस्कृत्यशरण्यंशरणंगताः
॥ ५६ ॥ एतेषांचगिरःश्रुत्वासविष्णुर्देवदैवतः ॥ मनश्चक्रेविनाशायदानवानांमहामृधे ॥ ५७ ॥ आकाशेतुस्थितोविष्णुरुत्तमंवपुराश्रितः ॥
उवाचदेवताःसर्वाःसप्रतिज्ञमिदंवचः ॥ ५८ ॥ विष्णुरुवाच ॥ शान्तिंव्रजतभद्रंवोमाभैष्टमरुतांगणाः ॥ जितामेदानवाःसर्वेत्रैलोक्यंपरिगृह्यताम्
॥५९॥ पुलस्त्यउवाच ॥ ततोऽस्यसत्यसन्धस्यविष्णोर्वाक्यंनतोषिताः ॥ देवाःप्रीतिंपरांजग्मुःप्राश्यामृतमिवोत्तमम्॥ १६०॥ततस्तमश्चसंहृत्यवि
नेशुश्चबलाहकाः ॥ प्रववुश्चशिवावाताःप्रसन्नाश्चदिशोदश ॥ ६१ ॥ शुद्धप्रायाणिज्योतींषिसोमंचक्रुःप्रदक्षिणम् ॥ नविग्रहंग्रहाश्चक्रुःप्रसन्नाश्चापि
सिन्धवः ॥ ६२ ॥ विरजाअभवन्मार्गालोकाःस्वर्गादयस्त्रयः ॥ यथार्थमूहुस्सरितश्चुक्षुभेनतथार्णवः ॥ ६३ ॥ आसञ्छुभानीन्द्रियाणि

नराणामन्तरात्मसु ॥ महर्षयोवीतशोकावेदानुच्चैरधीयत ॥ ६४ ॥ यज्ञेषुचहविःपाकंशिवमापचपावकः ॥ प्रवृत्तधर्मसंवृत्तालोकामुदितमा
नसाः ॥ ६५ ॥ विष्णोःसत्यप्रतिज्ञस्यश्रुत्वारिनिधनागिरः ॥ ततोऽभयंविष्णुमुखाच्छ्रुत्वादैतेयदानवाः ॥ ६६ ॥ उद्योगंविपुलंचक्रुर्युद्धायविजया
यच ॥ मयस्तुकाञ्चनमयंत्रिनल्वान्तरमव्ययम् ॥ ६७ ॥ चतुश्चक्रंसुविपुलंसुकल्पितमहायुधम् ॥ किङ्किणीजालनिर्घोषंद्वीपिचर्मपरिष्कृतम् ॥६८॥
रुचिरंरश्मिजालैश्चहैमजालैश्चशोभितम् ॥ ईहामृगगणाकीर्णंपक्षिसङ्घविराजितम् ॥ ६९ ॥ दिव्यास्त्रशस्त्ररुचिरंपयोधरनिनादितम् ॥ स्वक्षंरथवरो
दारंसूपस्थंगगनोपमम् ॥ १७० ॥ गदापरिघसम्पूर्णंमूर्तिमन्तमिवार्णवम् ॥ हेमकेयूरवलयंचन्द्रमण्डलकूबरम् ॥ ७१ ॥ सपताकंध्वजोपेतंसादि
त्यमिवमन्दरम् ॥ गजेन्द्राभोगवपुषंक्वचित्केसरवर्चसम् ॥ ७२ ॥ युक्तमृक्षसहस्रेणसुधाराम्बुदनादितम् ॥ दीप्तमाकाशगंदिव्यंरथंपररथारुजम्
॥ ७३ ॥ अध्यतिष्ठद्रणाकाङ्क्षीमेरुंदीप्तमिवांशुमान् ॥ तारस्तुक्रोशविस्तारमायामेचतथाविधम् ॥ ७४ ॥ शैलकूबरसङ्काशंनीलाञ्जनचयोपमम् ॥
काललोहस्यरत्नानांसमूहाबद्धकूबरम् ॥ ७५ ॥ तिमिरोद्गारकिरणंगर्जन्तमिवतोयदम् ॥ लोहजालेनमहतासगवाक्षेणदंशितम् ॥ ७६ ॥ आयसैःपरि
घैःपूर्णंक्षेपणीयैश्चमुद्गरैः ॥ प्रासैःपाशैश्चविततैरसंयुक्तैश्चकण्टकैः ॥ ७७ ॥ शोभितंत्रासनीयैश्चतोमरैःसपरश्वधैः ॥ उद्यतंद्विषतांहेतोर्द्वितीयमिव
मन्दरम् ॥ ७८ ॥ युक्तंखरसहस्रेणसोऽध्यारोहद्रथोत्तमम् ॥ विरोचनस्तुसङ्क्रुद्धोगदापाणिरवस्थितः ॥ ७९ ॥ प्रमुखेतस्यसैन्यस्यदीप्तशृङ्गइवा
चलः ॥ युक्तंहयसहस्रेणहयग्रीवस्तुदानवः ॥ १८० ॥ व्यूहितंदानवव्यूहंपरिचक्रामवीर्यवान् ॥ विप्रचित्तिसुतःश्वेतःश्वेतकुण्डलभूषणः ॥ ८१ ॥
स्यन्दनंवाहयामासपरानीकस्यमर्दनः ॥ व्यायतंकिष्कुसाहस्रंधनुर्विस्फारयन्महत् ॥ ८२ ॥ सचाहवमुखेतस्थौसप्ररोहइवाचलः ॥ खरस्तु
विकिरन्क्रोधान्नेत्राभ्यांरोपजंजलम् ॥ ८३ ॥ स्फुरद्दन्तोष्ठनयनःसङ्ग्रामंसोऽभ्यकाङ्क्षत ॥ त्वष्टात्वष्टादशहयंयानमास्थायदानवः ॥ ८४ ॥
श्वेतमेघप्रतीकाशोयुद्धायाभिमुखःस्थितः ॥ अरिष्टोबलिपुत्रश्चवरिष्ठोदुर्धरायुधः ॥ ८५ ॥ युद्धायाभिमुखस्तस्थौधराधरविकम्पनः ॥
किशोरस्त्वतिसंहर्षात्किशोरइवचोदितः ॥ ८६ ॥ अभवद्दैत्यमध्येसग्रहमध्येयथारविः ॥ लम्बस्तुनवमेघाभःप्रलम्बाम्बरभूषणः ॥ ८७ ॥ दैत्य
व्यूहगतोभातिसनीहारइवांशुमान् ॥ वसुन्धराभस्तदनुदशनोष्ठेक्षणायुधः ॥ ८८ ॥ हसंस्तिष्ठतिदैत्यानांमध्येक्रूरमहाग्रहः ॥ अन्येहयगता
स्तत्रमत्तेभेन्द्रगताःपरे ॥ ८९ ॥ सिंहव्याघ्रगताश्चान्येवराहर्क्षेषुचापरे ॥ केचित्खरोष्ट्रयातारःकेचित्तोयदवाहनाः ॥ १९० ॥ पत्तयश्चापरे
दैत्याभीषणाविकृताननाः ॥ एकपादास्त्वपादाश्चननृतुर्युद्धकाङ्क्षिणः ॥ ९१ ॥ आस्फोटयन्तोबहवःस्वनन्तश्चतथापरे ॥ दृप्तशार्दूलनिर्घो

षानेदुर्दानवपुङ्गवाः ॥ ९२ ॥ तेगदापरिघैर्घोरैः शिलामुद्गरपाणयः ॥ बाहुभिः परिघाकारैस्तर्जयन्तिस्मदेवताः ॥ ९३ ॥ प्रासैःखड्गैश्च पाशैश्चतोमरैरङ्कुशपट्टिशैः ॥ चिक्रीडुस्तेशतघ्नीभिः शतधारैश्चमुद्गरैः ॥ ९४ ॥ खड्गैः शूलैश्चशैलैश्चपरिघैश्चोद्यतायुधैः ॥ युक्तंबलाहकगणैः सर्वतःसंवृतंनभः ॥ ९५ ॥ एवंतद्दानवंसैन्यंसर्वसत्त्वमदोत्कटम् ॥ देवनाभिमुखंतस्थौमेघानीकमिवोदितम् ॥ ९६ ॥ रेजेचतद्दैत्यसहस्रगाढंवाय्वग्निशैलाम्बुदतोयकल्पम् ॥ बलंबलौघाकुलमभ्युदीर्णंयुयुत्सयोन्मत्तमिवावभासे ॥ ९७ ॥ श्रुतस्तेदैत्यसैन्यस्यविस्तारः कुरुनन्दन ॥ सुराणामपिसैन्यस्यविस्तरंवैष्णवंशृणु ॥ १९८ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेदैत्यसेनावर्णनंनामद्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥ पुलस्त्यउवाच ॥ आदित्यावसवोरुद्राअश्विनौचमहाबलौ ॥ सबलाःसानुगाश्चैवसमनह्यन्यथाक्रमम् ॥ १ ॥ पुरुहूतश्चपुरतो लोकपालःसहस्रदृक् ॥ ग्रामणीःसर्वदेवानामारुरोहवरद्विपम् ॥ २ ॥ सव्येचास्यरथःपार्श्वेपक्षिप्रवरकेतनः ॥ सुचारुचक्रचरणोहेमच्छत्रपरिष्कृतः ॥ ३ ॥ देवगन्धर्वयक्षौघैरनुयातःसहस्रशः ॥ दीप्तिमद्भिश्चस्वर्गस्थैर्ब्रह्मर्षिभिरभिष्टुतः ॥ ४ ॥ वज्रविस्फारितोद्भूतैर्विद्युदिन्द्रायुधप्रभैः ॥ युक्तंबलाहकगणैःपर्वतैरिवकामगैः ॥ ५ ॥ यमारूढःसभगवान्पर्येतिसकलंजगत् ॥ हविर्दानेपुगायन्तिविप्रामखमुखेस्थिताः ॥ ६ ॥ स्वर्गसङ्ग्रामयातेषुदेवतूर्यनिनादिषु ॥ सदायमुपनृत्यन्तिशतशोह्यप्सरोगणाः ॥ ७ ॥ केतुनानागराजेनराजमानोयथारविः ॥ युक्तोहयसहस्रेणमनोमारुतरंहसा ॥ ८ ॥ सम्यग्रथवरोभातियुक्तोमातलिनातदा ॥ कृत्स्नःपरिवृतोमेरुर्भास्करस्यैवतेजसा ॥ ९ ॥ यमस्तु दण्डमुद्यम्यकालयुक्तंचमुद्गरम् ॥ तस्थौसुरगणानीकेदैत्यानांचैवदर्शयन् ॥ १० ॥ चतुर्भिःसागरैर्युक्तोलेलिहानैश्चपन्नगैः ॥ शङ्खमुक्ताङ्गदधरो बिभ्रत्तोयमयंवपुः ॥ ११ ॥ कालपाशान्समाविध्यहयैःशशिकरोपमैः ॥ वाय्वीरितजलाकारैःकुर्वँल्लीलाःसहस्रशः ॥ १२ ॥ पाण्डुरोद्धूतवसनःप्रवालरुचिराङ्गदः ॥ मणिश्यामोत्तमवपुर्हारकेणार्चितोदरः ॥ १३ ॥ वरुणःपाशधृन्मध्येदेवानीकस्यतस्थिवान् ॥ युद्धवेलामभिलषन्भिन्नवेलइवार्णवः ॥ १४ ॥ यक्षराक्षससैन्येनगुह्यकानांगणैरपि ॥ युक्तश्चशङ्खपद्माभ्यांनिधीनामधिपःप्रभुः ॥ १५ ॥ राजराजेश्वरःश्रीमान्गदापाणिरदृश्यत ॥ विमानयोधीधनदोविमानेपुष्पकेस्थितः ॥ १६ ॥ सराजराजःशुशुभेयक्षेशोनरवाहनः ॥ ईक्षमाणः स्वसङ्ग्रामंसाक्षादिवशिवःस्थितः ॥ १७ ॥ पूर्वपक्षेसहस्राक्षःपितृराजश्चदक्षिणे ॥ वरुणःपश्चिमेपक्षउत्तरेनरवाहनः ॥ १८ ॥ चतुष्पक्षाश्चचत्वारो लोकपालामहाबलाः ॥ आत्मदिक्षुचरन्तश्चतस्यदेवबलस्यते ॥ १९ ॥ सूर्यःसप्ताश्वयुक्तेनरथेनानिलगामिना ॥ श्रियाजाज्वल्यमानेनदीप्यमानैश्च

रश्मिभिः ॥ २० ॥ उदयास्तमयौचक्रेमेरुपर्यन्तगामिना ॥ त्रिदिवद्वारचक्रेणतपसालोकमव्ययम् ॥ २१ ॥ सहस्त्ररश्मियुक्तेनभ्राजमानेनतेजसा ॥
चचारमध्येदेवानांद्वादशात्मादिवाकरः ॥२२॥ सोमःश्वेतहयोभातिस्यन्दनेशीतरश्मिमान् ॥ हिमतोयप्रपूर्णाभिर्भाभिराह्लादयञ्जगत् ॥२३॥तमृक्ष
योगानुगतंशिशिरांशुंद्विजेश्वरम्॥शशच्छायाङ्किततनुंनैशस्यतमसःक्षयम् ॥२४ ॥ ज्योतिषामीश्वरंव्योम्निरसदंप्रभुमव्ययम् ॥ ओषधीनांपवित्राणां
निधानममृतस्यच ॥ २५ ॥ जगतःपरमंभागंसौम्यंसर्वमयंरसम् ॥ ददृशुर्दानवाःसोमंहिमप्रहरणंस्थितम् ॥२६॥ यःप्राणःसर्वभूतानांपञ्चधाभिद्यते
नृषु ॥ सप्तस्कन्धगतोलोकांस्त्रीन्दधारचकारच ॥ २७ ॥ यमाहुरग्निकर्त्तारंसर्वप्रभवमीश्वरम् ॥ सप्तस्वरगतायस्ययोनिर्गीर्भिरुदीर्यते ॥ २८ ॥ यंव
दन्तिचलंभूतंयंवदन्त्यशरीरिणम् ॥ यमाहुराकाशगमंशीघ्रगंशब्दयोनिजम् ॥ २९ ॥ सवायुःसर्वभूतायुरुद्धतःस्वेनतेजसा ॥ ववौप्रव्यथयन्दै
त्यान्प्रतिलोमंसतोयदः ॥ ३० ॥ मारुतोदेवगन्धर्वैर्विद्याधरगणैःसह ॥ चिक्रीडरश्मिभिःशुभ्रैर्निर्मुक्तैरिवपन्नगैः ॥ ३१ ॥ सृजन्तःसर्पपतय
स्तीव्रंरोषमयंविषम् ॥ शरभूताविलग्नाश्चचेरुर्व्यात्ताननादिवि ॥ ३२ ॥ पर्वताश्चशिलाशृङ्गैःशतशाखैश्चपादपैः ॥ उपतस्थुःसुरगणान्प्रहर्तुंदा
नवंबलम् ॥ ३३ ॥ यःसदेवोहृषीकेशःपद्मनाभस्त्रिविक्रमः ॥ युगान्तेकृष्णवर्त्माचविश्वस्यजगतःप्रभुः ॥ ३४ ॥ सर्वयोनिःसमधुहाहव्यभुक्क्रतु
मंस्थितः ॥ भूम्यम्बुव्योमभूतात्माश्यामःशान्तिकरोऽरिहा ॥ ३५॥ सोमार्काग्निमयंचक्रमुद्यम्योत्तमतेजसम् ॥ अविघ्नममरादीनांचक्रेचक्रगदाधरः
॥ ३६ ॥ सव्येनालम्ब्यमहतींसर्वायुधविनाशिनीम् ॥ करेणकालींवपुषाशत्रुकालप्रदांगदाम् ॥ ३७ ॥ शेषैर्भुजैःप्रदीप्ताभैर्भुजगारिध्वजःप्रभुः ॥
दधारायुधजालानिशार्ङ्गादीनिमहाबलः ॥ ३८ ॥ सकश्यपस्यात्मभवंद्विजंभुजगभोजनम् ॥ भुजगेन्द्रेणवदनेनिविष्टेनविराजितम् ॥ ३९ ॥
अमृतारम्भसंयुक्तंमन्दराद्रिमिवोच्छ्रितम् ॥ देवासुरविमर्देषुबहुशोदृष्टविक्रमम् ॥ ४० ॥ महेन्द्रेणामृतस्यार्थेवज्रेणकृतलक्षणम् ॥ विचित्रपत्रव
सनंधातुमन्तमिवाचलम् ॥ ४१ ॥ स्फीतक्रोधावलम्बेनशीतांशुसमतेजसा ॥ भोगिभोगावसक्तेनमणिरत्नेनभास्वता ॥ ४२ ॥ पक्षाभ्यांचारुप
त्राभ्यामावृतंदिविलीलया ॥ युगान्तेसेन्द्रचापाभ्यांतोयदाभ्यामिवाम्बरम् ॥ ४३ ॥ नीललोहितपीताभिःपताकाभिरलङ्कृतम् ॥ अरुणावरजंश्री
मानारुह्यसमरेप्रभुः ॥ ४४ ॥ सुवर्णवर्णवपुषंसुपर्णंखेचरोत्तमम् ॥ तमन्वयुःसुरगणामुनयश्चसमाहिताः ॥ ४५ ॥ गीर्भिःपरममन्त्राभिस्तुष्टुवुश्च
गदाधरम् ॥ तद्वैश्रवणसंश्लिष्टंवैवस्वतपुरःसरम् ॥ ४६ ॥ वारिराजपरिक्षिप्तंदेवराजविराजितम् ॥ पवनाबद्धनिर्घोषंसम्प्रदीप्तहुताशनम् ॥ ४७ ॥
विष्णोर्जिष्णोःसहिष्णोश्चभ्राजिष्णोस्तेजसावृतम् ॥ बलंबलवदुद्रिक्तंयुद्धायसमवर्तत ॥ ४८ ॥ स्वस्त्यस्तुदेवेभ्यइतिबृहस्पतिरभाषत ॥ स्वस्त्यस्तु

दैत्येभ्यइतिउशनावाक्यमाददं ॥ ४९ ॥ ताभ्यांबलाभ्यांसञ्जज्ञेतुमुलोविग्रहस्तथा ॥ सुराणामसुराणांचपरस्परजयैषिणाम् ॥ ५० ॥ दानवा
दैवतैःसार्द्धंनानाप्रहरणोद्यमाः ॥ समीयुर्युध्यमानावैपर्वताइवपर्वतैः ॥ ५१ ॥ तत्सुरासुरसंयुक्तंयुद्धमत्यद्भुतंबभौ ॥ धर्माधर्मसमायुक्तंदर्पेणविनये
नच ॥ ५२ ॥ ततोहयैःप्रजवितैर्वारणैश्चप्रचोदितैः ॥ उत्पतद्भिश्चगगनेसासिहस्तैःसमन्ततः ॥ ५३ ॥ क्षिप्यमाणैश्चमुसलैःसम्पतद्भिश्चसायकैः ॥
चापैर्विस्फार्यमाणैश्चपात्यमानैःसुदारुणैः ॥ ५४ ॥ तद्युद्धमभवद्घोरंदेवदानवसंकुलम् ॥ जगतस्त्रासजननंयुगसंवर्तकोपमम् ॥ ५५ ॥ स्वहस्तमुक्तैः
परिघैर्मुद्गरैश्चैवपर्वतैः ॥ दानवास्समरेजघ्नुर्देवानिन्द्रपुरोगमान् ॥ ५६ ॥ तेवध्यमानाबलिभिर्दानवैर्जितकाशिभिः ॥ विषण्णवदनादेवाजग्मुरार्ति
परांमृधे ॥ ५७ ॥ तेचास्त्रशूलमथिताःपरिघैर्भिन्नमस्तकाः ॥ भिन्नोरस्कादितिसुतैःस्रवद्रक्तास्र्णवद्धु ॥ ५८ ॥ सूदिताःशरजालैश्चनिर्यत्नाश्चशरैः
कृताः ॥ प्रविष्टादानवींमायांनशेकुस्तेविचेष्टितुम् ॥ ५९ ॥ उत्तम्भितमिवाभातिनिष्प्राणसदृशाकृति ॥ बलंसुराणामसुरैर्निष्प्रयत्नायुधंकृतम्
॥ ६० ॥ दैत्यचापच्युतान्घोरांश्छित्त्वावज्रेणताञ्शरान् ॥ शक्रोदैत्यबलंघोरंविवेशबहुलोचनः ॥ ६१ ॥ सदैत्यप्रमुखान्सर्वान्हत्वादैत्यबलंमहत् ॥
तामसेनास्त्रजालेनतमोभूतमथाकरोत् ॥- ६२ ॥ तेऽन्योन्यंनान्वबुध्यन्तदैत्यानांवाहनानिच ॥ घोरेणतमसाविष्टाःपुरुहूतस्यतेजसा ॥ ६३ ॥
मायापाशैर्विमुक्तास्तुयत्नवन्तःसुरोत्तमाः ॥ शिरांसिदैत्यसङ्घानांतमोभूतान्यपतायन् ॥ ६४ ॥ अपध्वस्ताविसंज्ञाश्चतमसानीलवर्चसा ॥ पेतु
स्तेदानवास्सर्वाश्छिन्नपक्षाइवाद्रयः ॥६५॥ तत्राभिभूतदैत्येन्द्रमन्धकारमिवान्तरम् ॥ दानवंदेहसदनंतमोभूतमिवाभवत् ॥ ६६ ॥ तथासृजन्महा
मायांमयस्तांतामसींदहन् ॥ युगान्तोद्योतजननींसृष्टामौर्वेणवह्निना ॥ ६७ ॥ साददाहचतांशाक्रीं मायामयविकल्पिता ॥ दैत्याश्चादित्यवपुषासद्य
उत्तस्थुराहवे ॥ ६८ ॥ मायामौर्वींसमासाद्यदह्यमानादिवौकसः ॥ भेजिरेचन्द्रविषयंशीतांशुसलिलह्रदम् ॥ ६९ ॥ तेदह्यमानाऔर्वेणवह्निनानष्ट
चेतसः ॥ शशंसुर्वज्रिणंदेवाःसन्तप्ताःशरणैषिणः ॥ ७० ॥ सन्तप्तेमाययासैन्येहन्यमानेचदानवैः ॥ चोदितोदेवराजेनवरुणोवाक्यमब्रवीत् ॥७१॥
वरुणउवाच॥पुराब्रह्मर्षिजःशक्रतपस्तेपेसुदारुणम् ॥ उर्वःसपूर्वंतेजस्वीसदृशोब्रह्मणोगुणैः ॥ ७२ ॥ तंतपन्तमिवादित्यंतपसाजगदव्ययम् ॥ उपत
स्थुर्मुनिगणादेवादेवर्षिभिःसह ॥ ७३ ॥ हिरण्यकशिपुश्चैवदानवोदानवेश्वरः ॥ ऋषिंविज्ञापयामासपुरापरमतेजसम् ॥ ७४ ॥ ऊचुर्ब्रह्मर्षयस्तेतुव
चनंधर्मसंहितम् ॥ ऋषिवंशेषुभगवंश्छिन्नमूलमिदंकुलम् ॥ ७५ ॥ एकस्त्वमनपत्यश्चगोत्रायान्योनविद्यते ॥ कौमारंव्रतमास्थायक्लेशमेवानुवर्तसे
॥ ७६ ॥ बहूनिविप्रगोत्राणिमुनीनांभावितात्मनाम् ॥ एकदेहानितिष्ठन्तिविविक्तानिविनाप्रजाः ॥ ७७ ॥ एवम्भूतेषुसर्वेषुपुत्रैर्मेनास्ति

कारणम् ॥ भवांश्चतापसश्रेष्ठःप्रजापतिसमद्युतिः ॥ ७८ ॥ तत्प्रवर्तस्ववंशायवर्धयात्मानमात्मना ॥ समाधत्स्वोर्जितंतेजोद्वितीयांकुरुवैतनुम् ॥ ७९ ॥ सएवमुक्तोमुनिभिर्मुनिर्मनसिताडितः ॥ जगर्हतानृषिगणान्वचनंचेदमब्रवीत् ॥ ८० ॥ यथाहिविहितोधर्मोमुनीनांशाश्वतः पुरा ॥ आर्षंहिकेवलंकर्मवन्यमूलफलाशिनः ॥ ८१ ॥ ब्रह्मयोनौप्रसूतस्यब्राह्मणस्यात्मवर्तिनः ॥ ब्रह्मचर्यंसुचरितंब्रह्माणमपिचालयेत ॥ ८२ ॥ जनानांवृत्तयस्तिस्रोयेगृहाश्रमवासिनः ॥ अस्माकंचवनेवृत्तिर्वनाश्रमनिवासिनाम् ॥ ८३ ॥ अब्भक्षावायुभक्षाश्चदन्तोलूखलिन स्तथा ॥ अश्मकुट्टादयोयत्रपञ्चाग्नितपसश्चये ॥ ८४ ॥ एतेतपसितिष्ठन्तोव्रतैरपिसुदुश्चरैः ॥ ब्रह्मचर्यंपुरस्कृत्यप्रार्थयन्तिपरांगतिम् ॥ ८५ ॥ ब्रह्मचर्याद्ब्राह्मणस्यब्राह्मणत्वंविधीयते ॥ एवमाहुःपरेलोकेब्रह्मचर्यविदोजनाः ॥ ८६ ॥ ब्रह्मचर्येस्थितोधर्मोब्रह्मचर्येस्थितंतपः ॥ येस्थिताब्रह्मचर्येतुब्राह्मणादिवितेस्थिताः ॥ ८७ ॥ नास्तियोगंविनासिद्धिर्नास्तियोगंविनायशः ॥ नास्तिलोकेयशोमूलंब्रह्मचर्यात्परन्तप ॥ ८८ ॥ योनिगृह्येन्द्रियग्रामंभूतग्रामंचपञ्चकम् ॥ ब्रह्मचर्यसमाधत्तेकिमतःपरमंतपः ॥ ८९ ॥ अयोगकेशधरणमसङ्कल्पव्रतक्रिया ॥ अब्रह्मचर्याचर्याचत्रयंस्या द्दम्भसंज्ञितम् ॥ ९० ॥ क्वदाराःक्वचसंयोगःक्वचभावविपर्ययः ॥ नन्वियंब्रह्मणासृष्टामनसामानसीप्रजा ॥ ९१ ॥ यद्यस्तितपसोवीर्यंयुष्माकं विजितात्मनाम् ॥ सृजध्वंमानसान्पुत्रान्प्राजापत्येनकर्मणा ॥ ९२ ॥ मनसानिर्मितायोनिराधातव्यातपस्विभिः ॥ नोदारयोगंवीजंचव्रतमुक्तं तपस्विनाम् ॥ ९३ ॥ यदिदंलुप्तधर्माख्यंयुष्माभिरिहनिर्भयैः ॥ व्याहृतंसद्भिरत्यर्थमसद्भिरिवसंमतम् ॥ ९४ ॥ वपुर्दीप्तान्तरात्मानमेषकृत्वा मनोमयम् ॥ दारयोगंविनास्रक्ष्येपुत्रमात्मतनूरुहम् ॥ ९५ ॥ एवमात्मानमात्मामेद्वितीयंजनयिष्यति ॥ प्राजापत्येनविधिनादिधक्षन्तमिव प्रजाः ॥ ९६ ॥ वरुणउवाच ॥ उर्वस्तुतपसाविष्टोनिवेश्योरुंहुताशने ॥ ममन्थैकेनदर्भेणपुत्रस्यप्रसवारणिम् ॥ ९७ ॥ तस्योरुंसहसाभित्त्वा वरोऽसौह्यग्निरुत्थितः ॥ जगतोदहनाकाङ्क्षीपुत्रोऽग्निस्समपद्यत ॥ ९८ ॥ उर्वस्योरुंविनिर्भिद्यऔर्वोनामान्तकोऽनलः ॥ दिधक्षुरिवलोकांस्त्री ञ्जज्ञेपरमकोपनः ॥ ९९ ॥ उत्पद्यमानश्चोवाचपितरंदीनयागिरा ॥ क्षुधामेबाधतेतातजगद्भक्षेत्यजस्वमाम् ॥ १०० ॥ त्रिदिवारोहिभिर्ज्वाले र्जृम्भमाणोदिशोदश ॥ निर्दहन्सर्वभूतानिववृधेसोऽन्तकोपमः ॥ १ ॥ एतस्मिन्नन्तरेब्रह्मामुनिमुर्वसमागतः ॥ उवाचवार्यतांपुत्रोजगतस्त्वंदयां कुरु ॥ २ ॥ अस्यापत्यस्यतेविप्रकरिष्येसाह्यमुत्तमम् ॥ तथ्यमेतद्वचःपुत्रशृणुत्वंवदतांवर ॥ ३ ॥ और्वउवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मिय न्मेत्वंभगवञ्शिशोः ॥ मतिमेतांददासीहपरमात्मन्हितायवै ॥ ४ ॥ प्रभातकालेसम्प्राप्तेकाङ्क्षितव्येसमागमे ॥ भगवंस्तर्पितःपुत्रःकैर्हव्यैःप्राप्स्यतेसु

खम् ॥ ५ ॥ कुत्रचास्यनिवासःस्याद्भोजनंतुकिमात्मकम् ॥ विधास्यतीहभगवान्वीर्यतुल्यंमहौजसः ॥ ६ ॥ ब्रह्मोवाच ॥ वडवामुखेचवसतिःसमुद्रेवै
भविष्यति ॥ ममयोनिर्जलंविप्रतत्रामेयंव्रजत्वयम् ॥ ७ ॥ तत्रायमास्तेनियतंपिबन्वारिमयंहविः ॥ तद्वारिविस्तरंविप्रविसृजाम्यालयंचतम् ॥
॥ ८ ॥ ततोयुगान्तेभूतानामेषचाहंचपुत्रक ॥ सहितोविचरिष्यावोनिष्पुराणकराविह ॥ ९ ॥ एषोऽग्निरन्तकालेतुसलिलाशीमयाकृतः ॥
दहनःसर्वभूतानांसदेवासुररक्षसाम् ॥ ११० ॥ एवमस्त्वितितंसोऽग्निःसंवृतज्वालमण्डलः ॥ प्रविवेशार्णवमुखंनत्वोर्वपितरंप्रभुम् ॥ ११ ॥
प्रतियातस्ततोब्रह्मातेचसर्वेमहर्षयः ॥ और्वस्याग्नेःप्रभावज्ञाःस्वांस्वांगतिमुपागताः ॥ १२ ॥ हिरण्यकशिपुर्दृष्ट्वातदातन्महदद्भुतम् ॥ उर्वंप्रणत
सर्वाङ्गोवाक्यमेतदुवाचह ॥ १३ ॥ हिरण्यकशिपुरुवाच ॥ भगवन्नद्भुतमिदंसंवृत्तंलोकसाक्षिकम् ॥ तपसातेमुनिश्रेष्ठपरितुष्टःपितामहः ॥ १४ ॥
अहंतुतवपुत्रस्यतवचैवमहाव्रत ॥ भृत्यइत्यवगन्तव्यःश्लाघ्यस्त्वमिहकर्मणा ॥ १५ ॥ तन्मांपश्यसमापन्नंतवैवाराधनेरतम् ॥ यदिसीदेन्मुनिश्रेष्ठत
वैवस्यात्पराजयः ॥ १६ ॥ उर्वउवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मियस्यतेऽहंगुरुर्मतः ॥ नास्तितेतपसानेनभयंचैवेहसुव्रत ॥ १७ ॥ तामेवमां
यांगृह्णीष्वममपुत्रेणनिर्मिताम् ॥ निरिन्धनामग्निमयींदुःस्पर्शांपावकैरपि ॥ १८ ॥ एषातेस्वस्यवंशस्यवशगारिविनिग्रहे ॥ रक्षिष्यत्यात्मपक्षंचवि
पक्षंचप्रधक्ष्यति ॥ १९ ॥ वरुणउवाच ॥ एषादुर्विषहामायादेवैरपिदुरासदा ॥ और्वेणनिर्मितापूर्वंपावकेनोर्वसूनुना ॥ १२० ॥ तस्मिंस्तुव्यथिते
दैत्येनिवार्यैषानसंशयः ॥ शापोह्यस्याःपुरादत्तःसृष्टायेनैवतेजसा ॥ २१ ॥ यद्येषाप्रतिहन्तव्याकर्तव्योभगवान्सुखी ॥ दीयतांमेसखाशक्रतोययो
निर्निशाकरः ॥२२॥ तेनाहंसहसङ्गम्ययादोभिश्चसमावृतः ॥ मायामेतांहनिष्यामित्वत्प्रसादान्नसंशयः ॥२३॥ पुलस्त्यउवाच॥एवमस्त्वितिसंतुष्टः
शक्रस्त्रिदशवर्धनः ॥ सन्दिदेशाग्रतः सोमंयुद्धायशिशिरायुधम् ॥ २४ ॥ इन्द्रउवाच॥ गच्छसोमसहायस्त्वंभवपाशधरस्यवै ॥ असुराणांविनाशाय
जयार्थंत्रिदिवौकसाम् ॥ २५ ॥ त्वंमतःप्रतिवीर्यश्चज्योतिषामपिचेश्वरः ॥ त्वन्मयान्सर्वलोकेषुरसान्वेदविदोविदुः ॥ २६ ॥ त्वयासमोनलोकेऽ
स्मिन्विद्यतेशिशिरायुधः ॥ क्षयवृद्धीतवाव्यक्तेसागरेचैवचाम्बरे ॥ २७ ॥ प्रवर्तयस्यहोरात्रात्कालंसंमोहयञ्जगत् ॥ लोकच्छायामयंलक्ष्मत
वाङ्कःशशविग्रहः ॥ २८ ॥ नविदुःसोमतेमायांयेचनक्षत्रयोनयः ॥ त्वमादित्यपथादूर्ध्वंज्योतिषांचोपरिस्थितः ॥ २९ ॥ तमःप्रोत्सार्यसहसाभा
सयस्यखिलंजगत् ॥ शीतभानुर्हिमतनुर्ज्योतिषामधिपःशशी ॥ १३० ॥ अपितत्कालयोगात्माइज्योयज्ञरथोऽव्ययः ॥ ओषधीशःक्रियायोनिर
पांयोनिरनुष्णगुः ॥ ३१ ॥ शीतांशुरमृताधारश्चपलःश्वेतवाहनः ॥ त्वंकान्तिःकान्तवपुषांत्वंसोमःसोमपायिनाम् ॥ ३२ ॥ सौम्यस्त्वं

सर्वभूतानांतिमिरघ्नस्त्वमृक्षराट् ॥ तद्गच्छत्वंमहासेनवरुणेनवरूथिना ॥ ३३ ॥ शमयस्वासुरींमायांययादह्यामहेरणे ॥ ३४ ॥ सोमउवाच ॥
यन्मांवदसियुद्धार्थंदेवराजवरप्रद ॥ एषवर्षामिशिशिरंदैत्यमायापकर्षणम् ॥ ३५ ॥ एतान्मेशीतनिर्दग्धान्पश्यस्वहिमवेष्टितान् ॥ विमायान्विम
दांश्चैवदैत्यसङ्घान्महाहवे ॥ ३६ ॥ तथाहिमकरोत्सृष्टाःसपाशाहिमवृष्टयः ॥ वेष्टयन्तिचतान्दैत्यान्वायुर्मेघगणानिव ॥ ३७ ॥ तौपाशशीतांशुध
रौवरुणेन्दूमहाबलौ ॥ जघ्नतुर्हिमपातैश्चपाशपातैश्चदानवान् ॥३८॥ द्वावम्बुनाथौसमरेतौपाशहिमयोधिनौ ॥ मृधेचेरतुरम्भोभिःक्षुब्धाविवमहार्णवौ
॥ ३९ ॥ ताभ्यामापरितंसर्वंतद्दानवबलंमहत् ॥ जगत्संवर्त्तकाम्भोदैःप्रवर्षैरिवसंवृतम् ॥ १४० ॥ तावुद्यतावम्बुनाथौशशाङ्कवरुणा
वुभौ ॥ शमयामासतुस्तांतुमायांदैत्येन्द्रनिर्मिताम् ॥ ४१ ॥ शीतांशुजालनिर्दग्धाःपाशैश्चास्कन्दितारणे ॥ नशेकुश्चलितुंदैत्याविशिरस्काइ
वाद्रयः ॥ ४२ ॥ शीतांशुनिहतास्तेतुदैत्यास्सर्वेनिपातिताः ॥ हिमप्लावितसर्वाङ्गानिरूष्माणइवाग्नयः ॥ ४३ ॥ तेषांतुदिविदैत्यानां
निपतन्तिशुभान्यिवै ॥ विमानानिविचित्राणिनिपतन्त्युत्पतन्तिच ॥ ४४ ॥ तान्पाशहस्तग्रथितांश्छादितान्शीतरश्मिभिः ॥ मयोददर्शमा
यावीदानवान्दिविदानवः॥ ४५ ॥ सशैलजालांविततांखड्गपट्टिशहासिनीम् ॥ पादपोत्करकूटस्थांकन्दरार्कीर्णकाननाम् ॥ ४६ ॥ सिंह
व्याघ्रगणाकीर्णांनदद्भिर्देवयूथपैः ॥ ईहामृगगणाकीर्णांपवनाघूर्णितद्रुमाम् ॥ ४७ ॥ निर्मितांस्वेनपुत्रेणकूजन्तींदिविकामगाम् ॥ प्रथितांपार्व
तींमायांससृजेससमन्ततः ॥ ४८ ॥ सासिशब्दैश्शिलावर्षैःसम्पतद्भिश्चपादपैः ॥ जघानदेवसङ्घांस्तान्दानवानभ्यजीवयत् ॥ ४९ ॥ नैशाकरीवारु
णीचमायेअन्तर्हितेतदा ॥ अभवद्घोरसञ्चारापृथिवीपर्वतैरिव ॥ १५० ॥ अश्मप्रहरणेनापिनशिलाभिर्वशीकृतः ॥ नचारुद्धोद्रुमगणैर्देवोऽदृश्यतक
श्चन ॥ ५१ ॥ तदपध्वस्तधनुषंभग्नप्रहरणाविलम् ॥ निष्प्रयत्नंसुरानीकंवर्जयित्वागदाधरम् ॥ ५२ ॥ सहियुद्धगतःश्रीमानीशोनस्मव्यकम्पत ॥
सहिष्णुत्वाज्जगत्स्वामीनचुक्रोधगदाधरः ॥ ५३ ॥ कालज्ञःकालमेघाभःसमीक्षन्कालमाहवे ॥ देवासुरविमर्दंचद्रष्टुकामस्तदाहरिः ॥ ५४ ॥ ततोभ
गवतादिष्टौरणेपावकमारुतौ ॥ चोदितौविष्णुवाक्येनतौमायांव्यकर्षताम् ॥ ५५ ॥ ताभ्यामुद्भ्रान्तवेगाभ्यांप्रवृद्धाभ्यांमहाहवे ॥ दग्धासापार्वती
मायाभस्मीभूताननाशह ॥ ५६ ॥ सोऽनिलोऽनलसंयुक्तस्सोऽनलश्चानिलाकुलः ॥ दैत्यसेनांददहतुर्युगान्तेष्विवमूर्च्छितौ ॥५७॥ वायुःप्रजवित
स्तत्रपश्चादग्निश्चमारुतात्॥चेरतुर्दावनानीकेक्रीडन्तावनलानिलौ ॥५८॥ भस्मीभूतेषुभूतेषुप्रपतत्सूत्पतत्सुच॥ दानवानांविमानेषुनिपतत्सुसमन्ततः
॥ ५९ ॥ वातस्कन्धापविद्धेषुकृतकर्मणिपावके ॥ मायावधेप्रवृत्तेतुस्तूयमानेगदाधरे ॥ १६० ॥ निष्प्रयत्नेषुदैत्येषुत्रैलोक्येमुक्तबन्धने ॥ प्रहृष्टेषुच

देवेषुसाधुसाध्विवितिजल्पिषु ॥ ६१ ॥ जयेदशशताक्षस्यदैत्यानांचपराजये ॥ दिक्षुसर्वासुशुद्धासुप्रवृत्तेधर्मविस्तरे ॥ ६२ ॥ अपावृत्तेचन्द्रपथेस्व
स्थानस्थेदिवाकरे ॥ प्रवृत्तिस्थेषुभूतेषुनृपुचारित्रवत्सुच ॥ ६३ ॥ अभिन्नबन्धनेमृत्यौहूयमानेहुताशने ॥ यज्ञशोभिषुदेवेषुस्वर्गमार्गदिशत्सुच ॥
॥ ६४ ॥ लोकपालेषुसर्वेषुदिक्षुसन्धानवर्तिषु ॥ भावेतपसिसिद्धानामभावेपापकर्मणाम् ॥ ६५ ॥ देवपक्षेप्रमुदितेदैत्यपक्षेविषीदति ॥ त्रिपादविग्र
हेधर्मेऽधर्मेपादपरिग्रहे ॥६६॥ अपावृत्तेमहाद्वारेवर्तमानेचसत्पथे ॥ लोकेषुधर्मवृत्तेषुप्रवृत्तेष्वाश्रमेषुच ॥ ६७ ॥ प्रजारक्षणयुक्तेषुराजमानेषुराजसु ॥
प्रशान्तेषुचलोकेषुशान्तेतमसिदानवे ॥ ६८ ॥ अग्निमारुतयोस्तस्मिन्वृत्तेसङ्ग्रामकर्मणि ॥ तन्मयाविमलालोकास्ताभ्यांजयकृतक्रियाः ॥ ६९ ॥
तीव्रंदैत्यभयंश्रुत्वामारुताग्निकृतंमहत् ॥ कालनेमीतिविख्यातोदानवःप्रत्यदृश्यत ॥ १७० ॥ भास्कराकारमुकुटःशिञ्जिताभरणाङ्गदः ॥ मन्दरा
द्रिप्रतीकाशोमहारजतसंवृतः ॥ ७१ ॥ शतप्रहरणोदग्रःशतबाहुःशताननः ॥ शतशीर्षःस्थितःश्रीमाञ्शतशृङ्गइवाचलः ॥ ७२ ॥ कक्षेमहतिसंवृद्धोनि
दाघइवपावकः ॥ धूम्रकेशोहरिश्मश्रुर्दन्तुरोविकटाननः ॥ ७३ ॥ त्रैलोक्यान्तरविस्तारंधारयन्विपुलंवपुः ॥ बाहुभिस्तुलयन्व्योमक्षिपन्पद्भ्यांम
हीधरान् ॥ ७४ ॥ ईरयन्मुखनिश्वासैर्वृष्टिकारान्बलाहकान् ॥ तिर्यगायतरक्ताक्षंमन्दरोदग्रवर्चसम् ॥ ७५ ॥ दिधक्षन्तमिवायान्तंसर्वान्देवगणान्मृ
धे ॥ तर्जयन्तंसुरगणांश्छादयन्तंदिशोदश ॥ ७६ ॥ संवर्तकालेतृषितंदृष्टंमृत्युमिवोत्थितम् ॥ सुतलेनोच्छ्रयवताविपुलाङ्गुलिपर्वणा ॥ ७७ ॥
लम्बाभरणपूर्णेनकिंचिच्चलितकर्मणा ॥ उच्छ्रितेनाग्रहस्तेनदक्षिणेनवपुष्मता ॥ ७८ ॥ दानवान्देवनिहतान्ब्रुवन्तंतिष्ठतेतिच ॥ तंकालनेमिंसमरेद्वि
षतांकालनेमिनाम् ॥ ७९ ॥ वीक्षन्तेस्मसुराःसर्वेभयविह्वललोचनाः ॥ तंवीक्षन्तेस्मभूतानिग्रसन्तंकालनेमिनम् ॥ १८० ॥ त्रिविक्रमंविक्रमन्तं
क्रमत्रणे ॥ ८२ ॥ कालनेमिर्बभौदैत्यःसविष्णुरिवमन्दरः ॥ अथविव्यथिरेदेवाःसर्वेशक्रपुरोगमाः ॥ ८३ ॥ कालनेमिनमायान्तंदृष्ट्वाकालमि
वापरम् ॥ दानवाननुपिप्रीषुःकालनेमिर्महासुरः ॥८४॥ व्यवर्धतमहातेजास्तपान्तेजलदोयथा ॥ तंत्रैलोक्यान्तरगतंदृष्ट्वातेदानवेश्वराः ॥ ८५ ॥ उत्त
स्थुरपरिश्रान्ताःपीत्वेवामृतमुत्तमम् ॥ तेवीतभयसन्त्रासामयतारपुरोगमाः ॥ ८६ ॥ तारकामयसङ्ग्रामेसततंजितकाशिनः ॥ रेजुरायोधनगता
दानवायुद्धकाङ्क्षिणः ॥ ८७ ॥ मन्त्रमभ्यसतांतेषांव्यूहंचपरिधावताम् ॥ प्रेक्षतांचाभवत्प्रीतिर्दानवंकालनेमिनम् ॥ ८८ ॥ येतुतत्रमयस्यास
न्मुख्यायुद्धपुरस्सराः ॥ तेतुसर्वेभयंत्यक्त्वाहृष्टायोद्धुमुपस्थिताः ॥ ८९ ॥ मयस्तारोवराहश्चहयग्रीवश्चदानवः ॥ विप्रचित्तिसुतःश्वेतःखरलम्बावु

भावपि ॥१९०॥ अरिष्टोबलिपुत्रश्चकिशोराख्यस्तथैवच ॥ स्वर्भानुश्चामरप्रख्यश्चक्रयोधीमहासुरः ॥ ९१ ॥ एतेऽस्त्रवेदिनःसर्वेसर्वेतपसिसुस्थिताः॥
दानवाःकृतिनोजग्मुःकालनेमिनमुद्धतम् ॥ ९२ ॥ तेगदाभिस्सुगुर्वीभिश्चक्रैरथपरश्वधैः ॥ कालकल्पैश्चमुसलैःक्षेपणीयैश्चमुद्गरैः ॥ ९३ ॥ अश्मभि
श्चाद्रिसदृशैस्तथाशैलैश्चदारुणैः ॥ पट्टिशैर्भिण्डिपालैश्चपरिघैश्चोत्तमायसैः ॥ ९४ ॥ घातिनीभिश्चगुर्वीभिःशतघ्नीभिस्तथैवच ॥ युगैर्यन्त्रैश्चनिर्मुक्तै
र्लाङ्गलैरुग्रताडितैः ॥ ९५ ॥ दोर्भिरायतमानैश्चपाशैश्चपरिघादिभिः ॥ भुजङ्गवक्त्रैर्लेलिहानैर्विसर्पद्भिश्चसायकैः ॥ ९७ ॥ वज्रैःप्रहरणीयैश्चदीप्य
मानैश्चतोमरैः ॥ विकोशैरसिभिस्तीक्ष्णैःशूलैश्चशितनिर्मलैः ॥ ९८ ॥ दैत्यैःसन्दीप्यमानैश्चप्रगृहीतशरासनैः ॥ ततःपुरस्कृत्यतदाकालने
मिनमाहवे ॥ ९९ ॥ सादीप्तशस्त्रप्रवरादैत्यानांरुरुचेचमूः ॥ यैर्निमीलितसर्वाङ्गावनालीवाम्बुदागमे ॥ २०० ॥ देवतानामपिचमूर्मुमुदेशक्रपालि
ता ॥ उपेताशिशिरोष्णाभ्यांतेजोभ्यांचन्द्रसूर्ययोः ॥ १ ॥ वायुवेगवतीसौम्यातारागणपताकिनी ॥ तोयदाबद्धवसनाग्रहनक्षत्रहासिनी ॥ २ ॥
यमेन्द्रधनदैर्गुप्तावरुणेनचधीमता ॥ साप्रदीप्ताग्निपवनानारायणपरायणा ॥ ३ ॥ सासमुद्रौघसदृशीदीप्यमानामहाचमूः ॥ रराजास्त्रवतीभी
मायक्षगन्धर्वशालिनी ॥ ४ ॥ तयोश्चम्वोस्तदानींतुबभूवससमागमः ॥ द्यावापृथिव्योःसंयोगोयथास्याद्युगपर्यये ॥ ५ ॥ तद्युद्धमभवद्घोरंदेव
दानवसङ्कुलम् ॥ क्षमापराक्रमपरंसदर्पविनयस्यदम् ॥ ६ ॥ निश्चक्रमुर्बलाभ्यांतुभीमाभ्यांचसुरासुराः ॥ पूर्वापराभ्यांसंरब्धाःसागराभ्यामि
वाम्बुदाः ॥ ७ ॥ ताभ्यांबलाभ्यांसंहृष्टाश्चेरुस्तेदेवदानवाः ॥ वनाभ्यांपार्वतीयाभ्यांपुष्पिताभ्यांयथानगाः ॥ ८ ॥ समाजघ्नुस्तथाभेरीः
शङ्खान्दध्मुरनेकशः ॥ ॥ ब्रह्माण्डंचभुवंचैवदिशश्चसमपूरयन् ॥९॥ ज्याघाततलनिर्घोषोधनुषांकूजितानिच ॥ दुन्दुभीनांचनिर्ह्रादोदैत्यमन्तर्दधुः
स्वनम्॥२१०॥तेऽन्योन्यमभिसम्पेतुर्यातयन्तःपरस्परम्॥बभञ्जुर्बाहुभिर्बाहुद्वन्द्वमन्येयुयुत्सवः॥११॥ देवानामशनीर्घोराःपरिघांश्चोत्तमायुधान् ॥
निस्त्रिंशान्ससृजुःसङ्ख्येगदागुर्वीश्चदानवाः ॥ १२ ॥ गदानिपातैर्भग्नाङ्गबाणैश्चशकलीकृताः ॥ परिपेतुर्भृशंकेचित्पुनःकेचित्तुजघ्निरे ॥१३॥ ततोर
थैश्चतुरगैर्विमानैश्चगजादिभिः ॥ समीयुस्तेऽतिसंरब्धारोषादन्योन्यमाहवे ॥१४॥ संवर्त्तमानास्समरेसन्दष्टौष्ठपुटाननाः ॥ रथारथैर्नियुध्यन्तेपादा
ताश्चपदातिभिः ॥ १५ ॥ तेषांरथानांतुमुलःसशब्दःशब्दवाहिनाम् ॥ नभोनिदध्वानयथानभस्येजलदस्वनैः ॥ १६ ॥ बभञ्जिरेरथान्केचित्केचि
त्संमृदितारथैः ॥ सम्बाधमन्येसम्प्राप्तानशेकुश्चलितुंरथाः ॥ १७ ॥ अन्योन्यमध्येसमरेदोर्भ्यामुत्क्षिप्यदंशिताः ॥ संह्रादमाणास्सबलाजघ्नुस्तत्रा
सिचर्मिणः ॥ १८ ॥ अस्त्रैरन्येविनिर्भिन्नारक्तंवमुर्हतायुधि ॥ क्षरज्जलानांसदृशाजलदानांसमागताः ॥ १९ ॥ तदस्त्रशस्त्रप्रथितंक्षिप्ताक्षिप्तगदावि

लम् ॥ देवदानवसङ्घुष्टंसङ्कुलंयुद्धमाबभौ ॥ २२० ॥ तद्दानवमहामेघंदेवायुधविराजितम् ॥ अन्योन्यबाणवर्षेणयुद्धदुर्दिनमाबभौ ॥ २१ ॥ एत
स्मिन्नन्तरेक्रुद्धःकालनेमिस्सदानवः ॥ अवर्धतसमुद्रौघैःपूर्यमाणइवाम्बुदः ॥ २२ ॥ तस्यविद्युच्छतापीडाःप्रदीप्ताशनिवर्षिणः ॥ गात्रैर्नगगिरिप्रख्यै
र्विनिपेतुर्वलाहकाः ॥(२३ ॥ क्रोधान्निश्वसतस्तस्यभ्रूभेदस्वेदवर्षिणः ॥ साग्निस्फुलिङ्गाःप्रततामुखान्निश्चेरुरर्चिषः ॥ २४ ॥ तिर्यगूर्ध्वंचगगनेववृधु
स्तस्यबाहवः ॥ पर्वतादिवनिष्क्रान्ताःपञ्चास्याइवपन्नगाः ॥ २५ ॥ सोऽस्त्रजालैर्बहुविधैर्धनुभिःपरिघैरपि ॥ दिव्यमाकाशमावव्रेपर्वतैरुच्छ्रितैरिव
॥ २६ ॥ सोऽनिलोद्धूतवसनस्तस्थौसङ्ग्रामलालसः ॥ सन्ध्यातपग्रस्तशिलःसाक्षान्मेरुरिवाचलः ॥ २७ ॥ ऊरुवेगप्रमथितैःशृङ्गशैलाग्रपादपैः ॥
अपातयद्देवगणान्वज्रेणेवमहागिरीन् ॥ २८ ॥ बाहुभिश्चसनिस्त्रिंशैश्छिन्नभिन्नशिरोरुहाः ॥ नशेकुश्चलितुंदेवाःकालनेमिहतायुधि ॥ २९ ॥ मुष्टिभि
र्निहताःकेचित्केचिच्चद्विदलीकृताः ॥ यक्षगन्धर्वपतगाःसमहोरगकिन्नराः ॥२३०॥ तेनवित्रासिताःपेतुःसमरेकालनेमिना ॥ नशेकुर्यत्नवन्तोऽपियत्नं
कर्तुंविचेतसः ॥ ३१ ॥ तेनशक्रःसहस्राक्षोऽस्पन्दितःशरबन्धनैः ॥ निष्प्रयत्नःकृतःसङ्ख्येचलितुंनशशाकह ॥ ३२ ॥ निर्जलाम्भोदसदृशोनिर्जला
र्णवसप्रभः ॥ निर्व्यापारःकृतस्तेनविपाशोवरुणोमृधे ॥ ३३ ॥ रणेवैश्रवणस्तेनपरीतःकालरूपिणा ॥ विलपँल्लोकपालेशस्त्याजितोधनदःक्रियाम्
॥ ३४ ॥ यमःसर्वहरस्तेनमृत्युप्रहरणोरणे ॥ याम्यामवस्थांसन्त्यज्यभीतःस्वांदिशमाविशत् ॥ ३५ ॥ सलोकपालानुत्सार्यहत्वातेषांचकर्मतत् ॥
दिक्षुसर्वासुदेहंस्वंचतुर्धाविदधेतदा ॥ ३६ ॥ सनक्षत्रपथंगत्वादिव्यंस्वर्भानुदर्शितम् ॥ जहारलक्ष्मींसोमस्ययच्चास्यविषयंमहत् ॥ ३७ ॥ चालया
मासदीप्तांशुंधर्मद्वारासभास्करम् ॥ शासनंचास्यविषयंजहारदिनकर्मच ॥ ३८ ॥ सोऽग्निंदेवमुखंजित्वाचकारात्ममुखाश्रयम् ॥ वायुंचतरसाजित्वा
चकारात्मवशानुगम् ॥ ३९ ॥ ससमुद्रात्समानीयसमस्ताःसरितोबलात् ॥ चकाराभिमुखावीर्यादेवभूताश्चसिन्धवः ॥ २४० ॥ अपःस्ववशगाः
कृत्वादिविजायाश्चभूमिजाः ॥ छादयामासजगतींसुगुप्तांधरणीधरैः ॥ ४१ ॥ सस्वयम्भूरिवाभातिमहाभूतपतिर्महान् ॥ सर्वलोकमयोदैत्यःसर्वलो
कभयावहः ॥ ४२ ॥ सलोकपालैकवपुश्चन्द्रसूर्यग्रहात्मवान् ॥ पावकानिलसम्भूतोरराजयुधिदानवः ॥ ४३ ॥ पारमेष्ठ्येस्थितःस्थानेलोकानांप्रभ
वोपमे ॥ तंतुष्टुवुर्दैत्यगणादेवाइवपितामहम् ॥ ४४ ॥ पञ्चतंनाभ्यवर्तन्तविपरीतंनकर्मणा ॥ वेदोधर्मःक्षमासत्यंश्रीश्चनारायणाश्रया ॥ ४५ ॥ सते
षामनुपस्थानात्सक्रोधोदानवेश्वरः ॥ वैष्णवंपदमन्विच्छन्सगतोदेवतायतः ॥ ४६ ॥ सददर्शसुपर्णस्थंशङ्खचक्रगदाधरम् ॥ दानवानांविनाशायभ्रा
मयन्तंगदांशुभाम् ॥ ४७ ॥ सजलाम्भोदसदृशंविद्युत्सदृशवाससम् ॥ आरूढंस्वर्णपत्राढ्यंखेचरंकाश्यपंखगम् ॥४८॥ दुष्टदैत्यविनाशायदृष्ट्वाखस्थ

मिवस्थितम् ॥ दानवोविष्णुमक्षोभ्यंबभाषेक्षुब्धमानसः ॥ ४९ ॥ कालनेमिरुवाच ॥ अयंसरिपुरस्माकंपूर्वेषांप्राणनाशनः ॥ अर्णवावासिनश्चैवम
धोश्चकैटभस्यच ॥ २५० ॥ अयंसरिपुरस्माकमसमः किलकथ्यते ॥ अनेकसंयुगेऽनेनदानवाबहवोहताः ॥ ५१ ॥ अयंसनिर्घृणोलोकेस्त्रीबालनि
रपत्रपः ॥ येनदानवनारीणांसीमन्तोद्धरणंकृतम् ॥ ५२ ॥ अयंसविष्णुर्देवानांवैकुण्ठश्चदिवौकसाम् ॥ अनन्तोभोगिनांमध्येस्वयम्भूश्चस्वयम्भुवः ॥
॥ ५३ ॥ अयंसनाथोदेवानामस्माभिर्विप्रकृष्यते ॥ अस्यक्रोधंसमासाद्यहिरण्यकशिपुर्हतः ॥५४॥ अस्यच्छायामुपाश्रित्यदेवामखमुखेस्थिताः ॥
आज्यंमहर्षिभिर्दत्तमश्नुवन्तित्रिधाहुतम् ॥ ५५ ॥ अयंसनिधनेहेतुःसर्वेषाममरद्विषाम् ॥ अस्यचक्रप्रविष्टानिकुलान्यस्माकमाहवे ॥ ५६ ॥
अयंसकिलयुद्धेषुसुरार्थेत्यक्तजीवितः ॥ सविभुस्तेजसायुक्तंचक्रंक्षिपतिशत्रुषु ॥ ५७ ॥ अयंसकालोदैत्यानांकालभूतेमयिस्थिते ॥ अतिक्रान्त
स्यकालस्यफलंप्राप्स्यतिकेशवः ॥ ५८ ॥ दिष्ट्येदानींसमक्षंमेविष्णुरेषसमागतः ॥ निष्पिष्टोबहुनासङ्ख्येमय्येवप्रणशिष्यति ॥ ५९ ॥ या
स्याम्यपचितिंदिष्ट्यापूर्वेषामद्यसंयुगे ॥ इमंनारायणंहत्वादानवानांभयावहम् ॥ २६० ॥ क्षिप्रमेवहनिष्यामिरणेऽमरगणानहम् ॥ जात्यन्तर
गतोऽप्येषबाधतेदानवान्मृधे ॥ ६१ ॥ एषोऽनन्तःपुराभूत्वापद्मनाभइतिश्रुतः ॥ जघानैकार्णवेघोरेतावुभौमधुकैटभौ ॥ ६२ ॥ द्विधाभूतं
वपुःकृत्वासिंहस्यार्द्धंनरस्यच ॥ पितरंमेजघानैकोहिरण्यकशिपुंपुरा ॥६३॥ यंसुतंगर्भमाधत्तद्यदितिर्देवतारणिः ॥ त्रींल्लोकानाजहारैकःक्रममाण
स्त्रिभिःक्रमैः ॥६४॥ भूयस्त्विदानींसम्प्राप्तेसङ्ग्रामेतारकामये॥ मयासहसमागम्यसदेवोविनशिष्यति ॥६५॥ पुलस्त्यउवाच ॥ एवमुक्त्वाबहुविधं
क्षिप्रंनारायणंरणे ॥ वाग्भिरप्रतिरूपाभिर्युद्धमेवाभ्यरोचयत् ॥ ६६ ॥ क्षिप्यमाणोऽसुरेन्द्रेणनचुकोपगदाधरः ॥ क्षमाबलेनमहतासस्मितं
तंचेदमब्रवीत्॥६७॥नारायणउवाच ॥ अल्पंदर्पबलंदैत्यस्थिरमक्रोधजंबलम्॥हतस्त्वंदर्पजैर्दोषैर्हित्वायोभाषसेक्षमाम् ॥६८॥अधमस्त्वंममतोधिगे
तत्तववाग्बलम् ॥ केतत्रपुरुषाःसन्तियत्रगर्जन्तियोषितः ॥ ६९ ॥ अहंत्वांदैत्यपश्यामिपूर्वेषांमार्गगामिनम् ॥ प्रजापतिकृतंसेतुंत्यक्त्वाकःस्वस्ति
मान्भवेत् ॥ २७० ॥ अद्यत्वांनाशयिष्यामिदेवव्यापारघातकम् ॥ स्वेषुस्वेषुचस्थानेषुस्थापयिष्यामिदेवताः ॥ ७१ ॥ पुलस्त्यउवाच ॥ एवंब्रु
वतिवाक्यंतुमृधेश्रीवत्सधारिणि ॥ जहासदानवःक्रोधाद्धस्तांश्चक्रेचसायुधान् ॥ ७२ ॥ सबाहुशतमुद्यम्यसर्वायुधगणान्रणे ॥ क्रोधाद्द्विगुणरक्ताक्षो
विष्णोर्वक्षस्यपातयत् ॥ ७३ ॥ दानवाश्चापिसमरेमयतारपुरोगमाः ॥ उद्यतायुधनिस्त्रिंशाविष्णुमभ्यद्रवन्रणे ॥ ७४ ॥ सताड्यमानोऽतिबलैर्दैत्यैः
सर्वायुधोद्यतैः ॥ नचचालततोयुद्धेकम्प्यमानइवाचलः ॥७५॥ संयुक्तश्चसुपर्णेनकालनेमिर्महासुरः ॥ सर्वप्राणेनमहतींगदामुद्यम्यबाहुभिः ॥ ७६ ॥

घोरांज्वलन्तींमुमुचेसंरब्धोगरुडोपरि ॥ कर्मणातेनदैत्यस्यविष्णुर्विस्मयमागमत् ॥ ७७ ॥ तदातेनसुपर्णस्यपातितामूर्ध्निसागदा ॥ सुपर्णंव्यथितं
दृष्ट्वाक्षतंचवपुरात्मनः ॥ ७८ ॥ क्रोधसंरक्तनयनोवैकुण्ठश्चक्रमाददे ॥ व्यवर्द्धतचवेगेनसुपर्णेनसमंविभुः ॥ ७९ ॥ भुजाश्चास्यव्यवर्धन्तव्याप्तवन्तो
दिशोदश ॥ विदिशश्चैवखंचापिगांचैवप्रत्यपूरयन् ॥ २८० ॥ ववृधेसपुनर्लोकान्क्रान्तुकामइवौजसा ॥ तंजयायसुरेन्द्राणांवर्द्धमानंनभस्तले
॥ ८१ ॥ ऋषयःसहगन्धर्वास्तुष्टुवुर्मधुसूदनम् ॥ सद्यांकिरीटेनलिखञ्छिरसाभास्वरेणच ॥ ८२ ॥ पद्भ्यामाक्रम्यवसुधांदिशःप्रच्छाद्यबाहुभिः ॥
सहस्रकरतुल्याभंसहस्रारमरिक्षयम् ॥ ८३ ॥ दीप्ताग्निसदृशंघोरंदर्शनेनसुदर्शनम् ॥ सुवर्णरेणुपर्यन्तंवज्रनाभंभयावहम् ॥ ८४ ॥ मेदोऽस्थिम
ज्जारुधिरैःसिक्तंदानवसम्भवैः ॥ अद्वितीयंप्रहरणंक्षुरपर्यन्तमण्डलम् ॥ ८५ ॥ स्रग्दाममालानिचितंकामगंकामरूपिणम् ॥ स्वयंस्वयम्भुवासृष्टंभय
दंसर्वविद्विषाम् ॥ ८६ ॥ दधाररोषेणाविष्टंनित्यमाहवदर्पितम् ॥ क्षपणाद्यस्यमुह्यन्तिलोकाःसस्थाणुजङ्गमाः ॥ ८७ ॥ क्रव्यादानिचभूतानितृप्तिं
यान्तिमहामृधे ॥ तमप्रतिमकर्माणंसमानंसूर्यवर्चसा ॥ ८८ ॥ चक्रमुद्यम्यसमरेकोपदीप्तोगदाधरः ॥ प्रनष्टंदानवंतेजःकुर्वाणंस्वेनतेजसा ॥ ८९ ॥
चिच्छेदबाहूंस्तेनैवसमरेकालनेमिनः ॥तच्चवक्त्रशतंघोरंसाग्निचूर्णाट्टहासिवै॥२९०॥ तस्यदैत्यस्यचक्रेणप्रममाथबलाद्धरिः॥सच्छिन्नबाहुर्विशिरानप्राक
म्पतदानवः॥९१॥कबन्धावस्थितःसङ्ख्येविशाखइवपादपः॥तंवितत्यमहापक्षौवायोःकृत्वासमंजवम्॥९२॥ उरसाताडयामासगरुडःकालनेमिनम् ॥
सतस्यदेहोऽभिखोविबाहुःखात्परिभ्रमन् ॥ ९३ ॥ निपपातदिवंत्यक्त्वाक्षोभयन्धरणीतलम् ॥ तस्मिन्निपतितेदैत्येदेवाःसर्षिगणास्तथा ॥ ९४ ॥
साधुसाध्वितिवैकुण्ठंसमेताःप्रत्यपूजयन् ॥ अपरेयेतुदैत्यावैयुद्धेदृष्टपराक्रमाः ॥ ९५ ॥ तेसर्वेबाहुभिर्व्याप्तानशेकुश्चलितुंरणे ॥ कांश्चित्केशेषुजग्राह
कांश्चित्कण्ठेष्वपीडयत्॥९६॥चकर्तकस्यचिद्वक्त्रंमध्येऽगृह्णात्तथापरम्॥तेगदाचक्रनिर्दग्धागतसत्त्वागतासवः ॥९७॥ गगनाद्भ्रष्टसर्वाङ्गानिपेतुर्धरणी
तले॥तेषुसर्वेषुदैत्येषुहतेषुपुरुषोत्तमः ॥९८॥ शक्रप्रियंततःकृत्वाकृतकर्मागदाधरः॥तस्मिन्विमर्देसंवृत्तेसङ्ग्रामेतारकामये ॥९९॥ तंचदेशंजगामाशु
ब्रह्मालोकपितामहः ॥ सर्वैर्ब्रह्मर्षिभिःसार्द्धंगन्धर्वाप्सरसांगणैः ॥ ३०० ॥ देवदेवंहरिंदेवःपूजयन्वाक्यमब्रवीत् ॥ १ ॥ ब्रह्मोवाच ॥ कृतंदेवमहत्कर्म
सुराणांशल्यमुद्धृतम् ॥ निधनेनचदैत्यानांवयंचपरितोषिताः ॥ २ ॥ योऽयंत्वयाहतोविष्णोकालनेमिर्महासुरः ॥ त्वामेतस्यऋतेह्यस्मिञ्शास्ताक
श्चिन्नविद्यते ॥ ३ ॥ एषदेवान्परिभवल्लोकांश्चसचराचरान् ॥ ऋषीणांकदनंकृत्वामामपिप्रतिगर्जति ॥ ४ ॥ तदनेनत्वदीयेनपरितुष्टोऽस्मिकर्मणा ॥
यदयंकालकल्पस्तेकालनेमिर्निपातितः ॥ ५ ॥ तदागच्छस्वभद्रंतेगच्छामदिवमुत्तमाम् ॥ ब्रह्मर्षयस्त्वांतत्रस्थाःप्रतीक्षन्तेसदोगताः ॥ ६ ॥ कंचाहं

तवदास्यामिवरंवरभृतांवर॥स्वस्थानस्थेषुदेवेषुतेषांचवरदोभवान् ॥७॥ निर्यातमेतत्रैलोक्यंस्फीतंनिहतकण्टकम् ॥ अस्मिन्नेवमृधेविष्णोशक्रायसुम
हात्मने ॥ ८ ॥ पुलस्त्यउवाच ॥ एवमुक्तोभगवताब्रह्मणाहरिरव्ययः ॥ देवाञ्शक्रमुखान्सर्वानुवाचशुभयागिरा ॥ ९ ॥ विष्णुरुवाच ॥ श्रूयतां
त्रिदशास्सर्वेयावन्तोऽत्रसमागताः॥सुपर्णसहितैस्तत्रपुरस्कृत्यपुरन्दरम् ॥ ३१० ॥ अस्माभिःसमरेसर्वैःकालनेमिमुखाहताः ॥ दानवाविक्रमोपेताःश
क्रादपिमहत्तराः ॥११॥ अस्मिन्महतिसङ्ग्रामेद्वावेवतुविनिस्सृतौ ॥ विरोचनस्तुदैतेयःस्वर्भानुश्चमहाबलः ॥ १२ ॥ स्वांदिशंभजतांशक्रोदिशंवरु
णएवच ॥ याम्यांयमःपालयतामुत्तरांचधनाधिपः ॥ १३ ॥ ऋक्षैःसहसदायोगंगच्छतांचन्द्रमास्तथा ॥ अयमृतुमुखंसूर्योभजतामयनैःसह ॥१४॥
आज्यभागाःप्रवर्तन्तांसदस्यैरभिपूजिताः ॥ हूयन्तामग्नयोविप्रैर्वेददृष्टेनकर्मणा ॥१५॥ देवाश्चबलिहोमेनस्वाध्यायेनमहर्षयः ॥ श्राद्धेनपितरश्चैवतु
ष्टियान्तुयथासुखम् ॥ १६ ॥ वायुश्चरतुमार्गस्थस्त्रिधादीप्यतुपावकः ॥ त्रयोवर्णाश्चलोकांस्त्रींस्तर्पयन्त्वात्मजैर्गुणैः ॥ १७ ॥ क्रतवःसम्प्रवर्तन्तांदी
क्षणीयैर्द्विजातिभिः ॥ दक्षिणाश्चोपपद्यन्तांयाज्ञिकेश्चपृथक्पृथक् ॥ १८ ॥ गाश्चसूर्योरसान्सोमोवायुःप्राणांश्चप्राणिषु ॥ तर्पयन्तःप्रवर्तन्तामेतेसौ
म्यैःस्वकर्मभिः ॥ १९ ॥ यथावदनुपूर्वेणमहेन्द्रमलयोद्भवाः ॥ त्रैलोक्यमातरःसर्वाःसमुद्रंयान्तुसिन्धवः ॥ ३२० ॥ दैत्येभ्यस्त्यज्यतांभीश्चशान्ति
व्रजतदेवताः ॥ स्वस्तिवोऽस्तुगमिष्यामिब्रह्मलोकंसनातनम् ॥ २१ ॥ स्वगृहेस्वर्गलोकेवासङ्ग्रामेवाविशेषतः ॥ विश्वस्तैश्चनगन्तव्यंनित्यंक्षुद्रा
हिदानवाः ॥ २२ ॥ छिद्रेषुप्रहरन्त्येतेनतेषांसंस्थितिर्ध्रुवा ॥ सौम्यानांनिजभावानांभवतामार्जवेमनः ॥ २३ ॥ पुलस्त्यउवाच ॥ एवमुक्त्वासुरगणा
न्विष्णुस्सत्यपराक्रमः ॥ जगामब्रह्मणासार्द्धंब्रह्मलोकंमहायशाः ॥ २४ ॥ देवानांमहतींप्रीतिमुत्पाद्यभगवान्प्रभुः ॥ २५ ॥ एतदाश्चर्यमभवत्सं
ङ्ग्रामेतारकामये ॥ दानवानांचविष्णोश्चयन्मांत्वंपरिपृच्छसि ॥ ३२६ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेपद्मोद्भवदेवासुरयुद्धोनामत्रिचत्वारिंश
त्तमोऽध्यायः ॥ ४३ ॥ भीष्मउवाच ॥ श्रुतःपद्मोद्भवोब्रह्मन्विस्तरेणत्वयेरितः ॥ समासाद्भवमाहात्म्यमुत्पत्तिंचगुहस्यच ॥ १ ॥ श्रोतुमिच्छामि
तेब्रह्मन्यथाभूतःकृतंचयत् ॥ तारकश्चकथम्भूतोदानवोबलवत्तरः ॥ २ ॥ कार्तिकेयेनसब्रह्मन्कथंध्वस्तोमहासुरः ॥ कथंरुद्रेणमुनयः
प्रेषितामन्दरंगिरिम् ॥ ३ ॥ कथंलब्धाउमातत्ररुद्रेणपरमेष्ठिना ॥ एतदाख्याहिमेसर्वंयथाभूतंमहामुने ॥ ४ ॥ पुलस्त्यउवाच ॥
कश्यपेनपुराप्रोक्तादितिर्दैत्यारणिःशुभा ॥ वज्रसारमयैश्चाङ्गैःपुत्रोदेविभविष्यति ॥ ५ ॥ वज्राङ्गोनामपुत्रस्तुभविताधर्मवत्सलः ॥ माचलब्धवरा
देवीपुपुवेवज्रदुश्छिदम् ॥ ६ ॥ सजातमात्रएवाभूत्सर्वशास्त्रार्थपारगः ॥ उवाचमातरंभक्त्यामातःकिंकरवाण्यहम् ॥ ७ ॥ तस्योवाचततोहृष्टादि ति

दैत्याधिपस्यतु ॥ वहवोमेहताःपुत्राःसहस्राक्षेणपुत्रक ॥ ८ ॥ तपामपचितिंकर्तुंगच्छशक्रवधायतु ॥ बाढमित्यवतांचोक्काजगामत्रिदिवंबलात् ॥ ९ ॥ बद्धाततःसहस्राक्षंपाशेनामोघवर्चसा ॥ मातुरन्तिकमागच्छद्व्याधःक्षुद्रमृगंयथा ॥ १० ॥ एतस्मिन्नन्तरेब्रह्माकश्यपश्चमहातपाः ॥ आगतौ तत्रयत्रास्तांमातापुत्राविभीतकौ ॥ ११ ॥ दृष्ट्वातुतावुवाचेदंब्रह्माकश्यपएवच ॥ मुञ्चैनंपुत्रदेवेन्द्रंकिमनेनप्रयोजनम् ॥ १२ ॥ अवमानोवधःप्रोक्तः पुत्रसम्भावितस्यतु ॥ अस्मद्वाक्यनयोमुक्तस्त्वद्धस्तान्मृतएवसः ॥ १३॥ परस्यगौरवान्मुक्तःशत्रूणांशत्रुगहवे ॥ सजीवन्नेवहिमृतोदिवसेदिवसेपुनः॥ ॥ १४ ॥ एतच्छ्रुत्वातुवज्राङ्गःप्रणतोवाक्यमब्रवीत् ॥ नमेकृत्यमनेनास्तिमातुराज्ञाकृताहिमे ॥ १५ ॥ त्वंसुरासुरनाथोवैमान्यश्चप्रपितामहः ॥ करिष्येत्वद्वचोदेवएषमुक्तः‍-तक्रतुः ॥१६॥ तपसेमेरतिर्देवानिर्विघ्नंतच्चमेभवेत् ॥ त्वत्प्रसादेनभगवन्नित्युक्त्वाविरराम ह ॥ १७॥ तस्मिंस्तूष्णींस्थिते दैत्येप्रोवाचेदंपितामहः ॥ ब्रह्मोवाच॥ तपस्त्वंकुरुमापन्नःसोऽस्मच्छासनसंस्थितः ॥ १८ ॥ अनयाचित्तशुद्ध्याहिपर्याप्तंजन्मनःफलम् ॥ इत्युक्त्वा पद्मजःकन्यांससर्जायतलोचनाम् ॥ १९ ॥ तामस्मैप्रददौदेवःपत्न्यर्थेपद्मसम्भवः ॥ वराङ्गीतिचनामास्याःकृत्वायातःपितामहः ॥ २० ॥ वज्रा ङ्गोऽपितयासार्द्धंजगामतपसेवनम् ॥ ऊर्द्ध्वबाहुस्सदैत्येन्द्रोऽचरद्वर्षसहस्रकम् ॥२१॥ कालंकमलपत्राक्षःशुद्धबुद्धिर्महातपाः ॥ तावच्चाधोमुखःकालं तावत्पञ्चाग्निमध्यगः ॥ २२ ॥ निराहारोघोरतपास्तपोराशिरजायत ॥ ततःसोऽन्तर्जलेचक्रेवासंवर्षसहस्रकम् ॥ २३ ॥ जलान्तरंप्रविष्टस्यतस्यप त्नीमहाव्रता ॥ तस्यैवतीरेसरसःस्थितासौमौनमाश्रिता ॥२४ ॥ निराहारंतपोघोरंप्रविवेशमहाद्युतिः ॥ तस्यांतपसिवर्तन्त्यामिन्द्रश्चक्रेविभीषिकाम् ॥ २५ ॥ गत्वातुमर्कटाकारस्तदाश्रमपदंमहत् ॥ बृसींचकर्षबलवान्गन्धाद्यर्चाकरण्डकम् ॥ २६ ॥ ततस्तुसिंहरूपेणभीषयामासभामिनीम् ॥ ततो भुजङ्गरूपेणाप्यदशच्चरणद्वयम् ॥ २७ ॥ तपोबलवशात्सातुनवध्यत्वंजगाम ह ॥ भीषिकाभिरनेकाभिःक्लेशयन्पाकशासनः ॥ २८ ॥ विररामयदा नैववज्राङ्गमहिषीतदा ॥ शैलस्यदुष्टतांमत्वाशापंदातुंसमुद्यता ॥ २९ ॥ तांशापाभिमुखींदृष्ट्वाशैलःपुरुषविग्रहः ॥ उवाचतांवरारोहांवराङ्गींभीतलोच नः ॥ ३० ॥ शैलउवाच ॥ नाहंमहाव्रतेदुष्टःसेव्योऽहंसर्वदेहिनाम् ॥ विप्रियंतंकरोत्येषरुषितःपाकशासनः ॥ ३१ ॥ एतस्मिन्नन्तरेजातःकालोवर्ष सहस्रकः ॥ तस्मिञ्ज्ञात्वातुभगवान्कालेकमलसम्भवः ॥ ३२ ॥ तुष्टःप्रोवाचवज्राङ्गंतदागत्यजलाशयम् ॥ ब्रह्मोवाच ॥ ददामिसर्वकामंतउत्तिष्ठदिति नन्दन ॥ ३३ ॥ एवमुक्तस्तदोत्थायसदैत्येन्द्रस्तपोनिधिः ॥ उवाचप्राञ्जलिर्वाक्यंसर्वलोकपितामहम् ॥ ३४॥ वज्राङ्गउवाच ॥ आसुरोमास्तुमेभावः सन्तुलोकाममाक्षयाः ॥ तपस्यभिरतिर्मेऽस्तुशरीरस्यास्यवर्तनम् ॥ ३५ ॥ एवमस्त्वितितंदेवोजगामस्वकमालयम् ॥ वज्राङ्गोऽपिसमाप्तेतुतपसि

स्थिरसंयमः ॥ ३६ ॥ सङ्गन्तुमिच्छन्स्वांभार्यांनददर्शाश्रमेस्वके ॥ क्षुधाविष्टःसशैलस्यगहनंप्रविवेशह ॥ ३७ ॥ आदातुंफलमूलानिसच
तस्मिन्व्यलोकयत ॥ रुदन्तींस्वांप्रियांदीनांतरुप्रच्छादिताननाम् ॥३८॥ तांविलोक्यततोदत्यःप्रोवाचपरिसान्त्वयन् ॥ वज्राङ्गउवाच ॥ केनतेऽ
पकृतंभद्रेयमलोकंयियासुना ॥ ३९ ॥ कंवाकामंप्रयच्छामिशीघ्रंप्रब्रूहिमानिनि ॥ वराङ्गयुवाच ॥ त्रासितास्म्यपविद्धास्मिताडितापीडितास्मिच
॥ ४० ॥ रौद्रेणदेवराजेननष्टनाथेवभूरिशः ॥ दुःखस्यान्तमपश्यन्तीप्राणांस्त्यक्तुंव्यवस्थिता ॥ ४१ ॥ पुत्रंमेतारकंदेहितस्माद्दुःखमहार्णवात् ॥
एवमुक्तस्तुदैत्येन्द्रःकोपव्याकुललोचनः ॥४२॥ शक्तोऽपिदेवराजस्यप्रतिकर्तुंमहासुरः ॥ तपएवपुनश्चर्तुंव्यवस्यतमहाबलः॥४३॥ज्ञात्वातस्यतुसङ्क
ल्पंब्रह्माक्रूरतरंपुनः ॥ आजगामत्वरायुक्तोयत्रासौदितिनन्दनः ॥ ४४ ॥ ब्रह्मोवाच ॥ किमर्थंपुत्रभूयस्त्वंकर्तुंनियममुद्यतः ॥ तदहंतेपुनर्दास्येकाङ्क्षितं
पुत्रमोजसा ॥ ४५ ॥ वज्राङ्गउवाच ॥ उत्थितेनमयादृष्टासमाधानात्त्वदाज्ञया ॥ त्रासितेन्द्रेणमामाहसावराङ्गीसुतार्थिनी ॥ ४६ ॥ पुत्रंमेतारकं
देहितुष्टोमेत्वंपितामह ॥ ब्रह्मोवाच ॥ अलंतेतपसावीरमाक्लेशेदुस्तरेविश ॥ ४७॥ पुत्रस्तुतारकोनामभविष्यतिमहाबलः ॥ देवसीमन्तिनीनांतुधम्मि
ल्लकविमोक्षकः॥४८॥ इत्युक्तोदत्यनाथस्तुप्रणम्यप्रपितामहम्॥ गत्वातांनन्दयामासमहिषींकर्शितान्तराम्॥४९॥तौदम्पतीकृतार्थौतुजग्मतुःस्वाश्रमं
तदा ॥ आहितंतुतदागर्भंवराङ्गीवरवर्णिनी ॥ ५० ॥ पूर्णवर्षसहस्रंतुदधारोदरएवहि ॥ ततोवर्षसहस्रान्तेवराङ्गीसात्वसूयत ॥ ५१ ॥ जायमानेतु
दैत्येतुतस्मिँल्लोकभयङ्करे ॥ चचालसर्वापृथिवीप्रोद्धूताश्चमहार्णवाः ॥ ५२ ॥ चेलुर्धराधराश्चापिववुर्वाताश्चभीषणाः ॥ जेपुर्जप्यंमुनिवरानेदुर्व्याल
मृगाअपि ॥ ५३ ॥ जहौकान्तिश्चन्द्रसूर्यौनीहारच्छादितादिशः ॥ जातेमहासुरेतस्मिन्सर्वेचापिमहासुराः ॥ ५४ ॥ आजग्मुर्हर्षितास्तत्रतथा
चासुरयोषितः ॥ जगुर्हर्षसमाविष्टाननृतुश्चाप्सरोगणाः ॥ ५५ ॥ ततोमहोत्सवेजातेदानवानांमहाद्युते ॥ विषण्णमनसोदेवाःसहेन्द्राअभवंस्तदा
॥ ५६ ॥ वराङ्गीतुसुतंदृष्ट्वाहर्षेणापूरितातदा ॥ बहुमेनेचदैत्येन्द्रोविजातंतंतदातया ॥ ५७ ॥ जातमात्रस्तुदत्येन्द्रस्तारकश्चोग्रविक्रमः ॥
अभिषिक्तोऽसुरैर्मुख्यैःकुजम्भमहिषादिभिः ॥ ५८ ॥ सर्वासुरमहाराज्येपृथिवीतुलनक्षमे ॥ सतुप्राप्तमहाराज्यस्तारकोनृपसत्तम ॥ ५९ ॥
उवाचदानवश्रेष्ठोयुक्तियुक्तमिदंवचः ॥ तारकउवाच ॥ शृणुध्वमसुराःसर्वेवाक्यंममममहाबलाः ॥ ६० ॥ वंशक्षयकरादेवाःसर्वेषामेवदानवाः॥अस्मा
कंजातिधर्मेणविरूढंवैरमक्षयम्॥६१॥वयंतपश्चरिष्यामःसुराणांनिग्रहायतु॥स्वबाहुबलमाश्रित्यसर्वएवनसंशयः ॥६२॥ पुलस्त्यउवाच॥ तच्छ्रुत्वासं
मतंकृत्वापारियात्रंययौगिरिम् ॥ निराहारःपञ्चतपाःपत्रभुग्वारिभोजनः ॥ ६३ ॥ शतंशतंसमानांतुतपांस्येतान्यथाकरोत् ॥ एवंतुकर्शितेदेहेतपोरा

शित्वमागते ॥ ६४ ॥ ब्रह्मागत्याहदैत्येन्द्रंवरंवरयसुव्रत ॥ सवव्रेसर्वभूतेभ्योनमेमृत्युर्भवेदिति ॥ ६५ ॥ तमुवाचततोब्रह्मादेहिनांमरणंध्रुवम् ॥ यत
स्ततोऽपिवरयमृत्युंयस्मान्नशङ्कसे ॥ ६६ ॥ ततःसञ्चिन्त्यदैत्येन्द्रःशिशोर्वैसप्तवासरात् ॥ वव्रेमहासुरोमृत्युंमोहितोह्यवलेपतः ॥ ६७ ॥ जगामो
मित्युदाहृत्यब्रह्मादैत्योनिजंगृहम् ॥ अथाहमन्त्रिणस्तूर्णंबलंमेसम्प्रयुज्यताम् ॥ ६८ ॥ यदिवोमत्प्रियंकार्यंनिग्राह्याःसुरसत्तमाः ॥ निगृहीतेषुमे
प्रीतिर्जायतेचातुलाऽसुराः ॥ ६९ ॥ तारकस्यवचःश्रुत्वाग्रसनोनामदानवः ॥ सेनानीर्दैत्यराजस्यमन्त्रंचक्रेबलंचलत् ॥ ॥ ७० ॥ आहत्यभेरींग
म्भीरांदैत्यानाहूयसत्वरः ॥ दशकोटीश्वरादैत्यादैत्यानांचण्डविक्रमाः ॥७१॥ तेषामग्रेसरोजम्भःकुजम्भोऽनन्तरोऽसुरः ॥ महिषःकुञ्जरोमेघःकाल
नेमिर्निमिस्तथा ॥ ७२ ॥ मन्थनोजम्भकःशुम्भोदैत्येन्द्रादशनायकाः ॥ अन्येचशतशस्तत्रपृथिवीतुलनक्षमाः ॥ ७३ ॥ गरुडानांसहस्रेणचक्रा
ष्टकविभूषितः ॥ सकूबरपरीवारश्चतुर्योजनविस्तृतः ॥ ७४ ॥ स्यन्दनस्तारकस्यासीद्व्याघ्रसिंहखरारावैभिः ॥ युक्तारथास्तुग्रसनजम्भकौजम्भ
कुम्भिनाम् ॥ ७५ ॥ मेघस्यद्वीपिभिर्युक्तःकूष्माण्डैःकालनेमिनः ॥ पर्वताभश्चतुर्दंष्ट्रोनिमेश्चैवमहागजः ॥ ७६ ॥ शतहस्ततुरङ्गस्थोमन्थनोनाम
दैत्यराट् ॥ जम्भकस्तूष्ट्रमारूढोगिरीन्द्राभंमहाबलः ॥७७॥ शुम्भोमेषंसमारूढोऽन्येऽप्येवंचित्रवाहनाः ॥ प्रचण्डाश्चित्रवर्माणःकुण्डलोष्णीषभूषि
ताः ॥ ७८ ॥ तद्बलंदैत्यसिंहस्यभीमरूपंव्यजायत ॥ प्रमत्तमत्तमातङ्गतुरङ्गरथसङ्कुलम् ॥ ७९ ॥ प्रतस्थेऽमरयुद्धायबहुपत्तिपताकिकम् ॥ एत
स्मिन्नन्तरेवायुर्देवदूतोऽसुरालये ॥ ८० ॥ दृष्ट्वातद्दानवबलंजगामेन्द्रस्यशंसितुम् ॥ सगत्वातुसभांदिव्यांमहेन्द्रस्यमहात्मनः ॥ ८१ ॥ शशंसम
ध्येदेवानांतत्कार्यंसमुपस्थितम् ॥ तच्छ्रुत्वादेवराजस्तुनिर्मीलितविलोचनः ॥ ८२ ॥ बृहस्पतिमुवाच वाक्यंकालेमहाभुजः ॥ इन्द्रउवाच ॥ स
म्प्राप्तोनिविमर्दोऽयंदेवानांदानवैःसह ॥ ८३ ॥ कार्यंकिमत्रतद्ब्रूहिनीत्युपायोपबृंहितम् ॥ एतच्छ्रुत्वातुवचनंमहेन्द्रस्यगिरांपतिः ॥ ८४ ॥ इत्यु
वाचमहाभागोबृहस्पतिरुदारधीः ॥ बृहस्पतिरुवाच ॥ सामपूर्वाश्रुतानीतिश्चतुरङ्गापताकिनी ॥ ८५ ॥ जिगीषतांसुरश्रेष्ठस्थितिरेषासनातनी ॥
सामभेदस्तथादानंदण्डश्चाङ्गचतुष्टयम् ॥ ८६ ॥ नसान्त्वगोचरेलुब्धानभेद्यास्त्वेकधर्मिणः ॥ नदानमत्रसंसिद्ध्यैप्रसह्यैवापहारिणाम् ॥ ८७ ॥
एकोऽभ्युपायोदण्डोऽत्रभवतांयदिरोचते ॥ एवमुक्तःसहस्राक्षएवमेतदुवाचह ॥ ८८ ॥ कर्त्तव्यतांचसञ्चिन्त्यप्रोवाचामरसंसदि ॥ इन्द्रउवाच ॥
अवधानेनमेवाचंशृणुध्वंनाकवासिनः ॥ ८९ ॥ भवन्तोयज्ञभोक्तारोदिव्यात्मानोहिसान्वयाः ॥ स्वेमहिम्निस्थितानित्यंजगतःपालनेरताः ॥९०॥
क्रियतांसमरोद्योगःसैन्यंसंयोज्यतांमम ॥ आह्रियन्तांचशस्त्राणिपूज्यन्तांशस्त्रदेवताः ॥ ९१ ॥ वाहनानिविमानानियोजयध्वंममेश्वराः ॥ यमंसे

नापतिंकृत्वाशीघ्रमेवदिवौकसः ॥ ९२ ॥ पुलस्त्यउवाच ॥ इत्युक्तास्समनह्यन्तदेवानांयप्रधानतः॥वाजिनामयुतेनाजौहेमघण्टापरिष्कृतम् ॥९३॥
नानाश्चर्यगुणोपेतंसम्प्राप्तंदेवदानवैः ॥ रथंमातलिनायुक्तंदेवराजस्यदुर्जयम् ॥ ९४ ॥ यमोमहिषमास्थायसेनाग्रेसमवर्त्तत ॥ चण्डकिङ्करवृन्देनस
र्वतःपरिवारितः ॥ ९५ ॥ कल्पकालोद्गतज्वालापूरितोऽम्बरगोचरः ॥ हुताशनस्त्वजारूढःशक्तिहस्तोव्यवस्थितः ॥ ९६ ॥ पवनोऽङ्कुशहस्तश्चवि
स्तारितमहाजवः ॥ भुजगेन्द्रसमारूढोजलेशोभगवान्स्वयम् ॥ ९७ ॥ नरयुक्तेरथेदेवोराक्षसेशोवियच्चरः ॥ तीक्ष्णखड्गयुतोभीमःसमरेसमवस्थि
तः ॥ ९८ ॥ महासिंहरथेदेवोधनाध्यक्षोगदायुधः ॥ चन्द्रादित्यावश्विनौचचतुरङ्गबलान्विताः ॥ ९९ ॥ सेनान्योदेवराजस्यदुर्जयाभुवनत्रये॥
कोटयस्तास्त्रयस्त्रिंशद्देवदेवनिकायिनाम् ॥ १०० ॥ हिमाचलाभेसितचारुचामरेसुवर्णपद्मामलसुन्दरस्रजि ॥ कृताभिरामोज्ज्वलकुङ्कुमाङ्करेकपोल
लीलालिकदम्बसङ्कुले ॥ १ ॥ स्थितस्त्वैरावणनामकुञ्जरेमहामनाश्चित्रविभूषणाम्बरः ॥ विशालवज्रःसुवितानभूषितःप्रकीर्णकेयूरभुजङ्गमण्डलः
॥ २ ॥ सहस्रदृग्वन्दितपादपल्लवस्त्रिविष्टपेऽशोभतपाकशासनः ॥ तुरङ्गमातङ्गकुलौघसङ्कुलासितातपत्रध्वजशालिनीच ॥ ३ ॥ बभूवसादुर्जयपत्ति
मन्तताविभातिनानायुधयोधदुस्तरा ॥ ४ ॥ ततोऽश्विनौचमरुतःससाध्याःसपुरन्दराः ॥ यक्षराक्षसगन्धर्वादिव्यनानास्त्रपाणयः ॥ ५ ॥ जघ्नुर्दै
त्येश्वरंसर्वेसम्भूयतुमहाबलाः ॥ नचैवास्त्राण्यसज्जन्तगात्रेवज्राचलोपमे ॥ ६ ॥ अथोरथादवप्लुत्यतारकोदानवाधिपः ॥ जघानकोटिशोदेवा
न्करपार्ष्णिभिरेवच ॥ ७ ॥ हतशेषाणिसैन्यानिदेवानांविप्रदुद्रुवुः ॥ दिशोभीतानिसन्त्यज्यरणोपकरणानिच ॥ ८ ॥ दृष्ट्वातान्विद्रुतान्देवांस्तार
कोवाक्यमब्रवीत् ॥ ९ ॥ तारकउवाच ॥ माबधिष्टसुरान्दैत्यावद्ध्वाङ्गायचमन्दिरे ॥ शीघ्रमानीयदर्श्यन्ताम्बद्धान्पश्यत्वयंसुरान् ॥ ११० ॥ पुलं
स्त्यउवाच॥लोकपालांस्ततोदत्योवद्ध्वाचेन्द्रमुखान्रणे ॥ सरुद्रान्सुदृढैःपाशैःपशुपालःपशूनिव ॥ ११ ॥ सभूयोरथमास्थायजगामस्वकमालयम् ॥
सिद्धगन्धर्वसङ्घुष्टंविपुलाचलमस्तकम् ॥१२॥ स्तूयमानोदितिसुतैरप्सरोभिःसुसेवितः ॥११३॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेदेवासुरसङ्ग्रामे
तारकजयोनामचतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४॰॥ पुलस्त्यउवाच ॥ प्रादुरासीत्प्रतीहारःशुभ्रचीनांशुकाम्बरः ॥ सजानुभ्यांमहींगत्वा
पिहितास्यश्चपाणिना ॥ १ ॥ उवाचानाविलंवाक्यमल्पाक्षरपरिष्कृतम् ॥ दैत्येन्द्रमर्कवृन्दाभंविभ्रतंभास्वरंवपुः ॥ २ ॥ कालनेमिः
सुरान्बद्ध्वाप्रादायद्वारितिष्ठति ॥ सविज्ञापयतिस्थेथंक्कवन्दिनिचयैःप्रभो ॥ ३ ॥ तन्निशम्याब्रवीद्दैत्यःप्रतीहारस्यभाषितम् ॥ यथेष्टंस्थी
यतामेभिर्गृहंमेभुवनत्रयम् ॥ ४ ॥ केवलंवासवंत्वेकंमुण्डयित्वाविमुच्यताम् ॥ सितवस्त्रपरिच्छन्नंशुनःपादेनचिह्नितम् ॥ ५ ॥

एवंकृतेततोदेवादूयमानेनचेतसा ॥ जग्मुर्जगद्गुरुंद्रष्टुंशरणंकमलोद्भवम् ॥ ६ ॥ विनिर्विण्णास्तमासाद्यशिरोभिर्द्धरणींगताः ॥ तुष्टुवुःसुष्ठुवर्णा
ढ्यैर्वचोभिःकमलासनम् ॥ ७ ॥ देवाऊचुः ॥ नमस्त्वोङ्काराङ्कुरादिप्रसूत्यैविश्वस्थानानन्तभेदस्यपूर्वम् ॥ सम्भूतस्यानन्तरंसत्त्वमू
लेसंहारेच्छोस्तेनमःसत्त्वमूर्त्ते ॥ ८ ॥ व्यक्तीनांत्वामादिभूतंमहिम्नाचास्मादस्मानभिधानाद्विचिन्त्य ॥ द्यावापृथ्व्योरूर्द्धलोकांस्तथाधश्चाण्डाद
स्मात्त्वंविभागंचकर्थ ॥ ९ ॥ व्यक्तंमेरुर्यज्जरायस्तवाभूदेवंविश्वस्त्वत्प्रणीतोऽवकाशः ॥ व्यक्तंदेवाजङ्गिरेयस्यदेहादेहस्यान्तश्चारिणोदेहभाजः
॥ १० ॥ द्यौस्तेमूर्द्धालोचनेचन्द्रसूर्यौव्यालाःकेशाःश्रोत्ररन्ध्रेदिशस्ते ॥ गात्रंयज्ञःसिन्धवःसन्धयोवैपादौभूमिस्तूदरंतेसमुद्राः ॥ ११ ॥ माया
कारःकारणंत्वंप्रसिद्धोवेदैःशान्तोज्योतिरकस्त्वमुक्तः ॥ वेदार्थैनत्वांविवृण्वन्तिबुद्ध्याहृत्पद्मान्तःसंनिविष्टंपुराणम् ॥ १२ ॥ त्वांचात्मानंलब्धयोगा
गृणन्तिसाङ्ख्यैर्यास्ताःसप्तसूक्ष्माःप्रणीताः ॥ तासांहेतुर्याष्टमीचापिगीतातास्वन्तस्थोजीवभूतस्त्वमेव ॥१३॥ दृष्टामूर्त्तिस्थूलसूक्ष्मांचकार्य्यैवैभावाः
कारणेकेचिदुक्ताः ॥ सम्भूतास्तेत्वत्तएवादिसर्गेभूयस्तास्त्वांवासनान्तेऽभ्युपेयुः ॥१४॥ त्वत्सङ्कल्पस्त्वन्तरायोनिगूढःकालोमेयोध्वस्तसङ्ख्याविकल्पः॥
भावाभावाव्यक्तिसंहारहेतुःसोऽनन्तस्त्वंतस्यकर्तानिधानम् ॥ १५ ॥ स्थूलस्सर्वोऽनर्थभूतस्ततोऽन्यस्सोऽर्थस्सूक्ष्मोयोहितेभ्योऽपिगीतः ॥ स्थूला
भावाश्चावृतायैश्चतेषांतेभ्यःस्थूलस्त्वंपुराणेप्रणीतः ॥१६॥ भूतंभूतंभूतिमद्भूतभावंभावेभावंभावितंत्वंयुनक्षि॥युक्तंयुक्तंव्यक्तिभावान्निरस्यस्थानेस्थाने
व्यक्तिवृत्तिंकरोषि ॥ १७ ॥ इत्थंदेवोव्यक्तिभाजांशरण्यस्त्रातागोप्ताभावितोऽनन्तमूर्तिः ॥ १८ ॥ पुलस्त्यउवाच ॥ विरेमुरमराःस्तुत्वाब्रह्माणमिति
कारणम् ॥ तस्थुर्मनोभिरिष्टार्थसम्प्राप्तिप्रार्थनास्ततः ॥ १९ ॥ एवंस्तुतोविरिञ्चिस्तुप्रसादंपरमंगतः ॥ अमरान्वरदोऽप्याहवामहस्तेननिर्दिशन्
॥ २० ॥ ब्रह्मोवाच ॥ नारीवाभर्तृकाकस्माद्धस्तसन्त्यक्तभूषणा ॥ नराजसेकुतश्शक्रम्लानवक्त्रसरोरुहः ॥ २१ ॥ हुताशनवियुक्तोऽपिधूमेनन
विराजसे ॥ तृणौघेनप्रतिच्छन्नोदग्धदावश्चिरोपितः ॥ २२ ॥ यमामयशरीरेणक्लिष्टोनाद्यविराजसे ॥ दण्डेनालम्बनेनेवकृष्टोयेनपदेपदे ॥ २३ ॥
रजनीचरनाथत्वंकिंभीतइवभाषसे ॥ राक्षसेन्द्रकृतादानेत्वमरातिक्षतोयथा ॥ २४ ॥तनुस्तेवरुणोच्छुष्कापरीतस्येववह्निना ॥ विमुक्तरुधिरंचाथ
पदंत्वंप्रविलोकय ॥ २५ ॥ वायोभवान्विचेतस्कःखड्गाग्रैरिवनिष्कृतः ॥ किंत्वंनतोऽसिधनदसन्त्यज्यैवकुबेरताम् ॥ २६ ॥ रुद्रास्त्रिशूलिनः
सन्तोऽविन्दध्वंबहुशूरताम् ॥ भवतांकेनचाक्षितातीव्रतानस्तदुच्यताम् ॥ २७ ॥ पुलस्त्यउवाच ॥ एवमुक्ताःसुरास्तेनब्रह्मणाब्रह्मवर्तिना ॥ वाचां
प्रधानभूतत्वात्तेमारुतमचोदयन् ॥ २८ ॥ अथशक्रमुखैर्देवःपवनःप्रतिचोदितः ॥ प्राहदेवंचतुर्वक्त्रंभवान्वेत्तिचराचरम् ॥ २९ ॥ वायुरुवाच॥

पुरुहूतमुखाःसबलानिमिषाविजिताःप्रसभंकिलदैत्यशतैः ॥ क्रतवोविहिताभवतास्थितयेजगतांचमहाद्भुतचित्रगुणाः ॥ ३० ॥ अपियज्ञकृतःश्रुत
कामफलाविहिताऋपयस्ततएववपुरः ॥ अपिनाकमभूत्किलयज्ञभुजांभवतोविनियोगवशात्सततम् ॥ ३१ ॥ अपहृत्यविमानगणंसकृतोदनुजेन
महाकरभूमिसमः ॥ कृतवानसिसर्वगुणातिशयंयमशेषमहीधरराजतया ॥ ३२ ॥ मखभूषितमंशुमतामवधिंसुरधामगिरिंगगनेऽपिसदा ॥ अधि
वासविहारविधानुचितोदनुजेनपरिष्कृतशृङ्गतटः ॥ ३३ ॥ प्रविलम्बितरत्नगुहानिवहोबहुदैत्यसमाश्रयतांगमितः ॥ असुरस्यचतस्यभयेनगतंसवि
पादशरीरनिमित्ततया ॥ ३४ ॥ उपभोग्यतयाधिकृतंसुचिरंविमलद्युतिपूरितदिग्वदनम् ॥ भवतैवविनिर्मितमादियुगेसुरहेतिसमूहवरंकुलिशम्॥३५॥
दितिजस्यशरीरमवाप्यगतंशतधामतिभेदमिवाल्पविदः ॥३६॥ वाणश्चयुधिविद्धाङ्गाद्वारिद्वास्थैर्निदर्शिताः ॥ लब्धप्रवेशाःकृच्छ्रेणवबंतस्यामरद्विषः
॥ ३७ ॥ सभायाममरादेवप्रकृष्योपनिवेशिताः ॥ वेत्रहस्तैरजल्पन्तस्तथोपहसिताःपरैः ॥ ३८ ॥ महार्थाःसिद्धसर्वार्थाभवन्तःस्वल्पभाषिणः ॥
शास्त्रयुक्तमथब्रूतम्प्रमराबहुभाषिणः ॥ ३९ ॥ सभेयंदत्यसिंहस्यनशक्रस्यविशृङ्खला ॥ वदद्भिरितिदैत्यस्यप्रेष्यैर्विहसिताबहु ॥ ४० ॥ ऋतवोमूर्ति
मन्तश्चाप्यहर्निशमुपासते ॥ कृतापराधंसत्रासंनत्यजन्तिकथञ्चन ॥ ४१ ॥ तन्त्रीलयनयोपेतंसिद्धगन्धर्वकिन्नरैः ॥ सुरागमुपधाविद्धंगीयतेतस्य
वेश्मसु ॥४२॥ कृताकृतोपकरणैर्मित्रादिगुरुलाघवः॥शरणागतसन्त्यागीत्यक्तसत्यप्रतिश्रयः ॥४३॥ इतिनिश्शेपमथवानिश्शेपंकेनशक्यते॥वस्या
विनयमाख्यातुंस्रष्टातत्रपरायणम् ॥ ४४ ॥ पुलस्त्यउवाच ॥ इत्युक्त्वाव्यरमद्वायुःशनैर्देवविचेष्टितम् ॥ सुरानुवाचभगवांस्ततःस्मितमुखाम्बुजः
॥ ४५ ॥ ब्रह्मोवाच ॥ अवध्यस्तारकोदैत्यःसर्वैरपिसुरासुरैः ॥ यस्यवध्यस्सनाद्यापिजातस्त्रिभुवनेपुमान् ॥ ४६ ॥ मयासवरदानेनछन्दयित्वानि
वारितः ॥ तपसःसाम्प्रतंराजात्रैलोक्यदहनात्मकः ॥ ४७ ॥ सतुवव्रेवधंदैत्यश्शिशुतःसप्तवासरात् ॥ सतुसप्तदिनोबालःशङ्कराद्योभविष्यति ॥४८॥
तारकस्यनिहन्तासभास्करामोभविष्यति ॥ साम्प्रतंचाप्यपत्नीकःशङ्करोभगवान्प्रभुः ॥ ४९ ॥ हिमाचलस्यदुहितायाचदेवीभविष्यति ॥ तस्याः
सकाशाद्यःसूनुररण्याःपावकोयथा ॥ ५० ॥ जनिष्यतिसतंप्राप्यतारकोनभविष्यति ॥ मयाऽभ्युपायःकथितोयथैषहिभविष्यति ॥ ५१ ॥ शेषं
चाप्यस्यविभवंविभजध्वमनन्तरम् ॥ स्तोककालंप्रतीक्षध्वंनिर्विशङ्केनचेतसा ॥ ५२ ॥ पुलस्त्यउवाच॥इत्युक्तास्त्रिदशास्तेनसाक्षात्कमलयोनिना॥
जग्मुस्तेप्रणिपत्येशंयथायोगंदिवौकसः ॥ ५३ ॥ ततोयातेषुदेवेषुब्रह्मालोकपितामहः ॥ निशांसस्मारभगवांस्तांदेवींपूर्वसम्भवाम् ॥ ५४ ॥ ततो
भगवतीरात्रिरुपतस्थेपितामहम् ॥ तांविविक्तेसमालोक्यब्रह्मोवाचविभावरीम् ॥ ५५ ॥ ब्रह्मोवाच ॥ विभावरिमहत्कार्यंदेवानांसमुपस्थितम् ॥

तत्कर्तव्यंत्वयादेविशृणुकार्यस्यनिश्चयम् ॥ ५६ ॥ तारकोनामदैत्येन्द्रः सुरशत्रुरनिर्जितः ॥ तस्याभवायभगवान्जनयिष्यतिचेश्वरः ॥ ५७ ॥
सुतंसभवितातस्यतारकस्यान्तकःकिल ॥ शङ्करस्याभवत्पत्नीसतीदक्षसुतातुया ॥ ५८ ॥ सापितुःकुपितादेवीकस्मिंश्चित्कारणान्तरे ॥ भवित्रीहि
मशैलस्यदुहितालोकभाविनी ॥ ५९ ॥विरहेणहरस्तस्यामत्वाशून्यंजगत्रयम् ॥ सतस्थहिमशैलस्यकन्दरेसिद्धसेविते॥ ६० ॥ प्रतीक्षमाणस्तज्जन्म
किञ्चित्कालंनिवत्स्यति ॥ तयोःसुततपसोर्भवितायोमहान्सुतः ॥ ६१ ॥ भविष्यतिसदैत्यस्यतारकस्यविनाशकः ॥ जातमात्राचसादेवीस्वल्प
संज्ञेवभामिनी ॥ ६२ ॥ विरहोत्कण्ठितागाढंहरसङ्गमलालसा ॥ तयोःसुततपसोःसंयोगःस्यान्नच्छुभावहः ॥ ६३॥ ततस्ताभ्यांतुजनितःस्वल्पोवा
कलहोभवेत् ॥ ततस्तुसंशयोभूयस्तारकस्यचदृश्यते ॥ ६४ ॥ तयोःसंयुक्तयोस्तस्मात्सुरतासक्तिकारणे ॥ विघ्नंत्वयाविधातव्यंयथाताभ्यांतथा
शृणु ॥ ६५ ॥ गर्भस्थमेवतन्मातुःस्वेनरूपेणसंज्ञया ॥ ततोविहस्यशर्वस्तांविपण्णोनर्मपूर्वकम् ॥ ६६ ॥ भर्त्सयिष्यतितांदेवींततःसाकुपितासती॥
प्रयास्यतितपश्चर्तुंततःसातपसायुता ॥ ६७ ॥ जनयिष्यतितंशर्वादमितद्युतिमण्डलम् ॥ सम्भविष्यतिहन्तासौसुरारीणामसंशयम् ॥ ६८ ॥ त्वं
यापिदानवादेविहन्तव्यालोकदुर्जयाः ॥ यावत्सुरेश्वरीदेहसङ्क्रान्तगुणसञ्चया ॥ ६९ ॥ तत्सङ्गमेनतावत्त्वंदैत्यान्हन्तुंनशक्यसे ॥ एवंकृतेतपस्तस्या
त्वयासर्वंकरिष्यति ॥ ७० ॥संप्राप्तनियमादेवियदाचोमाभविष्यति ॥ तदास्वमेवसारूपंशैलजाप्रतिपत्स्यते ॥ ७१ ॥ तदात्वयापिसहिताभवानी
साभविष्यति ॥ रूपांशेनतुसंयुक्ताउमायास्त्वंभविष्यसि ॥ ७२ ॥ एकोऽनंशेतिलोकस्त्वांवरदेपूजयिष्यति ॥ भेदैर्बहुविधाकारैःसर्वगांकामसाधि
नीम् ॥ ७३ ॥ ओंकारवक्त्रागायत्रीत्वमितिब्रह्मवादिभिः ॥ आक्रान्तैरूर्जिताकाराराजभिश्चमहाभुजैः ॥ ७४ ॥ त्वंभूरितिविशांमाताशूद्रैश्शैवेति
पूजिता ॥ क्षान्तिर्मुनीनामक्षोभ्यादयानियमिनामपि ॥ ७५ ॥ त्वंमहोपायसन्देहोनीतिर्नयविसर्पिणाम् ॥ परिच्छित्तिस्त्वमर्थानांत्वमीहाप्राणिहृ
च्छया ॥ ७६ ॥ त्वंमुक्तिस्सर्वभूतानांत्वंगतिःसर्वदेहिनाम् ॥ रतिस्त्वंरतचित्तानांप्रीतिस्त्वंहृदिदेहिनाम् ॥ ७७ ॥ त्वंकीर्तिःसत्यभूतानांत्वंशान्ति
र्दुष्टकर्मणाम् ॥ त्वंभ्रान्तिःसर्वभूतानांत्वंगतिःक्रतुयाजिनाम् ॥ ७८ ॥जलधीनांमहावेलात्वंचलीलाविलासिनी ॥ प्रियकण्ठग्रहानन्ददायिनीत्वंवि
भावरी ॥ ७९ ॥ इत्यनेकविधैर्देवीरूपैर्लोकेत्वमर्चिता ॥ येत्वांस्तोष्यन्तिवरदेपूजयिष्यन्तिचापिये ॥ ८० ॥ तेसर्वकामानाप्स्यन्तिनियतानात्रसं
शयः ॥ ८१ ॥ पुलस्त्यउवाच ॥ इत्युक्तातुनिशादेवीतथेत्युक्त्वाकृताञ्जलिः ॥ जगामत्वरितातूर्णंगृहंहिमगिरेर्महत् ॥ ८२ ॥ तत्रासीनांमहाह
र्म्येरत्नभित्तिसमाश्रयाम् ॥ ददर्शमेनामापाण्डुच्छविवक्त्रसरोरुहाम् ॥ किञ्चित्क्षामांमुखोदग्रस्तनभारावनामिताम् ॥ ८३ ॥ महौषधिगणाबद्धमन्त्रा

जनिषेविताम् ॥ उदूढकनकोन्नद्धजीवरक्षामनोरमाम् ॥ ८४ ॥ मणिदीपगणज्योतिर्महालोकप्रकाशिते ॥ प्रकीर्णबहुसिद्धार्थमनोज्ञपरिचारके
॥ ८५ ॥ शुद्धचीनांशुकच्छत्रभूशय्यास्तरणोज्ज्वले ॥ धूपामोदमनोरम्येसज्जसर्वोपयोगिके ॥ ८६ ॥ ततःक्रमेणदिवसेगतेदूरंविभावरी ॥ विजृम्भि
तसुखोदर्केंततोमेनामहागृहे ॥ ८७ ॥ प्रसुप्तप्रायपुरुषेनिद्राभृतोपचारके ॥ स्फुटालोकेशशभृतिभ्रान्तरात्रिविहङ्गमे ॥ ८८ ॥ रजनीचरसञ्चारभूतैरावृत
चत्वरे ॥ गाढकण्ठग्रहालग्नेशुभगोष्ठजनेततः ॥ ८९ ॥ किंचिदाकुलतांप्राप्तेमेनानेत्राम्बुजद्वये ॥ आविवेशसुखेरात्रिःसुखमद्भुतसङ्गमा ॥९०॥ उन्मा
दायजगन्मातुःक्रमेणजठरान्तरे ॥ आविवेशातुलंजन्ममन्यमानाकदातुवै ॥ ९१ ॥ अरञ्जयद्गृहंदेव्यागुहारण्येविभावरी ॥ ततोजगत्यानिर्वाणहेतु
र्हिमगिरिप्रिया ॥ ९२ ॥ ब्राह्मेमुहूर्तेसुभगेप्रासूयतगुहारणिम् ॥ तस्यांतुजायमानायांजन्तवःस्थाणुजङ्गमाः ॥ ९३ ॥ अभवन्सुखिनःसर्वेसर्वलोक
निवासिनः ॥ नारकाणामपितदासुखंस्वर्गसमंमहत् ॥ ९४ ॥ अभवत्क्रूरसत्त्वानांचेतःशान्तंचदेहिनाम् ॥ ज्योतिषामपितेजस्तुसुतरांचाभवत्तदा
॥ ९५ ॥वनाश्रिताश्चौषधयःस्वादवन्तिफलानिच ॥ गन्धवन्तिचमाल्यानिविमलंचनभोऽभवत् ॥ ९६ ॥ मारुतश्चसुखस्पर्शोदिशश्चसुमनोहराः ॥
ऋतूद्भूतफलायोगपरिपाकगुणोज्ज्वला ॥ ९७ ॥ अभवत्पृथिवीदेवीशालिमालाकुलापिच ॥ तपांसिदीर्घचीर्णानिमुनीनांभावितात्मनाम् ॥ ९८ ॥
तस्मिन्गतानिसाफल्यंकालेनिर्मलचेतसाम् ॥ विस्मृतानिचशास्त्राणिप्रादुर्भावंप्रपेदिरे ॥ ९९ ॥ प्रभावस्तीर्थमुख्यानांतदापुण्यतमस्त्वभूत् ॥
अन्तरिक्षेऽमराश्चासन्विमानेषुसहस्रशः ॥ १०० ॥ समहेन्द्रजलाधीशवायुवह्निपुरोगमाः ॥ पुष्पवृष्टिंप्रमुमुचुस्तस्मिंस्तुहिनभूधरे ॥ १ ॥ जगुर्गन्धर्व
मुख्याश्चननृतुश्चाप्सरोगणाः ॥ मेरुप्रभृतयश्चापिमूर्तिमन्तोमहाचलाः ॥ २ ॥ तस्मिन्महोत्सवेप्राप्तेदिव्याःप्रसृतपाणयः ॥ सागरास्सरितश्चैवसमाज
ग्मुश्चसर्वशः ॥ ३ ॥ हिमशैलोऽभवल्लोकेतदासर्वैश्चराचरैः ॥ संसेव्यश्चाधिगम्यश्चसाश्रयश्चाचलोत्तमः ॥ ४ ॥ अनुभूयोत्सवंदेवाजग्मुःस्वान्निलयां
स्तदा ॥ देवनागेन्द्रगन्धर्वशैललीलावतीगणैः ॥ ५ ॥ हिमशैलसुतादेवीत्वहम्पूर्विकयाततः ॥ क्रमेणवुद्धिमानीताविद्याश्चानलसैर्बुधैः ॥ ६ ॥ क्रमे
णरूपसौभाग्यप्रबोधैर्भुवनत्रये ॥ सम्पूर्णलक्षणाजाताहिमालयसुतानथा ॥७॥ एतस्मिन्नन्तरेशक्रोनारदंदेवसंमतम् ॥ देवर्षिमथसस्मारकार्यसाधन
तत्परः ॥ ८ ॥ संतुष्टंशक्रस्यविज्ञायकाङ्क्षितंभगवांस्तदा ॥ आजगाममुदायुक्तोमहेन्द्रस्यनिवेशनम् ॥ ९ ॥ तंतुदृष्ट्वासहस्राक्षःसमुत्थायमहासनात् ॥
यथार्हेणतुपाद्येनपूजयामासवासवः ॥ ११० ॥ शक्रप्रणिहितांपूजांप्रतिगृह्ययथाविधि ॥ नारदःकुशलंदेवमपृच्छत्पाकशासनम् ॥ ११ ॥ पृष्टेचकु
शलेशक्रःप्रोवाचवचनंप्रभुः ॥ १२ ॥ इन्द्रउवाच ॥ कुशलस्याङ्कुरस्तावत्संवृत्तोभुवनत्रये॥तत्फलोद्भवसम्पत्तौत्वंमयाविदितोमुने ॥ १३ ॥ वेत्स्येव

तत्समस्तंत्वंतथापिपरिचोदितः ॥ निर्वृतिंपरमांयातिनिवेद्यार्थंसुहृज्जने ॥ १४ ॥ तद्यथाशैलजादेवीयोगंयायात्पिनाकिना ॥ शीघ्रंतथोद्यमःसर्वैर
स्मत्पक्षैर्विधीयताम् ॥ १५ ॥ पुलस्त्यउवाच॥ अवगम्यार्थमखिलंततआमन्त्र्यनारदः ॥शीघ्रंजगामभगवान्हिमशैलनिकेतनम् ॥ १६ ॥ तत्रद्वारे
सविप्रेन्द्रश्चित्रवेत्रलताकुले ॥ वन्दितोहिमशैलेननिर्गतेनपुरोमुनिः ॥ १७ ॥ सहप्रविश्यभवनंभुवोभूषणतांगतम् ॥ निवेदितेस्वयंहैमेहिमशैलेनविस्तृ
ते ॥ १८ ॥ महासनेमुनिवरोनिषसादातुलद्युतिः ॥ यथार्हमर्घ्यंपाद्यंचशैलस्तस्मैन्यवेदयत् ॥ १९ ॥ मुनिःसप्रतिजग्राहतमर्घ्यंविधिवत्तदा ॥ गृही
तार्घम्मुनिश्रेष्ठमपृच्छच्छ्लक्ष्णयागिरा ॥ १२० ॥ कुशलंतपसःशैलःशनैःफुल्लाननाम्बुजः ॥ मुनिरप्यद्रिराजानमपृच्छत्कुशलंतदा ॥ २१ ॥
नारदउवाच ॥ अहोधर्मोचितस्तेऽस्तिसंनिवशोमहागिरे ॥ पृथुत्वंमनसातुल्यंकन्दराणांतवानघ ॥ २२ ॥ गुरुत्वंतेगुणौघानांस्थावराद
तिरिच्यते ॥ प्रसन्नताचतोयस्यमुनिभ्यश्चाधिकातव ॥ २३ ॥ नलक्षयामःशैलेन्द्रकुत्राविनयतास्थिता ॥ नानातपोभिर्मुनिभिर्ज्वलनार्कसमप्रभैः ॥
॥२४॥ पावनैःपावितोनित्यंत्वंकन्दरसमाश्रयैः ॥ अवमत्यविमानानिस्वर्गवासविरागिणः ॥ २५ ॥ पितुर्गृहइवासीनादेवगन्धर्वकिन्नराः ॥ अहो
धन्योऽसिशैलेन्द्रयस्यतेकन्दरंहरः ॥२६॥ अध्यास्तेलोकनाथोहिरामध्यानपरायणः ॥२७॥ पुलस्त्यउवाच ॥ इत्युक्तवतिदेवर्षौनारदेसादरंगिरा ॥
हिमशैलस्यमहिषीमेनामुनिदिदृक्षया ॥ २८ ॥ अनुयातादुहित्रातुस्वल्पालिपरिचारिका ॥ लज्जाप्रणयनम्राङ्गीप्रविवेशनिकेतनम् ॥ २९ ॥ यत्र
स्थितोमुनिवरःशैलेनसहितोवशी ॥ तंदृष्ट्वातेजसोराशिंमुनिंशैलप्रियातदा ॥ १३० ॥ ववन्देगूढवदनापाणिपद्मकृताञ्जलिः ॥ तांविलोक्यमहाभागां
देवर्षिरमितद्युतिः ॥ ३१ ॥ आशीर्भिरमृतोद्गाररूपाभिस्तांव्यवर्द्धयत् ॥ ततोविस्मितचित्तातुहिमवद्गिरिपुत्रिका ॥ ३२ ॥ ऐक्षिष्टनारदंदेवीमुनिम
द्भुतरूपिणम् ॥एहिवत्सेतिसाप्युक्ताऋषिणास्निग्धयागिरा ॥ ३३ ॥ कण्ठेगृहीत्वापितरमङ्केसातुसमाविशत् ॥ उवाचमातातांदेवीमभिवन्द्यपुत्रिके
॥ ३४ ॥ भगवन्तंतपोधन्यंपतिमाप्स्यसिसम्मतम् ॥ इत्युक्तातुततोमात्रावस्त्रेणपिहितानना ॥ ३५ ॥ किंचित्कम्पितमूर्द्धातुवाक्यंनोवाचकिंच
न ॥ ततःपुनरुवाचेदंवाक्यंमातासुतांतदा ॥३६॥ वत्सेवन्दयदेवर्षिंततोदास्यामितेशुभम् ॥ रत्नक्रीडनकंरम्यंस्थापितंयच्चिरंमया ॥ ३७ ॥ इत्युक्ता
साततोवेगादुद्धृत्यचरणौतदा ॥ ववन्देमूर्ध्निसन्धायपाणिपङ्कजकुड्मलम् ॥३८॥ कृतेतुवन्दनेतस्यामातासखिमुखेनतु ॥ चोदयामासशनकैस्तस्याः
सौभाग्यदर्शिनाम् ॥ ३९ ॥ शरीरलक्षणानांचपरिज्ञानायकौतुकात ॥ स्त्रीस्वभावात्स्वदुहितुश्चिन्तांहृदिसमुद्वहन् ॥ १४० ॥ ज्ञात्वातदिङ्गितंशैलो

१ 'शम' इति पा० ।

महिष्याहृदयेनतु ॥ अनुदीर्णाकृतिर्मेनेरम्यमेतदुपस्थितम् ॥ ४१ ॥ चोदितःशैलमहिषीसख्यामुनिवरस्ततः ॥ स्मिताननोमहाभागोवाक्यंप्रोवाच
नारदः ॥ ४२ ॥ नारदउवाच ॥ नजातोऽस्याःपतिर्भद्रेलक्षणैश्चविवर्जितः ॥ उत्तानहस्तासततंचरणैर्व्यभिचारिभिः ॥ ४३ ॥ सुच्छायास्याभवि
ष्ययंकिमन्यद्बहुभाष्यते ॥ श्रुत्वैतत्सम्भ्रमाविष्टोध्वस्तधैर्योहिमाचलः ॥४४॥ नारदंप्रत्युवाचाथसाश्रुकण्ठोमहागिरिः ॥ ४५ ॥ हिमवानुवाच ॥
संसारस्यातिदोषस्यदुर्विज्ञेयागतिर्यतः ॥ सृष्टयाचावश्यभाविन्याकेनाप्यतिशयात्मना ॥४६॥ कर्त्राप्रणीतामर्यादास्थितासंसारिणामियम् ॥ योजा
यतेहियद्बीजाज्जनितुःसोऽर्थसाधकः ॥ ४७ ॥ जनिताचापिजातस्यनकश्चिदितिचस्फुटम् ॥ स्वकर्मणैवजायन्तेविविधाभूतजातयः ॥४८॥ अण्ड
जोह्यण्डजाज्जातःपुनर्जायेतमानवः ॥ मानुषोऽपिसरीसृप्यांमानुषत्वेनजायते ॥ ४९ ॥ तत्रापिजातौश्रेष्ठायांधर्मस्योत्कर्षणेनतु ॥ अपुत्रजन्मनः
शेषाःप्राणिनःसमवस्थिताः ॥ १५० ॥ मनुजास्तत्रसुतरांनयेनसहधर्मिणः ॥ क्रमेणाश्रमसम्प्राप्तिर्ब्रह्मचारिव्रतादनु ॥ ५१ ॥ तस्यकर्तुर्नियोगेनसं
सारोयेनवर्धितः ॥ संसारस्यहिनोत्पत्तिःसर्वेस्युर्यदिनिर्गृहाः ॥ ५२ ॥ कर्त्रातुशास्त्रेषुसदासुतलाभःप्रशंसितः ॥ प्राणिनांमोहनार्थायनरकत्राणकार
णात् ॥ ५३ ॥ स्त्रियाविरहितासृष्टिर्जन्तूनांनोपपद्यते ॥ स्त्रीजातिस्तुप्रकृत्यैवकृपणादैन्यभागिनी ॥ ५४ ॥ शास्त्रालोचनसामर्थ्याद्दूषितंतासुकर्तृ
णा ॥ तस्यांनोपरिभावज्ञाभवेदितिचवेधसा ॥ ५५ ॥ शास्त्रेपूक्तमसन्दिग्धंबहुवारंमहाफलम् ॥ दशपुत्रसमाकन्यायापिस्याच्छीलवर्जिता ॥५६॥
वाक्यमेतत्फलभ्रष्टंपुंसांग्लानिकरंफलम् ॥ कन्याहिकृपणाशोच्यापितुर्दुःखविवर्द्धिनी ॥ ५७ ॥ यापिस्यात्पूर्णसर्वार्थापतिपुत्रसमन्विता ॥ किंपु
नर्दुर्भगाहीनापतिपुत्रधनादिभिः ॥ ५८ ॥ त्वंचोक्तवान्सुतायामेशरीरेदोषसङ्ग्रहम् ॥ अहोमुह्यामिशुष्यामिग्लामिसीदामिनारद ॥ ५९ ॥ अयुक्त
मपिवक्तव्यमप्राप्यमपिसाम्प्रतम् ॥ अनुग्रहायमेछिन्धिदुःखंकन्याश्रयंमुने ॥ १६० ॥ परिच्छिन्नेऽप्यसन्दिग्धेमनःपरिभवाश्रयात् ॥ तृष्णामुष्णा
तिनिष्णातंफललोभाश्रयात्पुनः ॥ ६१ ॥ स्त्रीणांहिपरमंजन्मकुलानामुभयात्मनाम् ॥ इहामुत्रसुखायोक्तंसत्पतिप्राप्तिसंज्ञितम् ॥ ६२ ॥ दुर्लभत्वा
त्सतःस्त्रीणांविगुणोऽपिपतिःकिल ॥ नप्राप्यतेविनापुण्यैःपतिर्नार्याःकदाचन ॥६३॥ यतोनिस्साधनोधर्मःपरिणामोत्थितागतिः ॥ धनंजीवितपर्य
न्तंपत्यौनार्याःप्रतिष्ठितम् ॥ ६४ ॥ निर्द्धनोदुर्मुखोमूर्खःसर्वलक्षणवर्जितः ॥ दैवतंपरमंनार्याःपतिरुक्तःसदैवहि ॥ ६५ ॥ त्वयादेवर्षिणाप्रोक्तंनजा
तोऽस्याःपतिःकिल ॥ एतद्दौर्भाग्यमतुलमसह्यंचदुरुद्दहम् ॥६६॥ चराचरेभूतसर्गेचिन्तासाव्यापिनीमुने ॥ सनजातइतिश्रुत्वाममेदंव्याकुलंमनः ॥
॥ ६७ ॥ मनुष्यदेवजातीनांशुभाशुभनिवेदकम् ॥ लक्षणंहस्तपादाभ्यांलक्षणंविहितंकिल ॥ ६८ ॥ सेयमुत्तानहस्तेतित्वयोक्तामुनिपुङ्गव ॥ उत्तान

हस्ततोप्रोक्तायाचनामवनित्यका ॥ ६९ ॥ शुभोदयानांधन्यानांनकदाचित्प्रयच्छताम् ॥ सुच्छाययास्याश्चरणौत्वयोक्तौऽव्यभिचारिणौ ॥ १७० ॥
तत्रापिश्रेयमीह्याशामुनेनप्रतिभातिनः ॥ शरीरलक्षणाश्चान्येपृथक्फलनिवेदिनः ॥ ७१ ॥ पुलस्त्यउवाच ॥ इत्युक्त्वाविरतेशैलेमहादुःखविचारि
णि ॥ स्मितपूर्वमुवाचेदंनारदोदेवपूजितः ॥ ७२ ॥ नारदउवाच ॥ हर्षस्थानेचमहतित्वयादुःखंनिरुच्यते ॥ अपरिच्छिन्नवाक्यार्थोमोहंयासिमहा
गिरे ॥ ७३ ॥ इमांशृणुगिरंमत्तोरहस्यपरिनिष्ठिताम् ॥ समाहितोमहाशैलमयोक्तस्यविचारणाम् ॥ ७४ ॥ नजातोऽस्याःपतिर्देव्यायन्मयोक्तं
हिमाचल ॥ सनजातोमहादेवोभूतभव्यभवोद्भवः ॥ ७५ ॥ शरण्यःशाश्वतःशास्ताशङ्करःपरमेश्वरः ॥ ब्रह्मरुद्रेन्द्रमुनयोगर्भजन्मजरार्दिताः ॥७६॥
तस्यतेपरमेशस्यसर्वेक्रीडनकागिरे ॥ ब्रह्माण्डतस्तदिच्छातःसम्भूतोभुवनप्रभुः ॥ ७७ ॥ विष्णुर्युगेयुगेजातोनानाजातिर्महातनुः ॥ मन्यसेमायया
जातंविष्णुंचापियुगेयुगे ॥ ७८ ॥ आत्मनोनविनाशोऽस्तिस्थावरान्तेऽपिभूधर ॥ संसारेजायमानस्यम्रियमाणस्यदेहिनः ॥ ७९ ॥ नश्यतेदेहए
वात्रनात्मनोनाशउच्यते॥ब्रह्मादिस्थावरान्तोऽयंसंसारोयःप्रकीर्तितः ॥१८०॥ सजन्ममृत्युदुःखार्तोह्यनिशंपरिवर्तते॥महादेवोऽचलःस्थाणुर्नजातोज
नकोऽजरः ॥ ८१ ॥ भविष्यतिपतिःसोऽस्याजगन्नाथोनिरामयः ॥ यदुक्तंचमयादेवीलक्षणैर्वर्जितातव ॥ ८२॥ शृणुतस्यापिवाक्यस्यसम्यक्त्वेन
विचारणम् ॥ लक्षणंदेविकोह्यङ्कःशरीरावयवाश्रयः ॥ ८३ ॥ सचायुर्धनसौभाग्यपरिणामप्रकाशकः ॥ अनन्तस्याप्रमेयस्यसौभाग्यस्यतुभूधर ॥
॥ ८४ ॥ नैवाङ्कोलक्षणाकारःशरीरेसंविधीयते ॥ अतोऽस्यालक्षणंगात्रेशैलनास्तिमहामते ॥ ८५ ॥ यच्चाहमुक्तवानस्याउत्तानकरतासदा ॥ उत्ता
नोवरदःपाणिरेषदेव्याःसदैवतु ॥ ८६ ॥ सुरासुरमुनिव्रातवरदात्रीभविष्यति ॥ यच्चप्रोक्तंमयापादौसुच्छायौव्यभिचारिणौ ॥ ८७ ॥ मत्तःशृणु
त्वमस्यापिव्याख्योक्तिंशैलसत्तम ॥ चरणौपद्मसङ्काशौस्वच्छावस्यानखोज्ज्वलौ ॥ ८८ ॥ सुरासुराणांनमतांकिरीटमणिकान्तिभिः ॥ विचित्रव
र्णैःपश्यद्भिःसुच्छायौप्रतिबिम्बितौ ॥ ८९ ॥ एषाभार्याजगद्भर्तुर्वृषाङ्कस्यमहीधर ॥ जननीसर्वलोकस्यसम्भूताभूतभाविनी ॥ १९० ॥ शिवेयंपाव
नायैवत्वत्क्षेत्रेपावनद्युतिः ॥ तद्यथाशीघ्रमेवैषायोगंयायात्पिनाकिनः ॥ ९१ ॥ तथाविधेयंविधिवत्त्वयाशैलेन्द्रसत्तम ॥ अस्त्यत्रहिमहत्कार्यंदे
वानांहिमभूधर ॥ ९२ ॥ पुलस्त्यउवाच ॥ एवंश्रुत्वातुशैलेन्द्रोनारदात्सर्वमेवहि ॥ स्वमात्मानंपुनर्जातंमेनेमेनापतिस्तदा ॥ ९३ ॥ उवाचचा
पिसंहृष्टोनारदंतुहिमाचलः ॥ ९४ ॥ हिमाचलउवाच ॥ दुस्तरान्नरकाद्घोरादुद्धृतोऽस्मित्वयाविभो ॥ पातालादहमुद्धृत्यसप्तलोकाधिपःकृतः ॥
॥९५॥ हिमाचलोऽस्मिविख्यातस्त्वयामुनिवराधुना ॥ हिमाचलाच्छतगुणांप्रापितोऽस्मिसमुन्नतिम् ॥ ९६ ॥ आनन्दादेवचाहारिहृदयंमेमहामुने॥

नाध्यवस्यतिकृत्यानांविभागप्रविचारणम् ॥ ९७ ॥ भवद्विधानांनियतममोघंदर्शनंमुने ॥ भवद्भिरेवहिप्रोक्तंनिवासायात्मरूपिणाम् ॥ ९८ ॥ मुनी
नांदेवतानांचस्वयंकर्तास्मिकल्मषम् ॥ तथापिवस्तुन्येकस्मिन्नाज्ञामेसम्प्रदीयताम् ॥९९ ॥ पुलस्त्यउवाच ॥ इत्युक्तवतिशैलेन्द्रेसतदाहर्षनिर्भरः ॥
उवाचनारदोवाक्यंकृतंसर्वमितिप्रभो ॥ २०० ॥ सुरकार्येसएवार्थस्तवापिसुमहत्तरः ॥ इत्युक्त्वानारदःशीघ्रंजगामत्रिदिवंततः ॥ १ ॥ सगत्वादे
वभवनंमहेन्द्रंसन्ददर्शह ॥ ततोऽनुरूपेसमुनिरुपविष्टोमहासने ॥ २ ॥ पृष्टःशक्रेणप्रोवाचगिरिजासंश्रयांकथाम् ॥ ३ ॥ नारदउवाच ॥ यन्मद्वयु
क्तंकर्तव्यंतन्मयाकृतमेवहि ॥ किंतुपञ्चशरस्येषुगोचरत्वमपेक्षितम् ॥ ४ ॥ पुलस्त्यउवाच ॥ इत्युक्तोदेवराजस्तुमुनिनाकार्यदर्शिना ॥ चूताङ्कुरा
स्त्रंसस्मारंभगवान्पाकशासनः ॥ ५ ॥ सस्मृतस्तुतदाक्षिप्रंसहस्राक्षेणधीमता ॥ उपतस्थेरतियुतःसंविलासोझषध्वजः ॥ ६ ॥ प्रादुर्भूतंचतंदृष्ट्वा
शक्रःप्रोवाचमन्मथम् ॥ ७ ॥ शक्रउवाच ॥ उपदेशेनबहुनाकिंत्वांप्रतिरतिप्रिय ॥ मनोभवोऽसितेनत्वंवेत्सिभूतमनोगतम् ॥ ८ ॥ तद्यथानु
क्रमंतुत्वंकुरुनाकसदांप्रियम् ॥ शङ्करंयोजयक्षिप्रंगिरिपुत्र्यामनोभव ॥ ९ ॥ संयुक्तोमधुनानेनगच्छरत्यासहायवान् ॥ इत्युक्तोमदनस्तेनशक्रे
णस्वार्थसिद्धये ॥ २१० ॥ प्रोवाचपञ्चबाणोऽथवाक्यंभीतःशतक्रतुम् ॥ ११ ॥ कामउवाच ॥ अनयादेवसामग्र्यामुनिदानवभीमया ॥ दुःसा
ध्यश्शङ्करोदेवःकिंनवेत्सिजगत्प्रभो ॥ १२ ॥ तस्यदेवस्यवेत्थत्वंकारणंपदमव्ययम् ॥ प्रायःप्रसादेकोपेऽपिसर्वंहिमहतांमहत् ॥ १३ ॥ सर्वोपभोग
सारंहिसौन्दर्यंस्वर्गसम्भवम् ॥ विशेषंकाङ्क्षतांशक्रसामान्याद्भ्रंशनंफलात् ॥ १४ ॥ श्रुत्वैतद्वचनंशक्रस्तमुवाचामरैर्युतः ॥ १५ ॥ शक्रउवाच ॥
वयंप्रमाणंतेतत्ररतिकान्तनसंशयः ॥ सन्दंशेनविनाशक्तिरयस्कारस्यनेष्यते ॥ १६ ॥ कस्यचिच्चक्वचिद्दृष्टंसामर्थ्यंनतुसर्वतः ॥ १७ ॥ पुलं
स्त्यउवाच ॥ इत्युक्तःप्रययौकामःसखायंमधुमाश्रितः ॥ रतियुक्तोजगामाशुप्रस्थंतुहिनभूभृतः ॥ १८ ॥ सतुप्राप्याकरोच्चिन्तांकार्यस्योपायपू
र्विकाम् ॥ महात्मानोहिनिष्कम्पामनस्तेषांसुदुर्जयम् ॥ १९ ॥ तदादावेवसंक्षोभ्यनेत्थंतस्यजयोभवेत् ॥ संसिद्धिःप्रायशश्चैवपूर्वंसंशोध्यमानसम्
॥ २२० ॥ कथमेवंविधैर्भावैर्द्वेषानुगमनंविना ॥ क्रोधःक्रूरतरात्सङ्गाद्ध्रीषणेर्षामहासखी ॥ २१ ॥ चापल्यान्मूर्ध्निविध्वस्तधैर्याधारमहाबला ॥ ताम
स्यविनियोक्ष्यामिमनसोविकृतिंपुरः ॥ २२ ॥ पिधायधैर्यद्वाराणिसन्तोषमपकृष्यच ॥ अवगन्तुंहिमांतत्रनकश्चिदिहपण्डितः ॥ २३ ॥ विक
ल्पमात्रसंस्थानंविरूपाक्षमनोभवम् ॥ प्रविश्याथक्रियारम्भीगम्भीरावर्तदुस्तरः ॥ २४ ॥ भविष्यामिहरस्याहंतपःस्थस्यस्थिरात्मनः ॥ इन्द्रि
यग्राममावृत्यरम्यसाधनसंविधिः ॥ २५ ॥ चिन्तयित्वेतिमदनोभूतभर्तुस्तदाश्रमम् ॥ जगामजगतीसारंसरलद्रुमवेदिकम् ॥ २६ ॥ शान्तस

२५

त्त्वसमाकीर्णमचलंप्राणिसङ्कुलम् ॥ नानापुष्पलताजालंसानुसंस्थगणेश्वरम् ॥ २७ ॥ निर्व्यग्रवृषभोद्घुष्टंनीलशाद्वलसानुकम् ॥ तत्रापश्यत्रिनेत्रस्य
रम्यंकञ्चिद्द्वितीयकम् ॥ २८ ॥ वीरकंवीरलोकेशमीशानसदृशद्युतिम् ॥ पङ्ककुङ्कुमकिञ्जल्कपुञ्जपिङ्गजटासटम् ॥ २९ ॥ वेत्रपाणितमव्य
ग्रमुग्रंचाभद्रभूषणम् ॥ ततोनिमीलितोन्निद्रपद्मपत्रान्तलोचनम् ॥ २३० ॥ प्रेक्षमाणमृजुस्थानंनासावंशाग्रगोचरम् ॥ अतीवरम्यसिंहेन्द्रचर्म
लम्बोत्तरीयकम् ॥ ३१ ॥ श्रवणाहिफणोन्मुक्तनिश्वासानलपिङ्गलम् ॥ प्रङ्कत्कपोलपर्यन्तचुम्बिलम्बिजटाचयम् ॥ ३२ ॥ कृतवासुकि
पर्यन्तनाभिमूलनिवेशितम् ॥ ब्रह्माञ्जलिस्थनासाग्रनिबद्धोरगभूषणम् ॥ ३३ ॥ ददर्शशङ्करंकामःक्रमप्राप्तान्तिकःशनैः ॥ ततोभ्रमरझङ्कारमाल
म्ब्यद्रुमसानुगम् ॥ ३४ ॥ प्रविष्टःकर्णरन्ध्रेणभवस्यमदनोमनः ॥ शङ्करस्तमथाकर्ण्यमधुरंमदनाश्रयम् ॥ ३५ ॥ सस्मारदक्षतनयांदयितां
रन्तुमानसः ॥ ततःशिवस्यशनकैस्तिरोधायातिनिर्मला ॥ ३६ ॥ समाधिभावनातस्थौलक्ष्यप्रत्यक्षरूपिणी ॥ ततस्तन्मयतांयातःप्रत्यूह
पिहिताशयः ॥ ३७ ॥ विवेशविबुधाधीशोविकृतिंमदनात्मिकाम् ॥ ईषत्क्रोधसमाविष्टोधैर्यमालम्ब्यधूर्जटिः ॥ ३८ ॥ निरस्यमदनंस्थि
त्वायोगमायासमावृतः ॥ सतयामायया विष्टोजज्वालमदनस्ततः ॥ ३९ ॥ इच्छाशरीरोदुर्ज्ञेयोदोषावासोमहाशयः ॥ हृदयान्निर्गतःसोऽथवासना
व्यसनात्मकः ॥ २४० ॥ बहिस्थलंसमासाद्यउपतस्थेझषध्वजः ॥ अनुयातोहिसाह्येनमित्रेणमधुनासह ॥ ४१ ॥ सहकारतरोर्दृष्ट्वामन्दमारु
तनिर्धुतम् ॥ स्तबकंमदनोरम्यंहरवक्षसिसत्वरम् ॥ मुमोचमोहनंनाममार्गणंमकरध्वजः ॥ ४२ ॥ सतस्यहृदयेशुद्धेनामशालीमहाशरः ॥
पपातपरुषःप्रांशुःपुष्पबाणोविमोहनः ॥ ४३ ॥ ततःकरणसन्दोहेविद्धेतुहृदयेभवः ॥ बभूवभूतपोऽकम्प्यधैर्योऽपिमदनोन्मुखः ॥ ४४ ॥ ततःप्रभु
त्वाद्भावानामावशंस्वमपश्यत ॥ वाक्यंबहुबभाषेऽथप्रत्यूहप्रसवात्मकम् ॥ ४५ ॥ ततःकोपानलोद्भूतघोरहुङ्कारभीषणे ॥ बभूववदनेनेत्रंतृतीयमन
लाकुलम्॥४६॥रुद्रस्यरौद्रवपुषोजगत्संहारभैरवम्॥तदन्तिकस्थेमदनेव्यस्फारयतधूर्जटिः॥४७॥तन्नेत्रविस्फुलिङ्गेनक्रोशतांनाकवासिनाम् ॥ गमितो
भस्मतांतूर्णंकन्दर्पःकामदर्पकः॥४८॥सतुतंभस्मसात्कृत्वाहरनेत्रोद्भवोऽनलः ॥ व्यजृम्भतजगद्दग्धुंज्ञात्वाहुङ्कारघस्मरम्॥४९॥ततोभवोजगद्धेतोर्व्यभ
जज्जातवेदसम् ॥ सहकारेमधौचन्द्रेसुमनस्स्वपरेष्वपि ॥ २५० ॥ भृङ्गेषुकोकिलास्येचविभागेनस्मरानलम्॥सबाह्याभ्यन्तरेविद्धोहरोऽथस्मरमार्गणैः
॥ ५१ ॥ भागेष्वेतेषुसंविष्टंवीक्षन्तीवहुताशनम् ॥ विभक्तंलोकसंक्षोभकरंदुर्वारजृम्भितम् ॥ ५२ ॥ तत्प्राप्तिस्नेहसम्पूर्णकामेनहृदयेकिल ॥ ज्वलन्न
हर्निशंभीमोदुःखस्यवशगोऽभवत् ॥ ५३ ॥ विलोक्यहरहुङ्कारज्वालाभस्मीकृतंस्मरम् ॥ विललापरतिःक्रूरंबन्धुनामधुनासह ॥ ५४ ॥ ततो

विलप्यबहुशोमधुनापरिसान्विता ॥ जगामशरणंदेवमिन्दुमौलिंत्रिलोचनम् ॥ ५५ ॥ भृङ्गानुयातांसङ्कुल्पपुष्पितांसहकारजाम् ॥ लतांपत्र द्रुमच्छन्नांजातांपरभृतांसखीम् ॥ ५६ ॥ निबध्यतुजटाजूटंकुटिलैरलकैरतिः ॥ उद्धर्त्यगात्रंशुभ्रेणह्वयेनस्मरभस्मना ॥ ५७ ॥ जानुभ्यामवनिंगत्वा प्रोवाचेन्दुविभूषणम् ॥ ५८ ॥ रतिरुवाच ॥ नमःशिवायास्तुमनोमयायजगन्मयायाद्भुतवर्त्मनेनमः ॥ नमःशिवायास्तुसुरार्चितायतुभ्यंसदाभक्त कृपापराय ॥ ५९ ॥ नमोभवायास्तुभवोद्भवायनमोऽस्तुतेध्वस्तमनोभवाय ॥नमोऽस्तुमायामदनाश्रयायनमोनिसर्गामलभूषिताय ॥२६०॥ नमोऽ स्त्वमेयायगुणायनायनमोऽस्तुसिद्धायपुरातनाय ॥ नमःशरण्यायनमोगुणायनमोऽस्तुतेभीमगणानुगाय॥६१॥नमोऽस्तुनानाभुवनार्द्धकर्त्रेनमोऽस्तु भक्ताभिमतप्रदाय ॥ नमोऽथकर्मप्रसुवेनमःसदाअनन्तरूपायसदैवतुभ्यम् ॥ ६२ ॥ असह्यकोपायसदैवतुभ्यंशशाङ्कचिह्नायनमोऽस्तुतुभ्यम् ॥ असीमलीलापरमस्तुतायवृषेन्द्रयानायपुरान्तकाय ॥ ६३ ॥ नमःप्रसिद्धायमहौषधायनमोऽस्तुनानाविधरूपकाय ॥ नमोऽस्तुकालायनमःकलाय नमोऽस्तुतेकालकलातिगाय॥६४॥ चराचराचार्यविचार्यवर्यमाचार्यमुत्प्रेक्षितभूतसर्गम्॥त्वामिन्दुमौलिंशरणंप्रपन्नाप्रियाप्तयेऽहंसहसामहेशम्॥६५॥ प्रयच्छमेकामयशःसमृद्धिंपतिंविनातंभगवन्वजी ॥प्रियःप्रियायाःपुरुषेशनित्यस्ततोऽपरःकोभुवनेष्विहास्ति ॥ ६६ ॥ प्रभुःप्रभावीप्रभवःप्रियाणां प्रवीणपर्यायपरापरन्तपः ॥ त्वमेवनाथोभुवनस्यगोप्तादयालुरुन्मूलितभक्तभीतिः ॥ ६७ ॥ पुलस्त्यउवाच ॥ इत्थंस्तुतःशङ्करइन्दुमौलिर्वृषाकपिर्म न्मथकान्तयातु॥तुतोषदोषाकरखण्डधारीउवाचचैनांमधुरंनिरीक्ष्य ॥६८॥ शङ्करउवाच ॥ भविष्यतिचकामोऽयंकालेकान्तेऽचिरादथ ॥ अनङ्गइति लोकेषुसविख्यातिंगमिष्यति ॥ ६९ ॥ इत्युक्ताशिरसावन्द्यगिरीशंकामवल्लभा ॥ जगामोपवनंचान्यद्रतिस्तुहिनपर्वते ॥ २७० ॥ रुरोदचापि बहुशोदीनारम्यस्थलेस्थले ॥ मरणव्यवसायापिनिवृत्ताचशिवाज्ञया ॥ ७१ ॥ अथनारदवाक्येनचोदितोहिमभूधरः॥कृताभरणसंस्कारांकृतकौतुक मङ्गलाम् ॥ ७२ ॥ स्वर्गपुष्पकृतापीडांशुभ्रचीनांशुकाम्बराम् ॥ सखीभ्यांसंयुतांशैलोगृहीत्वास्वसुतांततः ॥ ७३ ॥ जगामसुभगेयोगेतदासम्पूर्ण मानसः ॥ सकाननान्युपाक्रम्यवनान्युपवनानिच ॥ ७४ ॥ ददर्शरुदतींनारीमप्रतर्क्यामहौजसम् ॥ नरूपेणेदृशीलोकेरम्येषुवनसानुषु ॥ ७५ ॥ कौतुकेनपरामृष्टस्तांदृष्ट्वारुदतींगिरिः ॥ उपसृत्यततस्तस्यानिकटंसोऽप्यपृच्छत ॥ ७६ ॥ हिमवानुवाच ॥ कासिकस्यासिकल्याणिकिमर्थंचापि रोदिषि ॥ नैतदल्पमहंमन्येकारणंलोकसुन्दरि ॥ ७७ ॥ सातस्यवचनंश्रुत्वाउवाचमधुनासह ॥ रुदन्तीशोकवचनंश्वसन्तीदैन्यवर्धनम् ॥ ७८ ॥ रतिरुवाच ॥ कामस्यदयितांभार्यांरतिंमांविद्धिसुव्रत ॥ गिरावस्मिंश्चभगवान्गिरिशस्तपसिस्थितः ॥७९॥ तेनप्रत्यूहरुष्टेनक्रोधाद्विस्फार्यलोचनम् ॥

विमुच्याग्निशिखाज्वालांकामोभस्मावशेषितः ॥ २८० ॥ अहंतुशरणंयातातंदेवंभयविह्वला ॥ स्तुतवत्यथसन्तुष्टस्ततोमांगिरिशोब्रवीत् ॥ ८१ ॥
तुष्टोऽहंकामदयितेकामोत्पत्तिर्भविष्यति ॥ त्वत्स्तुतिंचाप्यधीयानोनरोभक्त्यामदाश्रयः ॥ ८२ ॥ लप्स्यतेकाङ्क्षितंकामंनिवर्तमरणादपि ॥
प्रतीक्षमाणातद्वाक्यमाशावंशवशादहम् ॥ ८३ ॥ शरीरंपरिरक्षिष्येकिञ्चित्कालंमहाद्युते ॥ इत्युक्तस्तुतयारत्याशैलःसम्भ्रमभीषणः ॥ ८४ ॥
पाणावादायतनयांगन्तुमैच्छत्स्वकंपुरम् ॥ भाविनोऽवश्यभावित्वाद्भवित्रीभूतभाविनी ॥ ८५ ॥ लज्जमानासखिमुखैरुवाचपितरंगिरिम् ॥
॥ ८६ ॥ शैलपुत्र्युवाच ॥ दुर्भगेनशरीरेणकिंममानेनकारणम् ॥ कथंचतांदशांप्राप्तश्शङ्करोमेपतिर्भवेत् ॥ ८७ ॥ तपोभिःप्राप्यतेऽभीष्टंना
साध्यन्तुतपस्यतः ॥ दुर्भगत्वंवृथालोकेविहितेसतिसाधने ॥ ८८ ॥ तपसिभ्रष्टसन्देहाततःस्वार्थजिगीषया ॥ एवन्तपःकरिष्येऽहंया
मीत्युक्तवतींसुताम् ॥ ८९ ॥ उवाचवाचाशैलेन्द्रोगद्गदस्वरवर्णया ॥ २९० ॥ हिमवानुवाच ॥ उमेतिचापलंपुत्रिनक्षमंतावकंव
पुः ॥ सोढुंक्लेशानुरूपस्यतपसःसौम्यदर्शने ॥ ९१ ॥ भावीन्यपिचकार्याणिपदार्थानिसदैवतु ॥ भाविनोऽर्थाभवन्त्येवबहवोऽनिच्छ
तोऽपिहि ॥ ९२ ॥ तस्मान्नतपसातेऽस्तिबालेकिञ्चित्प्रयोजनम् ॥ भवनंचैवगच्छामिचिन्तयिष्यामितत्रवै ॥ ९३ ॥ इत्यक्तातुयदानै
वगृहमन्वेतिशैलजा ॥ ततोऽद्रिश्चिन्तयाविष्टःस्वसुतांप्रशशंसच ॥ ९४ ॥ ततोऽन्तरिक्षेदिव्याचवागभूद्भुवनत्रये ॥ उमेतिचापलंपुत्रित्वयोक्तातन
यायतः ॥ ९५ उमेतिनामतेनास्याभुवनेषुभविष्यति ॥ सिद्धिर्मूर्तिमतीत्वेषासाधयिष्यतिचिन्तितम् ॥ ९६ ॥ इतिश्रुत्वातुवचनंसतदाकाश
मण्डले ॥ अनुज्ञायसुतांशैलोजगामाशुस्वमन्दिरम् ॥ ९७ ॥ पुलस्त्यउवाच ॥ शैलजापियियौशैलमगम्यमपिदैवतैः ॥ सखीभ्यामनुयातातुनि
यतानगराजजा ॥ ९८ ॥ शृङ्गंहिमवतःपुण्यंनानाधातुविभूषितम् ॥ दिव्यपुष्पलताकीर्णंभ्रमरोद्घुष्टपादपम् ॥ ९९ ॥ दिव्यप्रस्रवणोपेतंमनोर
थशतोज्ज्वलम् ॥ नानापक्षिसमायुक्तंचक्रवाकोपशोभितम् ॥ ३०० ॥ जलजस्थलजैःपुण्यैःप्रफुल्लैरुपशोभितम् ॥ चित्रकन्दरसङ्घ्यंदिव्यगेहसम
न्वितम् ॥ १ ॥ विहङ्गसङ्घसङ्घुष्टंकल्पपादपसङ्कटम् ॥ तत्रापश्यन्महाशाखंशाखिनंहरितच्छदम् ॥ २ ॥ सर्वर्तुकुसुमोपेतंचक्रवाकोपशोभितम् ॥
नानापुष्पशताकीर्णंनानाविधफलान्वितम् ॥ ३ ॥ त्यक्तंसूर्यस्यरुचिभिर्भिन्नसंहतपल्लवम् ॥ तत्राम्बराणिसन्त्यज्यभूषणानिचशैलजा ॥ ४ ॥
संवीतावल्कलैर्दिव्यैर्दर्भनिर्मितमेखला ॥ त्रिःस्नातापाटलाहाराबभूवशरदांशतम् ॥ ५ ॥ शतमेकेनजीर्णेनपर्णेनावर्त्तयत्तदा ॥ निराहाराशतंसा
भूत्समानांतपसोनिधिः ॥ ६ ॥ ततउद्वेजिताःसर्वेप्राणिनस्तपसोऽग्निना ॥ ततःसस्मारभगवान्मुनीन्सप्तशतक्रतुः ॥ ७ ॥ तेसमागम्यमुदिताःस

र्वैसमुदितास्तथा ॥ पूजितास्तेमहेन्द्रेणपप्रच्छुस्तत्प्रयोजनम् ॥ ८ ॥ ऋषयऊचुः॥किमर्थंहिसुरश्रेष्ठसंस्मृतास्तुवयंत्वया ॥ ९ ॥ शक्रःप्रोवाच
शृण्वन्तुभगवन्तःप्रयोजनम् ॥ शक्रउवाच॥ हिमाचलेतपोघोरंतप्यतेभूधरात्मजा ॥३१०॥ तस्याभिमतयोगेनभवन्तःकर्तुमर्हथ ॥ तपःसमापनंदेव्या
जगदर्थेत्वरान्विताः ॥ तथेत्युक्त्वाततःशैलंसिद्धसङ्घातसेवितम् ॥ ११ ॥ ऊचुरागम्यमुनयस्तामथोमधुराक्षरम् ॥ पुत्रिकस्तेव्यवसितःकामःकमल
लोचने ॥ १२ ॥ तानुवाचततोदेवीस।दरंगौरवान्मुनीन् ॥ १३ ॥ देव्युवाच ॥ तपस्यन्तोमहाभागाःप्रोह्यमौनंभवादृशाम् ॥ वन्दनायनियुक्ता
धीर्याचयत्यविकल्पितम् ॥ १४ ॥ सुप्रसन्नमुखायूयंगृहीत्वासनमादितः ॥ उपविष्टाःश्रमंमुक्त्वाततःप्रक्ष्यथमामनु ॥ १५ ॥ इत्युक्तास्तेततश्च
क्रुस्तत्रासनपरिग्रहम् ॥ साचतान्विधिवत्पूर्वंपूजयित्वाविधानतः ॥ १६ ॥ उवाचादित्यसङ्काशान्मुनीन्सप्तऋषीञ्शनैः ॥ त्यक्त्वात्रतात्मकंमौ
नंनत्वाचविधिवन्मुनीन् ॥ १७ ॥ भगवन्तोऽपिमौनान्तेतस्याःसप्तर्षयोऽप्यथ ॥ गौरवाधारतांप्राप्तांपप्रच्छुस्तांपुनस्तथा ॥ १८ ॥ सापिगौर
वगर्भेणमनसाचारुहासिनी ॥ मुनीन्सर्वांस्तथालोक्यप्रोवाचप्रोह्यवाग्यमम् ॥ १९ ॥ भगवन्तोविजानीथप्राणिनांमनसेप्सितम् ॥ शरीरादिभि
रत्यर्थंकदर्थ्यन्तेहिदेहिनः ॥ ३२० ॥ केचित्तुनिपुणास्तत्रघटन्तेविविधोद्यमैः ॥ उपायैर्दुर्लभान्भावान्प्राप्नुवन्तिह्यतन्द्रिताः ॥ २१ ॥ अपरेतु
परिच्छिद्यनानाकारानुपक्रमान् ॥ देहान्तरार्थंसारम्भमाश्रयन्तिहितद्व्रतम् ॥ २२ ॥ ममत्वाकाशसम्भूतकुसुमस्रग्विभूषितम् ॥ विन्ध्यशृङ्गंस्प्र
ष्टुकामोहस्तःप्रसरतेमुहुः ॥ २३ ॥ अहंकिलभवंदेवंपतिंप्राप्तुंसमुद्यता ॥ प्रकृत्यैवदुराराध्यंतपस्यन्तंचसम्प्रति ॥ २४ ॥ सुरासुरैरनिर्णी
तंपरमार्थक्रियाश्रयम् ॥ साम्प्रतंचापिनिदग्धोमदनोवीतरागिणा ॥ २५ ॥ कथमाराधयेदीशंमादृशीतादृशंशिवम् ॥ २६ ॥ पुलस्त्यउवाच॥
इत्युक्तामुनयस्तेतुस्थिरतांमनसस्ततः ॥ ज्ञातुमस्यावचःप्रोचुःप्रक्रमात्प्रकृतार्थकम् ॥ २७ ॥ मुनयऊचुः ॥ द्विविधंतुसुखंतावत्पुत्रिलोकेविभा
व्यते ॥ शरीरस्यास्यसंयोगश्चेतसश्चापिनिर्वृतिः ॥ २८ ॥ प्रकृत्यातुसदिग्वासाभीमोभस्मास्थिभूषणः ॥ कपालीभिक्षुकोनग्नोविरूपाक्षोऽस्थिर
क्रियः ॥ २९ ॥ प्रमत्तोन्मत्तकाकारोबीभत्सोकृतसङ्ग्रहः ॥ पत्यानतेनचास्त्यर्थोमूर्तानर्थेनकाङ्क्षितः ॥ ३३० ॥ यदिस्वस्यशरीरस्यसुखमिच्छ
सिशाश्वतम् ॥ तत्कथंतेमहादेवाद्भूतभाजोजुगुप्सितात् ॥३१॥ स्रवन्नरवसासास्थिकपालकृतभूषणात् ॥ श्वसदुग्रभुजङ्गेन्द्रकृतभूषणभूषितात् ॥३२॥
श्मशानवासिनोरौद्रप्रमथानुगतादपि ॥ सुरेन्द्रमुकुटव्रातनिघृष्टचरणोऽरिहा ॥ ३३ ॥ हरिरस्तिजगद्धाताश्रीकान्तोऽनन्तमूर्तिमान् ॥ जप्योय
ज्ञभुजामस्तितथेन्द्रःपाकशासनः ॥ ३४ ॥ देवतानांनिधिश्चास्तिज्वलनस्सर्वकामधुक् ॥ वायुरस्तिजगद्धातायःप्राणस्सर्वदेहिनाम् ॥ ३५ ॥

तथावैश्रवणोराजासर्वार्थमहिमाप्रभुः ॥ एभ्यएकतमंकस्मान्नत्वंसम्प्राप्तुमिच्छसि ॥ ३६ ॥ उतान्यस्मादिहप्राप्यंसुखंतेमनसेहितम् ॥ एवमेतत्त
थापुत्रिप्रभावोलोकसम्पदाम् ॥ ॥ ३७ ॥ अस्मिन्देहेपरेवापिकल्याणप्राप्तयेतव ॥ पितुरेवास्तितेसवसुरेभ्योयन्निवेदितम् ॥ ३८ ॥ वरस्यप्राप्तये
क्लेशस्सचाप्यत्राफलस्तरुः ॥ प्रायेणप्रार्थितोह्यर्थस्समर्थोह्यतिदुर्लभः ॥ ३९ ॥ स्वस्थानविनियोगित्वात्पुत्रितत्रापिलभ्यते ॥ ३४० ॥ पुलस्त्य
उवाच ॥ इत्युक्तवत्सुकुपितामुनिवर्येषुशैलजा ॥ उदाचक्रोधरक्ताक्षीविस्फुरद्दशनच्छदा ॥ ४१ ॥ देव्युवाच ॥ असद्ग्रहस्यकानीतिर्व्यसनस्यक्व
यन्त्रणा ॥ विपरीतार्थबोद्धारःसत्पथेकेनयोजिताः ॥ ४२ ॥ एवंमांवित्थदुष्प्रज्ञामस्थानासद्ग्रहप्रियाम् ॥ नमांप्रतिविचारोऽस्तियदहङ्कारमानिनी
॥ ४३ ॥ प्रजापतिसमाःसर्वेभवन्तःसर्वदर्शिनः ॥ ननूनंवित्थतंदेवंशाश्वतंजगतःप्रभुम् ॥ ४४ ॥ अजमीशानमव्यक्तममेयमहिमोदयम् ॥ आ
स्तांतत्कर्मसद्भावंसम्बोधंतावदावृतम् ॥ ४५ ॥ विदुस्तंनहरिब्रह्ममुखाअपिसुरेश्वराः॥यत्तस्यविभवंस्वोत्थंभुवनेषुविजृम्भितम् ॥ ४६ ॥ प्रकटंसर्व
भूतानांतदप्यथनवित्थकिम् ॥ कस्यैतद्गगनंमूर्तिःकस्याग्निःकस्यमारुतः ॥ ४७ ॥ कस्यभूःकस्यवरुणःकश्चन्द्रार्कविलोचनः ॥ कस्यार्चयन्तिलोके
षुलिङ्गंभक्त्यासुरासुराः ॥ ४८ ॥ यच्चब्रह्मेश्वरादेवाविष्णिवन्द्राद्यामहर्षयः ॥ प्रभावंप्रभवंवापितेषामपिनवित्थकिम् ॥ ४९ ॥ अदितेःकश्य
पाज्जातादेवानारायणादयः ॥ मरीचेःकश्यपःपुत्रोह्यदितिर्दक्षपुत्रिका ॥ ३५० ॥ मरीचिश्चापिदक्षश्चपुत्रौतौब्रह्मणःकिल ॥ ब्रह्माहिरण्मयादण्डा
देवसिद्धविभूतिकः ॥ ५१ ॥ कस्यप्रादुरभूद्ध्यानात्प्राकृतःप्राकृतांशकः ॥ अथनारायणेनैवस्वकीयच्छासमाश्रयात् ॥ ५२ ॥ तत्प्रेरितः
प्रयात्येषजन्मनारायणत्मकम् ॥ सापिकर्मणएवोक्ताप्रेरणाविवशात्मनाम् ॥ ५३ ॥ यथोन्मादादिदुष्टस्यमतिरेवहिसाभवेत् ॥ इष्टानेवपदार्थान्वै
विपरीतान्हिमन्यते ॥ ५४ ॥ लोकस्यव्यवहारेषुद्दष्टेषुहसतेसदा ॥ धर्माधमफलप्राप्तौविष्णुमेवनिबोधत ॥ ५५ ॥ विदध्वमित्थंमुनयोऽसक्ट
च्चमेगिरंगिरीशश्रुतिभूमिसन्निधौ ॥ उत्कृष्टकेदारइवावनीतलेसुबीजमुष्टिंसुफलायकर्षकाः ॥ ५६ ॥ तेतांश्रुत्वाहितांरम्यांप्रक्रमात्प्रक्रमक्रियाम्॥
वाचंवाचांपतिप्रख्याःप्रोचुश्चस्मितसुन्दराः॥ ५७॥ मुनयऊचुः॥ जातेलोकविधानेतुसत्यंतत्कार्यमुत्तमम्॥ प्रायःप्रालेयशैलस्यशङ्कातत्कालरूपिणः
॥ ५८ ॥ सत्यमुत्कण्ठिताःसर्वेयेयेकार्यार्थमुद्यताः ॥ तेपांत्वरन्तेचेतांसिकिन्तुनाममहात्मनाम् ॥ ५९ ॥ लोकयात्रानुगन्तव्याविशेषेणविवक्षि
तैः ॥ यतस्तद्धर्ममेधन्तेतत्प्रामाण्यंपरेधृताः ॥ ३६० ॥ पुलस्त्यउवाच॥इत्युक्त्वामुनयोजग्मुस्त्वरितातुहिनाचलम्॥ तत्रतेपूजितास्तेनहिमशैलेनसा
दरम् ॥ ६१ ॥ ऊचुर्मुनिवराःप्रीताःस्वल्पकंतुत्वरान्विताः ॥६२॥ मुनयऊचुः ॥ देवोदुहितरंसाक्षात्पिनाकीतवमार्गते ॥ तच्छीघ्रंपावयात्मानमाहुत्ये

वानलेद्भुतम्॥६३॥कार्यंहितच्चदेवानांसुचिरंपरिवर्तत ॥ जगदुद्धारणायैषविधातव्यःसमुद्यमः ॥ ६४॥ पुलस्त्यउवाच ॥ इत्युक्तस्तुतदाशैलोहर्षावेशव
शान्मुनीन् ॥ असमर्थोऽभवद्वक्तुमुत्तरंप्रार्थयन्निव ॥ ६५ ॥ ततोमेनामुनीन्वन्द्यप्रोवाचस्नेहविक्लवा ॥ दुहितुस्तान्मुनीँश्चैववचनंस्वयमर्थवत्॥६६॥
मेनोवाच ॥ यदर्थंदुहितुर्जन्मचेच्छन्त्यपिमहाफलम् ॥ तदेवोपस्थितंसर्वंप्रक्रमेणैवसाम्प्रतम्॥ ६७ ॥ कुलजन्मवयोरूपविभुत्वैस्सहितोऽपियः॥
वरस्तस्यापिनाहूयसुतादेयाद्ययाचतः ॥ ६८ ॥ दिग्वासाजटिलःशूलीदग्धकामोऽपिकामदः ॥ सतुमत्सुतयाघोरःकथंनामउपास्यते ॥ ६९ ॥
मुनयऊचुः ॥ ऐश्वर्यमवगच्छस्वशङ्करस्यसुरासुराः ॥ आराध्यमानपादाब्जयुगलाश्चसुनिर्वृताः ॥ ३७० ॥ यस्योपयोगियद्रूपंतेनतत्प्रार्थ्यतेचिरम् ॥
घोरंतपस्यतेबालातेनरूपेणनिर्वृता ॥ ७१ ॥ यत्सात्रतानिदिव्यानिनयिष्यतिसमापनम् ॥ तदत्रावर्हितातावदस्मास्वेवभविष्यति ॥७२॥ पुलस्त्य
उवाच ॥ इत्युक्त्वागिरिणासार्द्धंययुर्यत्रास्तिशैलजा ॥ जितार्कज्वलनज्वालातपस्तेजोमयीह्युमा ॥ ७३ ॥ प्रोक्तासामुनिभिःस्निग्धंमानिन्याह
वचोऽर्थवत् ॥ ७४ ॥ उमोवाच ॥ नाहंक्षुद्रात्किलेच्छामिऋतेशर्वात्पिनाकिनः ॥ स्थितंचतारतम्येनप्राणिनांपरमर्द्धिदम् ॥ ७५ ॥ धीरतैश्वर्य
कार्याणिप्रमाणमतुलंमहत् ॥ यस्मान्नकिञ्चिदहपरंयच्चयस्मात्प्रवर्तते ॥ ७६ ॥ यस्यैश्वर्यमनाद्यन्तंतमहंशरणंगता ॥ समःसव्यवसायश्चदीर्घेण
विपरीतकः ॥ ७७ ॥ एवंनिशम्यतेवाचंदेव्यामुनिवरास्तदा ॥ आनन्दाश्रुपरीताक्षाःसस्वजुस्तांतपस्विनीम् ॥ ७८ ॥ ऊचुश्चपरमप्रीताःशलजां
मधुरंवचः ॥ ७९ ॥ ऋषयऊचुः ॥ अत्यद्भुतमहोपुत्रिज्ञानमूर्तिरिवामला ॥ प्रसादयसिनोभावंभवभावप्रतिश्रयात् ॥ ३८० ॥ ननुविद्मोवयंतस्य
देवस्यैश्वर्यमद्भुतम् ॥ त्वन्निश्चयस्यदृढतांवेत्तुंवयमिहागताः ॥ ८१ ॥ अचिरादेवतन्वङ्गिकामस्त्वेषभविष्यति ॥ आदित्यस्सप्रभोयातिरत्नेभ्यः
काद्युतिःपृथक् ॥ ८२ ॥ कोऽर्थोवर्णान्स्वकांस्त्यक्त्वातथात्वंगिरिशंविना ॥ यामोऽनेकाभ्युपायेनतमभ्यर्थयितुंवयम् ॥ ८३ ॥ अस्माकमपि
चैषोऽर्थःसुतरांहृदिवर्तते ॥ अतस्त्वमेवसाबुद्धिर्यतोनीतिस्त्वमेवहि ॥ ८४ ॥ अतोनिःसंशयंकार्यंशङ्करोऽपिविधास्यति ॥ ८५ ॥ पुलस्त्यउवाच॥
इत्युक्त्वापूजितास्सर्वेमुनयोगिरिकन्यया ॥ प्रययुर्गिरिशंद्रष्टुंप्रस्थंहिमवतोमहत् ॥८६ ॥ गङ्गाम्भःप्लावितात्मानःपिङ्गाबद्धजटासटाः ॥ भृङ्गानुया
तपाणिस्थमन्दारकुसुमस्रजः ॥ ८७ ॥ सम्प्राप्यतुगिरेःप्रस्थंददृशुःशङ्कराश्रमम् ॥ प्रशान्ताशेषसत्वौघंपर्यस्तमितकाननम् ॥ ८८ ॥ निःशब्दक्षोभ
सलिलप्रयातंसर्वतोदिशम् ॥ तत्रापश्यंस्ततोद्वारिवीरकंवेत्रपाणिनम् ॥ ८९ ॥ तमेतेमुनयःपूज्यविनीताःकार्यगौरवात् ॥ ऊचुर्मधुरभाषाभिस्ते
वाचंवाग्मिनांवराः ॥ ३९० ॥ ऋषयऊचुः॥द्रष्टुवयमिहायाताःशङ्करंगुणनायकम् ॥ त्रिलोचनंविजानीहिसुरकार्यप्रचोदिताः ॥९१॥ त्वमेवनोगति

स्तत्रयथांकालानतिक्रमः ॥ स्यात्प्रार्थनैषाप्रायेणप्रतीहारमयीप्रभो ॥ ९२ ॥ पुलस्त्यउवाच ॥ इत्युक्तोमुनिभिःसोऽथगौरवात्तानुवाचह ॥ वीरक
उवाच ॥ सवनस्यापरांसन्ध्यांकर्तुमन्दाकिनींगतः ॥ ९३ ॥ क्षणेनभाविताविप्रास्ततोद्रक्ष्यथशूलिनम् ॥ ९४ ॥ पुलस्त्यउवाच ॥ इत्युक्तामुनय
स्तस्थुर्यत्नात्कार्यविचक्षणाः ॥ गम्भीराम्बुधरंप्रावृट्तृषिताश्चातकायथा ॥ ९५ ॥ तथाक्षणेननिष्पन्नसमाचारक्रियाविधिम् ॥ वीरासनकृतोद्देशं
मृगचर्मनियामितम् ॥ ९६ ॥ ततोविनीतोजानुभ्यामवलम्ब्यमहींमुदा ॥ उवाचवीरकोदेवंप्रणयैकसमाश्रयम् ॥ ९७ ॥ वीरकउवाच ॥ सम्प्रा
तामुनयःसप्तद्रष्टुंत्वांदीप्ततेजसम् ॥ विभोसमादिशद्रष्टुंततोध्यानमिहार्हसि ॥ ९८ ॥ पुलस्त्यउवाच ॥इत्युक्तोधूर्जटिस्तेनवीरकेणमहात्मना ॥ भ्रूभङ्ग
संज्ञयातेषांप्रवेशाज्ञांददौतदा ॥ ९९ ॥ मूर्द्धकम्पेनतान्सप्तवीरकोऽपिमहामुनीन् ॥ आजुहावविदूरस्थान्दर्शनायपिनाकिनः ॥ ४०० ॥ त्वराबद्ध
जटास्तेचलम्बकृष्णाजिनाम्बराः ॥ विविशुर्वेदिकांदिव्यांगिरीशस्यविभोस्ततः ॥ १ ॥ वद्धपाणिपुटाक्षिप्तनाकपुष्पोत्करास्ततः ॥ पिनाकिपाद
युगलंवन्द्यनाकनिवासिनः ॥ २ ॥ ततःस्निग्धेक्षिताःसन्तोमुनयःशूलपाणिना ॥ गिरीशंतुततोदृष्ट्वातेसमंतुष्टुवुर्मुदा ॥ ३ ॥ मुनयऊचुः ॥ अहो
कृतार्थावयमेवसाम्प्रतंसुरेश्वरैर्वन्दितपादपल्लवम् ॥ विलोकयामोगुणगौरवर्द्धिभिःसमादिशेःकार्यमशेषरक्षणम् ॥ ४ ॥ पुलस्त्यउवाच ॥ ततःप्रह
स्यसर्वज्ञउवाचमुनिसत्तमान् ॥ ५ ॥ शङ्करउवाच ॥ भवतांयद्धृदिगतंकार्यंतत्कुरुताधुना ॥ ६ ॥ पुलस्त्यउवाच ॥ इत्युक्तामुनयस्तूर्णंययुर्यत्रच
शैलजा॥बभाषिरेविभागज्ञागिरिजांगिरिगह्वरे ॥७॥ ऋषयऊचुः॥रम्यंप्रियमनोहारिमारूपंतपसादह॥प्रीतस्तेशङ्करःपाणिमेषप्रतिग्रहीष्यति॥८॥वय
मर्थितवन्तस्तेपितरंपूर्वमागताः ॥ पित्रासहगृहंगच्छवयंयामःस्वमन्दिरम् ॥ ९ ॥ पुलस्त्यउवाच ॥ इत्युक्तातपसःसत्यंफलमस्तीतिचिन्त्यसा ॥
त्वरमाणाययौवेश्मपितुर्दिव्यंसुशोभितम् ॥ ४१० ॥ सातत्ररजनींमेनेवर्षायुतसमांसती ॥ हरदर्शनसञ्जातसमुत्कण्ठाहिमाद्रिजा ॥ ११ ॥
ततोमुहूर्त्तेब्राह्मेतुतस्याश्चक्रुःसुहृत्क्रियाम् ॥ नानामङ्गलसन्दोहान्यथावत्क्रमपूर्वकम् ॥ १२ ॥ दिव्यमङ्गलसंयोगान्मन्दिरेवहुमङ्गले ॥ उपासत
गिरिंमूर्त्ताऋतवःसर्वकामिकाः ॥ १३ ॥ वायवःसुखदाश्चासन्संमार्जनविधौगिरेः ॥ हर्म्येषुश्रीःस्वयंदेवीकृतनानाप्रसाधना ॥ १४ ॥ कान्तिःसर्वे
षुभावेषुऋद्धिश्चभरणाकुला ॥ चिन्तामणिप्रभृतयोरत्नाश्शैलंसमन्ततः ॥ १५ ॥ उपतस्थुर्लताश्चापिकल्पकाद्यामहाद्रुमाः ॥ ओषध्योमूर्तिमत्यश्च
दिव्यौषधिसमन्विताः ॥ १६ ॥ रसाश्चधातवश्चैवसर्वेशैलस्यकिङ्कराः ॥ किङ्करास्तस्यशैलस्यव्यग्राश्चाश्रमवर्तिनः ॥ १७ ॥ नद्यःसमुद्रा
निखिलाःस्थावरंजङ्गमंचयत् ॥ तसर्वेहिमशैलस्यमहिमानमवर्द्धयन् ॥ १८ ॥ अभवन्मुनयोनागायक्षागन्धर्वकिन्नराः ॥ शङ्करस्या

पिविबुधागन्धमादनपर्वते ॥ १९ ॥ सज्जमण्डनसम्भारास्तस्थुर्निर्मलमूर्त्तयः ॥ शर्वस्याथजटाजूटेचन्द्रखण्डंपितामहः ॥ ४२० ॥ ब
बन्धप्रणयोदारविस्फारितविलोचनः ॥ कपालमालांविपुलांचामुण्डामूर्ध्निबभ्रती ॥ २१ ॥ उवाचगिरिशंकालीपुत्रंजनयशङ्कर ॥ योदैत्येन्द्रकुलं
हत्वामांरक्तैस्तर्पयिष्यति ॥ २२ ॥ शौरिर्वितंसिकारत्नंकण्ठाभरणमुज्ज्वलम् ॥ भुजङ्गाभरणंगृह्यसज्जःशम्भोःपुरोऽभवत् ॥ २३ ॥ शक्रोगजाजि
नंतस्यवसाभ्यक्ताग्रपल्लवम्॥ दध्रेसरभसंस्विद्यद्विस्तीर्णमुखपङ्कजम्॥२४॥वायवश्ववबुस्तीक्ष्णास्तीक्ष्णंहिमगिरिप्रभम् ॥वृषंविभूषयामासुर्हरयानंमनो
जवम् ॥ २५ ॥ विरेजुर्नयनान्तस्थाःशम्भोःसूर्यानलेन्दवः ॥ स्वांद्युतिंलोकनाथस्यजगतःकर्मसाक्षिणः ॥ २६ ॥ चिताभस्मसमाधत्तकपालेरजतप्र
भम् ॥ मनुजास्थिमयींमालांनिबबन्धचपाणिना ॥ २७ ॥ प्रेताधिपःपुरेदूरेसभयःसमवर्तत ॥ नानाकारमहारत्नभूषणंधनदाहृतम् ॥ २८ ॥ विद्या
योद्दीप्तसर्पेन्द्रकटकेनस्वपाणिना ॥ कर्णोत्तंसंचकारेशोह्यमलंतक्षकंस्वयम् ॥ २९ ॥ निष्पन्नाभरणंचैवप्रसाध्येशंप्रसाधनैः ॥ तत्राप्येषांनियमतोह्य
भवन्व्यग्रमूर्तयः ॥४३०॥ मुमोचाभिनवान्सर्वरम्यशालिरसौषधीन्॥व्यग्रातुपृथिवीदेवीसर्वभावान्मनोरमा ॥३१॥ गृहीत्वावरुणःसाक्षाद्रत्नाढ्याभर
णानिच ॥ पुष्पाणिचविचित्राणिनानारत्नमयानितु ॥ ३२ ॥ तस्थौसाभरणोदेवःसर्वज्ञःसर्वदेहिनाम् ॥ ज्वलनश्चापिदिव्यानिहैमान्याभरणानिच
॥ ३३ ॥ जातरूपपवित्राणिप्रयतःसमुपस्थितः ॥ वायुर्ववौचसुरभिःसुखसंस्पर्शनोविभुम् ॥ ३४ ॥ छत्रंचन्द्रकरोद्दामंहासितंचशतक्रतुः ॥ जग्राहमु
दितःश्रीमान्बाहुभिर्वज्रभूषणः ॥ ३५ ॥ जगुर्गन्धर्वमुख्याश्चननृतुश्चाप्सरोगणाः ॥ वादयन्तोऽतिमधुरंजगुर्गन्धर्वकिन्नराः ॥ ३६ ॥ मुहूर्ताद्दतवस्त
त्रजगुश्चननृतुश्चवै ॥ चपलाश्चगणास्तस्थुर्लोडयन्तोहिमाचलम् ॥ ३७ ॥ उपविष्टःक्रमाद्धाताविश्वकृद्भगनेत्रहा ॥ चकारौद्वाहिकंकृत्यंपत्न्यास
हयथोदितम् ॥ ३८ ॥ दत्तार्घ्योगिरिराजेनसुरवृन्दैर्विनोदितः ॥ अवसत्तांक्षपांतत्रपत्न्यासहपुरान्तकः ॥३९॥ ततोगन्धर्वगीतेननृत्येनाप्सरसामपि
स्तुतिभिर्देवदैत्यानांविबुद्धोविबुधाधिपः ॥ ४४० ॥ आमन्त्र्यहिमशैलेन्द्रंप्रभातेजाययासह ॥ जगाममन्दरगिरिंवायुवेगेनशृङ्गिणा ॥ ४१ ॥ ततो
गतेभगवतिनीललोहितेसहोमयारतिमनुभूतभधरः॥सबान्धवोभवतिहिकस्यनोमनोविशृङ्खलंजगतिहिकन्यकापितुः ॥४२॥ पुरोद्यानेषुरम्येषुविविक्ते
षुवनेषुच ॥ सुरक्तहृदयोदेव्याविजहारभगाक्षिहा ॥ ४३ ॥ ततोबहुतिथेकालेपुत्रनाम्नागिरेःसुता ॥ सखीभिःसहिताक्रीडांचक्रेकृत्रिमपुत्रकैः ॥ ४४ ॥
कदाचिद्गन्धतैलेनगात्रमभ्यज्यशैलजा॥चूर्णैरुद्वर्तयामासमलेनापूरितांतनुम्॥४५॥ तदुद्वर्तनकंगृह्यनरंचक्रेगजाननम् ॥पुरुषंक्रीडतीदेवीतचाप्यक्षिपद
म्भसि ॥ ४६ ॥ जाह्नव्याशिवयासख्याततःसोभूद्बृहत्तनुः ॥ कायेनातिविशालेनजगदापूरयत्तदा ॥ ४७ ॥ पुत्रेत्युवाचतंदेवीपुत्रेत्यूचेचजाह्नवी ॥

गाङ्गेयइतिदेवैस्तुपूजितोऽभद्गजाननः ॥४८॥ विनायकाधिपत्यंचददावस्यपितामहः ॥ पुनःसाक्रीडतीचक्रेतरुंचवरवर्णिनी ॥ ४९ ॥ मनोज्ञमङ्कु
रंरूढमशोकस्यशुभानना ॥वर्द्धयामासतंचापिकृतसंस्कारमङ्गलम् ॥४५०॥ बृहस्पतिमुखैर्विप्रैर्दिवस्पतिपुरोहितैः॥ततोदेवैःसमुनिभिःप्रोक्तादेवीत्वि
दंवचः ॥ ५१ ॥ मुनिदेवाऊचुः ॥ अधुनादर्शितेमार्गेमर्यादांकर्तुमर्हसि ॥ फलंकिंभवितादेविकलिपतैस्तरुपुत्रकैः ॥ ५२ ॥ पुलस्त्यउवाच ॥ इत्युक्ता
हर्षपूर्णाङ्गीप्रोवाचातिशुभांगिरम् ॥ ५३ ॥ पार्वत्युवाच ॥ एकंनिरुदकेग्रामेयःकूपंकारयेद्बुधः ॥ विन्दौविन्दौचतोयस्यसवसेद्वत्सरंदिवि ॥ ५४ ॥
दशकूपसमावापीदशवापीसमोह्रदः॥दशह्रदसमाकन्यादशकन्यासमोद्रुमः॥५५॥एषावैशुभमर्यादानियतालोकभाविनी॥५६॥पुलस्त्यउवाच ॥इत्यु
क्तास्तुततोविप्राबृहस्पतिपुरोगमाः ॥ जग्मुःस्वमन्दिराण्येवभवानींवन्द्यमातरम् ॥५७॥ गतेषुतेषुदेवोऽपिशङ्करःपर्वतात्मजाम्॥पाणिनालम्ब्यपादेन
स्वमावासमगच्छत ॥५८॥ चित्तप्रसादजननंप्रासादाट्टालगोपुरम् ॥ लम्बमौक्तिकदामानंमालिकाकुलवेदिकम् ॥५९॥ सुनद्धकलधौतंचक्रीडागृहम
नोगतम्॥प्रकीर्णकुसुमामोदमत्तालिकुलकूजितम् ॥४६०॥ किन्नरोद्गीतसङ्गीतगृहान्तरितभित्तिकम् ॥ सुगन्धिधूपसङ्घातंमनःप्राप्यमलक्षितम् ॥६१॥
क्रीडामयूरनारीभिरभितोरभसार्पितम् ॥ हंससङ्घातसन्दिष्टस्फटिकस्तम्भतोरणम् ॥६२॥ अनाविलमसम्भ्रान्त्याबहुशःकिन्नराकुलम्॥शुकैर्यत्राभिद
श्यन्तेपद्मरागविनिर्मिताः॥६३॥भित्तयोजातिसम्भ्रान्त्याप्रतिबिम्बितमौक्तिकाः॥तत्राक्षैःप्रिययादेवोविहर्तुमुपचक्रमे॥६४॥स्वच्छेन्द्रनीलभूभागेक्रीड
न्तौयत्रसंस्थितौ ॥ वपुःसहायतांप्राप्तौविनोदरसनिर्वृतौ ॥६५॥ एवंप्रक्रीडतोस्तत्रदेवीशङ्करयोस्तदा ॥ प्रादुर्भूतोमहाशब्दःपतिताम्बरगोचरः ॥६६॥
तच्छ्रुत्वाकौतुकाद्देवीकिमेतदितिशङ्करम् ॥पर्यपृच्छत्सुरवरंहरंविस्मितपूर्वकम्॥६७॥उवाचदेवोनतत्तेदृष्टपूर्वंशुचिस्मिते ॥एतेगणेशाःक्रीडन्तेशैलेऽस्मि
न्मत्प्रियाःसदा ॥ ६८ ॥ तपसाब्रह्मचर्येणनामभिःक्षेत्रसेवनैः ॥ यैरहंतोषितःपूर्वंतएतेमनुजोत्तमाः ॥ ६९ ॥ मत्समीपमनुप्राप्ताममह्द्याःशुभानने ॥
कामरूपामहोत्साहामहारूपगुणान्विताः॥४७०॥कर्मभिर्विस्मयंतषांप्रयामिबलशालिनाम्॥सामरस्यास्यजगतःसृष्टिसंहरणक्षमाः ॥७१॥ब्रह्मचन्द्रेन्द्र
गन्धर्वैस्सकिन्नरमहोरगैः ॥ विवर्जितोऽप्यहंनित्यंनैभिर्विरहितोरमे ॥७२॥ हृद्यामेचारुसर्वाङ्गितएतक्रीडितागिरौ ॥ इत्युक्तातुतदादेवीत्यक्त्वातंविस्म
याकुला॥७३॥गवाक्षान्तरमासाद्यप्रेक्षतेचकितानना॥यावन्तस्तेकृशादीर्घाह्रस्वाःस्थूलामहोदराः॥७४॥ व्याघ्रेभवदनाःकेचित्केचिन्मेषाजरूपिणः ॥ 
अनेकप्राणिरूपाश्चज्वालास्याःकृष्णपिङ्गलाः॥७५॥सौम्याभीमाःस्मितमुखाःकृष्णपिङ्गजटास्सदा ॥ नानाविहङ्गवदनानानाविधसुराननाः ॥७६॥
कौशेयचर्मवसनानग्नाश्चान्येविरूपिणः ॥ गोकर्णागजकर्णाश्चबहुवक्रेक्षणोदराः ॥ ७७ ॥ बहुपादाबहुभुजादिव्यनानास्त्रपाणयः॥अनेककुसुमापी

डानानाव्याकुलभीषणाः ॥७८॥ कृतनानायुधधरानानाकवचभूषणाः॥विचित्रवाहनारूढादिव्यरूपावियच्चराः ॥७९॥वीणावाद्यरवोद्घुष्टानानास्था
नकनर्तकाः ॥ गणेशांस्तांस्तथादृष्ट्वादेवीप्रोवाचशङ्करम् ॥ ४८० ॥ देव्युवाच ॥ गणेशाःकतिसङ्ख्याताःकिंनामानःकिमात्मकाः ॥ एकैकशोमम
ब्रूहिनिश्चितायेपृथक्पृथक् ॥ ८१ ॥ शङ्करउवाच ॥ कोटिकोटिश्चसङ्ख्यातानानाविख्यातपौरुषाः ॥ जगदापूरितंसर्वमेभिर्भीमैर्महाबलैः ॥ ८२ ॥
सिद्धक्षेत्रेषुरथ्यासुजीर्णोद्यानेषुवेश्मसु ॥ दानवानांशरीरेषुबालेपून्मत्तकेषुच ॥ ८३ ॥ एतेविशन्तिमुदितानानाहारविहारिणः ॥ ऊष्मपाःफेनपाश्चै
वधूमपामधुपायिनः ॥ ८४ ॥ मेदाहाररुधिरपास्सर्वभक्षाह्यभोजनाः ॥ देवादास्तापसाहारानानावाद्यरतिप्रियाः ॥ ८५ ॥ नहिवक्तुमनन्तत्वा
च्छक्यन्तेहिगणाःपृथक् ॥ ८६ ॥ देव्युवाच ॥ नागत्वगुत्तरासङ्गःशुद्धाङ्गोमुञ्जमेखली ॥ मनःशिलेनकल्पेनचपलोरञ्जिताननः ॥ ८७ ॥ भृङ्ग
दष्टोत्पलानांचस्रग्दामामधुराकृतिः ॥ पाषाणशकलोत्तानकांस्यतालप्रवर्तकः ॥८८ ॥ असौगणेश्वरोदेवकिंनामाकिन्नरानुगः ॥यएषगणगीतेषुदत्त
कर्णोमुहुर्मुहुः ॥ ८९ ॥ शर्वउवाच ॥ सएषवीरकोदेविसदामेहृदयप्रियः ॥ नानाश्चर्यगुणाधारोगणेश्वरगणार्चितः ॥ ४९० ॥ देव्युवाच ॥ ईदृश
स्यसुतस्यास्तिममोत्कण्ठापुरान्तक ॥ कदाहमीदृशंपुत्रंद्रक्ष्याम्यानन्ददायकम् ॥ ९१ ॥ शर्वउवाच ॥ एषएवसुतस्तेऽस्तुनयनानन्दकारकः ॥ त्व
यामात्राकृतार्थोहिवीरकोऽपिसुमध्यमे ॥ ९२ ॥ पुलस्त्यउवाच ॥ इत्युक्ताप्रेषयामासविजयांहर्षणोत्सुकाम् ॥ वीरकानयनायाशुदुहिताभूभृतःस
खीम् ॥ ९३ ॥ साऽवरुह्यत्वरायुक्ताप्रासादादम्बरस्पृशः ॥ गणपंगणमध्यस्थंसूर्यकोटिप्रवर्तनम् ॥ ९४ ॥ विजयोवाच ॥ एहिवीरकचापल्यात्त्वया
देवीप्रतोषिता ॥ त्वामाह्वयतिचेत्युक्तस्त्यक्त्वापाषाणखण्डनम् ॥ ९५ ॥ देव्याःसमीपमागच्छद्विजयानुगतःशनैः ॥ प्रासादशिखरोत्फुल्लरक्ता
म्बुजनिभद्युतिः ॥ ९६ ॥ तंदृष्ट्वाप्रस्थितानल्पस्वादुक्षीरपयोधरा ॥ ९७ ॥ गिरिजोवाच ॥ पिबक्षीरमिदंवत्ससुतंपिबयथेच्छकम् ॥ ९८ ॥ पुल
स्त्यउवाच ॥ उवाचदेवीसस्नेहंगिरामधुरवर्णया ॥ ९९ ॥ गिरिजोवाच ॥ एहिसद्योहिजातोऽसिमेपुत्रकोदेवदेवेनदत्तोऽधुनावीरक ॥
उक्त्वत्यङ्कआधायपर्यष्वजत्तंकपोलेचुचुम्बागराण्नन्दिनी ॥५००॥ मूर्ध्न्युपाघ्रायसंमार्ज्यगात्राणिचाभूषयामासदिव्यैःस्वयंभूषणैः ॥ किङ्किणीमेख
लानूपुरैःसम्मणिप्रोक्तकेयूरहारैरमूल्यैर्गुणैः ॥ १ ॥ कोमलैःपल्लवैश्चित्रितश्चारुभिर्मङ्गलैःकङ्कणैर्दिव्यमन्त्रोद्भवैः ॥ तस्यशुद्धैस्ततोभूरिभिश्चाकरो
न्मिश्रसिद्धार्थकैरङ्गरक्षाविधिम् ॥ २ ॥ एवमादायचोवाचकृत्वास्त्रजंमूर्ध्निगोरोचनापत्रभङ्गोज्ज्वलैः ॥ वत्सवत्साधुनाक्रीडसार्द्धंगणैरप्रमत्तोव्रजश्च
प्रवर्जंशनैः ॥ ३ ॥ व्यालमालाकुलाःशैलसानुद्रुमादन्तिभिर्भग्नशाखापरंभङ्गिनः ॥ जाह्नवीमण्डलक्षुब्धतोयाकुलंमाविशेथाव्रहुव्याघ्रजुष्टेवने ॥४॥

वत्ससङ्ख्येषुदुर्गेषुयद्वीरकपुत्रभावायतांस्वच्छचित्तोजनः ॥ प्रार्थितंभव्यमायातिभाविन्यसौभाव्यतांसोऽपिनिर्वर्त्यसर्वैर्गुणैः॥५॥पुलस्त्यउवाच ॥
एवमुक्तोऽनयावीरकोमातरंसस्मयन्नाहलीलावशाविष्टधीः ॥ एषमात्रास्वयंमेकृतःकङ्कणःपन्नकश्चित्रितःपाटलैर्बिन्दुभिः ॥ ६ ॥ चारुपुष्पैरियंमालती
भिःकृतामालिकामेशिरस्याहिताकोमला ॥ तोषयामीश्वरीमित्ययंसत्वरंचिन्तयित्वाऽव्रजद्द्वाद्यतःक्रीडनम् ॥ ७ ॥ स्वैर्गुणैःसंयुतोवीरकोहर्षितो
दक्षिणात्पश्चिमंपश्चिमादुत्तरम् ॥ उत्तरात्पूर्वमभ्येत्यसख्यायुताप्रेक्षतेतंगवाक्षान्तराद्वीरकम् ॥ ८ ॥ शैलपुत्रीवहिःक्रीडितारंजगत्स्नेहतःपुत्रलुब्धा
यतस्सोऽत्रकः॥मोहमायातियःस्वल्पवेत्ताजडोमांसविण्मूत्रसङ्घातदेहोद्वहः ॥ ९ ॥ द्रष्टुमभ्यन्तरंनाकवासेश्वरेष्विन्दुमौलिंप्रविष्टेषुकक्षान्तरम् ॥ वाह
नान्येवमारोहमाणास्ततोलोकपालास्त्रपूगंमुहूर्त्तावधि ॥५१०॥खङ्गएषोऽविखङ्गाकरोनिर्मलःकुन्तकःकस्यकेनाहतोन्नतनः ॥ नोभवेद्धस्तदण्डनर्किं
ब्रूमहेभीममूर्त्यङ्गणेनास्तिकृत्यंगिरौ ॥ ११ ॥ पाशएषोऽस्तितेनात्रकोवध्यतेमावृथालोकपालानुगास्तिष्ठत ॥ एवमेवैतदित्यब्रुवंस्तेतदावीक्ष्यदेवा
नुगंवीरकंरक्षकम् ॥ १२ ॥ प्राहदेवीवनेपर्वतेनिर्जराध्यग्निशालामुखेभूतलेभूतपाः ॥ निर्झराम्भोनिपातेषुनोमज्जतात्पुष्पजालावनद्धेषुधामस्वपि ॥
॥ १३ ॥ प्रोच्चनानाद्रिकुञ्जावग्राहेष्वथोमारुतास्फोटसंरक्षणेकामतः ॥ काञ्चनोत्तुङ्गशृङ्गावरोहक्षितौहैमरेणूत्करासङ्गपिङ्गद्युतिः ॥१४॥ खेचराणांवने
चापिरम्येबभौरूपसम्पत्प्रकारोगणोवासितुम् ॥ मन्दरेकन्दरेचारुवापीतटेकुन्दमन्दारपुष्पप्रवालाम्बुजे ॥ १५ ॥ सिद्धनारीभिरापीतरूपामृतंविस्तृते
नैत्रमात्रैरनुन्मेषिभिः ॥ वीरकंशैलपुत्रीनिमेषान्तरादस्मरत्पुत्रगृध्नुर्विनोदार्थिनी ॥१६॥सोऽपिताहक्क्षणावाप्तपुण्योदयोयोहिजन्मान्तरेऽस्यात्मजत्व
न्ततः ॥ क्रीडतस्तस्यतृप्तिःकथंजायतेयोऽपिभावाज्जगद्ध्वसातेजसा ॥ १७॥ कल्पितःप्रेक्षणंदिव्यगीतक्षणंनृत्यलोलैर्गणेशैःप्रवृत्यक्षणम् ॥ सिंहनादा
कुलेगण्डशैलेज्वलद्रत्नजालेबृहत्सालतालेक्षणम् ॥ १८ ॥ फुल्लनानातमालालिकालेक्षणंवृक्षमूलेविलोलोमरालेक्षणम् ॥ स्वल्पपङ्केजलेपङ्कजाङ्केक्षणं
मातुरङ्केशुभेनिष्कलङ्केक्षणम् ॥१९॥ परिक्रीडितेबाललीलाविसारीगणेशाधिपोदेवतानन्दकारी ॥ निकुञ्जेषुविद्याधरोद्गीतशीलपिनाकीवलीला
विलासैःसलीलः ॥ ५२० ॥ प्रकाश्यभुवनंगोभिस्ततोदिनकरेगते ॥ देशान्तरंतदापश्चाद्दूरस्थोधरणीधरः ॥२१॥मित्रत्वमस्यसुदृढंहृदयेद्योतयन्नि
व ॥ नित्यमाराधितोविप्रैःश्रीमान्विखनसःसुतः ॥ २२ ॥ नाकरोत्सवितुर्मेरुरुपकारंपतिष्यतः ॥ जनेष्वेषाव्यवस्थेतिश्रूयतेस्खलितोद्यवः ॥२३॥ ॥ १५०॥
दिनेनानुगतोभानुःस्वजनंपरिपूरयन् ॥ सन्ध्याबद्धाञ्जलिपुटामुनयोऽभिमुखारविम् ॥२४॥यावदध्यासतेशीघ्रंनिवार्योष्णाभिभाविताम्॥व्यजृम्भता
थलोकेऽस्मिन्क्रमाद्भैभावरंतमः ॥२५॥ कुटिलस्येवहृदयेकालुष्यंदूषयन्मनः ॥ ज्वलत्फणिफणारत्नदीपोद्द्योतिताभित्तिके ॥२६॥ शयनेशशिसङ्घात

रत्नवस्त्रोत्तरच्छदे ॥ नानारत्नद्युतिलसच्छक्रचापविडम्बके ॥ २७ ॥ रत्नैःकिङ्किणिजालेनलसन्मुक्ताकलापके ॥ कमनीयचलल्लीलावितानाच्छादिता
म्बरे ॥२८॥ मन्दरेमन्दसञ्चारंगतेगिरिसुतायुतः ॥ तस्थौगिरिसुताबाहुलतामिलितकन्धरः ॥२९॥शशिमौलिःसितज्योत्स्नास्फारपूरितगोचरः॥गिरि
जाप्यसितापाङ्गीनीलोत्पलदलच्छविः ॥ ५३० ॥ विभावर्याचसम्पृक्ताबभूवातीवगोमयी॥तामुवाचततोदेवःक्रीडाकेलिकलायुताम्॥३१॥ इतिश्रीपा
द्मपुराणेप्रथमेसृष्टिखण्डेगौरीविवाहवर्णनंनामपञ्चचत्वारिंशोऽध्यायः॥४५॥ शर्वउवाच॥ शरीरेममतन्वङ्गिसितेभास्यसितद्युतिः॥भुजङ्गीवासिताशुभ्रे
संश्लिष्टाचन्दनेतरौ ॥ १ ॥ चन्द्रातपेनसम्पृक्तारुधिराम्बरसंवृता ॥ रजनीवासितेपक्षेदृष्टिदोषंददासिमे ॥ २ ॥ पुलस्त्यउवाच ॥ इत्युक्तागिरिजाते
नमुक्तकण्ठापिनाकिनम् ॥ उवाचकोपरक्ताक्षीभ्रुकुटीविकृतानना ॥ ३ ॥ देव्युवाच ॥ स्वकृतेनजनःसर्वोजाड्येनपरिभूयते ॥ अवश्यमर्थीप्राप्नोति
खण्डनंशशिमण्डन ॥ ४ ॥ तपोभिर्दीर्घचरितैर्यात्वांप्रार्थितवत्यहम् ॥ तस्यामेनियतस्त्वेषह्यवमानःपदेपदे ॥ ५ ॥ नैवास्मिकुटिलाशर्वविषमान
चधूर्जटे ॥ सविषस्त्वंजगत्ख्यातोव्यक्तदोषाकराश्रयः ॥ ६ ॥ त्वंहिमुष्णासिदशनान्नेत्रहन्ताभगस्यच ॥ आदित्यस्त्वांविजानातिभगवान्द्वादशा
त्मकः ॥ ७ ॥ मूर्ध्निशूलंजनयसिस्वैर्दोषैर्मामधिक्षिपन् ॥ यस्त्वंमामात्थकृष्णेतिमहाकालोऽसिविश्रुतः ॥ ८ ॥ यास्याम्यहंपरित्यक्तुमात्मानंतपसा
गिरिम् ॥ जीवन्त्यानमयाकृत्यंधूर्तेनपरिभूतया ॥ ९ ॥ कापालिकेनक्षुद्रेणश्मशानेनित्यवासिना ॥ भूत्याविलिप्तस्वाङ्गेनमातृमध्यस्थचारिणा ॥
॥ १० ॥ पुलस्त्यउवाच ॥ निशम्यतस्यावचनंकोपतीक्ष्णाक्षरंहरः ॥ उवाचानिष्टसम्भ्रान्तःप्रचलेनेन्दुमौलिना ॥ ११ ॥ शर्वउवाच ॥ अगा
त्मजासिगिरिजेनाहंनिन्दापरस्तव ॥ चाटूक्तिबुद्ध्यातुमयाकृतउन्मादसंश्रयः॥१२॥ विकल्पःस्वस्थचित्तेतुगिरिजेनममक्रमात् ॥ यद्येवंकुपिताभीरु
तत्तवाहंनवैपुनः ॥ १३ ॥ नर्मवादीभविष्यामिजहिकोपंशुचिस्मिते ॥ शिरसाप्रणतेनैषरचितस्तेमयाञ्जलिः ॥ १४ ॥ विहीनोह्यपमानेननिन्दिते
नैतिविक्रियाम् ॥ असतांतुसतांनस्यान्मर्मस्पृष्टोनरःकिल ॥ १५॥ पुलस्त्यउवाच ॥ अनेकैश्चाटुभिर्देवीदेवेनप्रतिबोधिता ॥ कोपंतीव्रंनतत्याजसती
मर्मणिघट्टिता॥१६॥ अवष्टब्धमथाच्छिद्यवासःशङ्करपाणिना ॥ विपर्यस्तालकावेगाद्गन्तुमैच्छच्चशैलजा ॥ १७ ॥ तस्याव्रजन्त्याःकोपेनपुनराह
पुरान्तकः ॥१८॥ शर्वउवाच ॥ सत्यंसर्वैरवयवैस्तनोषिसदृशंपितुः ॥ हिमाचलस्यशृङ्गस्थमेघजालाकुलंमनः ॥ १९ ॥ तथादुरवगाह्येभ्यो
गहनोहितवाशयः॥काठिन्यमश्मसारेभ्योवनेभ्योबहुलंगता ॥२०॥ कुटिलत्वंनिम्नगाभ्योदुःसेव्यत्वंहिमादपि॥सङ्क्रान्तंसर्वमेवैतत्तन्वङ्गिहिमभूधरा
त् ॥ २१ ॥ पुलस्त्यउवाच ॥ इत्युक्तासापुनःप्राहगिरिशंशैलकन्यका ॥ कोपकम्पितमूर्द्धासाप्रस्फुरद्दशनच्छदा ॥ २२ ॥ उमोवाच ॥ स्याःसर्वं

दोषदानेननिन्दायांगुणिनोबलात् ॥ तवापिदुष्टसम्पर्कात्सङ्क्रान्तंसर्वमेवहि ॥ २३ ॥ व्यालेभ्योऽनेकजिह्वत्वंभस्मनोऽस्नेहवृत्तिता ॥ हृत्कालुष्यं
शशाङ्कोत्थंदुर्बोधत्वंविषादपि ॥ २४ ॥ किंचात्रबहुनोक्तेनअलंवाचांश्रमेणते ॥ श्मशानवासान्निर्भीस्त्वंनग्नत्वात्तवनत्रपा ॥ निर्घृणत्वंकपालित्वाद
यातेविगताचिरम् ॥ २५ ॥ पुलस्त्यउवाच ॥ इत्युक्त्वामन्दिरात्तस्मान्निर्जगामहिमाद्रिजा ॥ तस्यांव्रजन्त्यांदेवेश्यांगणैःकिलकिलाकृता ॥ २६ ॥
क्वमातर्गच्छसीत्युक्त्वारुदद्भिर्धावितंपुनः ॥ विष्टभ्यचरणौदेव्यावीरकोवाष्पगद्गदः ॥ २७ ॥ प्रोवाचमातःकिन्त्वेतत्क्वयासिकुपितातुरा ॥ अहंत्वाम
नुयास्यामिव्रजन्तींस्नेहवर्जिताम् ॥ २८ ॥ नोचेत्पतिष्येशिखराद्गिरेरस्यत्वयोज्झितः ॥ उन्नम्यवदनंदेवीदक्षिणेनतुपाणिना ॥ २९ ॥ उवाचवीरकं
मातात्वंशोकंपुत्रमाकृथाः ॥ शैलाग्रात्पतितुंनैवनचगन्तुंमयासह ॥ ३० ॥ युक्तंतेपुत्रगच्छामियेनकार्येणतच्छृणु ॥ कृष्णेत्युक्ताहरेणाहंस्तम्भिता
स्म्यवमानिता ॥ ३१ ॥ साहंतपःकरिष्यामियेनगौरीत्वमाप्नुयाम् ॥ एषस्त्रीलम्पटोदेवोयातायांमय्यनन्तरम् ॥ ३२ ॥ द्वाररक्षात्वयाकार्यानित्यंर
न्ध्रान्ववेक्षणम् ॥ यथानकाचित्प्रविशेद्योषित्तत्रहरान्तिकम् ॥ ३३ ॥ दृष्ट्वापरस्त्रियंचापिवदेथाममपुत्रक ॥ शीघ्रमेवकरिष्यामियथायुक्तमनन्तरम् ॥
॥ ३४ ॥ पुलस्त्यउवाच ॥ एवमस्त्वितिदेवेशींवीरकोवाचसाम्प्रतम् ॥ मातुराज्ञामृताह्लादप्लाविताङ्गोगतज्वरः ॥ ३५ ॥ जगामरक्षांसद्रष्टुंप्रणिपत्यतु
मातरम् ॥ देवीचापश्यदायान्तींसखींमातुर्विभूषिताम् ॥३६॥ कुसुमामोदिनींनामतस्यशैलस्यदेवताम् ॥ सापिदृष्ट्वागिरिसुतांस्नेहविक्लवमानसा ॥
॥ ३७ ॥ क्वपुत्रिगच्छसीत्युच्चैरालिङ्ग्योवाचदेवता ॥ सातस्याःसर्वमाचख्यौशङ्करात्कोपकारणम् ॥ ३८ ॥ पुनश्चोवाचगिरिजादेवतांमातृसंमि
ताम् ॥ ३९ ॥ उमोवाच ॥ नित्यंशैलाधिराजस्यदेवतात्वमनिन्दिते ॥ सर्वतःसन्निधानंतेमनसातीववत्सला ॥ ४० ॥ अतस्तुतेप्रवक्ष्यामियद्विधेयं
त्वयाम्बिके ॥ अन्यस्त्रीसम्प्रवेशस्तुत्वयारक्ष्यःप्रयत्नतः ॥ ४१ ॥ सरहस्येप्रयत्नेननिषव्यःसततंगिरौ ॥ पिनाकिनःप्रविष्टायांवक्तव्यंमेत्वयानघे॥
ततोऽहंसंविधास्यामियत्क्षमंतदनन्तरम् ॥ ४२ ॥ पुलस्त्यउवाच ॥ इत्युक्तातांतथेत्युक्त्वाजगामसागिरिंशुभा ॥ उमापिपितुरुद्यानंजगामाद्रिसुता
द्रुतम् ॥ ४३ ॥ अन्तरिक्षंसमाविश्यमेघमालाविलप्रभम् ॥ भूषणानिततोन्यस्यवृक्षवल्कलधारिणी ॥ ४४ ॥ ग्रीष्मेपञ्चाग्निसन्तप्तावर्षासुचजलोषि
ता ॥ वन्याहारानिराहाराशुष्कस्थण्डिलशायिनी ॥ ४५ ॥ एवंसाधयतीतत्रतपःसाचव्यवस्थिता ॥ ज्ञात्वागतांगिरिसुतांदैत्यस्तत्रान्तरेबली॥४६॥
अन्धकस्यसुतोहृष्टःपितुर्वधमनुस्मरन् ॥ देवान्सर्वान्विजित्याजौबकभ्रातारणोत्कटः ॥४७॥ आडिर्नामान्तरप्रेक्षीसततंचन्द्रमौलिनः ॥ आजगामाम
ररिपुःपुरंत्रिपुरघातिनः ॥४८॥ सतत्रागत्यददृशेवीरकंद्वार्यवस्थितम् ॥ विचिन्त्यसोऽपिचवरंदत्तंकमलयोनिना ॥ ४९ ॥ हतेकिलान्धकेदैत्येगिरिशे

नासुरद्विषा॥आडिश्चकारविपुलंतपःपरमदारुणम्॥५०॥ समागत्याब्रवीद्ब्रह्मातपसापरितोषितः॥किमाडेदानवश्रेष्ठतपसाप्राप्तुमिच्छसि ॥५१॥ब्रह्माण
माहदैत्यस्तुनिर्मृत्युत्वमहंवृणे॥५२॥ब्रह्मोवाच॥जातानामिहसंसारेविनामृत्युंनयुज्यते॥यतस्ततोऽपिदैत्येन्द्रमृत्युःप्राप्यश्शरीरिभिः ॥५३॥ पुलस्त्य
उवाच॥इत्युक्तोदैत्यसिंहस्तुप्रोवाचाम्बुजसम्भवम्॥५४॥ आडिरुवाच॥रूपस्यपरिवर्तोमेयदास्यात्पद्मसम्भव॥तदामृत्युर्ममभवेदन्यथात्वमरोऽस्म्य
हम् ॥५५॥ पुलस्त्यउवाच ॥इत्युक्तस्तुतथोवाचतुष्टःकमलसम्भवः॥ यदाद्वितीयोरूपस्यविवर्त्तस्तेभविष्यति॥५६॥तदातेभवितामृत्युरन्यथानभवि
ष्यति॥इत्युक्तोऽमरतांमेनेदैत्यसूनुर्महाबलः॥५७॥तस्मिन्कालेत्वसंस्मृत्यतद्वधोपायमात्मनः॥ प्रतिहर्तुर्दृष्टिपथेवीरकस्याभवंस्तदा॥५८॥भुजङ्गरूपी
रन्ध्रेणप्रविवेशदृशःपथम् ॥ परिहृत्यगणेशस्यदानवोरौद्रदुर्जयः ॥ ५९ ॥ अलक्षितोगणेशेनप्रविश्याथपरीतनुम् ॥ भुजङ्गरूपंसन्त्यज्यजग्राहाथम
हासुरः ॥६०॥ उमारूपंरमयितुंगिरिशंमूढचेतनः ॥ कृत्वामायामयंरूपमप्रतर्क्यंमनोहरम् ॥६१॥ सर्वैरवयवैःपूर्णंसर्वाभिज्ञानबृंहितम् ॥ कृत्वाभगा
न्तरेदन्तंदैत्योवज्रमयंदृढम् ॥६२॥ तीक्ष्णाग्रंबुद्धिमोहेनगिरिशंहन्तुमुद्यतः ॥ कृत्वोमारूपसंस्थानंगतोदैत्योहरान्तिकम् ॥६३॥ पापोरम्याकृतिश्चित्र
भूषणाम्बरसंयुतः ॥ तंदृष्ट्वागिरिशस्तुष्टस्तमालिङ्ग्यमहासुरम् ॥ ६४ ॥ मन्यमानोगिरिसुतांसर्वैरवयवान्तरैः ॥ अपृच्छत्साधुभावंतगिरिपु
त्रिनकृत्रिमम् ॥ ६५ ॥ यात्वंमदाशयंज्ञात्वाप्राप्तेहवरवर्णिनी ॥ त्वयाविरहितंशून्यंममस्थानंजगत्त्रयम् ॥ ६६ ॥ प्राप्ताप्रसन्नवदनेयुक्तमेवं
विधंत्वयि ॥ इत्युक्तोदानवेन्द्रस्तुतंवभाषेस्मयञ्शनैः ॥ ६७ ॥ सचाबुध्यदभिज्ञानैःप्राहत्रिपुरघातिनम् ॥ ६८ ॥ दैत्यउवाच ॥ या
तास्मितपसःकामाद्वरंलब्धुंहिमाचलम् ॥ रतिश्चतत्रमेनाभूत्ततःप्राप्तात्वदन्तिकम् ॥६९॥ पुलस्त्यउवाच॥इत्युक्तःशङ्करःशङ्कांचित्तेप्राप्तोविचारयन्॥
हृदयेनसमाधायदेवःप्रहसिताननः ॥ ७० ॥ कुपिताकुपितंबुद्धाप्रकृत्याचदृढव्रता ॥ अप्राप्तकामासंप्राप्ताकिमेतत्संविजानती ॥ ७१ ॥
इतिचिन्त्यहरस्तस्याअभिज्ञानंविचारयन् ॥ नापश्यद्वामपार्श्वेतुतदङ्कंपद्मलक्षणम् ॥ ७२ ॥ लोम्नामावर्तरचितंततोदेवःपिनाकधृत् ॥ बुद्ध्वा
तांदानवींमायामाकारंगूहयंस्ततः ॥ ७३ ॥ मेढ्रेदंष्ट्रास्त्रमादायदानवंतमसादयत् ॥ नचाबुध्यततद्वृत्तंवीरकोद्वाररक्षकः ॥ ७४ ॥ कुसुमामोदि
नंदृष्ट्वास्त्रीरूपंदानवेश्वरम् ॥ दूतेनमारुतेनाशुबोधिताहिमशैलजा ॥ ७५ ॥ श्रुत्वावायुमुखाद्देवीक्रोधरक्ताविलेक्षणा ॥ अपश्यद्वीरकंपुत्रंहृदयेनैव
दूयता ॥ ७६ ॥ देव्युवाच ॥ मातरंमांपरित्यज्ययस्मात्त्वंस्नेहविक्लवाम् ॥ विहितावसरःस्त्रीणांशङ्करस्यरहोविधौ ॥ ७७ ॥ तस्मात्तेमा
नुषेरूक्षाजडाहृदयवर्जिता ॥ गणेशाकारसदृशीशिलामाताभविष्यति ॥ ७८ ॥ निमित्तएषविख्यातोवीरकस्यसुतादरात् ॥ सम्भवेप्रक्रमे

चैवविचित्राख्यानसंशयः ॥७९॥ पुलस्त्यउवाच ॥ एवमुत्सृष्टशापायांगिरिपुत्र्यामनन्तरम् ॥ निर्जगाममुखात्क्रोधःसिंहरूपीमहाबलः ॥ ८० ॥
सतुसिंहःकरालास्यःसटाजटिलकन्धरः ॥ ऊर्ध्वप्रोद्धूतलाङ्गूलोदंष्ट्रोत्कटमुखावटः ॥ ८१ ॥ व्यादितास्योलम्बजिह्वःक्षामःकुक्षिवलादिषु ॥ अ
स्यास्येवर्तितुंदेवीव्यवस्थितवतीतदा ॥ ८२ ॥ ज्ञात्वामनोगतंतस्याभगवांश्चतुराननः ॥ आजगामाश्रमपदंसम्पदामाश्रयंयतः ॥ आगम्यो
वाचदेवेशोगिरिजांस्पष्टयागिरा ॥ ८३ ॥ ब्रह्मोवाच ॥ किंपुनःप्राप्तुकामासिकिमलभ्यंददामित ॥ विरम्यतामतिक्लेशात्तपसोऽस्मान्मदाज्ञया ॥
॥ ८४ ॥ पुलस्त्यउवाच ॥ तच्छ्रुत्वोवाचगिरिजागुरोर्गौरवयन्त्रितम् ॥ वाक्यंवाचाहरोद्गीर्णवर्णनिर्गमवाञ्छितम् ॥ ८५ ॥ देव्युवाच ॥ तपसादुष्क
रेणाप्तःपतिर्वैशङ्करोमया ॥ समांश्यामलवर्णेतिबहुशःप्रोक्तवान्हरः ॥ ८६ ॥ तस्मादहंकाञ्चनाभवर्णातन्नामसंयुता ॥ भर्तुर्भूतपतेरङ्गमेकतोनिर्विशंभ
वेत् ॥ ८७ ॥ पुलस्त्यउवाच ॥ तस्यास्तद्भाषितंश्रुत्वाप्रोवाचजगदीश्वरः ॥ ८८ ॥ ब्रह्मोवाच ॥ एवंभवत्वंभूयश्चभर्तुर्देहार्द्धचारिणी ॥ ८९ ॥
पुलस्त्यउवाच ॥ ततस्तत्याजतांकृष्णांफुल्लनीलोत्पलत्वचम् ॥ त्वक्चसाप्यभवद्भीमाघण्टाहस्तात्रिलोचना ॥ ९० ॥ नानाभरणसम्पूर्णापीतकौ
शेयधारिणी ॥ तामब्रवीत्ततोब्रह्मादेवींनीलाम्बुजत्विषम् ॥ ९१ ॥ ब्रह्मोवाच ॥ निशेभूधरजादेहसम्पर्कात्त्वंमदाज्ञया ॥ सम्प्राप्ताकृतकृत्यत्वमेकानं
शापुरोह्यसि ॥ ९२ ॥ यएषसिंहःप्रोद्धूतोदेव्याःक्रोधाद्वरानने ॥ सतेऽस्तुवाहनंदेविकेतौचास्तुमहाबलः ॥९३॥ गच्छविन्ध्याचलंतत्रसुरकार्यंकरि
ष्यसि ॥ पञ्चालोनामयक्षोऽयंयक्षलक्षपदानुगः॥दत्तस्तेकिङ्करोदेविमयामायाशतैर्युतः ॥९४॥ पुलस्त्यउवाच ॥ इत्युक्ताकौशिकीदेवीविन्ध्यशैलंज
गामह ॥ उमापिप्राप्तसङ्कल्पाजगामगिरिशान्तिकम् ॥९५॥ प्रविशन्तींतुतांद्वारादपहृत्यसमाहितः ॥ रुरोधवीरकोदेवींहेमवेत्रलताधरः ॥ तामुवा
चचकोपेनरूपेतुव्यभिचारिणीम् ॥ ९६ ॥ वीरकउवाच ॥ प्रयोजनंनतेऽत्रास्तिगच्छयावन्नभक्ष्यसे ॥ देव्यारूपधरोदैत्योदेवंवञ्चितुमागतः ॥ ९७ ॥
प्रविष्टोनचदृष्टोऽसौसचदेवेनघातितः ॥ घातितेचाहमाज्ञप्तोनीलकण्ठेनकोपिना ॥९८॥ द्वारत्वनवधानंतेयस्मात्पश्यामिवैततः ॥ भविष्यसिनमेद्वाः
स्थोवर्षपूगाननेकशः ॥ ९९ ॥ अतस्तेनात्रदास्यामिप्रवेशंगम्यतांद्रुतम् ॥ एकांमुक्त्वागिरिसुतांमातरंस्नेहवत्सलाम् ॥ प्रवेशंलभतेनान्यानारीकम
ललोचने ॥ १०० ॥ पुलस्त्यउवाच ॥ इत्युक्तातुतदादेवीचिन्तयामासचेतसा ॥ नारीनैवसदैतेयोवायुर्मेयामभाषत ॥ १ ॥ वृथैववीरकश्शप्तो
मयाक्रोधपरीतया ॥ अकार्यंक्रियतेमूढैःप्रायःक्रोधसमन्वितैः ॥ २ ॥ क्रोधेननश्यतेकीर्तिःक्रोधोहन्तिस्थिरांश्रियम् ॥ अपरिच्छिन्नतत्त्वार्थापु
त्रंशापितवत्यहम् ॥ ३ ॥ विपरीतार्थबुद्धीनांसुलभोविपदागमः ॥ सञ्चिन्त्यैवमुवाचेदंवीरकंप्रतिशैलजा ॥ सज्जलज्जाविकारेणवदनेनाम्बुजत्वि

षा ॥ ४ ॥ देव्युवाच ॥ अहंवीरकतेमातानतेऽस्तुमनसोभ्रमः ॥ शङ्करस्यास्मिदयितासुतातुहिनभूभृतः ॥ ५ ॥ ममगात्रच्छविभ्रान्त्या
माशङ्कांपुत्रधारय ॥ तुष्टेनगौरतादत्ताममेयंपद्मजन्मना ॥ ६ ॥ मयाशप्तोऽस्यविदितेवृत्तान्तेदैत्यनिर्मिते ॥ ज्ञात्वानारीप्रवेशंतुशङ्करेरहसि
स्थिते ॥ ७ ॥ ननिवर्तयितुंशक्यःशापःकिन्तुब्रवीमिते ॥ शीघ्रमेष्यसिमानुष्यात्सर्वकामसमन्वितः ॥ ८ ॥ पुलस्त्यउवाच ॥ शिरसातु
ततोवन्द्यमातरंपूर्णमानसः ॥ उवाचसाध्वींपूर्णेन्दुद्युतिंतुहिनशैलजाम् ॥ ९ ॥ वीरकउवाच ॥ नतसुरासुरमौलिलसन्मणिप्रवरकान्तिकरालि
नखाङ्घ्रिके ॥ नगसुतेशरणागतवत्सलेतवनमोऽवनतार्त्तिविनाशिनि ॥ ११० ॥ तपनमण्डलमण्डितकन्धरेपृथुसुवर्णनगद्युतिहारिके ॥ विषम
भङ्गविषङ्गमभीषितोगिरिसुतेभवतीमहमाश्रये ॥ ११ ॥ जगतिकाप्रणताभिमतंददौझटितिसिद्धिमृतेभवतीयथा ॥ जगतिकांप्रणमेच्छशि
शेखरोभुवनभृन्मुनयोभवतींयथा ॥ १२ ॥ विमलयोगविनिर्मितदुर्जयेसुतनुतुल्यमहेश्वरमण्डली ॥ विदलितान्धकबान्धवसंहतिःसुरवरैःप्रथमं
त्वमभिष्टुता ॥ १३ ॥ सितसटापटलोद्धतकन्धराभवमहामृगराजरयस्थिता ॥ विमलशक्तिमुखानलपिङ्गलायतभुजौघनिपिष्टमहासुरा ॥१४॥
निगदिताभुवनैरतिचण्डिकाजननिशुम्भनिशुम्भनिषूदिनी ॥ प्रणतचिन्तितदाभवदानवप्रशमनैकरतिस्तरसाभुवि॥१५॥वियतिवायुपथेज्वलनाकुलेऽ
वनितलेतवदेविचयद्वपुः ॥ तदजितेप्रतिमेप्रणमाम्यहंभुवनभाविनितेभववल्लभे ॥ १६ ॥ जलधयोललितोद्धतवीचयोहुतवहोद्युतिदग्धचराचरः॥
फणसहस्रभृतश्चभुजङ्गमास्त्वमभिधास्यसिमामभयङ्करा ॥ १७॥ भगवतिस्थिरभक्तजनाश्रयेप्रतिगतोभवतीचरणाश्रयम् ॥ करणजातमिहास्तुम
माद्यवैतवविलाससुखानुभवास्पदम्॥१८॥पुलस्त्यउवाच॥ सुप्रसन्नाततोदेवीवीरकस्येतिसंस्तुता ॥ प्रविवेशशुभंभर्तुर्भवनंभूधरात्मजा॥१९॥ द्वाःस्थोऽ
पिवीरकोदेवान्हरदर्शनकाङ्क्षिणः ॥ व्यसर्जयत्स्वकानेवगृहानादरपूर्वकम् ॥ १२० ॥ नास्त्यत्रावसरोदेवादेव्यासहवृषाकपिः ॥ निभृतःक्रीडतीत्यु
क्ताययुस्तेचयथागतम् ॥ २१ ॥ गतेवर्षसहस्रेतुदेवास्त्वरितमानसाः ॥ ज्वलनंचोदयामासुर्ज्ञातुंशङ्करचेष्टितम् ॥ २२ ॥ प्रविश्यपक्षिरन्ध्रेणशुक
रूपीहुताशनः ॥ ददर्शशयनेसर्वंरतांगिरिजयासह ॥ २३ ॥ ददर्शतंचदेवेशोहुताशंशुकरूपिणम् ॥ तमुवाचमहादेवःकिञ्चित्कोपसमन्वितः
॥ २४ ॥ शर्वउवाच ॥ निषिक्तमर्धंदेव्यांमेवीर्यंचशुकविग्रह ॥ लज्जयाविरतिश्चास्यत्वमर्धंपिबपावक ॥ २५ ॥ यस्मात्तुत्वत्कृतेविघ्नंतस्मात्त्व
य्युपपद्यतं ॥२६॥ पुलस्त्यउवाच ॥ इत्युक्तःप्राञ्जलिर्वह्निरपिबद्वीर्यमाहितम् ॥ तेनाप्लुतास्ततोदेवास्तन्मुखाऋभवोयतः ॥२७॥ विपाट्यजठरंतेषां
वीर्यंमाहेश्वरंततः ॥ निष्क्रान्तंतप्तहेमाभंवितंतेशङ्कराश्रमे ॥ २८ ॥ तस्मिन्सरोमहज्जातंविमलंबहुयोजनम् ॥ प्रोत्फुल्लहेमकमलंनानाविहगनादितम्

॥ २९ ॥ तच्छ्रुत्वातुसरोदेवीजातंहेममहाम्बुजम् ॥ जगामकौतुकाविष्टातत्सरःकम्बुकाम्बुजम् ॥ १३० ॥ तत्रकृत्वाजलक्रीडांतदब्जकृतशे
खरा ॥ उपविष्टाततस्तस्यतीरेदेवीसखीवृता ॥ ३१ ॥ पातुकामाचतत्तोयंस्वादुनिर्मलपङ्कजम् ॥ अपश्यत्कृत्तिकास्तास्सषडर्कद्युतिसन्निभाः
॥३२॥ पद्मपत्रेतुतद्वारिगृहीत्वाप्रस्थितागृहम् ॥ हर्षात्सोवाचपास्यामिपद्मपत्रेस्थितंपयः ॥३३॥ ततस्ताऊचुरखिलाःकृत्तिकाहिमशैलजाम् ॥३४॥
कृत्तिकाऊचुः ॥ दास्यामोदयितेगर्भेसम्भूतोयोभविष्यति ॥ सोऽस्माकमपिपुत्रःस्यादस्मन्नाताचवृत्तिमान्॥ त्रिषुलोकेषुविख्यातःसर्वेष्वपिशुभानने
॥३५॥ पुलस्त्यउवाच॥इत्युक्तोवाचगिरिजाकथंमद्गात्रसम्भवैः ॥ सर्वैरवयवैर्युक्तोभवतीभ्यःसुतोभवत्॥३६॥ ततस्तांकृत्तिकाऊचुर्वैधास्यामोऽस्यवै
वयम्॥ उत्तमान्युत्तमाङ्गानियद्येवंतुभविष्यति ॥३७॥ उक्तावैशैलजाप्राहभवत्वेवमनिन्दिताः॥ततस्तुहर्षसम्पूर्णाःपद्मपत्रस्थितंपयः॥ तस्यैददुस्तया
चापितत्पीतंक्रमशोजलम् ॥ ३८ ॥ पीतेतुसलिलेचैवतस्मिन्नेवक्षणेवरः ॥ विपाटचदेव्याश्चततोदक्षिणंकुक्षिमुद्गतः ॥ ३९ ॥ निश्चक्रामाद्भुतोबालोरो
गशोकविनाशनः ॥ प्रभाकरकरव्रातप्रकारप्रकरप्रभुः ॥ १४० ॥ गृहीतनिर्मलोदग्रशक्तिशूलाङ्कुशोऽनलः ॥ दीप्तोमारयितुंदैत्यानुत्थितःकनकच्छविः
॥ ४१ ॥ एतस्मात्कारणादेवकुमारश्चापिसोऽभवत्॥ वामंविदार्यनिष्क्रान्तस्ततोदेव्याःपुनःशिशुः॥४२॥ स्कन्दोऽथवदनाद्वह्नेःशुभ्रात्पङ्कदनोऽरिहा॥
कृत्तिकासलिलादेवशाखाभिःसविशेषतः ॥ ४३ ॥ शाखाःशिवाःसमाख्याताःषट्सुवक्त्रेषुविस्तृताः ॥ यतस्ततोविशाखोऽसौख्यातोलोकेषुषण्मुखः
॥४४॥ स्कन्दोविशाखःषड्वक्त्रःकार्तिकेयश्चविश्रुतः ॥ पक्षेचैत्रस्यबहुलेपञ्चदश्यांमहाबलौ ॥ ४५ ॥ सम्भूतावर्कसदृशौविशालेशरकानने ॥ सितपक्षे
तुपञ्चम्यांतथैतौपावकानलौ ॥ ४६ ॥ बालकाभ्यांचकारैकंसन्ध्यायामेवभूतये ॥ तस्यामेवततःषष्ठ्यामभिषिक्तोगुहःप्रभुः ॥ ४७ ॥ सर्वैरमरसङ्घातै
र्ब्रह्मोपेन्द्रेन्द्रभास्करैः॥गन्धमाल्यैःशुभैर्धूपैस्तथाक्रीडनकैरपि ॥ ४८ ॥ छत्रैश्चामरजालैश्चभूषणैश्चविलेपनैः ॥ अभिषिक्तोविधानेनयथावत्षण्मुखः
प्रभुः ॥ ४९ ॥ सुतामस्मैददौशक्रोदेवसेनेतिविश्रुताम् ॥ पत्न्यर्थंदेवदेवेशोददौविष्णुरथायुधम् ॥१५०॥ यक्षाणांदशलक्षाणिददावस्यधनाधिपः॥
ददौहुताशनस्तेजोददौवायुश्चवाहनम् ॥ ५१ ॥ ददौक्रीडनकंत्वष्टाकुक्कुटंकामरूपिणम् ॥ एवंसुरास्तुतेसर्वेपरिवारमनन्तकम् ॥ ५२ ॥ ददु
र्मुदितचेतस्काःस्कन्दायादित्यवर्चसे ॥ जानुभ्यामवनौस्थित्वासुरसङ्घास्तमस्तुवन् ॥ ५३ ॥ स्तोत्रेणानेनवरदंषण्मुखंमुख्यशःसुराः ॥ ५४ ॥ देवा
ऊचुः ॥ नमःकुमारायमहाप्रभायस्कन्दायचास्कन्दितदानवाय ॥ नवार्कबिम्बाप्रतिमप्रभायनमोऽस्तुगुह्यायगुहायतुभ्यम् ॥ ५५ ॥ नमोऽस्तु
तलोकभयापहायनमोऽस्तुतेलोककृपापराय ॥ नमोविशालामललोचनायनमोविशाखायमहाव्रताय ॥५६॥ नमोनमस्तेऽस्तुरणोत्कटायनमोमयूरो

ज्ज्वलवाहनाय ॥ नमोऽस्तुकेयूरधरायतुभ्यंनमोधृतोदग्रपताकिनेत ॥५७॥ नमःप्रभावप्रणतायतेऽस्तुनमोऽस्तुघण्टाधरधैर्यशालिने ॥ ५८ ॥ कुमा
रउवाच ॥ ॥ कंवःकामंप्रयच्छामिभवन्तोब्रूतनिर्वृताः॥ यद्यप्यसाध्यंकृत्यंनोहृदयेचिन्तितंचिरम् ॥ ५९ ॥ पुलस्त्यउवाच॥इत्युक्तास्तुसुरास्तेनप्रोचुः
प्रणतमौलयः ॥ सर्वएवमहात्मानंगुहंमुदितमानसाः ॥१६०॥ देवाऊचुः॥दैत्येन्द्रस्तारकोनामसर्वामरकुलान्तकृत् ॥वलवान्दुर्जयस्तीक्ष्णोदुराचारोऽ
तिकोपनः ॥ ६१ ॥ तमेवजहिदुर्धर्षंदैत्यंसर्वविनाशनम्॥ उपस्थितःकृत्यशेषोह्यस्माकंचभयावहः ॥६२॥ हिरण्यकशिपुश्चोग्रोह्यवध्योदेवतागणैः ॥
यज्ञघ्नःपापकर्मावैयेनब्रह्मापितापितः ॥ एतौहरस्वभद्रंतेतावकंचमहाबलम्॥पुलस्त्यउवाच॥६३॥एवमुक्तस्तथेत्युक्त्वासर्वामरपदानुगः ॥ जगामजग
तांनाथःस्तूयमानोऽमरेश्वरैः ॥६४॥ तारकस्यवधार्थायजगतांकण्टकस्यच ॥ ततश्चप्रेषयामासशक्रोलब्धसमाश्रयः ॥ दूतंदानवसिंहस्यपरुषाक्षरवा
दिनम् ॥ ६५ ॥ सतुगत्वाब्रवीद्दैत्यमभयोभीमदर्शनम् ॥६६॥ दूतउवाच ॥ शक्रस्त्वामाहदेवशोदैत्यकेतुंदिवस्पतिः ॥ तारकासुरतच्छत्त्याघटयस्व
यथेच्छया॥६७॥यज्जगज्ज्वलनोद्दीप्तंकिल्बिषंचत्वयाकृतम्॥तस्याहंसादकस्तेऽद्यराजास्मिभुवनत्रये ॥६८॥पुलस्त्यउवाच॥श्रुत्वैतदद्भुतंवाक्यंकोपसं
रक्तलोचनः ॥ उवाचदूतंदुष्टात्मानष्टप्रायविभूतिकः ॥ ६९ ॥ तारकउवाच ॥ दृष्टंतेपौरुषंशक्रशतशोऽथमहारणे ॥ निस्त्रपत्वान्नतेशान्तिर्विद्यते
शक्रदुर्मते ॥ १७० ॥ पुलस्त्यउवाच ॥ एवमुक्तेगतेदूतेचिन्तयामासदानवः ॥ नालब्धसंश्रयश्शक्रोवक्तमेवमिहार्हति ॥ ७१ ॥ जातःस्कन्दोऽधुना
शर्वाज्ज्ञायतेसमुपाश्रयः ॥ निमित्तौघांस्तदादुष्टान्सोऽपश्यन्नाशवेदिनः ॥ ७२ ॥ पांसुवर्षमसृक्पातंगगनादवनीतले ॥ वामनेत्रप्रकम्पंचवक्रशोषं
मनोभयम् ॥ ७३ ॥ स्वकानांवक्रपद्मानांम्लानतांचव्यलोकयत् ॥ दुष्टांश्चप्राणिनोरौद्रान्सोऽपश्यद्दुष्टवादिनः ॥ ७४ ॥ तदचिन्त्यैवदितिजो
न्यस्तचित्तोऽभवत्क्षणात् ॥ यावद्गजघटाघण्टाघनत्काररवोत्कटाम् ॥ ७५ ॥ तद्वत्तुरङ्गसङ्घातहेषोत्साहविभूषिताम् ॥ सैन्यैस्सेनान्तरोदग्रध्वजरा
जैर्विराजिताम् ॥ ७६ ॥ विमानैश्चाद्भुताकारैश्चलितामलचामरैः ॥ विभूषणपिनद्धांचकिन्नरोद्गीतनादिताम् ॥ ७७ ॥ नानानाकतरूत्फुल्लकुसुमा
पीडधारिणीम् ॥ विशोकाम्रपरिस्फारचर्मनिर्मलदर्शिनीम् ॥ ७८ ॥ विद्युत्पुष्टद्युतिधरांनानावाद्यविनादिताम् ॥ सेनांनाकसदांदैत्यःप्रासादस्थोव्य
लोकयत ॥७९॥सचिन्तयामासतदाकिञ्चिद्विभ्रान्तमानसः ॥ अपूर्वःकोभवेद्योद्धायोमयानविनिर्जितः ॥१८०॥ ततश्चिन्ताकुलोदैत्यःशुश्रावकटुका
क्षरम् ॥ सिद्धबन्दिभिरुद्घुष्टमिदंहृदयदारुणम् ॥ ८१ ॥ बन्दिनऊचुः ॥ जयातुलशक्तिदीधितिपञ्जरभुजदण्डप्रचण्डतररभससुरवदनकुमुदविका
सनविलासनेत्रकुमारवर ॥ ८२ ॥ जयदितिजकुलमहोदधिवडवानलमधुरमयूररथसुरमुकुटकोटिकुञ्चितचरणनखाङ्कुरमहासेन ॥ ८३ ॥ जयचलि

तललितचूडाकलापनवविमलकमलदण्डकान्तदैत्येशवंशदुःसहदावानल ॥ ८४ ॥ जयविशाखविभोजयबालसप्तवासरभुवनालिशोकशमनजय
सकललोकदितिसुतधुरन्धरनाशकस्कन्द ॥ ८५ ॥ पुलस्त्यउवाच ॥ श्रुत्वैतत्तारकःसर्वमुद्घुष्टंदेवबन्दिभिः ॥ सस्मारब्रह्मणोवाक्यंवधंबालादुप
स्थितम् ॥ ८६ ॥ स्मृत्वाधर्मौघविध्वंसीसदावीरपदानुगः ॥ मन्दिरान्निर्जगामाशुशोकग्रस्तेनचेतसा ॥ ८७ ॥ कालनेमिमुखादैत्याःसन्त्रस्ता
भ्रान्तचेतसः ॥ स्वेष्वनीकेषुचतदात्वराविस्मितचेतसः ॥ हिरण्यकशिपुंप्राहदानवानांधुरन्धरः ॥ ८८ ॥ तारकउवाच ॥ त्रपाकरंभवेन्मह्यंबलाद
स्मात्पलायनम्॥यद्यहंहन्तवेयामिसोऽपिवैकमलाश्रितः ॥ ८९ ॥ हत्वाहंबालकंचैनंदुस्स्पर्शःस्यामकारणम् ॥ यातधावतगृह्णीतयोजयध्वंवरू
थिनीम् ॥ १९० ॥ पुलस्त्यउवाच ॥ कुमारंतारकोदृष्ट्वाबभाषेभीषणाकृतिः ॥ ९१ ॥ तारकउवाच ॥ किंबालयोद्धुकामोऽसिक्रीडकन्दुकलीलया ॥
यैरासित्वंविसृष्टोऽत्रसङ्गरेतेहिभीरवः ॥ ९२ ॥ बालत्वादथतेबुद्धिरेवंस्वल्पार्थदर्शिनी ॥ कुमारोऽपितमग्रस्थंबभाषेहर्षवत्तमम् ॥ ९३ ॥ कुमार
उवाच ॥ शृणुतारकशास्त्रार्थइहनैवानिरूप्यते॥शस्त्रैरर्थानदृश्यन्तेसमरेनिर्भरंभव ॥९४॥ शिशुत्वंमावमंस्थामेशिशुःकष्टोभुजङ्गमः॥दुष्प्रेक्षोभास्करो
बालस्तथाहंदुर्जयःशिशुः॥अल्पाक्षरोनमन्त्रःकिंसस्फुरोदैत्यदृश्यते ॥९५॥ पुलस्त्यउवाच॥कुमारेप्रोक्तवत्येवंदैत्यश्चिक्षेपमुद्गरम्॥कुमारस्तंतुचिच्छेद
चक्रेणामोघवर्चसा ॥ ९६ ॥ ततश्चिक्षेपदैत्येन्द्रोभिन्दिपालमयोमयम् ॥ करेणतंचजग्राहकार्तिकेयोऽमरारिहा ॥ ९७ ॥ गदांमुमोचदैत्यायसमु
त्थायखरस्वनाम् ॥ तयाहतस्तंतोदैत्यश्चकम्पेऽचलराडिव ॥ ९८ ॥ मेनेचदुर्जयदैत्यस्तदाबालंसुदुःसहम् ॥ चिन्तयामासबुद्ध्यावैप्राप्तःकालोन
संशयः ॥९९॥ कम्पितंचसमालोक्यकालनेमिपुरोगमाः ॥ सर्वेदैत्येश्वराजघ्नुःकुमारंरणदारुणम् ॥ २०० ॥ सतैःप्रहारैरस्पृष्टस्तथाक्लेशैर्महाद्युतिः॥
सबालोबलिभिर्वेगैरयुध्यद्दानवैरण ॥ १ ॥ रणशौण्डाश्चदैत्येन्द्राःपुनर्जघ्नुःशिलीमुखैः ॥ कुमारंसमरेदैत्याबलिनोदेवकण्टकाः ॥ २ ॥ कुमार
स्यव्यथानाभूद्दैत्यास्त्रनिहतस्यतु ॥ प्राणान्तकरणंजातंदेवानांदानवाहवम् ॥ ३ ॥ देवान्निपीडितान्दृष्ट्वाकुमारःकोपमाविशत् ॥ ततोऽस्त्रैर्दारया
मासदानावानामनीकिनीम् ॥ ४ ॥ तैरस्त्रैर्निष्प्रतीकारैस्ताडितास्सुरकण्टकाः ॥ कालनेमिमुखाःसर्वेरणह्यासन्पराङ्मुखाः ॥ ५ ॥ विद्रुतेषुच
दैत्येषुप्रहतेषुसमन्ततः ॥ किन्नरोद्गारगीतैश्चहास्यसंन्यस्तचेतनः ॥ ६ ॥ जघ्नेकुमारंगदयानिष्टप्तकनकत्विषा ॥ शरैर्मयूरंचित्रैश्चचकारविमुखंरणे ॥ १९४ ॥
॥ ७ ॥ दृष्ट्वापराङ्मुखोदेवोमुक्तरक्तंस्ववाहनम् ॥ जग्राहशक्तिंविमलांरणेकनकभूषणाम् ॥ ८ ॥ बहुनाहेमकेयूररुचिरेणषडाननः ॥ ततोऽब्रवीन्महा
सेनस्तारकंदानवाधिपम् ॥९॥ महासेनउवाच॥तिष्ठतिष्ठसुदुर्बुद्धेयमलोकंविलोकय ॥ हतोह्यसिमयाशक्त्यास्मरस्वंदैत्यचेष्टितम् ॥ २१० ॥ पुलस्त्य

उवाच ॥ इत्युक्त्वातुततःशक्तिंमुमोचदितिजंप्रति ॥ साकुमारभुजोत्सृष्टातत्केयूररवानुगा ॥ ११ ॥ बिभेददैत्यहृदयंवज्रशैलेन्द्रकर्कशम् ॥
गतासुःसपपातोर्व्यांप्रलयेभूधरोयथा ॥ १२ ॥ विकीर्णमुकुटोष्णीषोविस्रस्ताखिलभूषणः ॥ तस्मिन्विनिहतेदैत्येदानवानांधुरन्धरे ॥१३॥ नाभूत्क
श्चित्तदादुःखीनरकेष्वपिपापकृत् ॥ स्तुवन्तःषण्मुखंदेवाःप्राक्रीडन्नागतस्मिताः ॥ १४ ॥ जग्मुःस्वानेवभुवनान्निरस्यासंस्तथोत्सुकाः ॥ ददुश्चापिवरं
सर्वेदेवास्तेषण्मुखायतु॥१५॥तुष्टाःसम्प्राप्तसर्वार्थास्सहसिद्धैस्तपोधनैः ॥१६॥ देवाऊचुः॥यःपठेत्स्कन्दसम्बन्धांकथामेतांमहामतिः॥शृणुयाच्छ्रावये
द्वापिसभवेत्कीर्तिमान्नरः ॥ १७ ॥ बह्वायुःसुभगःश्रीमान्कीर्तिमाञ्शुभदर्शनः ॥ भूतेभ्योनिर्भयश्चापिसर्वदुःखविवर्जितः ॥ १८ ॥ सन्ध्या
मुपास्ययःपूर्वांस्कन्दस्यचरितंपठेत् ॥ सयुक्तःकिन्नरैःसर्वैर्महाधनपतिर्भवेत् ॥ २१९ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेकुमारसंभवतारकवधोनाम
षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥ भीष्मउवाच ॥ इदानींश्रोतुमिच्छामिहिरण्यकशिपोर्वधम् ॥ नरसिंहस्यमाहात्म्यंतथापापविनाशनम्
॥ १ ॥ पुलस्त्यउवाच ॥ पुराकृतयुगेराजन्हिरण्यकशिपुःप्रभुः ॥ दैत्यानामादिपुरुषश्चकारसुमहत्तपः ॥ २ ॥ दशवर्षसहस्राणिदशवर्षशता
निच ॥ जलवासीसमभवत्स्नानमौनधृतव्रतः ॥ ३ ॥ वृतःशमदमाभ्यांचब्रह्मचर्येणचैवहि ॥ ब्रह्माप्रीतोऽभवत्तस्यतपसानियमेनच ॥ ४ ॥ ततः
स्वयम्भूर्भगवान्स्वयमागत्यतत्रहि ॥ विमानेनार्कवर्णेनहंसयुक्तेनभास्वता ॥ ५ ॥ आदित्यैर्वसुभिःसाध्यैर्मरुद्भिर्दैवतैस्सह ॥ रुद्रैर्विश्वसहायैश्चयक्ष
राक्षसपन्नगैः ॥ ६ ॥ दिग्भिश्चैवविदिग्भिश्चनदीभिःसागरैस्तथा ॥ नक्षत्रैश्चमुहूर्तैश्चखचरैश्चमहाग्रहैः ॥ ७ ॥ देवैर्ब्रह्मर्षिभिःसार्द्धंसिद्धैःसप्त
र्षिभिस्तथा ॥ राजर्षिभिःपुण्यकृद्भिर्गन्धर्वाप्सरसांगणैः ॥ ८ ॥ चराचरगुरुःश्रीमान्वृतःसर्वैर्दिवौकसैः ॥ ब्रह्माब्रह्मविदांश्रेष्ठोदैत्यंवचनमब्र
वीत् ॥ ९ ॥ ब्रह्मोवाच॥ प्रीतोऽस्मितवभक्तस्यतपसानेनसुव्रत ॥ वरंवरयभद्रंतेयथेष्टंकाममाप्नुहि ॥१०॥ हिरण्यकशिपुरुवाच ॥ नदेवासुरगन्धर्वा
नयक्षोरगराक्षसाः ॥ नमानुषाःपिशाचाश्चहन्युर्मांदेवसत्तम ॥ ११ ॥ ऋषयोमानवाःशापैर्नशपेयुःपितामह ॥ यदिमेभगवान्प्रीतोवरएषवृतोमया
॥ १२ ॥ नशस्त्रेणनचास्त्रेणगिरिणापादपेनवा ॥ नशुष्केणनचार्द्रेणनस्याद्वान्येनमेवधः ॥ १३ ॥ भवेयमहमेवार्कःसोमोवायुर्हुताशनः ॥ सलिलंचा
न्तरिक्षंचनक्षत्राणिदिशोदश॥१४॥अहंक्रोधश्चकामश्चवरुणोवासवोयमः ॥ धनदश्चधनाध्यक्षोयक्षःकिम्पुरुषाधिपः॥१५॥ ब्रह्मोवाच ॥ एषदिव्योवर
स्तातमयादत्तस्तवाद्भुतः ॥ सर्वकामप्रदोवत्सप्राप्स्यसित्वंनसंशयः ॥१६॥ पुलस्त्यउवाच ॥ एवमुक्त्वासभगवाञ्जगामाकाशमेवहि ॥ वैराजंब्रह्मस
दनंब्रह्मर्षिगणसेवितम् ॥ १७ ॥ ततोदेवाश्चगन्धर्वाऋषिभिःसहचारणाः ॥ वरप्रदानंश्रुत्वैवंपितामहमुपस्थिताः ॥ १८ ॥ देवाऊचुः ॥ वरप्रदानाद्भ

गवन्वधिष्यतिसनोऽसुरः ॥ तत्प्रसादश्चभगवन्वधोऽप्यस्यविचिन्त्यताम् ॥ १९ ॥ पुलस्त्यउवाच ॥ भगवान्सर्वभूतानामादिकर्त्तास्वयंप्रभुः ॥
स्रष्टाचहव्यकव्यानामव्यक्तप्रकृतिःपरः ॥ २० ॥ सर्वलोकहितंवाक्यंश्रुत्वादेवःप्रजापतिः ॥ आश्वासयामासतदासुशीतैर्वचनाम्बुभिः ॥२१॥ ब्रह्मो
वाच ॥ अवश्यंत्रिदशास्तेनप्राप्तव्यंतपसःफलम् ॥ तपसोऽन्तेऽस्यभगवान्वधंविष्णुःकरिष्यति ॥ २२ ॥ पुलस्त्यउवाच ॥ तच्छ्रुत्वाविबुधावाक्यं
सर्वेपङ्कजजाननात् ॥ स्वानिस्थानानिदिव्यानिविप्रजग्मुर्मुदान्विताः ॥ २३ ॥ लब्धमात्रेवरेसोऽथप्रजास्सर्वाअबाधत ॥ हिरण्यकशिपुर्दैत्योवर
दानेनगर्वितः ॥ २४ ॥ आश्रमेषुमहाभागान्मुनीन्वैशंसितव्रतान् ॥ सत्यधर्मपरान्दान्तान्धर्षयामासदानवः ॥ २५ ॥ देवांस्त्रिभुवनस्थांश्चपराजि
त्यमहासुरः ॥ त्रैलोक्यंवशमानीयस्वर्गेवसतिदानवः ॥ २६ ॥ यदावरमदोत्सिक्तश्चोदितःकालधर्मिणा ॥ यज्ञियानकरोद्दैत्यानयज्ञियांश्चदैवतान्
॥ २७ ॥ तदादैत्याश्चसाध्याश्चविश्वेचवसवस्तथा ॥ रुद्रादेवगणायक्षादेवद्विजमहर्षयः ॥ २८ ॥ शरण्यंशरणंविष्णुमुपतस्थुर्महाबलम् ॥ देवदेवं
यज्ञमयंवासुदेवंसनातनम् ॥ २९ ॥ देवाऊचुः ॥ नारायणमहाभागदेवास्त्वांशरणंगताः ॥ त्रायस्वजहिदैत्येन्द्रंहिरण्यकशिपुंप्रभो ॥ ३० ॥ त्वंहि
नःपरमोदातात्वंहिनःपरमोगुरुः ॥ त्वंहिनःपरमोदेवोब्रह्मादीनांसुरोत्तमः ॥ ३१ ॥ विष्णुरुवाच ॥ भयंत्यजध्वममराअभयंवोददाम्यहम् ॥ तथैव
त्रिदिवंदेवाःप्रतिपद्यतमाचिरम् ॥ ३२॥ एनंहिसगणंदैत्यंवरदानेनगर्वितम् ॥ अवध्यममरेन्द्राणांदानवेन्द्रंनिहन्म्यहम् ॥ ३३ ॥ पुलस्त्यउवाच ॥
एवमुक्त्वातुभगवान्विश्वपोविष्णुरव्ययः ॥ हिरण्यकशिपुस्थानंजगामहरिरीश्वरः ॥ ३४ ॥ तेजसाभास्कराकारःशशीकान्त्येवचापरः ॥ नरस्यकृत्वा
र्धतनुंसिंहस्यार्द्धतनुंतथा ॥३५॥ नारसिंहेनवपुषापाणिंसङ्गृह्यपाणिना ॥ ततोददर्शविस्तीर्णांदिव्यांरम्यांमनोरमाम् ॥ ३६ ॥ सर्वकामयुतांशुभ्रांहिर
ण्यकशिपोःसभाम् ॥ विस्तीर्णांयोजनशतंशतमध्यर्द्धमायताम् ॥ ३७ ॥ वैहायसींकामगमांपञ्चयोजनमुच्छ्रिताम् ॥ जराशोकक्षमापेतांनिष्प्रक
म्प्यांशिवांसुखाम् ॥३८॥ वेश्मासनवतींरम्यांज्वलन्तीमिवतेजसा॥अन्तःसलिलसंयुक्तांविहितांविश्वकर्मणा ॥३९॥ दिव्यवर्णमयैर्वृक्षैःफलपुष्पप्रदैर्यु
ताम् ॥ नीलपीतासितश्यामैःश्वेतैर्लोहितकैरपि ॥ ४० ॥ अवदातैस्तथागुल्मैरक्तमञ्जरिधारिभिः ॥ सिताभ्रघनसङ्काशांप्लुवन्तींचददर्शसः ॥ ४१ ॥
रश्मिमतीस्वभावेनदिव्यगन्धमनोरमा॥सुसुखानचदुःखासानशीतानचघर्मदा ॥४२॥ नक्षुत्पिपासेग्लानिंवाप्राप्यतांप्राप्नुवन्तिते ॥ नानारूपैरुपकृता
सुचित्रैश्चसुभास्वरैः ॥४३॥ अतिचन्द्रातिसूर्यातिशिखिकान्तिस्वयम्प्रभा॥दीप्यतेनाकपृष्ठस्थाभासयन्तीविभासुरा ॥४४॥ सर्वेचकाशिरेतस्यांमुदि
ताश्चैवमानुषाः ॥ रसवच्चप्रभूतंचभक्ष्यभोज्यान्नमुत्तमम् ॥४५॥ पुण्यगन्धाःस्रजश्चापिनित्यकालफलाद्रुमाः ॥ उष्णेशीतानितोयानिशीतेचोष्णानि

सन्तिवै ॥ ४६ ॥ पुष्पिताग्रान्महाशाखान्प्रवालाङ्कुरधारिणः ॥ लतावितानसंछन्नान्कल्पानैक्षिष्टसप्रभुः ॥ ४७ ॥ गन्धवन्तिचपुष्पाणिरसवन्ति फलानिच ॥ तानिशीतानिचोष्णानितत्रतत्रसरांसिच ॥४८॥ अपश्यद्भूपतीर्थानिसभायांतस्यसप्रभुः ॥ नलिनैःपुण्डरीकैश्चशतपत्रैःसुगन्धिभिः ॥ ॥ ४९ ॥ रक्तैःकुवलयैश्चैवकह्लारैरुत्पलैस्तथा॥नानाश्चर्यसमोपेतैःपुष्पैरन्यैश्चसुप्रियैः ॥ ५० ॥ कारण्डवैश्चक्रवाकैःसारसैःकुररैरपि ॥ विमलस्फ टिकाभानिपाण्डुरच्छदनैर्द्विजैः ॥ ५१ ॥ बहुहंसोपगीतानिसारसारुतानिच ॥ गन्धयुक्तालतास्तत्रपुष्पमञ्जरिधारिणीः ॥ ५२ ॥ दृष्टवान्भग वान्हृष्टःखदिरान्वेतसार्जुनान् ॥ चूतानिम्बानागवृक्षाःकदम्बाबकुलाधवाः ॥ ५३ ॥ प्रियङ्गवःपाटलाख्याःशाल्मल्यस्सहरिद्रवाः ॥ शालास्ताला स्तमालाश्चचम्पकाश्चमनोरमाः ॥ ५४ ॥ तथैवान्येव्यराजन्तसभायांपुष्पिताद्रुमाः ॥ एलाककुभकङ्कोललवलीकर्णपूरकाः ॥ ५५ ॥ मधुकाःको विदाराश्चबहुतालसमुच्छ्रयाः ॥ अञ्जनाशोकपर्णासावहवश्चित्रकाद्रुमाः ॥ ५६ ॥ वरुणाश्चपलाशाश्चपनसास्सहचन्दनैः ॥ नीलास्सुमनसश्चैवनी पाश्चाश्वत्थतिन्दुकाः ॥५७ ॥ पारिजाताश्चतरवोमल्लिकाभद्रदारवः ॥ अटरूषाःपीलुकाश्चतथाचैवैलवालुकाः ॥ ५८ ॥ मन्दारकाःकुरबकाःपुन्ना गाःकुटजास्तथा ॥ रक्ताःकुरवकाश्चैवनीलाश्चागरुभिःसह ॥ ५९ ॥ किंशुकाश्चैवभव्याश्चदाडिमावीजपूरकाः ॥ कालेयकादुकूलाश्चहिङ्गवस्तै लवर्त्तिकाः ॥६०॥ खर्जूरानालिकेराश्चहरीतकमधूककाः॥सप्तपर्णाश्चबिल्वाश्चसयावाश्चशरावताः ॥६१॥ असनाश्चतमालाश्चनानागुल्मसमावृताः ॥ लताश्चविविधाकाराःपुष्पपत्रफलोपगाः ॥ ६२ ॥ एतेचान्येचबहवस्तत्रकाननजाद्रुमाः ॥ नानापुष्पफलोपेताव्यराजन्तसमन्ततः ॥६३॥ चकोराः शतपत्राश्चमत्तकोकिलशारिकाः ॥ पुष्पितान्पुष्पिताग्रांश्चसम्पतन्तिमहाद्रुमान् ॥ ६४ ॥ रक्तपीतारुणास्तत्रपादपाग्रगताःखगाः ॥ परस्परम वेक्षन्तप्रहृष्टाजीवजीवकाः ॥ ६५ ॥ तस्यांसभायांदैत्येन्द्रोहिरण्यकशिपुस्तदा ॥ आसीनआसनेचित्रदशनल्वेप्रमाणतः ॥ ६६ ॥ दिवाकरनिभे दिव्येदिव्यास्तरणसंस्तृते ॥ हिरण्यकशिपुर्दैत्यआस्तेज्वलितकुण्डलः ॥ ६७ ॥ उपचेरुर्महादैत्याहिरण्यकशिपुंतदा ॥ दिव्यतालानिगीता निजगुर्गन्धर्वसत्तमाः ॥ ६८ ॥ विश्वाचीसहजन्याचप्रम्लोचतिचपूजिता ॥ दिव्याथसौरभेयीचसमीचीपुञ्जिकस्थली ॥ ६९ ॥ मिश्रकेशी चरम्भाचचित्रभाश्रुतिविभ्रमा ॥ चारुनेत्राघृताचीचमेनकाचोर्वशीतथा ॥ ७० ॥ एतास्सहस्रशश्चान्यानृत्यगीतविशारदाः ॥ उपातिष्ठन्तरा जानंहिरण्यकशिपुंप्रभुम् ॥ ७१ ॥ उपासतेऽदितेःपुत्राःसर्वेलब्धवरास्तथा ॥ बलिर्विरोचनस्तत्रनरकःपृथिवीसुतः ॥ ७२ ॥ प्रह्लादोविप्रचित्ति श्चगविष्ठश्चमहासुरः ॥ सुरहन्तादुःखकर्तासुमनास्सुमतिस्तथा ॥ ७३ ॥ घटोदरोमहापार्श्वःक्रथनःपिठरस्तथा ॥ विश्वरूपस्सुरूपश्चविश्व

कायोमहाबलः ॥ ७४ ॥ दशग्रीवश्चवालीचमेघवासामहासुरः ॥ घटाभोविटरूपश्चज्वलनश्चेन्द्रतापनः ॥ ७५ ॥ दैत्यदानवसङ्घास्तेसर्वेज्व
लितकुण्डलाः ॥ स्रग्विणोवाग्मिणःसर्वेसर्वेचचरितव्रताः ॥ ७६ ॥ सर्वेलब्धवराःशूरास्सर्वेविहितमृत्यवः ॥ एतेचान्येचबहवोहिरण्यकशिपुंप्रभुम् ॥
॥ ७७ ॥ उपासतेमहात्मानंसर्वेदिव्यपरिच्छदाः ॥ विमानैर्विविधाकारैर्भ्राजमानैरिवाग्निभिः ॥ ७८ ॥ महेन्द्रवपुषःसर्वेविचित्राङ्गदबाहवः ॥
भूषिताङ्गादितेःपुत्रास्तमुपासतसर्वतः ॥ ७९ ॥ ऐश्वर्यंदैत्यसिंहस्ययथातस्यमहात्मनः ॥ नश्रुतंनैवदृष्टंचकस्यापिभुवनत्रये ॥ ८० ॥ रज
तकनकचित्रवेदिकायांपरिकृतरत्नविचित्रवीथिकायाम् ॥ सददर्शमृगाधिपःसभायांसुरुचिरजालगवाक्षशोभितायाम् ॥ ८१ ॥ कनकवलय
हारभूषिताङ्गंदितितनयंसमृगाधिपोददर्श ॥ दिवसकरकरप्रभंज्वलन्तंदितिजसहस्रशतैर्निषेव्यमाणम् ॥ ८२ ॥ ततोदृष्ट्वामहाभागंकालचक्रमि
वागतम् ॥ नारसिंहवपुश्छन्नंभस्मच्छन्नमिवानलम् ॥ ८३ ॥ हिरण्यकशिपोःपुत्रःप्रह्लादोनामवीर्यवान् ॥ दिव्येनवपुषासिंहमपश्यद्देवमागतम् ॥
॥ ८४ ॥ तंदृष्ट्वारुक्मशैलाभामपूर्वांतनुमाश्रितम् ॥ विस्मितादानवाःसर्वेहिरण्यकशिपुश्चसः ॥ ८५ ॥ प्रह्लादउवाच ॥ महाराजमहाबा
होदैत्यानामादिसम्भव ॥ नश्रुतंनैवमेदृष्टंनारसिंहमिदंवपुः ॥ ८६ ॥ अव्यक्तंपरमंदिव्यंकिमिदंरूपमागतम् ॥ दैत्यान्तकरणंघोरंशंसतीवमनो
मम॥८७॥अस्यदेवाःशरीरस्थाःसागराःसरितस्तथा ॥ हिमवान्वारियात्रश्चयेचान्येकुलपर्वताः ॥ ८८ ॥ चन्द्रमास्सहनक्षत्रैरादित्योरश्मिभिःसह ॥
धनदोवरुणश्चैवयमःशक्रःशचीपतिः ॥ ८९ ॥ मरुतोदेवगन्धर्वाऋषयश्चतपोधनाः ॥ नागायक्षाःपिशाचाश्चराक्षसाभीमविक्रमाः ॥ ९० ॥
ब्रह्मादेवाःपशुपतिर्ल्ललाटस्थाभ्रमन्तिहि ॥ स्थावराणिचसर्वाणिजङ्गमानितथैवच ॥ ९१ ॥ भवांश्चसहितोऽस्माभिःसर्वैर्दैत्यगणैर्वृतः ॥ विमान
शतसङ्कीर्णासर्वायाभवतःसभा ॥ ९२ ॥ सर्वंत्रिभुवनंराजल्लोकधर्मश्चशाश्वतः ॥ दृश्यतेनरसिंहेऽस्मिंस्तथेदंनिखिलंजगत् ॥ ९३ ॥
प्रजापतिश्चात्रमनुर्महात्माग्रहाश्चयोगाश्चमहीनभश्च ॥ उत्पातकालश्चधृतिर्मतिश्चरतिश्चसत्यंचतपोदमश्च ॥ ९४ ॥ सनत्कुमारश्चमहानुभावोविश्वे
चदेवाऋषयश्चसर्वे ॥ क्रोधश्चकामश्चतथैवहर्षोदर्पश्चमोहःपितरश्चसर्वे ॥ ९५ ॥ पुलस्त्यउवाच ॥ प्रह्लादस्यवचःश्रुत्वाहिरण्यकशिपुःप्रभुः ॥ उवाच
दोनवान्सर्वान्गणांश्चसगणाधिपः ॥ ९६ ॥ हिरण्यकशिपुरुवाच ॥ मृगेन्द्रोगृह्यतामेषअपूर्वांतनुमास्थितः ॥ यदिवासंशयःकश्चिद्वध्यतांवनगोचरः
॥९७॥ पुलस्त्यउवाच ॥ तेदानवगणास्सर्वेमृगेन्द्रंभीमविक्रमम् ॥ परिक्षिपन्तोमुदितास्त्रासयामासुरोजसा ॥९८॥ सिंहनादंविमुच्याथनरसिंहोमहा
बलः ॥ बभञ्जतांसभांसर्वांव्यादितास्यइवान्तकः ॥ ९९ ॥ सभायांभज्यमानायांहिरण्यकशिपुःस्वयम् ॥ चिक्षेपास्त्राणिसिंहस्यरोषव्याकुल

लोचनः ॥ १०० ॥ सर्वास्त्राणामथश्रेष्ठंदण्डमस्त्रंसुदारुणम् ॥ कालचक्रंतथाघोरंविष्णुचक्रंतथापरम् ॥ १ ॥ पैतामहंमहात्युग्रंत्रैलोक्यनिर्मि
तंमहत् ॥ विचित्रामशनिंचवशुष्काद्रचाशनिद्वयम् ॥ २ ॥ रौद्रन्तथोग्रशूलंचकङ्कालंमुसलंतथा ॥ अस्त्रंब्रह्मशिरश्चैवब्राह्ममस्त्रंतथैवच ॥ ३ ॥
नारायणास्त्रमैन्द्रंचआग्नेयंशैशिरंतथा ॥ वायव्यंमथनंचैवकपालमथकिङ्करम् ॥ ४ ॥ तथाप्रतिहतांशक्तिंक्रौञ्चमस्त्रंतथैवच ॥ मोहनंशोषणंचैव
सन्तापनविलापने ॥ ५ ॥ कम्पनंशातनंचैवमहास्त्रंचैवरोधनम् ॥ कालमुद्गरमक्षोभ्यंतापनंचमहाबलम् ॥ ६ ॥ संवर्तनंमोहनंचतथामायाधरंवर
म् ॥ गान्धर्वमस्त्रंदयितमसिरत्नंचनन्दकम् ॥ ७ ॥ प्रस्वापनंप्रमथनंवारुणंचास्त्रमुत्तमम् ॥ अस्त्रंपाशुपतंचैवयस्याप्रतिहतागतिः ॥ ८ ॥
एतान्यस्त्राणिदिव्यानिहिरण्यकशिपुस्तदा ॥ असृजन्नरसिंहस्यदीप्तस्याग्नेरिवाहुतिम् ॥ ९ ॥ अस्त्रैःप्रज्वलितैःसिंहमावृणोदसुरोत्तमः ॥ वि
वस्वान्घर्मसमयेहिमवन्तमिवांशुभिः ॥ ११० ॥ सह्यमर्षानिलोद्धूतोदैत्यानांसैन्यसागरः ॥ क्षणेनाप्लावयत्सर्वंमैनाकमिवसागरः ॥ ११ ॥ प्रा
सैःपाशैश्चखड्गैश्चगदाभिर्मुसलैस्तथा ॥ वज्रैरशनिभिश्चैवबहुशाखैर्महाद्रुमैः ॥ १२ ॥ मुद्गरैःकूटपाशैश्चशिलोलूखलपर्वतैः ॥ शतघ्नीभि
श्चदीप्ताभिर्दण्डैरपिसुदारुणैः ॥ १३ ॥ तेदानवाःपाशगृहीतहस्तामहेन्द्रतुल्याशनितुल्यवेगाः ॥ समन्ततोऽभ्युद्यतबाहुकायाःस्थिताःसशी
र्षाइवनागपोताः ॥ १४ ॥ सुवर्णमालाकुलभूषिताङ्गाःसुतीक्ष्णदंष्ट्राकुलवक्त्रगर्ताः ॥ स्फुरत्प्रभास्तेचसशृङ्गदेहाश्चीनांशुकाभान्तियथैवहं
साः ॥ १५ ॥ सोऽसृजद्दानवोमायामग्निवायुसमीरितम् ॥ तमिन्द्रस्तोयदैःसार्धंसहस्राक्षोमहाद्युतिः ॥ १६ ॥ महतातोयवर्षेणश
मयामासपावकम् ॥ तस्यांप्रतिहतायांतुमायायांयुधिदानवः ॥ १७ ॥ असृजद्घोरसङ्काशंतमस्तीव्रंसमन्ततः ॥ तमसासंवृतेलोकेदैत्ये
ष्वात्तायुधेषुच ॥ १८ ॥ स्वतेजसापरिवृतोदिवाकरइवोद्गतः ॥ त्रिशिखांभ्रुकुटीमस्यददृशुर्दानवारणे ॥ १९ ॥ ललाटस्थांत्रिकू
टस्थांगङ्गांत्रिपथगामिव ॥ ततःसर्वासुमायासुहतासुदितिनन्दनाः ॥ १२० ॥ हिरण्यकशिपुंदैत्याविषण्णाश्शरणंययुः ॥ ततःप्रज्व
लितःक्रोधात्प्रदहन्निवतेजसा ॥ २१ ॥ तस्मिन्क्रुद्धेतुदैत्येन्द्रेतमोभूतमभूज्जगत ॥ आवहःप्रवहश्चैवविवहोऽथसमीरणः ॥ २२ ॥ परावह
स्संवहश्चउद्वहश्चमहाबलः ॥ तथापरिवहःश्रीमानुत्पातभयशंसिनः ॥ २३ ॥ इत्येवंक्षुभिताःसप्तमरुतोगगनेचराः ॥ येग्रहास्सर्वलोकस्यक्षयेप्रा
दुर्भवन्तिहि ॥ २४ ॥ तेसर्वेगगनेदृष्टाव्यचरंश्चयथासुखम् ॥ अयोगतश्चाप्यचरद्योगंनिशिनिशाचरः ॥ २५ ॥ सग्रहःसहनक्षत्रैस्तारापतिरिंदम
॥ विवर्णतांचभगवान्गतोदिविदिवाकरः ॥ २६ ॥ कृष्णःकबन्धश्चतदालक्ष्यतेसुमहान्दिवि ॥ असृजच्चासितांसूर्योधूमवर्त्तांविभावसुः ॥ २७ ॥

गगनस्थश्चभगवानभीक्ष्णपरिविष्यते ॥ सप्तधूमनिभाघोराःसूर्यादिविसमुत्थिताः ॥ २८ ॥ सोमस्यगगनस्थस्यग्रहास्तिष्ठन्तिशृङ्गगाः ॥
वामेचदक्षिणेचैवस्थितौशुक्रबृहस्पती ॥ २९ ॥ शनैश्चरोलोहिताङ्गोलोहिताङ्गसमद्युतिः ॥ समंसमधिरोहन्तसर्वेवैगगनेचराः ॥ १३० ॥ शृङ्गा
णिशनकैर्घोरायुगान्तावर्त्तनग्रहाः ॥ चन्द्रमाश्चसनक्षत्रोग्रहैःसहतमोनुदः ॥ ३१ ॥ चराचरविनाशायरोहिणींनाभ्यनन्दत ॥ गृहीतोराहुणाचन्द्र
उल्काभिरभिहन्यते ॥३२॥ उल्काःप्रज्वलिताश्चन्द्रेव्यचरन्तयथासुखम् ॥ देवानामधिपोदेवःसोऽप्यवर्षतशोणितम् ॥ ३३ ॥ अपतद्गगनादुल्कावि
द्युद्रूपामहास्वना ॥ अकालेचद्रुमास्सर्वेपुष्प्यन्तिचफलन्तिच ॥ ३४ ॥ लताश्चसफलाःसर्वायाआहुर्दैत्यनाशिकाः ॥ फलेफलान्यजायन्तपुष्पेपु
ष्पंतथैवच ॥ ३५ ॥ उन्मीलन्तिनिर्मीलन्तिहसन्तिप्ररुदन्तिच ॥ विक्रोशन्तिचगम्भीरंधूमायन्तेज्वलन्तिच ॥ ३६ ॥ प्रतिमास्सर्वदेवानां
कथयन्त्योमहद्भयम् ॥ आरण्यैःसहसंसृष्टाग्राम्याश्चमृगपक्षिणः ॥ ३७ ॥ चुक्रुशुर्भैरवंतत्रमृगयुद्धउपस्थिते ॥ नद्यश्चप्रतिकूलाःप्रवहन्तिकलुषो
दकाः ॥ ३८ ॥ नप्राकाशन्तचदिशोरक्तरेणुसमाकुलाः ॥ वानस्पत्यानपूज्यन्तेपूजनार्हाःकथञ्चन ॥ ३९ ॥ वायुवेगेनहन्यन्तेभज्यन्तेप्रणमन्तिच॥
तथाचसर्वभूतानांछायानपरिवर्त्तते ॥ १४० ॥ अपरेणगतेसूर्येसलोकानांयुगक्षय ॥ तदाहिरण्यकशिपोर्दैत्यस्योपरिवेश्मनः ॥ ४१ ॥ भाण्डा
गारायुधागारेनिविष्टमभवन्मधु ॥ असुराणांविनाशायसुराणांविजयायच ॥ ४२ ॥ दृश्यन्तेविविधोत्पाताघोरघोरनिदर्शनाः ॥ एतेचान्येचबहवो
घोररूपाःसमुत्थिताः ॥ ४३ ॥ दैत्येन्द्रस्यविनाशायदृश्यन्तेरणशंसिनः ॥ मेदिन्यांकम्पमानायांदैत्येन्द्रेणमहात्मना ॥ ४४ ॥ महीधरानागगणा
निपेतुरमितौजसः॥विषज्वालाकुलैर्वक्त्रैर्विमुञ्चन्तोहुताशनम् ॥४५॥ चतुःशीर्षाःपञ्चशीर्षाःसप्तशीर्षाश्चपन्नगाः॥वासुकिस्तक्षकश्चैवकार्कोटकधनञ्जयौ
॥ ४६ ॥ एलामुखःकालियश्चमहापद्मश्चवीर्यवान् ॥ सहस्रशीर्षश्शुद्धाङ्गोहेमतालध्वजःप्रभुः ॥ ४७ ॥ शेषोऽनन्तोमहानागोह्यप्रकम्प्यश्चकम्पिताः॥
दीप्यन्तेऽन्तर्जलस्थानिपृथिवीविवराणिव ॥ ४८ ॥ सप्तदैत्येन्द्रकोपेनकम्पितानिसमन्ततः ॥ नानातेजोधराश्चापिपातालतलचारिणः ॥ ४९ ॥
पातालेसहसाक्षुब्धेदुष्प्रकम्प्याःप्रकम्पिताः ॥ हिरण्यकशिपुर्दैत्यस्तदासंस्पृष्टवान्महीम् ॥ १५० ॥ सन्दष्टौष्ठपुटःक्रुद्धोवराहइवपूर्वजः ॥ गङ्गाभा
गीरथीचैवकौशिकीसरयूरपि ॥ ५१ ॥ यमुनाचाथकावेरीकृष्णावेणीचनिम्नगा ॥ तुङ्गाभद्रामहावेगानदीगोदावरीतथा ॥५२॥ चर्मण्वतीचसिन्धुश्च
तथानदनदीपतिः ॥ मेलकप्रभवश्चैवशोणोमणिनिभोदकः ॥ ५३ ॥ नर्मदाचशुभस्रोतास्तथावेत्रवतीनदी ॥ गोमतीगोकुलाकीर्णातथापूर्वासरस्वती
॥ ५४ ॥ महाकालमहीचैवतमसापुष्पवाहिनी ॥ जम्बूद्वीपंरत्नवच्चसर्वरत्नोपशोभितम् ॥५५॥ सुवर्णपुटकंचैवसुवर्णाकरमण्डितम् ॥ महानदश्च

लौहित्यश्शैलः काञ्चनशोभितः ॥ ५६ ॥ पत्तनंकोशकाराणांकशिंचरजताकरम् ॥ मगधाश्चमहाग्रामाःपुण्ड्राउग्रास्तथवत्र ॥ ५७ ॥ सुग्रामल्ला
विदेहाश्चमालवाःकाशिकोसलाः ॥ भवनंवैनतेयस्यदैत्येन्द्रेणाभिकम्पितम् ॥ ५८ ॥ कैलासशिखराकारंयत्कृतंविश्वकर्मणा ॥ रत्नतोयोमहाभीमो
लौहित्योनामसागरः ॥ ५९ ॥ उदयश्चमहाशैलउच्छ्रितःशतयोजनम् ॥ सुवर्णवेदिकःश्रीमान्मेघपङ्क्तिनिषेवितः॥ १६० ॥ भ्राजमानोऽर्कसदृशैर्जा
तरूपमयैर्द्रुमः ॥ सालैस्तालैस्तमालैश्चकार्णिकारैश्चपुष्पितैः ॥ ६१ ॥ अयोमुखश्चविख्यातःसर्वतोधातुमण्डितः ॥ तमालवनगन्धश्चपर्वतोमलयः
शुभः ॥६२॥ सुराष्ट्राश्चसवाह्लीकाश्शूद्राभीरास्तथैवच॥ भोजाःपाण्ड्याश्चवङ्गाश्चकलिङ्गास्ताम्रलिप्तकाः ॥६३॥ तथवपौण्ड्राःशुभ्राश्चवामचूडास्सकेर
लाः ॥ क्षोभितास्तेनदैत्येनदेवाश्चाप्सरसांगणाः ॥ ६४ ॥ अगस्त्यभवनंचवयदगस्त्यकृतंपुरा ॥ सिद्धचारणसङ्घैश्चविप्रकीर्णंमनोहरम् ॥ ६५ ॥
विचित्रनानाविहगंसुपुष्पितमहाद्रुमम् ॥ जातरूपमयैःशृङ्गैरप्सरोगणसेवितम् ॥६६॥ गिरिःपुष्पितकश्चैवलक्ष्मीवान्प्रियदर्शनः ॥ उत्थितःसागरंभि
त्वाविश्रामश्चन्द्रसूर्ययोः॥६७॥रराजसमहाशृङ्गैर्गगनंविलिखन्निव॥चन्द्रसूर्यांशुसङ्काशैःसागराम्बुसमावृतैः ॥६८॥ विद्युत्त्वान्पर्वतःश्रीमानायतःशत
योजनम्॥ विद्युतांयत्रसम्पातान्निपात्यन्तेनगोत्तमे ॥६९॥ ऋषभःपर्वतश्चैवश्रीमानृषभसंस्थितः ॥ कुञ्जरःपर्वतःश्रीमानगस्त्यस्यगृहंशुभम् ॥१७०॥
विमलाख्याचदुर्द्धर्षासर्पाणांमालतीपुरी॥तथाभोगवतीचापिदैत्येन्द्रेणाभिकम्पिता॥७१॥महासेनगिरिश्चैवपारियात्रश्चपर्वतः ॥ चक्रवांश्चगिरिश्रेष्ठोवा
राहश्चैवपर्वतः॥७२॥प्राग्ज्योतिषपुरंचापिजातरूपमयंशुभम्॥यस्मिन्नुवासदुष्टात्मानरकोनामदानवः ॥७३॥ मेघश्चपर्वतश्रेष्ठोमेघगम्भीरनिस्स्वनः॥
षष्टिस्तत्रसहस्राणिपर्वतानांविशांपते ॥ ७४ ॥ तरुणादित्यसङ्काशोमेरुश्चैवमहान्गिरिः ॥ यक्षराक्षसगन्धर्वैर्नित्यंसेवितकन्दरः ॥ ७५ ॥
हेमगर्भोमहासेनस्तथामेघसखोगिरिः ॥ कैलासश्चैवशैलेन्द्रोदानवेन्द्रेणकम्पितः ॥ ७६ ॥ हेमपुष्करसञ्छन्नंतेनवैखानसंसरः ॥ कम्पितंमानसं
चैवहंसकारण्डवाकुलम् ॥ ७७ ॥ त्रिशृङ्गःपर्वतश्रेष्ठःकुमारीचसरिद्वरा ॥ तुषारचयसंच्छन्नोमन्दरश्चापिपर्वतः ॥ ७८ ॥ उशीरबीजश्च
गिरिर्भद्रप्रस्थस्तथाद्रिराट् ॥ प्रजापतिगिरिश्चैवतथापुष्करपर्वतः ॥ ७९ ॥ देवाभःपर्वतश्चैवतथावैवालुकागिरिः ॥ क्रौञ्चसप्तर्षिशैलरूधूम्रवर्ण
श्चपर्वतः ॥ १८० ॥ एतेचान्येचगिरयोदेशाजनपदास्तथा ॥ नद्यःससागराःसर्वादानवेनाभिकम्पिताः ॥ ८१ ॥ कपिलश्चमहीपुत्रोव्याघ्रवांश्च
प्रकम्पितः ॥ खेचराश्चनिशापुत्राःपातालतलवासिनः ॥८२॥ गणस्तथापरोरौद्रोमेघनामाङ्कुशायुधः॥ऊर्द्धगोभीमवेगश्चसर्वएतेऽभिकम्पिताः ॥८३॥
गदीशूलीकरालश्चहिरण्यकशिपुस्तथा ॥ जीमूतघननिर्घोषोजीमूतइववेगवान् ॥ ८४ ॥ देवारिर्दितिजोदृप्तोनृसिंहंसमुपाद्रवत् ॥ सतुतेनततस्तीक्ष्णै

मृगेन्द्रेणमहानखैः ॥ तदोङ्कारसहायेनविदार्यनिहतोयुधि ॥८५॥ महीचकालश्चशशीनभश्चग्रहाश्चसूर्याश्चदिशश्चसर्वाः ॥ नद्यश्चशैलाश्चमहार्णवाश्च
गताःप्रसादंदितिपुत्रनाशात् ॥ ८६ ॥ ततःप्रमुदितादेवाऋषयश्चतपोधनाः ॥ तुष्टुवुर्नामभिर्दिव्यैरादिदेवंसनातनम् ॥ ८७ ॥ यत्त्वयाविधृतंदेवना
रसिंहमिदंवपुः ॥ एतदेवार्चयिष्यन्तिपरापरविदोजनाः ॥ ८८ ॥ ब्रह्मोवाच ॥ भवान्ब्रह्माचरुद्रश्चमहेन्द्रोदेवसत्तमः ॥ भवान्कर्त्ताविकर्त्ताचलोका
नांप्रभवोऽव्ययः ॥ ८९ ॥ परांचसिद्धिंचपरंचसत्वंपरंरहस्यंपरमंहविश्च ॥ परंचधर्मंपरमंयशश्चत्वामाहुरग्र्यंपरमंपुराणम् ॥ १९० ॥ परंचसत्यंप
रमंतपश्चपरंपवित्रंपरमंचमार्गम् ॥ परंचयज्ञपरमंचहोत्रंत्वामाहुरग्र्यंपरमंपुराणम् ॥ ९१॥ परंशरीरंपरमंचब्रह्मपरंचयोगंपरमांचवाणीम् ॥ परंरहस्यंप
रमांगतिंचत्वामाहुरग्र्यंपरमंपुराणम् ॥ ९२ ॥ पुलस्त्यउवाच ॥ एवमुक्त्वातुभगवान्सर्वलोकपितामहः ॥ स्तुत्वानारायणंदेवंब्रह्मलोकंगतःप्रभुः ॥
॥ ९३ ॥ ततोनदत्सुतूर्येषुनृत्यन्तीष्वप्सरःसुच ॥ क्षीरोदस्योत्तरंकूलंजगामहरिरीश्वरः ॥ ९४ ॥ नारसिंहंवपुर्देवःस्थापयित्वासुदीप्तिमान् ॥ पौराणं
रूपमास्थायप्रययौगरुडध्वजः ॥९५॥ अष्टचक्रेणयानेनभूतियुक्तेनभास्वता ॥ अव्यक्तप्रकृतिर्देवःस्वस्थानंगतवान्प्रभुः ॥ १९६ ॥ इतिश्रीपाद्मपु
राणेप्रथमेसृष्टिखण्डेनरसिंहप्रादुर्भावोनामसप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥ श्रीभीष्मउवाच ॥ नरसिंहस्यमाहात्म्यंविस्तरेणत्वयेरितम् ॥
तथाभवस्यमाहात्म्यंभैरवस्याभिधीयताम् ॥ १ ॥ पुलस्त्यउवाच ॥ तस्यापिदेवदेवस्यशृणुत्वंकर्मचोत्तमम् ॥ आसीद्दैत्योऽन्धकोनामभिन्नाञ्जन
चयोपमः ॥ २ ॥ तपसामहतायुक्तोह्यवध्यस्त्रिदिवौकसाम् ॥ सकदाचिन्महादेवंपार्वत्यासहितंविभुम् ॥ ३ ॥ क्रीडमानंतदादृष्ट्वाहर्तुंदेवींप्रचक्रमे ॥
एतांदेवींहराम्यद्यवियोगेमृत्युमेष्यति ॥ ४ ॥ ततःस्थिराभवित्रीमेभार्येषालोकसुन्दरी ॥ बिम्बोष्ठंचारुवदनंचारुकान्ततरंमुखम् ॥ ५ ॥ यद्येषान
भवेद्भार्याजीवितेकिंप्रयोजनम् ॥ एतांमतिमथास्थायमन्त्रिभिःसहमन्त्र्यच ॥ ६ ॥ चक्रेयोगंससैन्यस्यसेनापतिमभाषत ॥ ७ ॥ अन्धकउवाच॥
आनयस्वरथंमह्यंजैत्रंदेवनिपातनम् ॥ जयिष्येत्रिदशान्सर्वान्विष्णुरुद्रपुरोगमान् ॥ हरिष्येपर्वतसुतांतयामेऽपहृतंमनः ॥ ८ ॥ पुलस्त्यउवाच ॥
मन्त्रिणातस्यचाख्यातःकनकस्यवधस्सुरैः ॥ परभार्यानुरक्तस्यकृतोदेवःसवासवैः ॥ ९ ॥ श्रुत्वाकोपपरीतात्माबभूवासुरसत्तमः ॥ हत्वातुकनकं
शक्रोभयादन्धासुरस्यच ॥ १० ॥ जगामशरणान्वेषीकैलासंशङ्करालयम् ॥ दृष्ट्वाप्रणम्यदेवेशंचन्द्रार्द्धकृतशेखरम् ॥११ ॥ भीतोविज्ञापयामासधृत
साहस्रलोचनः ॥ १२ ॥ इन्द्रउवाच ॥ अभयंदेहिमेदेवदानवादन्धकादहम् ॥ बिभेमितस्यपुत्रोऽद्यमयायुधिनिपातितः ॥ १३ ॥ तद्यावन्नसजाना
तिहतंपुत्रंमहासुरः ॥ तावत्तत्रस्थएवाशुहन्यतांमद्दयावहः ॥ १४ ॥ स्त्रीलौल्याद्दानवःक्रूरःपरभार्यापहारकः ॥ सर्वथाघातनीयस्तेभवतासुरसत्तम

॥ १५ ॥ पुलस्त्य उवाच॥शक्रस्यैवंवचःश्रुत्वाशरण्यःशङ्करस्तदा ॥ ददावभयमेवासौमाभरितिशतक्रतोः ॥१६॥दत्ताभयोऽथकैलासादाजगामकुश
स्थलीम् ॥ वृतोभूतगणैरीशोवधार्थंचान्धकस्यतु ॥ १७ ॥ कृत्वारूपंमहाकायंविश्वरूपंसुभैरवम् ॥ सर्पैर्ज्वलद्भिर्धावद्भिर्भीमंभीमभुजङ्गवत् ॥१८॥
जटासटाभिराकाशंफणिरत्नशिखार्चिषा ॥ दहन्नतीवतेजोभिःकालाग्निरिवसंक्षये ॥ १९ ॥ मुखैर्दंष्ट्राङ्कुराङ्कैश्चद्वितीयेन्दुकलोज्ज्वलैः ॥ पातालोदर
रूपाभैर्भैरवारावनादिभिः ॥ २० ॥ भुजैरनेकसाहस्रैर्बहुशस्त्रकृतग्रहः ॥ बह्वाभरणभूषाढ्यैरणेघोरनिनादिभिः ॥२१ ॥सिंहचर्मपरीधानंव्याघ्रत्वगुत्त
रीयकम्॥गजाजिनकृताटोपंपतद्भृङ्गरवाकुलम् ॥ २२ ॥ ईदृग्रूपंविधायेशोदनुदैत्यभयावहम् ॥ अवातरन्महींभीमोदनूनांक्षयकारकः ॥ २३ ॥ अ
न्धासुरोऽपिदनुजःपुत्रंश्रुत्वाहतंयुधि॥क्रोधनतमसाविष्टोरणतूर्याण्यचोदयत् ॥२४॥ संहत्यावहितःप्राप्तोयत्रतेत्रिदशाःस्थिताः ॥ महत्यासेनयासार्द्धं
रथवारणयुक्तया ॥ २५ ॥ तेदेवादानवान्वीक्ष्यमहाहवकृतादरान् ॥ व्यपयाततनुत्राणाःशम्भुंशरणमन्वयुः ॥ २६ ॥ माभैष्टेतिचतान्देवोदेवानुक्त्वा
त्रिलोचनः ॥ गृहीत्वाशूलमातिष्ठद्दंष्ट्रारवघरोरुषा ॥ २७ ॥ अन्धकेनाथरुष्टेनशतकोटिशरैर्गणाः ॥ निहताश्चापिदेवानांबहूनामेकताकृता ॥ २८ ॥
सस्फुलिङ्गार्चिषोवह्नेर्मुञ्चमानःपिनाकधृत्॥शरैःसमावृतंचक्रेअन्धकंरथगंततः ॥२९॥ दनुनाथोरथस्थोऽथशिथिलःशिथिलायुधः ॥ निमन्त्र्यदानवा
न्सर्वान्सयोद्धुमुपचक्रमे ॥ ३० ॥ बहुधातद्बलंभग्नंविविधायुधयोधिभिः॥ युधिवीरैर्हतंदेवैःस्थाणुनासख्यमाश्रितैः॥३१॥दानवश्चान्धकःसैन्यंभिन्नं
दृष्ट्वाकृतंसुरैः ॥ आत्मानंचमहेशेननिरुद्धंबाणकोटिभिः ॥ ३२ ॥ विह्वलीभूतदेहोऽसौधयमालम्ब्यकेवलम् ॥ पिनाकंचैवरुद्रस्यगृह्यरुद्रमताडयत
॥ ३३ ॥पिनाकस्याभिघातेनरुद्रोभूमिमथागमत् ॥ भूमौनिपातितेदेवेचलितंभुवनत्रयम् ॥ ३४ ॥ तत्यजुःसागरावेलांपर्वताःशिखराणिच ॥
नक्षत्राणिवियोगीनिजग्मुर्मुक्तान्यनेकशः ॥ ३५ ॥ पतितेभुविदेवेशेअन्धकोगदयापुनः ॥ जघानरुषितोनागंहत्वातंपातयद्भुवि ॥ ३६ ॥
शिवंत्यक्त्वानागराजःप्रपलाय्यान्यतोगतः ॥ मुहूर्त्ताच्चेतनांलब्ध्वाउत्थितःपरमेश्वरः ॥ ३७ ॥ गृहीत्वापरशुंदिव्यंदानवंनैवपश्यति ॥
कृत्वातुतामसींमायांमायाशतविशारदः ॥ ३८ ॥ तयाविमोहितेदेवेकनुवैदानवोगतः ॥ शम्भोर्भयमथोप्राप्यकिंनुपापःकरिष्यति ॥
॥ ३९ ॥ तमसाच्छादितायावद्देवाव्याकुलतांगताः ॥ सम्भ्रान्तमानसानीकास्तदोचुःकार्यगौरवात् ॥ ४० ॥ एतस्मिन्नन्तरेसूर्यस्ते
जोरूपोव्यवस्थितः ॥ उत्तस्थौनररूपेणकुर्वन्वितिमिरादिशः ॥ ४१ ॥ नष्टेतमसिहृष्टाङ्गेखद्योतेप्रकटस्थिते ॥ देवामुदमवापुस्तेस्पष्टानन
विलोचनाः॥४२॥उद्दीप्तास्तुसुराःसर्वेगणाःस्कन्दपुरोगमाः ॥ स्तुवन्तिविविधैःस्तोत्रैर्नररूपंदिवाकरम् ॥ ४३ ॥ अनौपम्यंजगद्व्यापिब्रह्मविष्णुशिवा

त्परम्॥स्निग्धविद्रुमसच्छायंसिन्दूरारुणसप्रभम् ॥४४॥ प्रभामन्ततदादृष्ट्वापश्चाङ्गालिङ्गितावनिः ॥ पुनःप्रणामप्रवणंप्रणिधानपुरःसरम् ॥४५॥ आ
लोक्यस्निग्धयादृष्ट्यादेवदेवंत्रिलोचनः ॥ उवाचस्निग्धगम्भीरवाचादेवंशनैर्हरः ॥४६॥ हरउवाच ॥ पूरयन्निवतेजोभिर्भगवान्भुवनत्रयम् ॥ दैत्यमा
याभिपन्नानांदर्शनाकुलचेतसाम् ॥ प्राणिनामिदमेवैकमविसंवादिदैवतम् ॥ ४७ ॥ अयमेवचसंसारसागरात्मकलादपि ॥ सत्त्वानुत्ताग्यन्देवःकर्ण
धारायतेप्रभुः ॥ ४८ ॥ यजन्तोजन्तवोभक्त्यायंदेवंविविधाःसदा ॥ निःश्रेयसायकल्पन्तेतंनतोभास्करंविभुम् ॥४९॥ यस्तूदयाद्रिशिखरेमुकुटाय
मानलीलागभस्तिभिरलंकुसुमप्रकाशैः ॥ व्याप्यस्वदीधितिगणैःप्रदिशोदिशश्चदेदीप्यतेसवितविभवायलोके ॥ ५० ॥ ब्रह्मेन्द्ररुद्रमरुदच्युतव
ह्निपाथोनाथप्रयोगनिपुणैश्चऋषीन्द्रसङ्घैः ॥ श्रेयोऽर्थिभिःप्रतिदिनंहिमसाङ्गरागैर्दिव्याङ्गरागपरिलिप्तसमस्तदेहैः ॥ ५१ ॥ पूज्यंवपुस्तवसदाप्रलये
हिवेदैर्गीर्भिर्विचित्रपदमण्डलमण्डिताभिः ॥ येत्वांस्तुवन्तिपरसद्मनिसद्महीनानित्यंप्रसारितकराभुवितेभवन्ति ॥ ५२ ॥ येदद्रुकुष्ठपिटिकादिभिर
र्दिताङ्गाःशीर्णत्वचःकुनखिनश्च्युतकेशपाशाः ॥ देवेशतेऽपितवपादनताभवन्तिसद्योद्विरष्टशरदाकृतयोमनुष्याः ॥ ५३ ॥ सामेतिसामगगणाहिम
स्वार्थकंत्वामध्वर्यवस्त्वृगितिवह्वृचमुख्यपूगाः ॥ त्वामेवमार्यमितिकायविदोऽधिगन्तुंनागाश्चवंतिपितरोऽप्यथसर्वगन्धम् ॥ ५४ ॥ मायेतिचोपनि
षदर्कषडंवदेवामर्त्यास्तथावयमिवेहउपासतेऽमी ॥ गन्धर्वकिन्नरगणाःसहचारणैस्तुरूपंतथाचभगवन्प्रतिपद्यसेत्वम् ॥ ५५ ॥ येनार्चयन्तिसत
तंभवतोऽर्च्यमार्चिस्तेऽर्चिष्प्रतापितदिगम्बरवित्तहीनाः ॥ क्षुत्क्षामकण्ठजठराघटखर्परेणभिक्षामटन्तिपरवेश्मसुतेऽर्थहीनाः ॥ ५६ ॥ उत्फुल्लकोकन
दकोशविशालनेत्रमीषद्विलासलुलिताञ्चितपिङ्गतारम् ॥ कामंप्रशस्ततरसुन्दरहाररम्यमुत्तुङ्गपीवरपयोधरभारखिन्नम् ॥ ५७ ॥ रम्भोपमोरुपृथुपीननि
तम्बबिम्बानद्धक्वणन्मणिरणद्रशनाकलापम् ॥ वृन्दंललाटतटकोटिपटान्तलम्बिहेमाञ्चलाञ्चितमुखंकुलपालिकानाम् ॥ ५८ ॥ कान्तंगृहेषुकलगद्गद
भाषितानांझङ्कारनूपुररवेणविरावितानाम् ॥ तेषांकृशानुकरमिन्दुसमानकान्तंयैरर्चितोऽसिभगवन्भवमोचनस्त्वम् ॥ ५९ ॥ ब्रह्मात्वमेवहरिरस्य
निलोऽनलोऽसिरुद्रोऽन्तकोऽसिवरुणोऽस्यमराधिपोऽसि ॥ सोमोऽसिवायुरसिभूरसिचेश्वरोऽसियज्ञोऽसिवित्तपतिरस्यपराजितोऽसि ॥ ६० ॥
येसततसतिसुरवाहरणेनमुक्ताभूमावथंतितरसोरुतरंतरीताः ॥ व्योमैतदन्तरहितंपरितोहिगत्वागच्छन्तिनश्रमपदंहिमनागपीमे ॥ ६१ ॥ ध्यानैकयोग
निरताश्चसमाधिभावाद्ध्यात्वापदंतवतुरीयमनन्तमूर्ते ॥ मुक्तामयास्तनुभृतोनभियाभियुक्तास्तद्ब्रह्मशाश्वतमचिन्त्यमनाद्यनन्तम् ॥ ६२ ॥
जन्मादिरोगरहितंपरमंपुराणमीशंजगमरणशोकभयातिरिक्तम् ॥ स्थूलानुभावनगणागणितंविशुद्धंवेदान्तवादिभिरलंपरिमन्यतेयत् ॥ ६३ ॥

त्वामग्निपुञ्जवपुषंतपसांनिवासंयातादिवंसुचिरकालमुपास्यभक्ताः ॥ भानोसुरासुरसमूहशिरोनिघृष्टपादारविन्दयुगलामलचारुमूर्ते ॥ ६४ ॥
भूतेशभूतवरदासकृदव्ययात्मन्व्योमाट्टहाससविनर्भुवनैकदीप ॥ ऋक्साममन्त्रयजुषामधिवासनामसृष्टिस्थितिप्रलयकारणलोकपाल ॥ ६५ ॥
दीनस्यदेवकृपणस्यभवेभवेमेमग्नस्यचारुदविचारमनोरथानि ॥ शश्वद्यतीश्वरशशीकरकङ्कघोरोत्पातोजरामरणशोककरुगान्तरस्य ॥ ६६ ॥
यःप्रातःसायमिदंमध्याह्नेवापठेच्चदीप्तांशोः ॥ सालोक्यंयातिरवेःप्राप्नोतिधर्मार्थकामांश्च ॥ ६७ ॥ नित्यंतस्माच्चसूर्याच्चमनसोऽभिहितंच
यत् ॥ नमस्तेदेवदेवेशभक्तानामभयङ्कर ॥ ६८ ॥ सुब्रह्मण्यनमस्तेऽस्तुसर्वदेवनमस्कृत ॥ तिग्मांशोवैनमस्तुभ्यंजगतश्चक्षुषेनमः ॥ ६९ ॥
प्रभाकरनमस्तेऽस्तुभानोजयजगत्पत ॥ अनेनदनुमुख्येनपीडितोऽहंजगत्पते ॥७०॥ किंकरोमिकथंचैनंघातयामिदिवाकर ॥ ७१ ॥ सूर्यउवाच ॥
जयशूलेनपापिष्ठमायाशतविशारदम्॥जयंप्राप्नुहिदेवेशहत्वाशूलेनचान्धकम्॥७२॥पुलस्त्यउवाच ॥ गृह्यशूलंततोदूरमाक्षिपत्तेजसाहरः॥ततोऽन्धक
स्त्रिशूलेनाताडयत्पापकर्मकृत् ॥७३॥ तस्मिन्युद्धेतथारुद्रोह्यन्धकेनाभिपीडितः ॥ मुमोचबाणमत्युग्रंनाम्नापाशुपतंहियत् ॥ पिनाकमानम्यदोर्भ्यां
पिनाकीशङ्करःस्वयम् ॥७४॥ रुद्रबाणविनिर्भेदाद्रुधिरादन्धकस्यतु॥अन्धकाश्चसमुत्पन्नाश्शतशोऽथसहस्रशः ॥.७५ ॥ तेपांविदार्यमाणानांरुधिरा
दपरेपुनः॥बभूवुरन्धकाघोरायैर्व्याप्तमखिलंजगत् ॥ ७६ ॥ तंतुमायाविनंदृष्ट्वादेवदेवस्तदान्धकम् ॥ पानार्थमन्धकस्यास्यससृजेमातृकास्तदा
॥ ७७ ॥ माहेश्वरींतथाब्राह्मींगौरींवावाडवींतथा ॥ सौपर्णीमथवायव्यांशङ्किनींतैत्तिरींतथा ॥ ७८ ॥ गौरींसौम्यांशिवदूतींचामुण्डामथवारुणीम्॥
वाराहींनारसिंहींचवैष्णवींचविभावरीम् ॥ ७९ ॥ शतानन्दांभगानन्दांपिच्छिलांभगमालिनीम् ॥ बालामतिबलांरक्तांसुरभींमुखमण्डिताम् ॥८०॥
मातृनन्दांसुनन्दांचविडालींशकुनींतथा ॥ रेवतींचमहापुण्यांतथैवशिखिपट्टिकाम् ॥ ८१ ॥ शूलेनचततोदैत्यंविभेदत्रिपुरान्तकः ॥ निर्गतंरुधिरंत
स्मात्पपुस्तामातरस्तदा ॥ ८२ ॥ नीरक्तोहितदादैत्यश्शुष्कतांप्रापभूपते ॥ शूलेप्रोतस्तदादैत्योदिव्यवर्षसहस्रकम् ॥८३॥ महाबलेनरुद्रेणविधृतोऽ
पिमृतोनहि ॥ स्तुतस्तेनतदाशम्भुर्भक्त्यादत्येनसुव्रत ॥८४ ॥ अन्धकउवाच ॥ नमोऽस्तुशम्भोभवनाशहेतोनमोऽस्तुतेदेववरप्रसीद ॥ त्वंभूजलाग्नी
रनभोऽर्कसोमयज्वाष्टमूर्तिर्भवभावनोऽलम्॥८५॥ त्वांवैबाणोवहुवाद्येनतोप्यप्राप्तश्चैश्र्यंस्वेपुरेतत्स्वरक्ष्यम् ॥ रक्षोऽधीशोबाहुभिस्तोल्यशैलंयुष्मत्का
न्तक्लिष्टरूपोह्यनौषीत् ॥८६॥ प्राप्तोऽप्यैश्र्यंसर्वरक्षोगणानांपुत्रंचापिप्रोर्जितंशक्रवन्धम्॥८७॥भवभयहरहरपरमउदारममसुखकरणनिखिलसुरसार ॥
जितमरुदभिमतवितरणपारतवपदकमलमिहारणसार ॥ ८८ ॥ तवेशपादपङ्कजंकरोतियोनरोहृदिसदेशतस्यवाञ्छितंददासिभक्तिभावितः ॥ मुनी

श्वराः पुराहरंभवन्तमेवमादरात्प्रपूज्यलिङ्गरूपिणंसमापितामनोरथान् ॥ ८९ ॥ भवोद्भवैकरूपिणंप्रपञ्चपञ्चकाकृतिविचिन्त्यवृक्षकोटरस्थएषजीवजीव
नम्॥ भवेद्भवाङ्घ्रिचिन्तनात्तसर्वकामईश्वरत्वदीयकिंङ्करान्वितेपदेपदेसमागतः ॥९०॥ मूढोऽहंनाभिजानामित्वांस्तोतुंभक्तवत्सल ॥ सदीश्वरेणमन
साऽप्यनुकम्प्योरणंगतः ॥ ९१ ॥ पुलस्त्यउवाच ॥ इतिस्तुतोमहेशस्तुभक्त्यादैत्येनसादरम् ॥ गणेशतांददौतस्मैनामभृङ्गीरिटीतिच ॥ ९२ ॥
एषतेमहिमाभूपहरस्यभवहारिणः ॥ कथितोविघ्नविघ्नाख्यस्तत्पराणांसुखावहः ॥ ९३ ॥ भीष्मउवाच ॥ मनुष्यस्यापिदेवत्वंसुखंराज्यंधनंयशः ॥
जयंभोग्यंतथारोग्यमायुर्विद्यांश्रियंसुतम् ॥ बन्धुवर्गशिवंसर्वंब्रूहिमेविप्रसत्तम ॥ ९४ ॥ पुलस्त्यउवाच ॥ एभिर्गुणैर्युतःश्रीमान्सदैवब्राह्मणोभुवि ॥
त्रैलोक्येतुसदामेध्योविप्रदेवोयुगेयुगे ॥ ९५ ॥ पूजयित्वाद्विजान्देवाःस्वर्गंभुञ्जन्तिचाक्षयम् ॥ धरामवन्तिराजानोलोकावित्तंसुखंशिवम् ॥ ९६॥
लोकेविप्रसमोनास्तिदेवानामपिदैवतम् ॥ सचधर्ममयःसाक्षाद्भुविमुक्तिप्रदोभृशम् ॥९७॥ लोकानांसगुरुःपूज्यस्तीर्थभूतोऽनघोजनः ॥ सर्वदेवालयः
सत्वोनिर्मितोब्रह्मणापुरा ॥ ९८ ॥ इममर्थंपुरापृष्टोनारदेनपितामहः ॥ कस्मिंस्तुपूजितेब्रह्मन्प्रसन्नोमाधवोभवेत् ॥ ९९ ॥ ब्रह्मोवाच ॥ यस्य
विप्राःप्रसीदन्तितस्यविष्णुःप्रसीदति ॥ तस्माद्ब्राह्मणशुश्रूषुःपरंब्रह्माधिगच्छति ॥ १०० ॥ विष्णुर्ब्राह्मणदेहेषुसदावसतिनान्यथा ॥ तस्माद्ब्राह्मण
पूजायांविष्णुस्तुष्यतितत्क्षणात् ॥ १ ॥ विप्रान्यःपूजयेन्नित्यंदानमानार्चनादिभिः ॥ कृतंक्रतुशतंतेनविध्युक्तंप्रियदक्षिणम् ॥ २ ॥ ब्राह्मणस्यमुखं
क्षेत्रमनूषरमकण्टकम् ॥ वापयेत्सर्वबीजानिसाकृषिस्सार्वकालिकी ॥ ३ ॥ अभिगम्यतुयद्दत्तंयच्चदानंमनोरमम्॥ विद्यतेसागरस्यान्तोदानस्यान्तोन
विद्यते ॥ ४ ॥ मनसापिनहिंसन्तिभूदेवमाततायिनम् ॥ मनोऽनुकूलतांयान्तिदेवैरपिचदुर्लभाम् ॥ ५ ॥ गृहेयस्यागतोविद्वान्नैराश्यंनोपगच्छति ॥
सर्वपापक्षयस्तस्यचाक्षयंस्वर्गमश्नुते ॥ ६ ॥ कालेदेशेचपात्रेचविप्रेयच्चार्पयेद्वसु ॥ तद्धनंचाक्षयंविद्धिजन्मजन्मनितिष्ठति ॥ ७ ॥ नचदारिद्र्य
तामेतिनातुरोनचकातरः ॥ मनोऽनुकूलांप्रमदामर्चयित्वाद्विजाँल्लभेत् ॥ ८ ॥ कृत्वासाहसकर्माणिदद्याद्विप्रायपर्वसु ॥ तद्दानंसुगुणंप्रोक्तमभयंलाभ
एवच ॥ ९ ॥ विप्रपादतलोद्घृष्टिक्षतीभवतियःकरः ॥ सकरःश्रीकरोनामअन्यःकर्मकरःकरः ॥११० ॥ विप्रपादरजःपूताःपूतास्तज्जलबिन्दुभिः ॥
विपद्भिश्चसदापापैर्मुक्तायान्तित्रिविष्टपम् ॥ ११ ॥ विप्रपादरजःपूताःशुचयोगृहचत्वराः ॥ पुण्यक्षेत्रसमास्तेस्युःप्रशस्तायज्ञकर्मसु ॥ १२ ॥ आदौ
ब्रह्ममुखाद्विप्रःसमुद्भूतःपुरानघः ॥ वेदास्तत्रैवसञ्जाताःसृष्टिसंस्थितिहेतवः ॥ १३ ॥ तस्माद्विप्रमुखेवेदाश्चार्पिताःपुरुषेणहि ॥ पूजार्थंसर्वलोकानां
सर्वयज्ञार्थतोध्रुवम् ॥ १४ ॥ पितृयज्ञेविवाहेचवह्निकार्येषुशान्तिषु ॥ प्रशस्ताब्राह्मणानित्यंसर्वस्वस्त्ययनेषुच ॥ १५ ॥ देवाभुञ्जन्तिहव्यानि

बलिप्रेतादयोऽसुराः ॥ पितरश्चैवकव्यानिविप्रस्यैवमुखाद्ध्रुवम् ॥ १६ ॥ देवेभ्यश्चपितृभ्यश्चयोदद्याद्यज्ञकर्मसु ॥ दानंहोमंबलिंचैवविनाविप्रेण
निष्फलम् ॥ १७ ॥ भुञ्जन्तिचासुरास्तत्रप्रेतादैत्याश्चराक्षसाः ॥ तस्माद्ब्राह्मणमाहूयतेषुकर्माणिकारयेत् ॥ १८ ॥ कालेदेशेचपात्रेचलक्षकोटिगुणं
भवेत् ॥ श्रद्धयाचद्विजंदृष्ट्वाप्रकुर्यादभिवादनम् ॥ १९ ॥ दीर्घायुस्तस्यवाक्येनचिरजीवीभवेन्नरः ॥ अनभिवादनाद्विप्रद्वेषादश्रद्धयापिच॥१२०॥
आयुःक्षीणंभवेत्पुंसांभूतिनाशश्चदुर्गतिः ॥ आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिर्विद्याधनस्यच ॥ पूजयित्वाद्विजान्श्रेष्ठोभवेन्नास्त्यत्रसंशयः ॥ २१ ॥ नविप्र
पादोदककर्दमानिनवेदशास्त्रप्रतिघोषितानि ॥ स्वाहास्वधास्वस्तिविवर्जितानिश्मशानतुल्यानिगृहाणितानि ॥२२॥ नारदउवाच॥ कश्चपूज्यतमोवि
प्रोह्यपूज्योवाऽथकोभवेत् ॥ विप्रस्यलक्षणंब्रूहियाथातथ्यंगुरोऽपि ॥२३॥ ब्रह्मोवाच ॥ पूज्यःश्रोत्रियकोनित्यंसदाचारसमन्वितः॥सद्वृत्तःकलुषैर्मुक्त
स्तीर्थभूतोजनोऽनघः ॥२४॥ नारदउवाच ॥ जातःकःश्रोत्रियस्तातसत्कुलेवाप्यसत्कुले॥सदसत्कर्मकर्तावाकःपूज्योभुविवाडवः ॥२५॥ ब्रह्मोवाच॥
सच्छोत्रियकुलेजातोह्यक्रियोनैवपूजितः ॥ असत्क्षेत्रकुलेपूज्योव्यासवैभाण्डकौयथा ॥ २६ ॥ क्षत्रियाणांकुलेजातोविश्वामित्रोऽस्तिमत्समः ॥ वेश्या
पुत्रोवसिष्ठश्चअन्येसिद्धाद्विजादयः ॥२७॥ तस्मात्सच्छ्रोत्रियादीनांशृणुपुत्रकलक्षणम्॥ धरायांतीर्थभूतानांसर्वपापहरायच ॥२८॥ जन्मनाब्राह्मणो
ज्ञेयःसंस्कारैर्द्विजउच्यते ॥ विद्ययायातिविप्रत्वंत्रिभिःश्रोत्रियलक्षणम् ॥२९॥ विद्यापूतोमन्त्रपूतोवेदपूतस्तथैवच ॥ तीर्थस्नानादिभिर्मेध्योविप्रःपूज्य
तमःस्मृतः ॥ १३० ॥ नारायणेसदाभक्तःशुद्धान्तकरणस्तथा ॥ जितेन्द्रियोजितक्रोधस्समःसर्वजनेषुच ॥ ३१ ॥ गुरुदेवातिथिभक्तःपित्रोःशुश्रूषणे
रतः ॥ परदारेमनोयस्यकदाचिन्नैवमोदत ॥ ३२ ॥ पुराणकथकोनित्यंधर्माख्यानस्यसन्ततिः ॥ अस्यैवदर्शनान्नित्यमश्वमेधादिजंफलम् ॥ ३३ ॥
संलापेगतिमेत्यस्यभागीरथ्याप्लवस्यच ॥ व्रतैश्चविविधःपूतोनित्यस्नानद्विजार्चनैः ॥ ३४ ॥ मित्रामित्रेदयालुःस्यात्समःसर्वजनेषुच ॥ परस्वंनहरेद्य
स्तुतृणमप्यटवीगतम् ॥३५॥ कामक्रोधादिनिर्मुक्तइन्द्रियैरजितःपुमान् ॥ परदारान्नगृह्णातिमनसापिगृहागतान् ॥३६॥ नारदउवाच ॥गायत्र्यालक्षणं
किंवाप्रत्येकाक्षरजंगुणम्॥कुक्षिचरणगोत्राणांतस्याब्रूहिसुनिश्चयम् ॥३७॥ ब्रह्मोवाच ॥ छन्दोगायत्रीगायत्र्याःसवितादेवताध्रुवम् ॥ शुक्लवर्णात्वग्निमु
खाविश्वामित्रऋषिस्तथा॥३८॥ब्रह्मणशिरआरूढारुद्रविष्णुहृदिस्थिता॥उपनयनेनियोगःस्यात्साङ्ख्यायनसगोत्रजा ॥३९॥त्रैलोक्यचरणाज्ञेयापृथि
वीकुक्षिसंस्थिता॥चतुर्विंशतिस्थानेचपादादौमस्तकान्तके॥१४०॥चतुर्विंशत्यक्षरंन्यस्यब्रह्मलोकंसविन्दति ॥ प्रत्यर्णदेवतांज्ञात्वाविष्णुसायुज्यमाप्नु
यात्॥४१॥अपरंचप्रवक्ष्यामिगायत्र्यालक्षणंध्रुवम् ॥सप्तपञ्चतथाब्रह्मयजुरष्टादशाक्षरम् ॥४२॥ ज्वलनादिहकारान्तंजलेस्थित्वाशतंजपेत्॥उपपातक

कोट्यातुतथातिपातकैरपि ॥४३॥ ब्रह्महत्यादिभिःपापैर्मुक्तायान्तिममालयम् ॥ ॐअग्नेर्वाक्पुंसियजुर्वेदेनजुष्टात्सोमंपिबस्वाहा ॥४४॥ विष्णुमन्त्रंम
हामन्त्रंतथामाहेश्वरस्यच ॥ देवीसूर्यगणेशानांतथाक्रतुभुजांसुत ॥ ४५ ॥ यस्यकस्यकुलेजातोगुणवानेवतैर्गुणैः ॥ साक्षाद्ब्रह्ममयोविप्रःपूजनीयः
प्रयत्नतः ॥ ४६ ॥ दानंदद्याद्यविधिवत्सदापर्वणिपर्वणि ॥ अक्षयंलभतेदाताजन्मकोटिशतान्प्रति ॥ ४७ ॥ स्वाध्यायनिरतोविप्रोयःपठेत्पा
ठयेत्परान् ॥ धर्मंचश्रावयेल्लोकेसदाचारंश्रुतिंस्मृतिम् ॥ ४८ ॥ पुराणसंहितांनूनंतथैवधर्मसंहिताम् ॥ श्रावयित्वातुलोकेषुश्रावयित्वाद्विजातिषु
॥ ४९ ॥ उर्व्यांविष्णुसमःसोऽपिपूजनीयोनरैःसुरैः ॥ १५० ॥ यद्बलंचाक्षयंतस्यतीर्थभूतानघस्यच ॥ समानमर्चनंकृत्वानरोयात्यच्युतालयम्
॥ ५१ ॥ कदाचित्क्रियतेपापंविप्रःपापैर्नलिप्यते ॥ चाण्डालस्यगृहेनिष्ठौभास्करज्वलनौयथा ॥ ५२ ॥ याजनाध्यापनाद्यौनात्तथवासत्प्रतिग्रहात
विप्राणांनभवेद्दोषोज्वलनार्कसमाद्विजाः ॥५३॥ तान्प्रतिग्रहजान्दोषान्प्राणायाममव्यवस्थिताः ॥ नाशयन्तीहपापानिवायुर्मेघमिवाम्बरे ॥ ५४ ॥
गायत्रींयोजपेन्नित्यंप्राणायामसमन्विताम् ॥ प्रत्यक्षरामरैर्युक्तांस्वाङ्गेविन्यस्यतामपि ॥ ५५ ॥ सर्वपापाद्विनिर्मुक्तोजन्मकोटिकृतादपि ॥ ब्रह्मणः
पदवींप्राप्यसगच्छेत्प्रकृतेःपरम् ॥ ५६ ॥ प्राणायामयुतांतस्माद्गायत्रींजपनारद ॥ ५७ ॥ नारदउवाच ॥ प्राणायामाःकथंब्रह्मन्प्रत्येकाक्षरदेवताः ॥
तेषांन्यासंतथाङ्गेषुवदतातयथाक्रमम् ॥ ५८ ॥ ब्रह्मोवाच ॥ गुददेशेत्वपानःस्याद्धृदिप्राणोऽस्तिदेहिनः ॥ तस्माद्गुदंसमाकुञ्च्यप्राणेनसहयोजयेत
॥ ५९ ॥ पूरकेणतदापुत्रकृत्वाकुम्भकमुत्तमम् ॥ प्राणायामत्रयंकृत्वागायत्रींसञ्जपेद्द्विजः ॥ १६० ॥ अनेनैवजपेद्यस्तुमहापातकसञ्चयः ॥ सकृ
दुच्चारितेनैवक्षयंयात्युपपातकम् ॥६१॥ प्रतिवर्णस्वरंज्ञात्वाविन्यसेद्यःकलेवरे ॥ सजनोब्रह्मतामेतिफलंवक्तुंनशक्नुमः ॥ ६२ ॥ प्रत्यक्षरस्ययद्दैवंशृ
णुपुत्रवदाम्यहम् ॥ यज्जस्वाचपुनर्मातुःस्तनंनपिबतिद्विजः ॥ ६३ ॥ आग्नेयंप्रथमंज्ञेयंवायव्यंतुद्वितीयकम् ॥ तृतीयसूर्यदैवत्यंचतुर्थंवैयतंतथा
॥ ६४ ॥ पञ्चमंयमदैवत्यंवारुणंपष्ठमुच्यते ॥ सप्तमंवार्हस्पत्यंतुपार्जन्यंचाष्टमंविदुः ॥ ६५ ॥ ऐन्द्रंचनवमंज्ञेयंगान्धर्वंदशमंतथा ॥ पौष्णमेकादशं
विद्धिमैत्रंद्वादशकंस्मृतम् ॥६६॥ त्वाष्ट्रंत्रयोदशज्ञेयंवासवंतुचतुर्दशम् ॥ मारुतंपञ्चदशकंसौम्यंषोडशकंस्मृतम् ॥६७॥ आङ्गिरसंसप्तदशंवैश्वदेवमतः
परम् ॥ आश्विनंचैकोनविंशंप्राजापत्यंतुविंशकम् ॥ ६८ ॥ सर्वदेवमयंज्ञेयमेकविंशकमक्षरम् ॥ रौद्रंद्वाविंशकंज्ञेयंब्राह्मंज्ञेयमतःपरम् ॥ ६९ ॥ ॥ १६१ ॥
वैष्णवंतुचतुर्विंशमेताअक्षरदेवताः ॥ जपकालेतुसञ्चिन्त्यतासुसायुज्यतांव्रजेत् ॥ १७० ॥ ज्ञात्वातुदेवतास्तस्यवाङ्मयंविदितंभवेत् ॥ सर्वपा
पविनिर्मुक्तोब्रह्मणःपदवींव्रजेत् ॥ ७१ ॥ गायत्रींविन्यसेत्पूर्वंशरीरेचात्मनोबुधः ॥ चतुर्विंशतिस्थानेषुआपादमस्तकेषुच ॥ ७२ ॥ तत्का

रंविन्यसेद्योगीपादाङ्गुष्ठेविचक्षणः॥ सकारंगुल्फदेशेतुविकारंजङ्घयोर्न्यसेत् ॥ ७३ ॥ तुकारंजानुमध्येचवकारंचोरुदेशतः ॥ रेकारंगुह्यदेशेतुणिकारंवृष
णेन्यसेत् ॥७४॥ यङ्कारंकटिदेशेतुभकारंनाभिमण्डले॥गोकारंजठरेन्यस्यदेकारंस्तनयोर्न्यसेत् ॥७५॥ वकारंहृदयेन्यस्यस्यकारंकरदेशतः ॥ धीका
रंवदनेन्यस्यमकारंतालुकेन्यसेत् ॥७६॥ हिकारंनासिकाग्रेचधिकारंचक्षुषोर्न्यसेत् ॥ योकारंतुभ्रुवोर्मध्येयोकारंचललाटके ॥ ७७ ॥ नःकारंतुमुखेपू
र्वेप्रकारंदक्षिणेमुखे ॥ चोकारंपश्चिमेन्यस्यदकारंचोत्तरेन्यसेत् ॥ ७८ ॥ यात्कारंमूर्ध्निविन्यस्यसर्वव्यापीव्यवस्थितः ॥ एतान्विन्यस्यधर्मात्माब्र
ह्मविष्णुशिवात्मकः ॥७९॥ महायोगीमहाज्ञानीपरंनिर्वाणकंव्रजेत् ॥ सन्ध्याकालेपुनर्न्यासंशृणुत्वंतद्यथार्थतः ॥ १८० ॥ ॐभूरितिहृदयेन्यस्यॐ
भुवश्शिरसिन्यसेत् ॥ ॐस्वःशिखायैतत्सवितुर्वरेण्यमितिकलेवरे ॥ ८१ ॥ ॐभर्गोदेवस्यधीमहीतिनेत्रयोः ॥ ओंधियोयोनःप्रचोदयादितिकर
योर्न्यसेत् ॥ ८२ ॥ ॐआपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःस्वरोम् ॥ इत्युदकस्पर्शमात्रेणपापात्पूतोव्रजेद्धरिम् ॥८३॥ ॐभूःॐभुवःॐस्वःॐमहःॐजनः
ॐतपःॐसत्यम् ॥.ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात ॥ ॐआपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःस्वरोम्॥इतिसव्याहृतिंसप्रणवां
दशोङ्कारांसन्ध्याकालेकुम्भकेनवारत्रयंजप्त्वासूर्योपस्थानेसावित्रींचतुर्विंशत्यक्षरांजप्त्वामहाविद्याधिकोभवति॥ ब्रह्मत्वंलभते॥षट्कुक्षिलक्षणांपुत्रगाय
त्रींशृणुयत्नतः ॥ यांज्ञात्वातुपरंब्रह्मस्थानंगच्छतिवैद्विजः ॥ ८४ ॥ ओंतत्सवितुर्वरेणियंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ॥ ८५ ॥
अथगायत्रीपञ्चशीर्षलक्षणम् ॥ ॐभूः ॥ ॐभुवः ॥ ॐस्वः ॥ ॐमहः ॥ ॐजनः ॥ ॐतपः ॥ ॐसत्यम् ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधि
योयोनःप्रचोदयात् ॥ ८६ ॥ सव्याहृतिंतुगायत्रींपुनर्न्यासंतुकारयेत् ॥ सर्वपापविनिर्मुक्तोविष्णुसायुज्यतांव्रजेत् ॥ ८७ ॥ ॐभूःपादाभ्याम् ॥
ॐभुवःजानुभ्याम् ॥ ॐस्वःकट्याम् ॥ ॐमहःनाभौ ॥ ॐजनःहृदयेन्यसेत् ॥ ॐतपःकरयोः ॥ ॐसत्यंललाटे ॥ ॐतत्सवितुर्वरेणियं
भर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ॥ इतिशिखायाम् ॥ ८८ ॥ एवंविप्रोनजानातिसएवब्राह्मणाधमः ॥ नतस्यक्षीयतेपाप्माभवेद्भूरिप्रति
ग्रहः ॥ ८९ ॥ इमांयोवेत्तिगायत्रींसवबीजसमन्विताम्॥सवेत्तिचतुरोवेदान्योगज्ञानंजपत्रयम् ॥ १९० ॥ यएनांनैवजानातिसशूद्रात्परतःस्मृतः ॥
तस्यापूतस्यविप्रस्यनदेयंपितृपार्वणम् ॥ ९१ ॥ नस्नानफलदःकश्चित्सर्वंचनिष्फलंभवत् ॥ विद्यावित्तंतथाजन्मद्विजत्वंकारणंयतः ॥९२॥ निष्फलं
सकलंतस्यमेध्यंपुष्पंयथाऽशुचौ ॥ चर्तुर्वेदाश्चगायत्रीपुरावैतुलितामया ॥ ९३ ॥ चतुर्वेदात्परागुर्वीगायत्रीमोक्षदास्मृता ॥ दशभिर्जन्मजनितंशते
नचपुराकृतम् ॥९४॥ त्रियुगंतुसहस्रेणगायत्रीहन्तिकिल्बिषम् ॥ गायत्रीमक्षमालायांसायंप्रातश्चयोजपेत् ॥९५॥ चतुर्णामपिवेदानांफलंप्राप्नोत्यसं

शयम् ॥ त्रिसन्ध्यंयोजपेन्नित्यंगायत्रींहायनंद्विजः ॥ ९६ ॥ तस्यपापंक्षयंयातिजन्मकोटिसमुद्भवम् ॥ गायत्र्युच्चारमात्रेणपापकूटात्पुना
तिच ॥ ९७ ॥ स्वर्गापवर्गमाप्नोतिजप्त्वानित्यंद्विजोत्तमः ॥ वासुदेवस्यमन्त्राणिजपेद्यस्तुदिनेदिने ॥ ९८ ॥ प्रणमेच्चहरेःपादौसगच्छेदपवर्गिताम् ॥
वासुदेवस्यस्तोत्राणिमुखेचापिकथोत्तमा ॥ ९९ ॥ पङ्कस्यलवमात्रंतुतस्यदेहेनतिष्ठति ॥ वेदशास्त्रावगाहेनत्रिस्रोतःस्नानजंफलम् ॥ २०० ॥ धर्मपाठ
कृतांलोकेयज्ञकोटिफलंलभेत् ॥ एवंविप्रगुणान्वक्तुंनशक्नोमिद्विजोत्तम ॥ १ ॥ विश्वरूपश्चकोदेहीसमूर्तोहरिरेवच ॥ यस्यशापाद्विनाशःस्यादायुर्वि
द्यायशोधनम् ॥ २ ॥ वरदानात्समायान्तिसर्वाःसम्पत्तयस्तथा ॥ विष्णुर्ब्रह्मण्यतामेतिसदाविप्रप्रसादतः ॥ ३ ॥ नमोब्रह्मण्यदेवायगोब्राह्मणहिताय
च ॥ जगद्धितायकृष्णायगोविन्दायनमोनमः ॥ ४ ॥ मन्त्रेणैवंहरिंयस्तुपूजयेत्सततंनरः ॥ प्रसादीचहरिस्तस्यविष्णुसायुज्यतांव्रजेत् ॥ ५ ॥ यइ
दंशृणुयात्पुण्यमाख्यानंधर्मविग्रहम् ॥ तस्यपापंक्षयंयातिजन्मजन्मकृतंचयत् ॥ ६ ॥ यःपठेत्पाठयेद्वापिउपदेष्टाजनस्यच ॥ नतस्यपुनरावृत्तिः
स्वर्गमक्षयमश्नुते ॥ ७ ॥ धनंधान्यंलभेदत्रराज्यभोगानरोगिताम् ॥ सत्सुतंचशुभांकीर्तिंदेववद्रमतेदिवि ॥ २०८ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टि
खण्डेब्राह्मणसंस्कारोनामाष्टचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥ नारदउवाच ॥ त्वत्प्रसादतोज्ञातोविप्रःपुण्यतमश्चयः ॥ यथाजानामिदेवेशकि
ययाब्राह्मणाधमम् १ ॥ ब्रूहिशीघ्रंसुरश्रेष्ठयदिप्रीतिंमयीच्छसि ॥ २ ॥ ब्रह्मोवाच ॥ स्नानैर्दशविधैर्मुक्तस्तथैवतर्पणादिभिः ॥ सन्ध्यासंयमहीनश्च
सएवब्राह्मणाधमः ॥ ३ ॥ देवपूजाव्रतैर्मुक्तोवेदविद्यादिभिस्तथा ॥ सत्यशौचादिभिश्चैवयोगज्ञानाग्नितर्पणैः ॥ ४ ॥ पञ्चस्नानानिविप्राणांकीर्तिता
निमहर्षिभिः ॥ आग्नेयंवारुणंब्राह्मंवायव्यंदिव्यमेवच ॥ ५ ॥ आग्नेयंभस्मनास्नानमद्भिर्वारुणमुच्यते ॥ आपोहिष्ठेतिवैब्राह्मंवायव्यंगोरजःस्मृतम् ॥
॥ ६ ॥ अद्भिरातपवर्षाभिर्दिव्यंस्नानमुदाहृतम् ॥ एतैस्तुमन्त्रतःस्नानात्तीर्थानांफलमाप्नुयात् ॥ ७ ॥ तुलसीपत्रसंलग्नंशालग्रामशिलाम्बुच ॥ ग
वांशृङ्गोदकंचैवविप्रपादोदकंचयत् ॥ गुरूणामेवमुख्यानांपूतात्पूतमितिस्मृतिः ॥ ८ ॥ त्यागतीर्थादिभिर्यज्ञैर्व्रतहोमादिभिस्तथा ॥ यत्फलंलभतेधीरःस्ना
नैरेतैस्तुतत्फलम् ॥ ९ ॥ तर्पणैश्चविनिर्मुक्तःपितॄणामेवनित्यशः ॥ पितृहानरकंयातिसन्ध्याहीनस्तुविप्रहा ॥ १० ॥ मन्त्रव्रतविहीनश्चवेदविद्यागु
णैरपि ॥ यज्ञदानादिभिर्मुक्तोब्राह्मणश्चाधमाधमः ॥ ११ ॥ यज्ञार्थकादेवलकानाक्षत्राग्रामयाजकाः ॥ परदाररतानित्यंपञ्चैतेब्राह्मणाधमाः ॥ १२ ॥ ॥ १६२ ॥
मन्त्रसंस्कारहीनाश्चशुचिसंयमवर्जिताः ॥ मोघाशिनोदुरात्मानोब्राह्मणाश्चाधमाधमाः ॥ १३ ॥ अपिस्तेयरतामूढाःसर्वधर्मविवर्जिताः ॥ उन्मा
र्गगामिनोनित्यंब्राह्मणाश्चाधमाधमाः ॥ १४ ॥ श्राद्धादिकर्मरहितागुरुसेवाविवर्जिताः ॥ अमन्त्राभिन्नमर्यादाएतेसर्वाधमाधमाः ॥ १५ ॥

असम्भाष्याइमेदुष्टास्सर्वेनिरयगामिनः॥अमेध्यास्तेदुराचाराअपूज्याश्चसमन्ततः ॥१६॥खड्गोपजीविकाःप्रेष्यागोवाहनरताद्विजाः॥कारुवृत्त्युपजी
वाश्चगणवार्द्धुषिकाश्चये ॥१७॥ बालापण्याभिचाराश्चअन्त्यजाश्रयमाश्रिताः ॥ कृतघ्नाश्चगुरुघ्नाश्चएतेसर्वाधमाःस्मृताः ॥ १८ ॥ येचैवान्येहता
चाराःपाषण्डाधर्मनिन्दकाः॥दूषकादेवभेदानामेतेब्रह्मद्विषोद्विजाः॥१९॥ तथापिब्राह्मणश्चैवनहन्तव्यःकदाचन॥एनंहत्वाद्विजश्रेष्ठब्रह्महापुरुषोभवेत्॥
॥ २० ॥ अन्त्यजातिषुम्लेच्छेषुतथाचाण्डालजातिषु ॥ पतितोवान्ययोनिभ्यांनहन्तव्यःकथञ्चन ॥ २१ ॥ सर्वजातिस्त्रियंगत्वासर्वाभक्ष्यस्यभक्ष
णात् ॥ द्विजत्वंनविनश्येतपुण्याद्विप्रोभवेत्पुनः ॥ २२ ॥ नारदउवाच ॥ ईदृशंदुष्कृतंकृत्वापश्चात्पुण्यंसमाचरेत् ॥ कांगतिंयात्यसौविप्रःसर्व
लोकपितामहः ॥ २३ ॥ ब्रह्मोवाच ॥ कृत्वासर्वाणिपापानिपश्चाद्यस्तुजितेन्द्रियः ॥ मुच्यतेसर्वपापेभ्यःपुनर्ब्रह्मत्वमर्हति ॥ २४ ॥ शृणुपुत्रकथांरम्यां
विचित्रांचपुरातनीम् ॥ कस्यचिद्ब्राह्मणस्यापियौवनाढ्यःसुतोऽभवत् ॥ २५ ॥ ततोयौवनसम्पत्तेर्मोहाच्चपूर्वकर्मणः ॥ चाण्डालीमगमत्सद्यस्तस्याः
प्रियतरोऽभवत् ॥ २६ ॥ तस्यामुत्पादितास्तेनपुत्रादुहितरस्तथा ॥ स्वकुटुम्बंपरित्यज्यगृहेतस्याश्चिरंस्थितः ॥ २७ ॥ अन्याभक्ष्यंनचाश्नातिघृ
णयाचसुरांत्यजेत् ॥ तमुवाचसदासाचभक्षयान्यतरांसुराम् ॥ २८ ॥ तामुवाचतदाशौचंगदितुंनार्हसिप्रिये ॥ उत्कारोजायतेतस्याःश्रवणात्स
ततंमम ॥ २९ ॥ एकदासमृगान्वेषाच्छ्रान्तःसुप्तोगृहेदिवा ॥ गृहीत्वासासुरांतस्यप्रहसित्वाचमुखेददौ ॥ ३० ॥ ततोविप्रमुखादग्निःप्रजज्वालस
मन्ततः ॥ ज्वालातुसकुटुम्बांतामदहच्चगृहंवसु ॥ ३१ ॥ हाहाकृत्वासमुत्थायविललापतदाद्विजः ॥ विलापान्तेचजिज्ञासासामारब्धाचतेनहि ॥
॥ ३२ ॥ कुतश्चाग्निःसमुद्भूतोगृहेदाहःकथंमम ॥ ततःखेतमुवाचेदंतेजस्तेब्राह्मणस्यच ॥ ३३ ॥ कथितेतद्यथावृत्तेब्राह्मणोविस्मयंगतः ॥ वि
मृश्यार्थमुवाचेदंपुनःखेऽस्यहितंवचः ॥ ३४ ॥ विप्रनष्टंसुतेजस्तेतस्माद्धर्मंचरोभव ॥ ततोमुनिवरान्गत्वापप्रच्छात्महितंद्विजः ॥ ३५ ॥ तमू
चुर्मुनयःसर्वेदानधर्मंसमाचर ॥ ३६ ॥ ऋषयऊचुः ॥ पूयन्तेसर्वपापेभ्योब्राह्मणानियमैर्व्रतैः ॥ नियमाञ्शास्त्रदृष्टांश्चपूतत्वार्थमुपाचर ॥ ३७ ॥
चान्द्रायणांश्चकृच्छ्रांश्चतप्तकृच्छ्रान्पुनःपुनः ॥ प्राजापत्यांश्चदिव्यांश्चदोषशोषायसत्वरम् ॥ ३८ ॥ गच्छतीर्थानिपूतानिगोविन्दाराधनंकुरु ॥
क्षयमेष्यन्तिपापानितेचिरेणसमन्ततः ॥ ३९ ॥ पुण्यतीर्थप्रभावाच्चगोविन्दस्यप्रभावतः ॥ क्षयमेष्यन्तिपापानिब्रह्मत्वंप्राप्स्यतेभवान् ॥ ४० ॥
शृणुतातयथावृत्तंकथयामःपुरातनम् ॥ आहारार्थीपुरावत्सगरुडोविनतासुतः ॥ ४१ ॥ पतङ्गोऽपिवहिःसाक्षादण्डान्निस्सृत्यशावकः ॥
क्षुधार्थोमातरंप्राहभक्ष्यंमेदीयतामिति ॥ ४२ ॥ ततःपर्वतसङ्काशंगरुडंचमहाबलम् ॥ दृष्ट्वामातामहाभागाननन्दहृष्टमानसा ॥ ४३ ॥

विनतोवाच ॥ क्षुधांतेबाधितुंपुत्रनशक्नोमिसमन्ततः ॥ तवतातस्तपस्तेपेलौहित्यस्योत्तरेतटे ॥ ४४ ॥ कश्यपोनामधर्मात्मासाक्षा
ल्लोकपितामहः ॥ तत्रगच्छस्वपितरंपृच्छकामंयथातव ॥ अस्योपदेशतस्तातक्षुधातेशममेष्यति ॥ ४५ ॥ ऋषयऊचुः ॥ ततोमातुर्वचःश्रुत्वावै
नतेयोमहाबलः ॥ अगमत्पितुरभ्याशंसमुहूर्तान्मनोजवः ॥ ४६ ॥ दृष्ट्वातातंमुनिश्रेष्ठंज्वलन्तमिवपावकम् ॥ प्रणम्यशिरसावाक्यमुवाचपितरंखगः ॥
॥ ४७ ॥ वैनतेयउवाच ॥ भक्षार्थीसमनुप्राप्तःसुतोऽहंतेमहात्मनः ॥ क्षुधयापीडितोनाथभक्ष्यंमेदीयतांप्रभो ॥ ४८ ॥ ऋषयऊचुः ॥ ततोध्या
नंसमालम्ब्यज्ञात्वातंविनतासुतम् ॥ पुत्रस्नेहाद्वचश्चेदंप्रोवाचमुनिसत्तमः ॥४९॥ कश्यपउवाच॥अनेकशतसाहस्रानिपादाःसरितांपतेः ॥ तीरेतिष्ठ
न्तिपापिष्ठास्तान्सम्भक्ष्यसुखीभव ॥५०॥ तीर्थमुत्सादयन्तिस्मतीर्थकाकादुरासदाः ॥ विनाविप्रंनिषादेषुभक्षयत्वमलक्षितम् ॥५१॥ ऋषयऊचुः ॥
इत्युक्तःप्रययौपक्षीभक्षयामासतांस्ततः ॥ अलक्ष्यभावोविप्रोऽपिगिलितस्तेनपक्षिणा ॥ ५२ ॥ सतस्यगलकेगाढंलालग्नीतिद्विजस्तदा ॥ व
मितुंगिलितुंचापिनशशाकद्विजोत्तमम् ॥ ५३ ॥ गत्वाथपितरंप्राहकिमेतदितिमेपितः ॥ लग्नंमेगलकेसत्त्वंप्रतिकर्तुंनशक्नुयाम् ॥ ५४ ॥
ऋषयऊचुः ॥ तस्यतद्वचनंश्रुत्वाकश्यपस्तमुवाचह ॥ ५५ ॥ कश्यपउवाच ॥ मयोक्तंतेपुरावत्सब्राह्मणोऽयंनबुध्यसे ॥ ५६ ॥ ऋषयऊचुः ॥
इत्युक्त्वाचमुनिर्धीमान्द्विजंप्राहसधार्मिकः ॥ ५७ ॥ कश्यपउवाच ॥ आगच्छत्वंममासन्नंहिततेप्रवदाम्यहम् ॥ ५८ ॥ ऋषयऊचुः ॥ तमुवा
चतदाविप्रःकश्यपंमुनिपुङ्गवम् ॥५९॥ विप्रउवाच ॥ ममैतेसुहृदोनित्यंसर्वेसम्बन्धिनःप्रियाः ॥ श्वशुराःश्यालकाश्चाप्तास्सबालाश्चतथापरे ॥६०॥
एतैःसहप्रयास्यामिनिरयंचापिवाशिवम् ॥६१॥ ऋषयऊचुः ॥ तस्यतद्वचनंश्रुत्वाविस्मितःकश्यपोऽब्रवीत् ॥६२ ॥ कश्यपउवाच॥ द्विजानांचकुले
जातश्चाण्डालैःपतितोभवान् ॥ पुरुषास्तेप्रतिष्ठन्तेघोरेचनिलयेध्रुवम् ॥ ६३ ॥ चिरायनिष्कृतिस्तेषांनैवास्तीहकथञ्चन ॥ सर्वांश्चैवदुराचारांश्चाण्डा
लान्पापकारिणः ॥ ६४ ॥ दोषांस्त्यक्त्वानरःपश्चात्सुखीभवतिनान्यथा ॥ ६५ ॥ अज्ञानाद्यदिवामोहात्कृत्वापापंसुदारुणम् ॥ ततोधर्मंचरे
द्यस्तुसगच्छेत्परमांगतिम् ॥ ६६ ॥ पापकृन्नचरेद्धर्मंपापेकुर्यान्मतिंपुनः ॥ शिलानावंयथारूढःसागरेसंनिमज्जति ॥ ६७ ॥ कृत्वासर्वाणि
पापानितथादुर्गतिसञ्चयम् ॥ उपशान्तोभवेत्पश्चात्तंदोषंशमयिष्यति ॥ ६८ ॥ ऋषयऊचुः ॥ तमुवाचमहाप्राज्ञंद्विजंमुनिवरोत्तमम् ॥ ६९ ॥ विप्र
उवाच ॥ यदिमांनजहातीहखगःसर्वांश्चबान्धवान्॥ततःप्राणंचत्यक्ष्यामिखगेमर्मावघातिनि ॥७०॥ नोचेत्त्यजतुमेबन्धून्प्रतिज्ञामेदृढात्मनः ॥७१॥
ऋषयऊचुः॥ततस्तार्क्ष्यमुवाचेदंमुनिर्ब्रह्मवधभयात् ॥ ७२ ॥ कश्यपउवाच॥उद्वमैतान्सविप्रांश्चम्लेच्छानेतान्समन्ततः ॥ वनेषुपर्वतान्तेषुदिक्षुतान्प

तगेश्वर ॥ ७३ ॥ ऋषयऊचुः ॥ उद्ववामततःशीघ्रंदोषज्ञःपितुराज्ञया ॥ ततःसर्वेऽभवन्व्यक्ताअकेशाःश्मश्रुवर्जिताः ॥ ७४ ॥ यवनाभोजन
प्रीताःकिञ्चिच्छ्मश्रुयुताश्रये ॥ अग्नौचनग्नकाःपापादक्षिणस्यामवाचकाः ॥ ७५ ॥ घोराःप्राणिवधेप्रीतादुरात्मानोगवाशिनः ॥ नैर्ऋतेकुवदाः
पापागोब्राह्मणवधोद्यताः ॥ ७६ ॥ खर्पराःपश्चिमेपूर्वेनिवसन्तिचदारुणाः ॥ वायव्यांचतुरुष्काश्चश्मश्रुपूर्णागवाशिनः ॥ ७७ ॥ अश्व
पृष्ठसमारूढाःप्रयुद्धेष्वनिवार्तिनः ॥ उत्तरस्यांचगिरयोम्लेच्छाःपर्वतवासिनः ॥ ७८ ॥ सर्वभक्षादुराचारावधबन्धरताःकिल ॥ ऐशान्यांनि
रयाःसन्तिकर्तृणांवृक्षवासिनः ॥ ७९ ॥ एतेम्लेच्छास्थितादिक्षुघोरास्तेशस्त्रपाणयः ॥ येषांचस्पर्शमात्रेणसचैलोजलमाविशेत् ॥ ८० ॥ ए
तेषांचकलौदेशेऽप्यकालेधर्मवर्जिते ॥ संस्पर्शंचप्रकुर्वन्तिवित्तलोभात्समन्ततः ॥ ८१ ॥ म्लेच्छांस्तान्मोचयित्वातुक्षुधयापरिपीडितः ॥ पुन
राहद्विजस्तातक्षुधामेवाधतेतराम् ॥ अवदद्गरुडंतत्रकश्यपःकृपयाद्रुतम् ॥ ८२ ॥ कश्यपउवाच ॥ तिष्ठन्तौविपुलौतत्रजिघांसूगजकच्छ
पौ ॥ अप्रमेयौमहासत्त्वौसागरस्यैकदेशतः ॥ तावप्सुचद्रुतंवत्सक्षुधांतेवारयिष्यतः ॥ ८३ ॥ ऋषयऊचुः ॥ सपितुर्वचनंश्रुत्वातत्रगत्वा
भिपद्यतौ ॥ नखैर्भित्त्वाकूर्मगजौमहासत्त्वौमहाजवः ॥ ८४ ॥ खमुत्पपाततौधृत्वाविद्युद्वेगोमहाबलः ॥ आधारतांनगच्छन्तिनगाश्चमन्दरा
दयः ॥ ८५ ॥ ततोयोजनलक्षेद्वेगत्वामारुतरंहसा ॥ महत्यांजम्बुशाखायांनिपपातमहाबलः ॥ ८६ ॥ भग्नासासहसाशाखातांपतन्तींखगेश्वरः ॥
गोब्राह्मणवधाद्भीतोदधारतरसाबली ॥ ८७ ॥ धृत्वातांरुचिरंवेगाद्व्रवन्तंखेमहाबलम् ॥ गत्वाविष्णुरुवाचेदंनररूपधरोहरिः ॥८८॥ विष्णुरुवाच ॥
कस्त्वंभ्रमसिचाकाशेकिमर्थंपतगेश्वर ॥ विधृत्यमहतींशाखांमहान्तौगजकच्छपौ ॥ ८९ ॥ तमुवाचद्विजस्तस्मिन्नररूपधरंहरिम् ॥ गरुडोऽहंमहाबा
होखगरूपःस्वकर्मणा॥९०॥ कश्यपस्यमुनेस्सूनुर्विनतागर्भसम्भवः ॥ पश्यैतौचमहासत्त्वौभक्षणार्थंमयाधृतौ ॥९१॥ नधराचममाधारोनवृक्षानचप
र्वताः ॥ अनेकयोजनान्यूर्ध्वंदृष्ट्वाजम्बूमहीरुहम् ॥९२॥ अपतंतस्यशाखायांसहेमौपरिभक्षितुम् ॥ भग्नासासहसाशाखातांचधृत्वाभ्रमाम्यहम् ॥९३॥
कोटिकोटिसहस्राणांब्राह्मणानांगवांवधात् ॥ भयंतत्रविपादोमेसहसाप्राविशद्बुध ॥ किंकरोमिकथंयामिकोमेवेगंसहिष्यति ॥ ९४ ॥ ऋषयऊचुः ॥
इत्युक्तेपतगश्रेष्ठंप्रोवाचेदंहरिस्तदा ॥ ९५ ॥ विष्णुरुवाच ॥ अस्मद्बाहुंसमारुह्यभक्षेमौगजकच्छपौ ॥ ९६ ॥ गरुडउवाच ॥ ॥ मम,वारंनगच्छ
न्तिसागराश्चनगोत्तमाः ॥ अथचैवंमहासत्त्वंकथंत्वंधारयिष्यसि ॥९७॥ ऋतेनारायणादन्यःकोमांधारयितुंक्षमः ॥ त्रैलोक्येकःपुमांस्तिष्ठेद्योवेगंमे
सहिष्यति ॥ ९८ ॥ हरिरुवाच ॥ स्वकार्यमुद्धरेत्प्राज्ञःस्वकार्यंकुरुसाम्प्रतम् ॥ कृत्वाकार्यंखगश्रेष्ठविजानीपिचमांध्रुवम् ॥९९॥ ऋपयऊचुः ॥ महा

सत्त्वंचतंदृष्ट्वाविमृश्यमनसाखगः ॥ एवमस्त्वितिचोक्त्वासपपातद्रुमहाभुजे ॥१००॥ नचचालभुजस्तस्यसन्निपातखगेशितुः ॥ तत्रस्थित्वासतांशा
खांमुमोचपर्वतालये ॥१॥ शाखापतनमात्रेणसचराचरकानना ॥ चचालवसुधाचैवसागराःप्रचकम्पिरे॥२॥ततश्चखादितौसत्त्वौसहसागजकच्छपौ॥
तृप्तिंनप्राप्तवान्सोऽपिक्षुधातस्यनशाम्यति ॥३॥ एतज्ज्ञात्वातुगोविन्दस्तमुवाचखगेश्वरम्॥४॥ विष्णुरुवाच ॥ भुजस्यममसांसंतुभक्षयित्वासुखीभव
॥५॥ऋषयऊचुः॥इत्युक्तेप्रचुरंमांसंभुजस्यतस्यतेनहि ॥ खादितंक्षुधयापुत्रव्रणंतस्यनविद्यते॥तमुवाचमहाप्राज्ञश्चराचरगुरुंहरिम्॥६॥ वैनतेयउवाच॥
कस्त्वंकिंवाप्रियंतेऽद्यकरिष्यामिचसाम्प्रतम् ॥ ७ ॥ नारायणउवाच ॥ विद्धिनारायणंमांहित्वत्प्रियार्थसमागतम् ॥ ८ ॥ ऋषयऊचुः ॥ रूपंस्वं
दर्शयामासप्रत्ययार्थंचतस्यवै॥ पीतवस्त्रंघनश्यामंचतुर्भुजमनोहरम् ॥९॥ शङ्खचक्रगदापद्मधरंसर्वसुरेश्वरम् ॥ तंचदृष्ट्वागरुत्मांश्चप्रणम्यशिरसाहरिम्
॥११०॥ वैनतेयउवाच॥प्रियंकिंतेकरिष्यामिवदनःपुरुषोत्तम ॥११॥ऋषयऊचुः॥तमब्रवीन्महातेजादेवदेवेश्वरोहरिः॥१२॥विष्णुरुवाच॥भवमेवाहनं
शूरसखेत्वंसार्वकालिकम्॥१३॥ऋषयऊचुः॥ तमुवाचखगश्रेष्ठोधन्योऽहंविबुधेश्वर॥सफलंजन्ममेनाथत्वांचदृष्ट्वाद्यमेप्रभो ॥ १४ ॥ प्रार्थयित्वाचपित
रावागमिष्यामितेऽन्तिकम् ॥ प्रीतोविष्णुरुवाचेदंभवत्वमजरामर ॥१५ ॥ अवध्यःसर्वभूतेभ्यःकर्मतेजश्चमत्समम्॥सर्वत्रतेगतिश्चास्तुनिखिलंतुसुखं
ध्रुवम् ॥ १६ ॥ संमिलतुद्रुतंसर्वंयत्तेमनसिवर्तते ॥ यथेष्टंप्रीतिमाहारमकष्टेनप्रलप्स्यसे ॥ १७ ॥ व्यसनान्मातरंसद्योमोचयिष्यसिनान्यथा ॥ एव
मुक्त्वाहरिःसद्यस्तत्रैवान्तरधीयत ॥ १८ ॥ तार्क्ष्योऽपिपितरंगत्वाकथयच्चाखिलंततः ॥ सतच्छ्रुत्वाप्रहृष्टात्मातंनयंपुनरब्रवीत्॥१९॥कश्यपउवाच ॥
धन्योऽहंचखगश्रेष्ठधन्यातेजननीशिवा ॥ धन्यंक्षेत्रंकुलंचैवयस्यपुत्रस्त्वमीदृशः ॥ १२० ॥ यस्यपुत्रःकुलेजातोवैष्णवःपुरुषोत्तमः ॥ कुलकोटिं
समुद्धृत्यविष्णुसायुज्यतांव्रजेत् ॥ २१ ॥ विष्णुंयःपूजयेन्नित्यंविष्णुंध्यायेतगायति ॥ जपेन्मन्त्रंसदाविष्णोःस्तोत्रंतस्यपठिष्यति ॥ २२ ॥
प्रसादंचभजेन्नित्यमुपवासंहरेर्दिने ॥ क्षयाच्चसर्वपापानांमुच्यतेनात्रसंशयः ॥ २३ ॥ यस्यतिष्ठतिगोविन्दोमानसेचसदैवहि ॥ सएवनरशार्दूलोविष्णु
लोकेमहीयते ॥ २४ ॥ जलेविष्णुःस्थितोनित्यंरम्यस्थानेचसत्पथे ॥ गविविप्रेसदास्वर्गेब्रह्मागारेशुचेर्गृहे ॥ २५ ॥ एतेषुचजपेद्यस्तुसपुण्यःपुरु
षोत्तमः ॥ जन्मकोटिसहस्रेभ्यःकृत्वासत्कर्मसञ्चयम् ॥ २६ ॥ क्षयाच्चसर्वपापानांविष्णोःकिङ्करतांव्रजेत् ॥ धन्योऽसौमानवोलोकेविष्णोस्सादृश्य
माव्रजेत् ॥ २७ ॥ नित्यःसुरवरैःपूज्योलोकनाथोऽच्युतोऽव्ययः ॥ सुप्रसन्नोभवेद्यस्यसएवपुरुषोत्तमः ॥२८॥ तपोभिर्बहुभिर्धर्मैर्मखैर्नानाविधैरपि॥
विष्णुर्नलभ्यतेदेवैस्त्वयाऽसौविप्रलभ्यते ॥ २९ ॥ सपत्नीव्यसनाद्घोरान्मातरंतेप्रमोचय ॥ ततोयास्यसिदेवेशंकृत्वामातुःप्रतिक्रियाम् ॥ १३० ॥

ऋषयऊचुः ॥ गृहीत्वाजनकस्याज्ञांलब्ध्वाविष्णोर्वरंमहत् ॥ अम्बापार्श्वंगतोहृष्टस्तांप्रणम्याग्रतःस्थितः ॥ ३१ ॥ विनतोवाच ॥ अभवद्भोजनंतेऽद्य पुत्रदृष्टःपितापिच ॥ किमर्थंवाविलम्बस्तेचिन्तयाव्यथिताह्यहम् ॥ ३२ ॥ ऋषयऊचुः॥समातुर्वचनंश्रुत्वागरुडःप्रहसन्निव ॥ कथयामासवृत्तान्तंसा श्रुत्वाविस्मिताभवत् ॥ ३३ ॥ विनतोवाच॥कथंचदुष्करंकर्मशिशुभावात्त्वयाकृतम् ॥ धन्याहंमेकुलंधन्यंयस्त्वंविष्णुसखोऽभवः ॥ ३४ ॥ लब्ध्वा वरंमहात्मानंद्रक्ष्यामेहृष्यतेमनः ॥ पौरुषेणत्वयावत्सउद्धृतंमेकुलद्वयम् ॥ ३५ ॥ सुपर्णउवाच ॥ मातःकिंतेकरिष्यामिप्रियमेवतदुच्यताम् ॥ कार्यं कृत्वाथयास्यामिपार्श्वंनारायणस्यच ॥ ३६ ॥ ऋषयऊचुः॥एतच्छ्रुत्वातुसाप्राहगरुडंविनतासती ॥ महद्दुःखंचमेचास्तिकुरुतातप्रतिक्रियाम्॥३७॥ भगिनीमेसपत्नीसापणिताहंतयापुरा ॥ तस्यादास्यमहंप्राप्ताकस्तारयतिमामितः ॥ ३८ ॥ कृष्णंकृत्वाविषैरश्वंतस्याःपुत्रैर्महोरगैः ॥ उषःकालेऽवद त्साचअश्वोऽयंकृष्णतांव्रजेत् ॥ ३९ ॥ ततोऽहमवदंतत्रसदाचायंरुचासितः ॥ मिथ्यातेवचनंमातःप्रतिज्ञांसाकरोत्तदा ॥ १४० ॥ ततोऽहमब्रवंकद्रूं शपथंनागमातरम् ॥ यदीमंकृष्णताभ्येतिहरेरश्वमहंतदा ॥ कृताभवामितेदासीत्यहमेतत्तदाऽवदम् ॥ ४१ ॥ ततस्तस्मिन्हरेरश्वेकृतेकृष्णेचकृत्रिमैः॥ तस्याःपुत्रैश्चधूर्तैश्चदासीत्वमगमंतदा ॥ ४२ ॥ यस्मिन्कालेह्यभीष्टंश्चतस्याद्रव्यंददाम्यहम् ॥ तस्मिन्कालेह्यदासीत्वंयास्यामिकुलनन्दन ॥ ४३ ॥ गरुडउवाच ॥ पृच्छशीघ्रंचमातस्त्वांकरिष्यामिप्रतिक्रियाम् ॥ भक्षयिष्यामितान्नागान्प्रतिज्ञामेयथार्थतः ॥ ४४ ॥ ऋषयऊचुः ॥ ततःकद्रूमुवाचेदं विनतादुःखितासती ॥४५॥ विनतोवाच॥अभीष्टंवदकल्याणियेनमुच्येयकृच्छ्रतः॥४६॥ऋषयऊचुः॥अब्रवीत्सादुराचारापीयूषंदीयतामिति॥एतच्छ्रु त्वातुवचनमभवत्साचनिष्प्रभा॥ततःशनैरुपागम्यतनयंप्राहदुःखिता॥४७॥विनतोवाच॥अमृतंप्रार्थयत्पापातातकिंवाकरिष्यसि॥४८॥ऋषयऊचुः॥ श्रुत्वावाक्यंगरुत्मांश्चमहाक्रोधसमन्वितः॥४९॥गरुडउवाच॥अमृतंचानयिष्यामिमातर्माविमुखीभव ॥१५०॥ ऋषयऊचुः॥एवमुक्त्वातुतरसासगतः पितुरन्तिकम् ॥५१॥ गरुडउवाच॥अमृतंचानयिष्यामिमातुरर्थेऽधुनाऽनघ॥५२॥ ऋषयऊचुः॥सतस्यवचनंश्रुत्वामुनिःप्राहखगेश्वरम्॥५३॥कश्यप उवाच॥सत्यलोकस्यवैचोर्ध्वेविश्वकर्मविनिर्मिता॥पुरीचास्तिसभारम्यादेवानांहितहेतवे॥५४॥ वह्निप्राकारदुर्लभ्यादुर्धर्षाचासुरैःसुरैः॥रक्षार्थंनिर्मितो देवःसुरैस्तत्रमहाबलः ॥५५॥ यंयंपश्यतिवीरःसएवभस्मतांव्रजेत् ॥५६ ॥ सुपर्णउवाच ॥ नारायणाद्वरोलब्धोमयाचमुनिसत्तम ॥ भयंनास्तीहमे तातसुरासुरगणादपि ॥ ५७ ॥ ऋषयऊचुः ॥ एवमुक्त्वागरुत्मान्सउद्धृत्यसागराज्जलम् ॥ जगामाकाशमाविश्यखगश्चोर्ध्वंमनोजवः ॥५८॥ पक्षवा तेनतस्यैवरजःसमुद्गतंबहु॥तस्यान्तिकंनचत्यक्तमगमत्तस्यतच्चयः ॥५९॥ गत्वाचञ्चूजलेनापिवह्निंनिर्वापयद्बली ॥ रजोभिःपरिपूर्णाक्षोनसुरस्तंचप

श्यति ॥ १६० ॥ जघानरक्षिवर्गांस्तानमृतंचाहरद्बली ॥ आनयन्तंचपीयूषंखगंगत्वाशतक्रतुः ॥ ६१ ॥ ऐरावतंसमारूढोवाक्यमेतदुवाचह ॥
॥ ६२ ॥ इन्द्रउवाच ॥ खगरूपधरःकस्त्वंपीयूषंहरसेबलात् ॥ अप्रियंसर्वदेवानांकृत्वाजीवेरितःकथम् ॥६३॥ विशिखैरग्निसङ्काशैर्नयामियममन्दि
रम् ॥ ६४ ॥ ऋषयऊचुः ॥ श्रुत्वावाक्यंहरेःकोपादुवाचसमहाबलः ॥ ६५ ॥ गरुडउवाच ॥ नयामितवपीयूषंदर्शयस्वपराक्रमम् ॥ ६६ ॥ ऋषय
ऊचुः ॥ एतच्छ्रुत्वामहाबाहुर्जघानविशिखैःशितैः ॥ यथामेरुगिरेःशृङ्गंतोयवर्षेणतोयदः ॥ ६७ ॥ नखैरशनिसङ्काशैर्बिभेदगरुडोगजम् ॥ मात
लिंचरथंचक्रंतथादेवान्पुरस्सरान् ॥ ६८ ॥ व्यथितोऽसौमहाबाहुर्मातलिर्गजपुङ्गवः ॥ विमुखाःपक्षवातेनसर्वेदेवगणास्तदा ॥ ६९ ॥
ततस्तुकोपितोजिष्णुर्जघानकुलिशेनतम् ॥ कुलिशस्यावपातेननचक्षुब्धोमहाखगः ॥ १७० ॥ स्वंमोघंभिदुरंदृष्ट्वाहरिर्भीतोऽभवत्तदा ॥
संनिवृत्यततोयुद्धात्तत्रैवान्तरधीयत ॥ ७१ ॥ सुतरामपिगच्छन्तंवेगाद्भूतलमागतः ॥ अब्रवीत्ससुरश्रेष्ठःसर्वदेवगणाग्रतः ॥ ७२ ॥
शक्रउवाच ॥ यदिदास्यसिपीयूषमिदानींनागमातरि ॥ भुजगाश्चामराःसर्वेक्रियन्तेहिध्रुवंतया ॥ ७३ ॥ प्रतिज्ञातेभवेन्नष्टानफलंजी
वितस्यते ॥ तस्मादिदंहरिष्यामिसंमतेनतवानघ ॥ ७४ ॥ गरुत्मानुवाच ॥ यस्मिन्कालेह्यदासीसामातामेदुःखितासती ॥ विदितास
र्वलोकेषुहरेऽमृतंहरिष्यसि ॥ ७५ ॥ ऋषयऊचुः ॥ एवमुक्त्वामहावीर्योगत्वोवाचप्रसूंतदा ॥ ७६ ॥ गरुडउवाच ॥ आनीतममृतंमातस्तस्याएव
प्रदीयताम् ॥ ७७ ॥ ऋषयऊचुः ॥ प्रोत्फुल्लहृदयासाचदृष्ट्वापुत्रंसहामृतम् ॥ तामाहूयामृतंदत्त्वाचादासीत्वंतदागता ॥ ७८ ॥ तृणकाष्ठानिभूतानिप
शवश्चसरीसृपाः ॥ दृष्ट्वासविस्मयास्सर्वेदेवामहर्षयस्तदा ॥ ७९ ॥ मोचयित्वातुतामम्बांगरुडःसुष्ठुतांगतः ॥ एतस्मिन्नन्तरेशक्रोजहारसहसासु
धाम् ॥ १८० ॥ निधायगरलंतत्रतयाचानुपलक्षितः ॥ प्रहृष्टहृदयाकद्रूःपुत्रानाहूयसम्भ्रमात् ॥ ८१ ॥ तषांमुखेददौहृष्टाक्ष्वेडंचामृतलक्षणम् ॥
तानुवाचप्रसूःपुत्रान्युष्माकंचकुलेसदा ॥ ८२ ॥ मुखेतिष्ठन्त्वमीदैवाबिन्दवस्तेननिर्वृताः ॥ महर्षयस्ततोदेवाःसिद्धगन्धर्वमानुषाः ॥ ८३ ॥ ऊचुः
सन्तुकुलेमातरस्माकंचप्रसादतः ॥ नागैर्विसर्जितादेवाःससिद्धामुनयस्तथा ॥ ८४ ॥ जग्मुःस्वमालयंहृष्टानागाःप्रमुदिताःस्थिताः ॥ एतस्मिन्नन्तरे
नागांश्चखादगरुडोबलात् ॥ ८५ ॥ दिक्षुपलायिताःशेषाःपर्वतेषुवनेषुच ॥ सागरेषुचपातालेबिलेषुतरुकोटरे ॥८६॥ निभृतेषुनिकुञ्जेषुस्थिताःसर्पा
श्चनिर्वृताः ॥ भुजगास्तस्यभक्ष्याश्चसदैवविधिनिर्मिताः ॥ ८७ ॥ सखादयित्वानागांश्चसम्भाष्यपितरावथ ॥ विबुधान्पूजयित्वातुजगामहरिमव्य
यम् ॥ ८८ ॥ यःपठेच्छृणुयाद्वापिसुपर्णचरितंशुभम् ॥ सर्वपापविनिर्मुक्तःसुरलोकेमहीयते ॥ १८९ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेगरुडोत्प

त्तिर्नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ ब्रह्मोवाच ॥ अतःपरंतुविप्रर्षेचाण्डालपतितोद्विजः ॥ प्रलप्यचबहून्शोकाञ्जगामकश्यपंमुनिम् ॥ १ ॥
गत्वोवाचमुनिश्रेष्ठवदास्माकंहितंवचः ॥ यथापापाद्विमुच्येऽहंमुनिश्रेष्ठतथाकुरु ॥ २ ॥ ऋषयऊचुः ॥ तमुवाचमहातेजाईषद्धास्यःसमन्ततः ॥ ३ ॥
कश्यपउवाच ॥ सन्दर्शनाच्चम्लेच्छानामुपशान्तोऽसिवैस्वयम् ॥ गायत्र्याश्चजपैर्होमैर्व्रतैश्चान्द्रायणादिभिः ॥ स्मरन्नित्यंहरेःपादमुपोष्यहरिवा
सरम् ॥ ४ ॥ अहर्निशंहरेर्ध्यानंप्रणामंकुरुतंप्रभुम् ॥ तीर्थस्नानेनमन्त्रेणपङ्कस्यान्तंगमिष्यसि ॥ ५ ॥ ततःपापक्षयादेवब्राह्मणत्वंचलप्स्यसे ॥ व्रतैर्वृ
षाधिकैर्मोक्षंनाशयन्कल्मषंद्विज ॥ ६ ॥ ब्रह्मोवाच ॥ मुनेस्तस्यवचःश्रुत्वाकृतकृत्योऽभवत्तदा ॥ पुण्यंसविविधंकृत्वापुनर्ब्रह्मत्वमाप्तवान् ॥ ७ ॥
ततस्तस्वातपस्तीव्रंस्वर्लोकंचिरमभ्यगात् ॥ सद्वृत्तस्याखिलंपापंक्षयंयातिदिनेदिने ॥ ८ ॥ असद्वृत्तस्यपुण्यंहिक्षयंयात्यञ्जनोपमम् ॥ अनाचारा
द्धतोविप्रआचारात्सुरतांव्रजेत् ॥ ९ ॥ ततःकण्ठगतैःप्राणैराचारंकुरुतेद्विजः ॥ कर्मणामनसाङ्गेनसदाचारंसदाकुरु ॥ १० ॥ कश्यपस्योपदेशेनस
विनीतोऽभवद्द्विजः ॥ आचारंतुपुनःकृत्वातपस्तप्त्वादिवंगतः ॥ ११ ॥ अनाचारीहतोविप्रःस्वर्गलोकेषुगर्हितः ॥ आचारंतुपुनःकृत्वासुरलोके
महीयते ॥ १२ ॥ नारदउवाच ॥ प्राप्नुवन्तिगतिंलोकाःपूजयित्वाद्विजोत्तमान् ॥ द्विजानांपीडनंकृत्वागतिंगच्छन्तिकांप्रभो ॥ १३ ॥ ब्रह्मोवाच ॥
क्षुधासन्तप्तदेहानांब्राह्मणानांमहात्मनाम् ॥ नार्चयेच्छक्तितोभक्त्यासयातिनरकंनरः ॥ १४ ॥ परुषेणक्रोशयित्वाक्रोधाद्वस्तुविसर्जयेत् ॥
सयातिनरकंघोरंमहारौरवकृच्छ्रकम् ॥ १५ ॥ सन्निवृत्तस्ततःकीटाद्यन्त्यजातिषुजायते ॥ ततोरोगीदरिद्रस्तुक्षुधयापरिपीडितः ॥ १६ ॥
नावमन्येत्ततोविप्रंक्षुधयागृहमागतम् ॥ नददामीतियोब्रूयाद्देवाग्निब्राह्मणेषुसः ॥ १७ ॥ तिर्यग्योनिशतंगत्वाचाण्डालयमुपगच्छति ॥
पादमुद्यम्ययोविप्रंहन्तिगांपितरौगुरुम् ॥ १८ ॥ रौरवेनियतोवासस्तस्यनास्तीहनिष्कृतिः ॥ यदिपुण्याद्भवेज्जन्मसएवपण्डुतांव्रजेत् ॥ १९ ॥
अतिदीनोविषादीचदुःखशोकाभिपीडितः ॥ एवंजन्मत्रयंप्राप्यभवेत्तस्यचनिष्कृतिः ॥ २० ॥ मुष्टिचपेटकीलैश्चहन्याद्विप्रंतुयःपुमान् ॥
तापनेरौरवेघोरेकल्पान्तंसोऽपितिष्ठति ॥ २१ ॥ अथजन्मसमासाद्यकुक्कुरःक्रूरचण्डकः ॥ अन्त्यजातिषुजातोऽपिदरिद्रःकुक्षिशूलवान् ॥ २२ ॥
पादमुद्यच्छतेवायस्तस्यपादेशिलीपदः ॥ खञ्जोवामन्दजङ्घोवाखण्डपादोभवेन्नरः ॥ २३ ॥ पक्षवातेनचाङ्गानिप्रकम्पन्तेसदैवहि ॥ मातरंपितरंविप्रं
स्नातकंचतपस्विनम् ॥ २४ ॥ हत्वागुरुगणंक्रोधात्कुम्भीपाकेचिरंभवेत् ॥ उषित्वाचैवजायेतकीटजातिषुतत्परम् ॥ २५ ॥ विरुद्धंपरुषंवाक्यंयोवदे
द्द्विजातिषु ॥ अष्टौकुष्ठाःप्रजायन्तेतस्यदेहेदृढंसुत ॥ २६ ॥ विचर्चिकाथदद्रूश्चमण्डलःशुक्तिसिध्मकौ ॥ कालकुष्ठस्तथाशुक्रस्तरुणश्चातिदारुणः

॥ २७ ॥ ततोभिषक्प्रयोगेचपापात्पुण्यंपलायते ॥ अपुण्याज्जलरेखेवतेनैवनिधनंव्रजेत् ॥ २८ ॥ एषांमध्येमहाकुष्ठास्त्रयएवप्रकीर्तिताः ॥ काल
कुष्ठस्तथाशुक्लस्त्वरुणश्चातिदारुणः ॥ २९ ॥ महापातकभावानांज्ञानात्संसर्गतोऽपिवा ॥ अतिपातकिनामेवत्रयोदेहेभवन्तिवै ॥ ३० ॥ संसर्गात्सह
सम्बन्धाद्रोगःसञ्चरतेनृणाम् ॥ दूरात्परित्यजेद्धीरःस्पृष्ट्वास्नानंसमाचरेत् ॥३१॥ पतितंकुष्ठसंयुक्तंचाण्डालंचगवाशिनम् ॥ श्वानंरजस्वलांभिल्लंस्पृष्ट्वा
स्नानंसमाचरेत् ॥ ३२ ॥ दुरितस्यानुरूपेणदेहेकुष्ठाव्यवस्थिताः ॥ इहलोकेपरत्रैवाप्यत्रनास्तितुसंशयः ॥ ३३ ॥ न्यायेनोपार्जितांवृत्तिंब्रह्मस्वंहरते
तुयः ॥ अक्षयंनरकंप्राप्यपुनर्जन्मनविद्यते ॥ ३४ ॥ पिशुनोयस्तुविप्राणांरन्ध्रान्वेषणतत्परः ॥ तंदृष्ट्वाप्यथवास्पृष्ट्वासचैलोजलमाविशेत्
॥ ३५ ॥ ब्रह्मस्वंप्रणयाद्भुक्तंदहत्यासप्तमंकुलम् ॥ विक्रमेणतुभुञ्जानोदशपूर्वान्दशापरान् ॥ ३६ ॥ नविषंविषमित्याहुर्ब्रह्मस्वंविषमुच्यते ॥
विषमेकाकिनंहन्तिब्रह्मस्वंपुत्रपौत्रकम् ॥ ३७ ॥ मोहाच्चमातरंगत्वाब्राह्मणींचगुरोःस्त्रियम् ॥ पतित्वारौरवेघोरेपुनरुत्पत्तिदुर्लभः ॥ ३८ ॥
पतन्तिपितरस्तस्यकुम्भीपाकेऽथतापने ॥ अवीचिकालसूत्रेचमहारौरवरौरवे ॥ ३९ ॥ कदाचिदपिवातेषांनिष्कृतिंनानुमेनिरे ॥ प्राणंहत्वाद्वि
जातीनांस्वयंयात्यपुनर्भवम् ॥ पतन्तिपुरुषास्तस्यरौरवेचसहस्रशः ॥ ४० ॥ नारदउवाच ॥ सर्वेषामेवविप्राणांवधेचपातकंसमम् ॥ विषमंवा
कुतस्तिष्ठेत्तत्त्वतोवक्तुमर्हसि॥ ४१ ॥ब्रह्मोवाच ॥ हत्वाविप्रंध्रुवंपुत्रपातकंयदुदाहृतम् ॥ लभतेब्रह्महाघोरंवक्तव्यंचापरंशृणु ॥ ४२॥लक्षकोटिसहस्राणां
ब्राह्मणानांवधंभजेत् ॥ वेदशास्त्रयुतंहत्वाश्रोत्रियंविजितेन्द्रियम् ॥ ४३ ॥ विप्रंचवैष्णवंहत्वातस्माद्दशगुणोत्तरम् ॥ स्ववंशान्पातयित्वातुपुनर्जन्मन
विन्दते ॥ ४४ ॥ त्रिवेदंस्नातकंहत्वावधस्यान्तंनविन्दते ॥ ४५ ॥ श्रोत्रियंचसदाचारंतीर्थमन्त्रप्रपूतकम् ॥ ईदृशंब्राह्मणंहन्तुःपापस्यान्तोनविद्यते
॥ ४६ ॥ अपकारंसमुद्दिश्यद्विजःप्राणान्परित्यजेत् ॥ दृश्यतेयेनचान्येनब्रह्महासभवेन्नरः ॥ ४७ ॥ वचोभिःपरुषैर्वृत्तैःपीडितस्ताडितोद्विजः ॥
यमुद्दिश्यत्यजेत्प्राणांस्तमाहुर्ब्रह्मघातिनम् ॥ ४८ ॥ ऋषयोमुनयोदेवाःसर्वेब्रह्मविदस्तथा ॥ देशानांपार्थिवानांचसाचवध्याभवेदिह ॥ ४९ ॥
अतोब्रह्मवधंप्राप्यपितृभिःसहपच्यते ॥ प्रायोपवेशकंविप्रंबुधःसंमानयेद्ध्रुवम् ॥ ५० ॥ दोषैश्चापिविनिर्मुक्तमुद्दिश्यप्राणमुत्सृजेत् ॥ सप्रलिप्तोवधै
र्घोरैनैतुयंपरिकीर्तयेत् ॥ ५१ ॥ आत्मघातंद्रुमारोहंकोटरैरुपजीवनम् ॥ यःकुर्यादात्मनोघातंस्ववंशेब्रह्महाभवेत् ॥ ५२ ॥ भ्रूणंचघातयेद्यस्तुशि
शुंवाआतुरंगुरुम् ॥ ब्रह्महास्वयमेवस्यान्नतुयंपरिकीर्तयेत् ॥ ५३ ॥ मारयेच्चसगोत्रंवाब्राह्मणंब्राह्मणाधमः ॥ तस्यैवतद्भवेत्पापंनतुयंपरिकीर्त्तयेत्
॥ ५४ ॥ पीडयित्वाद्विजंशूद्रःस्वकार्यंचापिसाधयत् ॥ तत्रापापेचशूद्रस्यपातकंनान्यथाभवेत् ॥ ५५ ॥ तात्कालिकवधंहत्वाहन्तारमातता

यिनम् ॥ नचहन्ताचतत्पापैर्लिप्यतेद्विजसत्तम ॥ ५६ ॥ आततायिनमायान्तमपिवेदान्तगंरणे ॥ जिघांसन्तंजिघांसेच्चनतेनब्रह्महाभवेत्॥५७॥
अग्निदोगरदश्चैवधनहारीचसुमघः ॥ क्षेत्रदारापहारीचषडेतेह्याततायिनः ॥ ५८ ॥ खलोराजवधोद्योगीपितॄणांचवधेरतः ॥ अनुयायीनृपोराज्ञश्च
त्वारश्चाततायिनः ॥ ५९ ॥ तत्क्षणान्नमृतंविप्रंपुनर्हन्तुंनयुज्यते ॥ पुनर्हत्वावधंघोरंज्ञानात्प्राप्नोतिनिश्चितम् ॥ ६० ॥ लोकेविप्रसमोनास्तिपू
जनीयोजगद्गुरुः ॥ हत्वातंयद्भवेत्पापंतत्परंचनविद्यते ॥ ६१ ॥ देववत्पूजनीयोऽसौदेवासुरगणैर्नरैः ॥ ब्राह्मणस्यसमोनास्तित्रिषुलोकेषुनिश्चितम्
॥ ६२ ॥ नारदउवाच ॥ कांवृत्तिंसमुपाश्रित्यजीवितव्यंद्विजेनहि ॥ अपापेनसुरश्रेष्ठतत्त्वतोवक्तुमर्हसि ॥ ६३ ॥ ब्रह्मोवाच ॥ अयाचिताचयाभि
क्षाप्रशस्तासाप्रकीर्तिता ॥ उञ्छवृत्तिस्ततोभद्रासुभद्रासर्ववृत्तिषु ॥ ६४ ॥ यामाश्रित्यमुनिश्रेष्ठागच्छन्तिब्रह्मणःपदम् ॥ दक्षिणायज्ञशेषाणांग्राह्या
यज्ञगतेनहि ॥ ६५ ॥ पाठनंयाजनंकृत्वाग्रहीतव्यंधनंद्विजैः ॥ पाठयित्वापठित्वाचकृत्वास्वस्त्ययनंशुभम् ॥ ६६ ॥ ब्राह्मणानामिदंजीव्यंशि
ष्टावृत्तिःप्रतिग्रहः ॥ शास्त्रोपजीविनोधन्याधन्यावृक्षोपजीविनः ॥ ६७ ॥ धन्यावृक्षलताजीव्यावाटीसस्योपजीविनः ॥ अन्नजन्तुवधेपापंतस्य
दोषोपशान्तये ॥ ६८ ॥ नवधान्यानिशस्तानिविप्रेभ्यःसम्प्रदापयेत् ॥ नचेत्प्राणिवधेह्यत्रक्षीयन्तेचायुषोध्रुवम् ॥ ६९ ॥ तस्माद्दद्यात्सुबहूनि
पितृदेवद्विजातिषु ॥ अभावात्क्षत्रियावृत्तिर्ब्राह्मणैरुपजीव्यते ॥ ७० ॥ न्याययुद्धेषुयोद्धव्यंचरेद्वीरव्रतंशुभम् ॥ सतयाचद्विजोवृत्त्यायद्धनंलभ
तेनृपात् ॥ ७१ ॥ पितृयज्ञादिदानेषुमेध्यंतद्धनमुच्यते ॥ समभ्यसेद्धनुर्विद्यांवेदयुक्तांसदानघः ॥ ७२ ॥ शक्तिकुन्तगदाखड्गपरिघाणांसमन्ततः॥
अश्वारोहंगजारोहमैन्द्रजालममानकम् ॥ ७३ ॥ रथभूमिगतंयुद्धंयुक्तंसर्वत्रकारयेत् ॥ द्विजदेवध्रुवाणांचस्त्रीणांवृत्तंतपस्विनाम् ॥ ७४ ॥ साधुसा
ध्वीगुरूणांचनृपाणांरक्षणाद्ध्रुवम् ॥ यत्पुण्यंलभ्यतेशूरैःकथंतद्ब्रह्मवादिभिः ॥ ७५ ॥ सर्वपापक्षयंकृत्वासोऽक्षयंस्वर्गमश्नुते ॥ संमुखेन्याययु
द्धेचपतन्तिब्राह्मणारणे ॥ ७६ ॥ तेव्रजन्तिपरंस्थानंनगम्यंब्रह्मवादिनाम् ॥ धर्मयुद्धस्ययद्वृत्तंशृणुपुण्यंयथार्थतः ॥ ७७ ॥ संमुखेनप्रयुध्यन्तेनचग
च्छन्तिकातरम् ॥ नभग्नंपृष्ठतोघ्नन्तिनिःशस्त्रंप्रपलायिनम् ॥ ७८ ॥ अयुध्यमानंभीरुंचपतितंगतकल्मषम् ॥ असच्छूद्रंस्तुतिप्रीतमाहवेशरणा
गतम् ॥ ७९ ॥ हत्वाचनरकंयान्तिदुर्वृत्ताजयकाङ्क्षिणः ॥ एषाचक्षत्रियावृत्तिःसदाचारैस्तुगीयते ॥८०॥ यामाश्रित्यदिवंयान्तिसर्वक्षत्रियकुञ्जराः॥
धर्मयुद्धेशुभोमृत्युःसंमुखेक्षत्रियस्यच ॥ ८१ ॥ अत्रपूतोभवेत्सोऽपिसर्वपापैःप्रमुच्यते ॥ सतिष्ठेत्स्वर्गलोकेचप्रासादेरत्नभूषिते ॥ ८२ ॥ जाम्बून
दमयस्तम्भेरत्नभूषितभूतले ॥ इष्टद्रव्यैःसुसम्पूर्णेदिव्यवस्त्रोपशोभिते ॥ ८३ ॥ पुरतःकल्पवृक्षाश्चतिष्ठन्तिसर्वदायिनः ॥ वापीकूपतटाकाद्यैरुद्या

नैरुपशोभिते ॥ ८४ ॥ यौवनाढ्याश्चसेवन्तेतंदेवपुरकन्यकाः ॥ तस्याग्रतोमुदानित्यंनृत्यन्त्यप्सरसांगणाः ॥ ८५ ॥ गीतंमायन्तिगन्धर्वादे
वाश्चस्तुतिपाठकाः ॥ एवंक्रमेणकल्पान्तेसार्वभौमोभवेन्नृपः ॥ ८६ ॥ सर्वभोगैककर्ताचनीरुङ्मन्मथविग्रहः ॥ तस्यपत्न्यःप्ररूपाढ्याःसदैवयौ
वनान्विताः ॥ ८७ ॥ धर्मशीलाःसुताःशुभ्राःसमृद्धाःपितृसंमताः ॥ एवंक्रमेणभुञ्जन्तिसप्तजन्मसुक्षत्रियाः ॥ ८८ ॥ अन्यायेनतुयोद्धारस्तिष्ठ
न्तिनरकेचिरम् ॥ एवंचक्षत्रियावृत्तिर्ब्राह्मणैरुपजीव्यते ॥ ८९ ॥ वैश्यःशूद्रैस्तथान्यैश्चअंन्त्यजैर्म्लेच्छजातिभिः ॥ यंचयोधाःप्रयुध्यन्तेन्याययु
द्धेनसर्वदा ॥ ९० ॥ तेऽपियान्तिपरंस्थानंसर्वेवर्णाद्विजातयः ॥ नशूरोयोद्विजोभीरुरस्त्रशस्त्रविवर्जितः ॥ ९१ ॥ विपत्तौवैश्यवृत्तिंचकारयेद्द्विज
सत्तमः ॥ वैश्यवृत्तिंवणिग्भावंकृर्षिचैवतथापरैः ॥ ९२ ॥ कारयेत्कृषिवाणिज्यंविप्रकर्मनचत्यजेत् ॥ वणिग्भावान्मृपात्युक्तौदुर्गतिंप्राप्नुयाद्द्विजः
॥ ९३ ॥ आर्द्रद्रव्यंपरित्यज्यब्राह्मणोलभतेशिवम् ॥ समुत्पाद्यततोवृत्तिंदद्याद्विप्रायसर्वशः ॥ ९४ ॥ पितृयज्ञंतथाचाग्नौजुहुयाद्विधिवद्द्विजः ॥
तुलेऽसत्यंनकर्त्तव्यंतुलाधर्मप्रतिष्ठिता ॥ ९५ ॥ छलभावंतुलेकृत्वानरकंप्रतिपद्यते ॥ अतुलंचापियद्द्रव्यंतत्रमिथ्यापरित्यजेत् ॥ ९६ ॥ एवं
मिथ्यानकर्त्तव्यामृषापापप्रसूतिका ॥ नास्तिसत्यात्परोधर्मोनानृतात्पातकंपरम् ॥ ९७ ॥ अतःसर्वेषुकार्येषुसत्यमेवविशिष्यते ॥ अश्वमेधसहस्रं
तुसत्यंचतुलयाधृतम् ॥ ९८ ॥ अश्वमेधसहस्राद्धिसत्यमेवविशिष्यते ॥ योवदेत्सर्वकार्येषुसत्यंमिथ्यापरित्यजेत् ॥ ९९ ॥ सनिस्तरतिदुर्गाणि
स्वर्गमक्षयमश्नुते ॥ वाणिज्यंकारयेद्विप्रोमिथ्याऽवश्यंपरित्यजेत ॥ १०० ॥ वृद्धिंचनिक्षिपेत्तीर्थेस्वयंशेषंतुभोजयेत् ॥ देहक्लेशात्तत्सहस्रगुणंभव
तिसर्वदा ॥ १ ॥ अर्थार्जनविधौमर्त्याविशन्तिविषमेजले ॥ कान्तारमटवींचैवश्वापदैःसेवितांतथा ॥ २ ॥ गिरिंगिरिगुहांदुर्गांम्लेच्छानां
शस्त्रपातिनाम् ॥ गृहंप्रतिभयंस्थानंधनलोभात्समन्ततः ॥ ३ ॥ सुतदारान्परित्यज्यदूरंगच्छन्तिलोभिनः ॥ स्कन्धेभारंवहन्त्यन्येतर्याचक्रे
निपातनैः ॥ ४ ॥ क्षेपणीभिर्महादुःखैस्सदाप्राणव्ययेनच ॥ अर्थस्यसञ्चयःपुत्रप्राणात्प्रियतरोमहान् ॥ ५ ॥ एभिर्न्यायार्जितंवित्तं
वणिग्भावेनयत्नतः ॥ पितृदेवद्विजातिभ्योदत्तंचाक्षयमश्नुते ॥ ६ ॥ एतौदोषौमहान्तौचवाणिज्येलाभकर्मणि ॥ लोभानामपरित्यागो
मृषाग्राह्यश्चविक्रयः ॥ ७ ॥ एतौदोषौपरित्यज्यकुर्यादर्थार्जनंबुधः ॥ अक्षयंलभतेदानाद्वणिग्दोषैर्नलिप्यते ॥ ८ ॥ पुण्यकर्मरतोविप्रः
कृर्षिहिपरिकारयेत् ॥ वाहयेद्दिवसस्यार्धंबलीवर्दचतुष्टयम् ॥ ९ ॥ अभावात्रितयंचैवअविश्रामंनकारयेत् ॥ चारयेच्चतृणेऽच्छिन्नेचोरव्याघ्रवि
वर्जिते ॥ ११० ॥ दद्याद्ग्रासंयथेष्टंचनित्यमातर्पयेत्स्वयम् ॥ गोष्ठंचकारयेत्तस्यकिञ्चिद्विघ्नविवर्जितम् ॥११॥ सदागोमयमूत्राभ्यांविघसैश्चविवर्जि

तम् ॥ नमलंनिक्षिपेद्गोष्ठेसर्वदेवनिकेतने ॥१२॥ आत्मनःशयनीयस्यसदृशंकारयेद्बुधः ॥ समंनिर्वापयेद्यत्नाच्छीतवातरजस्तथा ॥१३॥ प्राणस्यस
दृशंपश्येद्गांचसामान्यविग्रहम् ॥ अस्यदेहेसुखंदुःखंतथातस्यैवकल्पते ॥ १४ ॥ अनेनविधिनायस्तुकृषिकर्माणिकारयेत् ॥ सचगोवाहनैर्दोषैर्नलि
प्येतधनीभवेत ॥ १५ ॥ दुर्बलंपीडयेद्यस्तुतथैवगदसंयुतम् ॥ अतिबालातिवृद्धंचसगोहत्यांसमालभेत् ॥१६॥ विषमंवाहयेद्यस्तुदुर्बलंसबलंतथा ॥
सगोहत्यासमंपापंप्राप्नोतीहनसंशयः ॥ १७ ॥ योवाहयेद्विनासस्यंखादन्तंगांनिवारयेत् ॥ मोहात्तृणंजलंवापिसगोहत्यासमंलभेत् ॥ १८ ॥
सङ्क्रान्त्यांपौर्णमास्यांचामावास्यायांतथैवच ॥ हलस्यवाहनात्पापंगवामयुतहत्यया ॥ १९ ॥ अमूषुपूजयेद्यस्तुसितैश्चित्रादिभिर्नरः ॥ कज्जलैः
कुसुमैस्तैलैःसोऽक्षयंस्वर्गमश्नुते ॥ १२० ॥ घासमुष्टिंपरगवेयोददातिसदाह्निकम् ॥ सर्वपापक्षयस्तस्यस्वर्गंचाक्षयमश्नुते ॥ २१ ॥ यथाविप्रस्तथा
गौश्चद्वयोःपूजाफलंसमम् ॥ विचारेब्राह्मणोमुख्योनृणांगावःपशौतथा ॥ २२ ॥ नारदउवाच ॥ विप्रोब्रह्ममुखेजातःकथितोमेत्वयानघ ॥ कथंगो
भिःसमोनाथविस्मयोमेविधेध्रुवम् ॥२३॥ ब्रह्मोवाच ॥ शृणुचात्रयथातथ्यंब्राह्मणानांगवांयथा ॥ एकपिण्डक्रियैक्यंतुपुरुषैर्निर्मितंपुरा ॥२४॥ पुरा
ब्रह्ममुखोद्भूतंकूटंतेजोमयंमहत्. ॥ चतुर्भागप्रजातंतद्वेदोऽग्निर्गौर्द्विजस्तथा ॥ २५ ॥ प्राक्तेजःसम्भवोवेदोवह्निरेवतथैवच ॥ परतोगौस्तथाविप्रो
जातश्चैवपृथक्पृथक् ॥ २६ ॥ तत्रसृष्टामयाचादौवेदाश्चत्वारएकशः ॥ स्थित्यर्थंसर्वलोकानांभुवनानांसमन्ततः ॥ २७ ॥ अग्निर्हव्यानिभु
ञ्जीतदेवहेतोस्तथाद्विजः ॥ आज्यंगोप्रभवंविद्धितस्मादेतेप्रसूतकाः ॥ २८ ॥ नसन्तियदिलोकेषुचत्वारोऽमीमहत्तराः ॥ तदाखिलंचभुवनंनष्टंस्थाव
रजङ्गमम् ॥ २९ ॥ एभिर्धृताःसदालोकाःप्रतिष्ठन्तिस्वभावतः ॥ स्वभावोब्रह्मरूपोऽसावेतब्रह्ममयाःस्मृताः ॥१३०॥ तस्माद्गौःपूजनीयोऽसौविप्रदे
वासुरैरपि ॥ उदारःसर्वकार्येषुजातस्तथ्योगुणाकरः ॥ ३१ ॥ सर्वदेवमयःसाक्षात्सर्वसत्त्वानुकम्पकः ॥ अस्यकार्यंमयासृष्टंपुरैवपोषणंप्रति
॥ ३२ ॥ अतएवमयादत्तंवरंचातिसुशोभनम् ॥ एकजन्मनितेमोक्षस्तवास्त्विति विनिश्चितम् ॥ ३३ ॥ अत्रैवयेमृतागावस्त्वागच्छन्तिममालयम् ॥
पापस्यकणमात्रंतुतेषांदेहेनतिष्ठति ॥ ३४ ॥ देवीगौर्धेनुकादेवाश्चादिदेवीत्रिशक्तिका ॥ प्रसादाद्यस्ययज्ञानांप्रभवोहिविनिश्चितः ॥ ३५ ॥ गवां
सर्वपवित्राणिपुनन्तिसकलंजगत् ॥ मूत्रंगोर्गोमयंक्षीरंदधिसर्पिस्तथैवच ॥ ३६ ॥ अमीषांभक्षणेपापंनतिष्ठतिकलेवरे ॥ तस्माद्घृतंदधिक्षीरंनित्यं
खादन्तिधार्मिकाः ॥ ३७ ॥ विशिष्टंसर्वद्रव्येषुगव्यमिष्टंपरंशुभम् ॥ यस्यास्येभोजनंनास्तितस्यमूर्तिस्तुपूतिका ॥ ३८ ॥ अन्नाद्यंपञ्चरात्रेणसप्त
रात्रेणवैपयः ॥ दधिविंशतिरात्रेणघृतंस्यान्मासमेककम् ॥ ३९ ॥ अगव्यैर्यस्तुभुङ्क्तेवैमासमेकंनिरन्तरम् ॥ भोजनेतस्यमर्त्यस्यप्रेताःखादन्तिचैवहि

॥ १४० ॥ परमान्नंपरंशुद्धंस्विन्नंचातपतण्डुलैः ॥ भुक्त्वातुयत्कृतंपुण्यंकोटिकोटिगुणंभवेत् ॥ ४१ ॥ अन्यच्चापिचयद्द्रव्यंहविष्यंशास्त्रनिर्मित
म् ॥ तद्भुक्त्वायत्कृतंकर्मसर्वंलक्षगुणंभवेत् ॥ ४२ ॥ निरामिषंचयत्किञ्चित्तस्माद्यद्यत्फलंलभेत् ॥ तस्माद्गौःसर्वकार्येषुशस्ताचैकायुगेयुगे ॥ सर्वदा
सर्वकामेषुधर्मकामार्थमोक्षदा ॥४३॥ नारदउवाच ॥ केषुकिंवाप्रयोगेणपरंपुण्यंप्रकीर्तितम् ॥ वदतत्सर्वलोकेशयथाजानामितत्त्वतः ॥ ४४ ॥ ब्रह्मो
वाच ॥ सकृत्प्रदक्षिणंकृत्वागोधनंचाभिवन्दयेत् ॥ सर्वपापाविनिर्मुक्तःस्वर्गंचाक्षयमश्नुते ॥ ४५ ॥ सुराचार्योयथावन्द्यःपूज्योऽसौमाधवोयथा ॥
सप्तप्रदक्षिणंकृत्वाचैश्वर्यात्पाकशासनः ॥ ४६ ॥ कल्यउत्थायगोमध्येपात्रंगृह्यसहोदकम् ॥ निषिञ्चेद्योगवांशृङ्गमस्तकेनैवतज्जलम् ॥ ४७ ॥ प्रती
च्छेतनिराहारस्तस्यपुण्यंनिबोधम ॥ श्रूयन्तेयानितीर्थानित्रिषुलोकेषुनारद ॥४८॥ सिद्धचारणयुक्तानिसेवितानिमहर्षिभिः॥ अभिषेकस्समस्तेषांग
वांशृङ्गोदकस्यच ॥ ४९ ॥ प्रातरुत्थाययोमर्त्यःस्पृशेद्गांचघृतंमधु ॥ सर्षपांश्चप्रियङ्गूंश्चकल्मषात्प्रतिमुच्यते ॥ १५० ॥ घृतक्षीरप्रदागावोघृतयो
न्योघृतोद्भवाः ॥घृतनद्योघृतावर्तास्तामेसन्तुसदागृहे ॥ ५१ ॥ घृतंमेसर्वगात्रेषुघृतंमेमनसिस्थितम् ॥ गावोममाग्रतोनित्यंगावःपृष्ठतएवच ॥ ५२ ॥
गावश्चसर्वगात्रेषुगवांमध्येवसाम्यहम् ॥ इत्याचम्यजपेन्मन्त्रंसायंप्रातरिदंशुचिः ॥ ५३ ॥ सर्वपापक्षयस्तस्यस्वर्लोकेपूजितोभवेत् ॥ यथागौश्चत
थाविप्रोयथाविप्रस्तथाहरिः ॥५४॥ हरिर्यथातथागङ्गाएतेनह्यवृषाःस्मृताः ॥ गावोबन्धुर्मनुष्याणांमनुष्याबान्धवागवाम् ॥५५॥ गौश्चयस्मिन्गृहे
नास्तितद्बन्धुरहितंगृहम् ॥ गोमुखेचाश्रितावेदाःसपडङ्गपदक्रमाः ॥५६॥ शृङ्गयोश्चस्थितौनित्यंसहैवहरिकेशवौ ॥ उदरेऽवस्थितःस्कन्दःशीर्षेब्रह्मा
स्थितःसदा ॥ ५७ ॥ वृषध्वजोललाटेचशृङ्गाग्रइन्द्रएवच ॥ कर्णयोरश्विनौदेवौचक्षुषोश्शशिभास्करौ ॥ ५८ ॥ दन्तेषुगरुडोदेवोजिह्वा
यांचसरस्वती ॥ अपानेसर्वतीर्थानिप्रस्रावेचैवजाह्नवी ॥ ५९ ॥ ऋषयोरोमकूपेषुमुखतःपृष्ठतोयमः ॥ धनदोवरुणश्चैवदक्षिणंपार्श्व
माश्रितौ ॥ १६० ॥ वामपार्श्वेस्थितायक्षास्तेजस्वन्तोमहाबलाः ॥ मुखमध्येचगन्धर्वानासाग्रेपन्नगास्तथा ॥ ६१ ॥ खुरा
णांपश्चिमेपार्श्वेऽप्सरसश्चसमाश्रिताः ॥ गोमयेवसतेलक्ष्मीर्गोमूत्रेसर्वमङ्गला ॥ ६२ ॥ पादाग्रेखेचरावेद्याहम्भाशब्देप्रजापतिः ॥
चत्वारःसागराःपूर्णाधेनूनांचस्तनेषुवै ॥ ६३ ॥ गांचस्पृशतियोनित्यंस्नातोभवतिनित्यशः ॥ अतोमर्त्यःप्रपुष्टैस्तुसर्वपापैःप्रमुच्यते ॥ ६४ ॥
गवांरजःखुरोद्धूतंशिरसायस्तुधारयेत् ॥ सचतीर्थजलेस्नातःसर्वपापैःप्रमुच्यते ॥ ६५ ॥ नारदउवाच ॥ गवांचदशवर्णानांकस्यदानेचकिंफल
म् ॥ ब्रहितत्त्वंगुरुश्रेष्ठपरमेष्ठिन्प्रियंयदि ॥ ६६ ॥ ब्रह्मोवाच ॥ श्वेतांगांब्राह्मणेदत्वामानवश्चेश्वरोभवेत् ॥ प्रासादेवसतेनित्यंभोगीचसुखमेधते ॥

॥ ६७ ॥ धूम्रातुस्वर्गकान्तारसंसारेपापमोक्षिणी ॥ अक्षयंकपिलादानंकृष्णांदत्त्वानसीदति ॥ ६८ ॥ पाण्डुरादुर्लभालोकेगौरीचकुलनन्दिनी ॥
रक्ताक्षीरूपकामस्यधनकामस्यनीलिका ॥ ६९ ॥ एकांचकपिलांदत्वासर्वपापैःप्रमुच्यते ॥ यत्तुबाल्यकृतंपापंयौवनेवार्धकेकृतम् ॥ १७० ॥ वा
चाकृतंकर्मकृतंमनसायत्प्रचिन्तितम् ॥ अगम्यागमनंचैवमित्रद्रोहेचपातकम् ॥ ७१ ॥ मानकूटंतुलाकूटंकन्यानृतंगवानृतम् ॥ सर्वंचनाशयेत्क्षिप्रंक
पिलांयःप्रच्छति ॥ ७२ ॥ दशयोजनविस्तीर्णामहापारामहानदी ॥ नाराचजलकान्तारेप्रसृतेचोदकार्णवे ॥ ७३ ॥ यावद्वत्सस्यद्वौपादौमुखंया
वन्नजायते ॥ तावद्गौःपृथिवीज्ञेयायावद्गर्भंनमुञ्चति ॥ ७४ ॥ सुवर्णशृङ्गींवस्त्राढ्यांसर्वालङ्कारभूषिताम् ॥ ताम्रपृष्ठींरौप्यखुरांतथाकांस्योपदोहना
म् ॥ ७५ ॥ शोभितांगन्धपुष्पैश्चसर्वालङ्कारभूषिताम् ॥ ईदृशींकपिलांदद्याद्द्विजातौवेदपारगे ॥ ७६ ॥ सर्वपापक्षयस्तस्यविष्णुलोकेऽच्युतोभवे
त् ॥ ७७ ॥ तस्यांतुदुह्यमानायांभूमौपतन्तिबिन्दवः ॥ आरामादिविजायन्तेबहुपुष्पफलोत्तमाः ॥ ७८ ॥ यत्रकामफलावृक्षानद्यःपायसकर्दमाः ॥
प्रासादाश्चापिसौवर्णास्तत्रगच्छन्तिगोप्रदाः ॥ ७९ ॥ दशधेनूश्चयोदद्यादेकंचैवधुरन्धरम् ॥ समानंतुफलंप्रोक्तंब्रह्मणासमुदाहृतम् ॥ १८० ॥ ए
कंचदशभिर्दद्यात्सहस्राणांशतंफलम् ॥ तस्यानुसारतोवेद्यंफलंनारदयत्नतः ॥ ८१ ॥ पितॄनुद्दिश्ययःपुत्रोवृषंचमोक्षयेद्भुवि ॥ पितरोविष्णुलोकेषुम
हीयन्तेयथेप्सितम् ॥ ८२ ॥ चतस्रोवत्सतर्यश्चएकस्यैववृषस्यच ॥ मोक्ष्यन्तेसर्वतःपुत्रविधिरेषसनातनः ॥ ८३ ॥ यावन्तिचैवरोमाणितस्यता
सांचसर्वशः ॥ तावद्वर्षसहस्राणिस्वर्गंभुञ्जन्तिमानवाः ॥ ८४ ॥ लाङ्गूलेनवृषोयच्चजलंचोत्क्षिपतिध्रुवम् ॥ तत्तोयंतुसहस्राब्दंपितॄणाममृतंभवेत्
॥ ८५ ॥ खुरेणकर्षयेद्भूमिंततोलोष्टंचकर्दमः ॥ पितृभ्यश्चस्वधातत्रलक्षकोटिगुणंभवेत् ॥ ८६ ॥ विद्यमानेचजनकेयदिमाताविनश्यति ॥ चन्दने
नाङ्किताधेनुस्तस्याःस्वर्गायदीयते ॥ ८७ ॥ दाताचैवपितॄणांचऋणंचैवप्रमुञ्चति ॥ अक्षयंलभतेस्वर्गंपूजितोमघवायथा ॥ ८८ ॥ सर्वलक्षणसं
युक्तातरुणीगौःपयस्विनी ॥ समाप्रसूतिकाभद्रासाचगौःपृथिवीस्मृता ॥ ८९ ॥ तस्यदानेनमन्त्रस्यपृथ्वीदानसमंफलम् ॥ शतक्रतुसमोमर्त्यःकु
लमुद्धरतेशतम् ॥ १९० ॥ गवांचहरणंकृत्वामृतेगोरथवत्सके ॥ कृमिपूर्णेसकूपेचतिष्ठेदाभूतसम्प्लवम् ॥ ९१ ॥ गवांचैववधंकृत्वापितृभिःसहपच्य
ते ॥ रौरवेनरकेघोरेतावत्कालंप्रतिक्रिया ॥९२॥ गोप्रचारप्रभग्नश्चषण्डवाहनबन्धनः ॥ अक्षयंनरकंप्रायात्पुनर्जन्मनिजन्मनि ॥ ९३ ॥ सकृच्चश्रा
वयेद्यस्तुकथांपुण्यतमामिमाम् ॥ सर्वपापक्षयस्तस्यदेवैश्चसहमोदते ॥ ९४ ॥ यइदंशृणुयाद्वापिपरंपुण्यतमंमहत् ॥ सप्तजन्मकृतात्पापान्मुच्यते
तत्क्षणेनहि ॥ १९५ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेगोमाहात्म्यंनामपञ्चाशत्तमोऽध्यायः ॥ ५० ॥ नारदउवाच ॥ केनाचारेणविप्रस्यब्रह्मते

जोविवर्धते ॥ केनाचारेणतस्यैवब्रह्मतेजोविनश्यति ॥ १ ॥ ब्रह्मोवाच ॥ शयनीयात्समुत्थायरात्र्यंशेद्विजसत्तमः ॥ देवांश्चैवस्मरेन्नित्यंतथापुण्य
वतोध्रुवम् ॥ २ ॥ गोविन्दंमाधवंकृष्णंहरिंदामोदरंतथा ॥ नारायणंजगन्नाथंवासुदेवमजंविभुम् ॥ ३ ॥ सरस्वतींमहालक्ष्मींसावित्रींवेदमातर
म् ॥ ब्रह्माणंभास्करंचन्द्रंदिक्पालांश्चग्रहांस्तथा ॥ ४ ॥ शङ्करंचशिवंशम्भुमीश्वरंचमहेश्वरम् ॥ गणेशंचतथास्कन्दंगौरींभागीरथींशिवाम् ॥ ५ ॥
पुण्यश्लोकोनलोराजापुण्यश्लोकोजनार्दनः ॥ पुण्यश्लोकाचवैदेहीपुण्यश्लोकोयुधिष्ठिरः ॥ ६ ॥ अश्वत्थामाबलिर्व्यासोहनूमांश्चविभीषणः ॥ कृपः
परशुरामश्चसप्तैतेचिरजीविनः ॥ ७ ॥ एतान्यस्तुस्मरेन्नित्यंप्रातरुत्थायमानवः ॥ ब्रह्महत्यादिभिःपापैर्मुच्यतेनात्रसंशयः ॥ ८ ॥ सकृदुच्चरि
तेतातसर्वयज्ञफलंलभेत् ॥ गवांशतसहस्राणांदानस्यफलमश्नुते ॥ ९ ॥ ततश्चापिशुचौदेशेमलमूत्रंपरित्यजेत् ॥ दक्षिणाभिमुखोरात्रौदिवाकुर्या
दुदङ्मुखः ॥ १० ॥ परतोदन्तकाष्ठंचतृणैरुदुम्बरादिभिः ॥ अतःपरंचसन्ध्यायांसंयतश्चद्विजोभवेत् ॥ ११ ॥ पूर्वाह्णेरक्तवर्णांतुमध्याह्नेशुक्लवर्णि
काम् ॥ सायंसरस्वतींकृष्णांद्विजोध्यायेद्यथाविधि ॥ १२ ॥ ततःसमाचरेत्स्नानंयथाज्ञानेनयत्नतः ॥ अङ्गंप्रक्षालयित्वातुमृद्भिःसंलेपयेत्ततः ॥
॥ १३ ॥ शिरोदेशेललाटेचनासिकायांहृदिभ्रुवोः ॥ बाह्वोःपार्श्वेतथानाभौजान्वोरङ्घ्रिद्वयेतथा ॥ १४ ॥ एकालिङ्गेगुदेतिस्रस्तथावामकरेदश ॥
उभयोःसप्तदातव्यामृदःशुद्धिमभीप्सता ॥ १५ ॥ अश्वक्रान्तेरथक्रान्तेविष्णुक्रान्तेवसुन्धरे ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ १६ ॥
अनेनैवतुमन्त्रेणमृत्तिकांयस्तनौक्षिपेत् ॥ सर्वपापक्षयस्तस्यशुचिर्भवतिमानवः ॥ १७ ॥ ततस्तुवेदपूर्वेणस्नानंकुर्याद्विचक्षणः ॥ नदेनद्यां
तथाकूपेपुष्करिण्यांतटाकके ॥ १८ ॥ जलराशौचवप्रेचघटस्नानंतथोत्तरम् ॥ कारयेद्विधिवन्मर्त्यःसर्वपापक्षयायच ॥ १९ ॥ प्रातः
स्नानंमहापुण्यंसर्वपापप्रणाशनम् ॥ यःकुर्यात्सततंविप्रोविष्णुलोकेमहीयते ॥ २० ॥ प्रातःसन्ध्यासमीपेचयावद्दण्डचतुष्टयम् ॥ तावत्पा
नीयममृतंपितॄणामुपतिष्ठते ॥ २१ ॥ परतोघटिकायुग्मंयावद्यामैकमाह्निकम् ॥ मधुतुल्यंजलंतस्मिन्पितॄणांप्रीतिवर्धनम् ॥ २२ ॥ ततस्तुसा
र्द्धयामैकंजलंक्षीरमयंस्मृतम् ॥ क्षीरमिश्रंजलंतावद्यावद्दण्डचतुष्टयम् ॥ २३ ॥ अतःपरंचपानीयंयावद्विप्रहरत्रयम् ॥ तत्परंलोहितंप्रोक्तंयावदस्तं
गतोरविः ॥ २४ ॥ चतुर्थप्रहरेस्नानेरात्रौवातर्पयेत्पितॄन् ॥ तत्तोयंरक्षसामेवग्रहणेनविनाशितम् ॥ २५ ॥ पानीयंसर्वसिद्ध्यर्थंपुरैव
निर्मितंमया ॥ रक्षार्थंतस्यतोयस्ययक्षाश्चैवधुरन्धराः ॥ २६ ॥ नप्राप्नुवन्तिपितरोयेचलोकान्तरंगताः ॥ दुष्प्राप्यंसलिलंतेषामृतेस्वान्मर्त्यवा
सिनः ॥ २७ ॥ तस्माच्छिष्यैश्चपुत्रैश्चपौत्रदौहित्रकादिभिः ॥ बन्धुवर्गैस्तथाचान्यैस्तर्पणीयंपितृव्रतैः ॥ २८ ॥ नारदउवाच ॥ जलस्यदे

वतंब्रूहितर्पणस्यविधिंमयि ॥ यथाजानामिदेवेशतत्त्वतोवक्तुमर्हसि ॥ २९ ॥ ब्रह्मोवाच ॥ जलस्यदेवताविष्णुःसर्वलोकेषुगीयते ॥ जल
पूतोभवेद्यस्तुविष्णुस्तच्छङ्करोभवेत् ॥ ३० ॥ जलंगण्डूषमात्रंतुपीत्वापूतोभवेन्नरः ॥ विशेषात्कुशसंसर्गात्पीयूषादधिकंजलम् ॥ ३१ ॥ सर्वदे
वालयोदर्भोमयाऽयंनिर्मितःपुरा ॥ कुशमूलेभवेद्ब्रह्माकुशमध्येतुकेशवः ॥ ३२ ॥ कुशाग्रेशङ्करंविद्धिकुशएतेप्रतिष्ठिताः ॥ कुशहस्तःसदामेध्यः
स्तोत्रंमन्त्रंपठेद्यदि ॥ ३३ ॥ सर्वंशतगुणंप्रोक्तंतीर्थेसाहस्रमुच्यते ॥ कुशाःकाशास्तथादूर्वायवपत्राणिव्रीहयः ॥ ३४ ॥ वल्वजाःपुण्डरीकाश्च
कुशास्सप्तप्रकीर्तिताः ॥ आनुपूर्व्येणमेध्याःस्युःकुशालोकेप्रतिष्ठिताः ॥ ३५ ॥ विनामन्त्रेणयत्स्नानंसर्वंतन्निष्फलंभवेत ॥ अमृतात्स्वादुतामेति
संस्पर्शाच्चतिलस्यच ॥ ३६ ॥ तस्माच्चतर्पयेन्नित्यंपितॄंस्तिलजलैर्बुधः ॥ दशभिश्चतिलैस्तावत्पितॄणांप्रीतिरुत्तमा ॥ ३७ ॥ अग्निस्तम्भभयाद्देवा
नचेच्छन्त्यतिविस्तरम् ॥ स्नात्वायस्तर्पयेन्नित्यंतिलमिश्रोदकैःपितॄन् ॥ ३८ ॥ सयातिब्रह्मणःस्थानंसमुद्धृत्योभयंकुलम् ॥ विशेषेणयुगाद्यासुत्वमा
वस्यांतथैवच ॥३९॥ अक्षयंस्वर्गमाप्नोतितर्पयित्वातिलैःपितॄन् ॥ नीलषण्डविमोक्षेणत्वमावास्यातिलोदकैः ॥४०॥ वर्षासुदीपदानेनपितॄणामनृणो
भवेत् ॥ वत्सरैकममायांतुतर्पयेद्यस्तिलैःपितॄन् ॥ ४१ ॥ विनायकत्वमाप्नोतिसर्वदेवैःप्रपूज्यते ॥ युगाद्यासुचसर्वासुयस्तिलैस्तर्पयेत्पितॄन् ॥ ४२ ॥
उक्तंयद्वाप्यमायांतुतस्माच्छतगुणाधिकम् ॥ अयनेविषुवेचैवराकामायांतथैवच ॥ ४३ ॥ तर्पयित्वापितृव्यूहंस्वर्गलोकेमहीयते ॥ तथामन्वन्तरा
द्यायामन्यस्यांपुण्यसंस्थितौ ॥४४॥ ग्रहणेचन्द्रसूर्यस्यपुण्यतीर्थेगयादिषु ॥ तर्पयित्वापितॄन्यातिमाधवस्यनिकेतनम् ॥४५॥ तस्मात्पुण्याहकंप्रा
प्यतर्पयेत्पितृसञ्चयम् ॥ तर्पणंदेवतानांचपूर्वंकृत्वासमाहितः ॥४६॥ अधिकारीभवेत्पश्चात्पितॄणांतर्पणेबुधः ॥ श्राद्धेभोजनकालेचपाणिनैकेनदापये
त् ॥ ४७ ॥ उभाभ्यांतर्पणेदद्याद्विधिरेषसनातनः ॥ दक्षिणाभिमुखोभूत्वाशुचिर्वैतर्पयेत्पितॄन् ॥ ४८ ॥ तृप्यतामितिवाक्येननामगोत्रेणवैपु
नः ॥ अकृष्णैर्यत्तिलैर्मोहात्तर्पयेत्पितृसञ्चयम् ॥ ४९ ॥ भूम्यांददातियद्योदाताचैवजलेस्थितः ॥ वृथातद्दीयतेदानंनोपतिष्ठतिकस्यचित ॥
॥ ५० ॥ स्थलेस्थित्वाजलेयस्तुप्रयच्छेदुदकंनरः ॥ नोपतिष्ठेत्पितॄणांतुसलिलंतन्निरर्थकम् ॥ ५१ ॥ आर्द्रवासाजलेयस्तुकुर्यादुदकतर्पणम् ॥
पितरस्तस्यतृप्यन्तिसहदेवैस्सदानघ ॥ ५२ ॥ रजकैःक्षालितंवस्त्रमशुद्धंकवयोविदुः ॥ हस्तप्रक्षालनेचवपुनर्वस्त्रंतुशुध्यति ॥ ५३ ॥ शुष्क
वासाःशुचौदेशेस्थानेयत्तर्पयेत्पितॄन् ॥ ततोदशगुणेनैवतुष्यन्तिपितरोध्रुवम् ॥ ५४ ॥ स्नानंसन्ध्यांचपाषाणेखड्गेवाताम्रभाजने ॥ तर्पणंकुरुते
यस्तुप्रत्येकंचशताधिकम् ॥ ५५ ॥ रौप्याङ्गुलीयंतर्जन्यांधृत्वायत्तर्पयेत्पितॄन् ॥ सर्वंचशतसाहस्रगुणंभवतिनान्यथा ॥ ५६ ॥ तथैवाना

मिकायांतुधृत्वास्वर्णाङ्गुलींबुधः ॥ तर्पयेत्पितृसन्दोहंलक्षकोटिगुणंभवेत् ॥ ५७ ॥ अङ्गुष्ठदेशिनीमध्येसव्यहस्तस्यखङ्गकम् ॥ धृत्वानामिकया
रत्नमञ्जलेरक्षयंफलम् ॥ ५८ ॥ स्नानार्थमभिगच्छन्तंदेवाःपितृगणैःसह ॥ वायुभूतानुगच्छन्तितृषार्ताःसलिलार्थिनः ॥ ५९ ॥ निराशा
स्तेनिवर्तन्तेवस्त्रनिष्पीडनेनच ॥ तस्मान्नपीडयेद्वस्त्रमकृत्वापितृतर्पणम् ॥ ६० ॥ तिस्रःकोटचोऽर्धकोटीचयानिलोमानिमानुषे ॥ स्रवन्तिसर्व
तीर्थानितस्मान्नपरिपीडयेत् ॥ ६१ ॥ देवाःपिबन्तिशिरसिश्मश्रुतःपितरस्तथा ॥ चक्षुषोरपिगन्धर्वाअधस्तात्सर्वजन्तवः ॥ ६२ ॥ देवाःपि
तृगणाःसर्वेगन्धर्वाजन्तवस्तथा ॥ स्नानमात्रेणतुष्यन्तिस्नानात्पापंनविद्यते ॥ ६३ ॥ नित्यस्नानंचयःकुर्यात्सनरःपुरुषोत्तमः ॥ सर्वपापैर्विनिर्मु
क्तोनाकलोकेमहीयते ॥ ६४ ॥ स्नानंतर्पणपर्यन्तंदेवामहर्षयोविदुः ॥ अतःपरंचदेवानांपूजनंकारयेद्बुधः ॥ ६५ ॥ गणेशंपूजयेद्यस्तुविघ्नस्त
स्यनजायते॥ आरोग्यार्थंचसूर्यंचधर्ममोक्षायमाधवम् ॥६६॥ शिवंचकृत्यकामार्थंसर्वकामायचण्डिकाम् ॥ देवांस्तुपूजयित्वातुवैश्वदेवबलिंचरेत् ॥
॥ ६७ ॥ वह्निकार्यंततःकृत्वायज्ञंब्राह्मणतर्पणम् ॥ देवानांसर्वसत्त्वानांपुनस्त्रिविष्टपंव्रजेत् ॥ ६८ ॥ गतागतंस्थिरंकृत्वाकामान्मोक्षंसुखंदिवम् ॥
तस्मात्सर्वप्रयत्नेननित्यंकर्माणिकारयेत् ॥ ६९ ॥ नारदउवाच ॥ किमथचजलंतातदेवाःपितृगणैःसह ॥ नप्राप्नुवन्तिसर्वज्ञलभन्ते
मानवायथा ॥ ७० ॥ ब्रह्मोवाच ॥ पुरासृष्टंमयातोयंसर्वदेवमयामृतम् ॥ तस्यैवरक्षणार्थंचरक्षोयक्षाधनुधराः॥ ७१ ॥ घ्नन्तितेपितरंदेवमस्मद्वा
क्यान्नमानुषम् ॥ पशवःपक्षिणःकीटामर्त्यलोकेव्यवस्थिताः ॥ ७२ ॥ मर्त्यजाताश्चदेवायेतथैवमानुषाध्रुवम् ॥ तर्पयित्वागुरुंनित्यंसुरलोकेप्रतिष्ठि
ताः ॥ ७३ ॥ अस्नायीचमलंभुंक्ते अजपीपूयशोणितम् ॥ अकृत्वातर्पणंनित्यंपितृहाचोपजायत ॥ ७४ ॥ ब्रह्महत्यासमंपापंदेवानामप्यपू
जने ॥ सन्ध्याकृत्यमकृत्वाचसूर्यंहन्तिचपापकृत् ॥ ७५ ॥ नारदउवाच ॥ ब्राह्मणस्यसदाचारक्रमंब्रूहिचकर्मणाम् ॥ इतरेषांचवर्णानांप्रवृत्त
मखिलंवद ॥ ७६ ॥ ब्रह्मोवाच ॥ आचाराल्लभतेचायुराचाराल्लभतेसुखम् ॥ आचारात्स्वर्गमोक्षंचआचारोहन्त्यलक्षणम् ॥ ७७ ॥ अनाचारो
हिपुरुषोलोकेभवतिनिन्दितः ॥ दुःखभागीचसततंव्याधितोऽल्पायुरेवच ॥ ७८ ॥ नरकेनियतंवासोह्यनाचारान्नरस्यच ॥ आचाराच्चपरंलो
कमाचारंशृणुतत्त्वतः ॥ ७९ ॥ गोमयेनगृहेनित्यंप्रकुर्यादुपलेपनम् ॥ प्रक्षालयेत्ततःपीठंकाष्ठंपात्रंशिलातलम् ॥ ८० ॥ भस्मनाकांस्यपा
त्रंतुताम्रमम्लेनशुद्ध्यति ॥ शिलापात्रंतुतैलेनफालंगोवालकेनतु ॥ ८१ ॥ स्वर्णरौप्यादिपात्रंतुजलमात्रेणशुध्यति ॥ अग्निनालोहपात्रंतु
पाकप्रक्षालनेनतु ॥ ८२ ॥ खननादाहनाच्चैवउपलेपनधावनात् ॥ पर्जन्यवर्षणाच्चैवभूरमेध्याविशुध्यति ॥ ८३ ॥ तैजसानांमणीनांच

सर्वस्याश्रमयस्यच ॥ भस्मभिर्मृत्तिकाभिश्चशुद्धिरुक्तामयापुरा ॥ ८४ ॥ शय्याभार्याशिशुर्वस्त्रमुपवीतंकमण्डलुः ॥ आत्मनःकथिताश्शुद्धा
नपरेषांकदाचन ॥ ८५ ॥ नभुञ्जीतैकवस्त्रेणनस्नायादेकवाससा ॥ नधारयेत्परस्यैवंस्नानवस्त्रंकदाचन ॥ ८६ ॥ संस्कारंकेशदन्तानां
प्रातरेवसमाचरेत् ॥ गुरूणांचनमस्कारंनित्यमेवसमाचरेत् ॥ ८७ ॥ हस्तपादेमुखेचैवपश्चार्द्रोभोजनंचरेत् ॥ पश्चार्द्रकस्तुभुञ्जानःशतंवर्षाणिजीवति
॥ ८८ ॥ देवतानांगुरोराज्ञांस्नातकाचार्ययोरपि ॥ नाक्रामेत्कामतश्छायांविप्रस्यदीक्षितस्यच ॥ ८९ ॥ गोगणंदैवतंविप्रंघृतंमधुचतुष्पथम् ॥
प्रदक्षिणंप्रकुर्वीतप्रख्यातांश्चवनस्पतीन्॥९०॥गोविप्रावग्निविप्रौचविप्रौद्वौदम्पतीतथा॥तयोर्मध्येनगच्छेतस्वर्गस्थोऽपिपतेद्ध्रुवम् ॥९१॥ उच्छिष्टेन
स्पृशदग्निंब्राह्मणंदैवतंगुरुम् ॥ स्वशीर्षंपुष्पवृक्षंचयज्ञवृक्षमधार्मिकम् ॥ ९२ ॥ त्रीणितेजांसिनोच्छिष्टउदीक्षेतकदाचन ॥ सूर्याचन्द्रमसावेवंनक्षत्रा
णिचसर्वशः ॥ ९३ ॥ नेक्षेद्विप्रंगुरुंदेवंराजानंयतिनांवरम् ॥ योगिनंदेवकर्माणंधर्माणांकथकंद्विजम् ॥ ९४ ॥ नदीनांचप्रतीरेचपत्युश्चसरितांतथा ॥
यज्ञवृक्षस्यमूलेचउद्यानेपुष्पवाटके ॥ ९५ ॥ शरीरस्यमलत्यागंनकुर्याज्जीवनेतथा ॥ विप्रस्यायतनेगोष्ठेरम्येराजपथेषुच ॥ ९६ ॥ नक्षौरंकारये
द्वीरःकुजस्याह्निकदाचन ॥ मलंनधारयेद्दन्तेनखंनवदनेक्षिपेत् ॥ ९७ ॥ तैलाभ्यङ्गंनकर्वीतवासरेरविभौमयोः ॥ स्वगात्रासनयोर्वाद्यंगुरोरेकासना
दनम् ॥ ९८ ॥ नहरेच्छ्रोत्रियस्वंचदेवस्यापिगुरोरपि ॥ राज्ञस्तपस्विनांचवपङ्गोरन्धस्ययोषितः ॥ ९९॥ पन्थादेयोब्राह्मणायगोभ्योराजभ्यएवच॥
रोगिणेभारतप्तायगुर्विण्यैदुर्बलायच ॥ १०० ॥ विवादंनचकुर्वीतनृपविप्रचिकित्सकैः ॥ ब्राह्मणंगुरुपत्नींचदूरतःपरिवर्जयेत् ॥ १ ॥ पतितंकुष्ठसंयुक्तं
चाण्डालंचगवाशिनम् ॥ निर्धूतंज्ञानहीनंचदूरतःपरिवर्जयेत् ॥ २ ॥ स्त्रियंदुष्टांचदुर्वृत्तामपवादप्रदायिनीम् ॥ कुकर्मकारिणींदुष्टांसदैवकलहप्रियाम्
॥ ३ ॥ प्रमत्तामधिकाङ्गीश्चनिर्लज्जांबाह्यचारिणीम् ॥ व्ययशीलामनाचारांदूरतःपरिवर्जयेत् ॥ ४ ॥ मलिनांनाभिवन्देतगुरुपत्नींकदाचन ॥ नस्पृ
शेत्तांचमेधावीस्पृष्ट्वास्नानेनशुद्ध्यति ॥ ५ ॥ सतयासहकेलिंचवर्जयेच्चसदैवहि ॥ शृणुयाच्चवचोनूनंनपश्येच्चगुरोःस्त्रियम् ॥ ६ ॥ वधूंपुत्रस्यभ्रातुश्च
स्वपुत्रींयुवतींध्रुवम् ॥ अन्यांचगुरुपत्नींचनेक्षेत्स्पर्शंनकारयेत् ॥ ७ ॥ ताभिःसहकथालापंतथाभ्रूभङ्गदर्शनम् ॥ कलहंनिस्त्रपांवाणींसदैवपरिवर्ज
येत् ॥ ८ ॥ नदद्याच्चसदापादंतुपाङ्गारास्थिभस्मसु ॥ कार्पासास्थिषुनिर्माल्योचितिकाष्ठेचितौगुरौ ॥ ९ ॥ शुष्कंमीनंनभक्षेतपूतिगन्धिममे
ध्यकम् ॥ विघसंचान्यदुच्छिष्टंपाकार्थंचपरस्यच ॥१०॥ नस्थातव्यंनगन्तव्यंक्षणमप्यसतासह ॥ नतिष्ठेच्चक्षणंधीरोदीपच्छायेकलिद्रुमे ॥ ११ ॥
अस्पृश्यैस्सहचालापंपतितैःकुपितैःसह ॥ नकुर्यात्क्षणमात्रंतुकृत्वागच्छेच्चरौरवम् ॥ १२ ॥ कनिष्ठंनाभिवन्देतपितृव्यंमातुलंतथा ॥ उत्थायचासनं

दद्यात्कृताञ्जल्यग्रतःस्थितः ॥१३॥ तैलाभ्यक्तंतथोच्छिष्टमार्द्रवस्त्रंचरोगिणम्॥पारावारगतोद्विग्नंवहन्तंनाभिवादयेत् ॥१४॥ यज्ञस्यान्तर्गतंनष्टंक्रीडं
न्तंस्त्रीजनैःसह ॥ बालक्रीडागतंचापिपुष्पयुक्तंकुशैर्युतम् ॥ १५ ॥ शिरःप्रावृत्यकर्णौवाअप्सुमुक्तशिखोऽपिवा ॥ अकृत्वापादयोःपूजांनाचामे
द्दक्षिणामुखः ॥ १६ ॥ उपवीतविहीनश्चनग्नकोमुक्तकच्छकः ॥ एकवस्त्रपिधानश्चआचान्तोनैवशुद्ध्यति ॥ १७ ॥ मध्यमाभिर्मुखंपूर्वंतिसृभिःसमु
पस्पृशेत् ॥ अङ्गुष्ठदेशिनीभ्यांचनासांचतदनन्तरम् ॥१८॥ अङ्गुष्ठानामिकाभ्यांचचक्षुषीसमुपस्पृशेत् ॥ कनिष्ठाङ्गुष्ठतश्श्रोत्रेनाभिमङ्गुष्ठकेनतु॥१९॥
तलेनहृदयंन्यस्यसर्वाभिर्मस्तकोपरि ॥ बाहूचाग्रेणसंस्पृश्यततःशुद्धोभवेन्नरः ॥१२०॥ अनेनाचमनंकृत्वामानवःप्रयतोभवेत् ॥ सर्वपापैर्विनिर्मुक्तः
स्वर्गंचाक्षयमश्नुते ॥ २१ ॥ प्राणस्त्रिपुटशृङ्गश्चाचव्यानोऽपानश्चमुद्रया ॥ समानस्तुसमस्ताभिरुदानस्तर्जनींविना ॥ २२ ॥ नागःकूर्मश्चकृकरोदेव
दत्तोधनञ्जयः ॥ उपप्रीणन्तुतेप्रीतायेभ्योभूमौप्रदीयते ॥ २३ ॥ शयनंचार्द्रपादेनशुष्कपादेनभोजनम् ॥ नान्धकारेचशयनंभोजनंनैवकारयेत्
॥ २४ ॥ पश्चिमेदक्षिणेचैवनकुर्याद्दन्तधावनम् ॥ उत्तरेपश्चिमेचवनस्वपेद्धिकंदाचन ॥ २५ ॥ स्वप्नादायुःक्षयंयातिब्रह्महापुरुषोभवेत् ॥ नकुर्वी
ततःस्वप्नंशस्तंचपूर्वदक्षिणम् ॥ २६ ॥ आयुष्यंप्राङ्मुखोभुङ्क्तेयशस्यंदक्षिणामुखः ॥ श्रियंप्रत्यङ्मुखोभुङ्क्तेयशोभुङ्क्तउदङ्मुखः ॥ २७ ॥ प्राच्यां
नरोलभेदायुर्याम्यांप्रेतत्वमश्नुते ॥ वारुणेचभवेद्रोगीआयुर्वित्तंतथोत्तरे॥२८॥ देवानामेकभुक्तंतुद्विभुक्तंस्यान्नरस्यच ॥ त्रिभुक्तंप्रेतदैत्यस्यचतुर्थंकौण
पस्यतु ॥ २९ ॥ निरामिषंहविर्देवामत्स्यमांसादिमानुषाः ॥ पूतिपर्युषितंदुष्टमन्येभुञ्जन्त्यनावृताः ॥ १३० ॥ स्वर्गस्थितानामिहजीवलोकेचत्वारि
तेषांहृदयेवसन्ति ॥ दानंप्रशस्तंमधुराचवाणीदेवार्चनंब्राह्मणतर्पणंच ॥ ३१ ॥ कापण्यवृत्तिःस्वजनेषुनिन्दाकुचेलतानीचजनेषुभक्तिः ॥ अतीव
रोषःकटुकाचवाणीनरस्यचिह्नंनरकागतस्य ॥ ३२ ॥ नवनीतोपमावाणीकरुणाकोमलंमनः ॥ धर्मबीजप्रसूतानामेतत्प्रत्यक्षलक्षणम् ॥ ३३ ॥
दयादरिद्रहृदयंवचःक्रकचकर्कशम् ॥ पापबीजप्रसूतानामेतत्प्रत्यक्षलक्षणम् ॥ ३४ ॥ श्रावयेच्छृणुयाद्वापिसदाचारादिकंनरः ॥ आचारादेःफलं
लब्ध्वापापात्पूतोऽच्युतोदिवि ॥ १३५ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेसदाचारवर्णनंनामैकपञ्चाशोऽध्यायः ॥ ५१ ॥ भीष्मउवाच ॥
यत्पुण्यमधिकंलोकेसर्वदासर्वसंमतम् ॥ तद्वदस्वेच्छयाविप्रयत्कृतंपूर्वपूर्वकैः ॥ १ ॥ पुलस्त्यउवाच ॥ एकदातुद्विजाःसर्वेव्यासशिष्यास्सहादरात्॥
व्यासंप्रणम्यपप्रच्छुर्धर्मंमांचयथाभवान् ॥ २ ॥ द्विजाऊचुः ॥ पुण्यात्पुण्यतमंलोकेसर्वधर्मेषुचोत्तमम् ॥ किंकृत्वामानवाःस्वर्गंभुञ्जतेचाक्षयंवद
॥ ३ ॥ लभ्यंचाकष्टकंशुद्धंवर्णानांमर्त्यवासिनाम् ॥ गुरूणांचलघूनांचसाध्यमेकक्रतुंवद ॥ ४ ॥ यद्यत्कृत्वाचदेवानांपूज्योनाकेभवेन्नरः ॥ तत्तद्वद

चनोब्रह्मन्प्रसादीभवधर्मतः ॥५॥ व्यासउवाच॥ पञ्चाख्यानंवदिष्यामिशृणुध्वंतत्रपूर्वतः ॥ पञ्चानामेककंकृत्वाविन्दन्मोक्षंदिवंयशः॥६॥ पित्रोरर्चा
ऽथपत्युश्चसाम्यंसर्वजनेषुच ॥ मित्राद्रोहोविष्णुभक्तिरेतेपञ्चमहामखाः ॥ ७ ॥ प्राक्पित्रोरर्चयाविप्रायद्धर्मंसाधयंन्नरः॥ नतत्क्रतुशतैरेवतीर्थयात्रादि
भिर्भुवि ॥ ८ ॥ पिताधर्मःपितास्वर्गःपिताहिपरमंतपः ॥ पितरिप्रीतिमापन्नेप्रीयन्तेसर्वदेवताः ॥ ९ ॥ पितरोयस्यतृप्यन्तिसेवयाचगुणेन
च ॥ तस्यभागीरथीस्नानमहन्यहनिवर्तते ॥ १० ॥ सर्वतीर्थमयीमातासर्वदेवमयःपिता ॥ मातरंपितरंतस्मात्सर्वयत्नेनपूजयेत् ॥ ११ ॥ मातरं
पितरंचैवयस्तुकुर्यात्प्रदक्षिणम् ॥ प्रदक्षिणीकृतातेनसप्तद्वीपावसुन्धरा ॥ १२ ॥ जानुनीचकरौयस्यपित्रोःप्रणमतःशिरः ॥ निपतन्तिपृथिव्यांच
सोऽक्षयंलभतेदिवम् ॥ १३ ॥ तयोश्चरणयोर्यावद्रजश्चिह्नानिमस्तके ॥ प्रतीकेचविलग्नानितावत्पूतःसुतस्तयोः ॥ १४ ॥ पादारविन्दसलिलंयः
पित्रोःपिबतेसुतः ॥ तस्यपापंक्षयंयातिजन्मकोटिशतार्जितम् ॥ १५ ॥ धन्योऽसौमानवोलोकेपूतोऽसौसर्वकल्मषात् ॥ विनायकत्वमाप्नोतिजन्म
नैकेनमानवः ॥ १६ ॥ पितरौलङ्घयेद्यस्तुवचोभिःपुरुषाधमः ॥ निरयेचवसेत्तावद्यावदाभूतसम्प्लवम् ॥१७॥ पित्रोरनर्चनंकृत्वाभुङ्क्तेयस्तुसुताधमः॥
कृमिकूपेऽथनरकेकल्पान्तमुपतिष्ठति ॥ १८ ॥ रोगिणंचापिवृद्धंचपितरंवृत्तिकर्शितम् ॥ विकलंनेत्रकर्णाभ्यांत्यक्त्वागच्छेच्चरौरवम् ॥ १९ ॥
अन्त्यजातिषुम्लेच्छेषुचाण्डलेष्वपिजायते ॥ पित्रोरपोषणंकृत्वासर्वपुण्यक्षयोभवेत् ॥ २० ॥ नाराध्यपितरौपुत्रस्तीर्थदेवान्भजन्नपि ॥ तयोर्न
फलमाप्नोतिकीटवद्भ्रमतेमहीम् ॥ २१ ॥ कथयामिपुरावृत्तंविप्राःशृणुतयत्नतः ॥ यंश्रुत्वानपुनर्मोहंप्रयास्यथपुनर्भुवि ॥ २२ ॥ पुरासीच्चद्विजः
कश्चिन्नरोत्तमइतिस्मृतः ॥ स्वपितरावनादृत्यगतोऽसौतीर्थसेवया ॥ २३ ॥ ततःसर्वाणितीर्थानिगच्छतोब्राह्मणस्यच ॥ आकाशेस्नानचैलानिप्रशु
ष्यन्तिदिनेदिने ॥ २४ ॥ अहङ्कारोऽविशत्तस्यमानसेब्राह्मणस्यंच ॥ मत्समोनास्तिवैकश्चित्पुण्यकर्मामहायशाः ॥ २५ ॥ इत्युक्तेचाननेतस्यअह
द्वच्चबकस्तदा ॥ क्रोधाच्चैवेरितस्तस्यसशशापद्विजोबकम् ॥ २६ ॥ पपातचबकःपृथ्व्यांसभस्मीभूतविग्रहः ॥ भीर्द्विजेन्द्रंमहामोहःप्राविशद्ध्वान्तक
मणि ॥ २७ ॥ ततःपापाच्चविप्रस्यचेलंखेचनगच्छति ॥ विषादमगमत्सद्यस्ततःखेतमुवाचह ॥२८॥ देववाण्युवाच ॥ गच्छवाडवचाण्डालंमूकंपर
मधार्मिकम् ॥ तत्रधर्मंचजानीषेक्षेमंततद्वचोभवेत् ॥ २९ ॥ व्यासउवाच॥ खाच्चतद्वचनंश्रुत्वागतोऽसौमूकमन्दिरम् ॥ शुश्रूषन्तंचपितरौसर्वारम्भा
न्ददर्शसः ॥ ३० ॥ ददतंशीतकालेचसम्यगुष्णंजलंतयोः ॥ तैलतापनताम्बूलंतथातूलवतींपटीम् ॥ ३१ ॥ नित्याशनंचमिष्टान्नंदुग्धखण्डंतथैवच ॥
दापयन्तंवसन्तेचमधुमालांसुगन्धिकाम् ॥ ३२ ॥ अन्यानियानिभोग्यानिकृत्यानिविविधानिच ॥ उष्णेचावीजयत्सोऽपिनित्यंचपितरावपि

॥ ३३ ॥ ततस्तयोःप्रचर्यांचकृत्वाभुङ्क्तेऽथसर्वदा ॥ श्रमस्यवारणंकुर्यात्सन्तापस्यतथैवच ॥ ३४ ॥ एभिःपुण्यैःस्थितोविष्णुस्तस्यगेहोदरेचिरम्॥
अन्तरिक्षेचक्रीडन्तमाधारस्तम्भवर्जितं ॥ ३५ ॥ तस्यापिभवनेनित्यंस्थितंत्रिभुवनेश्वरम् ॥ विप्ररूपधरंकान्तंनान्यैर्भूतंचसत्परम् ॥ ३६ ॥ तेजो
मयंमहासत्त्वंशोभयन्तंचमन्दिरम् ॥ दृष्ट्वाविस्मयमापन्नोविप्रःप्रोवाचमूककम् ॥ ३७ ॥ विप्रउवाच ॥ आसन्नंचममागच्छत्वयैवेच्छामिशाश्वतम्॥
हितंमेसर्वलोकानांतत्त्वतोवक्तुमर्हसि ॥ ३८ ॥ मूकउवाच ॥ पित्रोरर्चांकरोम्यद्यकथमायामितेऽन्तिकम् ॥ अर्चयित्वातुपितरौकृत्यंतेकरवाणि
वै ॥ ३९ ॥ तिष्ठमेद्वारदेशेचआतिथ्यंतेकरोम्यहम् ॥ ४० ॥ व्यासउवाच ॥ इत्युक्तेचैवचाण्डालेचुकोपब्राह्मणस्तदा ॥ ४१ ॥ ब्राह्मणउवाच ॥
ब्राह्मणंमांपरित्यज्यकिंकार्यमधिकंतव ॥ ४२ ॥ मूकउवाच ॥ किंकुप्यसिवृथाविप्रनबकोऽहंतवाधुना ॥ कोपस्सिद्ध्यतितेतावद्बकेनान्यत्रकिंचन
॥ ४३ ॥ गगनेस्नानशाटीतेनशुष्यतिनतिष्ठति ॥ वचनंखात्ततःश्रुत्वामद्गृहंचागतोभवान् ॥ ४४ ॥ तिष्ठतिष्ठवदिष्यामिनोचेद्गच्छपतिव्रताम् ॥
तांचदृष्ट्वाद्विजश्रेष्ठदयितंतेफलिष्यति ॥ ४५ ॥ व्यासउवाच ॥ ततस्तस्यगृहाद्विष्णुर्द्विजरूपधरोविभुः ॥ विनिस्सृत्यद्विजंप्राहगेहंतस्याःप्रयाम्य
हम् ॥ ४६ ॥ सविमृश्यद्विजश्रेष्ठस्तेनसार्धंचचालह ॥ गच्छन्तंतमुवाचेदंहरिंविप्रोऽतिविस्मितः ॥ ४७ ॥ विप्रउवाच ॥ किमर्थंचत्वयाविप्रचाण्डा
लस्यगृहोदरे ॥ सदासंस्थीयतेतातयोषाजनवृतेमुदा ॥ ४८ ॥ हरिरुवाच ॥ इदानींमानसंशुद्धंनभूतंभवतोध्रुवम् ॥ पतिव्रतादिकंदृष्ट्वापश्चाज्ज्ञास्यसि
मांकिल ॥ ४९ ॥ विप्रउवाच ॥ पतिव्रताचकातातकिंवातस्याश्श्रुतंमहत् ॥ येनाहंतत्रगच्छामिकारणंवदमेद्विज ॥ ५० ॥ हरिरुवाच ॥ नदीनां
जाह्नवीश्रेष्ठाप्रमदानांपतिव्रता ॥ मनुष्याणांप्रजापालोदेवानांचजनार्दनः ॥ ५१ ॥ पतिव्रताचयानारीपत्युर्नित्यंहितेरता ॥ कुलद्वयस्यपुरुषानुद्धरे
त्साशतंशतम् ॥ ५२ ॥ स्वर्गंभुनक्तितावच्चयावदाभूतसम्प्लवम् ॥ स्वर्गाद्भ्रष्टोभवेद्भास्याःसार्वभौमोनृपःपतिः ॥ ५३ ॥ अस्यैवमहिषीभूत्वासुखंविन्दे
दनन्तरम् ॥ पुनःपुनःस्वर्गराज्यंतस्यतस्यानसंशयः ॥ ५४ ॥ एवंजन्मशतंप्राप्यअन्तेमोक्षोभवेद्ध्रुवम् ॥ ५५ ॥ विप्रउवाच ॥ पतिव्रताभवेत्कावा
तस्याःकिंवाचलक्षणम् ॥ ब्रूहिमेद्विजशार्दूलयथाजानामितत्त्वतः ॥ ५६ ॥ हरिरुवाच ॥ पुत्राच्छतगुणंस्नेहाद्राजानंचभयादथ ॥ आराधयेत्पतिं
शौरिंयापश्येत्सापतिव्रता ॥ ५७ ॥ कार्येदासीरतौवेश्याभोजनेजननीसमा ॥ विपत्सुमन्त्रिणीभर्तुःसाचभार्यापतिव्रता ॥ ५८ ॥ भर्तुराज्ञांनलङ्घेद्या
मनोवाक्कायकर्मभिः ॥ भुक्तेपत्यौसदाचात्तिसाचभार्यापतिव्रता ॥ ५९ ॥ यस्यांयस्यांतुशय्यायांपतिःस्वपितियत्नतः ॥ तत्रतत्रचसाभर्तुरर्चांकरो
तिनित्यशः ॥ ६० ॥ नैवमत्सरमायातिनकार्पण्यंनमानिनी ॥ मानेऽमानेसमानंचयापश्येत्सापतिव्रता ॥ ६१ ॥ सुवेषंयानरंदृष्ट्वाभ्रा

तरंपितरंसुतम् ॥ मन्यतेचपरंसाध्वीसाचभार्यापतिव्रता ॥ ६२ ॥ तांगच्छद्विजशार्दूलवदकामंयथातव ॥ तस्यपत्न्योऽष्टतिष्ठन्तितन्मध्ये
वरवर्णिनी ॥ ६३ ॥ रूपयौवनसम्पन्नादयायुक्तायशस्विनी ॥ शुभानामेतिविख्यातागत्वातांपृच्छतेहितम् ॥ ६४ ॥ व्यासउवाच ॥
एवमुक्त्वातुभगवांस्तत्रैवान्तरधीयत ॥ तस्यैवादृश्यतांदृष्ट्वाविस्मितोऽभूद्द्विजस्तदा ॥ ६५ ॥ सचसाध्वीगृहंगत्वापप्रच्छाथपतिव्रताम् ॥ अति
थेर्वचनंश्रुत्वागृहान्निःसृत्यसम्भ्रमात् ॥ ६६ ॥ दृष्ट्वाद्विजंसतीतत्रद्वारदेशस्थिताभवत् ॥ तांचदृष्ट्वाद्विजश्रेष्ठउवाचवचनंमुदा ॥ ६७ ॥ विप्रउवाच॥
प्रियंममहितंब्रूहियथादृष्टंत्वमेवहि ॥ ६८ ॥ पतिव्रतोवाच ॥ साम्प्रतंपतशुश्रूषास्तिनचास्माकंस्वतन्त्रता ॥ पश्चात्कार्यकरिष्यामिगृहाणातिथ्य
मद्यवै ॥ ६९ ॥ विप्रउवाच ॥ ममदेहेक्षुधानास्तिपिपासाद्यनचश्रमः ॥ अभीष्टंवदकल्याणिनोचेच्छापंददामिते ॥ ७० ॥
व्यासउवाच ॥तमुवाचतदासापिनबकोऽहंद्विजोत्तम ॥ गच्छधर्मतुलाधारंपृच्छतंतेहितंद्विज ॥७१॥ इत्युक्त्वासामहाभागाप्रययौचगृहोदरम् ॥ तत्रा
पश्यद्द्विजोविप्रंयथाचाण्डालवेश्मनि ॥ ७२ ॥ विमृश्यविस्मयापन्नस्तेनसार्धंययौद्विजः ॥ तिष्ठन्तंचद्विजंतंचसोऽपश्यद्धृष्टमानसम् ॥ ७३ ॥
सचोवाचमुदाविप्रंदृष्ट्वातंतांसतींचसः ॥ विप्रउवाच ॥ ७४ ॥ देशान्तरेचयद्वृत्तंतयाचकथितंकिल ॥ कथंजानातिमद्वृत्तंचाण्डालोऽपिपतिव्रता ॥
अतोमेविस्मयस्तातकिमाश्चर्यंपरंमहत् ॥ ७५ ॥ हरिरुवाच ॥ ज्ञायतेकारणंतातसर्वेषांभूतभावनः ॥ अतिपुण्यात्सदाचाराद्यतस्त्वंविस्मयंगतः ॥
किमुक्तश्चतयात्वंचवदतत्साम्प्रतंमुने ॥ ७६ ॥ विप्रउवाच ॥ प्रष्टुंधर्मंतुलाधारंसाचमांसमुपादिशत् ॥ ७७ ॥ हरिरुवाच ॥ आगच्छमुनिशा
र्दूलअहंगच्छामितंप्रति ॥ गच्छन्तंचहरिंप्राहतुलाधारःक्वतिष्ठति ॥ ७८ ॥ हरिरुवाच ॥ जनानांनिकरोयत्रबहुद्रव्यसुविक्रये ॥ विक्रीणाति
चक्रीणातितुलाधारस्ततस्ततः ॥ ७९ ॥ जनोयवान्नसंस्नेहंकूटमन्नस्यसञ्चयम् ॥ सर्वंतस्यमुखादेवगृह्णातिचददात्यपि ॥ ८० ॥ सत्यंत्यक्त्वानृतंकिं
चित्प्राणान्तेसमुपस्थिते ॥ नोक्तंनरवरश्रेष्ठस्तेनधर्मतुलाधरः ॥८१॥ व्यासउवाच ॥ इत्युक्तेतुतमद्राक्षीद्विक्रीणन्तंरसान्बहून् ॥ मलपङ्कधरंमर्त्यंद
न्तकुड्मलपङ्किलम् ॥ ८२ ॥ तत्रवस्तुधनोत्थांचभमपन्तंविविधांगिरम् ॥ वृतंबहुविधैर्मर्त्यैःस्त्रीभिःपुम्भिश्चसर्वतः ॥ कथंकथमितिप्राहसतंमधु
रयागिरा ॥ ८३ ॥ विप्रउवाच ॥ धर्मस्यमेसमुद्देशंवदप्राप्तोऽन्तिकंहिते ॥ ८४ ॥ तुलाधारउवाच ॥ यावज्जनाःप्रतिष्ठन्तिममैवसन्निधौद्विज ॥
तावन्मेस्वस्थतानास्तियावच्चरात्रियामकः ॥ ८५ ॥ तच्चोपदेशमादायगच्छधर्माकरंप्रति ॥ बकस्यमरणेदोषंखेचवस्त्राविशोषणम् ॥ ८६ ॥ सर्वंत
त्रचजानीषेसज्जनाद्द्रोहकंव्रज ॥ तत्रतस्योपदेशेनतवकामःफलिष्यति॥८७॥व्यासउवाच॥इत्युक्त्वातंतुलाधारःकरोतिक्रयविक्रयौ॥८८॥विप्रउवाच॥

तथातातगमिष्यामिसज्जनाद्रोहकंप्रति ॥ तुलाधारसमुद्देशान्नजानामितदालयम् ॥८९॥ हरिरुवाच ॥ एह्यागच्छगमिष्यामित्वयासार्द्धंचतद्गृहम् ॥
अथवर्त्मनिगच्छन्तमुवाचब्राह्मणोहरिम् ॥ ९० ॥ विप्रउवाच ॥ तुलाधारस्यनस्नानंनदेवपितृतर्पणम् ॥ मलदिग्धंचगात्रंतुसर्वंचैलमलक्षणम् ॥
॥ ९१ ॥ कथंजानातिमद्वृत्तंदेशान्तरसमुद्भवम् ॥ अतोमेविस्मयस्तातसर्वंत्वंवदकारणम् ॥९२॥हरिरुवाच ॥ सत्येनसमभावेनजितंतेनजगत्त्रयम् ॥
तेनातृप्यन्तपितरोदेवामुनिगणैःसह ॥ ९३ ॥ भूतभव्यप्रवृत्तंचतेनजानातिधार्मिकः ॥ नास्तिसत्यात्परोधर्मोनानृतात्पातकंपरम् ॥ ९४ ॥
विशेषेसमभावस्यपुरुषस्यानघस्यच ॥ अरौमित्रेऽप्युदासीनेमनोयस्यसमंव्रजेत् ॥ सर्वपापक्षयस्तस्यविष्णुसायुज्यतांव्रजेत् ॥ ९५ ॥ एवंयोवर्तते
नित्यंकुलकोटिंसमुद्धरेत् ॥ समोधर्मःसमःस्वर्गःसमंहिपरमंतपः ॥ यस्यैवमानसेनित्यंसमःसपुरुषोत्तमः ॥ ९६ ॥ सत्यंदमःशमश्चैवधै
र्यंस्थैर्यमलोभता ॥ अनाश्चर्यमनालस्यंतस्मिन्सर्वंप्रतिष्ठितम् ॥ ९७ ॥ तेनवैदेवलोकस्यनरलोकस्यसर्वशः ॥ वृत्तंजानातिधर्मज्ञस्तस्यदेहेस्थितो
हरिः॥९८॥लोकेतस्यसमोनास्तिसमःसत्यार्जवेषुच॥सचधर्ममयःसाक्षात्तेनैवधारितंजगत् ॥९९॥ द्विजउवाच॥ ज्ञातंमेत्वत्प्रसादाच्चतुलाधारस्यकार
णम् ॥ अद्रोहकस्ययद्वृत्तंतद्ब्रूहित्वंयदीच्छसि ॥ १०० ॥ हरिरुवाच ॥ पुरैवराजपुत्रस्यकुलस्त्रीनवयौवना ॥ पत्नीवकामदेवस्यशचीववासवस्य
च ॥ १ ॥ तस्यप्राणसमाभार्यासुन्दरीनामसुन्दरी ॥ अकस्मात्पार्थिवश्चैवकार्येगन्तुंसमुद्यतः ॥ २ ॥ मनसालोचितंतेनप्राणेभ्योऽपिगरी
यसीम् ॥ कस्मिन्स्थानेस्थापयामियतोरक्षाभवेद्ध्रुवम् ॥ ३ ॥ इत्यालोच्यैवसहसात्वागतोऽस्यगृहंप्रति ॥ उक्तंचतादृशंवाक्यंश्रुत्वासविस्मयं
गतः ॥ ४ ॥ अद्रोहकउवाच ॥ नतातस्तेनचभ्रातानचाहंतवबान्धवः ॥ पितृमातृकुलस्यैवतस्यानहिसुहृज्जनः ॥कथंचमद्गृहेतातस्थित्यास्वस्थोभवि
ष्यसि ॥ ५ ॥ हरिरुवाच ॥ एतस्मिन्नन्तरेतेनचोक्तंवाक्यंयथोचितम् ॥ ६ ॥ राजपुत्रउवाच ॥ लोकेत्वत्सदृशोनास्तिधर्मज्ञोविजितेन्द्रियः ॥ ७ ॥
हरिरुवाच ॥ सचाहतंचसर्वज्ञंवक्तुंनार्हसिदूषणम् ॥ त्रैलोक्यमोहिनींभार्यांकःपुमान्रक्षितुंक्षमः ॥८॥ राजपुत्रउवाच ॥ धरण्यांपरिविज्ञायत्वागतोऽहं
तवान्तिकम् ॥ एषातिष्ठतुतेऽगारेव्रजामिनिजमन्दिरम् ॥ ९ ॥ हरिरुवाच ॥ इत्युक्तेमपुनःप्राहनगरेऽस्मिन्प्रशोभने ॥ बहुकामुकसम्पूर्णेकथंरक्षाभवे
त्स्त्रियाः ॥ ११० ॥ सचोवाचपुनस्तंचकुरुरक्षांव्रजाम्यहम् ॥ गृहस्थःसङ्कटादाहधर्मस्यराजपुत्रकम् ॥ ११ ॥ अद्रोहकउवाच॥ करोम्यनुचितंकार्यं
स्वदास्यमुचितंहितम् ॥ सदाचैवेदृशीभार्यास्थातव्यामद्गृहेपितः ॥ १२ ॥ अरक्षाक्षणेदेववदाभीष्टंकुरुप्रियम् ॥ ममतल्पेमयासार्धंशयाना
भार्ययासह ॥ मन्यसेदैवतंस्वंचेत्तिष्ठेन्नोचेत्तुगच्छतु ॥ १३ ॥ हरिरुवाच ॥ क्षणंविमृश्यतंप्राहराजपुत्रःपुनस्तदा ॥ १४ ॥ राजपुत्रउवाच ॥ बाढ

मेतद्वचस्तातयथाभीष्टंतथाकुरु॥१५॥हरिरुवाच॥ततोभार्यांजगादाथअस्यवाक्याच्छिवाशिवम् ॥ कर्तव्यंचनतेदोषआज्ञयाममसुन्दरि ॥ १६ ॥
एतदुक्त्वागतःसोऽपिभूपतेःशासनात्पितुः ॥ अनन्तरंक्षपायांचयदुक्तंचतथाकृतम् ॥ १७ ॥ योषितोर्मध्यगःसोऽपिनित्यंस्वपितिधार्मिकः ॥ धर्मा
न्नचलतेसोऽपिस्वभार्यापरभार्ययोः ॥ १८ ॥ संस्पर्शात्स्वस्त्रियश्चास्यकामाभिलषितंमनः ॥ तस्याःसंसर्गतश्चैवदुहितेवप्रमन्यते ॥ १९ ॥
स्तनौतस्यास्तुपृष्ठेचलगन्तौचपुनःपुनः ॥ बालकस्येवपुत्रस्यस्तनौमातुःसमन्यते ॥ १२० ॥ तस्याअङ्गानिचाङ्गेषुलगन्तिचपुनःपुनः॥ ततोमातु
स्सुतस्येवसोऽमन्यतदिनेदिने ॥ २१ ॥ तस्ययोषासुसंसर्गोनिवृत्तस्त्वभवत्ततः ॥ एवंसंवत्सरस्यार्द्धेतत्पतिश्चागतःपुरम् ॥२२॥ अपृच्छत्तंचलोकेषु
तस्यावृत्तमथोदितम् ॥ केचिद्वद्वंबोधयन्तोयुवानोऽपिसुविस्मिताः ॥ २३ ॥ केचिदाहुस्त्वयादत्तातयासार्द्धंस्वपित्यसौ ॥ स्त्रीपुंसोरेकसंसर्गा
च्छान्ततातुकथंभवेत् ॥ २४ ॥ तस्यांयस्याभिलाषोऽस्तिनपृष्टस्सवदेद्यवा ॥ लोकानांकुश्रुतिर्वार्तातेनपुण्यबलाच्छ्रुता ॥ २५॥ जनापवादमोक्षार्थं
बुद्धिस्तस्याभवच्छुभा ॥ दारूणिस्वयमाहृत्याजिज्वलत्समहानलम् ॥२६॥ एतस्मिन्नन्तरेतातराजपुत्रःप्रतापवान् ॥ आगमत्तद्गृहंसद्यःसोऽपश्यत्तां
चयोषितम् ॥ २७ ॥ प्रोत्फुल्लवदनांनारींप्रविषादगतंनरम् ॥ अनयोर्मानसंज्ञात्वाराजपुत्रोऽवदद्वचः ॥ २८ ॥ राजपुत्रउवाच ॥ किंनसम्भाषसेमां
चमित्रकंचिरमागतम्॥२९॥हरिरुवाच ॥ अब्रवीत्सोऽपिधर्मात्माराजपुत्रमनष्टधीः ॥१३०॥अद्रोहकउवाच॥यत्कृतंदुष्करंकर्ममयात्वद्धितकारणात्॥
सर्वंव्यर्थमहंमन्येजनानांचप्रवादतः ॥ अद्यवह्निमहंयास्येप्रपश्यन्तुनरास्सुराः ॥३१॥ हरिरुवाच ॥ इत्युक्त्वासमहाभागःप्रविवेशहुताशनम् ॥विश
तस्तस्यवह्नौनकुसुमंचिकुरालये ॥३२॥ नाङ्गमस्यानलोऽधाक्षीन्नचवस्त्रंनकुन्तलम् ॥ खेचदेवामुदासर्वेसाधुसाध्विितिचाब्रुवन्॥३३॥अपतन्पुष्पवर्षा
णितस्यमूर्ध्निसमन्ततः॥यैर्यैश्चदुष्कृतंवाक्यंगदितंतावुभौप्रति ॥३४॥ तेषांमुखेप्रजायन्तेकुष्ठानिविविधानिच ॥ तत्रागत्यचदेवाश्चवह्नेराकृष्यतंमुदा
॥३५॥अपूजयन्सुपुष्पैश्चमुनयोविस्मयंगताः ॥सर्वैर्मुनिवरैरेवंमनुष्यैर्विविधैस्तदा ॥३६॥ अर्च्यतेतुमहातेजाःसचसर्वानपूजयत्॥सज्जनाद्रोहकंनामकृ
तंदेवासुरैर्नृभिः ॥३७॥ तस्यपादरजःपूतासस्यपूर्णाधराभवत् ॥सुराश्चाहुश्चतंतत्रभार्यातेसम्प्रगृह्यताम्॥३८॥ एतस्यसदृशोलोकेनभूतोनभविष्यति॥
नास्तीतिसाम्प्रतंपृथ्व्यांकामलोभाजितःपुमान् ॥ ३९ ॥ देवासुरमनुष्याणांरक्षसांमृगपक्षिणाम् ॥ कीटादीनांचसर्वेषांकामएषसुदुर्जयः ॥ ४० ॥
कामाल्लोभात्तथाक्रोधान्नित्यंसत्त्वेषुजायते ॥ संसारबन्धकःकामोह्यकामोनकचिद्भवेत् ॥ ४१ ॥ अनेनैवजितंसर्वंभुवनानिचतुर्दश ॥ अमुष्यहृदये
नित्यंवासुदेवोमुदास्थितः ॥ ४२ ॥ एवंस्पृष्ट्वाथदृष्ट्वातंमनुष्याःसर्वकल्मषात् ॥ पूयन्तेह्यनघाश्चैवलभन्तेचाक्षयांदिवम् ॥ ४३ ॥ एवमुक्त्वागतादेवा

विमानैश्चदिवंमुदा ॥ मनुष्याःप्रययुस्तुष्टादम्पतीस्वगृहंतथा ॥ ४४ ॥ दिव्यंचक्षुस्तदातस्यचासीद्देवान्सपश्यति ॥. त्रैलोक्यस्यचवार्त्तांचजानाति
लीलयाभृशम् ॥ ४५ ॥ ततस्तस्यचवीथ्यांचदृष्टस्तनसहैवसः ॥ सपप्रच्छमुदातंचधर्मोद्देशंहितंवद ॥ ४६ ॥ सज्जनाद्रोहउवाच ॥ गच्छवा
डवधर्मज्ञवैष्णवंपुरुषोत्तमम्॥तंचदृष्ट्वात्वभीष्टंतेसाम्प्रतंचफलिष्यति ॥४७॥ बकस्यनिधनंयद्वावस्त्रस्याशोपणंतथा ॥जानीषेचापरोयश्चकामस्तेऽस्ति
हृदिस्थितः ॥४८॥ व्यासउवाच॥एतच्छ्रुत्वातुवचनमागतोवैष्णवंप्रति ॥विष्णुरूपद्विजेनैवसार्द्धंतेनमुदाययौ॥४९॥अपश्यत्पुरुषंशुद्धंज्वलन्तंचपुरः
स्थितम्॥सर्वलक्षणसम्पूर्णंदीप्यमानंस्वतेजसा ॥१५०॥ अब्रवीत्सचधर्मात्माध्यानस्थंचहरेःप्रियम् ॥५१॥ विप्रउवाच॥वदनोयद्वृत्तंवैदूरात्त्वांचाग
तोह्यहम्॥५२॥वैष्णवउवाच॥प्रसन्नस्तेसुरश्रेष्ठोदानवारीश्वरःसदा॥दृष्ट्वात्वांचमनोऽस्माकंहृष्यतीवाधुनाद्विज ॥५३॥ कल्याणंचातुलंतेऽद्यफलिष्यति
मनोरथः॥सुखवर्त्मनितेनित्यंचैलंशुष्यतिनान्यथा॥दृष्ट्वादेवंसुरश्रेष्ठंममगेहेहरिंस्थितम्॥५४॥व्यासउवाच॥इत्युक्तेवैष्णवेनाथसतुतंपुनरब्रवीत् ॥५५॥
विप्रउवाच॥कासौविष्णुःस्थितोनित्यंदर्शयाद्यप्रसादतः॥५६॥ वैष्णवउवाच॥अस्मिन्देवगृहेरम्येप्रविश्यपरमेश्वरम्॥तंदृष्ट्वाकिल्बिषाद्घोरान्मुच्यसेज
न्मबन्धनात् ॥५७॥ व्यासउवाच ॥ तस्यतद्वचनंश्रुत्वाप्रविश्यसदनंप्रति॥अपश्यत्तंद्विजंविष्णुंतिष्ठन्तंपद्मतल्पके ॥५८॥ शिरसैवप्रवन्द्याथजग्राहचर
णौमुदा ॥ प्रसादीभवदेवेशनज्ञातस्त्वंपुरामया ॥ ५९ ॥ इहामुत्रचदेवेशतवाहंकिङ्करःप्रभो ॥ अनुग्रहश्चमेदृष्टोभवंतोमधुसूदन ॥१६०॥ रूपंतेद्रष्टुमि
च्छामियदिचास्तिकृपामयि ॥६१॥ विष्णुरुवाच ॥ अस्तिमेत्वयिभूदेवप्रियत्वंचसदैवहि ॥ स्नेहात्पुण्यवतामेवदर्शनंकारितंमया ॥६२॥ दर्शना
त्स्पर्शनाद्ध्यानात्कीर्तनाद्भाषणात्तथा ॥ सकृत्पुण्यवतामेवस्वर्गंचाक्षयमश्नुते ॥ ६३ ॥ नित्यमेवतुसंसर्गात्सर्वपापक्षयोभवेत् ॥ भुक्त्वासुखमन
न्तंचमद्देहेप्रविलीयत ॥ ६४ ॥ स्नात्वाचपुण्यतीर्थेषुदृष्ट्वामांचैवसर्वतः ॥ दृष्ट्वापुण्यवतांदेशान्ममदेहेविलीयते ॥६५॥ कथयित्वाकथांपुण्यांलोका
नामग्रतःसदा ॥ सचैवनरशार्दूलमद्देहेप्रविलीयते ॥६६॥ उपोष्यवासरेऽस्माकंश्रुत्वामच्चरितंध्रुवम् ॥ रात्रौजागरणंकृत्वामद्देहेप्रविलीयते ॥ ६७ ॥
अत्यन्तघोषणोनृत्यगीतवाद्यादिकैस्सदा ॥ नामस्मरन्द्विजश्रेष्ठमद्देहेप्रविलीयते ॥ ६८ ॥ मद्भक्तस्तीर्थभूतश्चत्वमेवबकमारणात् ॥ यत्पापंतस्यमो
क्षायसखेस्थित्वा उवाचह ॥ ६९ ॥ गच्छमूकंमहात्मानंतीर्थपुण्यवतांवरम् ॥ मूकस्यदर्शनात्तातसर्वेदृष्टामहाजनाः ॥ १७० ॥ तेषांचदर्शनादे
वतथासम्भाषणान्मम ॥ ममसम्पर्कभावाच्चमद्गृहंचागतोभवान् ॥ ७१ ॥ जन्मकोटिसहस्रेभ्योयस्यपापक्षयोभवेत् ॥ समांपश्यतिधर्मज्ञोयथा
तेनप्रसन्नता ॥ ७२ ॥ ममैवानुग्रहाद्वत्सअहंदृष्टस्त्वयानघ ॥ तस्माद्वरंगृहाणत्वंयत्तेमनसिवर्तते ॥ ७३ ॥ विप्रउवाच ॥ अस्माकंसर्वथानाथ

मानसंत्वयितिष्ठतु ॥ त्वद्दतेसर्वलोकेशकदाचिन्नतुंरोचताम् ॥७४॥ माधवउवाच ॥ यस्मादेतादृशीबुद्धिःस्फुरतेतेसदानघ ॥ तस्मान्मत्सदृशान्भोगा
न्मद्गेहेसंप्रलप्स्यसे ॥७५॥ किंतुतेपितरौपूजामाप्नुतोनत्वयानघ ॥ पूजयित्वातुपितरौपश्चाद्यास्यसिमत्तनुम् ॥ ७६ ॥ तयोर्निश्श्वासवातेनमन्युनाच
भृशंपुनः ॥ तपःक्षरतितेनित्यंतस्मात्पूजयतौद्विज ॥७७॥ मन्युर्निपततेयस्मिन्पुत्रेपित्रोश्चनित्यशः ॥ तन्निरयंनबाधेऽहंनधातानचशङ्करः ॥ ७८ ॥
तस्मात्त्वंपितरौगच्छकुरुपूजांप्रयत्नतः ॥ ततस्त्वंहितयोरेवप्रसादान्मत्पदंव्रज ॥७९॥ व्यासउवाच ॥ इत्युक्तेतुद्विजश्रेष्ठःपुनराहजगद्गुरुम् ॥१८०॥
विप्रउवाच ॥ प्रसन्नोयदिमेनाथरूपंस्वंदर्शयाच्युत ॥८१॥ व्यासउवाच ॥ ततोद्विजप्रणयतःप्रसन्नहृदयोवशी॥रूपंस्वंदर्शयामासब्रह्मण्योब्रह्मकर्मणे
॥८२॥ शङ्खचक्रगदापद्मधारिणंपुरुषोत्तमम् ॥ कारणंसर्वलोकस्यतेजसापूरयज्जगत् ॥८३॥ प्रणम्यदण्डवद्विप्रउवाचपुनरच्युतम् ॥ अद्यमेसफलंजन्म
अद्यमेचक्षुषीशिवे ॥ ८४ ॥ अद्यमेचकरौश्लाघ्यौधन्योऽहंजगदीश्वर ॥ अद्यमेपुरुषायान्तिब्रह्मलोकंसनातनम् ॥ ८५ ॥ नन्दन्तिबान्धवामेऽद्यत्वत्प्र
सादाज्जनार्दन ॥ इदानींचप्रसिद्धामेसर्वेचैवमनोरथाः ॥ ८६ ॥ किंतुमेविस्मयोनाथमूकादिज्ञानिनोभृशम् ॥ कथंजानन्तिमद्वृत्तं
देशान्तरउपस्थितम् ॥ ८७ ॥ तस्यगेहोदराकाशेस्थितोविप्रोऽतिशोभनः ॥ तथापतिव्रतागेहेतुलाधारशिरस्यपि ॥ ८८ ॥ तथा
मित्राद्रोहकस्यत्वंचवैष्णवमन्दिरे ॥ अनुग्रहाच्चमेविप्रतत्त्वतोवक्तुमर्हसि ॥ ८९ ॥ श्रीभगवानुवाच ॥ पित्रोर्भक्तःसदामूकःपति
व्रताशुभाचसा ॥ सत्यवादीतुलाधारःसमःसर्वजनेषुच ॥ १९० ॥ लोभकामजिदद्रोहोमद्भक्तोवैष्णवःस्मृतः ॥ सम्प्रीतोऽहंगुणैरेषांतिष्ठा
म्यावसथेमुदा ॥ भारतीकमलाभ्यांचसहितोद्विजसत्तम ॥ ९१ ॥ विप्रउवाच ॥ महापातकिसंसर्गान्नराश्चैवातिपातकाः ॥ इतिजल्पन्तिधर्मज्ञाः
स्मृतिशास्त्रेषुसर्वदा ॥ पुराणागमवेदेषुकथंत्वंतिष्ठसेगृहे ॥ ९२ ॥ श्रीभगवानुवाच ॥ कल्याणानांचसर्वेषांकर्तामूकोजगत्त्रये ॥ वृत्तस्थोयोऽपिचण्डा
लस्तंदेवाब्राह्मणंविदुः ॥ ९३ ॥ मूकस्यसदृशोनास्तिलोकेषुपुण्यकर्मतः ॥ पित्रोर्भक्तिपरोनित्यजितंतेनजगत्त्रयम् ॥ ९४ ॥ तयोर्भक्त्यात्वहंतुष्टः
सर्वदेवगणैःसह ॥ तिष्ठामिद्विजरूपेणतस्यगेहोदरेचखे ॥ ९५ ॥ तथापतिव्रतागेहेतुलाधारस्यमन्दिरे ॥ अद्रोहकस्यभवनेवैष्णवस्यचवेश्मनि
॥ ९६ ॥ सदातिष्ठामिधर्मज्ञमुहूर्तंनत्यजाम्यहम् ॥ तेनपश्यन्तिमांनित्यंयेत्वन्येपापकृज्जनाः ॥ ९७ ॥ पुण्यत्वाच्चत्वयादृष्टोममानुग्रहकारणात् ॥
पित्रोर्भक्तिपरःशुद्धश्चाण्डालोदेवतांगतः ॥ ९८ ॥ तस्मात्तेनसहप्रीत्यातिष्ठामितस्यमन्दिरे ॥ पुनःपुनःकथालापंकरोमिद्विजनन्दन ॥ ९९ ॥ तस्य
वैमानसेनित्यंवर्तेऽहंभूतभावनः ॥ सतज्जानातित्वद्वृत्ततथापतिव्रतादयः ॥ २०० ॥ तेषांवृत्तंवदिष्यामिशृणुत्वंचानुपूर्वशः ॥ यस्तुत्वासर्वथामर्त्यो

मुच्यतेजन्मबन्धनात् ॥ १ ॥ पितुर्मातुःपरंतीर्थदेवदेवेषुनैवहि ॥ पित्रोरर्चाकृतायेनसएवपुरुषोत्तमः ॥२॥ पित्रोराज्ञाचदेवस्यगुरोराज्ञासमंफलम् ॥
आराधनाद्दिवोराज्यंबाधयारौरवंव्रजेत् ॥ ३ ॥ सचास्माकंहृदिस्थोऽपितस्याहंत्वदयेस्थितः ॥ आवयोरन्तरंनास्तिपरत्रेहचमत्समः ॥ ४ ॥
मदग्रेमत्पुरेरम्येसर्वैश्चबान्धवैःसह ॥ सभुञ्जीताक्षयंभोगमन्तेमयिचलीयते ॥ ५ ॥ अतएवहिमूकोऽसौवार्त्तांत्रैलोक्यसम्भवाम् ॥ जानातिनरशार्दूल
एषतेविस्मयःकुतः ॥ ६ ॥ द्विजउवाच ॥ मोहादज्ञानतोवापिनकृत्वापितुरर्चनम् ॥ ज्ञात्वावाकिंचकर्तव्यंसदसज्जगदीश्वर ॥ ७ ॥ श्रीभगवानु
वाच ॥ दिनैकंमासपक्षौवापक्षार्धंवाथवत्सरम् ॥ पित्रोर्भक्तिःकृतायेनसचगच्छेन्ममालयम् ॥८॥ कारयित्वामनःकष्टमवश्यंनरकंव्रजेत् ॥ नकृतावा
कृतावास्यात्पित्रोरर्चापरंपुरा ॥ वृषोत्सर्गंनरःकृत्वापितृभक्तिफलंलभेत् ॥ ९ ॥ अन्नंवस्त्रंतथागव्यंमधुमांसादिसत्कृतम् ॥ दद्यादकुत्सितंश्राद्धेवृषोत्स
र्गफलंलभेत् ॥ २१० ॥ श्राद्धंदद्याद्द्विजाग्र्यायवेदशास्त्रानुभाविने ॥ शान्तायवीतरागायवृषोत्सर्गफलंलभेत् ॥ ११ ॥ अन्नंवस्त्रंतथागव्यंसामिषं
चनिरामिषम् ॥ सर्वंलक्षगुणंप्रोक्तंज्ञातिभ्योयत्प्रदीयते ॥ १२ ॥ सर्वस्वेनकृतंश्राद्धंयेनपुत्रेणधीमता ॥ जातिस्मरत्वंप्राप्नोतिपितृभक्तिफलंलभेत्
॥ १३ ॥ श्राद्धात्परोमहायज्ञस्त्रैलोक्येतुनविद्यते ॥ अत्रयद्दीयतेकिंचित्सर्वंचाक्षयमश्नुते ॥ १४ ॥ अन्यस्मिंश्चायुतंविद्धिज्ञातिभ्योलक्षमुच्यते ॥
पिण्डेकोटिगुणंप्रोक्तंद्विजायानन्तमुच्यते ॥१५॥ गङ्गाजलेगयायांचप्रयागेपुष्करेतथा ॥ वाराणस्यांसिद्धकुण्डेगङ्गासागरसङ्गमे ॥ १६ ॥ अन्नपिण्डं
प्रदद्याद्यस्तस्यमुक्तिर्भवेद्ध्रुवम्॥पितरश्चाक्षयंस्वर्गंलभन्तेजन्मनःफलम् ॥१७॥ भागीरथ्यांविशेषेणयस्तुदद्यात्तिलोदकम्॥मुक्तिमार्गंसचाप्नोतिपिण्ड
दानेतुकिंपुनः ॥१८॥नदीतीरेषुसाहस्रंनदेत्वयुतमिष्यते ॥ सामान्यफलसंसर्गाच्छ्राद्धंशतगुणंभवेत् ॥१९॥ अमायांचयुगाद्यायांग्रहणेसूर्यचन्द्रयोः ॥
पार्वणंकुरुतेयस्तुसोऽक्षयंलोकमश्नुते ॥ २२०॥ पितरस्तस्यतुष्यन्तिसर्वेसमायुतंप्रति ॥ आशिषंदयितंदत्त्वाभोग्यंचानन्तमात्मजे ॥ २१ ॥ ततः
पर्वणिपुत्रैश्चकर्त्तव्यंपार्वणंमुदा ॥ पित्रोर्यज्ञमिमंकृत्वामुच्यतेजन्मबन्धनात् ॥ २२ ॥ अहन्यहनियच्छ्राद्धंनित्यश्राद्धमितिस्मृतम् ॥ श्रद्धयाकारये
द्यस्तुसोऽक्षयंलोकमश्नुते ॥ २३ ॥ तथैवापरपक्षेचकाम्यश्राद्धंविधानतः ॥ कृत्वाकामंसचाप्नोतियद्यामनसिवर्तते ॥ २४ ॥ आषाढीमवधिंकृत्वा
यस्तुपक्षस्तुपञ्चमः ॥ तत्रश्राद्धंप्रकुर्वीतकन्यांगच्छतुवानवा ॥ २५ ॥ कन्यांगतेसवितरियान्यहानितुषोडश ॥ क्रतुभिस्तानितुल्यानिसमाप्तवरद
क्षिणैः ॥ २६ ॥ काम्यश्राद्धंमहापुण्यमिदंतस्यागतंशिवम् ॥ अभावात्कृष्णपक्षादौतुलायांकर्तुमर्हति ॥ २७ ॥ अमावृश्चिकमायातिनैराश्यंपितरो
गताः ॥ पुनःस्वभवनंयान्तिशापंदत्त्वासुदारुणम् ॥ २८ ॥ पितृशापेनपुत्रस्यनष्टंसर्वमितिस्मृतम् ॥ धनंपुत्रायशःकाम्यमभीष्टमायुरेवच ॥ २९ ॥

सर्वाण्येतानिलभ्यन्तेजन्मजन्मसुमानवैः ॥ पितॄणांचवरेणैवतस्मान्नैनंपरित्यजेत् ॥ ३० ॥ विवाहव्रतयज्ञादौकृत्वानान्दीमुखंद्विजः ॥ अक्षयंलभ
तेपुण्यंगोत्रंतस्यप्रवर्द्धते ॥ ३१ ॥ एतद्विपर्ययोयस्यसयातिनरकंनरः ॥ कुलक्षयोभवेत्तस्यसजीवोदुःखितोभवेत् ॥ ३२ ॥ ततस्तुपूजयेदग्रेगणेशं
शम्भुनन्दनम् ॥ परंषोडशमातॄश्चततपश्चात्पितृसञ्चयम् ॥ ३३ ॥ नान्दीमुखंपुसर्वेषुप्रपितामहपूर्वकम् ॥ नान्दीमुखेद्विजान्सर्वान्स्थापयेत्प्राङ्मुखा
न्सुधीः ॥३४ ॥उच्चारयेन्नमोवाक्यंस्वधाचान्यत्रयोजयेत्॥ ग्रहणेचन्द्रसूर्यस्यदत्त्वापिण्डोदकंनरः ॥ ३५ ॥ अक्षयंलभतेस्वर्गंपितॄणांपुष्टिवर्द्धनम्॥
तत्रस्नानंनकुर्याद्यःशक्त्यापिण्डोदकंनरः ॥ ३६ ॥ नददातिपितॄणांतुचाण्डालत्वंसगच्छति ॥ ३७ ॥ सर्वंभूमिसमंदानंसर्वेव्याससमाद्विजाः ॥
सर्वंगङ्गासमंतोयंराहुग्रस्तेनिशाकरे ॥ ३८ ॥ इन्दोर्लक्षगुणंप्रोक्तंदशलक्षंतुभास्करे ॥ गङ्गातोयेतुसम्प्राप्तइन्दोःकोटीरवेर्दश ॥ ३९ ॥
गवांशतसहस्रस्यसम्यग्दत्तस्ययत्फलम् ॥ तत्फलंजाह्नवीस्नानेराहुग्रस्तेनिशाकरे ॥ ३४० ॥ चन्द्रसूर्यग्रहेचैवअवगाहतिजाह्नवीम् ॥
सस्नातस्सर्वतीर्थेषुकिमर्थमटतेमहीम् ॥ ४१ ॥ सूर्यग्रहःसूर्यवारेसोमेसोमग्रहतस्था ॥ चूडामणिरितिख्यातस्तत्रानन्तफलंस्मृतम् ॥ ४२ ॥
समुपोष्यतयोःपूर्वेपुण्यतीर्थेतुयःपुमान् ॥ दत्त्वापिण्डोदकंदानंसत्यलोकेप्रतिष्ठितः ॥ ४३ ॥ द्विजउवाच ॥ पितुरेवमहायज्ञः
श्राद्धंचभवतेरितम् ॥ तातापश्चिमकालादौकिंकर्त्तव्यंसुतेनहि ॥ ४४ ॥ किंकृत्वाचपरंश्रेयोजन्मजन्मसुलभ्यते ॥ पुत्रेणधीमतादेवय
त्नतोवक्तुमर्हसि ॥ ४५ ॥ श्रीभगवानुवाच ॥ पूर्वेवयसिसम्प्राप्तेपितापुत्रइतिस्मृतः ॥ उत्तरेचसुतस्तातःपालनान्नतुपूजनात् ॥ ४६ ॥
देववत्पूजयेत्तातंस्नेहंकुर्याच्चपुत्रवत् ॥ नलङ्घयेद्वचस्तस्यमनसापिकदाचन ॥ ४७ ॥ आतुरस्यपितुःपुत्रोयस्तुकुर्यात्प्रतिक्रियाम् ॥ सोऽक्षयं
लभतेस्वर्गंसदादेवैःप्रपूज्यते ॥ ४८ ॥ मुमूर्षोरपितातस्यपश्यतोमृत्युलक्षणम् ॥ कृत्वाचयजनंपुत्रोदेवानांतुल्यतांव्रजेत् ॥ ४९ ॥ विधि
नाऽनशनेनैवपितुःस्वर्गंददातियः ॥ पुत्रस्यतस्यधीरस्यशृणुवक्ष्यामियद्गुणम् ॥ ३५० ॥ अश्वमेधसहस्राणिराजसूयशतानिच ॥ भवेदनशनेपु
ण्यंतीर्थेकोटिगुणंतयोः ॥ ५१ ॥ भागीरथ्याजलेचैवयोमृतःपुरुषोत्तमः ॥ पयोधरसमातुर्नपिबेन्मुक्ततांव्रजेत् ॥ ५२ ॥ वाराणस्यांत्यजेद्य
स्तुप्राणांश्चैवयदृच्छया ॥ अभीष्टंचफलंभुक्त्वामदेहेप्रविलीयते ॥ ५३ ॥ यागतिर्योगयुक्तानांमुनीनामूर्द्ध्वरेतसाम् ॥ सागतिस्त्यजतःप्राणान्ब्रह्म
पुत्रेषुसप्तसु ॥ ५४ ॥ लोहितस्यविशेषेणतीरोत्तरसमाश्रितः ॥ विधिनायस्त्यजेत्प्राणान्सचमत्समतांव्रजेत् ॥ ५५ ॥ तस्यैवचोर्वशीकेशपुण्यती
र्थेद्विजोत्तम ॥ मृतोत्पन्नःसमाप्नोतिसर्वदोषैर्नलिप्यते ॥ ५६ ॥ गृहस्याभ्यन्तरेयस्यप्राणत्यागोभवेद्ध्रुवम् ॥ यावद्ग्रन्थिर्गृहेतिष्ठेत्तावद्बन्धोभवे

तनौ ॥ ९७ ॥ हायनेहायनेचापिएकैकंपरिहीयते ॥ पश्यतांपुत्रबन्धूनांबन्धनेनास्तिनिष्कृतिः ॥ ९८ ॥ पर्वतेकाननेदुर्गेस्थानेवाजलवर्जिते ॥
मृतोदुर्गतिमाप्नोतिकीटादौजायतेपुनः ॥ ९९ ॥ संस्कारश्चभवेद्यस्यमृतस्यपरवासरे ॥ षष्टिवर्षसहस्राणिकुम्भीपाकेप्रतिष्ठति ॥ २६० ॥ अस्पृश्य
स्पर्शनादेवउच्छिष्टःप्रतितोमृतः ॥ सुचिरंनरकेस्थित्वाम्लेच्छजातिषुजायते ॥ ६१ ॥ तथैवबहुकीटेषुजायतेसत्त्वजातिषु ॥ तस्मान्नचिरकालेषुजा
नीयात्पुण्यपातकम् ॥ ६२ ॥ पुण्यात्पुण्यप्रयोगैश्चसर्वेषांमर्त्यवासिनाम् ॥ मरणेयागतिःपुंसांगतिर्भवतितादृशी ॥ ६३ ॥ पुण्यतीर्थेमृतोयस्तु
विष्णोर्नामानिचिन्तयन् ॥ पापात्पूतोव्रजेत्स्वर्गंसर्वदोषैर्नलिप्यते ॥ ६४ ॥ पितुर्मृतस्यदेहंतुवहेद्यस्तुसुतोवली ॥ पदेपदेऽश्वमेधस्यफलंप्राप्नोत्यसं
शयम् ॥६५॥ प्राक्चितौचपितुर्देहेमुखाग्निंकारयेत्सुतः ॥ विधिनामन्त्रपूतेनपश्चाद्देहंदहेत्पुनः ॥ ६६ ॥ लोभमोहसमायुक्तंपापपुण्यसमावृतम् ॥
दहेयंसर्वगात्राणिदिव्याँल्लोकान्सगच्छतु ॥ ६७ ॥ दग्ध्वाचलङ्घयेत्पुत्रोऽप्यस्थिसञ्चयनंप्रति ॥ दशाहेसमनुप्राप्तेचार्द्रवस्त्रंपरित्यजेत् ॥ ६८ ॥
छित्त्वाचलोहितंचैलंवह्नौचाथजलेक्षिपेत् ॥ ततश्चैकादशाहेचश्राद्धंकुर्याद्विचक्षणः ॥६९॥ प्रेतस्यदेहपुष्ट्यर्थंब्राह्मणैकंतुभोजयेत् ॥ दानंदद्याच्चविधि
वद्वस्त्रंपीठंचपादुकाम् ॥ २७० ॥ सर्वोपकरणैस्तुल्यंधरादिगजवाजिकम् ॥ कृष्णांगांचप्रदद्यात्तुसर्वपापविमुक्तये ॥ ७१ ॥ चतुर्थाहेत्रिपक्षेचषण्मासे
चाब्दिकेतथा ॥ द्वादशप्रतिमास्यानिश्राद्धान्येतानिषोडश॥७२॥यस्यैतानिनसन्तीहयथाशक्तिचश्रद्धया ॥ पिशाचत्वंस्थिरंतस्यदत्तैःश्राद्धशतैरपि
॥ ७३ ॥ अब्दमम्बुघटंदद्यादन्नंचामिषसंयुतम् ॥ नित्यानित्यमभावाच्चक्षपन्मासंसमापयेत् ॥ ७४ ॥ सपिण्डीकरणश्राद्धंगतेसंवत्सरेबुधः ॥ पार्व
णस्यविधानेनकारयेद्द्विजसत्तमः ॥ ७५ ॥ पितुरब्दमशौचंस्यान्मातुःषण्मासमेवच ॥ त्रिमासंतुस्त्रियश्चैवतदर्द्धंभ्रातृपुत्रयोः ॥ ७६ ॥ सपिण्डा
नामशौचंस्याद्यावद्देहेसतिष्ठति ॥ पुत्रस्ययन्निषिद्धंतुशृणुतातवदाम्यहम् ॥ ७७ ॥ ब्रह्मचारीसदाचारीनगच्छेच्चस्त्रियंक्वचित् ॥ ७८ ॥ सप्तघटचाः
परंचैवनवघट्याश्चपूर्वतः ॥ सकालःकुतपोज्ञेयःपितॄणांदत्तमक्षयम् ॥ ७९ ॥ श्राद्धेत्रीणिपवित्राणिदौहित्रःकुतपस्तिलाः ॥ त्रीणिचात्रप्रशंसन्तिसत्यम
क्रोधमत्वराम्॥२८०॥सायंसन्ध्यांपरान्नंचपुनर्भोजनमैथुनम् ॥दानंप्रतिग्रहंचैवश्राद्धंकृत्वाविवर्जयेत्॥८१॥अकर्तव्यशतंकृत्वाकार्यंकुर्याद्विचक्षणः ॥
तच्चकर्तव्यतामेतिस्वयमुक्तंविरिञ्चिना ॥८२॥ शृणुपुत्रपुरावृत्तंबहूनांचवदाम्यहम् ॥ गुरोर्गोहननंकृत्वाददुःश्राद्धंययुर्दिवम् ॥ ८३ ॥ तेषांचकीर्त्तनादेव
श्राद्धंभवतिचाक्षयम् ॥ वसिष्ठस्यमुनेःशिष्याब्राह्मणास्सप्तसुव्रताः ॥ ८४ ॥ पितृश्राद्धेसमायातेहोमधेनुंगुरोःप्रियाम् ॥ प्रार्थयित्वागृहंनीत्वासप्त
भिर्भ्रातृभिर्मुदा ॥ ८५ ॥ गव्यार्थंपितृयज्ञेतांधेनुंहत्वाविमृश्यच॥ददुर्मांसंचविप्रेचशेषंविप्रांस्त्वभोजयन् ॥ ८६ ॥ समाप्यपितृकर्माणिवत्संसञ्ज्ञाते

द्विजाः ॥ गुरौसमर्पयामासुर्धेनुर्व्याघ्रेणभक्षिता ॥ ८७ ॥ ततस्तपोबलादेवज्ञात्वातेषांचकारणम् ॥सशशापततःशिष्यांश्चाण्डालाश्चभविष्यथ॥८८॥
वेपमानास्ततोविप्राःकृताञ्जलिपुटाःस्थिताः॥ ८९॥शिष्याऊचुः ॥धेनोर्मांसप्रदातारःपितृकृत्येसदानघ॥ अकर्तव्यसहस्राणिमहान्तिपातकानिच ॥
कुर्वन्तःपितृकार्येषुपापात्पूतादिवंगताः ॥ २९० ॥ श्रुतंबहुविधंनाथमुखात्तेचपुरातनम् ॥ क्षन्तुमर्हसिधर्मज्ञशापस्यान्तोविधीयताम् ॥ ९१ ॥
वसिष्ठउवाच ॥ शापोवोऽथयथापाप्मानतुधर्मविचारणात् ॥ चाण्डालादौसमुत्पन्नाःपुरावृत्तंस्मरिष्यथ ॥ ९२ ॥ नचवोज्ञानलोपश्चस्मृतिशास्त्र
मनष्टकम् ॥ पापयोनिंसमुत्तीर्यपश्चान्मोक्षंगमिष्यथ ॥ ९३ ॥ ततःप्राणान्परित्यज्यगुरुशापात्तुतेद्विजाः ॥ जाताश्चाण्डालयोनौतुसर्वेज्ञानस
मन्विताः ॥ ९४ ॥ स्तन्यंतैस्तुनपीतंवैस्मरद्भिःपूर्वजन्मतत् ॥ मृताजातामृगाःसर्वेचक्रवाकाःपुनर्वने ॥ ९५ ॥ हंसास्तुमानसेतीर्थेशुक्लाजाताःपुन
र्द्विजाः ॥ मुमूर्षवोमहाभागामृतास्तेखेदकारणात् ॥ ९६ ॥ तस्मिन्कालेमहाराजोधर्मकेतुरितिस्मृतः ॥ ययौस्नातुंततस्तीर्थंसदारःसपरिच्छदः
॥ ९७ ॥ ततोहंसास्त्रयोमोहाद्राज्यंभोग्यंतुयोषितः ॥ भक्ष्याणिचिन्तयन्तश्चलोकान्तरमयुस्तदा ॥ ९८ ॥ज्ञात्वावेदंचवेदाङ्गंमोक्षंयास्यामहेवयम्॥
चिन्तयन्तोगताअन्येततोलोकान्तरंप्रति ॥ ९९ ॥ अथत्रयोनृपाजाताश्चत्वारोविप्रसत्तमाः ॥ कुरुक्षेत्रेततोवेदान्वेदाङ्गानिसमन्ततः ॥ ३०० ॥ तपो
बलाद्विदन्तिस्मवार्तांचामुत्रचेहच ॥ त्रयोराजकुलेजाताराजानोमदमोहिताः ॥ १ ॥ ज्ञानलोपात्परंलोकंनजानन्तिहिताहितम् ॥ तेचविप्राश्चसन्दे
हादाहूयचेटकंस्वकम् ॥२॥ विप्राऊचुः ॥राज्ञोगच्छस्वकार्पण्यात्पत्रंदेहिचसम्भ्रमात् ॥३॥ सप्तव्याधादशार्णेषुमृगाःकालञ्जरेगिरौ ॥ चक्रवाकाःशर
द्वीपेहंसाःसरसिमानसे॥४॥तेऽपिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः॥प्रस्थितादूरमध्वानंयूयंकिमवसीदथ॥५॥भगवानुवाच ॥ गृहीत्वाचेटकोलेखंराज्ञ
स्तुसमदर्शयत्॥दृष्ट्वालेखंतुराजानोराज्यंत्यक्त्वाययुर्द्विजान् ॥६॥ श्रुत्वावाक्यंततस्तेषांगतास्तेचतपोधनाः ॥ अचिरेणैवकालेनमोक्षंयाताश्चतैस्सह
॥७॥यइदंशृणुयाच्छ्राद्धेसप्तव्याधादिकंद्विज॥अक्षयंचान्नपानंचपितॄणामुपतिष्ठति ॥८॥ द्विजउवाच॥वित्तहीनस्यविप्रस्यपितृकार्यंकथंभवेत्॥तपस्वि
नोवनस्थस्यगृहस्थस्यचकेशव॥९॥ भगवानुवाच॥तृणकाष्ठार्जनंकृत्वाप्रार्थयित्वावराटकम्॥करोतिपितृकार्याणिततोलक्षगुणंभवेत् ॥ ३१० ॥ अक
र्तव्यशतंकृत्वापितृश्राद्धंकरोतियः ॥ सर्वपापक्षयस्तस्यस्वर्गंयातिचमानवः ॥ ११ ॥ सर्वाभावेपितृतिथौगोभ्योघासंददातियः ॥ फलंचपिण्ड
दानस्यसम्प्राप्नोत्यधिकंनरः ॥ १२ ॥ पुरावैराटविषयेरुरोदातीवदीनकः ॥ पितृतिथौस्वयंप्राप्तेसर्वाभावाद्वरोदिति ॥ १३ ॥ रुदित्वासु
चिरंसोऽपिपप्रच्छकोविदंद्विजम् ॥ १४ ॥दीनउवाच ॥ ब्रह्मन्पितृतिथावद्यकिंस्वित्कृत्वाहितंभवेत् ॥ १५ ॥ वराटकश्चमेनास्तिधनंब्रह्मविदांवर ॥

उपदेशंचमेदेहियेनधर्मेस्थितोह्यहम् ॥ १६ ॥ द्विजउवाच ॥ गच्छशीघ्रंवनेतातमुहूर्तेकृतपेऽधुना ॥ घासपितरमुद्दिश्यगवेदेहीतिसत्वरम् ॥ १७ ॥
॥ भगवानुवाच ॥ ततस्तस्योपदेशेनगृहीत्वाघासपूलकम् ॥ गवेदत्वायथाहृष्टःपुष्टयर्थंपितुरेवच ॥ १८ ॥ एतत्पुण्यप्रसादेनगतोऽसौसुरमन्दि
रम् ॥ स्वर्गंचसुचिरंभुक्त्वाउत्पन्नोधनिनांकुले ॥ १९ ॥ धनवान्सपुरापुण्यात्पितृयज्ञस्यकारणात् ॥ सददातिपितुःपिण्डंसर्वस्वेनधनेनच॥२०॥
तत्रैकजन्मनोऽभ्यासाद्गतोऽसौविष्णुमन्दिरम् ॥ भुक्त्वानन्तसुखंतत्रसार्वभौमोऽभवन्नृपः ॥ २१ ॥ पितृयज्ञात्परोयस्माद्धर्मोनास्तिकथञ्चन ॥ त
स्मात्सर्वप्रयत्नेनशक्त्याकुर्यादमत्सरः ॥ २२ ॥ यःपठेद्धर्मसन्तानंजनानामग्रतोनरः ॥ विष्णुपद्याजलेस्नानंप्रतिलोकंचलभ्यते ॥ २३ ॥ जन्मज
न्मकृतोयेनमहापातकसञ्चयः ॥ तत्सर्वंप्रलयंयातिसकृदुच्चरितेश्रुत ॥ २२४ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेपञ्चाख्यानेपितृभक्तिनिरूपणंनाम
द्विपञ्चाशत्तमोध्यायः ॥ ५२ ॥ नरोत्तमउवाच ॥ त्रिदशानांचदेवानामन्येपांजगदीश्वरः ॥ प्रभुःकर्ताचहर्त्ताचगोप्ताभर्त्तापिताप्रसूः ॥ १ ॥ अस्मा
कंवाक्छ्रमोविष्णोःकथनेनैवयुज्यते ॥ किंतुकौतूहलंमेऽस्तिपिपासावाक्षुधाऽपिवा ॥ २ ॥ कृतंपृच्छतियेनैववक्तव्यंतत्प्रियेणहि ॥ अतीतंचैवजाना
तिकथंनाथपतिव्रता ॥ ३ ॥ किंवातस्याःप्रभावंचवक्तुमर्हस्यशेषतः॥४॥भगवानुवाच ॥ कथितंमेपुरावत्सपुनःकौतूहलंद्विज ॥ कथयिष्यामितत्स
र्वंयत्तेमनसिवर्तते ॥ ५ ॥ पतिव्रतापतिप्राणासदापत्युर्हितेरता ॥ देवानापिसाराध्यामुनीनांब्रह्मवादिनाम् ॥ ६ ॥ धवस्यैकस्ययानारीलोकेपूज्य
तमास्मृता ॥ तस्यासंमाननेगुर्वीनिभृतानभविष्यति ॥ ७ ॥ मध्यदेशेपुरातातनगरीचातिशोभना ॥ तस्यांचब्रह्मजातीयासेव्यानाम्नीपतिव्रता ॥
॥ ८ ॥ तस्याधवोऽभवत्कुष्ठीपूर्वकर्मविरोधतः ॥ गलद्व्रणस्यपत्युश्चनित्यंचर्यापरायणा ॥ ९ ॥ यद्यन्मनोरथंतस्यशक्त्यासाकुरुतेभृशम् ॥ अर्चये
द्देववन्नित्यंस्नेहंकुर्यादमत्सरा ॥ १० ॥ कदाचित्पथिगच्छन्तींवेश्यांपरमसुन्दरीम् ॥ दृष्ट्वातीवाभवन्मोहान्मन्मथाविष्टचेतनः ॥ ११ ॥ निश्वस्यसु
तरांदीर्घंततस्तुविमनाभवत् ॥ श्रुत्वागृहाद्विनिःसृत्यसाध्वीपप्रच्छतंपतिम् ॥ १२ ॥ साध्व्युवाच ॥ उन्मनास्त्वंकथंनाथनिःश्वासस्तेकथंविभो ॥
ब्रूहिमेयच्चकर्तव्यमकर्तव्यंचयत्प्रियम् ॥१३॥दयितंतेकरिष्यामित्वमेकोमेगुरुःप्रियः॥अभीष्टंवदमेनाथयथाशक्तिकरोम्यहम्॥१४॥भगवानुवाच॥इत्यु
क्तेतामुवाचेदंवृथाकिंभाषसेप्रिये ॥ नशक्तात्वंनचैवाहंमोघंवक्तुंनयुज्यते ॥ १५ ॥ प्रष्टुंनाधिकरोर्षातियथादीर्घतरोःफलम् ॥ भूमौस्थित्वातुखर्वात्मा
समुद्धर्तुंप्रवाञ्छति ॥१६ ॥ तथामेरमणीलोभान्मोहाद्यदभिवाञ्छितम् ॥ दम्पत्योरपिदुःसाध्यमपथानंवदाम्यहम् ॥ १७ ॥ पतिव्रतोवाच ॥ ॥
ज्ञात्वातुत्वन्मनोवृत्तंशक्ताहंकार्यसाधने ॥ आदेशंकुरुमेनाथकर्तव्यंयेनकेनचित् ॥ १८ ॥ यदितेदुर्लभंकार्यंकर्तुंशक्नोमियत्नतः ॥ तदामेत्वतिक

ल्याणंफलिष्यतिपरेत्विह ॥ १९ ॥ भगवानुवाच ॥ इत्युक्तेपरमप्रीतःस्थितोवचनमब्रवीत् ॥ पापाभ्यासाच्चपाप्मानंप्रेच्छतीतिविनिश्चयः ॥
॥ २०॥ कुष्ठ्युवाच ॥ पथ्यस्मिन्सम्प्रगच्छन्तींवेश्यांपरमसुन्दरीम् ॥ सर्वतश्चानवद्याङ्गींदृष्ट्वामेदह्यतेमनः ॥२१ ॥ यदितांत्वत्प्रसादाच्चप्राप्नोमिन
वयौवनाम् ॥ तदामेसफलंजन्मकुरुसाध्विहितंमम ॥ २२ ॥ यदिमांकुष्ठिनंदीनंपूतिगन्धंनवव्रणम् ॥ नगच्छतिवरारोहातदामेनिधनंहितम् ॥ २३ ॥
॥ भगवानुवाच ॥ श्रुत्वातेनेरितंवाक्यंसाध्वीवचनमब्रवीत् ॥ २४ ॥ पतिव्रतोवाच ॥ यथाशक्तिकरिष्यामिस्थिरीभवप्रभोऽधुना ॥ २५ ॥
॥ भगवानुवाच ॥ मनसाथसमालोच्यक्षपान्तेह्युषसिद्रुतम् ॥ गोमयंसहशोधन्यागृहीत्वासाययौमुदा ॥ २६ ॥ सम्प्राप्यगणिकागेहंशोधयित्वा
चचत्वरम् ॥ प्रतोलींवीथिकांचैवगोमयंप्रददौमुदा ॥ २७ ॥ सातूर्णमागतागेहेजनस्यालोकनेभयात् ॥ एवंक्रमेणसासाध्वीचरतिस्मदिनत्रयम् ॥
॥ २८ ॥ अथसावारमुख्याचचेटिकाश्चेटकानपि ॥ अपृच्छत्कस्यकर्माणिशोभनानिचचत्वरे ॥ २९ ॥ मयानोक्तेऽप्युषःकालेकस्यमत्प्रियकार
णात् ॥ रुच्यकर्मणिदीप्यन्तेरथ्याचत्त्वरवीथिकाः ॥ ३० ॥ परस्परेणसञ्चिन्त्यवारमुख्यांचतेऽब्रुवन् ॥ ३१ ॥ चेटकाऊचुः ॥ अस्माभिर्नकृ
तंभद्रेकर्मचैतत्प्रमार्जनम् ॥ ३२ ॥ भगवानुवाच ॥ अथसाविस्मयंगत्वासञ्चिन्त्यरजनीक्षये ॥ तयाचदृश्यतेसाचतथैवपुनरागता ॥ ३३ ॥ दृष्ट्वा
तांमहतींसाध्वींब्राह्मणींचपतिव्रताम् ॥ दधारचरणेतस्याहाक्षमस्वेतिभाषिणी ॥ ३४ ॥ गणिकोवाच ॥ आयुर्देहंचसम्पित्तर्यशोऽर्थःकीर्तिरेवच ॥
एतासांमेविनाशायस्फुरसीवपतिव्रते ॥ ३५ ॥ यद्यत्प्रार्थयसेसाध्विनित्यंदास्यामितद्दृढम् ॥ सुवर्णमणिरत्नवाचैलंवायन्मनोरथम् ॥ ३६ ॥ भग
वानुवाच ॥ तामुवाचततःसाध्वीनमेचार्थेप्रयोजनम् ॥ अस्तिकार्यंचतेकिञ्चिद्वदामिकुरुषेयदि ॥ तदामेहृदिसन्तोषःकृतंसर्वंत्वयाधुना ॥ ३७ ॥
॥ गणिकोवाच ॥ सत्यंसत्यंकरिष्यामिद्रुतंवदपतिव्रते ॥ कुरुमेरक्षणंमातर्द्रुतंकृत्यंचमेवद ॥ ३८ ॥ भगवानुवाच ॥ त्रपयानिकृतंवाच्यंतस्यामुक्तंव
रंप्रियम् ॥ क्षणंविमृश्यसावेश्याकृत्वाक्षान्तिमुवाचच ॥ ३९ ॥ कुष्ठिनःपूतिगन्धस्यसम्पर्केदुःखिताभृशम् ॥ दिनैकंचकरिष्यामियद्यागच्छतिम
द्गृहम् ॥ ४० ॥ पतिव्रतोवाच ॥ आगमिष्यामितेगेहमद्यगत्रौचसुन्दरि ॥ भुक्तभोग्यंपतिंहृष्टंपुनर्नेष्यामिमद्गृहम् ॥ ४१ ॥ गणिकोवाच ॥ गच्छशी
घ्रंमहाभागेस्वगृहंचपतिव्रते ॥ पतिस्तेचार्द्धरात्रेसआगच्छतुचमद्गृहम् ॥ ४२ ॥वहवोमेप्रियास्सन्तिराजानस्तत्समाश्रये ॥ एकैकोमद्गृहेनित्यंतिष्ठती
हनिरन्तरम् ॥ ४३ ॥ अद्याहंगृहंमेशून्यंकरिष्यामिचन्वद्भयात ॥ सचागच्छतुतेभर्त्तासचास्मान्प्राप्यगच्छतु ॥ ४४ ॥ भगवानुवाच ॥ एतच्छ्रु
त्वातुसासाध्वीगतासौस्वगृहेतथा ॥ पत्यौनिवेदयामासकृत्यंतेफलितंप्रभो ॥४५॥ अद्यरात्रौचतद्गेहंगन्तुंख्यातिंकरोतिसा॥प्रभूताःपतयस्तस्यास्तव

कालोनविद्यते ॥ ४६ ॥ विप्रउवाच ॥ कथंयास्यामितद्गेहंमयागन्तुंनशक्यते ॥ एतज्ज्ञात्वाकुतःक्षान्तिःकृतंकार्यंकथंभवेत् ॥ ४७ ॥ पतिव्र
तोवाच ॥ स्वपृष्ठस्थमहंकृत्वानेष्यामितद्गृहंप्रति ॥ सिद्ध्यर्थेनयिष्यामिपुनस्तेनैववर्त्मना ॥ ४८ ॥ द्विजउवाच ॥ कल्याणित्वत्कृतेनैवसर्वंमे
कृत्यमेष्यति ॥ इदानींयत्कृतंकर्मस्त्रीजनैरपिदुःसहम् ॥ ४९ ॥ भगवानुवाच ॥ तस्मिंश्चनगरेरम्येनित्यंचधनिनोगृहे ॥ चौरैश्चप्रचुरंवित्तंहृतंरा
ज्ञाश्रुतंतदा ॥ श्रुत्वासर्वान्निशाचारानाहूयनृपतीरुषा ॥ ५० ॥ नृपतिरुवाच॥जीवितुंयदिवोवाञ्छाचोरंममाद्यदास्यथ ॥ ५१ ॥ भगवानुवाच ॥
गृहीत्वातुनृपस्याज्ञांयत्तैर्जिघृक्षयाकुलैः ॥ चारैश्चोरोगृहीतस्तैर्बलाच्चैवनृपाज्ञया ॥ ५२ ॥ नगरोपान्तदेशेचवृक्षमूलेघनेवने ॥ समाधिस्थोमहा
तेजामाण्डव्योमुनिपुङ्गवः ॥ ५३ ॥ व्यतिष्ठद्वह्निसङ्काशोयोगिनांप्रवरोमुनिः ॥ अन्तर्नाडीगतोवायुःकिञ्चिन्नप्रतिभातिच ॥ ५४ ॥ तंब्रह्मतुल्यं
तिष्ठन्तंदृष्ट्वादुष्टामहामुनिम् ॥ चोरोऽयमद्भुताकारोधूर्तस्तिष्ठतिकानने ॥ ५५ ॥ एवमुक्त्वातुतंपापाबबन्धुर्मुनिसत्तमम् ॥ नोक्ताश्चनेक्षितास्तेन
पुरुषाअतिदारुणाः ॥ ५६ ॥ ततोराजाउवाचेदंसम्प्राप्तस्तस्करोमया ॥ उपान्तेचपथिद्वारेकुरुध्वंघोरदण्डनम् ॥ ५७ ॥ माण्डव्यश्चमुनि
स्तत्रपथिशूलेचकीलितः ॥ पायुदेशेचतैर्दत्तंशूलंयावच्चमस्तकम् ॥ ५८ ॥ व्यथांसचनजानातिशूलेविद्धतनुर्यमात् ॥ अन्यैरपिकृतोदण्डःकृ
तस्तैस्तुमनोहितः ॥ ५९ ॥ एतस्मिन्नन्तरेरात्रावन्धकारेघनोन्नते ॥ स्वपतिंपृष्ठतःकृत्वाप्रययौसापतिव्रता ॥ ६० ॥ माण्डव्यस्यतनौतत्रकुष्ठि
नोऽङ्गंललागतत् ॥ भग्नःसमाधिस्तस्यैवंकुष्ठिसंसर्गतोध्रुवम् ॥ ६१ ॥ माण्डव्यउवाच ॥ एवंयेनाधुनाकृच्छ्रंकारितंगात्रवेदनम् ॥ सएवभस्म
तांयातुप्रोदितेचविरोचने ॥ ६२ ॥ भगवानुवाच ॥ माण्डव्येनैवमुक्तस्सपपातधरणीतले ॥ ततःपतिव्रताचाहब्रध्नोनोदयतुध्रुवम् ॥ ६३ ॥
दिनत्रयंगृहंनीत्वाशापाद्भेशमगताततः ॥ शयनीयेस्थितंरम्येधृत्वाऽतिष्ठत्पतिव्रता ॥ ६४ ॥ शप्त्वातंचमुनिश्रेष्ठोगतोदेशमभीष्टकम् ॥ सूरोनोद
यतेलोकेयावच्चैवदिनत्रयम् ॥ ६५ ॥ निखिलंव्यथितंदृष्ट्वात्रैलोक्यंसचराचरम् ॥ शतक्रतुंपुरस्कृत्यगतादेवाःपितामहम् ॥ ६६ ॥ वृत्तंन्यवे
दयन्सर्वंपद्मयोनौदिवौकसः ॥ कारणंचनजानीमस्त्वंतुयोग्यंविधेहिनः ॥ ६७ ॥ पतिव्रतायायद्वृत्तंमाण्डव्यस्यमुनेश्चयत् ॥ यथानोदयतेब्रध्नो
धातादेवेष्ववेदयत् ॥ ६८ ॥ ततोदेवाविमानैश्चपुरस्कृत्यप्रजापतिम् ॥ गतास्तदन्तिकंविप्रतूर्णंसर्वेचभूतलम् ६९ ॥ तेषांश्रियाविमानानां
मुनीनांकिरणैस्तथा ॥ शतसूर्यमिवाभातिनान्यत्रचगृहोदरे ॥ ७० ॥ पतिव्रतोवाच ॥ हाहतास्मिकथंसूरोमद्गेहेसमुपस्थितः ॥ ७१ ॥ भगवानुवा
च ॥ अदृश्यन्ततयादेवाविमानैर्हंससन्निभैः ॥ एतस्मिन्नन्तरेब्रह्मातामुवाचपतिव्रताम् ॥ ७२ ॥ ब्रह्मोवाच ॥ अखिलानांचदेवानांद्विजानांचग

वांतथा ॥ यथैवनिधनंतेषांकथंतेपरिरोचते ॥ मातःक्रोधंत्यजस्वाद्यसूर्यस्योदयनंप्रति ॥ ७३ ॥ पतिव्रतोवाच ॥ सर्वलोकानतिक्रम्यपति
रेकोगुरुर्मम ॥ अस्यमृत्युर्मुनेश्शापादुदितेचविरोचने ॥ ७४ ॥ तेनैवकारणेनैषमयाशप्तोदिवाकरः ॥ नकोपान्नचमोहाच्चलोभात्कामान्नमत्सरात्
॥ ७५ ॥ ब्रह्मोवाच ॥ एकस्यनिधनेनैवत्रैलोक्यस्यहितंभवेत् ॥ ततस्तेचाधिकंपुण्यंमातरेवंभविष्यति ॥ ७६ ॥ साचोवाचविधिंतत्रदेवा
नामग्रतःसती ॥ पतिंत्यक्त्वाचमेसत्यंशिवंमेनानुरोचते ॥ ७७ ॥ ब्रह्मोवाच ॥ उदितेचखगेसौम्येपत्यौतेभस्मतांगते ॥ स्वस्थीभूतेचत्रैलोक्ये
करिष्यामिहितंतव ॥ ७८ ॥ भस्मनःपुरुषोभाव्यःकामदेवसमप्रभः ॥ गुणःसर्वैर्युतोभर्तारतिवत्त्वंचसर्वदा ॥ ७९ ॥ यथापूज्योहरिर्देवैर्यथाल
क्ष्मीश्चपूजिता ॥ तथैवदम्पतीस्वर्गेतस्मान्मद्वचनंकुरु ॥ ८० ॥ पतिव्रतोवाच ॥ पत्युर्मेनिधनेब्रह्मन्विधवालोकनिन्दिता ॥ कांस्तुलोका
न्गमिष्यामिभग्नाचारामलीमसा ॥ ८१ ॥ ब्रह्मोवाच ॥ अतस्तेनास्तिदोषोवैनमृतस्तेधवोऽधुना ॥ अस्माकंवचनेनैवकुष्ठीमन्मथतांव्रजेत् ॥
॥ ८२ ॥ भगवानुवाच ॥ वदत्येवंविधौसाचविमृश्यक्षणमेवच ॥ बाढमुक्तवतीसाचततस्सूर्योदयोऽभवत् ॥ ८३ ॥ अभवद्भस्मरूपोऽसौ
मुनिशापप्रपीडितः ॥ भस्मनोमध्यतोजातोद्विजोमन्मथपीडितः ॥ ८४ ॥ दृष्ट्वाविस्मयमापन्नाःसर्वेतपुरवासिनः ॥ मुदितादेवसङ्घाश्चजनः
स्वस्थतरोऽभवत् ॥ ८५ ॥ विमानेनार्कवर्णेनस्वर्लोकादागतेनच ॥ पतिनासहसासाध्वीसुरैःसार्द्धंगतादिवम् ॥ ८६ ॥ एवंपतिव्रतायस्माच्छुभाचै
वतुमत्समा ॥ तेनवृत्तंचजानातिभूतंभव्यंप्रवर्तनम् ॥ ८७ ॥ यइदंश्रावयेल्लोकेपुण्याख्यानमनुत्तमम् ॥ तस्यपापंक्षयंयातिजन्मजन्मकृतंचयत् ॥
॥ ८८ ॥ अक्षयंलभतेस्वर्गंविबुधैःसम्प्रयुज्यते ॥ ब्राह्मणोलभतेवेदंजन्मजंन्मसुवाडव ॥ ८९ ॥ सकृच्छृणोतियःपूतोदुष्कृतौघाद्विमुच्यते ॥
सुरालयमवाप्नोतिस्वर्गाद्भ्रष्टोधनीभवेत् ॥ ९० ॥ इतिश्रीपाद्मपुराणेसृष्टिखण्डेपतिव्रतोपाख्यानंनामत्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ द्विज
उवाच ॥ माण्डव्यस्यमुनेर्विष्णोशूलाघातःकथंतनौ ॥ पत्यौपतिव्रतायाश्चकथंकुष्ठंकलेवरे ॥ १ ॥ हरिरुवाच ॥ शिशुभावाच्चमाण्डव्यो
झिल्लिकायामभानतः ॥ वस्तिदेशेतृणंदत्त्वामोहात्सश्चमुमोचताम् ॥ २ ॥ तेनापचारदोषेणधर्मस्याज्ञातुरेवच ॥ अहोरात्रंव्यथाकृच्छ्राभुक्ता
तेनद्विजन्मना ॥ ३ ॥ किन्तुसमाधिनातेननज्ञातंशूलसम्भवम् ॥ कृच्छ्रंचमुनिनाकृत्स्नंयोगाभ्यासाद्भृशादपि ॥ ४ ॥ कुष्ठिनोब्रह्मणोघाताद
जितेन्द्रियकारणात् ॥ पूतिगन्धंतनौकुष्ठंसञ्जातंद्विजसत्तम ॥ ५ ॥ पुराविप्रायतेनैवदत्तंगौरीचतुष्टयम् ॥ कन्यकात्रितयंविप्रतेनतस्यपतिव्रता ॥
॥ ६ ॥ अस्यास्तुकारणादेवसचमत्समतांव्रजेत् ॥ अत्रतेविस्मयःकुत्रवेदकर्मपुरातनम् ॥ ७ ॥ द्विजउवाच ॥ कृत्यानारीनयस्यैवतस्यस्व

गोंभवेद्रूध्रुवम् ॥ यथैतच्चरितंनाथसर्वेषांशिवमिष्यते ॥ ८ ॥ हरिरुवाच ॥ सन्तिकृत्याःस्त्रियःकाश्चित्पुंसःसर्वस्वदस्यच ॥ तत्राप्यरक्षणी
यांचमनसापिनधारयेत् ॥ ९ ॥ नस्त्रीणामप्रियःकश्चित्प्रियोवापिनविद्यते ॥ गावस्तृणमिवारण्येप्रार्थयन्तिनवंनवम् ॥ १० ॥ पुमांसं
वित्तहीनंचविरूपंगुणवर्जितम् ॥ अकुलीनंचभृत्यंचकामिनीभजतेध्रुवम् ॥ ११ ॥ भर्तारंचगुणोपेतंकुलीनंचमहाधनम् ॥ सुन्दरंरतिदक्षंचत्यक्त्वा
नीचंभजेद्वधूः ॥ १२ ॥ उमानारदसंवादमाख्यानंविद्धिभूसुर ॥ येनविद्याःस्त्रियाश्चेष्टाविविधाःकृत्स्नशोद्विज ॥ १३ ॥ स्वभावान्नारदोविप्र
विश्वजिज्ञासकोमुनिः ॥ स्वान्तेविमृश्याथगतःकैलासंगिरिमुत्तमम् ॥ १४ ॥ वृषकेतुसदाख्यानसप्रतिष्ठेहिमेगिरौ ॥ प्रणिपत्यमहात्मावैपप्रच्छपा
र्वतींमुनिः ॥ १५ ॥ नारदउवाच ॥ देविसीमन्तिनीनांतुदुश्चेष्टांज्ञातुमुत्सहे ॥ कौतुकेनत्वयाचर्यावधूनांसम्प्रयुज्यते ॥ १६ ॥ सर्वासामपिनारी
णांस्वान्तंजानासितत्त्वतः ॥ तन्मांकथयसर्वेषुविनीतमज्ञमेवच ॥ १७ ॥ देव्युवाच ॥ युवतीनांसदाचित्तंपुंसुतिष्ठत्यसंशयम् ॥ अस्मिन्योनौसु
संयोग्येसङ्गतेवाप्यसङ्गते ॥१८॥ सुवेषंपुरुषंदृष्ट्वाभ्रातरंयदिवासुतम्॥योनिःक्लिद्यतिनारीणांसत्यंसत्यंहिनारद॥१९॥स्थानंनास्तिक्षणंनास्तिनास्तिप्रा
र्थयितानरः ॥ तेननारदनारीणांसतीत्वमुपजायते ॥ २० ॥ घृतकुम्भसमानारीतप्ताङ्गारसमःपुमान् ॥ तस्माद्घृतंचवह्निंचनैकस्थानेचधारयेत
॥ २१ ॥ यथैवमत्तमातङ्गंसृणिमुद्गरयोगतः ॥ स्ववशंकुरुतेयन्तातथास्त्रीणांप्ररक्षकः ॥२२॥ पितारक्षतिकौमारेभर्तारक्षतियौवने ॥ पुत्राश्चस्थाविरे
भावेनस्त्रीस्वातन्त्र्यमर्हति ॥ २३ ॥ ततःस्वातन्त्र्यभावाच्चस्वेच्छयाचनराङ्गना ॥ पुरुषेणार्थिताधीराप्रेरणादिचरीभवेत् ॥ २४ ॥ अरक्षणा
द्यथापाकःश्वकाकवशगोभवेत्॥ तथैवयुवतीनारीस्वच्छन्दाद्दुष्टतांव्रजेत् ॥ २५ ॥ पुनरेवकुलंदुष्टंतस्यास्संसर्गतोभवेत् ॥ परबीजेनयोजातःसचस्या
द्वर्णसङ्करः ॥ २६ ॥ जारजःसङ्करःपापोनरकेनियतंवसेत् ॥ कीटजातौगताजाताःपुनःसर्वेमहीतले ॥ २७ ॥ ततोम्लेच्छमुपानीतंकुलंस्याद्द्विजन
न्दन ॥ कुलक्षयोभवेद्यस्मात्तस्माद्दुष्टांनधारयेत् ॥ २८ ॥ ज्ञात्वैवयोपितांदोषंक्षमतेयोनराधमः ॥ सतिष्ठेन्निरयेघोरेरौरवेपितृभिःसह ॥ २९ ॥
काचित्पातयतेनारीकाचिदुद्धरतेकुलम् ॥ तस्मात्सर्वप्रयत्नेनकुलजामुद्वहेद्बुधः ॥ ३० ॥ कुलद्वयंसमानारीसमयित्वातुतिष्ठति ॥ साध्वीतारयते
वंशान्दुष्टापातयतिध्रुवम् ॥ ३१ ॥ दारेष्वधीनंस्वर्गंचकुलंपङ्कंयशोऽयशः ॥ पुत्रंदुहितरंमित्रंसंसारेकथयन्तिच ॥ ३२ ॥ तस्मादेकांद्वितीयांवावामा
मुद्वाहयेद्बुधः ॥ सन्तानार्थान्तुकामाच्चबहुदोपाश्रिताचसा ॥ ३३ ॥ रजस्वलांचवनितांनावगच्छतियःपतिः ॥ ब्रह्महाभ्रूणहासोऽपिदुर्गतिंचाधिगच्छ
ति ॥ ३४ ॥ योमोहाद्दुर्भगांकृत्वासाध्वींत्यजतिपापकृत् ॥ तस्यावधेनयत्पापंतद्भुक्त्वानरकंव्रजेत् ॥ ३५ ॥ परदारान्बलाद्धृत्वाधनैर्वासंप्रलो

भयेत् ॥ सयातिनरकंघोरंप्रेत्येहचकलत्रहा ॥ ३६ ॥वनिताहरणंकृत्वाचाण्डालकुलनांव्रजेत् ॥ तथैववनिताहानात्पतितोजायतेनरः ॥ ३७ ॥ रामां
विन्यस्यस्कन्धेचचिरंयमपुरेवसेत् ॥ मलमूत्रंशिरोदेशेनित्यंतस्यचसम्पतेत् ॥ ३८ ॥ एवंवर्षसहस्राणिभारंवहतिदुर्मतिः ॥ पुनर्यावन्तिलोमानि
तावत्सरौरवंव्रजेत् ॥ ३९ ॥ पुनःकीटेषुसन्तीर्णस्तदामानुषतांव्रजेत् ॥ ततश्चकलहंशोकंप्राप्नोतिपूर्वकल्मषात् ॥ ४० ॥ एवंजन्मत्रयंप्राप्यमुच्यते
पातकान्नरः ॥ तत्कालंनरकंभुक्त्वासातुकाकीतुवञ्चकी ॥ ४१ ॥ उच्छिष्टंनरकंभुक्त्वामानुषेविधवाभवेत्॥यःपुनश्चान्त्यजांगच्छेन्म्लेच्छांवापुल्कसां
नरः ॥ ४२ ॥ द्वित्रिचतुर्गुणंभुक्त्वातत्रसञ्जीर्णवञ्चकः ॥ मातरंगुरुभार्यांचब्राह्मणींमहिषींतथा ॥४३॥ अन्यांवाप्रभुपत्नींचगत्वायात्यपुनर्भवम् ॥ भगि
नींतत्पुत्रभार्यांतथादुहितरंस्नुषाम् ॥ ४४ ॥ पितृव्यांमातुलानींतुतथवचपितृष्वसाम् ॥ मातृष्वस्रादिकामन्यांगत्वानास्तिचनिष्कृतिः ॥ ४५ ॥
ब्रह्महासभवेदन्धोवचसाजडतांव्रजेत् ॥ कर्णयोर्वधिरोजातश्च्यवतेनास्तिनिष्कृतिः ॥ ४६ ॥ उक्त्वाअश्लीलमत्यर्थमखिलंस्त्रीकृतेनहि ॥ ४७ ॥
॥ द्विजउवाच ॥ एवंदुष्कृतमासाद्यकथंमोक्षोभवेत्पुनः ॥ तत्समाचक्ष्वभगवञ्श्रोतुमिच्छामितत्त्वतः ॥४८॥ श्रीभगवानुवाच ॥ तासांचगमनंकृत्वा
तप्तांलोहस्यपुत्तलीम् ॥ समालिङ्ग्यत्यजेत्प्राणंशुचिर्लोकान्तरंव्रजेत् ॥ ४९ ॥ योवैगृहाश्रमंत्यक्त्वामच्चित्तोजायतेनरः ॥ नित्यंस्मरतिगोविन्दं
सर्वपापक्षयोभवेत् ॥ ५० ॥ ब्रह्महत्यायुतंतेनकृतंगुर्वङ्गनागमात् ॥ शतंशतसहस्रंचषष्टीमद्यस्यभक्षणात् ॥ ५१ ॥ स्वर्णादेर्हरणंकृत्वातेषांसंसर्ग
कंचिरम् ॥ एतान्यन्यानिपापानिमहान्तिपातकानिच ॥ ५२ ॥ अग्निंप्राप्ययथातूलंतृणंशुष्कंप्रणश्यति ॥ तस्मान्मन्नामगोविन्दंस्मृत्वापूतोभवे
न्नरः ॥ ५३ ॥ योवागृहाश्रमेतिष्ठन्नित्यंगोविन्दघोषणम् ॥ कृत्वाचपूजयित्वाचसपापात्सन्तरोभवेत् ॥ ५४ ॥ भागीरथीतटेरम्येखगस्यग्रहणेशि
वे ॥ गवांकोटिप्रदानेनयत्फलंलभतेनरः ॥ ५५ ॥ तत्फलंसमवाप्नोतिसहस्रंचाधिकंचयत् ॥ गोविन्दकीर्तनेतातमत्पुरेचाक्षयंवसेत् ॥ ५६ ॥
कामात्सभवनेस्थित्वासार्वभौमोभवेन्नृपः ॥ पुराणेमत्कथांश्रुत्वामत्सादृश्यंलभेन्नरः ॥ ५७ ॥ कथयित्वापुराणंचविष्णुसायुज्यतांव्रजेत् ॥ तस्मा
न्नित्यंचश्रोतव्यंपुराणंधर्मसञ्चयम् ॥ ५८ ॥ श्रावितव्यंप्रयत्नेनलोकेविष्णुनतुंव्रजेत् ॥ अन्यद्वास्त्रीकृतेदोषेयथायोगंभवेद्ध्रुवम् ॥ ५९ ॥
निशामयप्रवक्ष्यामितत्त्वतोद्विजनन्दन ॥ सर्वबीजस्यदानेनसाम्बुकुम्भंमहाफलम् ॥ ६० ॥ दद्याद्विप्रायपुण्याहेसद्यःपूतोभवेत्क्षणात् ॥ सर्वधा
न्यादिकंबीजंकालेदद्याद्द्विजातये ॥ ६१ ॥ सर्वपापक्षयंकृत्वाअक्षयंस्वर्गमश्नुते ॥ गुणंवक्ष्यामिविप्रर्षेसतीनांयादृशंदृढम् ॥ ६२ ॥ शुद्धवंशोभवेत्त
स्यानित्यंलक्ष्मीःप्रवर्तते ॥उभयोर्वंशयोःस्वर्गोभर्तुरात्मनएवच ॥६३॥ पतिव्रतागुणोविप्रविस्मृतःपृच्छतस्तव ॥ पुनर्वक्ष्यामियोपाणांसर्वलोकं तं

शुभम् ॥ ६४ ॥ उषित्वापूर्वकालंचपुण्यापुण्येनयोषितः ॥ पश्चात्पतिव्रतायाश्वताश्वगच्छन्तिमद्गतिम् ॥ ६५ ॥ षण्मासंवाथवर्षंवाअविकंच
प्रशस्यते ॥ पतिव्रताभवेद्याचयावत्पूताव्रजेद्दिवम् ॥ ६६ ॥ सुरापंविप्रहन्तारंसर्वपापयुतंपतिम् ॥ पङ्कात्पूतंनयेत्स्वर्गंभर्त्तारंयानुगच्छति ॥ ६७ ॥
तिस्रःकोट्योऽर्धकोटींचयावल्लोमानिमानुषे ॥ तावत्कालंवसेत्स्वर्गेभर्तारंयानुगच्छति ॥ ६८ ॥ कन्दर्पसदृशोभर्तासारतीवमनोरमा ॥ जिष्णोरे
वचिरंलोकेभुङ्क्तेऽनन्तमयंसुखम् ॥ ६९ ॥ पतिव्रताबलाद्याचविदूरेस्वामिपातने ॥ चिह्नंलब्ध्वामृतावह्नौपापादुद्धरतेपतिम् ॥ ७० ॥ पति
व्रताचयानारीदेशान्तरमृतेपतौ ॥ साभर्तुश्चिह्नमादायवह्नौसुस्वादिवंव्रजेत् ॥ ७१ ॥ यास्त्रीब्राह्मणजातीयामृतंपतिमनुव्रजेत् ॥ सास्वर्गमात्मघाते
ननात्मानंनपतिंनयेत् ॥ ७२ ॥ नम्रियेतसमंगत्वाब्राह्मणीब्रह्मशासनात् ॥ प्रव्रज्यागतिमाप्नोतिमरणादात्मघातिनी ॥ ७३ ॥ ॥
॥ नरोत्तमउवाच ॥ सर्वासामपिजातीनांब्राह्मणःशस्यइष्यते ॥ पुण्यंचद्विजमुख्येनअत्रकिंवाविपर्ययः ॥ ७४ ॥ श्रीभगवानुवाच ॥
ब्राह्मण्यास्साहसंकर्मनैवयुक्तंकदाचन ॥ निःशेषेऽस्यावधंकृत्वासनरोब्रह्महाभवेत् ॥ ७५ ॥ तस्माद्ब्राह्मणजातीयाविप्रयाचव्रतंच
रेत् ॥ प्रवक्ष्यामियथातथ्यंशृणुविप्रयथार्थतः ॥ ७६ ॥ आपणान्तरमामिष्यंभक्षयेन्नकदाचन ॥ अश्वमेधसहस्राणांहायनेफलमाप्नुयात् ॥ ७७ ॥
अर्हणंचेष्टदेवस्यहरेर्व्रतमनुत्तमम् ॥ स्वामिनोऽपिजलंपिण्डंसम्प्रदद्यादमत्सरात् ॥ ७८ ॥ युगकोटिसहस्राणियुगकोटिशतानिच ॥ पतिनास
हसासाध्वीविष्णुलोकेयुताभवत् ॥ ७९ ॥ ततोमहाव्रतंप्राप्यनिरयेब्राह्मणीवधूः ॥ उद्धरेदुभयोर्वंशाञ्छतशोऽथसहस्रशः ॥ ८० ॥ अतोबन्धुज
नैरेवपुत्रैर्भ्रात्रादिभिर्बुधैः ॥ विनियम्यसदातस्याव्रतलोपंनकारयेत् ॥ ८१ ॥ हरेश्चेद्वासरंप्राप्यविधवानव्रतंचरेत् ॥ पुनर्वैधव्यमायातिजन्मजन्मनि
दुर्भगा ॥ ८२ ॥ भोजनान्मत्स्यमांसस्यव्रतानांविप्रयोगतः ॥ चिरंनिरयमासाद्यशुनीभवतिनिश्चितम् ॥ ८३ ॥ दुष्टायमैथुनंगच्छेद्विधवाकुलना
शिनी ॥ नरकाननुभूयाथगृध्रिणीदशजन्मसु ॥ ८४ ॥ द्विजन्मफेरवाभूत्वाततोमानुषतांव्रजेत् ॥ तथैवबालवैधव्यादासीत्वमुपगच्छति ॥ ८५ ॥
द्विजउवाच ॥ कन्यादानफलंब्रूहिवददास्याःफलंचयत् ॥ विधानंचयथोक्तंचयदिमेऽनुग्रहःप्रभो ॥ ८६ ॥ श्रीभगवानुवाच ॥ रूपाढ्येगुणसम्पन्नेकु
लीनेयौवनान्विते ॥ समृद्धेवित्तसम्पूर्णेकन्यादानफलंशृणु ॥ ८७ ॥ सर्वाभरणसंयुक्तांकन्यकांयोददातिच ॥ तेनदत्ताधरासर्वासशैलवनकानना ॥ ८८ ॥
अर्द्धाभरणदानेनफलंदातुर्भवेद्ध्रुवम् ॥ अनाभरणकन्यायाःपादैकस्यफलंभवेत् ॥ ८९ ॥ यःपुनःशुल्कमश्नातिसयातिनरकेनरः ॥ विक्रीयचात्मजां
मूढोनरकान्ननिवर्त्तते ॥ ९० ॥ लोभादसदृशेपुंसिकन्यांयस्तुप्रयच्छति ॥ रौरवंनरकंप्राप्यचाण्डालत्वंचगच्छति ॥ ९१ ॥ अतएवहिशुल्कंच

जामातुर्नकदाचन ॥ गृह्णातिमनसाप्राज्ञोयद्दत्तंतस्यचाक्षयम् ॥९२॥ भूमिंगांचहिरण्यंचधनंवस्त्रंचधान्यकम्॥जामातुर्यौतकंदत्त्वासवभवतिचाक्षयम ॥ ९३ ॥ विवाहसमयेवत्ससगोत्रपरगोत्रजैः ॥ यौतकंदीयतेकिंचित्तत्सवचाक्षयंभवेत् ॥ ९४ ॥ दातानस्मरतेदानंप्रतिग्राहीनयाचते ॥ उभौतौन रकंयातश्छिन्नरज्जुर्घटोयथा ॥ ९५ ॥ अवश्यंयौतकंदानंदातव्यंसात्त्विकेनहि ॥ अदत्त्वानरकंप्राप्यदासीत्वमुपगच्छति ॥९६॥ अत्यासन्नेऽतिदूर स्थेचात्याढ्येचातिदुर्गते॥कुलहीनेचमूर्खेचषट्सुकन्यानदीयते ॥९७॥ अतिवृद्धेचातिदीनेरोगिष्ठेदेशवासिनि॥अतिक्रुद्धेऽप्यसन्तुष्टेषट्सुकन्यानदीय ते॥ ९८ ॥ एतेभ्यःकन्यकांदत्त्वानरकंचाधिगच्छति ॥ लोभात्संमानलाभाच्चकन्यकापरिवर्तनात् ॥९९॥ मुनीनांप्रेयसींनारींयुवतींरूपशालिनीम् ॥ सालङ्कारांसशय्यांचदत्त्वाऽनन्तफलंलभेत् ॥ १०० ॥ अनयोश्चफलंतुल्यंयुवतीकन्ययोरपि ॥ एकावरायदातव्याअपराब्राह्मणायतु ॥ १ ॥ क्रीनादे वायदातव्याधीरेणाकष्टकर्मणा ॥ कल्पकालंभवेत्स्वर्गेनृपोवाकौमहाधनी ॥ २ ॥ प्रतिजन्मलभेतैषसुपत्नींवरवर्णिनीम् ॥ यइदंशृणुयान्नि त्यंपुण्याख्यानमनुत्तमम् ॥ ३ ॥ सर्वपापक्षयस्तस्यसर्वशास्त्रार्थपारगः ॥ लभेतसोऽक्षयंस्वर्गंनारीणांवल्लभोभवेत् ॥ ४ ॥ क्षत्रियोविजयीचा थलोकनाथोभवेद्ध्रुवम् ॥ श्रुतंहरतिपापानिजन्मजन्मकृतानिच ॥ सौभाग्यंलभतेलोकेतथवचवराङ्गनाः ॥१०५॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टि खण्डेपञ्चाख्यानेस्त्रीणामाख्यानंनामचतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ द्विजउवाच ॥ तुलाधारस्यचरितंप्रभावमतुलंप्रभो ॥ वक्तुमर्हस्यशेषेणयदि मय्यस्त्यनुग्रहः ॥ १ ॥ भगवानुवाच ॥ सत्यभावादलोभाच्चदयाद्योवैत्वमत्सरात् ॥ नित्यंयज्ञशतंतस्यसुनिष्पन्नंसुदक्षिणम् ॥ २ ॥ सत्येनोदयते सूरोवातिवातस्तथैवच ॥ नसिन्धुर्लङ्घयेद्वेलांधत्तेकूर्मोधरांतथा ॥ ३ ॥ सत्येनलोकास्तिष्ठन्तिसर्वेचवसुधाधराः ॥ सत्याद्भ्रष्टोऽथयःसत्त्वोऽप्यधो वासीभवेद्ध्रुवम् ॥४॥ सत्यवाचिरतोयस्तुसत्यकार्यरतःसदा ॥ सशरीरेणस्वर्लोकमागत्याच्युततांव्रजेत् ॥ ५ ॥ सत्येनमुनयःसर्वेमांचगत्वास्थिरा स्स्थिताः ॥ सत्याद्युधिष्ठिरोराजासशरीरोदिवंगतः ॥ ६ ॥ सर्वशत्रुगणंजित्वालोकोधर्मेणपालितः ॥ अकरोच्चमखंशुद्धंराजसूयंसुदुर्लभम् ॥ ७ ॥ चतुरशीतिसहस्राणिब्राह्मणानांचनित्यशः ॥ भोजयेद्रुक्मपात्रेषुराजोपकरणेषुच ॥ ८ ॥ भोजयित्वोपकरणांस्तेभ्योदत्त्वाविसर्जयेत् ॥ यदभीष्टंद्वि जातीनामतोऽन्यद्दापयेद्धनम् ॥ ९ ॥ अदरिद्रंततोज्ञात्वाद्विजव्यूहंपरित्यजेत् ॥ तथैवस्नातकानांतुसहस्राणितुषोडश ॥ १० ॥ नित्यंसम्भोजयेद्रा जासत्येनैवविमत्सरः ॥ अतिष्ठंस्तेगृहेपूर्वंचिरंतस्यजिगीषया ॥ ११ ॥ जितंतेनजगत्सर्वंप्राणानुग्रहकारणात् ॥ सत्येनचासुरोराजाबलिरिन्द्रोभ विष्यति ॥ १२ ॥ पातालस्थस्यतस्यैवभूयस्तिष्ठामिवेश्मनि ॥ निरन्तरंचतिष्ठामिस्वान्तेपुण्यैककर्मणः ॥ १३ ॥ यद्वापुरामयाबद्धोदैत्ययो

नेर्विमोक्षणात् ॥ तलंचैवामरत्वंहिशक्रत्वंप्रददाम्यहम् ॥ १४ ॥ हरिश्चन्द्रोनृपस्सत्यात्सवाहनपरिच्छदः ॥ स्वशरीरेणशुद्धेनसत्यलोकेप्रतिष्ठि
तः ॥ १५ ॥ राजानोबहवश्चान्येयेचसिद्धामहर्षयः ॥ ज्ञानिनोयतयश्चैवसर्वेसत्येऽच्युताभवन् ॥ १६ ॥ तस्मात्सत्यरतोलोकेसंसारोद्धरणक्षमः॥
तुलाधारोमहात्मावैसत्यवाक्येप्रतिष्ठितः ॥ १७ ॥ लोकेतत्सदृशोनास्तिसत्यवाक्यस्यकारणात् ॥ अश्वमेधसहस्रेणसत्यंतुतुलयाधृतम् ॥
॥ १८ ॥ अश्वमेधसहस्राद्धिसत्यमेवविशिष्यते ॥ सर्वसत्याद्भवेत्साध्यंसत्योहिदुरतिक्रमः ॥ १९ ॥ सत्यवाक्येनसाधेनुर्बहुलास्वर्गगामिनी ॥
सर्वराष्ट्रंसमाधायपुनरावृत्तिदुर्लभा ॥२०॥ तथायंसर्वदासाक्षीमृषानास्तिकदाचन ॥ बह्वर्घमल्पमर्घंचक्रयविक्रयणेसुधीः ॥ २१ ॥ सत्यवाक्यं
प्रशस्तंचविशेषात्साक्षिणोभवेत् ॥ साक्षिणःसत्यमुक्त्वाचअक्षयंस्वर्गमाययुः ॥ २२ ॥ वावदूकःसभांप्राप्यसत्यंवदतिवाक्पतिः ॥ सया
तिब्रह्मणोगेहंयज्ञैरन्यैश्चदुर्लभम् ॥ २३ ॥ सभायांयोवदेत्सत्यमश्वमेधफलंलभेत् ॥ लोभाद्द्वेषान्मृषोक्त्वाचरौरवनरकंव्रजेत् ॥ २४ ॥ सर्वसाक्षी
तुलाधारोजनानांशूरएवच ॥ विशेषाल्लोभसन्त्यागान्नाकेनिर्जरतांव्रजेत् ॥ २५ ॥ कश्चिच्छूद्रोमहाभागोनलोभेवर्ततेक्वचित् ॥ वृत्तिश्शाकेनदुःखे
नतथाशिलोञ्छतोभृशम् ॥२६॥ जर्जरंवस्त्रयुग्मंचकटौगात्रेचसर्वदा॥सदापिलोभविरहोनपरस्वंगृहीतवान् ॥ २७ ॥ तस्यजिज्ञासयैवाहंगृहीत्वावस्त्र
युग्मकम् ॥ अवकोटेनदीतीरेस्थितस्संस्थाप्यसादरम् ॥ २८ ॥ सदृष्ट्वावस्त्रयुग्मंतत्रलोभेकुरुतेमनः ॥ इतरस्यपरिज्ञायतत्क्षान्त्यास्वगृहंययौ
॥ २९ ॥ ततोविंचिन्तयित्वातुह्रदास्वल्पमितिद्विज ॥ उदुम्बरंहेमगर्भंमयातत्रैवपातितम् ॥ ३० ॥ कीकटेचनदीतीरेविकोणेजनवर्जिते ॥ तस्यया
तस्यदेशेतुदृष्टंतेनतदद्भुतम् ॥ ३१ ॥ अलंविधानमेतत्तुकृत्रिमंचोपलक्ष्यत ॥ ग्रहणेवाधुनाचास्यअलोभंनष्टमेवमे ॥ ३२ ॥ अस्यैवरक्षणेकष्टमहङ्का
रपदंत्विदम् ॥ यतोलोभस्ततोलाभोलाभाल्लोभःप्रवर्तते ॥ ३३ ॥ लोभग्रस्तस्यपुंसश्चशाश्वतोनिरयोभवेत् ॥ यदिनोविगुणंवित्तंयदावेश्मनितिष्ठति
॥ ३४ ॥ तदामेदारपुत्राणामुन्मादोह्युपपद्यते ॥ उन्मादात्कामसञ्जातविकारान्मतिविभ्रमः ॥ ३५ ॥ भ्रमान्मोहोऽप्यहङ्कारःक्रोधलोभावतःपरम् ॥
एषांप्रचुरभावाच्चतपःक्षयंगमिष्यति ॥ ३६ ॥ क्षीणेतपसिवर्तन्तेपङ्काश्चित्तप्रमोहकाः ॥ तैश्चशृङ्खलयोगैश्चबद्धोनवोद्धर्तिंव्रजेत् ॥ ३७ ॥ एतद्वि
मृश्यशूद्रोऽसौपरित्यज्यगृहंगतः ॥ स्वस्थादेवामुदातत्रसाधुसाध्वितिचाब्रुवन् ॥ ३८ ॥ निर्ग्रन्थिरूपमादायतस्यान्तिकगृहंतथा ॥ गत्वाहंदैवसंवाद
मवदंभूतवर्तनम् ॥ ३९ ॥ ततोऽभ्यासप्रसङ्गाच्चजनानांचपरिप्लवात् ॥ तस्ययोषातदागत्यपप्रच्छदैवकारणम्॥४०॥ ततोऽहमवदंतस्ययद्वाचेतोगतंद्वु
तम् ॥ निभृतोऽथनिनादस्यकारणंकथितंमया ॥ ४१ ॥ ह्रद्गतंपतिनातेऽद्यविधिनादत्तमज्ञवत् ॥ परित्यक्तंमहाभागेपुनर्नास्तीहतेवसु॥४२ ॥ याव

जीवतिदौर्विध्यंतस्यभोक्तानसंशयः ॥ गच्छमातर्गृहंशून्यमलब्धंतत्प्रपृच्छतम् ॥ ४३ ॥ श्रुत्वातद्वैशिवंसाचवचनंपत्युरन्तिके ॥ गत्वाप्रोवाचदुर्वृ
त्तंतच्छ्रुत्वाविस्मयंगतः ॥ ४४ ॥ सविचिन्त्यतयासार्धमागतोऽसौममान्तिकम् ॥ निभृतंमामुवाचेदंक्षपणत्वंचकीर्तय ॥ ४५ ॥ क्षपणकउवाच ॥
चाक्षुषंचिरसंशुद्धंहेलयातृणवत्कथम् ॥ त्वयात्यक्तंयतस्तातनास्तिभाग्यमकण्टकम् ॥ ४६ ॥ ऐश्वर्यमतुलंशौर्यंशीर्यतेभावुकंपुनः ॥ स्वबन्धूनांम
हद्दुःखमाजन्ममरणान्तिकम्॥४७॥द्रक्ष्यसेचात्मनानित्यंमृतानांयागतिर्ध्रुवम्॥ तस्मात्तद्गृह्यतांतूर्णंभुंङ्क्ष्वभोग्यमकण्टकम् ॥ ऐश्वर्यमतुलंशौर्यंलोक
नांविस्मयंवरम् ॥ ४८ ॥ शूद्रउवाच ॥ नमेवित्तेस्पृहाचास्तिधनंसंसारवागुरा ॥ तद्विधौपतितोमर्त्योनपुनर्मोक्षकंव्रजेत् ॥४९ ॥ शृणुवित्तस्ययद्दोष
मिहलोकेपरत्रच ॥ भयंचोराच्चज्ञातिभ्योराजभ्यस्तस्करादपि ॥ ५० ॥ सर्वेजिघांसवोमर्त्याःपशुमत्स्यविविष्किराः ॥ तथाधनवतांनित्यंकथमर्था
स्सुखावहाः ॥ ५१ ॥ प्राणस्यान्तकरोह्यर्थस्साधको दुरितस्यच ॥ कालादीनांप्रियंगेहंनिदानंदुर्गतेःपरम् ॥ ५२ ॥ क्षपणकउवाच ॥ यस्यार्थास्त
स्यमित्राणियस्यार्थास्तस्यबान्धवाः ॥ कुलंशीलंचपाण्डित्यंरूपभोग्यंयशःसुखम् ॥ ५३ ॥ धनेनतुविहीनस्यपुत्रदारोज्झितस्यच ॥ कथंमित्रंकथं
धर्मोदीनानांजन्मनःकथम् ॥५४॥ सत्त्वादिक्रतुकायचपुष्करिण्युपकारकम् ॥ दानंनाकस्यसोपानंनिःस्वस्यचनसिद्ध्यति ॥५५॥ व्रतकार्यस्यरक्षा
चधर्मादिश्रवणंभृशम् ॥ पितृयज्ञादितीर्थंचनिर्वित्तस्यनसिद्ध्यति ॥ ५६ ॥ तथारोगंप्रतीकारःपथ्यमौषधसञ्चयः ॥ रक्षणंविग्रहस्यैवशत्रूणांविजयोध्रु
वम् ॥ ५७ ॥ स्त्रीणांचजन्मनावार्तावसुयोगेनलभ्यते ॥ भूतभव्यप्रवृत्तानांसुकृतंदुष्कृतंचयत् ॥ ५८ ॥ तस्माद्गृहधनंयस्यतस्यभोग्यंयदृच्छया ॥
स्वर्गवितरणादेवलप्स्यसेह्यचिरादितः ॥ ५९॥ शूद्रउवाच ॥ अकामाच्चव्रतंसर्वमक्रोधात्तीर्थसेवनम् ॥दयाजप्यसमाशुद्धंसन्तोषोधनमेवच ॥ ६० ॥
अहिंसापरमासिद्धिःशिलोञ्छवृत्तिरुत्तमा ॥शाकाहारःसुधातुल्यउपवासःपरन्तप ॥६१॥ सन्तोषोमेमहाभोग्यंमहादानंवराटकम् ॥मातृवत्परदाराश्च
परद्रव्याणिलोष्टवत्॥ ६२॥ परदाराभुजङ्गाभाःसर्वेयज्ञाइदंमम ॥ तस्मादेनंनगृह्णामिसत्यंसत्यंगुणाकर ॥ ६३ ॥ प्रक्षालनाद्धिपङ्कस्यदूरादस्पर्शनंव
रम् ॥ ६४॥ भगवानुवाच॥इत्युक्तेतुनरश्रेष्ठपुष्पवर्षंपपातह ॥ मूर्ध्निदंशेतनौतस्यसर्वदेवैरितंद्विज ॥६५ ॥ देवदुन्दुभयोनेदुर्नृत्यन्त्यप्सरसांगणाः ॥
जगुर्गन्धर्वपतयोविमानंचापतद्दिवः ॥६६॥ ऊचुर्देवगणास्तत्रविमानमिदमारुह॥सत्यलोकंसमासाद्यभुङ्क्ष्वभोग्यंमहेन्द्रवत्॥६७॥सङ्ख्यातेनापिव
र्तितंभोग्यकालस्यधार्मिक॥इत्युक्तेषुचदेवेषुशूद्रोवचनमब्रवीत्॥६८॥शूद्रउवाच॥कथंनिर्ग्रन्थकस्यास्यज्ञानंचेष्टास्यभाषणम् ॥किंवाहरिहरौब्रह्माकिंवा
शक्रोबृहस्पतिः॥६९॥किंवामच्छलनार्थायसाक्षाद्धर्मइहागतः॥७०॥श्रीभगवानुवाच॥इत्युक्तेक्षपणश्चासौस्मितोवचनमब्रवीत्॥७१॥क्षपणकउवाच ॥

विज्ञातुंचैववोधर्ममहंविष्णुरिहागतः ॥ विमानेनदिवंगच्छसकुटुम्बोमहामुने ॥ ७२ ॥ मत्प्रसादाच्चयुष्माकंसदैवनवयौवनम् ॥ भविष्यतिमहाप्राज्ञ
भाग्यानन्त्यंप्रलप्स्यथ ॥ ७३ ॥श्रीभगवानुवाच॥दिव्याभरणसंयुक्तादिव्यवस्त्रोपशोभिताः ॥ गतास्तेसहसानाकंसर्वैर्बन्धुजनैर्वृताः ॥७४॥ एवंद्विज
वरश्रेष्ठलोभत्यागाद्ययुर्दिवम् ॥ तुलाधारस्तथाधीमान्सत्यधर्मप्रतिष्ठितः ॥ ७५ ॥ येनजानातितद्वृत्तंदेशान्तरसमुद्भवम् ॥ तुलाधारसमोनास्तिसु
रलोकेप्रतिष्ठितः ॥ तस्मात्त्वमपिभूदेवसमंगत्वादिवंव्रज ॥ ७६ ॥ यइदंशृणुयान्मर्त्यःसर्वधर्मप्रतिष्ठितः ॥ जन्मजन्मार्जितंपापंतत्क्षणात्तस्यनश्यति
॥ ७७ ॥ सकृत्पठनमात्रेणसर्वयज्ञफलंलभेत् ॥ लोकानांपुरतोविप्रदेवानामर्च्यतांव्रजेत् ॥ ७८ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेशूद्रस्या
लोभाख्यानंनामपञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ श्रीभगवानुवाच ॥ अद्रोहकस्यचाख्यातोमहिमालोकदुःसहः ॥ एकतल्पगतांवा
मांक्षान्त्वासर्वजितोऽभवत् ॥ १ ॥ ज्ञानिनामपिदुःसाध्यंमुनीनांब्रह्मचारिणाम् ॥ सुरासुरमनुष्याणांविषमंतत्समंगतः ॥ २ ॥ स्वभावाद्विषमंकामं
जेतुंकःपुरुषःक्षमः ॥ अद्रोहकमृतेविप्रसएवभवजित्पुमान् ॥ ३ ॥ अहल्याहरणादेवसुरेशस्यभगाङ्कता ॥ पुनर्देव्याःप्रसादाच्चसहस्राक्षेतिवि
श्रुतः ॥ ४ ॥ विदितंसर्वलोकेचत्रैलोक्येसचराचरे ॥ ५ ॥ द्विजउवाच ॥ कथंचदेवदेवस्यअहल्याहरणंप्रभो ॥ भगाङ्कत्वंचसम्प्राप्यसहस्राक्षःसु
राधिपः ॥६ ॥नगाङ्कोऽपिभगाङ्कत्वंसम्प्राप्तस्सुरराट्कथम् ॥ दुःश्रुतंसुरवैकल्यश्रोतुमिच्छामितत्त्वतः ॥ ७ ॥ श्रीभगवानुवाच ॥ पुरास्वान्तोद्भवांक
न्यांलोकेशश्चमहामनाः ॥ गौतमायददौधातालोकपालाग्रतोमुदा ॥ ८ ॥ ततस्तुलोकपालानांमन्मथाविष्टचेतसाम् ॥ शचीपतेस्तुसंमोहोहृदि
शल्यइवस्थितः ॥ ९ ॥लोकपालानतिक्रम्यसुवेपावरवर्णिनी ॥ द्विजायरत्नभूतैषादत्ताकिंवाकरोम्यहम् ॥ १० ॥ इतिसञ्चिन्त्यतस्यास्तुवर्तमानेच
यौवने ॥ पुनश्चमाययादृष्टंरूपंतस्यास्सुशोभनम् ॥ ११ ॥ पुनश्चिन्तयमानोऽसौगौतमाध्यासनंगतः ॥ पश्चात्तुतस्यगमनाद्यद्वृत्तंतच्छृणुष्वमे॥१२॥
एकदागौतमःस्नातुंगतोऽसौपुष्करंप्रति ॥ साध्वीचगृहशौचेचगृहवस्तुनितत्परा ॥ १३ ॥ प्रवृत्तादेववास्तूनांबलिंकर्तुंचतत्परा ॥ इन्धनंवह्निकार्यंच
नित्यकर्मावुसञ्चयम् ॥ १४ ॥ एतस्मिन्नन्तरेशक्रोमुनेस्तस्यमहात्मनः ॥ रूपमास्थायगात्रेणप्रविवेशोटजंमुदा ॥ १५ ॥ पतिव्रतापतिंदृष्ट्वाश्रद्धया
परयासती ॥ देवस्थानेचवस्तूनांसञ्चयंकर्तुमुद्यता ॥ १६ ॥ ततस्तामब्रवीदार्तोमुनिवेषधरोहरिः ॥ १७ ॥ इन्द्रउवाच ॥ प्रद्युम्नवशगोवामेदेहिमेचु
म्बनादिकम् ॥ १८ ॥ श्रीभगवानुवाच ॥ एतस्मिन्नन्तरेसाचत्रपायुक्ताब्रवीद्वचः ॥१९॥ अहल्योवाच ॥ देवकार्यादिकंत्यक्त्वावक्तुंनार्हसिमेप्रभो ॥
सर्वंजानासिधर्मज्ञपुण्यानांनिश्चयंमुने ॥ २० ॥ अयमर्थोहिवेलायामधुनैवनयुज्यते ॥ २१ ॥ श्रीभगवानुवाच ॥ ततस्तांचारुसर्वाङ्गींदृष्ट्वामन्मथ

पीडितः ॥ २२ ॥ इन्द्रउवाच ॥ अलंप्रियेनवक्तव्यंहृच्छयोमेप्रजायते ॥ कर्तव्यंचाप्यकर्तव्यंपत्युर्वचनसंमतम् ॥ २३ ॥ करोतिसततंयाचसा
चनारीपतिव्रता ॥ लङ्घयेद्याचतस्याज्ञांसुरतेचविशेषतः ॥ पुण्यंतस्याभवेन्नष्टंदुर्गतिंचाधिगच्छति ॥ २४ ॥ श्रीभगवानुवाच ॥ साब्रवीद्देववस्तूनि
सन्तिदेवार्थतोमुने ॥ नित्यकर्माणिचान्यानिकिंवातेषुविपर्ययः ॥ २५ ॥ सचोवाचसतींतत्रदेह्यालिङ्गादिकंमम ॥ मनसाभयमुत्सृज्यमयादत्ता
नितानिच ॥ २६ ॥ इत्युक्त्वातांपरिष्वज्यकृतस्तेनमनोरथः ॥ एतस्मिन्नन्तरेविप्रमुनेर्हृद्यासकल्मषम् ॥२७ ॥ ततोध्यानंसमारभ्याजानाद्वृत्तंशची
पतेः ॥ तूर्णमेवद्वारदेशेगत्वाचसमुपस्थितः ॥ २८ ॥ शक्रोमुनिंतुसंलक्ष्यचौतुदेहंविवेशह ॥ गच्छतोवृषदंशस्यपद्धतौप्रचचालह ॥ २९ ॥
मुनिस्तत्रावदत्तंवैकस्त्वंमार्जाररूपधृक् ॥ भयात्तस्यमुनेरग्रेशक्रःप्राञ्जलिरास्थितः ॥ ३० ॥ मघवन्तंपुरोदृष्ट्वाचुकोपमुनिपुङ्गवः ॥ ३१ ॥ मुनि
रुवाच ॥ यत्त्वयाचेदृशंकर्मभगार्थंछलसाहसम् ॥ कृतंतस्मात्तवाङ्गेषुसहस्रभगमुत्तमम् ॥ ३२ ॥ भवत्विहतुपापिष्ठलिङ्गंतेनिपतिष्यति ॥ गच्छमे
पुरतोमूढसुरस्थानंदिवौकसः ॥ ३३ ॥ पश्यन्तिमुनिशार्दूलानराःसिद्धास्सहोरगाः ॥ ३४ ॥ श्रीभगवानुवाच ॥ एवमुक्त्वामुनिश्रेष्ठोरुदन्तींतांपति
व्रताम् ॥ पप्रच्छकिमिदानींतेकर्मदारुणमागतम् ॥ इत्युक्तावेपमानासाभीतापतिमुवाचह ॥ ३५ ॥ अहल्योवाच ॥ अज्ञानाद्यत्कृतंकर्मक्षन्तुमर्हसिवै
प्रभो ॥ ३६ ॥ मुनिरुवाच ॥ परेणाभिगतासित्वममेध्यापापचारिणी ॥ अस्थिचर्मसमाविष्टानिर्मांसानखवर्जिता ॥ चिरंस्थास्यसिचैकापित्वां
पश्यन्तुजनाःस्त्रियः ॥ ३७ ॥ श्रीभगवानुवाच ॥ दुःखितातमुवाचेदंशापस्यान्तोविधीयताम् ॥ इत्युक्तेकरुणाविष्टोमन्युनापिपरिप्लुतः ॥ ३८ ॥
जगादगौतमोवाक्यंरामोदाशरथिर्यदा ॥ वनमभ्यागतोविष्णुःसविश्वामित्रलक्ष्मणः ॥ ३९ ॥ दृष्ट्वात्वांदुःखितांशुष्कांनिर्देहांपथिसंस्थिताम् ॥
गदिष्यतिचवैरामःकौशिकस्याग्रतोहसन् ॥ ४० ॥ किमियंशुष्करूपाचप्रतिमास्थिमयीशुभा ॥ नदृष्टंमेपुराब्रह्मन्रूपंलोकविपर्ययम् ॥४१॥ ततोरामं
महाभागंविष्णुंमानुषविग्रहम् ॥ यद्वृत्तमासीत्पूर्वंतत्कौशिकःकथयिष्यति ॥ ४२ ॥ कौशिकस्यवचःश्रुत्वारामोवक्ष्यतिधर्मवित् ॥ अस्यादोषोनचै
वास्तिदोषोऽयंपाकशासने ॥ ४३ ॥ एवमुक्तेतुरामेणत्यक्त्वारूपंजुगुप्सितम् ॥ दिव्यंरूपंसमास्थायमद्गृहंचागमिष्यसि ॥ ४४ ॥ शप्त्वातु
गौतमस्तांहितपस्तप्तुंगतोवनम् ॥ ततोऽत्यन्तंशुष्करूपातथैवपथिसंस्थिता ॥४५ ॥ रामस्यवचनादेवगौतमंपुनरागता ॥ गौतमोऽपितयासार्द्धम
द्येवंदिवितिष्ठति ॥ ४६ ॥ इन्द्रोऽपित्रपयायुक्तःस्थितश्चान्तर्जलेचिरम् ॥ स्थित्वाचान्तर्जलेदेवीमस्तौदिन्द्राक्षिसंज्ञिताम् ॥ ४७ ॥ सुप्रसन्नाततोदेवी
स्तोत्रेणपरितोषिता ॥ गत्वोवाचततःसाचवरोऽस्मत्तोविगृह्यताम् ॥ ४८ ॥ ततोदेवीमुवाचेदंशक्रःपरपुरञ्जयः ॥ ४९ ॥ शक्रउवाच ॥

त्वत्प्रसादाच्चमेदेविवैरूप्यंमुनिशापजम्॥नश्येच्चदेवराज्यंचलभेऽहंतुपुरायथा ॥५०॥ श्रीभगवानुवाच ॥ तमुवाचततोदेवीपापंतन्मुनिशापजम्॥हन्तुं
ब्रह्मादयोदेवाश्शक्तानाहंसुरेश्वर ॥५१॥ किंतुबुद्धिंसृजाम्यद्ययेनलोकैर्नलक्ष्यते ॥ योनिमध्यगतंदृष्टिसहस्रंतेभविष्यति ॥५२॥ सहस्राक्षइतिख्यातस्सु
रराज्यंकरिष्यसि ॥.मेषाण्डंतवशिश्नंचभविष्यतिचमद्वरात् ॥५३॥ इत्युक्त्वासाजगन्मातातत्रैवान्तरधीयत ॥ शक्रोदेववरैःपूज्योह्यद्यापिदिविवर्तते
॥५४॥ इन्द्रस्यैतादृशीकामादवस्थाद्विजसत्तम ॥ ५५ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेअहल्याहरणंनामषट्पञ्चाशत्तमोऽध्यायः ॥५६॥ श्रीभग
वानुवाच ॥ अपरंचप्रवक्ष्यामिकामेनाधिष्ठितस्यच ॥ पुराभागीरथीतीरेद्विजःपरमहंसकः ॥१॥ उपदेष्टासहस्राणांद्विजानांशान्तिदःपरः ॥ एकदण्ड
धरःसाक्षात्कूर्मवद्धरणीस्थितः ॥२॥ एकाकिनःसतस्तस्यदेवागारेविनिष्कृते ॥ पत्युर्गृहात्परंगेहंगन्तुंसायंसमुद्यता ॥३॥ अकस्माद्युवतीनारीमिलि
तारूपधारिणी॥दृष्ट्वातांभगवान्विप्रोमन्मथस्यभयार्दितः ॥४॥ अगारजठरेकृत्वासचैनांप्राक्षिपत्क्षपाम् ॥ अर्गलंसादृढंकृत्वादेवागारेसुशोभने ॥५॥
कदाचिदपितंद्वारादागन्तुंनददातिह ॥ एवंभूतःसमाधिस्थःक्षपांक्षिप्त्वाविलप्यसः ॥६॥ चिन्तयंस्तांवरारोहांद्वारिकिंवाकृतंमम ॥ एवंसञ्चिन्त्यतामाह
द्वारंदेहीहनःप्रिये ॥ ७ ॥ पतिश्चवशगःकान्तेदयितस्तेभविष्यति ॥ ततस्तंप्राहसाविप्रंवृद्धंकामप्रलालसम् ॥ ८ ॥ नार्युवाच॥अनन्वितागिर
स्तातवक्तुंत्वंनार्हसिप्रभो ॥ ९ ॥ श्रीभगवानुवाच ॥ अथासौभगवान्प्राहप्रचुरंचास्तिंमेवसु ॥ तवदास्यामिकल्याणिप्रस्फोटयकपाटिकाम् ॥ १० ॥
विप्रमाहपुनःसाचत्वंवैमेधर्मतःपिता ॥ मागच्छपुत्रिकांमांचपरयोषांचधार्मिक ॥ ११ ॥ मनसाससमालोच्यसुषिरेणपथागृहान् ॥ बाहुनो
द्घाटयतेनैवगन्तुंचैवसमुद्यतः ॥ १२ ॥ गच्छतश्चार्द्धमररउत्तमाङ्गंसुसङ्कटे ॥ प्रविष्टंनपुनश्चैतिपञ्चत्वमगमत्तदा ॥ १३ ॥ उषःकाले
समायातारक्षिणोयेचकिङ्कराः ॥ अद्भुतंतंशवंदृष्ट्वातामूचुस्तेचविस्मिताः ॥ १४ ॥ रक्षिणऊचुः ॥ कथंचनिधनंत्वस्यसम्भूतंब्रूहिसुन्दरि
॥ १५ ॥ श्रीभगवानुवाच ॥ कथयित्वातुतद्वृत्तमभीष्टंदेशमागता ॥ एवंकामस्यमहिमादुर्निवारोजनेषुच ॥ १६ ॥ सर्वेषामपिज
न्तूनांसुरासुरनृणांभवेत् ॥ दृष्ट्वाऽमोघांवरारोहांसर्वलोकपितामहः ॥ १७ ॥ च्युतबीजोऽभवत्तत्रलौहित्यसम्भवःस्मृतः ॥ पुनातिसकलाल्लोकान्स
र्वतीर्थमयोहिसः ॥ १८ ॥ यमाश्रित्यनरोयातिब्रह्मलोकमनामयम् ॥ १९ ॥ द्विजउवाच ॥ ॥ कथंचब्रह्मणोमोहोह्यमोघाकावराङ्गना ॥ उद्भ
वंतीर्थराजस्यश्रोतुमिच्छामितत्त्वतः ॥ २० ॥ श्रीभगवानुवाच ॥ मुनिर्देवैःसमाराध्यःपद्मयोनिसमप्रभः ॥ शन्तनुश्चेतिविख्यातःपत्नीतस्यपतिव्र
ता ॥ २१ ॥ अमोघेतिसमाख्यातारूपयौवनशालिनी ॥ अस्याश्चपतिमन्वेष्टुंयातोब्रह्माचतद्गृहम् ॥ २२ ॥ तस्मिन्कालेमुनिश्रेष्ठःपुष्पार्घ्यार्थं

वनंगतः ॥ सातंदृष्ट्वासुरश्रेष्ठमर्घ्यपाद्यादिकंददौ ॥ २३ ॥ दूरेऽभिवादनंकृत्वासागृहंप्रविवेशह ॥ तांचदृष्ट्वाऽनवद्याङ्गींधाताकामवशंगतः ॥ २४ ॥ स्वद्यात्मानंसमाधायाचिन्तयत्तांपुरोगताम् ॥ बीजंपपातखट्वायांब्रह्मणःपरमात्मनः ॥ २५ ॥ ततोब्रह्मागतस्त्रस्तस्त्वरयापरिपीडितः ॥ अथायातो मुनिर्गेहंशुक्रंपीठेददर्शह ॥ २६ ॥ तामपृच्छद्वरारोहांकश्चाप्यत्रागतःपुमान् ॥ तमुवाचनतोऽमोघाब्रह्मात्रागतःपते ॥ २७ ॥ त्वामेवान्वेषितुंनाथ मयादत्तोऽत्रपीठकः ॥ शुक्रस्यकारणंचात्रतपसाज्ञातुमर्हसि ॥ २८ ॥ ततोध्यानात्परिज्ञातंतेनैवचद्विजन्मना ॥ २९ ॥ शन्तनुरुवाच ॥ ब्रह्मरे तःपरंसाध्विपालयस्वममाज्ञया ॥ उत्पद्यतेसुतस्तेतुसर्वलोकैकपावनः ॥ आवयोःसर्वकल्याणंफलिष्यतिमनोगतम् ॥ ३० ॥ श्रीभगवानुवाच ॥ ततःपतिव्रतातस्यआज्ञामागृह्यसम्भवात् ॥ पपौरेतोमहाभागाब्रह्मणःपरमात्मनः ॥ ३१ ॥ आवर्तइवसञ्जज्ञेरौद्रगर्भइतिस्फुरन् ॥ प्रसोढुंनैव शक्तासाशन्तनुंचाब्रवीत्ततः ॥ ३२ ॥ अमोघोवाच ॥ गर्भंधारयितुंनाथनशक्नोम्यधुनाप्रभो ॥ किंकरिष्यामिधर्मज्ञप्राणोमेसञ्चलत्यपि ॥ आ ज्ञापयमहाभागगर्भंत्यक्ष्यामियत्रच ॥ ३३ ॥ पत्युराज्ञांसमादायमुक्तोगर्भोयगन्धरे ॥ पयस्तजोमयंशुद्धंसर्वधर्मप्रतिष्ठितम् ॥ ३४ ॥ तन्म ध्येपुरुषःशुद्धःकिरीटीनीलवाससा ॥ रत्नदाम्नाचविद्धाङ्गोदुष्प्रेक्ष्योज्योतिषांगणः ॥ ३५ ॥ ततोदेवगणाःस्वर्गात्पुष्पवर्षमवाकिरन् ॥ प्रसूतःसर्वतीर्थे षुतीर्थराजइतिस्मृतः ॥ ३६ ॥ ततोरामइतिख्यातःप्रजातोऽहंभृगोःकुले ॥ क्षत्रियान्पितृहन्तॄंस्तुससैन्यबलवाहनान् ॥ ३७ ॥ हत्वायु द्धगतान्भीतान्पङ्क्तैःसर्वैर्युतोह्यहम् ॥ ब्रह्महत्यासमंघोरंमद्देहेसमुपस्थितम् ॥ ३८ ॥ पङ्कयुक्तकुठारंमेक्षालितंनैवशुद्ध्यति ॥ ततःखेचाभवद्वा णीराममद्वचनंकुरु ॥ ३९ ॥ देववागुवाच ॥ यत्रतीर्थेकुठारंतेनिर्मलंचभवेदिह ॥ तत्रतेसर्वपापानांजातानांचक्षयोभवेत् ॥ ४० ॥ जनानांतत्र सर्वेषांहितार्थंतिष्ठमानद ॥ चपलंगच्छतीर्थानिसर्वाणिसुमहान्तिच ॥ ४१ ॥ तेषांमध्येमहातीथपर्शुःशुद्धोभवद्यदि ॥ तंचजानीहितीर्थेषुमुक्ति दंपरिकीर्तितम् ॥ ४२ ॥ श्रीभगवानुवाच ॥ तच्छ्रुत्वाजामदग्न्यस्तुतीर्थानिप्रययौतदा ॥ गङ्गांसरस्वतींशुभ्रांकावेरींसरयूंतथा ॥ ४३ ॥ गो दावरींचयमुनांकद्रूंचवसुदांतथा ॥ अन्यांचपुण्यदांरम्यांगौरींपूर्वास्थितांशुभाम् ॥ ४४ ॥ गच्छतस्तस्यधीरस्यसदागतिसमस्यच ॥ क्षालि तःसर्वतीर्थेषुनपुनर्निर्मलोऽभवत् ॥ ४५ ॥ ततोगिरिगुहांदुर्गांमहारण्यंचपर्वतम् ॥ गिरिकूटचदुर्लभ्यंययौतीर्थमसौहरिः ॥ ४६ ॥ ॥ नचनिर्मल तामेतिकुठारस्तस्यतेनच ॥ विषादमगमत्तत्ररामःपरपुरञ्जयः ॥ ४७ ॥ हाहेतिविविधंकृत्वाचोपविश्यधरातले ॥ प्रचिन्तामगमद्धीरस्तमुवाचपुन स्तथा ॥ ४८ ॥ देववागुवाच ॥ पूर्वस्यांदिशिदेवेशतीर्थंचास्तिगुहोदरे ॥ ४९ ॥ श्रीभगवानुवाच ॥ तच्छ्रुत्वानरशार्दूलोगत्वाकुण्डंददर्शसः ॥

प्रदक्षिणंजलावर्तंशुभ्रंपापहरंशुभम् ॥ ५० ॥ तज्जलस्पर्शमात्रेणकुठारःशुद्धतांगतः ॥ ततोरामोऽभिषेकंतुकृतवान्प्रमुदान्वितः ॥ ५१ ॥ शुद्धात्म
नस्त्वपापस्यबुद्धिर्जाताप्रपाविनी ॥ सरामःसुचिरंस्थित्वातीर्थराजंप्रसाद्यतम् ॥ ५२ ॥ ततस्ततोऽचलात्प्राप्यपुरंवेगसमन्वितः ॥ ख्यातंकृत्वा
ततश्चोव्यागतोऽसौलवणार्णवम् ॥ ५३ ॥ अयंतीर्थवरःसाक्षात्पितामहकृतोभुवि ॥ सुखदःसर्वतःशुद्धोमुक्तिमार्गप्रदःकिल ॥ ५४ ॥ एवंकामप्र
भावंचविद्धिदुर्वारदुःसहम् ॥ कामाज्जातंवृषंपापंपुण्यंपुण्यप्रयोगतः ॥ ५५ ॥ सजातश्चैवलौहित्योविरिञ्चेश्चैवचौरसः ॥ शन्तनोःक्षेत्रसञ्जातस्त्व
मोघागर्भसम्भवः ॥ ५६ ॥ विरिञ्चिनाजितःकामःशन्तनोरप्यमत्सरात् ॥ तस्याःपतिव्रतात्वाच्चतीर्थात्तीर्थवरोहिसः ॥ ५७ ॥ एवंयस्तुपठेन्नित्यं
पुण्याख्यानमिदंशिवम् ॥ शृणुयाद्वामुदापृथ्व्यांमुक्तिमार्गंसगच्छति ॥ ५८ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेपञ्चाख्यानेलौहित्योत्पत्तिर्नामसप्त
पञ्चाशत्तमोऽध्यायः ॥५७॥ श्रीभगवानुवाच ॥ पुराशर्वःस्त्रियोदृष्ट्वायुवतीरूपशालिनीः ॥ गन्धर्वकिन्नराणांचमनुष्याणांचसर्वतः ॥ १ ॥ मन्त्रेण
ताःसमाकृष्यत्वतिदूरेविहायसि ॥ तपोव्याजपरोदेवस्तासुसङ्गतमानसः ॥ २ ॥ अतिरम्यांकुटींकृत्वाताभिःसहमहेश्वरः ॥ क्रीडांचकारसहसाम
नोभवपराभवः ॥ ३ ॥ एतस्मिन्नन्तरेगौर्याश्चित्तमुद्भ्रान्ततांगतम् ॥ अपश्यद्ध्यानयोगेनक्रीडन्तंजगदीश्वरम् ॥ ४ ॥ स्त्रीभिरन्तर्गतंज्ञात्वारोषस्यव
शगाभवत् ॥ ततःक्षेमङ्करीरूपाभूत्वाचप्रविवेशसा ॥ ५ ॥ व्योमैकान्तेऽतिदूरेचकामदेवसमप्रभम् ॥ वामातिमध्यगंशुभ्रंपुरुषंपुरुषोत्तमम् ॥ ६ ॥
स्त्रीभिःसहसमालिङ्ग्यप्रक्रीडन्तंमुहुर्मुहुः॥चुम्बन्तंनिर्भरंदेवंहररागप्रपीडितम् ॥७॥ वृत्तंक्षेमङ्करीदृष्ट्वानिपपाताग्रतस्तदा ॥ तासांकेशेषुचाकृष्यचकार
चरणाहतिम् ॥८॥ त्रपयापीडितश्शर्वःपराङ्मुखमवस्थितः ॥ केशेष्वाकृष्यरोषात्ताःपातयामासभूतले ॥ ९ ॥ स्त्रियःसर्वाधरांप्राप्यसहसाविकृतान
नाः ॥ उमाशापप्रदग्धाङ्गाम्लेच्छानांवशमागताः ॥ १० ॥ ताश्चाण्डालस्त्रियःख्याताअधवाधवसंयुताः ॥ अद्याप्युमाकृतंशापंसर्वास्ताश्चसमश्नु
युः ॥ ११ ॥ अथोमाशतधारूपंकृत्वेशंसङ्गतातदा ॥ एवंप्रभावंजानीहिकामस्यसततंद्विज ॥ १२ ॥ ततश्चिरात्तयासार्द्धंगतःकैलासमन्दि
रम् ॥ अतःक्षेमङ्करींदृष्ट्वायेऽभिनन्दन्तिमानवाः ॥ १३ ॥ तेषांवित्तर्द्धिविभवाभवन्तीहपरत्रच ॥ कुङ्कुमारक्तसर्वाङ्गिकुन्देन्दुधवलानने ॥ १४ ॥
सर्वमङ्गलदेदेविक्षेमङ्करिनमोऽस्तुते ॥ योगिनीसाम्यंतेनैवसम्मुखाविमुखापिवा ॥ १५ ॥ दृष्ट्वातांनाभिवन्देद्यस्तस्ययुद्धेपराजयः ॥ राजगृहेषु
विद्यायांनमस्काराज्जयोभवेत् ॥ १६ ॥ एवंकामस्यमाहात्म्यंभवोमोहवशंगतः ॥ ममैवयादृशोमोहःसर्वलोकैःप्रगीयते ॥ १७ ॥ परस्त्रीहरणे
दोषान्ममदुर्गतिसञ्चयम् ॥ यथोद्धृतंप्रवक्ष्यामिजनेषुविदितंद्विज ॥ १८ ॥ गोपीपतिहिताकाचित्काचिद्वालातपस्विनी ॥ प्रौढाकात्यायनीवृद्धा

काचित्सम्बन्धिनीवधूः ॥ १९ ॥ आसांहरणदोषाच्चयद्वृत्तंतच्छृणुष्वमे ॥ रणेपराजयंदैन्यंशोकंपुत्रविनाशनम् ॥२०॥ सारथ्यंस्त्रीजनेपापंचण्डालादेवविप्लवम् ॥ शुक्लाङ्गंक्षयवृद्धिंचकल्पेशाश्वतमाप्नुयाम् ॥ २१ ॥ अयंदेवासुराणांचक्षमयाप्रभुतांगतः ॥ अस्यैवसदृशोलोकेनभूतोनभविष्यति ॥ २२ ॥ रामामङ्कस्थितांरम्यांक्षमातल्पगतेनच ॥ त्यक्त्वैवसाधितालोकास्सुरासुरसुदुर्लभाः ॥ २३ ॥ एवंवैष्णवमुख्यश्चसुरासुरगणार्चितः ॥ योनोददातिभुक्त्यग्र्यंशेषंचस्वयमश्नुते ॥२४ ॥ एवमभ्यासधैर्येणदीर्घकालेसुखंगते ॥ प्राक्सङ्गमात्स्वभार्यांचदृष्ट्वामांप्रददौमुदा ॥ २५ ॥ द्वादशाब्दंप्रसङ्कल्प्यप्राग्भोगोमयिवेशितः ॥ तेनतस्यगृहेनित्यंतिष्ठामिगृहरक्षणात् ॥ २६ ॥ तथाधात्रीफलस्यापिसदास्वरसमीहते ॥ तस्मादुक्तोमयान्येषांवैष्णवानांचवैष्णवः ॥२७॥ पुरायेविप्रमेभक्तास्सुरामत्पथगामिनः ॥ तैरेवनकृतंयच्चतदनेनकृतंपरम् ॥२८॥ तस्माद्वैष्णवसर्वस्वंनामरम्यंमयाकृतम् ॥ अस्यवेश्मनितिष्ठामिमुहूर्तंनचलाम्यहम् ॥ २९ ॥ अतोयेचैवमद्भक्तास्तेष्वहंसुलभोद्विज ॥ अस्माकंपदवींतेभ्योह्यद्यदद्मिस्वकारणम् ॥ ३० ॥ आवयोावप्रसौजन्यंस्वप्नभोज्यादिकंसमम् ॥ सायुज्यंचसखित्वंचपश्यभूदेवनान्तरम् ॥ ३१ ॥ व्यासउवाच॥ततोमूकादयस्सर्वेस्वागताहरिमीश्वरम् ॥ गन्तुकामादिवंपुण्यास्सदाराःसपरिच्छदाः ॥ ३२ ॥ येचतेषांगृहाभ्याशेऽप्यात्मनोगृहगोधिकाः ॥ नानाकीटादयोयेचतेषामनुययुःसुराः ॥ ३३ ॥ एतस्मिन्नन्तरेदेवाःसिद्धाश्चपरमर्षयः ॥ प्रचक्रुःपुष्पवर्षाणिसाधुसाध्वित्यनादयन् ॥ ३४ ॥ देवदुन्दुभयोनेदुर्विमानेषुवनेषुच ॥ समारुह्यरथंस्वंस्वंहरिवीथीपुरंययुः ॥ ३५ ॥ तदद्भुतंसमालोक्यविप्रोऽवोचज्जनार्दनम् ॥ उपदेशंचदेवेशब्रूहिमेमधुसूदन ॥ ३६ ॥ श्रीभगवानुवाच ॥ गच्छस्वपितरौतातशोकविक्लवमानसौ ॥ समाराध्यप्रयत्नेनमद्गृहंप्राप्स्यसेऽचिरात ॥ ३७ ॥ पितृमातृसमादेवानतिष्ठन्तिसुरालये ॥ याभ्यांसुगर्हितंदेहंशिशुत्वेपालितंसदा ॥ ३८ ॥ अज्ञानदोषसहितंप्रपुष्टंचापिवर्धितम् ॥ याभ्यांतयोस्समंनास्तित्रैलोक्येसचराचरे ॥३९ ॥ व्यासउवाच॥ततोदेवगणास्सर्वेपञ्चभिस्तैर्मुदान्विताः॥माधवंसंस्तुवन्तश्चगतास्तेहरिमन्दिरम् ॥४०॥ खचितांचपुरींरम्यांविश्वकर्मविनिर्मिताम्॥रत्नाढ्यामिष्टसम्पूर्णांकल्पवृक्षादिभिर्युताम् ॥ ४१ ॥ शातकुम्भमयैर्गेहैस्सर्वरत्नैस्सकर्बुराम्॥वज्रवैडूर्यसोपानांस्वर्णदीतोयसंयुताम् ॥ ४२ ॥ गीतवाद्यादिसम्पूर्णांसर्वदुर्गसमाकुलाम् ॥ कोकिलालापबहुलांसिद्धगन्धर्वसेविताम् ॥ ४३ ॥ रूपाढ्यैःसुजनैःपूर्णांप्रयान्तीमिवखेपुरीम् ॥ ततःस्थित्वाऽच्युताःसर्वेसर्वलोकोर्ध्वतोभृशम् ॥ ४४ ॥ द्विजोऽपिपितरौगत्वासमाराध्यप्रयत्नतः ॥ अचिरेणैवकालेनसकुटुम्बोहरिंययौ ॥४५॥ पञ्चाख्यानमिदंपुण्यंमयातेसमुदाहृतम् ॥ यःपठेच्छृणुयाद्वापितस्यनास्तीहदुर्गतिः ॥ ब्रह्महत्यादिभिःपापैर्नलिप्येतकदाचन ॥ ४६ ॥ गवांकोटिप्रदानेनयत्फलं

लभतेनरः ॥ तत्फलंसमवाप्नोतिपश्चाख्यानावगाहनात् ॥४७॥ स्नानेनपुष्करेनित्यंभागीरथ्यांचसर्वदा ॥ यत्फलंतदवाप्नोतिसकृच्छ्रवणगोचरात
॥ ४८ ॥ दुःस्वप्नंनाशयेत्क्षिप्रंतथारोग्यंप्रयच्छति ॥ लक्ष्म्यारोग्यकरंचैवतस्माच्छ्रोतव्यमेवहि ॥ ४९ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेपश्चा
ख्यानंनामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ द्विजाऊचुः ॥ कीर्तिर्धर्मोऽथलोकेषुसर्वाणिप्रवराणिच ॥ वदनोमुनिशार्दूलयदिनोऽस्तित्वनुग्रहः
॥ १ ॥ व्यासउवाच ॥ यस्यखातेवनंगावस्तृप्यन्तिमासमेवच ॥ यद्वासप्तदिनात्पूतःसर्वदेवैःसपूजितः ॥ २ ॥ पुष्करिण्याविशेषेणपूता
यायज्ञकर्मणा ॥ यत्फलंजलदानेनसर्वमत्रास्तितच्छृणु ॥ ३ ॥ हायनेहायनेचैवकल्पंकल्पंविधीयते ॥ दानात्स्वर्गमवाप्नोतितितोयदःसर्वदोभुवि
॥ ४ ॥ मेघंवर्षतिखातेचजायन्तेयेतुशीकराः ॥ तावद्वर्षसहस्राणिदिवमश्नातिमानवः ॥ ५ ॥ तोयैरन्नादिपाकैश्चप्रसन्नोमानवोभवेत् ॥ प्राणा
नांचविनान्नैश्चधारणंनैवजायते ॥ ६ ॥ पितॄणांतर्पणंशौचंरूपंवेगन्ध्यनाशनम् ॥ बीजंत्विहार्जितंसर्वंसर्वंतोयेप्रतिष्ठितम् ॥ ७ ॥ वस्त्रस्यधाव
नंरुच्यंभाजनानांतथैवच ॥ तेनैवसर्वकार्यंचपानीयंमेध्यमेवच ॥ ८ ॥ तस्मात्सर्वप्रयत्नेनवापीकूपतटाककम् ॥ कारयेच्चबलैःसर्वैस्तथासर्वधनेनच
॥ ९ ॥ ततोविनिर्जलेदेशेयोददातिजलाशयम् ॥ वासरेवासरेतस्यकल्पंस्वर्गेविनिर्दिशेत् ॥ १० ॥ त्रिविष्टपाच्युतोविप्रोवेदशास्त्रार्थपारगः ॥
लोकबन्धुःसधर्मात्मातपस्तस्त्वादिवंव्रजेत् ॥ ११ ॥ एवंजन्माष्टकंप्राप्यएकस्याक्षयमिष्यते ॥ क्षत्रियाणांकुलेजातःसार्वभौमोऽभवन्नृपः ॥ १२ ॥
विशोऽक्षयंधनंविद्याजन्मजन्मसुयत्प्रियम् ॥ शूद्रादयोऽन्त्यजाश्चान्येलभन्तेस्वर्गतिंमुहुः ॥ १३ ॥ चतुर्हस्तप्रमाणंतुकूपंखनतियःपुमान् ॥ परोप
कारकंनित्यंकल्पंस्वर्गंतुहायने ॥ १४ ॥ द्विगुणेद्विगुणंविद्याच्छतंचैवचतुर्गुणे ॥ विंशत्किष्कुप्रमाणांतुदद्यात्पुष्करिणींतुयः ॥१५॥ विष्णोर्धामलभे
त्सोऽपिदिव्यभोगंतथैवच ॥ अनन्तरंनृपोजातोधनीवाग्मीश्वरोभवेत् ॥ १६ ॥ एवंद्वित्रिश्चतुर्वापिगुणतोभोग्यमिष्यते ॥ विस्तीर्णंप्रचुरंविद्धिसहस्रेणा
च्युतोदिवः ॥१७॥ सहस्राद्द्विगुणेनैवसुरपूज्योभवेन्नरः॥जन्तवस्तत्रयेसन्तियावन्तोजीवनंययुः ॥१८॥ तत्सङ्ख्याकाजनास्तस्यकिङ्कराःपृष्ठलग्नकाः॥
भवन्तिसततंगेहेपुरेजनपदेषुच ॥ १९ ॥ विहायपितरंभोग्याधनेक्षीणेयथावनम् ॥ पक्षिणस्सूकरश्चैवमहिषीकरिणीतथा ॥ २० ॥ उपदेष्टाचकर्त्ताच
षडेतेस्वर्गगामिनः ॥ दिव्यंचपक्षिणांचैवशतंस्वर्गंविनिर्दिशेत् ॥ २१ ॥ क्रोडोवर्षसहस्रंतुमहिष्ययुतहायनम् ॥ देवरूपंसमास्थायकरिण्याल
क्षमुच्यते ॥ २२ ॥ कोटयेकमुपदेष्टुश्चकर्तुरक्षयमेवच ॥ पुराधनिसुतेनैवकृतःख्यातोजलाशयः ॥ २३ ॥ अयुतधनव्ययेनैवप्राणेनैवबले
नच ॥ सर्वसत्त्वोपकारायशिवश्रद्धायुतेनच ॥ २४ ॥ कालेनक्रियताचापिक्षीणवित्तोऽभवत्किल ॥ कश्चिदर्थीधनीतस्यमूल्यदानायचो

धनः ॥ २५ ॥ विमृश्यधनिनाचोक्तंव्याहारंशृणुताधुना ॥ दीनारस्यायुतंवातेदास्याम्यस्याश्चकारणात् ॥ २६ ॥ लब्धंतेपुष्करिण्याश्चपुण्यंलाभात्प्र
मन्यसे ॥ शक्त्यादत्त्वाथमूल्यंतांस्वीयांकर्तुंव्यवस्थितः ॥२७॥ एवमुक्तेमतंप्राहवासरेऽप्ययुतंपुनः ॥ फलंभवतिवैनित्यंपुण्यंपुण्यविदोविदुः ॥२८॥
एतस्मिन्निर्जलेदेशेशिवंखातंकृतंचमे ॥ स्नानपानादिकंकर्मसर्वेकुर्वन्त्यभीप्सतः ॥ २९ ॥ तस्मान्मेऽप्ययुतार्थस्यनैत्यकंफलमिष्यते ॥ ततस्तस्याभव
द्धास्यंतथैवचसभासदाम् ॥३०॥ ह्रियाचपीडितःसोऽपिवाक्यमेतदुवाचह ॥ सत्यमेतद्वचोऽस्माकंपरीक्षांकुरुधर्मतः ॥ ३१ ॥ मत्सरात्सतुतंप्राहशृ
णुमेवचनंपितः ॥ दीनारायुतमेतत्तेदत्त्वाचानीयप्रस्तरम् ॥ ३२ ॥ पातयिष्यामितेखानेयथायोगंप्रमज्जतु ॥ उन्मज्जतिचयत्कालेप्रस्तरःसन्तरत्यपि
॥३३॥ क्षयंयास्यतिनोवित्तंनोचेन्मेधर्मतोहिंसा ॥ बाढमुक्त्वायुतंतस्यगृहीत्वास्वगृहंगतः ॥३४॥ साक्षिणामग्रतस्तेनप्रस्तरःपातितस्तथा ॥ पुष्क
रिण्यांमहत्यांचदृष्टंनरसुरासुरैः ॥ ३५ ॥ ततोधर्मतुलायांतुतुलितंधर्मसाक्षिणा ॥ दीनारायुतदानस्यपुष्करिण्याजलस्यतु ॥ ३६ ॥ नसमंतुदिनैकं
तुजलस्यधर्मतोभृशम् ॥ धनिनोमानसंदुःखंमोघार्थंचपरेऽहनि ॥ ३७ ॥ शिलोच्चयोऽभवत्तीर्णोद्वीपवच्चजलोपरि ॥ ततःकोलाहलःशब्दोजनानांसमु
पस्थितः ॥ ३८ ॥ तच्छ्रुत्वाद्भुतवाक्यंचमुदातोचागतौततः ॥ दृष्ट्वाशैलंतथाभूतंकृतंतेनायुतंतथा ॥ ३९ ॥ ततःखाताधिपेनैवशैलंदूरेनिपातितम् ॥
पुण्यंखातस्यचोत्खातेप्रलुप्तस्यसुतेनहि ॥४०॥ सोऽपिनाकंसमारुह्यजन्मजन्मसुनिर्वृतः ॥ गोत्रमातृगणानांचनृपाणांसुहृदांतथा ॥४१॥ सखीनांचो
पकर्तॄणांखातंखात्वाऽक्षयंफलम् ॥ तपस्विनामनाथानांब्राह्मणानांविशेषतः ॥४२॥ खातंतुजनयित्वातुस्वर्गचाक्षयमश्नुते॥तस्मात्खातादिकंविप्राःश
क्तितोयःकरिष्यति ॥ ४३ ॥ सर्वपापक्षयात्पुण्यंमोक्षंयायान्नसंशयः ॥ यइदंश्रावयेल्लोकेधर्माख्यानंमहोत्कटम् ॥ ४४ ॥ सर्वखातप्रदानस्यफलम
श्नातिधार्मिकः ॥ ग्रहणेभास्करस्यैवभागीरथ्यांतटेवरे ॥ ४५ ॥ गवांकोटिप्रदानस्यफलंश्रुत्वालभेन्नरः ॥ नचदरिद्रतामेतिनशोकंव्याधिसञ्चयम
॥ ४६ ॥ असंमानंमहद्दुःखमुभयोर्नाधिगच्छति ॥ ४७ ॥ इतिश्रीपाद्मपुराणेप्रथमसृष्टिखण्डेखातादिकीर्तनंनामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ व्यासउवाच ॥ शाखिनामेवसर्वेषांफलंवक्ष्यामियादृशम् ॥ तच्छृणुध्वंमहाभागारोपणेचपृथक्पृथक् ॥१॥ यस्तुरोपयतेतीरेपुण्यवृक्षान्समन्ततः॥
तस्यपुण्यफलंज्ञातुंकश्चितुंनैवशक्यते ॥ २ ॥ अन्यत्ररोपणंकृत्वाशाखिनांयत्फलंलभेत् ॥ ततोजलसमीपेतुलक्षकोटिगुणंभवेत् ॥ ३ ॥ स्वयंपुष्क
रिणीतीरेत्वनन्तंफलमश्नुते ॥ तस्माच्छतगुणंब्रूमःशाखिनांपुण्यकारिणाम् ॥ ४ ॥ अश्वत्थरोपणंकृत्वाजलाशयसमीपतः ॥ यत्फलंलभतेमर्त्योनत
त्क्रतुशतैरपि ॥ ५ ॥ पतन्तियानिपत्राणिजलेपर्वणिपर्वणि ॥ तानिपिण्डसमानीहपितॄणामक्षयंययुः ॥ ६ ॥ खादन्तिपतगास्तत्रफलानिकामतो

ध्रुवम् ॥ ब्रह्मभक्ष्यसमंतस्यपुण्यंभवतिचाक्षयम् ॥७॥ अश्वत्थेनैवभक्ष्यणरोपणंनवयत्फलम् ॥ तद्वैक्रतुशतैर्नैवपुत्रैरवशतैरपि ॥ ८ ॥ उष्णेच्छाय
प्रगृह्णन्तिगावोदेवद्विजातयः ॥ कर्तुःपितृगणानांचस्वर्गोभवतिचाक्षयः ॥ ९ ॥ कतुस्वस्थस्यवैविघ्नमक्षयत्वान्नशक्यते ॥ तस्मात्सर्वप्रयत्नेनरोप
यद्वृक्षमाधवम् ॥ १० ॥ एकंवृक्षंसमारोप्यनरःस्वर्गान्नहीयते ॥ तस्मादेवमहावृक्षंरोपयध्वंद्विजोत्तमाः ॥ ११ ॥ जलानांनिकटेरम्येरसानांक्रयवि
क्रये ॥ मार्गेजलाशयेवृक्षान्रोपयेद्योमहाशयः ॥१२॥अश्वत्थादीन्समारोप्यस्वर्गंयातिमनोरमम् ॥ अर्चयित्वातुयत्पुण्यंप्रवक्ष्यामिद्विजातयः ॥१३॥
स्नात्वाश्वत्थंस्पृशेद्यस्तुसर्वपापैःप्रमुच्यते ॥ अस्नातोयःस्पृशेन्मर्त्योलभतेस्नानजंफलम् ॥ १४ ॥ दृष्ट्वाचनाशयेत्पापंस्पृष्ट्वालक्ष्मींप्रपद्यते ॥ प्रद
क्षिणेभवेदायुःसदाश्वत्थनमोऽस्तुते ॥१५ ॥ चलद्दलायवृक्षायसदाविष्णुस्थितायच ॥ बोधिसत्त्वाययोग्यायसदाश्वत्थनमोऽस्तुते ॥ १६ ॥ अश्व
त्थायतुहव्यंतुपयोनैवेद्यमेवच ॥ पुष्पंधूपंदीपकंचदत्त्वास्वर्गान्नहीयते ॥ १७ ॥ सपुत्रंचाक्षयंविद्धिधनवृद्धियशस्करम् ॥ विजयंमानदंभद्रमश्वत्थ
स्यप्रपूजनम् ॥ १८ ॥ यज्ञंतंचहुतंस्तोत्रंयन्त्रमन्त्रादिकंचयत् ॥ सर्वंकोटिगुणंप्रोक्तंमूलेचलदलस्यच ॥ १९ ॥ यस्यमूलेस्थितोविष्णुर्मध्येतिष्ठति
शङ्करः ॥ अग्रभागेस्थितोब्रह्माकस्तंजगतिनार्चयेत् ॥ २० ॥ सोमवारेत्वमायांचस्नानंयन्मौनिनाकृतम् ॥ दानस्यगोसहस्रस्यफलंचाश्वत्थवन्दने
॥२१॥ सप्तप्रदक्षिणेनैवगवामयुतजंफलम् ॥ प्रचुराल्लक्षकोटिश्चतस्मात्कार्याहिसासदा ॥२२॥ यत्किञ्चिद्दीयतेतत्रफलमूलजलादिकम् ॥ सर्वंतच्चाक्ष
यफलंजन्मजन्मसुजायते ॥ २३ ॥ अहोऽश्वत्थसमोनास्तिवृक्षरूपीहरिर्भुवि ॥ यथापूज्योद्विजोलोकेयथागावोयथामराः ॥ २४ ॥ तथाश्वत्थवृक्ष
रूपोदेवःपूज्यतमःस्मृतः ॥ रोपणेरक्षणेस्पर्शेपूजाकर्मणिवैसदा ॥ २५ ॥ ददातिवित्तंपुत्रांश्चस्वर्गंमोक्षंपुनःक्रमात् ॥ किञ्चिच्छेदंतुयःकुर्यादश्वत्थस्य
तनौनरः ॥ २६ ॥ कल्पैकंनिरयंभुक्त्वाचाण्डालादौप्रजायते ॥ मूलच्छेदेनतस्यैवसचयात्यपुनर्भवप् ॥ २७ ॥ पुरुषास्तस्यतिष्ठन्तिरौरवेघोरदर्श
ने ॥ अश्वत्थस्यैकवृक्षस्यरोपणेयत्फलंभवेत् ॥ २८ ॥ तथैवचम्पकेऽर्केचत्रयाणांरोपणेऽपिच ॥ अष्टौबिल्वस्यवृक्षाश्चन्यग्रोधाश्चैवसप्तच ॥ २९ ॥
निम्बस्यदशवृक्षाश्चफलंचैषांसमंभवेत् ॥ एकैकस्यफलंचोक्तंवृक्षाणांरोपणेद्विजाः ॥ ३० ॥ एवंबुद्ध्वातुधर्मात्मायःकुर्यात्कृत्रिमंवनम् ॥ कल्पकोटिसह
स्राणिकल्पकोटिशतानिच ॥ ३१ ॥ नाकमेतिसचूतस्यसमारोप्यसहस्रकम् ॥ ततोद्वित्रिगुणेनैवन्यूनेवाप्रचुरेऽपिवा ॥३२॥ भुङ्क्तेभुक्त्वापुनःकुर्यान्नृपो
वाथसदीश्वरः ॥ स्वर्गंभोग्यंततोराज्यंकल्याणंमङ्गलंशुभम् ॥३३॥ आरोग्यंशौर्यसम्पन्नमारामादेवजायते॥फलानियस्यखादन्तिजन्तवोऽथसहस्रशः
॥३४॥ आश्रिताविहगाःकीटाःपतगाःशलभादयः॥छायाश्रिताश्चयेसत्त्वास्तत्संख्याताःपृथग्जनाः॥३५॥ तस्यकिङ्करतांयान्तिशतशोदेवतार्चिताः॥

येचवृक्षामहासत्त्वास्सर्वेतेदेवरूपिणः ॥२६॥ तदर्चापितृवत्कार्याशुश्रूषाजलपिण्डकम् ॥ मर्त्यलोकेचतेपुत्रास्तस्यजन्मनिजन्मनि ॥ २७ ॥ सुरूपाः सुविनीताश्चसदापुण्यक्रियाःशुभाः॥एवंगणेशतांयान्तिजन्तवश्चूतलग्नकाः ॥ २८ ॥ धात्रीहरीतकीचान्येकटुतिक्ताम्लसम्भवाः ॥सर्वेचारामतःशुद्धाः फलदाःशिवदाःसदा ॥२९॥ प्रासादायत्रसौवर्णाःसर्वरत्नविभूषिताः ॥सर्वाभरणसंयुक्ताविमानाश्चानिलोपमाः ॥४०॥ शातकुम्भमयावृक्षाःसदैवसर्वदायिनः ॥सर्वर्तुसुखदाःसौम्यकन्यकाअप्सरस्समाः ॥४१॥ गीतनृत्यपराधीरास्तत्रतिष्ठन्तिवृक्षदाः॥पुष्करिण्योविशेषेणखातान्यन्यानियानिच ॥४२॥ शुद्धोपलान्तरचितानद्यःपायसकर्दमाः ॥ पुनर्दुग्धसफेनाश्चअन्नादिषड्रसान्विताः ॥ ४३ ॥ मर्त्यलोकेयथाभोग्यंपुनःस्वर्गेपुनर्भुवि ॥ पुनरेवतदभ्यासात्खातमाराममकंपुनः ॥ ४४ ॥ यथापुण्यादिकंकृत्वास्वर्गमर्त्याधिपःपुमान् ॥ अशक्तस्तुप्रपांकृत्वापुष्करिण्याःफलंलभेत् ॥ ४५ ॥ प्रपायालक्षणंचात्रसर्वपापहरंपरम् ॥ सर्वभोगप्रदंशुद्धंस्वर्गापवर्गदंस्थिरम् ॥ ४६ ॥ लक्षणंचप्रवक्ष्यामिप्रपायाःकीर्तिवर्धनम् ॥ निर्जलेऽध्वनिपृक्तेचस्थानेकृत्वाचमण्डपम् ॥ ४७ ॥ बहुपान्थेसमायातेग्रीष्मवर्षाशरत्स्वपि ॥ अगरुकादिसौगन्ध्यंजलंपूगंसचन्द्रकम् ॥ ४८ ॥ आसनंचैवताम्बूलंदत्त्वास्वर्गान्नहीयते ॥ एवंवर्षत्रयेणैवपुष्करिण्याःफलंलभेत् ॥ ४९ ॥ स्वर्गाच्चैवाच्युतोमर्त्योदेवैरपिप्रपूज्यते ॥ मासमेकंतुयोदद्यात्प्रपांग्रीष्मेऽथनिर्जले ॥ ५० ॥ कल्पैकंतुवसेत्स्वर्गेस्वर्गाद्भ्रष्टोमहीयते ॥ प्रपादास्तत्रतिष्ठन्तियत्रपुष्करिणीप्रदाः ॥ ५१ ॥ नोचेद्धर्मघटोदेयःपुण्यःपापक्षयायच ॥ एषधर्मघटोज्ञेयोब्रह्मविष्णुशिवात्मकः ॥ ५२ ॥ तवप्रसादात्सफलाममसन्तुमनोरथाः ॥ स्वर्णमाषंचतुर्भागंदक्षिणार्थंघटस्यच ॥ ५३ ॥ एवंवर्षत्रयेणैवप्रपादानफलंलभेत् ॥ यःपठेच्छ्रावयेद्वापिपुष्करिण्यादिजंफलम् ॥ ५४ ॥ साक्षात्पापाद्भवेन्मुक्तस्तत्प्रसादात्तुसद्गतिः ॥ जनेषुश्रावयेद्यस्तुपुण्याख्यानमिदंशुभम् ॥ ५५ ॥ कल्पकोटिसहस्राणिसुरलोकेसतिष्ठति ॥ ५६ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेपुष्करिण्यादिधर्मकीर्तनंनामपष्टितमोऽध्यायः ॥ ६० ॥ व्यासउवाच ॥ अतःपरंप्रवक्ष्यामिकीर्त्तिधर्मंपरंशुभम् ॥ सेतुबन्धफलंपुण्यंब्रह्मणाभाषितंतथा ॥ १ ॥ कान्तारेदुस्तरेपङ्केपुरुशङ्कुसमाकुलम् ॥ आलिंकृत्वाभवेत्पूतोदेवत्वंयातिमानवः ॥ २ ॥ वितस्तौतुलभेत्स्वर्गेदिव्यंवर्षशतंसमम्॥एवंसङ्ख्याविधानेननरःस्वर्गान्नहीयते ॥ ३ ॥ कदाचित्पङ्कयोगाच्चस्वर्गाद्भुविविजायते ॥ तदाभट्टारकःश्रीमान्रोगशोकविवर्जितः ॥ ४ ॥ पङ्कादौसङ्क्रमांश्चैवकृत्वास्वर्गान्नहीयते ॥ सर्वपापंक्षयंतस्यसम्प्रयातिदिनेदिने ॥ ५ ॥ तथालिसङ्क्रमाणांचफलंतुल्यंप्रकीर्तितम् ॥ धनप्राणाव्ययेनैवधीमताक्रियतेसदा ॥ ६ ॥ श्रूयतांयत्पुरावृत्तमाख्यानंवृद्धसम्मतम् ॥ कश्चिच्चोरोमहाभीष्मेस्तेयकर्मणिचोद्यतः ॥ ७ ॥ कान्तारेगोशिरःस्थाप्यकान्त्वास्तेयंगतो

ह्यसौ ॥ धनापहरणंकृत्वागृहस्थस्यचतेनहि ॥ ८ ॥ गतःस्वमन्दिरंतत्रजनागच्छन्तिवर्त्मनि ॥ सर्वेषामेकपादस्यसुखंभवतिनिश्चितम् ॥ ९ ॥ एकपादेह्रदेदुर्गेतारकंगोशिरःपरम् ॥ चान्द्रायणंचतत्तस्यकान्तारेसंस्थितंशिरः ॥ १० ॥ ततश्चोरस्यनिधनेचित्रगुप्तप्रणीतके ॥ ११ ॥ चित्रगुप्त उवाच ॥ धर्मस्यफलमात्रंतुएतस्यचनविद्यते ॥ नदैवंपैतृकंकार्यंतीर्थस्नानंद्विजार्चनम् ॥ १२ ॥ दानंगुरुजनेमानंज्ञानंपरहितंशुभम् ॥ मनसानकृतं तेनक्रिययाचकथंपुनः ॥ १३ ॥ कृतंसाहसिकंस्तेयंपरदाराभिमर्शनम् ॥ भूतमिथ्यापवादंचसाधुनिन्दापरंतथा ॥ एवंशतसहस्रंतुतथागोहरणंकृतम् ॥ १४ ॥ व्यासउवाच ॥ तत्राहधर्मराजस्तुकालानलसमप्रभः ॥ १५ ॥ धर्मराजउवाच ॥ नयतैनंफलंशूरादुर्गतिंचापुनर्भवम् ॥ १६ ॥ व्यास उवाच ॥एतस्मिन्नन्तरेऽवोचच्चित्रगुप्तोऽनुकम्पकः॥१७॥चित्रगुप्तउवाच ॥अस्त्यस्यगोशिरःपुण्यंकिंचिन्नाथक्षमाधुना ॥१८॥ अस्यपुनर्भवोनास्तिश र्मचात्रलवंनहि ॥ चिन्तयित्वोच्यतांदेवतत्पापस्यक्षयायवै ॥ १९ ॥ व्यासउवाच ॥ नृपोद्वादशवार्षिक्यंलभेत्पुण्योदयंक्षितौ ॥ तथाहधर्म राजस्तंगच्छमर्त्यंदुरात्मक ॥ २० ॥ अकण्टकंचराज्यंचभुङ्क्ष्वद्वादशवत्सरम् ॥ यद्धृतंगोशिरोमागमुक्तस्तस्यैवकारणात् ॥ २१ ॥ पुनरत्रसमाग म्यसङ्गन्ताचापुनर्भवम् ॥ ततःकृताञ्जलिर्देवमुवाचदुःखपीडितः ॥ २२ ॥चोरउवाच ॥ धर्मराजानुकम्पांचमय्येवंपापकारिणि ॥ कुरुनाथत्वनाथे चजानामिप्रीतिपूर्वकम् ॥ २३ ॥ व्यासउवाच ॥ धर्मराजस्तुतंचाहबाढमेवमितोव्रज ॥ स्मरिष्यसिस्ववृत्तान्तंमत्प्रसादात्सुदुःखितः ॥ २४ ॥ एत स्मिन्नन्तरेचैवमोचितःकिङ्करेणहि॥ तस्यजन्माभवत्कौचदुर्विधेचातिवाणिके ॥ २५ ॥ आजन्मविविधंदुःखंभुक्तंपूर्वविकर्मतः ॥भुक्त्वाक्लेशंमहान्तं चएकविंशतिहायनम् ॥ २६ ॥ तस्मिन्राष्ट्रेमृतोभूपःस्वकर्मपरिपीडितः ॥ एतस्मिन्नन्तरेऽमात्यैःसमालोक्यसुमन्त्रिभिः ॥ २७ ॥ अनेक परिमर्शैस्तुपृथिव्यांभ्रमणंकृतम् ॥ तमावृण्वंश्चतंसद्यःसर्वेषांपुरतोदृढम् ॥ २८ ॥ ततोराज्याभिषेकश्चकृतस्तैस्तुविमत्सरैः ॥ सचराज्यंचसंश्रित्य धर्मराजवरेणच ॥ २९ ॥ अकरोदालिकंकर्मशिलाबद्धंचमृन्मयम् ॥ सङ्क्रमंजलदुर्गेचतरणिंचतथापरे ॥ ३० ॥ वापीकूपतटाकानिप्रपाराममही रुहम् ॥ कृतवान्विविधंयज्ञंदानपुण्यमतःपरम् ॥ ३१ ॥ स्मरंश्चपूर्वकर्म्माणिसर्वपापक्षयायवै ॥ कृतंबहुविधंधर्मंव्रतानिविविधानिच ॥ ३२ ॥ सुराणांब्राह्मणानांचगुरूणांचैवतर्पणात् ॥ पापात्पूतोययौगेहंधर्मराजस्यधीमतः ॥ ३३ ॥ सयानस्थंततोदृष्ट्वाक्रोधरक्तेक्षणोऽभवत् ॥ सचतं प्राञ्जलिःप्राहभोधर्मकुरुतारणम् ॥ ३४ ॥ चित्रगुप्तोऽब्रवीद्वाक्यंधर्मराजसमीपतः ॥ ३५ ॥ चित्रगुप्तउवाच ॥ कर्मणामनसापूतोविष्णुलोकंसगच्छतु ॥ ३६ ॥ व्यासउवाच ॥ सतच्छ्रुत्वापुनश्चाहतस्यविज्ञायकारणम् ॥ स्मितःप्रीत्याप्रसन्नात्मागच्छगच्छाच्युतालयम् ॥ ३७॥ विमानंसुरलोकाच्च

स्वागतंवर्णकर्बुरम् ॥ समारुह्यगतःस्वर्गंपुनरावृत्तिदुर्लभम् ॥ ३८ ॥ तस्मात्किष्कुप्रमाणंहिदत्तंयेनालिकंपुरा ॥ सतुराज्यान्वयंस्वर्गंमहान्तंचानु
गच्छति ॥ ३९ ॥ तथैवगोप्रचारंतुदत्त्वास्वर्गान्नहीयते ॥ यागतिर्गोप्रदस्यैवध्रुवंतस्यभविष्यति ॥ ४० ॥ व्यामैकंगोप्रचारंतुमुक्तंयनसुधीमता ॥
तस्यस्वर्गंभवेदिष्टंकिमन्यैःपुरुभाषितैः ॥ ४१ ॥ गोप्रचारंयथाशक्तियोवैत्यजतिहेतुना ॥ दिनेदिनेब्रह्मभोज्यंपुण्यंतम्यशताधिकम् ॥ ४२ ॥
॥ ४२ ॥ तस्माद्गवांप्रचारंतुमुक्त्वास्वर्गान्नहीयते ॥ यश्छिनत्तिद्रुमंपुण्यंगोप्रचारंछिनत्त्यपि ॥ ४३ ॥ तस्यैकविंशपुरुषाःपच्यन्तेरौरवे
षुच ॥ गोचारघ्नंग्रामगोपःशक्तोज्ञात्वातुदण्डयेत् ॥ ४४ ॥ छेत्तारंधर्मवृक्षाणांविशेषाद्गोप्रचारघम् ॥ तस्यदण्डसुखंतस्यतस्मात्तंदण्डयेत्तुसः
॥ ४५ ॥ प्रासादंकुरुतेयस्तुविष्णुलिङ्गस्यमानवः ॥ त्रिकाण्डंपञ्चकाण्डंचसुशोभंसुघटान्वितम् ॥ ४६ ॥ इतोऽधिकंतुयोदद्यान्मृन्मयंवा
दृषन्मयम् ॥ वसुवृत्तिसुपूर्णंचसुरम्यंदिव्यभूतलम् ॥ ४७ ॥ प्रतिष्ठाकर्मसम्पन्नंकिङ्करादिभिरावृतम् ॥ सुलिङ्गमिष्टदेवस्यविष्णोरेवविशेषतः
॥ ४८ ॥ कृत्वाचविष्णुसायुज्यंसमाप्नोतिनरोत्तमः ॥ तथैवप्रतिमांकृत्वाहरेरन्यतरस्यच ॥ ४९ ॥. कृत्वादेवकुलंरम्यंयत्फलंलभतेनरः ॥
नतन्मखसहस्रैस्तुदानैर्भुविव्रतादिभिः ॥ ५० ॥ कल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ प्रासादेरत्नसंयुक्तेसम्पूर्णद्रव्यसङ्कुले ॥ ५१ ॥
सवसेत्कामगेयानेसर्वलोकमनोहरे ॥ स्वर्गाच्च्युतोभवेद्राजासार्वभौमोगुणैर्वशी ॥ ५२ ॥ शिवलिङ्गेतुप्रासादंकारयित्वास्वशक्तितः ॥ यदुक्तंविष्णु
लिङ्गेतुतज्ज्ञेयंशिववेश्मनि ॥ ५३॥ भुङ्क्तेभोगंमहाभागोमनःशर्मकरंपरम् ॥ रामाभिरामसम्पूर्णंसर्वतःसुखदंदिवि ॥ ५४ ॥ उर्व्यामक्षयभोग्यानिनृ
पोवाथमहाधनी ॥ हरस्यप्रतिमांयश्चकृत्वादेवगृहेनरः ॥ ५५ ॥ सुलिङ्गांवासुरूपांवाकल्पकोटिंवसेद्दिवि ॥ स्वर्गाद्भ्रष्टोभवेद्राजाधनीपूज्यतमोऽपि
वा ॥५६ ॥ देवीलिङ्गेषुसर्वेषुकृत्वादेवगृहंनरः ॥ सुरत्वंप्राप्नुयाल्लोकेदेव्यास्सर्वसुखोद्भवे॥ ५७ ॥ भृशमच्युततामेतिसुखमेतिनिरामयम् ॥रत्नसंसृष्टप्रा
सादेमणिकर्बुरभूतले ॥५८॥ रामायुतप्रसम्भोग्येदेवीसंसृष्टनिर्भये॥नृत्यगीतपरेरम्येसर्वेन्द्रियमनोरमे ॥५९॥ रत्नमर्दलतालाढ्येसर्वदास्त्रीजनेरिते ॥
निर्मलेसुखदेरम्येरत्नानांसुशुभेगृहे ॥ ६० ॥ तथैवप्रतिमायाश्चदेव्याःप्रासादमुत्तमम् ॥ नियुतंकल्पकोटीनांस्वर्लोकमेतिमानवः ॥ ६१ ॥ स्वर्गाद्भ्र
ष्टोभवेद्भूपोदेवीभक्तिपरायणः ॥ एवंचजन्मसाहस्रंस्मरएवभवेद्भुवि ॥ ६२ ॥ प्रासादंगाणपत्यंचदेव्यावाप्रीतिमान्नरः ॥ कृत्वासुरगणानांचपूजितो
दिविजायते ॥ ६३ ॥ तथैवराजतामेतिभोग्यान्देवीपुरेतथा ॥ अविघ्नंसर्वकार्येषुसदैवगणपोयथा ॥ ६४ ॥ आज्ञानस्खलितातस्यसुरासुरनरेषुच ॥
तथैवसौरप्रासादेफलमेतिनरोत्तमः ॥ ६५ ॥ अरोगीसुप्रसन्नात्माकामदेवसमप्रभः ॥ वरदःसर्वलोकेषुयथाब्रध्नस्तथाहिंसः ॥ ६६ ॥ सूरस्यप्रतिमा

यांचगृहंकृत्वाशिलामयम् ॥ कल्पकोटिशतंभुक्त्वास्वर्गमुर्वीश्वरोभवेत् ॥ ६७ ॥ विष्ण्वादिसर्वदेवानामर्चनंयत्पृथक्पृथक् ॥ प्रत्येकंसम्प्रवक्ष्यामिन
राणांहितहेतवे ॥ ६८ ॥ घृतप्रदीपंयोदद्यान्मासमेकमहर्निशम् ॥ दिव्यंवर्षायुतंस्वर्गेपूजितोदेवसत्तमैः ॥ ६९ ॥ घृतस्नानंतथालिङ्गेयःकुर्याद्धुविमा
नवः ॥ कल्पकोटिसहस्राणिमासैकेलभतेनरः ॥७० ॥तिलतैलप्रदीपस्यतथान्यस्यार्द्धकंफलम् ॥ मासैकंजलदानस्यफलेनेश्वरतांव्रजेत् ॥७१॥ धूपदा
नेनगन्धर्वंचन्दनेद्विगुणंभवेत् ॥ मृगमदागरुसत्त्वस्यदानेबहुफलंभवेत् ॥७२॥ मालापुष्पप्रदानेननरःस्यात्रिदशेश्वरः ॥शीततूलपटींदत्त्वासर्वदुःखा
त्प्रमुच्यते ॥ ७३ ॥ जन्मजन्मसुलभ्येतउष्णेचशीतलांपटीम् ॥ दत्त्वाचनैवसीदेतशक्त्यावस्त्रंददातियः ॥ ७४ ॥ चतुर्हस्तप्रमाणंचवर्ष्मवेष्टंसुशोभन
म् ॥ पिधानंचरणानांचदत्त्वास्वर्गान्नहीयते॥ ७५ ॥ शक्त्यास्वर्णप्रदानेनस्वर्गेपूज्योभवेन्नरः ॥ दशयोजनविस्तीर्णेमण्डपेरूपभाग्भवेत् ॥७६॥ सुव
र्णरत्नसंयुक्तंदत्त्वादशगुणंलभेत् ॥ वज्रवैडूर्यगारुत्ममाणिक्यादीननर्घतः ॥ ७७ ॥ दत्त्वालिङ्गेविधानाच्चब्राह्मणेवायशस्विनि ॥ शतयोजनविस्तीर्ण
मण्डलेऽधिपतिर्भवेत् ॥ ७८ ॥ तथैवभुविजातोऽपिसर्वलोकप्ररञ्जनः ॥ सुरभिद्रव्यदानेनवावदूकश्चसुन्दरः ॥ ७९ ॥ रक्तामृतसुकण्ठश्चपूगदानान्नरो
भवेत्॥वरदासीप्रदानेननरःकल्पंवसेद्दिवि॥८०॥वरदासीप्रदानेनउर्व्यांजातोधनेश्वरः॥तथैवभृत्यदानेनबहुभृत्योभवेद्दिवि॥८१॥धरायामक्षयाऋद्धि
र्जन्मजन्मसुजायते ॥ सर्वतूर्यप्रदानेनगुणवाँल्लोकसम्मतः ॥ ८२ ॥ नृत्यगीतादिशास्त्रेणगन्धर्वाणांपतिर्भवेत् ॥ दासीदासयुतःस्वर्गेधनैःस्त्रीभिर्वरैर्यु
तः ॥ ८३ ॥ तथैवगोप्रदानेनतावत्कालंवसेद्दिवि ॥ लिङ्गेदुग्धप्रदानाच्चनरःकल्पंवसेद्दिवि ॥ ८४ ॥ दध्नास्नानेनद्विगुणंघृतेनतुशताधिकम् ॥ अन्नंषड्र
ससंयुक्तंदत्त्वाक्षितिपतिर्भवेत् ॥ ८५ ॥ तथैवपायसंदत्त्वामुनीनांप्रवरोभुवि ॥ हविष्यान्नंमुदादत्त्वावेदशास्त्रार्थपारगः ॥ ८६ ॥ निरामिषप्रदानाच्चब्र
ह्मचारीव्रतीभवेत् ॥मधुदानाच्चसौभाग्यंगुडेनलवणेनच॥ ८७ ॥ शर्करादिभिर्लावण्यंसर्वलोकेषुगीयते ॥ देवानांशम्भुलिङ्गानामर्चांकृत्वाविधानतः ॥
॥ ८८ ॥ अनुक्रमेणस्वर्गादौलोकानांसपतिर्भवेत् ॥ लोकानांचहितार्थायदेवास्तिष्ठन्तिसम्मुखाः ॥ ८९ ॥ सकृत्प्रदक्षिणंकृत्वाशम्भुलिङ्गेषुपण्डि
तः॥ दिव्यंवर्षशतंपूर्णंस्वर्गमेतिनरोत्तमः॥९० ॥ एवमेवक्रमेणैवनमस्कारैःस्वयम्भुवः ॥ लोकवन्द्योव्रजेत्स्वर्गंतस्मान्नित्यंसमाचरेत् ॥ ९१ ॥ लिङ्ग
रूपस्यदेवस्ययोधनंहरतेनरः ॥ सचरौरवमासाद्यहरणात्कीटतांव्रजेत् ॥ ९२ ॥ दातुःपूजांचलिङ्गार्थेहरेच्चाप्याददातियः ॥ कुलकोटिसहस्रेणन
रकान्ननिवर्तते ॥ ९३ ॥ जलपुष्पादिदीपार्थेवसुचान्यद्गृहीतवान् ॥ पश्चान्नदीयतेलोभादक्षयंनरकंव्रजेत् ॥ ९४ ॥ दासींहृत्वातुलिङ्गस्यनर
कान्ननिवर्तते ॥ कामार्तोमातरंगच्छेन्नगच्छेच्छिवचेटिकाम् ॥९५॥ शिवदासींततोगत्वाशिवस्वहरणेतथा ॥ भक्षणादन्नपानानांनरोदुर्गतिमाप्नुयात् ॥

॥ ९६ ॥ अतोदेवलविप्रोयोनरकान्ननिवर्तते ॥ तस्माद्वेश्याजनानांचदौष्ट्यमेवहितंभवेत् ॥ ९७ ॥ अतस्तुगणिकांस्पृष्ट्वानरःस्नानाद्विशुध्यति ॥ मलिनांदुर्गतिंयातिबहुपूरुषसंश्रयात् ॥ ९८ ॥ वेश्यातपस्विनीयाचदेवार्चनरतासदा ॥ पतिव्रतपराशुद्धास्वर्गंचाक्षयमश्नुते ॥ ९९ ॥ गणिकांमातृवद्यस्तुसदासन्नांप्रपश्यति ॥ देववत्सुरलोकेषुनिखिलंभोगमश्नुते ॥ १०० ॥ सुरासुरनराणांचवन्दनीयोयथाहरिः ॥ तथार्होऽयंसर्वलोकेसर्वभूतैकपावनः ॥ १ ॥ देवदासःसदायस्तुदेवकृत्येषुलोलुपः ॥ सचगच्छतिलोकेशोदेवलोकेमहीयते ॥ २ ॥ एतेषामेवलिङ्गानिकारयित्वाचमण्डपम् ॥ शक्त्यायंलभतेनाकंकालस्यनिश्चयंशृणु ॥ ३ ॥ हायनैकंतृणेनैवशरकाण्डेनतच्छतम् ॥ अयुतंत्वन्यकाष्ठेनलक्षंखादिरदारुणा ॥ ४ ॥ कोटिकोटिंचपाषाणैःसुदृढैर्यत्नसंयुतैः ॥ तस्मात्सर्वप्रयत्नेनमण्डपंकारयेद्बुधः ॥ ५ ॥ यावत्कालंवसेत्स्वर्गेनरोमण्डपकारकः ॥ तावत्कालंचहरणेनरोदुर्गतिमाप्नुयात् ॥ ६ ॥ जनानांनिचयेरम्येवस्तूनांक्रयविक्रये ॥ आश्रयेचाध्वगानांचनदीनदसमागमे ॥ ७ ॥ देवानांमण्डपंकृत्वायत्फलंलभतेनरः ॥ तत्फलंसमवाप्नोतिद्विगुणंविप्रमन्दिरे ॥ ८ ॥ अनाथस्यचदीनस्यश्रोत्रियस्यविशेषतः ॥ कारयित्वागृहंरम्यंनरःस्वर्गान्नहीयते ॥ ९ ॥ यइदंशृणुयान्नित्यंपुण्याख्यानमनुत्तमम् ॥ अक्षयंलभतेस्वर्गंप्रासादादेःफलंलभेत् ॥ ११० ॥ धनिनांचेश्वराणांचतथापुण्यवतांपुनः ॥ पाठयित्वापठित्वातुनरःस्वर्गान्नहीयते॥११॥देवानांदासदासीनांसदादेवालयेषुच ॥ पठेद्यस्तुसदाविप्रोमोक्षमार्गंसगच्छति ॥१२॥ नृपाणामीश्वराणांचधनिनांगुणिनांपुरः ॥ पठित्वामोक्षमाप्नोतिश्रवणात्तत्फलंलभेत् ॥ १३ ॥ द्विजाऊचुः ॥ सामान्येकःपरःपुण्योमर्त्यलोकेद्विजोत्तम ॥ सुलभोमर्त्यपूज्यस्तुमुनीनांचतपस्विनाम् ॥ १४ ॥ चातुर्वर्ण्याश्रमाणांचपापपुण्यवतांनृणाम् ॥ गुणागुणवतांचैववर्णावर्णवतांतथा ॥ १५ ॥ व्यासउवाच ॥ सर्वेषामेवभूतानांरुद्राक्षेणयुतोवरः ॥ दर्शनाद्यस्यलोकानांपापराशिःप्रलीयते ॥ १६ ॥ स्पर्शनाद्दिवमश्नातिधारणाद्रुद्रतांव्रजेत् ॥ शिरस्युरसिवाहौचरुद्राक्षंधारयेत्तुयः ॥ १७ ॥ सचेशानसमोलोकेमखेसर्वत्रगोचरः ॥ यत्रतिष्ठत्यसौविप्रस्सदेशःपुण्यवान्भवेत् ॥ १८ ॥ तंदृष्ट्वाप्यथवास्पृष्ट्वानरःपूयेतकल्मषात् ॥ यज्जप्यंतर्पणंदानंस्नानमर्चाप्रदक्षिणम् ॥ १९ ॥ यत्किञ्चित्कुरुतेपुण्यंनिखिलंतदनन्तकम् ॥ तीर्थानांचमहत्तीर्थंरुद्राक्षस्यफलंद्विजाः ॥ १२० ॥ अस्यैवधारणादेहीपापात्पूतोऽतिपुण्यभाक् ॥ गृहीत्वाचाक्षमालांचब्रह्मग्रन्थियुतांशिवाम् ॥ २१ ॥ यज्जप्तंचकृतंदानंस्तोत्रंमन्त्रंसुरार्चनम् ॥ सर्वंचाक्षयतामेतिपापंचक्षयमाव्रजेत् ॥ २२ ॥ मालायालक्षणंब्रूमःश्रूयतांद्विजसत्तमाः ॥ तस्यास्तुलक्षणंज्ञात्वाशैवमार्गंप्रलप्स्यथ ॥ २३ ॥ निर्योनिकीटविद्धंचभग्न

लिङ्गंयथाक्रमम् ॥ अन्योन्यंबीजलग्नंचमालायांपरिवर्जयेत् ॥ २४ ॥ स्वयंचग्रथितायाचश्लथान्योन्यप्रसज्जिता ॥ शूद्रादिग्रथिताऽशुद्धादूरात्तां
परिवर्जयेत् ॥ २५ ॥ मध्यमालग्नकंबीजंजप्तव्यंचयथाक्रमम् ॥ हस्तसम्भ्रमणंनैवमेर्वामर्शंपुनःपुनः ॥ २६ ॥ सङ्ख्यातंयज्जपेन्मन्त्रमसङ्ख्यातंचनि
ष्फलम् ॥ सर्वेषामेवदेवानांजपेन्मन्त्रंस्वमालया ॥ २७ ॥ प्रयतःसकलेतीर्थेकोटिकोटिगुणंभवेत् ॥ शुद्धायामेवभूम्यांतुमेध्यकेवृक्षमूलके ॥ २८ ॥
गोष्ठेचतुष्पथागारेविष्णोर्मन्त्रंशिवस्यच ॥ गणपतेश्चसूरस्यलिङ्गेऽनन्तफलंलभेत् ॥ २९ ॥ शून्यागारेशवस्याग्रेश्मशानेचचतुष्पथे ॥ देवीमन्त्रं
जपेद्यस्तुसद्यस्सिद्ध्यतिसाधकः ॥ १२० ॥ यावद्वावैदिकंमन्त्रंपौराणंचागमोद्भवम् ॥ सर्वंरुद्राक्षमालायामीप्सितार्थप्रदायकम् ॥ २१ ॥ रुद्राक्ष
स्रवजंशुद्धंजलंशिरसिधारयेत् ॥ सर्वस्मात्कल्मषात्पूतःपुण्यंभवतिचाक्षयम् ॥ २२ ॥ रुद्राक्षस्यचप्रत्येकंबीजंप्रत्येकनिर्जरम् ॥ धारयेद्यस्तनौ
मर्त्यःसुराणांसत्तमोभवेत् ॥ २३ ॥ द्विजाऊचुः ॥ रुद्राक्षस्तुकुतोजातःकुतोवामेध्यतांगतः ॥ किमर्थंस्थावरोभूमौकेनैवचप्रचारितः ॥ २४ ॥
व्यासउवाच ॥ पुराकृतयुगेविप्रास्त्रिपुरोनामदानवः ॥ सुराणांचवधंकृत्वाअन्तरिक्षपुरेहिसः ॥ २५ ॥ प्रणाशेसर्वलोकानांस्थिरोब्रह्मवरेण
च ॥ शुश्रावशङ्करोभीमंदेवैरीशोनिवेदितम् ॥ २६ ॥ ततोऽजगवमासज्यबाणमन्तकसन्निभम् ॥ धृत्वातंचजघानाथदृष्टंदिव्येनचक्षुषा ॥२७॥
सपपातमहीपृष्ठेमहोल्केवच्युतोदिवः ॥ घटनव्याकुलाद्रुद्रात्पतिताःस्वेदविन्दवः ॥ २८ ॥ तत्राश्रुबिन्दुतोजातोमहारुद्राक्षकःक्षितौ ॥ अस्यैव
चफलंजीवानजानन्त्यतिगुह्यतः ॥ २९ ॥ ततःकैलासशिखरेदेवदेवंमहेश्वरम् ॥ प्रणम्यशिरसाभूमौस्कन्दोवचनमब्रवीत् ॥ १४० ॥ स्कन्दउवाच ॥
रुद्राक्षस्यफलंनाथज्ञातुमिच्छामितत्त्वतः ॥जप्येऽथधारणेचैवदर्शनेस्पर्शनेऽपिवा ॥४१॥ ईश्वरउवाच॥लक्षंतुदर्शनात्पुण्यंकोटिर्वैस्पर्शनेनच ॥ दश
कोटिफलंपुण्यंधारणाल्लभतेनरः ॥ ४२ ॥ लक्षकोटिसहस्राणिलक्षकोटिशतानिच ॥ जप्त्वास्यलभतेपुण्यंनात्रकार्याविचारणा ॥ ४३ ॥ उच्छि
ष्टोवाविकर्मस्थोयुक्तोवासर्वपातकैः ॥ मुच्यतेसर्वपापेभ्योरुद्राक्षधारणेनवै ॥ ४४ ॥ कण्ठेरुद्राक्षमादायश्वापदोम्रियतेयदि ॥ सोऽपिरुद्रत्वमाप्नो
तिकिंपुनर्मानुषादयः ॥ ४५ ॥ ध्यानधारणहीनोऽपिरुद्राक्षंयदिधारयेत् ॥ सर्वपापविनिर्मुक्तःसयातिपरमांगतिम् ॥ ४६ ॥ कार्तिकेयउवाच ॥
एकवक्त्रंद्वित्रिचतुःपञ्चषड्वक्त्रमेवच ॥ सप्ताष्टनववक्त्रंचदशैकादशवक्त्रकम् ॥ ४७ ॥ रुद्राक्षंद्वादशास्यंचत्रयोदशमुखंतथा ॥ चतुर्दशास्यसंयुक्तंस्वय
मुक्तंचशङ्करम् ॥ ४८ ॥ तेषांचतन्मुखानांचदेवताःकाश्चतद्वद ॥ गुणोवाकीदृशस्तेषांदोषोवाजगदीश्वर ॥ ४९ ॥ यदिमेऽनुग्रहोवास्तिकथयस्वय
थार्थतः ॥ १५० ॥ ईश्वरउवाच ॥ एकवक्त्रःशिवःसाक्षाद्ब्रह्महत्यांव्यपोहति ॥ तस्माद्धुधारयेद्देहेसर्वपापक्षयायच ॥ ५१ ॥ शिवलोकं

सगच्छेच्चशिवेनसहमोदते ॥ महतापुण्ययोगेनहरानुग्रहकारणात् ॥ ५२ ॥ एकवक्त्रलभन्मत्यः कैलासचपडानन ॥ देवदेवोद्विवक्त्रंचयस्तुधा
रयतेनरः ॥ ५३ ॥ सर्वपापंक्षयंयानियद्धह्यंगोवधादिकम् ॥ स्वर्गंचाक्षयमाप्नोतिद्विवक्त्रधारणात्ततः ॥ ५४ ॥ त्रिवक्त्रमनलभस
क्षाद्यस्यदेहेप्रतिष्ठति ॥ तस्यजन्मार्जितंपापंदहत्यग्निरिवेन्धनम् ॥ ५५ ॥ स्त्रीहत्याब्रह्महत्याभ्यांबहूनांचैवहत्यया ॥ यत्पापंस्ला
तेमर्त्यःसर्वंनश्यनितत्क्षणात् ॥ ५६ ॥ यत्फलंवह्निपूजायामग्निकार्येघृताहुतौ ॥ तत्फलंलभतेधीरःस्वर्गंचानन्तमश्नुते ॥ ५७ ॥
त्रिवक्त्रंधारयेद्यस्तुसचब्रह्मसमोभुवि ॥ निचितंदुष्कृतंसर्वंदहेज्जन्मनिजन्मनि ॥ ५८ ॥ नचोदरेभवेद्रोगोनचैवापटुतांव्रजेत् ॥ पराजयंन
लभतेनाग्निनादह्यतेगृहम् ॥ ५९ ॥ एतान्यन्यानिसर्वाणिवज्रादेश्चनिवारणम् ॥ नाशुभंविद्यतेकिञ्चित्त्रिवक्त्रस्यतुधारणात् ॥ १६० ॥
चतुर्वक्त्रःस्वयंब्रह्मायस्यदेहेप्रतिष्ठति ॥ सभवेत्सर्वशास्त्रज्ञोद्विजोवेदविदांवरः ॥ ६१ ॥ सर्वधर्मार्थतत्त्वज्ञःस्मार्तःपौराणिकोभवेत् ॥
यत्पापंनरहत्यायांबहुसत्त्वेषुवेश्मसु ॥ ६२ ॥ तत्सर्वंदहतेशीघ्रंचतुर्वक्त्रस्यधारणात् ॥ महेशस्तुष्यतेनित्यंभूतानामधिपोभवेत् ॥ ६३ ॥
सद्योजातस्तथेशानस्तत्पुरुषोऽघोरएवच ॥ वामदेवइमेदेवावक्त्रैःपञ्चभिराश्रिताः ॥ ६४ ॥ अतःसर्वत्रभूयिष्ठाःपञ्चवक्त्राधरातले ॥
रुद्रस्यात्मजरूपोऽयंतस्मात्तंधारयेद्बुधः ॥ ६५ ॥ कल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ तावत्कालंशिवस्याग्रेपूजनीयःसुरासुरैः ॥
॥ ६६ ॥ सार्वभौमोभवेद्भूमौशर्वतेजाःशिवालये ॥ तस्मात्सर्वप्रयत्नेनपञ्चवक्त्रंतुधारयेत् ॥ ६७ ॥ षड्वक्त्रंकार्तिकेयन्तुधारय
न्दक्षिणेभुजे ॥ ब्रह्महत्यादिभिःपापैर्मुच्यतेनात्रसंशयः ॥ ६८ ॥ स्कन्दस्यसदृशःशूरःकल्पान्तेसमुपस्थिते ॥ नात्रपराजयंचैतिगुणानामाक
रोभुवि ॥ ६९ ॥ कुमारत्वमवाप्नोतियथागौरीशनन्दनः ॥ ब्राह्मणोभूपपूज्यश्चक्षत्रियोलभतेजयम् ॥ १७० ॥ वैश्याःशूद्रादयोवर्णाःसदैश्वर्यप्रपूरि
ताः ॥ तस्यैववरदागौरीमातेवसुलभाभवेत् ॥ ७१ ॥ ततोभुजवलादेवविश्वतेजाभवेन्नरः ॥ वाग्मीधीरस्सभायांचनृपवेश्मनिसंसदि ॥ ७२ ॥ नच
कातरतामेतिनैवभङ्गोभवेद्ध्रुवम् ॥ एतान्यन्यानिसर्वाणिषड्वक्त्रस्यैवधारणात् ॥ ७३ ॥ सप्तवक्त्रोमहासेनस्त्वनन्तोनामनागराट् ॥ अस्यप्रत्ये
कवक्त्रेतुप्रतिनागाव्यवस्थिताः ॥ ७४ ॥ अनन्तःकर्कटश्चैवपुण्डरीकोऽथतक्षकः ॥ विषोल्बणश्चकारीषःशङ्खचूडश्चसप्तमः ॥ ७५ ॥ एतेनागामहा
वीर्याःसप्तवक्त्रेव्यवस्थिताः ॥ अस्यधारणमात्रेतुविषंनक्रमतेनरौ॥७६॥ हरश्चपरमप्रीतोभवेन्नागेश्वरेयथा॥प्रीत्यास्यसर्वपापानिक्षयंयान्तिदिनेदिने
॥ ७७ ॥ ब्रह्महत्यासुरापानंस्तेयादिगुरुतल्पजम् ॥ यत्पापंलभतेमर्त्यःसर्वंनश्यतितत्क्षणात् ॥ ७८ ॥ देवस्यसदृशभोग्यंत्रैलोक्येनिश्चितंलभेत् ॥

अष्टवक्रोमहासेनःसाक्षाद्देवोविनायकः ॥ ७९ ॥ अस्यैवधारणादेवयत्पुण्यंतच्छृणुष्वमे ॥ जन्मजन्मनमूर्खःस्यान्नातुरोनचनष्टधीः ॥ १८० ॥
अविघ्नंसर्वकार्येषुतस्यैवसततंभवेत् ॥ नैपुण्यंलिपिकार्येषुमहाकार्येषुकौशलम् ॥ ८१ ॥ सर्वारम्भादिकार्येषुक्षमंतस्यदिनेदिने ॥ अर्धकूटंतुलाकू
टंसर्वकूटंतथैवच ॥ ८२ ॥ शिश्नोदरकरेणैवसंस्पृशेद्वागुरुस्त्रियम् ॥ एवमादीनिसर्वाणिहन्तिपापानिसर्वथा ॥ ८३ ॥ अक्षयंत्रिदिवंभुक्त्वामुक्तोया
तिपरांगतिम् ॥ गुणान्येतानिसर्वाणिअष्टवक्त्रस्यधारणात् ॥ ८४ ॥ नवास्यंभैरवंप्रोक्तंधारयेद्यस्तुबाहुतः ॥ कपिलंमुक्तिदंधृत्वामत्तुल्यबलोभ
वेत् ॥ ८५ ॥ लक्षकोटिसहस्राणिब्रह्महत्याःकरोतियः ॥ ताःसर्वादहतेशीघ्रंनववक्रस्यधारणात् ॥ ८६ ॥ सुरलोकेसदादेवैःपूजितोरघवायथा ॥
हरवद्धरवेश्मस्थोगणेशोनात्रसंशयः ॥ ८७ ॥ पन्नगाश्वविनश्यन्तिदशवक्रस्यधारणात् ॥ वक्रेचैकादशेवत्सरुद्राश्चैकादशस्मृताः ॥ ८८ ॥
शिखायांधारयेन्नित्यंतस्यपुण्यफलंशृणु ॥ अश्वमेधसहस्राणियज्ञकोटिशतानिच ॥ ८९ ॥ गवांशतसहस्रस्यसम्यग्दत्तस्ययत्फलम् ॥ तत्फलंशीघ्र
माप्नोतिवक्त्रैकादशधारणात् ॥ १९० ॥हरस्यसदृशोलोकेपुनर्जन्मनविद्यते ॥ रुद्राक्षंद्वादशास्यंयःकण्ठदेशेतुधारयेत् ॥ ९१ ॥ आदित्यस्तुष्यतेनि
त्यंद्वादशास्येव्यवस्थितः ॥ गोमेधंनरमेधंचकृत्वायत्फलमश्नुते ॥ ९२ ॥ तत्फलंशीघ्रमाप्नोतिवज्रादेश्चनिवारणम् ॥ नैववह्नेर्भयंचैवनचव्याधिः
प्रवर्तते ॥ ९३ ॥ अर्थलाभंसुखंभुङ्क्तेईश्वरोनदरिद्रता ॥ हस्त्यश्वनरमार्जारमूपकाञ्छशकांस्तथा ॥ ९४ ॥ व्यालदंष्ट्रिशृगालादीन्हत्वाव्याघातयत्य
पि ॥ मुच्यतेनात्रसन्देहोवक्त्रद्वादशधारणात् ॥९५॥ वक्रत्रयोदशोरुद्रोरुद्राक्षःप्राप्यतेयदि ॥ शन्तमःसतुविज्ञेयःसर्वकामफलप्रदः ॥९६॥ सुधारसा
यनंचैवधातुवादश्चपादुका ॥ सिध्यन्तितस्यवैसर्वेभाग्ययुक्तस्यषण्मुख ॥ ९७ ॥ मातृपितृस्वसृभ्रातृगुरून्वाथनिहत्यच ॥ मुच्यतेसर्वपापेभ्यस्त्रयोद
शास्यधारणात् ॥ ९८ ॥ अक्षयंलभतेस्वर्गंयथादेवोमहेश्वरः ॥ चतुर्दशमुखंवत्सरुद्राक्षंयदिधारयेत् ॥ ९९ ॥ सततंमूर्ध्निबाहौवाशक्तिपिण्डंशिव
स्यच॥किंपुनर्बहुनोक्तेनवर्णितेनपुनःपुनः ॥ पूज्यतेसततंदेवैःप्राप्यतेपुण्यगौरवात् ॥२००॥ कार्तिकेयउवाच ॥ भगवञ्श्रोतुमिच्छामिवक्रेवक्रेयथा
विधि ॥ न्यसनंकेनमन्त्रेणधारणंवाकथंवद ॥ १ ॥ ईश्वरउवाच ॥ शृणुषण्मुखतत्त्वेनवक्रेवक्रेयथाविधि ॥ अमन्त्रोच्चारणादेवगुणाह्येतेप्रकीर्तिताः
॥ २ ॥ यःपुनर्मन्त्रसंयुक्तंधारयेद्भुविमानवः ॥गुणास्तस्यमहत्त्वंचकथितुंनैवशक्यते ॥३॥ इदानींमन्त्राआदिश्यन्ते ॥ ॐ रुद्रएकवक्रस्य॥ॐ खंद्वि
वक्रस्य॥ॐवुंत्रिवक्रस्य॥ॐह्रींचतुर्वक्रस्य॥ॐह्रांपञ्चवक्रस्य॥ ॐहूंषड्वक्रस्य॥ॐह्रःसप्तवक्रस्य॥ॐकंअष्टवक्रस्य॥ॐजूंनववक्रस्य॥ॐक्षंदशवक्रस्य॥ॐश्रीं
एकादशवक्रस्य॥ॐह्रींद्वादशवक्रस्य॥ॐक्षौंत्रयोदशवक्रस्य॥ॐत्रांचतुर्दशक्रस्य॥एवंमन्त्रायथाक्रमंन्यस्तव्याः ॥ शिरस्युरसिमालांचगृहीत्वायोव्रजेन्न

रः॥पदेपदेऽश्वमेधस्यफलमाप्नोतिनान्यथा॥४॥सर्वेषामपिवक्त्राणांधारणेमत्समोभवेत् ॥तस्मात्सर्वप्रयत्नेनरुद्राक्षंपुत्रधारय॥५॥ धारयित्वातुरुद्राक्षं म्रियतेयः क्षितौनरः ॥ सयातिमत्पुरंरम्यंसर्वदेवैःप्रपूजितः ॥ ६ ॥ मरुदेशेपुरावत्सवाणिज्यायकिलस्थले ॥ गच्छन्वणिक्सुतस्तात्ततरौप्रेताप्रपीडितः ॥ ७ ॥ नरीनर्तिततःप्रेताद्विजेनपरमैक्षिच ॥ ८ ॥ द्विजउवाच॥कात्वंनृत्यसिदीनासिसंवृताजीर्णवाससा ॥९॥ ईश्वरउवाच ॥ अथसाचद्विजं प्राहदेवदूतान्मयाश्रुतम् ॥ अस्यचारुनरस्यैववज्रपातेनसाम्प्रतम् ॥ २१०॥निश्चितंनिधनंविप्रमद्भर्त्तातुभविष्यति॥एतस्मिन्नन्तरेनाकाद्वज्रंतस्यशिरोपरि ॥ ११ ॥ अपतत्सपपातोर्व्यांरुद्राक्षस्यार्धखण्डके ॥ ततोममपुरात्पुत्रविमानंचापतद्द्रुतम् ॥ १२ ॥ समारुह्यततःश्रीमांस्तत्रतिष्ठतिसश्चिरम् ॥ ममांशकंसमासाद्यईश्वरःकोधनीभवेत् ॥ १३ ॥ एवंरुद्राक्षखण्डेचमृतस्यसुगतिःसुत ॥ ज्ञानेनधारिणःपुंसःफलंवक्तुंनशक्नुमः ॥ १४ ॥ सशैवोवाभवेच्छाक्तोगाणपत्योऽथसौरकः ॥ योदधातिमृतोमालामेकंरुद्राक्षकंतुवा ॥ १५ ॥ यःपठेत्पाठयेद्वापिश्रावयेच्छृणुतेऽपिवा ॥ सर्वपापात्प्रमुक्तात्मासुखंस्वर्गंलभेत्क्रमात् ॥ २१६ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेरुद्राक्षमाहात्म्यंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥

स्कन्दउवाच ॥ अपरस्यापिपृच्छामिफलस्यपूततांतरोः ॥ सर्वलोकहितार्थायवदनोजगदीश्वर ॥ १ ॥ ईश्वरउवाच ॥ धात्रीफलंपरं पूतंसर्वलोकेषुविश्रुतम् ॥ यस्यरोपान्नरोनारीमुच्यतेजन्मबन्धनात् ॥ २ ॥ पावनंवासुदेवस्यफलंप्रीतिकरंशुभम् ॥ अस्यभक्षणमात्रेणमुच्यते सर्वकल्मषात् ॥ ३ ॥ भक्षणेचभवेदायुःपानेवैधर्मसञ्चयः ॥ अलक्ष्मीनाशनंस्नानेसर्वैश्वर्यमवाप्नुयात् ॥४॥ यस्मिन्गृहेमहासेनधात्रीतिष्ठतिसर्वदा ॥ तस्मिन्गृहेनगच्छन्तिप्रेतादैतेयराक्षसाः ॥ ५ ॥ नगङ्गानगयाचैवनकाशीनचपुष्करम् ॥ एकैवहिनृणांधात्रीसम्प्राप्तेहरिवासरे ॥६॥ एकादश्यांपक्षयुगे धात्रीस्नानंकरोतियः ॥ सर्वपापक्षयंयातिविष्णुलोकेमहीयते ॥ ७ ॥ धात्रीफलंसदासेव्यंभक्षणेस्नानएवच ॥ नियतंपारणेविष्णोःस्नानमात्रेहरेर्दिने ॥८॥संयतेपारणेचैवाधात्र्येकस्पर्शनेनरः॥भुक्त्वातुलङ्घयेद्यस्तुएकादश्यांसितासिते॥९॥एकेनैवोपवासेनकृतेनतुषडानन ॥सप्तजन्मकृतात्पापान्मुच्यते नात्रसंशयः॥१०॥अक्षयंलभतेस्वर्गंविष्णुसायुज्यमाव्रजेत्॥तस्मात्सर्वप्रयत्नेनधात्रीव्रतंसमाचर॥११॥धात्रीद्रवेणसततंयस्यकेशाःसुरञ्जिताः॥नपिबेत्सपुनर्मातुःस्तनंकश्चित्षडानन ॥ १२ ॥ धात्रीदर्शनसंस्पर्शान्नाम्नउच्चारणेऽपिवा ॥ वरदःसम्मुखोविष्णुःसन्तुष्टोभवतिप्रियः ॥ १३ ॥ धात्रीफलंचयत्रास्तेतत्रतिष्ठतिकेशवः ॥ तत्रब्रह्मास्थिरापद्मातस्मात्तांतुगृहेन्यसेत् ॥ १४ ॥ अलक्ष्मीर्नश्यतेतत्रयत्रधात्रीप्रतिष्ठति ॥ सन्तुष्टास्सर्वदेवाश्चनत्यजन्तिक्षणंमुदा ॥ १५ ॥ धात्रीफलेननैवेद्यंयोददातिमहाधनम् ॥ तस्यतुष्टोभवेद्विष्णुर्नान्यैःक्रतुशतैरपि ॥ १६ ॥ स्नात्वाधात्रीद्रवेणैव

पूजयेद्यस्तुमाधवम् ॥ सोऽभीष्टफलमाप्नोतियद्यामनसिवर्तते ॥ १७ ॥ तथैवलक्षणंस्मृत्वापूजयित्वाफलेनतु ॥ सुवर्णशतसाहस्रंफलमेतिनरोत्तमः ॥ १८ ॥ यागतिर्ज्ञानिनांस्कन्दमुनीनांयोगसेविनाम् ॥ गतिंतांसमवाप्नोतिधात्रीसेवारतोनरः ॥ १९ ॥ तीर्थसेवाभिगमनेव्रतैश्चविविधैस्तथा ॥ सागतिर्लभ्यतेपुंसांधात्रीफलसुसेवया ॥ २० ॥ प्रीतिश्चसर्वदेवानांदेवानांनोगणस्यच ॥ सम्मुखावरदास्नानेधात्रीफलनिषेवणे ॥ २१ ॥ ग्रहादुष्टाश्च येकेचिदुग्राश्चदैत्यराक्षसाः ॥ सर्वेनदुष्टतांयान्तिधात्रीफलसुसेवनात् ॥ २२ ॥ सर्वयज्ञेषुकार्येषुशस्तंचामलकीफलम् ॥ सर्वदेवस्यपूजायांवर्जयित्वारविंसुत ॥ २३ ॥ तस्माद्रविदिनेतातसप्तम्यांचविशेषतः ॥ धात्रीफलानिसततंदूरतःपरिवर्जयेत् ॥ २४ ॥ यस्तुस्नातितथाऽश्नातिधात्रींचरविवासरे ॥आयुर्वित्तंकलत्रंचसर्वंतस्यविनश्यति॥२५॥सङ्क्रान्तौचभृगोर्वारेषष्ठ्यांप्रतिपदिध्रुवम्॥नवम्यांचाप्यमायांचधात्रींदूरात्परित्यजेत् ॥२६॥ सङ्क्रान्त्यांतुभवेद्रोगीअलक्ष्मीर्भृगुवासरे ॥ अनपत्यंयदालक्ष्म्यांनवम्यामायुषःक्षयः ॥ दशधात्रीसमायोगात्सर्वनाशंविनिर्दिशेत् ॥ २७ ॥ नासिकाकर्णतुण्डेषुमृतस्यचिकुरेषुवा ॥ तिष्ठद्धात्रीफलंयस्यसयातिविष्णुमन्दिरम् ॥ २८ ॥ धात्रीसम्पर्कमात्रेणमृतोयात्यच्युतालयम् ॥ सर्वपापक्षयस्तस्यस्वर्गंयातिरथेनतु ॥ २९ ॥ धात्रीद्रवंनरोलिप्त्वायस्तुस्नानंसमाचरेत् ॥ पदेपदेऽश्वमेधस्यफलंप्राप्नोतिधार्मिकः ॥ ३० ॥ अस्यदर्शनमात्रेणयेवैपापिष्ठजन्तवः ॥ सर्वेतेप्रपलायन्तेग्रहादुष्टाश्चदारुणाः ॥ ३१ ॥ पुरैकःपुल्कसःस्कन्दमृगयार्थंवनंगतः ॥ मृगपक्षिगणान्हत्वातृषयापरिपीडितः ॥ ३२ ॥ क्षुधयाऽमलकीवृक्षंपुरःपीनफलान्वितम् ॥ दृष्ट्वासंरुह्यसहसाचखादफलमुत्तमम् ॥ ३३ ॥ ततोदैवात्सवृक्षाग्रान्निपपातमहीतले ॥ वेदनागाढसंविद्धःपञ्चत्वमगमत्तदा ॥ ३४ ॥ ततःप्रेतगणाःसर्वेरक्षोभूतगणास्तथा ॥ तनुवोढुंमुदासर्वेयेवैशमनसेवकाः ॥ ३५ ॥ नशक्नुवन्तिचाण्डालंमृतंद्रष्टुंमहाबलाः ॥ अन्योन्यंविग्रहस्तेषांममायमितिभाषताम् ॥ ३६ ॥ ग्रहीतुंचाप्रिनेतुंचनशक्तास्तेपरस्परम् ॥ ततस्तेतुसमालोक्यगतांमुनिगणान्प्रति ॥ ३७ ॥ प्रेताऊचुः ॥ किमर्थंमुनयोधीगश्चाण्डालंपापकारिणम् ॥ प्रेक्षितुंनवयंशक्तानचापियमसेवकाः ॥ ३८ ॥ म्रियन्तेपातितायेचस्थिरैर्युद्धपराङ्मुखाः ॥ साहसैःपातिताभीतावज्राग्निकाष्ठपीडिताः ॥ ३९ ॥ सिंहव्याघ्रहतामर्त्याव्याघ्रैर्वाजलजन्तुभिः ॥ जलस्थलस्थिताःप्रेतावृक्षपर्वतपातिताः ॥ ४० ॥ पशुपक्षिहतायेचकारागारेगरेमृताः ॥ आत्मघातमृतायेचश्राद्धादिकर्मवर्जिताः ॥ ४१ ॥ गूढकर्ममृताधूर्तागुरुविप्रनृपद्विषः ॥ पाषण्डाःकौलिकाःक्रूरागरदाःकूटसाक्षिणः ॥ ४२ ॥ आशौचान्नस्यभोक्तारःप्रेतभोग्यानसंशयः ॥ ममायमितिभाषन्तोनेतुंतंचनशक्नुमः ॥ ४३ ॥ आदित्यइवदुष्प्रेक्ष्यःकिंवाकस्यप्रभावतः ॥ ४४ ॥ मुनयऊचुः ॥ अनेनभक्षितंप्रेताःपक्वंचामलकीफलम् ॥ तत्सङ्गंया

न्तितस्यैवफलानिप्रचुराणिच ॥ ४५ ॥ तेनैवकारणेनायंदुष्प्रेक्ष्योभवतांध्रुवम् ॥ वृक्षाग्रपतितस्याथप्राणःस्नेहान्नचत्यजेत् ॥ ४६ ॥ नायंवारणसूर्य
स्यनचान्येपापकारिणः ॥ धात्रीभक्षणमात्रेणपापात्पूतोव्रजेद्दिवम् ॥ ४७ ॥ प्रेताऊचुः ॥ पृच्छामोवोह्यविज्ञानान्नवयंनिन्दकाःक्वचित्॥विष्णुलोका
द्विमानंतुयावन्नैवात्रगच्छति ॥ ४८ ॥ उच्यतांमुनिशार्दूलावोद्भुतंमनसिस्थितम् ॥ यावद्द्विजानघोषन्तिवेदमन्त्रादिकल्पितम् ॥ ४९ ॥ घोष्यन्तेयत्र
वेदाश्चमन्त्राणिविविधानिच ॥ पुराणस्मृतयोयत्रक्षणंस्थातुंनशक्नुमः ॥ ५० ॥ यज्ञहोमजपस्थानदेवतार्चनकर्मणाम् ॥ पुण्तोवैनतिष्ठामस्तस्मा
द्वृत्तंसमुच्यताम् ॥ ५१ ॥ किंवैकृत्वाप्रेतयोनिंलभन्तेहिनराद्विजाः ॥ श्रोतुमिच्छामहेसम्यक्कथंवैविकृतंवपुः ॥ ५२ ॥ द्विजाऊचुः ॥ शीतवातात
पक्लेशैःक्षुत्पिपासाविशेषकैः ॥अन्यैरपिचदुःखैर्येपीडिताःकूटसाक्षिणः ॥ ५३ ॥ वधबन्धप्रमीताश्चप्रेतास्तेनिरयंगताः ॥ छिद्रान्वेषपरायेचद्विजानां
कर्मघातिनः ॥ ५४॥ तथैवचगुरूणांचतेप्रेताश्चापुनर्भवाः ॥ दीयमानेद्विजाग्र्येतुदातारंप्रतिषिध्यति ॥ ५५ ॥ चिरंप्रेतत्वमाश्रित्यनरकान्ननिवर्तते॥
परस्यवाऽत्मनोवाग्गांकृत्वापीडनवाहने ॥ ५६ ॥ नपालयन्तियेमूढास्तेप्रेताःकर्मजाभुवि ॥ हीनप्रतिज्ञकाःसत्यास्तथाभग्नव्रतानराः ॥ ५७ ॥ नलि
नीदलभुक्ताश्चतेप्रेताःकर्मजाभुवि ॥ विक्रीणन्तिसुतांशुद्धांस्त्रियंसाध्वीमकण्टकाम् ॥५८॥ पितृव्यमातुलादेश्चतेप्रेताःकर्मजाभुवि ॥ एतेचान्येचबहवः
प्रेताजाताःस्वकर्मभिः ॥ ५९ ॥ प्रेताऊचुः ॥ नभवन्तिकथंप्रेताःकर्मणाकेनवाद्विजाः ॥ हितायतूर्णंवदनःसर्वलोकहितंपरम् ॥६०॥ द्विजाऊचुः ॥
येनचैवकृतंस्नानंजलेतीर्थस्यधीमता ॥ नमस्कृतंपरंलिङ्गंनप्रेतोजायतेनरः ॥ ६१ ॥ एकादश्यामुपोष्यैवद्वादश्यांचविशेषतः ॥ पूजयित्वाहरिंम
र्त्याःप्रेतत्वंनव्रजन्तिवै ॥ ६२ ॥ वेदाक्षरप्रसूक्तैश्चस्तोत्रमन्त्रादिभिस्तथा ॥ देवानांपूजनेरक्तानवैप्रेताभवन्तिते ॥ ६३ ॥ श्रुत्वापौराणिकंवाक्यं
दिव्यंचधर्मसंहितम् ॥ पाठयित्वापठित्वाचपिशाचत्वंनगच्छति ॥ ६४ ॥ व्रतैश्चविविधैःपूताःपद्माक्षधारणैस्तथा ॥ जप्त्वापद्माक्षमालायांप्रेतत्वं
नैवगच्छति ॥ ६५ ॥ धात्रीफलद्रवैःस्नात्वानित्यंतद्भक्षणेरताः ॥ तेनविष्णुंसुसम्पूज्यनगच्छन्तिपिशाचताम् ॥ ६६ ॥ प्रेताऊचुः ॥ सतांसन्द
र्शनात्पुण्यमितिपौराणिकाविदुः॥ तस्माद्वोदर्शनंजातंहितंनःकर्तुमर्हथ ॥ ६७ ॥ प्रेतभावाद्यथामुक्तिःसर्वेषांनोभविष्यति ॥ ब्रूतोपदेशकंधीरायुष्माकं
शरणागताः॥६८॥ईश्वरउवाच॥ततोदयालवःसर्वेतानूचुर्द्विजसत्तमाः॥६९॥द्विजाऊचुः॥धात्रीणांभक्षणंशीघ्रंकुर्वतांमुक्तिहेतवे ॥७०॥ प्रेताऊचुः॥धात्री
णांदर्शनेविप्रावयंस्थातुंनशक्नुमः ॥ कथंतेषांफलानांचशक्तावैभक्षणेऽधुना ॥ ७१ ॥ द्विजाऊचुः ॥ अस्माकंवचनेनात्रधात्रीणांभक्षणंशिवम् ॥ फलि
ष्यतिपरंलोकंतस्माद्गन्तुंसमर्हथ ॥७२॥ ईश्वरउवाच॥अथतेभ्योवरंलब्ध्वाधात्रीवृक्षंपिशाचकैः॥समारुह्यफलंप्राप्यभक्षितंलीलयातदा॥७३॥ततोदेवा

लयात्तूर्णंरथःपीनःसुशोभनः ॥ आगतस्तंसमारुह्यसचाण्डालपिशाचकाः ॥ गतास्तेत्रिदिवंपुत्रव्रतैर्यज्ञैःसुदुर्लभम् ॥ ७४॥ स्कन्दउवाच ॥ धात्रीभ
क्षणमात्रेणपुण्यंलब्ध्वादिवंगताः ॥ तद्रक्षिणःकथंस्वर्गंनगच्छन्तिनरादयः ॥ ७५ ॥ ईश्वरउवाच ॥ पूर्वंतेज्ञानलोपाच्चनजानन्तिहिताहितम् ॥ उ
च्छिष्टंश्वभिरुत्स्पृष्टंश्लेष्ममूत्रंशकृत्तथा ॥७६॥ मत्वाचमोहिताःश्रेष्ठंप्रेतादन्तिसदैवहि ॥ शकृच्छौचजलंवान्तंबलिंसूकरकुक्कुटैः ॥७७॥ मृतकेसूतके
जप्यंनत्यक्तंयेनकेनचित् ॥ तस्यान्नंचजलंप्रेताःखादन्तितुसदैवहि ॥ ७८ ॥ दुर्दान्तागृहिणीयस्यशुचिसंयमवर्जिता ॥ गुरुनिःसारितादुष्टासन्तिप्रे
ताश्चतत्रवै ॥ ७९ ॥ अपुङ्गवाःकुलैर्जात्याबलोत्साहविवर्जिताः ॥ बधिराश्चकृशादीनाःपिशाचाःकर्मजातयः ॥ ८० ॥ क्षणंचमङ्गलंनास्तिदुः
खैर्देहयुताभृशम् ॥तैनैवविकृताकाराःसर्वभोगविवर्जिताः ॥ ८१ ॥ नग्नकारोगसन्तप्तामृतारूक्षामलीमसाः ॥ एतेचान्येचदुःखार्ताःसदैवप्रेनजातयः
॥ ८२ ॥ तेनकर्मविपाकेनजायन्तेकाममीदृशाः ॥ पितृमातृगुरूणांचदेवनिन्दापराश्चये ॥ ८३ ॥ पाषण्डाःकौलिकाःपापास्तेप्रेताःकर्मजाभुवि ॥
गलपाशैर्जलैःशस्त्रैर्गरलैरात्मघातकाः ॥ ८४ ॥ इहलोकेचतेप्रेताश्चाण्डालादिषुसम्भवाः॥ अन्त्यजाःपतिताश्चैवपापरोगमृताश्चये ॥ ८५ ॥ अन्त्य
जैर्घातितायुद्धेतेप्रेतानिश्चिताभुवि ॥ महापातकसंयुक्ताविवाहेचबहिष्कृताः ॥ ८६ ॥ शौर्यात्साहसिकायेचतेप्रेताःकर्मजाभुवि ॥ राजद्रोहकरायेच
पितॄणांद्रोहचिन्तकाः ॥८७॥ ध्यानाध्ययनहीनाश्चव्रतैर्देवार्चनादिभिः ॥ अमन्त्राःस्नानहीनाश्चगुरुस्त्रीगमनेरताः॥८८॥तथैवचान्त्यजस्त्रीषुदुर्गतासु
चसङ्गताः ॥ मृताःक्रूरोपवासेनम्लेच्छेदेशस्थितामृताः ॥ ८९ ॥ म्लेच्छभाषायुताःशूद्रास्तथाम्लेच्छोपजीविनः ॥ अनुवर्तन्तियेम्लेच्छान्स्त्रीधनैरुप
जीवकाः ॥ ९० ॥ स्त्रियोयैश्चनरक्ष्यन्तेतेप्रेतानात्रसंशयः ॥ क्षुधासन्तप्तदेहंतुश्रान्तंविप्रंगृहागतम् ॥ ९१ ॥ गुणपुण्यातिथिंत्यक्त्वापिशाचत्वंव्रज
न्तिते ॥ विक्रीणन्तिचवैगाश्चम्लेच्छेषुचगवाशिषु ॥ ९२ ॥ प्रेतलोकेसुखंस्थित्वातेचयान्त्यपुनर्भवम् ॥ अशौचाभ्यन्तरेयेचजाताश्चपशवोमृताः ॥
॥ ९३ ॥ चिरंप्रेताःपिशाचाश्चमृताजाताःपुनःपुनः ॥ जातकर्ममुखैश्चैवसंस्कारैर्येविवर्जिताः ॥ ९४ ॥ एकैकस्मिंश्चसंस्कारेप्रेतत्वंपरिहीयते ॥ स्ना
नसन्ध्यासुरार्चाभिर्वेदयज्ञव्रताक्षरैः ॥ ९५ ॥ आजन्मवर्जिताःपापास्तेप्रेताश्चापुनर्भवाः ॥ भोजनोच्छिष्टपात्राणियानिदेहमलानिच ॥ ९६ ॥
निपातयन्तियेतीर्थेतेप्रेतानात्रसंशयः ॥ दानमानार्चनैर्नैवयैर्विप्राभुवितर्पिताः ॥ ९७ ॥ पितरोगुरवश्चैवप्रेतास्तेकर्मजाभृशम् ॥ पतिंत्यक्त्वाच
यानार्योवसन्तिचेतरैर्जनैः ॥ ९८ ॥ प्रेतलोकेचिरंस्थित्वाजायन्तेचान्त्ययोनिषु ॥ पतिंचवञ्चयित्वायाविषयेन्द्रियमोहिताः ॥ ९९ ॥
मिष्टंचादन्तियाःपापास्तास्तुप्रेताश्चिरंभुवि ॥ विण्मूत्रभक्षकायेचब्रह्मस्वभक्षणेरताः ॥ १०० ॥ अभक्ष्यभक्षकाश्चान्येतेप्रेताश्चापुनर्भवाः ॥ बलाद्ये

परवस्तूनिगृह्णन्तिनददत्यपि ॥ १ ॥ अतिथीनवमन्यन्तेप्रेतानिरयमास्थिताः ॥ तस्मादामलकींभुक्त्वास्नात्वातस्यद्रवेणच ॥ २ ॥
सर्वपापाद्विनिर्मुक्तोविष्णुलोकेमहीयते ॥ तस्मात्सर्वप्रयत्नेनसेवयामलकींशिवाम् ॥ ३ ॥ यइदंशृणुयान्नित्यंपुण्याख्यानमिदंशुभम् ॥ सर्व
पापप्रपूतात्माविष्णुलोकेमहीयते ॥ ४ ॥ श्रावयेत्सततंलोकेवैष्णवेषुविशेषतः ॥ सयातिविष्णुसायुज्यमितिपौराणिकाविदुः ॥ ५ ॥
स्कन्दउवाच ॥ महीरुहफलंज्ञातंप्रपूतंद्विविधंप्रभो ॥ इदानींश्रोतुमिच्छामिपत्रंपुष्पंसुमोक्षदम् ॥ ६ ॥ ईश्वरउवाच ॥ सर्वेभ्यःपत्र
पुष्पेभ्यःसत्तमातुलसीशिवा ॥ सर्वकामप्रदाशुद्धावैष्णवीविष्णुसुप्रिया ॥ ७ ॥ भुक्तिमुक्तिप्रदामुख्यासर्वलोकपराशुभा ॥ यामाश्रित्यगताः
स्वर्गमक्षयंमुनिसत्तमाः ॥ ८ ॥ हितार्थंसर्वलोकानांविष्णुनारोपितापुरा ॥ तुलसीपत्रपुष्पंचसर्वधर्मप्रतिष्ठितम् ॥ ९ ॥ यथाविष्णोःप्रि
यालक्ष्मीर्यथाहंप्रियएवच ॥ तथेयंतुलसीदेवीचतुर्थोनोपपद्यते ॥ ११० ॥ तुलसीपत्रमेकंतुशतहेमफलप्रदम् ॥ नान्यैःपुष्पैस्तथापत्रैर्नान्यैर्गन्धा
नुलेपनैः ॥ ११ ॥ तुष्यतेदैत्यहाविष्णुस्तुलस्याश्चदलैर्विना ॥ अनेनपूजितोयेनहरिर्नित्यंपराशया ॥ १२ ॥ तेनदत्तंहुतंज्ञातंकृतंयज्ञव्रतादिकम् ॥
जन्मजन्मनिभासित्वंसुखंभाग्यंयशःश्रियम् ॥ १३ ॥ कुलंशीलंकलत्रंचपुत्रंदुहितरंतथा ॥ धनंराज्यमरोगत्वंज्ञानंविज्ञानमेवच ॥ १४ ॥ वेदवेदाङ्ग
शास्त्रंचपुराणागमसंहिताः ॥ सर्वंकरगतंमन्येतुलस्याभ्यर्चनेहरेः ॥ १५ ॥ यथागङ्गापवित्राङ्गीसुरलोकेविमोक्षदा ॥ यथाभागीरथीपुण्यातथेयंतुल
सीशिवा ॥ १६ ॥ किंचगङ्गाजलेनैवकिंचपुष्करसेवया ॥ तुलसीदलमिश्रेणजलेनैवप्रमोद्यते ॥ १७ ॥ माधवःसम्मुखोयस्यजन्मजन्मसुधीमतः॥
तस्यश्रद्धाभवेच्छ्रुत्वातुलस्याहरिमर्चितुम् ॥ १८ ॥ योमञ्जरीदलैरेवतुलस्याविष्णुमर्चयेत् ॥ तस्यपुण्यफलंस्कन्दकथितुंनैवशक्यते ॥ १९ ॥
तत्रकेशवसान्निध्यंयत्रास्तितुलसीवनम् ॥ तत्रब्रह्माचकमलासंर्वदेवगणैःसह ॥ १२० ॥ तस्मात्तांसंनिकृष्टेतुसदादेवींप्रपूजयेत् ॥ स्तोत्रम
न्त्रादिकंयद्वासर्वमानन्त्यमश्नुते ॥ २१ ॥ येचप्रेताश्चकूष्माण्डाःपिशाचाब्रह्मराक्षसाः ॥ भूतदैत्यादयस्तत्रपलायन्तेसदैवहि ॥ २२ ॥
अलक्ष्मीर्नाशिनीघूर्णायाडाकिन्यादिमातरः ॥ सर्वास्सङ्कुचितायान्तिदृष्ट्वातुतुलसीदलम् ॥ २३ ॥ ब्रह्महत्यादयःपापव्याधयःपापसम्भवाः ॥ कुम
न्त्रिणाकृतायेचसर्वेनश्यन्तितत्रवै ॥ २४ ॥ भूतलेत्रापितंयेनहर्यर्थंतुलसीवनम् ॥ कृतंक्रतुशतंतेनविधिवत्प्रियदक्षिणम् ॥ २५ ॥ हरि
लिङ्गेषुचान्येषुशालग्रामशिलासुच ॥ तुलसीग्रहणंकृत्वाविष्णोःसायुज्यमाव्रजेत् ॥ २६ ॥ नन्दन्तिपुरुपास्तस्यमाधवार्थेक्षितौतु
यः ॥ तुलसींरोपयेद्धीरःसयातिमाधवालयम् ॥ २७ ॥ पूजयित्वाहरिंदेवंनिर्माल्यंतुलसीदलम् ॥ धारयेद्यःस्वशीर्षेतुपापात्पूतो

दिवंव्रजेत् ॥ २८ ॥ पूजनेकीर्त्तनेध्यानेरोपणेधारणेकलौ ॥ तुलसीदहतेपापंस्वर्गंमोक्षंददातिच ॥ २९ ॥ उपदेशंदिशेदस्याःस्वयमा
चरतेपुनः ॥ सयातिपरमंस्थानंमाधवस्यनिकेतनम् ॥ १३० ॥ हरेःप्रियकरंयच्चतन्मेप्रियतरंभवेत् ॥ सर्वेषामपिदेवानांदेवीनांचसमन्ततः ॥ ३१॥
श्राद्धेषुयज्ञकार्येषुपर्णमेकंषडानन ॥ तस्मात्सर्वप्रयत्नेनतुलसीसेवनंकुरु ॥ ३२ ॥ तुलसीसेवितायेनतेनसर्वंतुसेवितम् ॥ गुरुंविप्रंदेवतीर्थंतस्मात्से
वयषण्मुख ॥ ३३ ॥ शिखायांतुलसींकृत्वायस्तुप्राणान्परित्यजेत् ॥ दुष्कृतौघाद्विनिर्मुक्तःस्वर्गमेतिनिरामयम् ॥ ३४॥ राजसूयादिभिर्यज्ञैर्व्रतैश्च
विविधैर्यमैः ॥ यागतिःप्राप्यतेधीरैस्तुलसीसेविनांभवेत् ॥ ३५ ॥ तुलसीदलेनचैकेनपूजयित्वाहरिंनरः ॥ वैष्णवत्वमवाप्नोतिकिमन्यैःशास्त्रवि
स्तरैः ॥ ३६ ॥ नपिबेत्सपयोमातुस्तुलस्याःकोटिसङ्ख्यकैः ॥ अर्चितःकेशवोयेनशाखामृदुलपल्लवैः ॥ ३७ ॥ भावयेत्पुरुषान्मर्त्यःशतशोऽथस
हस्रशः ॥ पूजयित्वाहरिंनित्यंकोमलैस्तुलसीदलैः ॥ ३८ ॥ प्रधानतोगुणास्तातततुलस्यागदितामया॥ निखिलंपुरुकालेनगुणंवक्तुंनशक्नुमः॥३९॥
यस्त्विदंशृणुयान्नित्यमाख्यानंपुण्यसञ्चयम् ॥ पूर्वजन्मकृतात्पापान्मुच्यतेजन्मबन्धनात् ॥ १४० ॥ सकृत्पठनमात्रेणवह्निष्टोमफलंलभेत् ॥ नत
स्यव्याधयःपुत्रमूर्खत्वंनकदाचन ॥ ४१ ॥ सर्वदाजयमाप्नोतिनगच्छेत्सपराजयम् ॥ लेखस्तिष्ठेद्गृहेयस्यतस्यलक्ष्मीःप्रवर्तते ॥ ४२ ॥ नचा
धयोनचप्रेतानशोकानावमानना ॥ नतिष्ठन्तिक्षणंतत्रयत्रेयंवर्ततेलिपिः ॥ १४३ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेतुलसीमाहात्म्यंनामद्विषष्टि
तमोऽध्यायः ॥ ६२ ॥ द्विजाऊचुः ॥ तुलसीपुष्पमाहात्म्यंश्रुतंत्वत्तोहरेःशुभम् ॥ तस्याःस्तोत्रंकृतंपुण्यंश्रोतुमिच्छामहेवयम् ॥१॥ व्यासउवाच ॥
पुरास्कन्दपुराणेचयन्मयाकीर्तितंद्विजाः ॥ कथयामिपुराणंचपुरतोमोक्षहेतवे ॥ २ ॥ शतानन्दमुनेःशिष्याःसर्वेतेसंशितव्रताः ॥ प्रणिपत्यगुरुं
विप्राःपप्रच्छुःपुण्यतोहितम् ॥३॥ शिष्याऊचुः॥पूर्वंब्रह्ममुखान्नाथयच्छ्रुतंतुलसीस्तवम्॥तद्वयंश्रोतुमिच्छामस्त्वत्तोब्रह्मविदांवर॥४॥शतानन्दउवाच॥
नामोच्चारेकृतेतस्याःप्रीणात्यसुरदर्पहा ॥ पापानिविलयंयान्तिपुण्यंभवतिचाक्षयम् ॥ ५ ॥ साकथंतुलसीलोकैःपूज्यतेवन्द्यतेनहि ॥ दर्शनादेव
यस्यास्तुदानंकोटिगवांभवेत् ॥ ६ ॥ धन्यास्तेमानवालोकेयद्गृहेविद्यतेकलौ ॥ शालग्रामशिलार्थंतुतुलसीप्रत्यहंक्षितौ ॥ ७ ॥ तुलसींयेविचि
न्वन्तिधन्यास्तेकरपल्लवाः ॥ केशवार्थंकलौयेचरोपयन्तीहभूतले ॥ ८ ॥ किंकरिष्यतिसंरुष्टोयमोऽपिसहकिङ्करैः ॥ तुलसीदलेनदेवेशःपूजितोयेन
दुःखहा ॥ ९ ॥ तीर्थयात्रादिगमनैःफलैःसिध्यतिकिन्नरः ॥ स्नानेदानेतथाध्यानेप्राशनेकेशवार्चने ॥ १० ॥ तुलसीदहतेपापंकीर्तनेरोपणेकलौ ॥
तुलस्यमृतजन्मासिसदात्वंकेशवप्रिये ॥ ११ ॥ केशवार्थंचिनोमित्वांवरदाभवशोभने ॥ त्वदङ्गसम्भवैर्नित्यंपूजयामियथाहरिम् ॥ १२ ॥ तथाकु

रुपवित्राङ्गिकलौमलविनाशिनि॥मन्त्रेणानेनयःकुर्याद्विचित्यतुलसीदलम् ॥ १३ ॥ पूजनंवासुदेवस्यलक्षकोटिगुणंभवेत्॥ प्रभावंतवदेवेशिगायन्ति
सुरसत्तमाः ॥ १४ ॥ मुनयःसिद्धगन्धर्वाःपातालेनागराट्स्वयम् ॥ नतेप्रभावंजानन्तिदेवताःकेशवादृते ॥ १५ ॥ गुणानांपरिमाणंतुकल्पकोटि
शतैरपि ॥ कृष्णानन्दात्समुद्भूताक्षीरोदमथनोद्यमे ॥१६॥ उत्तमाङ्गेपुरायेनतुलसीविष्णुनाधृता ॥ प्राप्यैतानित्वयादेविविष्णोरङ्गानिसर्वशः॥१७॥
पवित्रतात्वंयाप्राप्तातुलसींत्वांनमाम्यहम् ॥ त्वदङ्गसम्भवैःपत्रैःपूजयामियथाहरिम् ॥ १८ ॥ तथाकुरुष्वमेऽविघ्नंयतोयामिपरांगतिम् ॥ रोपिता
गोमतीतीरेस्वयंकृष्णेनपालिता ॥ १९ ॥ जगद्धितायतुलसींगोपीनांहितहेतवे ॥ वृन्दावनेविचरतासेविताविष्णुनास्वयम् ॥ २० ॥ गोकुलस्यवि
वृद्ध्यर्थंकंसस्यनिधनायच ॥ वसिष्ठवचनात्पूर्वंरामेणसरयूतटे ॥ २१ ॥ राक्षसानांवधार्थायरोपितात्वंजगत्प्रिये ॥ रोपितातपसोवृद्ध्यैतुलसींत्वांन
माम्यहम् ॥२२॥ वियोगेवासुदेवस्यध्यात्वात्वांजनकात्मजा ।। अशोकवनमध्येतुप्रियेणसहसङ्गता ॥२३॥ शङ्करार्थंपुरादेविपार्वत्यात्वंहिमालये ॥
रोपितातपसोवृद्ध्यैतुलसींत्वांनमाम्यहम् ॥ २४ ॥ सर्वाभिर्देवपत्नीभिःकिन्नरैश्चापिनन्दने ॥ दुःस्वप्ननाशनार्थायसेवितात्वंनमोऽस्तुते ॥ २५ ॥
धर्मारण्येगयायांचसेवितापितृभिःस्वयम् ॥ सेवितातुलसीपुण्याआत्मनोहितमिच्छता ॥ २६ ॥ रोपिताराम‍चन्द्रेणसेवितालक्ष्मणेनच ॥ पालिता
सीतयाभक्त्यातुलसीदण्डकेवने ॥ २७ ॥ त्रैलोक्यव्यापिनीगङ्गायथाशास्त्रेषुगीयते ॥ तथैवतुलसीदेवीदृश्यतेसचराचरे ॥ २८ ॥ ऋष्यमूकेचव
सताकपिराजेनसेविता ॥ तुलसीवालिनाशायतारासङ्गमहेतवे ॥ २९ ॥ प्रणम्यतुलसींदेवींसागरोत्क्रमणंकृतम् ॥ कृतकार्यःप्रहृष्टश्चहनूमान्पुनरागतः
॥ ३० ॥ तुलसीग्रहणंकृत्वाविमुक्तोयातिपातकैः ॥ अथवामुनिशार्दूलाब्रह्महत्यांव्यपोहति ॥ ३१ ॥ तुलसीपत्रगलितंयस्तोयंशिरसावहेत् ॥ गङ्गा
स्नानमवाप्नोतिदशधेनुफलप्रदम् ॥ ३२ ॥ प्रसीददेविदेवेशिप्रसीदहरिवल्लभे ॥ क्षीरोदमथनोद्भूतेतुलसित्वांनमाम्यहम् ॥३३ ॥ द्वादश्यांजागरेरात्रौ
यःपठेत्तुलसीस्तवम् ॥ द्वात्रिंशदपराधांश्चक्षमतेतस्यकेशवः ॥ ३४ ॥ यत्पापंयौवनेबाल्येकौमारेवार्द्धकेकृतम् ॥ तत्सर्वंविलयंयातितुलसीस्तवपाठतः
॥ ३५ ॥ प्रीतिमायातिदेवेशस्तुष्टोलक्ष्मींप्रयच्छति ॥ कुरुतेशत्रुनाशंचसुखंविद्यांप्रयच्छति ॥ ३६ ॥ तुलसीनाममात्रेणदेवायच्छन्तिवाञ्छितम् ॥
गर्ह्याणामपिदेवेशोमुक्तिंयच्छतिदेहिनाम् ॥ ३७ ॥ तुलसीस्तवसन्तुष्टस्सुखंवृद्धिंददातिच ॥ उद्धृतंहेलयाविद्धिपापंयमपथेस्थितम् ॥ ३८ ॥ यस्मि
न्गृहेचलिखितोविद्यतेतुलसीस्तवः ॥ नाशुभंविद्यतेतस्यशुभमाप्नोतिनिश्चितम् ॥ ३९ ॥ सर्वंचमङ्गलंतस्यनास्तिकिञ्चिदमङ्गलम् ॥ सुभिक्षंसर्व
दातस्यधनंधान्यंचपुष्कलम् ॥४०॥ निश्चलाकेशवेभक्तिर्नवियोगश्चवैष्णवैः॥ जीवतिव्याधिनिर्मुक्तोनाधर्मेजायतेमतिः॥४१॥द्वादश्यांजागरेरात्रौयः

पठेत्तुलसीस्तवम् ॥ तीर्थकोटिसहस्रैस्तुयत्फलंलक्षकोटिभिः ॥ ४२ ॥ तत्फलंसमवाप्नोतिपठित्वातुलसीस्तवम् ॥ ४३ ॥ इतिश्रीपाद्मपुराणेप्रथमे
सृष्टिखण्डेतुलसीस्तवमाहात्म्यंनामत्रिषष्टितमोऽध्यायः॥ ६३॥ द्विजाऊचुः ॥ मज्जनादखिलंपापंक्षयंयातिसुनिश्चितम् ॥ महापातकमन्यच्चतदादेशं
वदस्वनः ॥ १ ॥ पापात्पूतोऽक्षयंनाकमश्नुतेदिविशक्रवत् ॥ सुरयोनेर्नहानिःस्यादुपदेशंवदस्वनः ॥ २ ॥ अत्रभोग्यंपरंसर्वंमृतेस्वर्गेसुरोत्तमः ॥
कलिपापहतानांचस्वर्गसोपानमुच्यते ॥ ३ ॥ व्यासउवाच ॥ गतिंचिन्तयतांविप्रास्तूर्णंसामान्यजन्मनाम्॥स्त्रीपुंसामीक्षणाद्यस्माद्गङ्गापापंव्यपोह
ति ॥ ४ ॥ गङ्गेतिस्मरणादेवक्षयंयातिचपातकम् ॥ कीर्तनादतिपापानिदर्शनाद्गुरुकल्मषम् ॥ ५ ॥ स्नानात्पानाच्चजाह्नव्यांपितॄणांतर्पणात्तथा ॥
महापातकवृन्दानिक्षयंयान्तिदिनेदिने ॥ ६ ॥ अग्निनादह्यतेतूलंतृणंशुष्कंक्षणाद्यथा ॥ तथागङ्गाजलस्पर्शात्पुंसांपापंदहेत्क्षणात् ॥ ७ ॥ सम्प्राप्नो
त्यक्षयंस्वर्गंगङ्गास्नानेनकेशवम् ॥ यशोराज्यंलभेत्पुण्यंस्वर्गमन्तेपरांगतिम् ॥ ८ ॥ पितॄनुद्दिश्यगङ्गायांयस्तुपिण्डंप्रयच्छति ॥ विधिनावाक्यपू
र्वेणतस्यपुण्यफलंशृणु ॥ ९ ॥ अन्नैकेनतुसाहस्रंवर्षंपूज्यःसुरालये ॥ तिलेनद्विगुणंविद्धितथामेध्यफलेनच ॥ १० ॥ गव्येनविधिनाविप्राःस्वर्गस्या
न्तोनविद्यते ॥ एवंपिण्डप्रदानेननित्यंक्रतुशतंभवेत् ॥ ११ ॥ पितरोनिरयस्थायेधन्यास्तेमर्त्यवासिनः ॥ धनपुत्रयुतारोग्यंसुखसम्मानपूजिताः ॥
॥ १२ ॥ रसातलगतायेचयेचकीटामहीतले ॥ स्थावरेपक्षिसङ्घादौतेमर्त्याधनिनोनृपाः ॥ १३ ॥ तत्तत्पुत्रैश्चपौत्रैश्चगोत्रैर्दौहित्रकैस्तथा ॥ जामा
तृभागिनेयैश्चसुहृद्भिर्मित्रैःप्रियाप्रियैः ॥ १४ ॥ प्रदीयतेजलंपिण्डंयथोपकरणान्वितम् ॥ गङ्गातोयेषुतीरेषुतेषांस्वर्गोऽक्षयोभवेत् ॥ १५ ॥ पिण्डादू
र्ध्वंस्थितायेचपितरोमातृगोत्रजाः ॥ भवन्तिसुखिनःसर्वेमर्त्याश्शतसहस्रशः॥ १६ ॥स्वर्गेतस्यस्थिताःसत्त्वाअधःस्थामध्यवासिनः ॥ नित्यंवाञ्छ
न्तिसद्गङ्गांगच्छन्तुसुरनिम्नगाम् ॥ १७ ॥ एकोगच्छतिगङ्गांयःपूयन्तेतस्यपूरुषाः ॥ एतदेवमहापुण्यंतरतेतारयत्यपि ॥ १८ ॥ गङ्गाकृत्स्नगुणंव
क्तुंनशक्तश्चतुराननः॥अतःकिञ्चिद्वदाम्यत्रभागीरथ्याद्विजागुणम् ॥ १९ ॥ मुनयःसिद्धगन्धर्वायेचान्येसुरसत्तमाः॥गङ्गातीरेतपस्तप्त्वास्वर्गलोकेऽच्यु
ताभवन् ॥ २० ॥ दिव्येनवपुषासर्वेकामगेनरथेनच ॥ अद्यापिननिवर्तन्तेरत्नपूर्णक्षयेषुवै ॥ २१ ॥ प्रासादायत्रसौवर्णास्सर्वलोकोर्ध्वगाश्शिवाः ॥
इष्टद्रव्यैःसुसम्पूर्णाःस्त्रियोयत्रमनोरमाः ॥ २२ ॥ पारिजातसमाःपुष्पवृक्षाःकल्पद्रुमोपमाः ॥ गङ्गातीरेतपस्तप्त्वातत्रैश्वर्यंलभन्तिहि ॥ २३ ॥ तपो
भिर्बहुभिर्यज्ञैर्व्रतैर्नानाविधैस्तथा ॥ पुरुदानैर्गतिर्याचगङ्गांसंसेवतांचसा ॥ २४ ॥ जारजंपतितंदुष्टमन्त्यजंगुरुघातिनम् ॥ सर्वद्रोहेणसंयुक्तंसर्वपात
कसंयुतम् ॥ २५ ॥ त्यजन्तिपितरंपुत्राःप्रियंपत्न्यःसुहृद्गणाः ॥ अन्येचबान्धवाःसर्वेगङ्गातुनपरित्यजेत ॥ २६ ॥ यथामातास्वयंजन्ममलशौचं

चकारयेत् ॥ क्रोडीकृत्यतथातेषांगङ्गाप्रक्षालयेन्मलम् ॥ २७ ॥ भवन्तितेसुविख्याताभोग्यालङ्कारपूजिताः ॥ दर्शनेक्रियतेगङ्गासकृद्भक्त्यानरैस्तु
येः ॥ २८ ॥ तेषांकुलानांलक्षंतुभवात्तारयतेशिवा ॥ स्मृतार्तिहर्त्रीयैर्ध्यातासंस्तुतासाधुमोदिता ॥ २९ ॥ गङ्गातारयतेनृणामुभौवंशौभवार्णवात् ॥
सङ्क्रान्तिषुव्यतीपातेग्रहणेचन्द्रसूर्ययोः॥ ३० ॥ पुष्येस्नात्वातुगङ्गायांकुलकोटिंसमुद्धरेत्॥शुक्लपक्षेदिवामर्त्योगङ्गायामुत्तरायणे ॥ ३१ ॥ धन्यादेहं
विमुञ्चन्तिहृदिस्थेचजनार्दने ॥ अनेनविधिनायस्तुभागीरथ्याजलेशुभे ॥ ३२ ॥ प्राणांस्त्यक्त्वाव्रजेत्स्वर्गंपुनरावृत्तिवर्जितम् ॥ योगङ्गानुगतोनि
त्यंसर्वदेवानुगोहिसः ॥ ३३ ॥ सर्वदेवमयोविष्णुर्गङ्गाविष्णुमयीयतः ॥ गङ्गायांपिण्डदानेनपितॄणांवैतिलोदकैः ॥ ३४ ॥ नरकस्थादिवंयान्तिस्वर्ग
स्थामोक्षमाप्नुयुः ॥ परदारपरद्रव्यबाधाद्रोहपरस्यच ॥३५ ॥ गतिर्मनुष्यमात्रस्यगङ्गैवपरमागतिः ॥ वेदशास्त्रविहीनस्यगुरुनिन्दापरस्यच ॥ ३६ ॥
समयाचारहीनस्यनास्तिगङ्गासमागतिः ॥ किंयज्ञैर्बहुवित्ताढ्यैःकिंतपोभिःसुदुष्करैः ॥ ३७ ॥ स्वर्गमोक्षप्रदागङ्गासुखसौभाग्यपूजिता ॥ निय
मैःपरमैर्नित्यंकिंयोगैश्चित्तरोधकैः ॥ ३८ ॥ भुक्तिमुक्तिप्रदागङ्गासुखमोक्षाग्रतःस्थिता ॥ अनेकजन्मसञ्जातपापंपुंसांविनश्यति ॥ ३९ ॥ स्नानमा
त्रेणगङ्गायांसद्यःस्यात्पुण्यभाङ्नरः ॥ प्रभासेगोसहस्रस्यराहुग्रस्तेदिवाकरे ॥ ४० ॥ लभतेयत्फलंदानेगङ्गास्नानाद्दिनेदिने ॥ दृष्ट्वातुहरतेपापं
स्पृष्ट्वातुलभतेदिवम् ॥ ४१ ॥ प्रसङ्गादपिसागङ्गामोक्षदात्ववगाहिता ॥ सर्वेन्द्रियाणांचापल्यंवासनाशक्तिसम्भवम् ॥ ४२ ॥ निर्घृणत्वंततोगङ्गा
दर्शनात्प्रविनश्यति ॥ परद्रव्याभिकाङ्क्षित्वंपरदाराभिलापिता ॥ ४३ ॥ परधर्मेरुचिश्चैवदर्शनादेवनश्यति ॥ यदृच्छालाभसन्तोषस्स्वधर्मेषुप्रव
र्तते ॥ ४४ ॥ सर्वभूतसमत्वंचगङ्गायांमज्जनाद्भवेत् ॥ यस्तुगङ्गांसमाश्रित्यसुखंतिष्ठतिमानवः ॥ ४५ ॥ जीवन्मुक्तस्सएवेहसर्वेषामुत्तमोत्तमः ॥
गङ्गांसंश्रित्ययस्तिष्ठेत्तस्यकार्यंनविद्यते ॥ ४६ ॥ कृतकृत्यस्सवैमुक्तोजीवन्मुक्तश्चमानवः ॥ यज्ञोदानंतपोजप्यंश्राद्धंचसुरपूजनम् ॥ ४७ ॥ गङ्गा
यांतुकृतंनित्यंकोटिकोटिगुणंभवेत् ॥ अन्यस्थानेकृतंपापंगङ्गातीरेविनश्यति ॥ ४८ ॥ गङ्गातीरेकृतंपापंगङ्गास्नानेननश्यति ॥ आत्मनोजन्मनक्ष
त्रेजाह्नवीसङ्गतेदिने ॥ ४९ ॥ नरःस्नात्वातुगङ्गायांस्वकुलंचसमुद्धरेत् ॥ आदरेणयथास्तौतिधनवन्तंसदानरः ॥ ५० ॥ सकृद्गङ्गांतथास्तुत्वाभवेत्स्व
र्गस्यभाजनम् ॥ अश्रद्धयापिगङ्गायायोऽसौनामानुकीर्तनम् ॥ ५१ ॥ करोतिपुण्यवाहिन्यास्सवैस्वर्गस्यभाजनम् ॥ क्षितौभावयतोमर्त्यान्नागां
स्तारयतेऽप्यधः ॥५२॥ दिवितारयतेदेवान्गङ्गात्रिपथगास्मृता ॥ ज्ञानतोऽज्ञानतोवापिकामतोऽकामतोऽपिवा ॥ ५३ ॥ गङ्गायांचमृतोमर्त्यःस्वर्गं
मोक्षंचविन्दति ॥ यागतिर्योगयुक्तस्यसत्वस्थस्यमनीषिणः ॥ ५४ ॥ सागतिस्त्यजतःप्राणान्गङ्गायांतुशरीरिणः ॥ चान्द्रायणसहस्राणियश्चरे

त्कायशोधनम् ॥ ५५ ॥ पानंकुर्याद्यथेच्छंचगङ्गाम्भःसविशिष्यते ॥ तावत्प्रभावस्तीर्थानांदेवानांतुविशेषतः ॥ ५६ ॥ तावत्प्रभावोवेदानांयावन्ना
प्नोतिजाह्नवीम्॥ तिस्रःकोट्योऽर्धकोटीचतीर्थानांवायुरब्रवीत् ॥५७॥ दिविभुव्यन्तरिक्षेचतानितंसन्तिजाह्नवि ॥ विष्णुपादाब्जसम्भूतेगङ्गेत्रिपथगा
मिनि ॥ ५८ ॥ धर्मद्रवेतिविख्यातेपापंमेहरजाह्नवि ॥ विष्णुपादप्रसूतासिवैष्णवीविष्णुपूजिता ॥ ५९ ॥ त्राहिमामेनसस्तस्मादाजन्ममरणान्तिका
त् ॥ श्रद्धयाधर्मसम्पूर्णेश्रीमतारजसाचते ॥६०॥ अमृतेनमहादेविभागीरथिपुनीहिमाम् ॥ त्रिभिःश्लोकवरैरेभिर्यःस्नायाज्जाह्नवीजले ॥६१॥ जन्म
कोटिकृतात्पापान्मुच्यतेनात्रसंशयः ॥ मूलमन्त्रंप्रवक्ष्यामिजाह्नव्याहरिभाषितम् ॥६२॥ सकृज्जपान्नरःपूतोविष्णुदेहेप्रतिष्ठति॥६३॥ मन्त्रश्चायम्॥ॐ
नमोगङ्गायैविश्वरूपिण्यैनारायण्यैनमोनमः ॥ ६४ ॥ जाह्नवीतीरसम्भूतांमृदंमूर्ध्नाबिभर्तियः ॥ सर्वपापविनिर्मुक्तोगङ्गास्नानंविनानरः ॥ ६५ ॥
गङ्गाजलोर्मिनिर्धूतपवनंस्पृशतेयदि ॥ सपूतःकल्मषाद्घोरात्स्वर्गंचाक्षयमश्नुते ॥ ६६॥ यावदस्थिमनुष्यस्यगङ्गातोयेप्रतिष्ठति ॥ तावद्वर्षसहस्राणि
स्वर्गलोकेमहीयते ॥ ६७ ॥ पित्रोर्बन्धुजनानांचअनाथानांगुरोरपि ॥ गङ्गायामस्थिपातेननरःस्वर्गान्नहीयते ॥ ६८ ॥ गङ्गांप्रतिवहेद्यस्तुपितॄ
णामस्थिखण्डकम् ॥ पदेपदेऽश्वमेधस्यफलंप्राप्नोतिमानवः ॥६९ ॥ धन्याजानपदायेचपशवःपक्षिकीटकाः ॥ स्थावराजङ्गमाश्चान्येगङ्गातीरसमा
श्रिताः ॥ ७० ॥ क्रोशान्तरमृतायेचजाह्नव्याद्विजसत्तमाः ॥ मानवादेवतास्सन्तिइतरेमानवाभुवि ॥ ७१ ॥ गङ्गास्नानायसङ्गच्छन्पथिसंम्रियते
यदि ॥ सचस्वर्गमवाप्नोतिगङ्गास्नानफलंलभेत् ॥७२॥ गङ्गाजलेप्रयास्यन्तितंजीवाःपथियेमृताः ॥ कीटाःपतङ्गाश्शलभाःपादाघातेनगच्छताम्
॥७३॥ येवदन्तिसमुद्देशंगङ्गांप्रतिजनंद्विजाः ॥ तेचयान्तिपरंपुण्यंगङ्गास्नानफलंनराः ॥७४॥ जाह्नवींयेचनिन्दन्तिपाषण्डैर्हतचेतसः ॥ तेयान्ति
नरकंघोरंपुनरावृत्तिदुर्लभम् ॥७५॥ दुःस्थोवापिस्मरन्नित्यंगङ्गेतिपरिकीर्तयन् ॥ पठन्स्वर्गमवाप्नोतिकिमन्यैर्बहुभाषितैः ॥७६॥गङ्गागङ्गेतियोब्रूया
द्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥७७॥ अन्धाश्चपङ्गवस्तेचवृथाभवसमुद्भवाः ॥ गर्भपाताद्विपद्यन्तेयेगङ्गांनगतानराः
॥७८॥नकीर्तयन्तियेगङ्गांजलतुल्यानराधमाः॥परान्नोपदिशन्तिस्मवातूलाश्चित्तविभ्रमाः ॥७९॥नपठन्तिजनायेचतेषांशास्त्रंविनिष्फलम्॥गङ्गापुण्य
फलंविप्राःकुधियःपतिताधमाः ॥८०॥ पाठयन्तिजनायेचश्रद्धयानिपठन्तिच॥गच्छन्तितेदिवंधीरास्तारयन्तिपितॄन्गुरून् ॥ ८१ ॥ पाथेयकंगच्छतां
योवसुशक्त्याप्रयच्छति ॥ भागीरथ्यालभेत्स्नानंयःपरान्नेनगच्छति ॥८२॥ कर्तुःस्नानफलंविद्याद्द्विगुणंप्रेरकस्यच ॥ इच्छयानिच्छयाचापिप्रेरणेना
न्यसेवया ॥ ८३ ॥ जाह्नवींयोगतःपुण्यांसगच्छेन्निर्जरालयम् ॥ ८४ ॥ द्विजाऊचुः ॥ गङ्गायाःकीर्तनंव्यासश्रुतंत्वत्तोविनिर्मलम् ॥ गङ्गाकस्मा

त्किमाकाराकुतःसाद्यतिपावनी ॥ ८५ ॥ व्यासउवाच ॥ शृणुध्वंकथयाम्यद्यकथांपुण्यांपुरातनीम् ॥ यांश्रुत्वामोक्षमार्गंचप्राप्नोतिनरसत्तमः
॥ ८६ ॥ ब्रह्मलोकंपुरागत्वानारदोमुनिपुङ्गवः ॥ नत्वाविधिंचपप्रच्छपूतंत्रैलोक्यपावनम् ॥ ८७ ॥ किंसृष्टंचत्वयानातसंमतंशम्भुकृष्णयोः ॥
सर्वलोकहितार्थायभुवःस्थानेसमीहितम् ॥ ८८ ॥ देवीवादेवताकावासर्वासामुत्तमोत्तमा ॥ यांसमासाद्यदेवाश्चदैत्यमानुषपन्नगाः ॥ ८९ ॥ अण्ड
जाःस्वेदजावृक्षायेचान्यउद्भिज्जादयः ॥ सर्वेयान्तिशिवंब्रह्मन्समग्रंविभवंध्रुवम् ॥ ९० ॥ ब्रह्मोवाच ॥ सृजताचपुराप्रोक्तामायाप्रकृतिरूपिणी ॥
आद्याभवस्वलोकानांत्वत्तोभवंसृजाम्यहम् ॥ ९१ ॥ एतच्छ्रुत्वापरासाचसप्तधाचाभवत्तदा ॥ गायत्रीवाक्चस्वर्लक्ष्मीस्सर्वसस्यवसुप्रदा ॥ ९२ ॥
ज्ञानविद्याउमादेवीशक्तिबीजातपस्विनी ॥ वर्णिकाधर्मद्रवाचएतास्सप्तप्रकीर्तिताः ॥ ९३ ॥ गायंत्रीप्रभवावेदावेदात्सर्वंस्थितंजगत ॥ स्वस्ति
स्वाहास्वधादीक्षाएतागायत्रिजाःस्मृताः ॥ ९४ ॥ उच्चारयेत्सदायज्ञंगायत्रींमातृकादिभिः ॥ कृतौदेवाःस्वधांप्राप्यभवेयुरजरामराः ॥ ९५ ॥ तत
स्सुधारसंदेवामुमुचुर्धरणीतले ॥ अथसस्यवतीपृथ्वीओषधीनांपराशुभा ॥ ९६ ॥ फलमूलैरसैर्भक्ष्यैर्जनाःसुस्थतराभवन् ॥ भारतीसर्वलोका
नांचाननेमानसेस्थिता ॥ ९७ ॥ तथैवसर्वशास्त्रेषुधर्मोदेशंकरोतिसा ॥ विज्ञानंकलहंशोकंमोहामोहंशिवाशिवम् ॥ ९८ ॥ तयाविनाजगत्सर्वंयात्य
तत्त्वमितिस्मृतम् ॥ कमलासम्भवश्चैववस्त्रभूषणसञ्चयः ॥ ९९ ॥ सुखंराज्यंत्रिलोकेतुततःसाहरिवल्लभा ॥ उमयाहेतुनाशम्भोर्ज्ञानंलोकेषुस
न्ततम् ॥ १०० ॥ ज्ञानमाताचसाज्ञेयाशम्भोरर्धाङ्गवासिनी ॥ वर्णिकाशक्तिरत्युग्रासर्वलोकप्रमोहिनी ॥ १ ॥ सर्वलोकेषुलोकानांस्थितिसंहार
कारिणी॥देव्याचनिहतौपूर्वमसुरौमधुकैटभौ ॥२॥ रुरुश्चापिहतोघोरःसवलोकपरिश्रुतः ॥ सर्वदेवैकजेतारंसाजघ्नेमहिषासुरम् ॥३॥ निहतालीलया
देव्यायेऽसुरादैत्यपुङ्गवाः ॥ एवंबलानिदैत्यानांनिहत्यसर्वदातया ॥ ४ ॥ पालितंमोदितंचैवकृत्स्नमेतज्जगत्रयम् ॥ धर्मद्रवस्वरूपाचसर्वधर्मप्र
तिष्ठिता ॥५॥ महतींतांसमालोक्यमयाकमण्डलौधृता ॥ विष्णुपादाब्जसम्भूताशम्भुनाशिरसाधृता ॥ ६ ॥ अस्माभिश्चत्रिभिर्युक्ताब्रह्मविष्णुमहे
श्वरैः॥धर्मद्रवापरिख्याताजलरूपाकमण्डलौ॥७॥ बलियज्ञेषुसम्भूताविष्णुनाप्रभविष्णुना॥ छद्मनाछलितःपूर्वंवलिर्बलवतांवरः॥८॥ ततःपादद्वयेनैव
क्रान्तंसर्वमहीतलम् ॥ नभःपादश्चब्रह्माण्डंभित्त्वाममपुरःस्थितः ॥९॥ मयासम्पूजितःपादःकमण्डलुजलेनवै ॥ प्रक्षाल्यैवार्चितात्पादाद्धेमकूटेऽपतज्ज
लम् ॥११०॥ तत्कूटाच्छङ्करंप्राप्यभ्रमतेसाजटास्थिता ॥ ततोभगीरथेनैवसमाराध्यशिवंभुवि ॥११॥ आनीयाराधितोनित्यंतपसागजपुङ्गवः ॥ तेन
भित्त्वानगंवीर्यात्त्रिभिर्दन्तैःकृतंबिलम् ॥१२॥ ततस्त्रिबिलगायस्मात्त्रिस्रोतालोकविश्रुता ॥ हरिब्रह्महरयोगात्पूतालोकस्यपावनी ॥१३॥ समासाद्यच

तांदेवींसर्वधर्मफलंलभेत् ॥ पाठयज्ञपरैःसर्वैर्मन्त्रहोमसुरार्चनैः ॥१४॥ सागतिर्नभवेज्जन्तोर्गङ्गासंसेवयाचया ॥ धर्मस्यसाधनोपायोह्यतःपरोनविद्यते
॥१५॥त्रैलोक्यपुण्यसंयोगात्तस्मात्तांव्रजनारद॥१६॥ गङ्गातोयास्थिसंयोगात्सुतास्तेसगरस्यच॥स्वर्गताःपितृभिश्चैवंस्वपूर्वापरजैःसह॥१७॥ व्यास
उवाच॥ततोब्रह्ममुखाच्छ्रुत्वानारदोमुनिपुङ्गवः॥गङ्गाद्वारेतपःकृत्वाब्रह्मणासदृशोऽभवत्॥१८॥सर्वत्रसुलभागङ्गात्रिषुस्थानेषुदुर्लभा ॥गङ्गाद्वारेप्रयागे
चगङ्गासागरसङ्गमे॥१९॥ त्रिरात्रेणैकरात्रेणनरोयातिपरांगतिम्॥ तस्मात्सर्वप्रयत्नेनसद्योमुक्तिंविचिन्तयेत्॥१२०॥ ततोगच्छतधर्मज्ञाः[illegible]वांभागी
रथीमिह॥अचिरेणैवकालेनस्वर्गंमोक्षंप्रगच्छथ ॥२१॥विशेषात्कलिकालेचगङ्गामोक्षप्रदानृणाम्॥ कृच्छ्राच्चक्षीणसत्त्वानामनन्तःपुण्यसम्भवः॥२२॥
पुलस्त्यउवाच ॥ततस्तेब्राह्मणाहृष्टाःश्रुत्वाव्यासाद्गिरंशुभाम्॥गङ्गायांतुतपस्तप्त्वामोक्षमार्गंययुस्तदा॥२३॥यइदंशृणुयान्मर्त्यःपुण्याख्यानमनुत्तमम्॥
सर्वंतरतिदुःखौघंगङ्गास्नानफलंलभेत् ॥२४॥ सकृदुच्चारितेचैवंसर्वयज्ञफलंलभेत् ॥ दानंजप्यंतथाध्यानंस्तोत्रंमन्त्रसुरार्चनम् ॥ २५ ॥ तत्रैवकारये
द्यस्तुसचानन्तफलंलभेत् ॥ तस्मात्तत्रैवकर्तव्यंजपहोमादिकंनरैः ॥२६॥ अनन्तंचफलंप्रोक्तंजन्मजन्मसुलभ्यते ॥१२७॥ इतिश्रीपाद्मपुराणेप्रथमेसृ
ष्टिखण्डेगङ्गामाहात्म्यंनामचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ पुलस्त्यउवाच ॥ एतस्मिन्नन्तरेपूर्वंव्यासशिष्योमहामुनिः ॥ नमस्कृत्यगुरुंभी
ष्मसञ्जयःपरिपृच्छति ॥ १ ॥ सञ्जयउवाच ॥ देवानांपूजनोपायंक्रमंब्रूहिसुनिश्चितम् ॥ अग्रपूज्यतमःकोऽसौकोमध्येनित्यपूजने ॥ २ ॥
अन्तेचपूजाकस्यैवकस्यकोवाप्रभावकः ॥ किंवाकंचफलंब्रह्मन्पूजयित्वालभेन्नरः ॥ ३ ॥ व्यासउवाच ॥ गणेशंपूजयेदग्रेत्वविघ्नार्थंपरेत्विह ॥
विनायकत्वमाप्नोतियथागौरीसुतोह्यसः ॥ ४ ॥ पार्वत्यजनयत्पूर्वंसुतौमहेश्वरादिमौ ॥ सर्वलोकधरौशूरौदेवौस्कन्दगणाधिपौ ॥ ५ ॥
तौदृष्ट्वातुसुरास्सर्वेश्रद्धयापरयान्विताः ॥ सुधयोत्पादितंदिव्यंतस्यैप्रादुस्तुमोदकम् ॥ ६ ॥ दृष्ट्वातुमोदकंताभ्यामर्थिताजननीतदा ॥ ततस्तु
विस्मितादेवीसुतावेवमभाषत ॥ ७ ॥ पार्वत्युवाच ॥ इदंतुमोदकंपुत्रौदेवैर्दत्तंमुदान्वितैः ॥ महाबुद्धीतिविख्यातंसुधयापरिनिर्मितम् ॥ ८ ॥ गुणंचा
स्यप्रवक्ष्यामिशृणुतंतुसमाहितौ ॥ अस्यैवाघ्राणमात्रेणअमरत्वंलभेद्ध्रुवम् ॥ ९ ॥ सर्वशास्त्रार्थतत्त्वज्ञःसर्वशस्त्रास्त्रकोविदः ॥ निपुणःसर्वतन्त्रेषुलेख
कश्चित्रकृत्सुधीः ॥ १० ॥ ज्ञानविज्ञानतत्त्वज्ञःसर्वज्ञोनात्रसंशयः ॥ पुत्रौधर्मादधिकतांप्राप्यसिद्धिशतंव्रजेत् ॥ ११ ॥ यस्तस्यवैप्रदास्यामिपि
तुस्तेसम्मतंत्विदम् ॥ १२ ॥ व्यासउवाच ॥ श्रुत्वामातृमुखादेवंवचःपरमकोविदः ॥ स्कन्दस्तीर्थंययौसद्यःसर्वंत्रिभुवनस्थितम् ॥ १३ ॥ बर्हिणं
स्वंसमारुह्यत्वभिषेकःकृतःक्षणात् ॥ पितरौप्रदक्षिणंकृत्वालम्बोदरधरस्सुधीः ॥ १४ ॥ ततएवमुदायुक्तःपित्रोरेवाग्रतःस्थितः ॥ पुरतश्चतथास्क ॥ १९६ ॥

न्दोमेदेहीतिब्रुवन्स्थितः ॥ १५ ॥ ततस्तुतौसमीक्ष्याथपार्वतीविस्मिताब्रवीत् ॥ १६ ॥ पार्वत्युवाच ॥ सर्वतीर्थाभिषेकैस्तुसर्वदेवैर्नतैस्तथा ॥
सर्वयज्ञव्रतैर्मन्त्रैर्योगैरन्यैर्यमैस्तथा ॥ १७ ॥ पित्रोरर्चापरस्यैवकलांनार्हतिषोडशीम् ॥ तस्मात्सुतशतादेषोऽधिकःशतगुणैरपि ॥ १८ ॥ अतोद
दामिहेरम्बेमोदकंदेवनिर्मितम् ॥ अस्यैवकारणादस्यअग्रेपूजामखेषुच ॥ वेदशास्त्रस्तवादौचनित्यंपूजाविधासुच ॥ १९ ॥ पार्वत्यासहभूते
शोददौतस्मैवरंमहत् ॥ २० ॥ महादेवउवाच ॥ अस्यैवपूजनादग्रेदेवास्तुष्टाभवन्तुच ॥ २१ ॥ सर्वासामपिदेवानांपितॄणांचसमन्ततः ॥
तोषोभवतुनित्यंचपूजितेऽग्रेगणेश्वरे ॥ २२ ॥ व्यासउवाच ॥ ततःसर्वेषुयज्ञेषुपूजयेद्गणपंद्विजः ॥ कोटिकोटिगुणंतेषुदेवदेवीवचोयथा ॥
॥ २३ ॥ दत्त्वासर्वगुणंपुण्यंदेवदेव्यातथामुदा ॥ कृतंगणाधिपत्यंचसर्वदेवाग्रतस्तदा ॥ २४ ॥ तस्मात्प्राज्येषुयज्ञेषुस्तोत्रेषुनित्यपूजने ॥
गणेशंपूजयित्वातुसर्वसिद्धिंलभेन्नरः ॥ २५ ॥ एवंज्ञात्वातुदेवैस्तुदयितप्राप्तिकाम्यया ॥ पूजितश्चाथसर्वैस्तुस्वर्गमोक्षार्थतोध्रुवम् ॥ २६ ॥ नक्ता
हारश्चतुर्थ्यांतुपूजयित्वागणाधिपम् ॥ लिङ्गेवाप्रतिमाचित्रेदेवःपूज्योभवेद्यदि ॥ २७ ॥ गणाधिपनमस्तुभ्यंसर्वविघ्नप्रशान्तिद ॥ उमा
नन्दप्रदप्राज्ञत्राहिमांभवसागरात् ॥ २८ ॥ हरानन्दकरध्यानज्ञानविज्ञानदप्रभो ॥ विघ्नराजनमस्तुभ्यंप्रसन्नोभवसर्वदा ॥ २९ ॥ कृतोपवासो
गणपंपूजयेद्योनरोमुदा ॥ सर्वपापविनिर्मुक्तःसुरलोकेमहीयते ॥ ३० ॥ स्तोत्रंतस्यप्रवक्ष्यामिनामद्वादशकंशुभम् ॥ ओंनमोगणपतयेमन्त्रएषउ
दाहृतः ॥ ३१ ॥ गणपतिर्विघ्नराजोलम्बतुण्डोगजाननः ॥ द्वैमातुरश्चहेरम्बएकदन्तोगणाधिपः ॥ ३२ ॥ विनायकश्चारुकर्णःपशुपालोभवात्म
जः ॥ द्वादशैतानिनामानिप्रातरुत्थाययःपठेत् ॥ ३३ ॥ विश्वंतस्यभवेद्वश्यंनचविघ्नंभवेत्क्वचित् ॥ महाप्रेताश्शमंयान्तिपीड्यतेव्याधिभि
र्नच ॥ ३४ ॥ सर्वपापाद्विनिर्मुक्तोह्यक्षयंस्वर्गमश्नुते ॥ ३५ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेगणपतिस्तोत्रंनामपञ्चषष्टितमोऽध्यायः ॥
॥ ६५ ॥ व्यासउवाच ॥ पुनरन्यत्प्रवक्ष्यामिस्तोत्रंगणाधिपस्यच ॥ सर्वसिद्धिकरंपूतंसर्वाभीष्टफलप्रदम् ॥ १ ॥ एकदन्तंमहाकायंतप्तका
ञ्चनसन्निभम् ॥ लम्बोदरंविशालाक्षंवन्देऽहंगणनायकम् ॥ २ ॥ मुञ्जकृष्णाजिनधरंनागयज्ञोपवीतकम् ॥ बालेन्दुकलिकामौलिंवन्देऽहंगणनायकम्
॥ ३ ॥ सर्वविघ्नहरंदेवंसर्वविघ्नविवर्जितम् ॥ मूषकोत्तममारुह्यदेवासुरमहाहवे ॥ योद्धुकामंमहाबाहुंवन्देऽहंगणनायकम् ॥ ४ ॥ अम्बिकाहृ
दयानन्दंमातृकापरिवेष्टितम् ॥ भक्तिप्रियंमदोन्मत्तंवन्देऽहंगणनायकम् ॥ ५ ॥ चित्ररत्नविचित्राङ्गंचित्रमालाविभूषणम् ॥ कामरूपधरंदेवंव
न्देऽहंगणनायकम् ॥ ६ ॥ गजवक्त्रंसुरश्रेष्ठंचारुकर्णविभूषितम् ॥ पाशाङ्कुशधरंदेवंवन्देऽहंगणनायकम् ॥७॥ यक्षकिन्नरगन्धर्वैःसिद्धविद्याधरैस्सदा॥

स्तूयमानंमहादेवंवन्देऽहंगणनायकम् ॥ ८ ॥ गणाष्टकमिदंपुण्यंभक्तितोयःपठेन्नरः ॥ सर्वसिद्धिमवाप्नोतिरुद्रलोकेमहीयते ॥ ९ ॥ ननिः
स्वतांतथाभ्येतिसप्तजन्मसुमानवः ॥ यइदंपठतेनित्यंमहाराजोभवेन्नरः ॥ १० ॥ वश्यंकरोतित्रैलोक्यंपठनाच्छ्रवणादपि ॥ स्तोत्रंपरंमहा
पुण्यंगणपस्यमहात्मनः ॥ ११ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेगणपतिस्तोत्रंनामपट्षष्टितमोऽध्यायः ॥ ६६ ॥ व्यासउवाच ॥
नान्दीमुखेषुसर्वेषुपूजयेद्योगणाधिपम् ॥ तस्यसर्वोभवेद्वश्यःपुण्यंभवतिचाक्षयम् ॥ १ ॥ गणानांत्वेतिमन्त्रेणसर्वयज्ञघटेषुच ॥ सर्वसिद्धिमवाप्नो
तिस्वर्गंमोक्षंलभेन्नरः ॥ २ ॥ मृन्मयेप्रतिमायांचचित्रेचाथदृषन्मये ॥ द्वारदारुणिपात्रेचहेरम्बंलेखयेद्बुधः ॥ ३ ॥ अन्यस्मिन्नपिदेशे
तुसततंदृष्टिगोचरे ॥ स्थापयित्वातुहेरम्बंशक्त्यायःपूजयेद्बुधः ॥ ४ ॥ तस्यकार्याणिसिद्ध्यन्तिदयितानिसमन्ततः ॥ नविघ्नंजायते
किंचित्रैलोक्यंवशमानयेत ॥ ५ ॥ विद्यार्थीलभतेविद्यांवेदशास्त्रसमुद्भवाम् ॥ अन्यांचशिल्पिविद्यांचविजयांस्वर्गदायिनीम् ॥ ६ ॥ धनार्थीवि
पुलंवित्तंकन्यांसाध्वींमनोरमाम् ॥ ऐश्वर्यंधर्मसाध्यंचतनयंकुलमोक्षदम् ॥ ७ ॥ नरोगैःपीड्यतेकश्चिन्नग्रहैःप्रेतयोनिभिः ॥ शृङ्गिभिर्नापिरक्षोभिर्वि
द्युद्भिर्वनतस्करैः ॥ ८ ॥ नगजाकुप्यतिगृहेनचमारीप्रवर्तते ॥ नदौर्भिक्ष्यंनदौर्बल्यंपूजयित्वाविनायकम् ॥ ९ ॥ अभिप्रेतार्थसिद्ध्यर्थंपूजितोयस्सु
रैपि ॥ सर्वविघ्नच्छिदेतस्मैगणाधिपतयेनमः ॥ १० ॥ मन्त्रश्चायम्॥ॐनमोगणपतये ॥ नारायणप्रियैःपुष्पैरन्यैश्चापिसुगन्धिभिः ॥ मोदकैः
फलमूलैश्चद्रव्यैःकालोद्भवैस्तथा ॥११॥ दधिदुग्धैःप्रियैर्वाद्यैरपिधूपसुगन्धिभिः ॥ पूजयेद्गणपंयस्तुसर्वसिद्धिमवाप्नुयात् ॥१२॥ विशेषात्तस्यलिङ्गे
तुयोददातिवस्त्रप्रियम् ॥ पूजोपकरणंवस्त्रंसर्वंलक्षगुणंभवेत् ॥ १३ ॥ देशेचभारतेवर्षेवनितापूर्वसन्निधौ ॥ लौहित्यदक्षिणेतीरेलिङ्गरूपोविनायकः
॥ १४ ॥ हरगौरीसमादेशाद्देवानांसम्मतेनच ॥ स्थितोलोकप्रशान्त्यर्थंसर्वविघ्नविनाशनात् ॥ १५ ॥ पूजयित्वातुतंदेवंशक्तितोद्रव्यसञ्चयैः ॥
विनायकत्वमाप्नोतिवेदशास्त्रार्थपारगः ॥ १६ ॥ सकृत्प्रदक्षिणंकृत्वादृष्ट्वास्पृष्ट्वातुमानवः ॥ अक्षयंलभतेस्वर्गंसदादेवैःप्रपूज्यते ॥ १७ ॥ संस
र्गिणांचम्लेच्छानांगत्यर्थंसुतपस्विनाम् ॥ पुत्रार्थंसर्वलोकानांतत्रशम्भुर्विनायकः ॥१८॥ कृत्वाभिषेकंलौहित्येस्पृशेद्यस्तुगणाधिपम् ॥ सप्तजन्मकृ
तात्पापान्मुच्यतेनात्रसंशयः ॥ १९ ॥ नवैधव्यंनकार्पण्यंनशोकंनतुमत्सरम् ॥ विनायकंसमासाद्यजन्मजन्मनिसंलभेत् ॥ २० ॥ पुनःसिद्धिंपुन
र्भोग्यंपुनःकीर्तिःपुनर्बलम् ॥ पूजयित्वातुगणपंनरस्यनात्रसंशयः ॥ २१ ॥ अस्यपूजामकृत्वाचसर्वाभीष्टंविनश्यति ॥ तत्रदेवाश्चसुप्रीताब्रह्मविष्णुह
रादयः ॥ २२ ॥ मोहाद्भ्रान्त्याचनकृतंहरिणास्यार्चनंपुनः ॥ ततोविघ्नंसमुत्पन्नंदेवगजस्यधीमतः ॥ २३ ॥ मघोनोगणपस्याथपूजाविरहि

तस्यच ॥ अथासुरैर्महावीर्यैर्हिरण्याक्षमुखैरणे ॥ २४ ॥ मघवातुजितोवीर्याद्धिरण्याक्षेणवैतदा ॥ ततस्सुराश्चनिर्वीर्यायावद्वर्षशतंपुरा ॥ २५ ॥
दैवासुरेमहायुद्धेसुराणांचपराजयः ॥ ततोदेवाधिदेवेतुशिवेदेवैर्निवेदितम् ॥२६॥ देवाऊचुः ॥ भगवन्नसुरैर्नोहिजितंराज्यंगतामखाः ॥ २७ ॥ व्यास
उवाच ॥ एतस्मिन्नन्तरेशम्भुर्देवान्वचनमब्रवीत् ॥२८॥ शम्भुरुवाच ॥ हेरम्बायवरोदत्तउमयाप्रीतयामया ॥ पूजयातेपरासिद्धिर्देवादीनांभवत्विति
॥ २९ ॥ अवजानातियोमोहात्पुरुषस्तुमहोत्सवे ॥ नभवेत्तस्यसिद्धिश्चरणेचापिपराजयः ॥ ३० ॥ महामखेनयुष्माभिःपूजागणपतेःकृता ॥ हेल
यानकृतामोहात्तस्मात्प्राप्तःपराजयः ॥३१॥ शीघ्रंगच्छतवैपुण्यांगणपस्यमहात्मनः ॥ पूजांकुरुतधर्मज्ञाजयस्तूर्णंभविष्यति ॥३२॥ व्यासउवाच॥
ततोहरमुखाच्छ्रुत्वावचःक्षेमपरंहितम् ॥ प्रहृष्टाविबुधास्सर्वेगणपस्यपुरःस्थिताः ॥ ३३ ॥ देवाऊचुः ॥ गणाधिपनमस्तुभ्यंसर्वदेवैकपालक ॥ स्व
र्गभोगप्रदप्रीत्याहेरम्बत्वांनताःस्मह ॥ ३४ ॥ जयदंसर्वयुद्धेषुसिद्धिदंसर्वकर्मसु ॥ महामायंमहाकायंहेरम्बत्वांनताःस्मह ॥ ३५ ॥ एकदन्तंम
हाप्राज्ञंलम्बतुण्डंविनायकम् ॥ देवंमहर्षिदेवानामिन्द्रस्यचनताःस्मह ॥३६॥ व्यासउवाच॥ एताःश्रुत्वागिरस्तेषांत्रिदशानांमहात्मनाम् ॥ विस्मितो
गणपोदेवानिदंवचनमब्रवीत् ॥ ३७ ॥ गणेशउवाच ॥ कुतोमेतरसास्तोत्रंपूजांकुरुथसाम्प्रतम् ॥ करिष्यामिहितार्थंवैतूर्णंकामंसमुच्यताम् ॥३८॥
व्यासउवाच ॥ एतस्मिन्नन्तरेसूरिःसुराणांयाजकःसुधीः ॥ उवाचवचनंस्मेरंबृहस्पतिर्विनायकम् ॥ ३९ ॥ बृहस्पतिरुवाच ॥ दोषंमहर्षिदेवानामि
न्द्रस्यचविनायक ॥ यत्तेपुरार्चनंयज्ञनकृतंतत्क्षमस्वनः ॥ ४० ॥ व्यासउवाच ॥ सुराचार्यगिरःश्रुत्वागणपोवाक्यमब्रवीत् ॥ ४१ ॥ गणेशउवाच॥
युष्माभिर्व्रियतांदेवावरोमत्तोहिवाञ्छितः ॥ ४२ ॥ व्यासउवाच ॥ ततःशक्रादयःसर्वेबृहस्पतिपुरोगमाः ॥ ऊचुर्गणपतिंदेवाजयोऽस्माकंभवत्विति
॥४३॥ देवानांवचनंश्रुत्वागणेशोऽवाक्यमब्रवीत् ॥४४॥ गणेशउवाच ॥ बाढमेवसुरश्रेष्ठाजयोवोभवतुद्रुतम् ॥ ४५ ॥ व्यासउवाच ॥ ततोदेवगणा
स्सर्वेहर्षनिर्भरमानसाः ॥ गणेशंपूजयामासुर्गन्धसारैस्तुमण्डनैः ॥ ४६ ॥ दिव्यधूपैःसुवस्त्रैश्चकुसुमैर्नन्दनोद्भवैः ॥ पारिजातादिभिःपुष्पैरन्यैर्देव
मनोहरैः ॥ ४७ ॥ पूजितोगणपोदेवैरुवाचसुरसत्तमान् ॥ ४८ ॥ गणेशउवाच ॥ गच्छध्वंविबुधादेवंविष्णुमद्भुतसाहसम् ॥ सविधास्यतिवःका
मंवाञ्छितंचततःसुराः ॥ ४९ ॥ व्यासउवाच ॥ स्वंस्वंरथंसमारुह्यगतास्तेहरिमव्ययम् ॥ पीताम्बरंनमस्कृत्यऊचुर्देवगणामुदा ॥ ५० ॥ देवाऊ
चुः ॥ हरात्मजंतुसम्प्राप्यपूजयित्वागणाधिपम् ॥ आगतास्त्वत्सकाशंवैमहात्मन्नव्ययकेशव ॥५१॥ व्यासउवाच ॥ एतच्छ्रुत्वातुदेवानांवचनंहरिरव्य
यः ॥ यथातथ्यमुवाचेदंहनिष्येदैत्यपुङ्गवान् ॥ ५२ ॥ श्रुत्वावागमृतंदेवानारायणमुखाच्च्युतम् ॥ हृष्टाश्चतंमुदाविष्टाद्रव्यैरिष्टैःसमर्चयन् ॥५३॥

पुनर्विष्णुरुवाचददेवानिन्द्रपुरोगमान् ॥ ५४ ॥ विष्णुरुवाच ॥ स्वंस्वंबलंसमाहृत्यसज्जीभवतविज्वराः॥हनिष्येतान्दुराचारान्बलंचैवसमन्ततः॥
अस्त्रवृन्दंतुसंगृह्ययूयंतिष्ठतनिर्भयाः ॥ ५५ ॥ व्यासउवाच ॥ माधवस्यवचःश्रुत्वाप्रगताःसुरपुङ्गवाः ॥ विमानानिसमारुह्यसर्वेदिव्यास्त्रधारिणः
॥ ५६ ॥ देवानांहर्षवाक्यानिदैत्यचाराःश्रुतानिवै ॥ राजानंकथयामासुर्हिरण्याक्षंमहाबलम् ॥ ५७ ॥ श्रुत्वादैत्यपतिस्तत्रचुकोपातिमहाबलः॥
सचिवांस्तुसमाहूयक्रुद्धोवचनमब्रवीत् ॥ ५८ ॥ दैत्यराजउवाच ॥ अधुनेन्द्रादिदेवाश्चनिखिलाःक्रूरबुद्धयः ॥ माधवंचपरीप्सन्तःशम्भौ
सर्वन्यवेदयन् ॥ ५९ ॥ कथंजयंचलप्स्यामोदैत्यवृन्देऽतिदारुणे ॥ त्रिपुरारिरुवाचेदंगणेशंयजतामगः ॥ ६० ॥ पूजयित्वातुतंदेवंजेष्यथासुर
दानवान् ॥ ततोदेवगणैर्हृष्टैःपूजितोगणनायकः ॥ ६१ ॥ गणाधिपेनतुष्टेनक्रोदत्तोवरोमहान् ॥ जेष्यथाद्यासुरान्सर्वांस्ततोदेवामुदान्विताः ॥६२॥
हरिं निवेदयामासुरस्मद्वधपरीप्सवः ॥ हरेर्बाढमुपश्रुत्यरथिनःशस्त्रपाणयः ॥ ६३ ॥ युद्धार्थमधितिष्ठन्तिनिर्जरास्त्वभयामयि ॥ यस्ययाशक्ति
रस्तीहदेवाञ्जेतुंवदत्वलम् ॥६४॥ व्यासउवाच॥ततोराज्ञोवचःश्रुत्वामधुर्वचनमब्रवीत् ॥६५॥ मधुरुवाच ॥ जेष्यामिचहरिंराजन्सहायंमेनियोजय ॥
जितेनारायणेदेवाःसभयास्त्रिदशाध्रुवम् ॥ तस्मान्नारायणोऽस्माकंभागःसर्वपुरञ्जयः. ॥ ६६ ॥ व्यासउवाच ॥ ततोधुन्धुश्चसुन्दश्चकालकेयोमहा
बलः॥सहायाश्चमधोस्तस्यजेष्यामोमाधवंनृप ॥६७॥सर्वदैत्यबलेमुख्याश्चत्वारोदृढविक्रमाः॥कालमृत्युसमावीराःसर्वास्त्रविधिपारगाः॥६८॥बलस्त
त्राब्रवीद्वाक्यंयस्मिञ्जयउपस्थितः ॥ तंचजेष्यामिजिष्णुंचप्रतिज्ञामेदृढानृप ॥ ६९ ॥ नमुचिश्चमुचिश्चैवभ्रातरौबलदर्पितौ ॥ ऊचतुस्तौनृपंह्यावां
जेष्यावोवैबलाद्बलौ॥७०॥जम्भश्चैवाब्रवीद्वाक्यमिन्द्रमिन्द्रपुरोगमान्॥जेष्यामिनात्रसन्देहोदैत्याभवतविज्वराः ॥७१॥ त्रिपुरश्चाब्रवीद्वाक्यंजेष्यामि
चविनायकम्॥तावदूचेऽथसेनानीर्मयोदेवान्तकोबली॥७२॥कुबेरंप्रतिरक्षोभिःसर्वांश्चैवहिरण्यकान्॥एतस्मिन्नन्तरेतत्रनारदोमुनिसत्तमः ॥७३॥ गत्वो
वाचहिरण्याक्षंजिष्णुदूतोऽहमागतः॥राज्यंत्यजस्ववाचानःप्राणेषुयदितेहितम् ॥७४॥ नचेद्युध्यस्वमामद्यनवागच्छरसातलम्॥ततःकोपादुवाचेदंनार
दंमुनिसत्तमम्॥७५॥दैत्यराजउवाच ॥ अहिंस्यस्त्वंब्राह्मणाद्यगच्छतूर्णममाग्रतः॥देवानांचविपत्तिंचकदनंनिधनंपुरः॥पश्यविप्रक्षणेनान्तंप्राप्तंहरिहरा
दिकम्॥७६॥व्यासउवाच॥एवमुक्त्वासदैत्येन्द्रोबलाध्यक्षानुवाचह॥७७॥दैत्यराजउवाच॥सज्जीकृत्यबलंसर्वान्रथांश्चानयतद्रुतम्॥७८॥व्यासउवाच॥
दैत्यराजवचःश्रुत्वाबलाध्यक्षाःसमन्ततः॥बलान्याहूयसहसासन्त्रस्तास्तूर्णमागताः॥७९॥कोटिकोटिसहस्राणिअक्षौहिण्योबलानिच ॥एकैकस्यचवी
रस्यवाहनानिमहान्तिच ॥ ८० ॥ स्यन्दनानिविचित्राणिगजोष्ट्राश्वखरानपि॥सिंहव्याघ्रलुलायांश्चसमारुह्ययुस्तदा ॥ ८१ ॥ वाद्यैःसर्वैश्चभूयिष्ठैः

सिंहनादैर्भयानकैः ॥ दिशस्तुपूरयामासुस्सिन्धुवेलाचलाधराः ॥ ८२ ॥ सर्वलोकाश्चवित्रेसुःसमुद्राश्चचकम्पिरे ॥ देवदुन्दुभयोनेदुःसर्वदेवैःस
मीरिताः ॥ ८३ ॥ वाद्यैश्चविविधैरन्यैर्वायुपूर्णैर्वनस्वनैः ॥ सर्वलोकाभयत्रस्तायेचत्रैलोक्यवासिनः ॥ ८४ ॥ अदृष्टकामागताकाशंघोरंतीव्रंमहा
हवम् ॥ परिघैःपाशशूलैश्चखड्गयष्टिपरश्वधैः ॥ ८५ ॥ शरैश्चनिशितैर्घोरैर्जघ्नुरन्योन्यमाहवे ॥ शस्त्रास्त्रैर्बहुधामुक्तैर्दिशःसर्वानिरन्तरम् ॥ ८६ ॥
विगृहेषुधरण्यांचपर्वतेषुजलेषुच ॥ देवस्थानेतथाकाशेपर्वताग्रेषुसानुषु ॥८७॥ गह्वरेषुमहारण्येतयोर्युद्धमवर्तत ॥ पुष्कलादिघनानांचवर्षधाराजलं
यथा ॥ ८८ ॥ पतन्त्यस्त्राणिसैन्येषुशतशोऽथसहस्रशः ॥ केचित्पेतुःपृथिव्यांतुशरैःसम्भिन्नविग्रहाः ॥ ८९ ॥ शक्तिभिर्मुसलैश्चान्यैश्चक्रशूलपर
श्वधैः ॥ पतिताःसम्मुखेशूरायुद्धेषुन्यायवर्तिनः ॥ ९० ॥ गच्छन्तिसुरसद्मानिस्वाम्यर्थेयेत्वभीरवः ॥ येचान्येकातराःपापाहन्तारोविमुखान्रणे
॥ ९१ ॥ अन्यार्येर्येचयोद्धारस्तेयान्तियममन्दिरम् ॥ त्रिदिवस्थागजारोहाःसैन्धवस्थास्तथापरान् ॥ ९२ ॥ रथस्थांश्चरथारोहाःपदगांश्चपदा
तयः ॥ परस्परंविनिघ्नन्तिशूरायुद्धाभिकाङ्क्षिणः ॥ ९३ ॥ मुदिताःसत्त्वसम्पन्नाधर्मिष्ठाबलसंवृताः ॥ केषांचिद्बाहवश्छिन्नामुसलैर्भिन्नमस्तकाः
॥ ९४ ॥ केशाश्शिरांसिवस्त्राणिनिपेतुर्धरणीतले ॥ मध्यच्छिन्नास्तथाभिन्नाःपेतुरुर्व्यांमहाबलाः ॥ ९५ ॥ खड्गपातैस्तथाचोग्रैश्छिन्नभिन्नाःपर
श्वधैः ॥ गामेवपतिताधीरादिव्यालङ्कारभूषिताः ॥ ९६ ॥ प्रदीप्तोऽभूद्धरादेशोवीरैर्नागैर्हयैरथैः ॥ विविधाभरणैर्नष्टैःपताकाभिश्चकेतुभिः ॥ ९७ ॥
ततोवसुन्धरासर्वासशैलवनकानना ॥ रुधिरौघप्लुतातत्रविबुधासुरयोर्युधि ॥ ९८ ॥ क्रव्यादैर्बहुभिस्तत्रखादितोद्रव्यसञ्चयः ॥ लोहितंप्रचुरंपीतं
रक्षोभिश्चवृकादिभिः ॥ ९९ ॥ अन्यैर्महागणैरेवक्षतजंपवनान्वितम् ॥ खादितंप्रीतिमद्भिश्चफेरुगृध्रगणैर्मुदा ॥ १०० ॥ एतस्मिन्नन्तरेसूरिःसुर
पूज्योबृहस्पतिः ॥ मृतसञ्जीवनीविद्यांसुराणांसञ्जजापह ॥ १ ॥ विशल्यकरणींदिव्यांब्रह्मविद्यांमहाबलाम् ॥ ततोधन्वन्तरिर्विद्वान्सुरवैद्योमनो
जवः ॥ २ ॥ औषधैस्तत्प्रयोगैश्चरणेपर्यटतेमुदा ॥ तत्रदेवाश्चजीवन्तियेमृताश्चमहाहवे ॥ ३ ॥ अव्रणाबलसपन्नाःप्रयुध्यन्तिभृशंपुनः ॥ एवंशत
सहस्रंतुगणंदैत्यस्यचोद्धतम् ॥ ४ ॥ पतितंपुण्ययोमाञ्चशरैर्निर्भिन्नकन्धरम् ॥ ततस्तुजयशब्देननन्दन्तिसिद्धचारणाः ॥ ५ ॥ ऋषयःखेचराश्चा
न्येयेचैवाप्सरसांगणाः ॥ गीतिंगायन्तिगन्धर्वाःशशंसुःपरमर्षयः ॥ ६ ॥ अथक्रुद्धोमहातेजादैत्यमुख्योमहाबलः ॥ कालकेयइतिख्यातःसेनानीर्दै
त्यपस्यच ॥ ७ ॥ स्यन्दनस्थोमहावीर्योधनुरादायतत्रच ॥ जघानसुरसङ्घांस्तान्नतयामासभूतले ॥ ८ ॥ निरन्तरशरौघेनच्छादितंगगनंतदा ॥ निप
तन्तिशराःसैन्येकोटिकोटिसहस्रशः ॥ ९ ॥ निपतन्तिततोदेवाःसंयुगेष्वनिवर्तिनः ॥ रुधिरोद्गारिणस्सर्वेसिद्धगन्धर्वकिन्नराः ॥ ११० ॥ विशिखैः

पीडितादेवानिपेतुर्धरणीतले ॥ केचिच्छरशतैर्भिन्नास्सहस्रैरयुतैस्तथा ॥११॥ पेतुरुर्व्यांमहावीर्यायेरणेसुरपुङ्गवाः ॥ व्यथिताश्चाभवन्सर्वेस्यन्दनस्था
दिवौकसः ॥ १२ ॥ शरैःप्रव्यथितास्तेतुस्थातुंशक्तानसम्मुखे ॥ तेनावगाहितंसैन्यंगजेनेवसरोवनम् ॥ १३ ॥ शरैस्तस्यार्दितादेवावह्न्यानलसम
प्रभैः ॥ नशेकुःसमरेस्थातुमघवन्तंययुस्तदा ॥ १४ ॥ चित्ररथइतिख्यातोदेवश्शस्त्रभृतांवरः ॥ ययौस्यन्दनमारुह्ययुद्धंप्रतिधनुर्धरः ॥ १५ ॥ अब्र
वीद्वचनंसोऽपिसेनान्यंतुमहासुरम् ॥ १६ ॥ चित्ररथउवाच॥यथाहंसिमहाशूरसुरसेनांमुदान्वितः ॥ सत्वंप्रशंसनीयश्चशूरोऽसिसुरसंमतः ॥ १७ ॥
हिरण्याक्षप्रियंकर्मकृतंयुद्धेत्वयाधुना ॥ इदानींममबाणैश्चगच्छस्वयममन्दिरम् ॥ १८ ॥ व्यासउवाच ॥ ततश्चकालकेयस्तुस्मितोवचनमब्रवीत् ॥
॥ १९ ॥ कालकेयउवाच ॥ पुरैवविजितोदेवगणःसर्वःप्रलीलया ॥ इदानींतुस्थितंयुद्धेबलंसर्वंतुहेलया ॥ १२० ॥ यदितेनिधनेप्रीतिरस्तीहसुरपु
ङ्गव ॥ एभिस्त्वांनिशितैर्बाणैर्नयामियममन्दिरम् ॥ २१ ॥ व्यासउवाच ॥ इत्युक्त्वापरमक्रुद्धोबाणमन्तकसन्निभम् ॥ जघानसमरेवीरस्त्रिभिश्चि
च्छेदसोऽम्बरे ॥ २२ ॥ पुनर्बाणांश्चसमरेयोजयित्वाद्भुतरूपा ॥ जघानप्रचुरान्दैत्यांस्तांश्चकर्त्तसलाघवात् ॥ २३ ॥ ततोऽन्योन्यंशरैस्तीक्ष्णैःका
लानलसमप्रभैः ॥ युद्धेधनुष्मतांश्रेष्ठश्चिच्छेदभुविवेगतः ॥ २४ ॥ तद्युद्धमभवद्देवदैत्ययोर्धर्मतोभृशम् ॥ द्रष्टुकामागताःपार्श्वमृषिदेवाःसुरोरगाः
॥ २५ ॥ एवंशतसहस्राणिबाणानांविधृतानिच ॥ अन्योन्यंसमरेवीरौविजयायविरेजतुः ॥ २६ ॥ अथक्रुद्धोमहातेजागन्धर्वाणांपतिस्तदा ॥ त्रि
भिर्बिभेदबाणैश्चललाटेहृदिपञ्चभिः ॥ २७ ॥ सप्तभिर्जठरेनाभौवस्तौतस्यसपञ्चभिः ॥ शरैःसम्पातितोदैत्योमुग्धःकश्मलतांगतः ॥ २८ ॥ शिथि
लीकृतचापश्चलेभेसंज्ञांचिराद्बली ॥ लब्धसंज्ञस्त्रिभिर्बाणैस्सविभेदसुरोत्तमम् ॥ २९ ॥ चकर्त्तधनुरस्त्रैश्चदैत्यराजस्यपश्यतः ॥ ततोबाणसहस्रैस्तुका
लान्तकसमप्रभैः ॥ १३० ॥ बिभेददैत्यसिंहंतुसुराणामुत्तमोबली ॥ हतचेताःसदैत्येन्द्रोबहुशोणितसंस्रवः ॥ ३१ ॥ विह्वलोबहुबाणार्तःशूलंज
ग्राहदानवः ॥ शूलहस्तस्यतस्यैवचतुर्भिस्तुरगाञ्शरैः ॥ ३२ ॥ हत्वाचपातयामासत्रिभिर्यन्तारमेवच ॥ जघानशूलमुर्वीस्थस्ततोगन्धर्वसत्तमम्
॥ ३३ ॥ विचकर्तत्रिभिर्बाणैःशूलंचित्ररथोबली ॥ शूलंचनष्टकंदृष्ट्वाहतभोगमिवोरगम् ॥ ३४ ॥ गृहीत्वामुद्गरंघोरंप्रदुद्रावसुरंबली ॥ समुद्गरंसमा
यातंदैत्यसेनाधिपंतदा ॥ ३५ ॥ विचकर्त्तशिरोदेहादर्धचन्द्रेणसम्भ्रमात् ॥ सपपातमहीपृष्ठेसञ्चचालवसुन्धरा ॥ ३६ ॥ ततोदैत्यगणाः
सर्वेविमुखाविप्रदुद्रुवुः ॥ १३७ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेकालकेयवधोनामसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ व्यासउवाच ॥
भ्रातरंनिहतंदृष्ट्वाकालेयोनामदानवः ॥ चित्ररथंप्रदुद्रावधृत्वाबाणंसकार्मुकम् ॥ १ ॥ दृष्ट्वाऽसुरंविधावन्तंकालमृत्युसमप्रभम् ॥ अरौत्सीत्तंमहावीर्यो

जयन्तः पाकशासनिः ॥२॥ अब्रवीच्च महातेजा दैतेयं सुरसत्तमः ॥ तथ्यं धर्माभिसंयुक्तं लोकद्वयहितं ध्रुवम् ॥३॥ जयन्त उवाच ॥ शस्त्राभिघातदुःखार्तं कश्म
लं चान्यसंयुतम् ॥ प्रभग्नं च निरस्तं च यो हन्ति स च बालिशः ॥४॥ सुचिरं रौरवं भुक्त्वा तस्य दासो भवेच्चिरम् ॥ तस्मान्मा ऽमुं प्रयुध्यस्व युद्धधर्मस्थितो भव ॥५॥
व्यास उवाच ॥ जयन्तमब्रवीद्वाक्यं कालेयः क्रोधमूर्च्छितः ॥६॥ कालेय उवाच ॥ निहत्य भ्रातृहन्तारमथ त्वां हन्मि साम्प्रतम् ॥ ७ ॥ व्यास उवाच ॥ ततस्तं
चासुरश्रेष्ठं कालानलसमप्रभम् ॥ जयन्तो निशितैर्बाणैर्जघान सुरसत्तमः ॥ ८ ॥ निचकर्त्त शरान्सोऽपि त्रिभिर्विव्याध चासुरः ॥ ततः कोपसमाविष्टौ
नाराचैर्दशभिस्तथा ॥ ९ ॥ शरांश्चिच्छिदतुस्तत्र बिभिदतुश्च परस्परम् ॥ स्यन्दनाच्च तयोरेव बहु सुस्राव शोणितम् ॥ १० ॥ यथा वृष्टिगणं प्राप्य नदी
गैरिकवाहिनी ॥ तथातौ च महावीर्यौ न क्षीणौ न च कातरौ ॥ ११ ॥ न शर्म परिलेभाते परस्परजयैषिणौ ॥ अथ तस्य च दैत्यस्य धनुश्चिच्छेद चेषुणा ॥
॥ १२ ॥ यन्तारं पञ्चभिर्बाणैः पातयामास भूतले ॥ अष्टाभिर्निशितैर्बाणैश्चतुरोऽश्वान पातयत् ॥ १३ ॥ शक्तिसङ्घं च भूमिष्ठः कुमारं च जघान ह ॥
आयान्तीं वह्निकूटाभां शरैश्चिच्छेद पञ्चभिः ॥१४॥ गदामादाय वेगाच्च जयन्तं स जघान ह ॥ गदयापीडितं साश्वं सवरूथं सकूबरम् ॥ १५ ॥ पातयित्वा
धरण्यां च सिंहनादं ननाद ह ॥ लाघवात्स धरां गत्वा गदापाणिरुपस्थितः ॥ १६ ॥ वज्रपाताद्यथा शब्दो लोकानां दुःसहो भवेत् ॥ तथा तयोर्गदापाते श
ब्दः स्यात्तु मुहुर्मुहुः ॥ १७ ॥ एवं तयोर्गदायुद्धं यावदब्दचतुष्टयम् ॥ प्रभग्ने ते गदे खस्थौ खड्गचर्मधरावुभौ ॥ १८ ॥ तदा पदातिनोर्युद्धमद्भुतं लोमहर्ष
णम् ॥ दृष्ट्वा च विस्मयं जग्मुर्देवासुरमहोरगाः ॥ १९ ॥ खड्गपातैर्मुहूर्तान्ते तयोश्छिन्ने तु वर्मणी ॥ अभवत्खड्गयुद्धं च तयोर्युद्धातिशीलिनोः ॥ २० ॥
दधार चिकुरे तस्य जयन्तो भीमविक्रमः ॥ शिरश्छित्त्वास्य खड्गेन पातयामास भूतले ॥ २१ ॥ ततस्तु जयशब्देन देवाः सर्वे ननन्दिरे ॥ प्रभग्ना दैत्यस
ङ्घाश्च दिशः सर्वाः प्रदुद्रुवुः ॥ २२ ॥ इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे कालेयवधो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ व्यास उवाच ॥ एतच्छ्रुत्वा तु
दैत्येन्द्रो हिरण्याक्षो महाबलः ॥ सरोषश्चातिताम्राक्षो ह्यसुरानादिदेश ह ॥ १ ॥ हिरण्याक्ष उवाच ॥ स्वयं गच्छामि युद्धाय देवानां विजिघांसया ॥ नाग
च्छन्ति न युद्धं चन्ते तेन मार्गाद्विशन्वितः ॥२॥ व्यास उवाच ॥ एतच्छ्रुत्वा तु वचनं शेषा दैत्यगणाधिपाः ॥ युद्धाय प्रययुः सर्वे शूलपाशातिपण्डिताः ॥३॥
अधिकं पूर्वसैन्याच्च तथ्यशतगुणैरपि ॥ निरन्तरं तथाकाशं प्रययुर्युद्धकाङ्क्षिणः ॥ ४ ॥ ततो रुद्रास्ससाध्याश्च विश्वे च वसवस्तथा ॥ स्कन्दश्च गणपश्चैव वि
ष्णुजिष्णुपुरोगमाः ॥ ५ ॥ सर्वे योद्धुं गतास्ते च हृष्टा रणसमुत्सुकाः ॥ एतस्मिन्नन्तरे युद्धं देवदानवयोरपि ॥ ६ ॥ न भूतं न श्रुतं पूर्वं सर्वलोकभयङ्करम् ॥
शस्त्रास्त्रैर्बहुधा युक्तं शिशिरेणेव काननम् ॥७॥ धरां स्वर्गौक आकाशं संरुध्य युद्धमाबभौ ॥ अन्योन्यं जघ्नुराकाशे तथान्योन्यं महीतले ॥८॥ शक्तिभिर्मु

सलैर्भल्लैर्बहुभिः शरवृष्टिभिः ॥ दारुणैः खड्गपातैश्च तथा चक्रपरश्वधैः ॥ ९ ॥ अन्यायुधैश्च विविधैर्निजघ्नुस्ते परस्परम् ॥ अभवन्घोररूपाणि धरा
काशेऽव्ययानि च ॥ १० ॥ शस्त्रैः शरैः सृक्पातैः कङ्कवायसजम्बुकैः ॥ यथा मुसलधाराभिर्घना वर्षन्ति लोहितम् ॥ ११ ॥ तथैव क्षतजैः स्वस्तैस्वाङ्गा
श्च देवदानवाः ॥ केचित्पतन्ति मुह्यन्ति स्खलन्ति च हसन्ति च ॥ १२ ॥ मुञ्चन्ति चार्तनादांश्च सिंहनादं मुहुर्मुहुः ॥ केषांचिद्बाहवश्छिन्नाश्छिन्नपादास्त
थापरे ॥ १३ ॥ छिन्नपार्श्वोदराः केचिन्निपेतुः शतशो भुवि ॥ कोटिकोटिसहस्राणि गजवाज्यसुराणि च ॥ १४ ॥ अपतन्धरणीपृष्ठे रक्तौघे बहु
धा भुवि ॥ ततस्तु धरणीपृष्ठे त्वभवल्लोहितार्णवः ॥ १५ ॥ विपरीतास्ततो नद्यः सद्यस्तत्र विसुस्रुवुः ॥ तृणकाष्ठपरास्तत्र शक्तयो दारुसञ्चयाः ॥ १६ ॥
मुद्गरा मुसलाः शूला मकराद्या भवन्ति च ॥ जयन्ति काध्वजा मीनाः कमठाश्चर्मकायकाः ॥ १७ ॥ शरादिभिर्महोग्रैश्च निरुद्धाः प्रचुरैस्तथा ॥ केशचा
मरशैवालाः सम्पूर्णास्तास्ततस्ततः ॥ १८ ॥ पतद्भिश्च तथान्यैश्च विविधैः क्षतजार्णवः ॥ तदा वसुन्धरा सर्वा सशैलवनकानना ॥ १९ ॥ रुधिरौघा महाघोरा स
र्वलोकभयङ्करा ॥ स्कन्दस्य शक्तिपातेन गता दैत्या यमक्षयम् ॥ २० ॥ पर्शुना परमेणैव अग्निनाग्निशिखैः शरैः ॥ वरुणस्य च पाशेन बद्धा मग्ना यमक्षये ॥
॥ २१ ॥ येषां पुत्रैश्च पौत्रैश्च पुरोगैः सचिवैस्तथा ॥ निपातिताश्च दैतेयाः शरशक्त्यृष्टिवृष्टिभिः ॥ २२ ॥ ग्रहैश्च श्वसनैरेव यक्षगन्धर्वकिन्नरैः ॥ महत्या गदया
चैव कुबेरेण च धीमता ॥ २३ ॥ घनानां निकरैर्वज्रैस्तुषारैर्विधुनेरितैः ॥ पन्नगानां विषैर्घोरैर्दैत्याः पेतुर्धरातले ॥ २४ ॥ अन्यैश्च विविधैर्देवैः कोटिकोटिस
हस्रशः ॥ पातिताः प्रययुस्सर्वे धरण्यां तु गतासवः ॥ २५ ॥ देहांस्त्यक्त्वा दिवं यान्ति केचिच्च यममन्दिरम् ॥ केचिद्गच्छन्ति पातालं पुण्यापुण्यप्रयोगतः ॥
॥ २६ ॥ एतस्मिन्नन्तरे वेदाञ्जजल्पुः परमर्षयः ॥ स्वस्त्यस्तु ब्राह्मणेभ्यश्च गोभ्यः स्त्रीभ्यस्तपस्विषु ॥ २७ ॥ प्रयुध्यमानेष्वन्येषु साम्प्रतं सर्वजन्तुषु ॥ वि
बुधैरर्दिता दैत्याः शेषाः पर्वतमाश्रिताः ॥ २८ ॥ प्रजग्मुश्च दिशः सर्वाः कातरा रणभीरवः ॥ दैत्यव्यूहे प्रभग्ने च बलो नाम महाबलः ॥ २९ ॥ अर्दयामास देवां
श्च संयम्याग्निसमैः शरैः ॥ तस्य बाणार्दिता देवा बहवो बलदर्पिताः ॥ ३० ॥ पतिता धरणीपृष्ठे केचिद्ग्रारणाजिरे ॥ दृष्ट्वा तस्य महत्कर्म दारुणं लोकभीषणम्
॥ ३१ ॥ शशंसुः ऋषयो देवास्तत्र शिष्टाः प्रचुक्रुशुः ॥ अथ क्रुद्धो महातेजाश्शतक्रतुररिन्दमः ॥ ३२ ॥ जघान शरसन्दोहैर्बलं बलवतां वरम् ॥ सोऽपि
क्रुद्धो बलो युद्धे तथा शक्रं ससम्भ्रमः ॥ ३३ ॥ रुधिरेणावसिक्ताङ्गौ प्रसृतेन महाबलौ ॥ तौ यथा माधवे मासि पुष्पितौ किंशुकद्रुमौ ॥ ३४ ॥ चक्राणि च
सहस्राणि शूलानि मुसलानि च ॥ निचखान रणे शक्रे चपले चासुरोत्तमः ॥ ३५ ॥ तानि चक्राणि शूलानि निचकर्त शरोत्तमैः ॥ सुरराट्सहसा भ्रान्तो ली
लया समरे बली ॥ ३६ ॥ स च दैत्यो महातेजाः शक्त्या चैव पुरन्दरम् ॥ निजघान तदा तूर्णं गजस्थं च स्तनान्तरे ॥ ३७ ॥ तया विनिहतः शक्रः प्रचचाल ग

जोपरि ॥ लब्धसंज्ञोगलेजिष्णुर्बिभेददनुजंक्षणात् ॥ ३८ ॥ रथसंस्थस्यहस्तौचधनुश्चिच्छेदचेषुणा ॥ चर्मतीक्ष्णंध्वजंतस्यशरेणैकेनवीरहा ॥
॥ ३९ ॥ चतुर्भिर्निशितैर्बाणैर्विव्याधचतुरोहयान् ॥ शरेणैकेनमूतस्यशिरश्चिच्छेदतत्क्षणात् ॥ ४० ॥ छिन्नधन्वाहतरथोहताश्वोहतसारथिः ॥
निपत्यमूर्च्छितःपृथ्व्यांमुहूर्तान्मृत्युमापसः ॥ ४१ ॥ अथक्रुद्धोमहादैत्योनमुचिःसुरदर्पहा ॥ गदामादायसहसासजघानमहागजम् ॥ ४२ ॥
यथामेरुगिरेःशृङ्गेवज्रपातोभवेद्ध्रुवम् ॥ तथैवचमहाशब्दोह्यभवल्लोमहर्षणः ॥ ४३ ॥ प्रहारेणार्दितःपद्मीसश्चचालसविह्वलः ॥ रुधिरेणावसिक्ता
ङ्गोविमुखोवेदनातुरः ॥ ४४ ॥ शतक्रतुंविधावन्तिशतशोऽथसहस्रशः ॥ अर्धचन्द्रैःक्षुरप्रैश्चचिच्छेदपाकशासनः ॥ ४५ ॥ जन्तुभिस्तस्यमायाभि
रर्दितास्सुरपुङ्गवाः ॥ भूमौनिपतिताःकेचित्केचित्सुतारथोपरि ॥ ४६ ॥ दृष्ट्वातस्यमहत्कर्ममाधवोविशिखांस्तथा ॥ जन्तुभूतान्सचक्रेणचिच्छेददेह
लग्नकान् ॥ ४७ ॥ ततोजिष्णुस्त्रिभिर्बाणैःपातयामासभूतले ॥ पृथिव्यांपतितोदैत्योमूर्च्छितःस्खलितःपुनः ॥ ४८ ॥ दधारमुद्गरंघोरंशक्रंहन्तुंस
मुद्यतः ॥ ततोजघानमघवाकुलिशेनमहासुरम् ॥ ४९ ॥ सपपातमहीपृष्ठेक्षतवक्षामहाबलः ॥ साधुसाध्वितिदेवाश्चसिद्धाश्चैवमहर्षयः ॥ ५० ॥
अपूजयंस्तदाशक्रंबहुभिःपुष्पवृष्टिभिः ॥ ततोदैत्यगणाःसर्वेभीतास्तत्रप्रदुद्रुवुः ॥ ५१ ॥ गीतंगायन्तिगन्धर्वाननृतुश्चाप्सरोगणाः ॥ ५२ ॥ इति
श्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेबलनमुचिवधोनामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ व्यासउवाच ॥ बलंचनिहतंदृष्ट्वानमुचिचस्वकाग्रजम् ॥
मुचिस्तत्राब्रवीद्वाक्यंन्येष्ठोमेसूदितस्त्वया ॥ १ ॥ परोक्षेणाधुनात्वांचशरैर्नेष्यामिभास्करिम् ॥ २ ॥ व्यासउवाच ॥ तमब्रवीन्महातेजाःशक्रः
सर्वसुरार्चितः ॥ ३ ॥ शक्रउवाच ॥ भ्रातुस्तेधर्मपन्थानमिदानींलप्स्यसेध्रुवम् ॥ वह्नेरुष्णमविज्ञायप्रमोहाच्छलभायथा ॥ सहसाप्रविशन्त्यग्निं
तथामांयोद्धुमिच्छसि ॥ ४ ॥ व्यासउवाच ॥ एवंब्रुवाणमिन्द्रंचजघानविशिखैस्त्रिभिः ॥ सचिच्छेदत्रिभिर्बाणैःशक्रःपरपुरञ्जयः॥५॥ ततोजघानदश
भिरिन्द्रमैरावणंत्रिभिः ॥ सप्तभिर्मातलिंछित्वानादैरुच्चैर्ननादह ॥ ६ ॥ शक्रंप्रतिपुनर्दैत्योभ्रामयामाससम्भ्रमात ॥ आयसींतांगदांकोपान्महा
बलपराक्रमः ॥ ७ ॥ ततस्तुलाघवाच्छक्रोजघानकुलिशेनहि ॥ भिदुरस्यावपातेनगतासुर्निपपातह ॥ ८ ॥ दनुजस्यप्रपातेनसश्चचालवसुन्धरा ॥
देवाःप्रचक्रुर्नृत्यानिदानवाविप्रदुद्रुवुः ॥ ९ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेमुचिवधोनामसप्ततितमोऽध्यायः ॥ ७० ॥ व्यासउवाच ॥
तारेयोबलसम्पन्नःशक्रतुल्यपराक्रमः ॥ जघानविशिखैस्स्कन्दंपितृघातिनमाहवे ॥ १ ॥ ततस्स्कन्दोमहाबाहुर्हरितुल्यपराक्रमः ॥ विचकर्त
शरांस्तांस्तान्निर्बिभेदशरोत्तमैः ॥ २ ॥ सदैत्यस्सहसास्कन्दंछादयामासमार्गणैः ॥ असम्भ्रान्तःप्रचिच्छेदविशाखोविशिखैस्तदा ॥ ३ ॥ तारे

योऽग्निशरैः स्कन्दंजघानरणमूर्धनि ॥ विशिखंभिदुरप्रख्यंचखानहरनन्दने ॥ ४ ॥ वैश्वानरेणसेनानीस्तत्रसम्पर्यवारयत् ॥ रौद्रमस्त्रंपुनर्दैत्यः प्रेषया
मासतंप्रति ॥ ५ ॥ तन्निरस्तंकृतंतेनबाणेनास्फालितेनच ॥ अघोरंप्राक्षिपद्दैत्योघोररूपसुदारुणम् ॥ ६ ॥ भूधराविटपास्सिंहास्तथासर्पादयः
शराः ॥ धावन्तिपार्वतीपुत्रंकोटिकोटिसहस्रशः ॥ ७ ॥ छित्त्वातांस्तुशरान्स्कन्दोविभेददैत्यपुङ्गवम् ॥ आपादंशीर्षपर्यन्तंशरैरभ्यर्कसन्निभैः
॥ ८ ॥ स्वर्णपुङ्खाः शरालग्नादेहेदैत्यपतेर्भृशम् ॥ रेजुस्तेस्वर्णशकलायथाकृष्णशिलोच्चये ॥ ९ ॥ तस्यदेहात्ततश्चैवबहुसुस्रावशोणितम् ॥ यथाच
माधवेमासिपुष्पपुष्पश्शमीतरुः ॥ १० ॥ स्यन्दनाधश्वराश्वाश्चशिशियरेभूमिलग्नकाः ॥ अथक्रुद्धोमहादैत्यः शूलंभीमंचदारुणम् ॥ ११ ॥ धृत्वातं
प्रतिचिक्षेपकालमृत्युसमप्रभम् ॥ पार्वतीनन्दनेनापिशूलंपाशुपतेनह ॥ १२ ॥ क्षिप्तंतेनकृतंदग्धंमुहूर्तेनरणाजिरे ॥ पुनःशक्तिंमुमोचाथब्रह्मदत्तान्तु
दानवः ॥ १३ ॥ शूलंप्रतिजघानाथशतकूटसमप्रभम् ॥ ततोऽस्त्रेवब्रसङ्काशेजघंटातेवियत्यपि ॥ १४ ॥ तयोस्सवीर्ययोरस्त्रेधरण्यांप्रणिपेततुः ॥
ततोदैत्यपतिःस्कन्दंशरैरग्निशिखोपमैः ॥ १५ ॥ अर्दयामाससहसाघनधारेवपर्वतम् ॥ तांस्तुच्छित्त्वामहाबाहुःसेनानीश्चापमस्यवै ॥ १६ ॥
विचकर्तार्धचन्द्रेणतथायन्तुःशिरोमहत ॥ तथाश्वान्बहुभिर्बाणःपातयामासभूतले ॥ १७ ॥ गृहीत्वामुसलंवेगात्सदुद्रावस्थलेगुहम् ॥ जघानतेन
दैत्येन्द्रःशिखिनंशिखिवाहनम् ॥ १८ ॥ ततोमोहंगतोबर्हीप्रचकम्पेमुहुर्मुहुः ॥ ततःस्कन्दःपुनस्तंचजघानासुरपुङ्गवम् ॥ १९ ॥ प्रचिच्छेदासिना
वेगान्मुसलंचातिदारुणम् ॥ तारेयःशक्तिमादायजघानक्रौञ्चदारणम् ॥ २० ॥ सोऽपिशक्तिंमुमोचाथअमोघांदुष्टघातिनीम् ॥ ततःसन्दह्यसा
शक्तिर्विश्वप्रलयकारिणी ॥ २१ ॥ यमदण्डसमातंचभित्त्वापुनर्गुहंगता ॥ सगतासुःपपातोर्व्यांचालयंश्चवसुन्धराम् ॥ २२ ॥ पुष्पधूपादिभिःस्कन्दः
सर्वदेवैःप्रपूजितः ॥ २३ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेतारेयवधोनामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ व्यासउवाच ॥ ततोदेवान्तकोदैत्योव्य
नदत्समरंप्रति ॥ रणंचकारधर्मेणसन्दष्टौष्ठपुटोबली ॥१॥ सगत्वाचाब्रवीद्वाक्यंसर्वलोकविगर्हितम् ॥ २ ॥ देवान्तकउवाच ॥ नजानासिमहद्धर्मंदुष्ट
मोहाद्यथाक्रमम् ॥ पापपुण्यप्रयोगेणनिग्रहानुग्रहेप्रभुः ॥३॥ अहंचनिर्मितोधात्राकरोमितवशासनम् ॥ नजानासियतोधर्मंकालमृत्युपुरःसरः ॥४॥
नरोगोनजराकालोनमृत्युर्नचकिङ्करः ॥ धर्मात्प्रचलितःकर्मीकष्टंयाति दिवानिशम् ॥ ५ ॥ व्यासउवाच ॥ उक्त्वाचैवंमहावीर्यंयमंधर्मैकसाक्षिकम्॥
सजघानत्रिभिर्बाणैःकालमृत्युसमप्रभैः ॥६॥ प्रचिच्छेदसधर्मात्मातेत्वन्यैर्विशिखैस्त्रिभिः ॥ ततस्तूच्चैःशरैःप्राज्यैर्युगान्तानलसप्रभैः ॥७॥ निजघा
नयमंसङ्ख्येसचिच्छेदशरैःशरान् ॥ एतस्मिन्नन्तरेक्रुद्धौपरस्परजयैषिणौ ॥ ८ ॥ जघ्नतुःसमरेऽन्योन्यंमहाबलपराक्रमौ ॥ अहोरात्रंतयोर्युद्धमवर्त्ततसु

दारुणम् ॥ ९ ॥ एतस्मिन्नन्तरेक्रुद्धः शक्त्याप्रशमनंरुषा ॥ बिभेददैत्यशार्दूलोह्यहङ्कारयुतोबली ॥ १० ॥ तामेवाथरुषाधर्मोगृहीत्वाशक्तिकांद्रुतम् ॥
निजघानतयैवासुंस्तनयोरन्तरेभृशम् ॥११॥ सविह्वलितसर्वाङ्गोमुखादागतशोणितः ॥ ततःक्रुद्धोमहातेजाधृत्वादण्डंसुदारुणम् ॥१२॥ अमोघंपात
यामासतस्यदैत्यस्यविग्रहे ॥ साश्वंरथंतथासूतंयोद्धारंशस्त्रसञ्चयम् ॥१३॥ चकारभस्मसात्तंचशमनःक्रोधमूर्च्छितः ॥ पतितेचतथादैत्येदुर्धर्षोनाम
दानवः ॥१४॥ शमनंशूलहस्तस्तुप्रदुद्रावजिघांसया ॥ शूलहस्तंसमायान्तंवडवानलसन्निभम् ॥१५॥ आससादरणेमृत्युःशक्तिहस्तोऽतिनिर्भयः ॥
सचदृष्ट्वाऽसुरोमृत्युंशूलेनैवजघानह ॥ १६ ॥ शक्तिंचैवततोमृत्युःप्रचिक्षेपरणाजिरे ॥ संदह्यसहसाशूलंवह्निकूटसमप्रभम् ॥ १७ ॥ दैत्यस्यहृद
यंभित्त्वागतासाचधरातलम् ॥ सरथःसपपातोर्व्यांशक्तिजर्जरविग्रहः ॥१८॥ अथान्योदुर्मुखोमृत्युंकृष्टचापोमहाबलः ॥ खड्गचर्मधरःकालोरथएव
गतोऽभवत् ॥१९॥ दृष्ट्वातंविशिखैःप्राज्यैर्जघानसयमंरणे॥सचाप्लुत्यरथाद्देवोह्यसिनाचसकुण्डलम् ॥२०॥ शिरश्चिच्छेदसहसापातयित्वाचभूतले ॥
हतशेषंबलंसर्वंप्रदुद्रावदिशोदश ॥२१॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेदेवान्तकदुर्धर्षदुर्मुखवधोनामद्विसप्ततितमोऽध्यायः ॥७२॥ व्यासउवाच ॥
अथान्योनमुचिःक्रुद्धःस्यन्दनस्थोदिवौकसः ॥ विशिखैरर्दयामासघोरैराशीविषोपमैः ॥ १ ॥ ततस्तुसंयुगेदेवाःसिद्धकिन्नरपन्नगाः ॥ नशक्नुव
न्तिबाणानांवेगंसोढुंसमन्ततः ॥ २ ॥ रथमुच्चैःश्रवोऽश्वेनयुक्तंमातलिनेरितम् ॥ पुरुहूतःसमास्थायप्रागमत्तंमहाबलम् ॥ ३ ॥ दृष्ट्वाशक्रंमहावीर्यं
नमुचिर्दैत्यपुङ्गवः॥अब्रवीद्वासवंसंख्येवचनंसानुगेतदा ॥४॥ नमुचिरुवाच॥प्राकृतंनिर्जरंहत्वानयशोऽस्तिनचप्रियम्॥नलाभकृतकंवापिनजयस्तुपुर
न्दर ॥ ५ ॥ तस्मात्त्वयिहतेऽत्रैवसर्वंभवतिशाश्वतम् ॥ देवराज्यंप्रलप्स्यामिसुखंभोग्यंसुरालये ॥ ६ ॥ व्यासउवाच॥तमब्रवीन्महातेजाःशक्रःपरपु
ञ्जयः ॥ ७ ॥ इन्द्रउवाच ॥ शूरतावाक्यमात्रेणसर्वत्रसुलभाभवेत् ॥ महापराक्रमंयद्वाअस्तितेदानवाधम ॥ ८ ॥ दर्शयस्वाहवेवीर्यंपुरंनेष्यामि
भास्करेः ॥ ९ ॥ व्यासउवाच॥एतच्छ्रुत्वामहातेजाश्चुकोपदैत्यपुङ्गवः ॥ पञ्चभिर्निशितैर्बाणैर्जघानसुरसत्तमम् ॥ १० ॥ तांस्तुचिच्छेदमघवाक्षु
रप्रैःपञ्चभिर्द्रुतम् ॥ जग्मतुस्तौमहावीर्यौसमरेविजयैषिणौ ॥ ११ ॥ अन्योन्यंसहसावगाच्छरैश्चिच्छिदतुःशरान् ॥ बिभिदातेऽथगात्राणिविशिखै
र्भिदुरोपमैः ॥ १२ ॥ अत्यपूर्वंकृतंकर्मताभ्यामेवररणेभृशम् ॥ लाघवंशरसन्धानग्रहमोक्षेषुदुर्लभम् ॥ १३ ॥ दृष्ट्वातुविस्मयंजग्मुर्देवासुरगणा
स्तदा ॥ एतस्मिन्नन्तरेदैत्योमायास्त्रंप्रमुमोचह ॥ १४ ॥ विशिखाःशतशस्तत्रविनिश्चेरुस्समन्ततः ॥ शक्रःकोपात्पुनःशीघ्रंधनुरुद्यम्यवीर्यवान्
॥ १५ ॥ जघानविशिखैरुग्रैःसर्वगात्रेषुसञ्ज्वलन् ॥ ततोमार्गणसाहस्रैरष्टभिस्त्वधिकंतथा ॥ १६ ॥ बिभिदातेततोऽन्योन्यंचिच्छिदातेपरस्परम् ॥

शरैर्निरन्तराकाशंददृशुस्तत्रसंयुगे ॥ १७ ॥ निपतन्तिधरापृष्ठेखड्गपातैःसहस्रशः ॥ एवंसुदीर्घकालेतुगतेतस्मिन्महाहवे ॥ १८ ॥ मायास्त्रंदर्शयामासक्रूरकृन्नमुचिस्तदा ॥ तामसंत्रिषुलोकेषुकृतंस्यात्तुनिरन्तरम् ॥ १९ ॥ परस्परंनपश्यन्तिदेवासुरगणाभृशम् ॥ सूर्यचन्द्रग्रहाणांचवह्नीनांचदिवौकसाम् ॥ २० ॥ तस्मिंस्तमसिदुष्पारेगभस्तिर्नैवदृश्यते ॥ दैत्यस्यचततस्तूर्णंशरैरग्निशिखोपमैः ॥ २१ ॥ विभग्नाःसर्वदेवाश्चशक्रश्चरणसंमुखे ॥ शरैर्विभिन्नदेहास्तुनिपेतुर्धरणीतले ॥ २२ ॥ प्रभग्नाश्चापरेशूरास्संयान्तिचदिशोदश ॥ कूटंतस्यपरिज्ञायसर्वदेवार्चितोहरिः ॥ २३ ॥ सौम्यमस्त्रंमुमोचाथदिविसूर्यशतप्रभम् ॥ विलम्बितंसमालोक्यशक्त्याचबहुघण्टया ॥ २४ ॥ जघानोरसिदैत्यस्यसपपातव्यथान्वितः ॥ चिरात्संलभ्यसंज्ञांचदैतेयःक्रोधमूर्च्छितः ॥ २५ ॥ गत्वावेगात्सुरश्रेष्ठमैरावतंदधारह ॥ त्रासयामाससुतरामिन्द्रस्यद्विरदंरुषा ॥ २६ ॥ धृत्वासतुगजंसेन्द्रंमुमोचधरणीतले ॥ ततोभूमिगतःशक्रःकश्मलंचक्षणंगतः ॥ २७ ॥ अवप्लुत्यसदैत्येन्द्रोगजदन्तान्तरस्थितः ॥ शक्रंग्रहीतुकामस्यवधार्थंयूथपस्यसः ॥ ॥ २८ ॥ असिनाऽसुरमुख्यस्यशिरश्छित्वान्यपातयत ॥ सर्वेप्रजहृषुर्देवागन्धर्वाललितंजगुः ॥ २९ ॥ मुदितास्तेचमुनयःस्तुवन्तिसुरसत्तमम् ॥ ३० ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेद्वितीयनमुचिवधोनामत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ व्यासउवाच ॥ दिव्यंरथंसमास्थायधनुर्हस्तोबलैर्युतः ॥ गत्वाचमाधवंसङ्ख्येदेवासुरगणाग्रतः ॥ १ ॥ क्रोधेनमहताविष्टोमधुर्निर्जरमर्दनः ॥ अब्रवीत्परुषंवाक्यमव्ययंहरिमीश्वरम् ॥ २ ॥ नारायणनजानासियुद्धधर्मंमितःकथम् ॥ अन्यायाद्दुर्वधोपायंकृत्वानष्टोनशोचसि ॥३॥ अनेनपङ्क्ययोगेनव्यवहारेकृतस्यच ॥ सुरत्वंचोपनष्टंस्यादन्यसृष्टिंकरोम्यहम् ॥४॥ त्वामेवनिहनिष्यामिसहदेवगणैरिह ॥ इत्युक्त्वाधनुरादायजघानविशिखैर्विभुम् ॥ ५ ॥ माधवस्तान्बिभेदाथशरैर्वज्रसमप्रभैः ॥ बहुभिस्सर्वगात्रेषुजघानचमधुंततः ॥ ६॥ माययाच्छादितःसोऽभूद्दैत्यस्तंसुरसत्तमाः ॥ येवैशूराश्चरुद्राद्यास्त्रिदशास्सत्त्वधारिणः ॥ ७ ॥ देव्योनानाविधाश्चापिसायुधावाहनान्विताः ॥ सेनान्योगणपादेवालोकेशहरविष्णवः ॥ ८ ॥ अन्येग्रहादयोदेवाःसर्वेयुध्यन्तिसङ्गताः ॥ विनष्टाश्चतदादेवामधोर्वैमाययाध्रुवम् ॥ ९॥ संमुखेविमुखेचैवशरशक्तृष्टिवृष्टिभिः ॥ पतन्तिसहसादेवाभूमौशस्त्राभिपीडिताः ॥१०॥ एतस्मिन्नन्तरेविष्णुर्गृहीत्वाचसुदर्शनम् ॥ असुरान्माययादेवाञ्जघानरणमूर्धनि ॥ ११ ॥ अथतेषांशिरांस्येपच्छित्वाचैवसहस्रशः ॥ पातयामासदेवेशोदैत्यानांचदुरात्मनाम् ॥१२॥ एवमन्यान्विभुर्दैत्यान्द्रावयामाससङ्गरात् ॥ तंदृष्ट्वामुनयोदेवाःसर्वेविस्मयमाययुः ॥ १३ ॥ कर्णेकर्णेप्रजल्पन्तेदेवामुनिगणास्तथा ॥१४॥ मुनिदेवाऊचुः ॥ सदादेवैकगोप्ताचहरिरव्ययईश्वरः ॥ सर्वसाक्षीत्वयंदेवोदैत्यजिष्णुर्युगेयुगे ॥ १५ ॥ कथंहन्तिसुरान्सर्वान्कल्पान्तइहजायते ॥

॥ १६ ॥ व्यासउवाच ॥ एतस्मिन्नन्तरेदूरेमधुर्मायांप्रयोजिता ॥ हररूपधरोभूत्वाअब्रवीद्धरिमव्ययम् ॥ १७ ॥ मधुरुवाच ॥दैत्यानामग्रतःपापरणे
देवान्समन्ततः ॥ हत्वार्किंतेशिवंचाद्यधर्मकीर्तियशोगुणाः ॥ १८ ॥ महतोन्मत्तभावेननजानासिपरान्स्वकान् ॥ अतस्त्वांनिशितैर्बाणैर्नयामियम
सादनम् ॥ १९॥ व्यासउवाच ॥ एवमुक्त्वाशरैरुग्रैर्जघानकेशवंरणे ॥ निचकर्तशरांस्तांस्तुमाधवोवाक्यमब्रवीत् ॥ २० ॥ माधवउवाच॥जानामि
त्वांरणेदैत्यंहररूपधरंप्रियम्॥शूरंशूरविकर्माणंमधुंमायानियोजितम् ॥ २१ ॥ मिथ्यालोकंप्रदास्यामिपातयित्वारणाजिरे ॥ २२ ॥ व्यासउवाच॥
एतस्मिन्नन्तरेतीक्ष्णैःशरैर्विव्याधसंयुगे ॥ जटिलंवृषकेतुंचवृषभस्थंमहेश्वरम् ॥ २३ ॥ तयोर्युद्धमतीवासीद्देवदानवयोस्तदा ॥ परस्परंभिन्दतोश्चप्रा
प्तान्प्राप्तान्शराञ्शरैः ॥२४॥ क्षुरप्रेणधनुस्तस्यचिच्छेदहरिरव्ययः ॥ ततश्चपातयामासघोटकंवृषरूपिणम् ॥२५॥ सदैत्यश्शूलहस्तोऽथप्रदुद्रावजग
त्पतिम् ॥ भ्रामयित्वाततःशूलंजघानपरमेश्वरम् ॥ २६ ॥ त्रिभिश्चिच्छेदबाणैश्चशूलंकालानलप्रभम् ॥ ततःक्रूरोमहाबाहुर्मधुर्मायातिमायिकः
॥ २७ ॥ देवीरूपंसमास्थायसिंहस्थःप्रययौहरिम् ॥ शरैर्बहुविधैर्विष्णुंजघानैवाब्रवीद्वचः ॥ २८ ॥ मधुरुवाच ॥ स्वामीतुमेसुरश्रेष्ठत्वयैवपातितो
युधि ॥ अहंत्वांचहनिष्यामिसुतौस्कन्दविनायकौ ॥ २९ ॥ व्यासउवाच॥ उक्तवन्तंचदैतेयंजघानबहुमार्गणैः ॥ सपपातमहीपृष्ठेगतासुर्लोहितोद्गिरः
॥ ३० ॥ पितरौनिहतौदृष्ट्वामायाबद्धोमहाबलः ॥ स्कन्दःशक्तिसमादायप्रायाद्योधयितुंहरिम् ॥ ३१ ॥ ततोधाताऽब्रवीद्वाक्यंस्कन्दंमोहप्रपीडितम्
॥ ३२ ॥ ब्रह्मोवाच ॥ पश्यतेपितरौदूरेपश्यन्तौयुद्धमीदृशम् ॥ अन्तरिक्षेभ्रमन्तौचसंस्थितौलोकसाक्षिणौ ॥ ३३ ॥ व्यासउवाच ॥
एतच्छ्रुत्वाततोदृष्ट्वातत्रैवान्तरधीयत ॥ ततोधुन्धुश्चसुन्धुश्चभ्रातरावतिदर्पितौ ॥ ३४ ॥ वधंप्रतिहरेर्युद्धेपेततुर्गरुडोपरि ॥ खड्गहस्तंचधुन्धुंच
सगदंसुन्धुमेवच ॥ ३५ ॥ चिच्छेदनन्दकेनैकंगदयाऽसादयत्परम् ॥ पेततुस्तौधरापृष्ठेप्रवीरौक्षतविक्षतौ ॥ ३६ ॥ मधुस्तदागतस्तूर्णम
न्तर्धानंतमोवृतः ॥ पातयामासविष्णौचमायायाशतपर्वतान् ॥ ३७ ॥ ततस्तान्पर्वतांश्छित्वातमसोऽन्तर्गतोयुधि ॥ क्रोधात्सुदर्शनेनैवशिरश्छि
त्वानिपातितः ॥ ३८ ॥ ततोब्रह्मादिभिर्देवैश्शम्भुनात्रिदशैरपि ॥ मधुसूदनइतिख्यातिर्विष्णोर्लोकेषुकारिता ॥ ३९ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टि
खण्डेमधुवधोनामचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ व्यासउवाच ॥ ततोवृत्रोमहातेजादैत्यानांप्रवरोयुधि ॥ दिग्गजाढ्यंसमारूढःप्राद्रवद्बलसूदनम्
॥ १ ॥ आगच्छन्तंततोवृत्रंशरैःकालानलप्रभैः ॥ विव्याधसर्वगात्रेषुद्विरदस्थोमहाहवे ॥ २ ॥ ततोवृत्रस्तुशीर्षंचजिष्णोरेवपतत्रिणा ॥ विव्याधसह
सातेनसचचालमहाबलः ॥ ३ ॥ आत्मानंचसमाश्वास्यधनुरुद्यम्यवीर्यवान् ॥ ववर्षशरवर्षेणतस्यदैत्यस्यविग्रहे ॥ ४ ॥ शरांश्छित्वाबिभेदाशु

शरैराशीविषोपमैः ॥ शतक्रतुंमहावीर्यःसर्वदेवाधिपंयुधि ॥ ५ ॥ ततःशरसहस्रैस्तुदैत्यंविव्याधदेवराट् ॥ परस्परंशरायान्तिहेमरत्नविभूषिताः ॥६॥
सञ्चरन्तियथावातावृत्ताश्शतसहस्रशः ॥ वियत्पथिशरायान्तियथासप्ताश्वरश्मयः ॥ ७ ॥ एवंशरसहस्रैस्तुविभिदातेपरस्परम्॥ मनोजवसमाःशीघ्रा
गाढाःशिखरिणोयथा ॥ ८ ॥ वडवानलसंस्पर्शाःखगावज्रारभेदकाः ॥ तयोर्धनुष्मतोर्युद्धेशरास्तुल्यगुणान्विताः ॥ ९ ॥ एवंक्रमेणयुद्धेचअहोरा
त्रमवर्तत ॥ महेन्द्रोद्विरदंतस्यशूलेनैवजघानह ॥ १०॥ सनिपत्यमहीपृष्ठेलाघवात्स्वरथंययौ ॥ रथस्थस्तस्यदेवस्यशक्त्याचैरावणंदृढम् ॥ ११ ॥
बिभेदलाघवेनाशुवज्रेणेवमहागिरिम् ॥ शुशुभेकम्पमानस्तुसेन्द्रःसचमहागजः ॥ १२ ॥ ततःशक्तिंसमादायआविध्यमघवाऽसुरम् ॥ बिभेदोरसि
दैत्यस्यसपपातरथोपरि ॥ १३ ॥ क्षणात्संज्ञांसमालम्ब्यसविनद्यपतत्रिणा ॥ बिभेदसमरेशक्रंसततःकश्मलंगतः ॥१४॥ इन्द्रःसंज्ञांपुनःप्राप्यजघान
विशिखैःशितैः ॥ शतकोटिसमैर्बाणैरर्दितोव्यथयान्वितः ॥ १५ ॥ ततोवृत्रोमहाशूलंप्राक्षिपन्निर्जरेश्वरे ॥ शाम्भवास्त्रेणदेवेशोवैष्णवास्त्रंमुमोचह
॥ १६ ॥ उभयोरम्बरेचास्त्रेवह्निकूटसमप्रभे ॥ अन्योन्यंजघ्नतुस्तत्रस्फुलिङ्गानिविमुञ्चती ॥ १७ ॥ स्पर्शनेचस्फुलिङ्गानामुभयोःसेनयोर्भटाः ॥ न
शक्ताःसम्मुखेस्थातुंशलभाज्वलनेयथा ॥१८॥ दग्धाःपेतुःपृथिव्यांचदिशस्सर्वाःप्रदुद्रुवुः ॥ देवदानवयोर्वीराःशून्यस्तत्राभवद्रणः ॥ १९ ॥ स्वंस्व
मस्त्रंसमाहूयचक्रतुःसुभृशंतथा ॥ अस्त्रंनिरस्तकंदृष्ट्वासदैत्यःक्रोधमूर्च्छितः ॥ २० ॥ माययाशैलसन्दोहमस्त्रंशक्रेमुमोचह ॥ बाणौघैःशैलसङ्घातंप्र
चिच्छेदरणेहरिः ॥ २१ ॥ अघोरंप्रासृजदैत्यःपुरुहूतेमहाबले ॥ कोटिकोटिसहस्राणिजन्तूनांप्रवराणिच ॥ २२ ॥ सिंहशार्दूलभल्लूकवृकव्याघ्रमहा
गजाः ॥ दन्दशूकादयःसत्त्वाःप्रधावन्तिसुरेश्वरम् ॥ २३ ॥ क्षुरप्रैरर्धचन्द्रैश्चभल्लैःशिलीमुखैस्तथा ॥ असम्प्राप्तान्प्रचिच्छेदमघवापरवीरहा ॥ २४ ॥
ततोवृत्रोमहाबाहुर्धनुरुद्यम्यवीर्यवान् ॥ बिभेदशरसाहस्रैर्वज्रकल्पैःशतक्रतुम् ॥ २५ ॥छित्वाक्षुरप्रैश्शक्रश्चधनुस्तस्यचकर्तच ॥सूतंचाश्वान्पृथिव्यांच
पातयामाससतत्क्षणात् ॥ २६ ॥ सकण्टकांगदांभीमांसम्पूज्यासुरसत्तमः ॥ जघानपद्मिनःशीर्षेमोहाद्दन्तीक्षितिंययौ ॥२७॥ सगदःसर्वदेवेशोधरणीं
समुपस्थितः ॥ ततस्तयोर्गदायुद्धमवर्ततमुहुर्मुहुः ॥ २८ ॥ तयोःप्रहरतोःशब्दोगदापातोद्भवोध्रुवम् ॥ आवर्तंपरिवर्तंचचक्रतुस्तौपुनःपुनः ॥ २९ ॥
अधऊर्ध्वंप्रहारंचपार्श्वयोरतिभीषणम् ॥ बभूवैवंतयोर्युद्धंलोकालोकभयङ्करम् ॥ ३० ॥ दृष्ट्वादेवगणाःसिद्धादानवाविस्मयंगताः ॥ युद्ध्यमानौतुतौ
वीरौमृत्युसंशयमागतौ ॥ ३१ ॥ देवदानववीराश्चद्रष्टुंनैवतदीशिरे ॥ ईशब्रह्मादयःखेतुस्थिताद्रष्टुंतदद्भुतम् ॥ ३२॥ तयोर्हुंकारशब्देनगदापातस्वनेन
च ॥ ऊर्ध्वोर्ध्वमगमच्छब्दोह्यशनेश्चोपजायते ॥ ३३ ॥ भग्नेगदेद्वयोरेवकरःसम्पुटितस्तयोः ॥ एवंचैवार्धयामेनतयोरस्त्रेनिपेततुः ॥ ३४ ॥ एतस्मि

न्नन्तरेवीरौखड्गचर्मधरौतदा ॥ प्रतियोद्धुंमहाघोरमाहवेसम्प्रचेरतुः ॥ ३५ ॥ निस्त्रिंशौविद्युदुल्काभौतयोर्गात्रेचचर्मणी ॥ दृश्यंतेसर्वलोकैश्चलाघवा
द्विस्मयंगतैः ॥ ३६ ॥ चिच्छिदातेतयोरेवचर्मणीबहुवर्णके ॥ भीष्मकंबलयुद्धंचतयोरेवंप्रवर्तते ॥ ३७ ॥ मण्डलंचक्रधन्वंचलाघवंचपरिप्लुतम् ॥
वृत्रवासवयोर्युद्धंवृत्रवासवयोरिव ॥ ३८ ॥ केशान्वृत्रस्यउत्प्लुत्यसम्प्रधृत्यासिनाद्भुतम् ॥ शिरश्चिच्छेदसहसामघवारणमूर्धनि ॥ ३९ ॥ जयशब्द
स्ततस्त्वासीद्देवानांचसमन्ततः ॥ प्रोत्फुल्लहृदयादेवामघवन्तमपूजयन् ॥ ४० ॥ देवदुन्दुभयोनेदुर्ननृतुश्चाप्सरोगणाः॥गीतंगायन्तिगन्धर्वामुनयः
स्तुतिपाठकाः ॥ ४१ ॥ भीताःपलायिताःसर्वेदैत्यास्त्यक्तायुधादिशः ॥ ४२ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेवृत्रासुरवधोनामपञ्चसप्ततित
मोऽध्यायः ॥ ७५ ॥ व्यासउवाच ॥ चतुर्भिस्तुरगैर्जुष्टंरथंसूर्यसमप्रभम् ॥ त्रैपुरिःसंरुरोहाथाब्रवीद्वाक्यंगणाधिपम् ॥ १ ॥ त्रैपुरिरुवाच ॥ पिता
मेनिहतःपित्रातवयस्माद्गणाधिप ॥ तस्मात्त्वामद्यविशिखैर्नयामियमसादनम् ॥ २ ॥ व्यासउवाच ॥ ततस्तमब्रवीद्देवोगणेशस्त्रिपुरात्मजम् ॥ ३ ॥
गणेशउवाच ॥ तवतातेनदुष्टेनसुराणामहितंपुरा ॥ कृतंकर्ममहत्पापंश्रुतंनोजनकेनहि ॥ ४ ॥ पापकर्मरतंदुष्टंज्ञात्वाज्ञानबलेनच ॥ अवधीत्तंशरैकेन
पितरंतेबलेनच ॥ ५ ॥ पङ्कात्प्रतारितोमोहात्प्रेषितोयममन्दिरम् ॥ त्वांचाहंतत्पथंदैत्यप्रेषयामिक्षणादिह ॥ ६ ॥व्यासउवाच॥ उक्तवन्तंमहाप्राज्ञं
सुराणांचगणाधिपम् ॥ विव्याधदशभिस्तीक्ष्णैःकालानलसमप्रभैः॥ ७ ॥ ततःशरसहस्रैस्तुदैत्यंविव्याधसाहसात् ॥ यमदण्डसमैर्बाणैःक्षुरप्रैश्च
शिलीमुखैः॥८॥कङ्कपत्रैर्महातीक्ष्णैर्वज्रानलसमप्रभैः ॥ .विचकर्तशरांश्चास्यलम्बोदरःसुरार्चितः ॥ ९ ॥ पुनर्विव्याधविशिखैःसहसाभिदुरोपमैः ॥
शरैरार्दितसर्वाङ्गोमूर्च्छितस्त्वपतद्भुवि ॥ १० ॥ ततोभद्रश्चसौभद्रोभीषणोनिर्जरान्तकः ॥ स्वांस्वांगदांसमादायदुद्रुवुस्तंविनायकम् ॥ ११ ॥ युग
पत्तेगदापातैर्निजघ्नुर्गणनायकम् ॥ लघवात्तुवृथाकृत्वागदास्तेषांमहाबलः ॥ १२ ॥ भद्रकस्यतुशीर्षंचाहनत्परशुनातदा ॥ सौभद्रस्योत्तमाङ्गंच
असिनाग्रेनिपातितम् ॥ १३ ॥ भीषणस्यकुठारेणखड्गेननिर्जरान्तकम् ॥ मातयित्वाचहेरम्बोमहागिरिसमांस्तदा ॥१४॥ चतुरोगणमुख्यांश्चअन्यां
श्चापातयद्द्विषः॥ततःसंज्ञांसमालभ्यत्रैपुरिश्चासुरोत्तमः॥१५॥समारुह्यरथंस्वंचजघानसुरसत्तमम्॥विशिखैरर्धचन्द्रैश्चक्षुरप्रैर्भल्लकैस्तथा॥ १६॥ तांस्तु
चिच्छेदधर्मात्मापुनर्विव्याधतंशरैः ॥ चतुर्भिःसैन्धवांश्चैवशरैकेनचसारथिम् ॥ १७ ॥ शरैःसम्पातयामासधरण्यांगणनायकान्॥लाघवात्तुरथंचान्यं
गत्वात्रिपुरनन्दनः ॥१८॥ विशिखैर्वज्रसङ्काशैःसंबिभेदगणाधिपम्॥रुधिरेणावसिक्ताङ्गोरुषाघोरयमप्रभः॥१९॥ललाटेचत्रिभिर्बाणैस्सप्तभिश्चस्तना
न्तरे ॥ चतुर्भिर्नाभिदेशेचपञ्चभिर्मुष्टिमस्तके ॥२०॥ संबिभेदमहाक्रोधोबलिनंशम्भुनन्दनः ॥ शरैरर्दितसर्वाङ्गःसदैत्योरणमूर्धनि ॥ २१॥ कश्मलं

परमंगत्वासम्पपातरथोपरि ॥ ततःसूतेनधीरेणअपनीतोरणाजिरात् ॥ २२ ॥ विमुखंनाहनच्छूरोविनायकःसुरार्चितः ॥ चिरात्संज्ञांसमालभ्यय
न्तारंचाब्रवीद्वचः ॥ २३ ॥ त्रैपुरिरुवाच ॥ गच्छसूतरणेभीरुंविनायकंहरात्मजम् ॥ २४ ॥ व्यासउवाच ॥ ततोयन्ताब्रवीद्वाक्यंसत्यंपथ्यंचको
मलम् ॥ २५ ॥ सारथिरुवाच ॥ हरात्मजशरान्सोढुंकस्समर्थोरणाजिरे ॥ तस्मान्मोहगतस्त्वंचमयानीतःप्रभासुत ॥२६॥ एतज्ज्ञात्वात्विदानींभो
यद्युक्तंतद्विधीयताम् ॥२७॥ व्यासउवाच॥ एतस्मिन्नन्तरेराज्ञाप्रेरितःकविसत्तमः ॥ औषधादिप्रयोगेणगजःसंज्ञामबोधयत् ॥ २८ ॥ अकारयच्छत
गुणप्राणंचजयमादिशत् ॥ प्राग्जलंमन्त्रितंदत्त्वारुरोधास्याङ्गकव्रणान् ॥ २९ ॥ सगजोदशनैरेवस्फोटयामासवैगिरिम् ॥ एवंशतसहस्राणिसैन्या
निसैन्यपालकान् ॥ ३० ॥ पातयामाससमितौगजःपरमदुर्जयः ॥ सदैत्यस्तस्यपृष्ठस्थःशरैःकालानलप्रभैः ॥ ३१ ॥ हत्वात्वपातयच्चोर्व्यांमुख्य
मुख्यान्सुराधिपान् ॥ शरैस्तस्यतदादेवायमदण्डसमप्रभैः ॥ ३२ ॥ निपतन्तिमहावीर्यारुधिरौघपरिप्लुताः ॥ यस्मिन्यस्मिंश्चमार्गेतुसदैत्यःसग
जोगतः ॥ ३३ ॥ तत्रतत्रचकाराशुभीषणंसञ्चितंशरैः ॥ गजेनपातिताःकेचिद्गजारोहेणचापरे ॥ ३४ ॥ वेगेनभ्रमणेनैवसुराःकेचित्प्रतापिताः ॥
एवंसुरगणाध्यक्षाःशस्त्रास्त्रैर्विविधैश्चतम् ॥ ३५ ॥ सगजंयुद्धनिर्भीतानिजघ्नुर्बहुभिःशरैः ॥ तथापितद्गजंयोद्धुंनशक्तास्तेमहाबलाः ॥ ३६ ॥ क्षि
प्तांस्तुगजोदन्तैस्त्रैपुरोऽपातयच्छरैः ॥ नगतायेधरण्यांचदेवाजर्जरविग्रहाः ॥ ३७ ॥ शरण्यंगणपंजग्मुर्भीतास्तेवेदनातुराः ॥ देवानांकदनंदृष्ट्वा
गणाधीशःप्रतापवान् ॥ ३८ ॥ सगजताडयामासवज्रानलसमैःशरैः ॥ सगजोवेगसंरुद्धःशरेणचसमुत्थितः ॥ ३९ ॥ अथोतौद्वौशरैरेवबिभिदा
तेपरस्परम् ॥ उभौतौनर्दमानौचअन्योन्यंजयमैच्छताम् ॥ ४० ॥ शोणितैर्लिप्तसर्वाङ्गौवीरमुख्यौसुरासुरौ॥अथाखुंसगजोमत्तोबिभेददशनैःस्वकैः
॥ ४१ ॥ आखुनाभिद्रुतोनागोघोरयुद्धंतयोःपरम् ॥ अधोर्ध्वंसंविभागेचचतुर्भिर्युद्धमद्भुतम् ॥ ४२ ॥ सशब्दंतुमुलंयुद्धंसर्वलोकभयङ्करम् ॥
दशनैर्दशनैरेवशरैरेवशरोत्तमैः ॥ ४३ ॥ तद्घोरमभवद्युद्धंदेवदानवसङ्करे ॥ आखुकोभेदयाञ्चक्रेमहानागंमहाबलम् ॥४४॥ पर्शुनापृष्ठवंशाग्रेस्थित्वाते
नाहनत्पुनः ॥ दैत्यस्यदशनद्वारेहृदिस्कन्धेऽथलाघवात् ॥ ४५ ॥ सगजःसपपातोर्व्यांगतासुर्लोहितंवमन् ॥शशंसुर्मुनयोदेवास्साधुसाध्वितिचाब्रु
वन् ॥ ४६ ॥ गणपंपुष्पगन्धैश्चगन्धधूपैरपूजयम् ॥ दुद्रुवुर्दैत्यसङ्घाश्चभीताश्चप्राणकातराः ॥ ४७ ॥ तथैवसहपार्वत्यासुरानाहमहेश्वरः ॥४८॥
महेश्वरउवाच ॥ अत्रान्येऽस्त्रैरमोघैश्चदैत्यानाजघ्नुराहवे ॥ यावत्तुसेनयोर्नैवजययुद्धंसमापयेत् ॥ ४९ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेत्रैपुरिवि
मर्दोनामषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ व्यासउवाच ॥ श्रुत्वामहेश्वराद्वाक्यंदेवाःशक्रपुरोगमाः ॥ दुद्रुवुर्दैत्यसङ्घांस्तान्सर्वेसर्वान्समन्ततः ॥ १ ॥

आजगाममहाबाहुःकुम्भोनाममहासुरः॥नैर्ऋतोयक्षराजानंगदयाचाहनद्भृशम् ॥ २ ॥ गुह्यकेशोगदापातैर्जघानभृशमुत्तमम् ॥ ततोऽन्योन्यंगदायुद्ध
मभवद्भीषणंतयोः ॥ ३ ॥ चक्रबन्धंमहाबन्धंपुरोवध्यनिबन्धनम् ॥ प्राचुरंभीषणंयानंस्फोटतैलाभिवास्तिकम् ॥ ४ ॥ तेनकृत्वामहायुद्धमवसाने
धनेश्वरः ॥ पातयामासतंस्फोटंतस्यकुम्भस्यचोरसि ॥ ५ ॥ भग्नदंष्ट्रस्ततःकुम्भोनिपपातमहीतले ॥ स्यन्दनस्थोमहावीर्योजम्भोहरिहयंतदा
॥ ६ ॥ जघानशरसङ्घैश्चतथैवैरावणंभृशम् ॥ वासवोभिदुरेणैवसम्बिभेदासुरोत्तमम् ॥ ७ ॥ सपपातधरापृष्ठेगतासुर्लोहितोक्षितः ॥ तथारण्यंसु
घोरंचअघोरंघोरमेवच ॥ ८ ॥ चतुरोगणमुख्यांश्चशक्त्याबिभेदसंयुगे ॥ सेनानीश्चैवप्रत्येकंपातयामासलाघवात् ॥ ९ ॥ सौरभंशरसङ्घैश्चजय
न्तोवशमानयत् ॥ शक्तिहस्तंचसंह्रादंयमदण्डंनरान्तकम् ॥ १० ॥ हत्वाचपातयामाससभस्मीकृतविग्रहः ॥ कालश्चखड्गपातेनपातयामासबा
भ्रवम् ॥ ११ ॥ शक्त्यामृत्युर्बिभेदाश्वंतथानिर्घृणकंरणे ॥ अग्निनादह्यमानाश्चसप्तैतेचमहाबलाः ॥ १२ ॥ भद्रबाहुर्महाबाहुःसुगन्धोगन्धएवच॥
भौरिकोवह्निकोभीमएतेसेनाग्रगामिनः ॥ १३ ॥ रणेसन्दग्धदेहाश्चपेतुरुर्व्यांगतासवः ॥ पाशबद्धामहावीर्यावरुणस्यमहात्मनः ॥ १४ ॥ पेतु
रुर्व्यांमहसत्त्वाःशूराःशूरभयानकाः ॥ शूरस्यरश्मिजालेननिहताःपञ्चदानवाः ॥ १५ ॥ तुरुतुम्बुरुदुर्मेधस्साधकासाधकाभिधाः ॥ क्रूरक्रौञ्चरणे
शानमोदसम्मोदषण्मुखाः ॥ १६ ॥ शरैर्निपातितादैत्याःसंयुगेमातरिश्वना ॥ नैर्ऋतोगदयाभीमंपातयामासभूतले ॥ १७ ॥ शूलपातैश्चरुद्राणां
शतशोदैत्यदानवाः ॥ निपेतुःसंयुगेभीताःसंमुखारणपण्डिताः ॥ १८ ॥ वसूनांशरपातैश्चशूराणांरश्मिमालिनाम् ॥ मेघानांकरकाभिश्चवज्रपा
तैस्सुदारुणैः ॥ १९ ॥ निपातितारणेदैत्याःशतशोबलशालिनः ॥ कुबेरस्यगदापातैर्निपतन्तिसहस्रशः ॥ २० ॥ शक्रस्यभिदुरेणैवभेदितादैत्यपु
ङ्गवाः ॥ असङ्ख्याताःपन्तत्युर्व्यांस्कन्दशक्त्यातथाहताः ॥ २१ ॥ गणेशपर्शुपातेनपतन्तिमुख्यमुख्यकाः ॥ वैकुण्ठकरमुक्तेनचक्रेणतीव्रकर्मणा
॥ २२ ॥ दैत्यानांप्रवराणांचशिरांसिनिपतन्तिकौ ॥ शमनोयमदण्डेनकोटिकोटिसहस्रशः ॥ २३ ॥ अपातयत्तदाभूम्यांकालःखड्गेनदानवान् ॥
मृत्युश्शक्त्यातथादैत्यान्पाशीपाशेनचापरान् ॥ २४ ॥ पातेनतक्षकादीनांसुधांशोःशिशिरेणच ॥ अश्वारोहीखरोमन्योहनिपाशस्तथागजान्
॥ २५ ॥ परिघेणगजंकुम्भेदैत्यानांनाशयत्ततः ॥ एवमश्वान्गजांश्चैवलाघवात्सन्यपातयत् ॥ २६ ॥ एवंसिद्धैश्चगन्धर्वैरप्सरोभिर्महाबलैः ॥
अन्याभिर्देवताभिश्चसमातृगणनायकैः ॥ २७ ॥ निपातितामहाघोरायेतेप्रलयदानवाः ॥ शरैश्चखड्गपातैश्चशूलशक्तिपरश्वधैः ॥ २८ ॥ यष्टि
परिघकुन्तैश्चपातयन्त्यसुरान्सुराः ॥ एवंसंक्षीयमाणेषुदैत्यराट्समपद्यत ॥ २९ ॥ आदित्यरथसङ्काशंरथंरत्नविभूषितम ॥ शातकुम्भमयंदिव्यं

घण्टाचामरभूषितम् ॥ ३० ॥ पताकाध्वजसम्पूर्णरम्यंशक्ररथोपमम् ॥ समारुह्यमहावीरोहिरण्याक्षोऽसुराधिपः ॥ ३१ ॥ जघानशरजालैश्चदुर्निवार्यःसुरासुरैः ॥ ससैन्यानिगजान्वीरोरथांश्चसहसैन्धवान् ॥ ३२ ॥ पातयामासभूमौचशतशोऽथसहस्रशः॥एवंचरन्सवृन्देषुनिखिलेषुदिवौकसाम् ॥ ३३ ॥ पातयामासदैत्येन्द्रःशरौघान्मृत्युसन्निभान् ॥ क्रमेणसमरेचाथदेवसैन्यान्यमन्थत ॥ ३४ ॥ यथापुष्करिणीवृन्देगजःकञ्जवनंशितैः॥ शरपातैरथोवेगात्सिंहनादैःपुनःपुनः ॥ ३५ ॥ धरण्यांपतितावेगात्तदादैत्येश्वरस्यच ॥ दशभिश्चसुतीक्ष्णाग्रैर्जयन्तंसजघानह ॥ ३६ ॥ रेमन्तंपञ्चभिर्बाणैःशक्रंपञ्चदशेनतु ॥चित्ररथंविंशतिभिःपञ्चविंशतिभिर्गुहम्॥३७॥ हेरम्बंत्रिशरेणैवचत्वारिंशच्छरैर्यमम् ॥तथैवकालंमृत्युंचपाणिनाद्विगुणेनच ॥ ३८ ॥ गुह्यकेशंजगत्प्राणंदशभिर्दशभिःशरैः ॥ षड्भिश्चसप्तभिश्चैवरुद्रान्सर्वान्पृथक्पृथक् ॥ ३९ ॥ वसून्सर्वांश्चसशरैःसिद्धगन्धर्वपन्नगान् ॥ दशाष्टदशभिःषड्भिर्युद्धेदेवान्बिभिनत्त्यसौ ॥ ४० ॥ ओजौघादतिवीर्याच्चशीघ्रलाघवदर्शनात् ॥ आपत्प्राप्ताःसुराभीत्याप्रतिकर्तुंनचेश्वराः ॥ ४१ ॥ महेशशूलसङ्काशैःशरैर्मर्मविभेदिभिः ॥ ताडितानिर्जरायुद्धेमूर्च्छिताधरणींययुः ॥ ४२ ॥ तस्यैवसंमुखेस्थातुंनशेकुःप्रवरास्सुराः ॥ ततोदेवाविनिर्धूतास्त्रिदिवेशेनसंयुताः ॥ ४३ ॥ शरण्यंतेहरिंतत्रशरणंताडिताययुः ॥ एतस्मिन्नन्तरेविष्णुःप्राहजिष्णुंखगेश्वरम् ॥ ४४ ॥ विष्णुरुवाच ॥ अधुनागच्छदैत्यस्यसंमुखंरणमूर्धनि ॥ ४५ ॥ व्यासउवाच ॥ नाशायसततस्तूर्णंगतस्तस्यान्तिकंजवात् ॥ सरथंमार्गणैर्भित्वाविष्णुमारोधयज्जवम् ॥ ४६ ॥ रथस्यसम्मुखेदैत्यउवाचविष्णुमव्ययम् ॥ ४७ ॥ दैत्यराजउवाच ॥ अन्यसृष्टिंकरोम्यद्यहत्वात्वांचसनिर्जरम् ॥ ४८ ॥ व्यासउवाच ॥ ततोविष्णुरुवाचेदंगर्जन्तंदैत्यपुङ्गवम् ॥ ४९ ॥ विष्णुरुवाच ॥ शक्तस्त्वंस्पर्द्धनेपापयदियुद्धेस्थिरोभव ॥ ॥ ५० ॥ व्यासउवाच ॥ ततःशरशतैरेवजघानविष्णुमव्ययम् ॥ असम्भ्रान्तःसचिच्छेदयमदण्डनिभाञ्शरान् ॥ ५१ ॥ पुनःशरसहस्राणिप्रेरयामासतंरणे ॥ तांश्चच्छित्वाशरैःशौरिस्तंचविव्याधमार्गणैः ॥ ५२ ॥ प्रगौरवादहार्याभैःसंस्पर्शाद्वाडवानलैः ॥ शरैश्चभेदकैस्तीक्ष्णैःखगमैश्चमनोजवैः ॥ ५३ ॥ लाघवात्केशवास्त्रस्यतूलशुष्कतृणोपमैः ॥ हैमैःशरसहस्रैस्तुताडितोदैत्यपुङ्गवः ॥ ५४ ॥ बाधयाभ्यर्दितःक्रुद्धोधृत्वाशिखरिणंरणे ॥ जघानमाधवंवेगाद्धिरण्याक्षोमहाबलः ॥ ५५ ॥ तंचसञ्चूर्णयामासगदयालीलयाहरिः ॥ एवंपर्वतसाहस्रंपातितंतुक्रमेणहि ॥ ॥ ५६ ॥ तथैवलाघवाच्चूर्णंहरिणादानवारिणा ॥ पुनर्वाद्रुसहस्राणिकृत्वाऽसौदानवोत्तमः ॥ ५७ ॥ शरैःशक्तिभिरत्युग्रैःशूलैःपरशुकादिभिः ॥ ववर्षबहुभिर्विष्णुंक्रोधाविष्टेनचेतसा ॥ ५८ ॥ तांस्तुतेनैवप्रहितांश्चिच्छेदसुरसत्तमः ॥ शरैर्दीप्तैर्महाघोरैरसुराणांभयङ्करैः ॥ ५९ ॥ विव्याधसर्व

गात्रेषुशम्भुशूलोपमैश्शरैः ॥ दानवाधिपर्तिसङ्क्ष्येह्यव्ययोहरिरीश्वरः ॥ ६० ॥ सचकश्मलतांगत्वासर्वशक्तिमनुत्तमाम् ॥ कालजिह्वोपमांघोराम
घृघण्टासमन्विताम् ॥ ६१ ॥ हरेरुरसिपीनेचविद्धुत्यापातयद्धुतम् ॥ शुशुभेससुरश्रेष्ठस्तडित्वत्सान्द्रमेघवत् ॥ ६२ ॥ ततश्चचुकुशुर्दैत्याजये
तिसाधुवादिनः ॥ ततश्चक्रंदैत्यसैन्येदानवारिर्व्यसर्जयत् ॥ ६३ ॥ तेषांशिरांसिसञ्छिद्यमाधवंपुनरागमत् ॥ सदैत्यंशक्तिपातेनपातयामासवैर
णे ॥ ६४ ॥ चिरात्संज्ञांसमालम्ब्यवह्निबाणेनकेशवम् ॥ निजघानरणेक्रुद्धोहरिःकौबेरमाक्षिपत् ॥ ६५ ॥ ततोमुमोचमायास्त्रंचासुरंचातिदारु
णम् ॥ सिंहव्याघ्रलुलायांश्चतद्वद्द्विपसरीसृपान् ॥ ६६ ॥ जघानसमरेविष्णुंहिरण्याक्षःप्रतापवान् ॥ ततोमायास्त्रसम्भूताञ्शस्त्रास्त्रौघान्रणेहरिः॥
॥ ६७ ॥ प्रचिच्छेदशरैरेवशूलेनैवमताडयत् ॥ सविह्वलितसर्वाङ्गस्तत्क्षणंलोहितोक्षितः ॥ ६८ ॥ विचकर्षहरन्विष्णुरसृग्विप्लुतविग्रहः ॥ त
च्छूलंचत्रिभिर्बाणैःप्रविव्याधसुराधिपः ॥ ६९ ॥ वरूथंसध्वजंकेतुंरथंचैवातपत्रकम् ॥ यन्तारंचप्रचिच्छेददशभिश्चहरिःशरैः ॥ ७० ॥ पातितेचरथे
दैत्यःसम्प्लुत्याथरथंपरम् ॥ आरुरोहसदैत्येन्द्रःसम्मुखंचाकरोद्बली ॥ ७१ ॥ ततोयुद्धंमहाघोरमभवल्लोमहर्षणम् ॥ हिरण्याक्षस्यचहरेर्लोकविस्मा
पनंमहत् ॥ ७२ ॥ अस्त्रयुद्धंतथान्योन्यंकृतप्रतिकृतंचतत् ॥ ततोनियुद्धेसततंदिव्यवर्षशतंगतम् ॥ ७३ ॥ ततोदैत्योमहासत्त्वोववृधेवामनोयथा ॥
मुखेनजग्राहरुषात्रैलोक्यंसचराचरम् ॥ ७४ ॥ भूमण्डलंसमुद्धृत्यविवेशचरसातलम् ॥ शेषाश्चविविशुर्दैत्यास्तमनुप्रीतिसंयुताः ॥ ७५ ॥ ततो
विष्णुर्महातेजाज्ञात्वादैत्यबलंमहत् ॥ दधाररूपंवाराहंदैत्यराजजिघांसया ॥ ७६ ॥ धृत्वाक्रोडतनुंविष्णुर्विवेशतमनुद्रुतम् ॥ तत्रगत्वारसामूले
रसातलगतांमहीम् ॥ ७७ ॥ दृष्ट्वास्वदंष्ट्रयोर्दध्रेलोकाधारांवसुन्धराम् ॥ तांधृत्वागच्छतस्तस्यविष्णोरमिततेजसः ॥ ७८ ॥ समाजगामदैत्येन्द्रो
धृष्टंवाग्भिस्तुदन्ननु ॥ मायाक्रोडतनुर्विष्णुर्दुर्वचांसिसहन्नृषा ॥ ७९ ॥ जलोपरिदधारेमांधरांभूधरएवच ॥ तस्यांन्यस्यस्वसत्त्वंचसचकारतदा
ऽचलाम् ॥ ८० ॥ ततःपश्चात्ससंलग्नोदैत्यराट्समुपस्थितः ॥ क्रोधेनमहताविष्टोजघानगदयाहरिम् ॥ ८१ ॥ माययामूकरोविष्णुस्तांगदांसरुव
श्चयत ॥ योगयुक्तोयथामृत्युंकौमोदक्याहनच्चतम् ॥ ८२ ॥ ततःपुनारुषाविष्टोहिरण्याक्षोमहाबलः ॥ मुष्टिनाप्राहरद्देवंदक्षिणेतुभुजेप्रभोः ॥
॥ ८३ ॥ एवंयुद्धंमहाघोरंसव्यासव्यंगतागतम् ॥ परिभ्रमणविक्षेपंकृतानुकरणंतथा ॥ ८४ ॥ ततोब्रह्मादयोदेवायुद्धंपश्यन्तिखेस्थिताः ॥ स्वस्ति
प्रजाभ्योदेवेभ्यऋषिभ्यश्चेतिचाब्रुवन् ॥ ८५ ॥ ऊचुश्चदेवदेवेशंविष्णुंवाराहरूपिणम् ॥ ८६ ॥ ब्रह्मादयऊचुः ॥ माक्रीडबालवद्देवजह्यमुंदेव
कण्टकम् ॥ ८७ ॥ व्यासउवाच ॥ ततोविष्णुर्महातेजामायावाराहरूपधृक् ॥ ब्रह्माद्यनुमतिंप्राप्यचक्रंप्राक्षिपदुल्बणम् ॥ ८८ ॥ सहस्रसू

र्यसङ्काशंसहस्रारंमहाप्रभम् ॥ दैत्यान्तकरणंरौद्रंप्रलयाग्निसमप्रभम् ॥ ८९ ॥ तच्चक्रंविष्णुनामुक्तंहिरण्याक्षंमहाबलम् ॥ चकारभस्मसात्सद्योब्र
ह्मादीनांचपश्यताम् ॥ ९० ॥ दैत्यान्तकरणंरौद्रंचक्रंचागमदच्युतम् ॥ ततोब्रह्मादयोदेवाःशक्रमुख्याश्चलोकपाः ॥ दृष्ट्वाचविजयंविष्णोःस्तुव
न्तिस्मसमागताः ॥ ९१ ॥ देवाऊचुः ॥ नताःस्मविष्णुंजगदादिभूतंसुरासुरेन्द्रंजगतांप्रपालकम् ॥ यन्नाभिपद्मात्किलपद्मयोनिर्बभूवतंवैशर
णंगताःस्मः ॥ ९२ ॥ नमोनमोमत्स्यवपुर्द्धरायनमोऽस्तुतेकच्छपरूपधारिणे ॥ नमःप्रकुर्मश्चनृसिंहरूपिणेतथापुनर्वामनरूपिणेनमः ॥ ९३ ॥
नमोऽस्तुतेक्षत्रविनाशनायरमायरामायदशास्यनाशिने ॥ प्रलम्बहन्त्रेशितिवाससेनमोनमोऽस्तुबुद्धायचदैत्यमोहिने ॥ ९४ ॥ म्लेच्छान्तका
यापिचकल्किनाम्नेनमःपुनःक्रोडवपुर्धराय ॥ जगद्धितार्थंचयुगेयुगेभवान्बिभर्तिरूपंत्वसुराभवाय ॥ ९५ ॥ निपूदितोऽयंह्यधुनाकिलत्वयादैत्योहिर
ण्याक्षइतिप्रगल्भः ॥ यश्चेन्द्रमुख्यान्किललोकपालान्संहेलयाचैवतिरश्चकार ॥ ९६ ॥ सर्वैत्वयादेवहितार्थमेवनिपातितोदेववरप्रसीद ॥
त्वमस्यविश्वस्यविसर्गकर्ताब्राह्मेणरूपेणचदेवदेव ॥ ९७ ॥ पातात्वमेवास्ययुगेयुगेचरूपाणिधत्सेसुमनोहराणि ॥ त्वमेवकालाग्निहरश्च
भूत्वाविश्वंक्षयंनेष्यसिचान्तकाले ॥ ९८ ॥ अतोभवानेवचविश्वकारणंनतेऽपरंजीवमजीवमीश ॥ यत्किंचभूतंचभविष्यरूपंप्रवर्त्तमा
नंचतथैवरूपम् ॥ ९९ ॥ सर्वंत्वमेवासिचराचराख्यंनभातिविश्वंत्वदृतेचकिंचित् ॥ अस्तीतिनास्तीतिचभेदनिष्ठंत्वय्ययंवभातंसदस
त्स्वरूपम् ॥ १०० ॥ ततोभवन्तंकतमोऽपिदेवनज्ञातुमर्हत्यविपक्वबुद्धिः ॥ ऋतेभवत्पादपरायणंजनंतेनागताःस्मश्शरणंशरण्यम् ॥
॥ १ ॥ ॥ व्यासउवाच ॥ ततोविष्णुःप्रसन्नात्माउवाचत्रिदिवौकसः ॥ २ ॥ विष्णुरुवाच ॥ तुष्टोऽस्मिदेवाभद्रंवोयुष्मत्स्तोत्रेणसाम्प्र
तम् ॥ ३ ॥ यइदंप्रपठेद्भक्त्याविजयस्तोत्रमादरात् ॥ नतस्यदुर्लभंदेवास्त्रिषुलोकेषुकिंचन ॥ ४ ॥ गवांशतसहस्रस्यसम्यग्दत्तस्ययत्फलम् ॥
तत्फलंसमवाप्नोतिकीर्तनाच्छ्रवणान्नरः ॥ ५ ॥ सर्वकामप्रदंनित्यंदेवदेवस्यकीर्तनम् ॥ अतःपरंमहाज्ञानंनभूतंनभविष्यति ॥ १०६ ॥ इतिश्रीपाद्म
पुराणेप्रथमेसृष्टिखण्डेदेवासुरसंग्रामसमाप्तौविजयस्तोत्रंनामसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ संजयउवाच ॥ येऽसुराश्चमृतायुद्धेसम्मुखेविमुखेऽपि
वा ॥ गतिंतेषामहंब्रह्मञ्श्रोतुमिच्छामितत्त्वतः ॥१ ॥ असङ्ख्याताइमेदैत्यास्त्रैलोक्येसचराचरे ॥ अद्याप्यासन्गताःकुत्रएतन्मेशंसभोगुरो ॥ २ ॥ व्या
सउवाच ॥ येमृतास्संमुखेशूरादैत्यानांप्रवरारणे ॥ स्वयंप्राप्यचदेवत्वंभोग्यमश्नन्तिशाश्वतम् ॥ ३ ॥ प्रासादायत्रसौवर्णानानारत्नविभूषिताः ॥
सर्वकामप्रदावृक्षाःस्वर्णदीतोयसंयुताः ॥ ४ ॥ पद्मोत्पलसुकह्लारैर्गन्धाढ्यैरन्यपुष्पकैः ॥ दधिदुग्धाज्यखण्डैश्चयुतापुष्करिणीशुभा ॥ ५ ॥

अतीवरूपसम्पन्नाःसदैवनवयौवनाः ॥ यत्रसन्तिस्त्रियोदिव्याःसर्वाभरणभूषिनाः ॥ ६ ॥ तत्रराज्यंप्रकुर्वन्तितथैववसुधातले ॥ एवंजन्माष्टकंप्रा
प्यधनिनोऽध्यक्षमन्त्रिणः ॥ ७ ॥ अर्धसंमुखगात्रेणदिवमश्नन्तिशाश्वतम् ॥ विमुखाःकातराभीतायेचमायाविनोरणे ॥ ८ ॥ तेयान्तिनिरयंघो
रंयेचदेवद्विजद्विषः ॥ पतितंमूर्च्छितंभग्नमन्ययोद्धारमाहवे ॥ ९ ॥ हन्तारोनिरयंयान्तितेतचम्लेच्छाःकुवाचकाः ॥ परन्यासापहर्तारोविमुखास्स
न्तितत्त्वतः ॥ १० ॥ रात्रौवाविपिनेनष्टेचोरास्साहसकारिणः ॥ सर्वभक्षरतामूढाम्लेच्छागोब्रह्मघातकाः ॥ ११ ॥ कुवाचकाःपरेम्लेच्छाएतेयेकू
टयोनयः ॥ तेषांपैशाचिकीभाषालोकाचारोनविद्यते ॥ १२ ॥ नास्तिशौचंतपोज्ञानंनदेवपितृतर्पणम् ॥ दानश्राद्धादिकंयज्ञेसुराणांचप्रपूजनम्
॥ १३ ॥ पितृणांचनशुश्रूषाद्विजदेवतपस्विनाम्॥ज्ञानलोपादतस्तेषांमलशौचंनविद्यते ॥ १४ ॥ मातरंभगिनींचान्यांगृहिणींकामयन्तिच ॥ सर्वो
विपर्ययौलोकात्सदाचारोमलीमसः ॥ १५ ॥ तार्क्ष्यस्योद्गमनानांचअन्येषांगोत्रवासिनाम् ॥ कुलजातास्सदादैत्यायेषांपुण्यमकारणम् ॥ १६॥
दुर्गतिंचमृतायान्तिद्विजस्त्रीशिशुघातिनः ॥ गवाशिनोदुरात्मानोह्यभक्ष्यभक्षणेरताः ॥ १७ ॥ कीटयोनिंव्रजन्त्येतेतरवश्चपिपीलिकाः ॥ नमन्त्रे
षुनदेवेषुकल्पन्तेतेसुरद्विषः ॥ १८ ॥ अग्रजःसहजस्तेषांसदृङ्गोग्राम्यवृत्तयः ॥ लोमकेशप्रणेतारःक्रव्यभक्षरताभुवि ॥ १९ ॥ साहसंचव्रतंदानंस्ना
नंयज्ञादिकंचयत् ॥ मत्स्यमांसादिषुप्रीतामृषावचनभाषिणः ॥ २० ॥ सदाकामास्सदालोभास्सदाक्रोधमदान्विताः ॥ वधवन्धरतोद्वेगाद्यूतसङ्गी
तसम्प्रियाः ॥ २१ ॥ कुभृत्याःकुजनप्रीताःपूतिगन्धरतांनराः ॥ नदेवेषुनविज्ञेषुनधर्मश्रवणेषुच ॥ २२ ॥ स्तोत्रमन्त्रादिकेपुण्येयथाकार्येष्वनि
श्चयाः ॥ बहुरोगाधिरोषाश्चबहुरूपपरिच्छदाः ॥ २३ ॥ नरजातिषुदैत्यानांचिह्नान्येतानिभूतले ॥ नजानन्तिपरंलोकंनगुरुंस्वंनचापरम् ॥ २४ ॥
गर्भपूरणमिच्छन्तिनातिथिंनगुरून्द्विजान् ॥ नदेवंनसुतंगोत्रंनमित्रंनचबान्धवम् ॥ २५ ॥ स्वप्नेदानंनजानन्तिभक्षणान्नपरिच्छदम् ॥ गोपायन्तिध
नंयस्मात्तेयक्षानररूपिणः ॥२६॥ प्राणान्तेऽपिधनंकिंचिन्नदिशन्तिचराजनि ॥ तेयक्षादुर्गतिस्थाश्चपरार्थेभारवाहकाः ॥ २७ ॥ प्रेतानांलक्षणंयद्वा
सर्वलोकविगर्हितम् ॥ स्त्रीणांचपुरुषाणांचशृणुष्वैकमनामम ॥२८॥ मलपङ्कधरानित्यंसत्यंशौचविवर्जिताः ॥ दन्तकुन्तलवस्त्राणांवपुषोमलसश्चयाः
॥ २९ ॥ गृहपीठादिपात्राणांसकृच्छौचंनरोचते ॥ नपश्यन्तिसुखंस्त्रीणांविशन्तिकाननेद्रुतम् ॥ ३० ॥ विघसोच्छिष्टपूतीनांभक्षणेऽभिरताभुवि ॥
अन्नपानंचशयनमन्धकारेषुरोचते ॥ ३१ ॥ कदाचित्स्वस्थतानास्तिक्वचिद्राशुचितातनौ ॥ लक्षणंनरलोकेषुप्रेतानामीदृशंकिल ॥ ३२ ॥ हिता
हितंनजानन्तिमित्रामित्रंगुणागुणम्॥पापपुण्यादिकंस्थानंस्नानंदेवद्विजार्चनम् ॥३३॥ अरिमित्रमुदासीनंनविदन्तिस्वभावतः ॥ मर्त्यस्थाःपशवस्ते

चज्ञायन्तेबुद्धिसंमतैः ॥ ३४ ॥ बुद्ध्यानानात्वभावाश्चभ्रमन्तिचमृषाभुवि ॥ यक्षरूपानरास्तेचसर्वकर्मबहिष्कृताः ॥ ३५ ॥ एषांभेदंप्रवक्ष्यामि लक्षणंधरणीतले ॥ विजातामर्त्यलोकेषुपापस्यैवानुरूपतः ॥ ३६ ॥ मलीमसभुविप्रस्थंनागरंछद्मरूपिणम् ॥ विघसादिप्रभोक्तारंकाकमाहुर्मनीषिणः ॥ ३७ ॥ अभक्ष्येनिरतःपापःकुक्कुरःपूतिसंप्रियः ॥ प्रवृत्तस्सर्वगुह्येषुभक्ष्याभक्ष्यसजीवनः ॥ ३८ ॥ भूम्यांपश्वादियोनीनांकुलेषुप्राप्तसम्भवाः ॥ शुनोविगृह्यहस्तेनम्लेच्छानांभक्षणप्रियाः ॥ ३९ ॥ विशेषात्सूकराणांचतथाचरणयोधिनाम् ॥ पोषणेभक्षणेप्रीताःपूतिगर्ह्येष्वसाधुषु ॥ ४० ॥ पर्वतेकरणाद्वह्नेःकाष्ठसञ्चयसङ्ग्रहे ॥ विज्ञेयास्तेसदाम्लेच्छाःक्षत्रियाणांभयाकुलाः ॥ ४१ ॥ लोकानांनष्टधर्मेचसदाशौचविवर्जिते ॥ कुलीनानांतदाम्लेच्छाभविष्यन्तिचदस्यवः ॥ ४२ ॥ तेषांसंसर्गतोऽन्येचसम्बन्धादन्नभोजनात् ॥ मैथुनात्तस्ययोषासुतद्भावंतुव्रजन्तिते ॥ ४३ ॥ तस्मिन्कालेजनास्सर्वेदुःखरोगप्रतापिताः ॥ दुर्भिक्षान्नपरामूढाःसदाराजप्रपीडिताः ॥ ४४ ॥ तत्रासत्येरतामर्त्याःसर्वशौचविवर्जिताः ॥ नश्रूयन्तेजनैरेवपुराणागमसंहिताः ॥ ४५ ॥ मद्यमांसप्रियाःपापास्सर्वभक्षास्सुदारुणाः ॥ दारुणाचारनिरतानित्यंछलपरायणाः ॥ ४६ नपुष्णन्तिसुतास्तातंप्रसुवंचगुरूनपि ॥ नशुश्रूषन्तिवैभृत्याःस्वामिनंगुणशालिनम् ॥ ४७ ॥ भर्तारंनस्त्रियःकाश्चिच्छ्वशुरौचस्वमातरः ॥ नित्यकष्टानरास्तत्रकलहश्चगृहेगृहे ॥ ४८ ॥ नृपाम्लेच्छाःसुरापाश्चतथामन्त्रिपुरोहिताः ॥ मनुष्यैश्चबलिस्तेषांमत्स्यैर्मांसैर्निरामिषः ॥ ४९ ॥ पाषण्डायासयोगेभ्यःप्रधानागुणवार्तयोः ॥ धनिकैःकोकिलैर्मन्दैर्व्याप्तंतैस्तुमहीतलम् ॥ ५० ॥ ततोऽन्योन्यंप्रियामूढावनेवानगरेषुच ॥ भक्ष्याभक्ष्यंसमश्नन्तिमत्स्यमांसादिकंनराः ॥ ५१ ॥ वनेद्विजातयश्चान्येभुञ्जतेचानुपापकम् ॥ भक्तिमन्तंपशुंचान्यत्सर्वेयान्त्यपुनर्भवम् ॥५२ ॥ पातयन्तिपितॄन्पापाःसर्वेतेपूर्वदेवकाः ॥ ॥ पिशाचाराक्षसायेचमर्त्यकागुह्यकाध्रुवम् ॥ ५३ ॥ एतेचाविनयप्रीतानदेवानचमानुषाः ॥५४॥संजयउवाच ॥ कथंचमर्त्यभावेषुलक्षंजानन्तितात्त्विकाः ॥ एतंमेसंशयंनाथदूरीकुरुततस्ततः ॥५५॥ व्यासउवाच ॥ कृतपापानुरूपास्तुद्विजातिष्वन्यजातिषु ॥ असुराराक्षसाःप्रेताःस्वभावंनत्यजन्तिते ॥ ५६ ॥ जातायेचासुरामर्त्येसदातेकलहोत्सुकाः ॥ कुहकाःकच्चराःक्रूराःविज्ञेयाराक्षसाभुवि ॥ ५७ ॥ जनोद्विग्नादिकंदानंतथादेवार्चनंभुवि ॥ उग्रभावाद्धनंलब्ध्वाराज्यंभुञ्जन्तिशाश्वतम् ॥ ५८ ॥ जयंशौर्यादिकंपुण्यंपुनःपापक्षयंव्रजेत् ॥ एवमुर्व्यांतथानाकेनागलोकेयमालये ॥ ५९ ॥ उग्रेणतपसाकश्चित्सुरत्वंलभतेदिवि ॥ वासुदेवंसमाराध्यप्रह्लादःसुरपूजितः ॥ ६० ॥ हरंतथान्धकोदैत्यःस्तुत्वातत्सभ्यकोऽभवत् ॥ तस्यैवगणमुख्यत्वंलेभेभृङ्गीमहाबलः ॥ ६१ ॥ एतेचान्येचबहवो

बलिरिन्द्रोभविष्यति ॥ गच्छन्तिसद्गतिंतातइहामुत्रचसर्वदा ॥ ६२ ॥ केचिद्दैत्यकुलेजाताःपृथिव्यांसुरसत्तमाः ॥ भावयन्तिपितॄन्सर्वाञ्शत
शोऽथसहस्रशः ॥ ६३ ॥ एकेनापिसुपुत्रेणकुलत्राणंचर्धीमता ॥ एकोऽपिवैष्णवःपुत्रःकुलकोटिंसमुद्धरेत् ॥ ६४ ॥ म्रियन्तेपुण्यतीर्थेषुमुक्तिक्षेत्रेच
ज्ञानतः ॥ ब्रह्मज्ञानविदोयेतेतारयन्तितरन्तिच ॥ ६५ ॥ एकापतिव्रतानारीकुलकोटिंसमुद्धरेत् ॥ जितेन्द्रियोऽपिधर्मात्माद्विजदेवार्चनेरतः ॥६६॥
क्षयेधर्मेकलौशेषेपुरेजनपदेषुच ॥ एकोरक्षतिधर्मात्मापुरंग्रामंजनंकुलम् ॥ ६७ ॥ विज्ञातृमेदुरंचासीद्ब्राह्मणानांपुरंमहत् ॥ तत्रसर्वेद्विजाःशश्व
त्सन्ध्योपासनतत्पराः ॥ ६८ ॥ वेदपाठरताधीरादेवातिथिद्विजार्चकाः ॥ यज्ञव्रताग्निकर्माणःषट्कर्मपरिनिश्चयाः ॥ ६९ ॥ अतिकृच्छ्रेचतेषांवैन
पापेवर्ततेमनः ॥ कुर्वन्तिसततंवीराव्रतंयज्ञंसनातनम् ॥ ७० ॥ कदाचिद्दैवयोगाच्चगृहस्थश्चसकोविदः ॥ वह्नौजुहोतिविप्रर्षिराज्यंमन्त्रेणमन्त्रवित्
॥ ७१ ॥ तस्मिन्कालेचतस्यैवमूत्रकृच्छ्रंसुदारुणम् ॥ तत्प्रोज्झितुंगतःसोऽपिरक्षार्थंस्थाप्यचेटिकाम् ॥ ७२ ॥ तस्यास्त्वनवधानेनशुनाचाज्यं
चभक्षितम् ॥ भियातयाततःपात्रंस्वीयमूत्रेणसम्भृतम् ॥ ७३ ॥ असंलक्ष्याजुहोदग्नौसविप्रस्त्वरयाततः ॥ आश्चर्यंचततोवह्नौलक्षितंतेनतत्क्षणात्
॥ ७४ ॥ कूटंहेममयंसाक्षात्स्वर्णजाम्बूनदप्रभम् ॥ गृहीत्वातन्मुदाविप्रःपापयोगंचकारह ॥ ७५ ॥ पप्रच्छविस्मयाद्दासींकथमेतद्वदप्रिये ॥
मुदातत्रयथावृत्तंकथितंतुतयाद्विज ॥ ७६ ॥ ततोनित्यंयथाकालंतच्चतस्यप्रवर्तते ॥ समृद्धिरद्भुतागेहेलोकविस्मयकारिणी ॥ ७७ ॥ ततःपरस्परा
च्छ्रुत्वासर्वैरेवचतत्पुरे ॥ कृतंकर्मदुराचारंश्रुत्वालोभादसाधुभिः ॥ ७८ ॥ गुरुलोभाच्चसुमहत्स्वान्तेपङ्कंविशत्यपि ॥ पङ्काद्देवभयान्मोहान्मतिभ्रं
शोऽभवत्ततः ॥ ७९ ॥ अथकिल्बिषकूटेनदग्धमेवपुरंचतत् ॥ स्त्रियोदुष्टाजनादुष्टाःसर्वेपापबलात्तदा ॥ ८० ॥ वृद्धोज्ञाताद्विजस्तत्रतत्कार्येनमतिं
दधौ ॥ तस्यभार्यातदासाध्वीपुरुदुःखेनसंयुता ॥ ८१ ॥ भर्तारंकृच्छ्रसन्तप्तापुरकार्यंजगादसा ॥ ८२ ॥ ब्राह्मण्युवाच ॥ कष्टमेवर्ततेनाथदृष्ट्वा
त्वांदुःखसंयुतम् ॥ ग्रामाचारमिमंयद्वाऽप्यपरंकर्तुमर्हसि ॥ ८३ ॥ व्यासउवाच ॥ ततस्तत्रसदोषज्ञःस्मित्वावचनमब्रवीत् ॥ ८४ ॥ द्विजउवाच॥
यस्तुजीवतिपापेनत्यक्त्वाधर्मंपरंहितम् ॥ सर्वेधेयोमहाभागेप्रगच्छत्यपुनर्भवम् ॥ ८५ ॥ एतेविप्रादुराचाराःसदारास्सपरिच्छदाः ॥ अतिपात
कयोगाच्चमहापातकसंमताः ॥ ८६ ॥ सहपापेनमहताप्रयास्यन्तिरसातलम् ॥ अन्तेऽपुनर्भवंप्राप्यापराधान्तोनविद्यते ॥ ८७ ॥ अहमेकोऽत्रति
ष्ठामिस्वपुण्यपरिरक्षणात् ॥ ८८ ॥ व्यासउवाच ॥ ततस्सातमुवाचेदंलोकद्वास्यंवचस्तव ॥ वक्तुमर्हसिनश्चाग्रेनपुरोऽन्यस्यकस्यचित् ॥ ८९ ॥
द्विजउवाच ॥ यदियास्यामिचान्यत्रइतोऽहंतत्क्षणात्प्रिये ॥ सवित्तैःस्वजनैरेवपुरीयास्यत्यधोगतिम् ॥ ९० ॥ व्यासउवाच ॥ इत्युक्त्वापरम

प्रीतःसङ्गृह्यचधनंस्वकम् ॥ क्षिप्रंसचतयासार्धंययौसीमान्तरंद्विजः ॥ ९१ ॥ स्थित्वाऽपश्यत्पुरीतावत्स्थिरातिष्ठतिपूर्ववत् ॥ साचाहतंपतिंसाध्वी
पुरीचेयंननश्यति ॥ ९२ ॥ विमृश्यतामुवाचेदंविप्रवर्यस्सुविस्मितः ॥ किंतुतिष्ठतितत्रैवद्रव्यमस्मद्गृहाद्बहिः ॥ ९३ ॥ विचार्यसाधवंप्राहमया
भ्रान्त्याउपानहौ ॥ नानीतेतिष्ठतस्तत्रधारयिष्यामिकिंतुवै ॥ ९४ ॥ एवमुक्तापतिंसाध्वीगृहीत्वांतउपागता ॥ पत्युरभ्याशतोदृष्टंपुरंनिर्व्यथनं
गतम् ॥ ९५ ॥ ततोविप्रादयोवर्णाःकद्वराःपुरवासिनः ॥ तिष्ठन्तिनरकेघोरेदुःखिताश्चापुनर्भवे ॥ ९६ ॥ कृच्छ्राद्यमपुरंयान्तिनास्तितेषांचनि
ष्कृतिः ॥ पूतिगन्धंततोऽमेध्यंवर्जनीयंप्रकीर्तितम् ॥ ९७ ॥ पूर्ववद्भक्षणेप्रीतोह्यघपापंकरोतिच ॥ स्तेयशीलोनिशाचारीबुधैर्ज्ञेयस्सवञ्चकः ॥ ९८ ॥
अवुधःसर्वकार्येषुअज्ञातःसर्वकर्मसु ॥ समयाचारहीनस्तुपशुरेवसबालिशः ॥ ९९ ॥ एवमुष्ट्रादयस्सन्तिभक्षादिनकुलादयः ॥ हिंस्रोज्ञातिज
नोद्वेगीरतेयुद्धेचकातरः ॥ १०० ॥ विघसादिप्रियोनित्यंनरःश्वाकीर्तितोबुधैः ॥ चौर्यकर्मरतोनित्यंबहुमित्रप्रवञ्चकः ॥ १ ॥ मिथुनेकलहोनित्यं
मर्त्यस्तुपरिकीर्तितः ॥ प्रकृत्याचपलोनित्यंसदाभोजनचञ्चलः ॥ २ ॥ प्लवगःकाननप्रीतोनरःशाखामृगोभुवि ॥ मूचकोभाषयाबुद्ध्यास्वजनेऽन्य
जनेषुच ॥ ३ ॥ उद्वेगजनकत्वाच्चसपुमानुरगःस्मृतः ॥ बलवान्कान्तशीलश्चसततंचानपत्रपः ॥ ४ ॥ पूतिमांसप्रियोभोगीनृसिंहस्समुदाहृतः ॥
तत्स्वनादेवसीदन्तिभीताअन्येवृकादयः ॥ ५ ॥ द्विरदादिनरायेचज्ञायन्तेदूरदर्शिनः ॥ एवमादिक्रमेणैवविजानीयान्नरेषुच ॥ ६ ॥ सुराणांलक्षणं
ब्रूमोनररूपंव्यवस्थितम् ॥ द्विजदेवातिथीनांचगुरुसाधुतपस्विनाम् ॥ ७ ॥ पूजातपोरतोनित्यंधर्मशास्त्रेषुनीतिषु ॥ क्षमाशीलोजितक्रोधःसत्यवादी
जितेन्द्रियः ॥ ८ ॥ अलुब्धःप्रियवाक्शान्तोधर्मशास्त्रार्थसंप्रियः ॥ दयालुर्दयितोलोकेरूपवान्मधुरस्वरः ॥ ९ ॥ वागीशःसर्वकार्येषुगुणीदक्षो
महाबलः ॥ साक्षरश्चापिविद्वांश्चगीतनृत्यार्थतत्त्ववित् ॥ ११० ॥ आत्मविद्यादिकार्येषुसर्वतन्त्रीस्वरेषुच ॥ हविष्येषुचसर्वेषुगव्येषुचनिरामिषे
॥ ११ ॥ सद्योगास्वादद्रव्येचप्रत्यग्रेचातिशोभने ॥ गन्धमाल्येषुवस्त्रेषुशास्त्रेष्वाभरणेषुच ॥ १२ ॥ सम्प्रीतश्चातिथौदानेपार्वणादिषुकर्मसु ॥ स्नानदाना
दिभिःकार्यैर्व्रतैर्यज्ञैःसुरार्चनैः ॥ १३ ॥ कालोगच्छतिपाठैश्चनक्लीबंवासरंभवेत् ॥ अयमेवमनुष्याणांसदाचारोनिरन्तरम् ॥ १४ ॥ देववन्मानवाचारोगी
यतेमुनिसत्तमैः ॥ किन्तुसत्त्वाधिकोदेवोमनुष्योभीतएवच ॥ १५ ॥ गम्भीरःसर्वदादेवःसदैवमानवोमृदुः ॥ द्वयोस्तुल्याचसम्प्रीतिर्निर्दैत्यादौभवेत्किल
॥ १६ ॥ प्रीतिभावंपरंसौख्यंसौहृदंसुकृतंशुभम् ॥ दैवमानुषयोरेवदैत्यराक्षसयोस्तथा ॥ १७ ॥ प्रेतादीनांचप्रेतेषुपशौप्रीतिःपशोरपि ॥ काकादयःस्वजातौच
तथान्येचस्वजातिषु ॥ १८ ॥ प्रीताभवन्तिचाप्रीताविद्यातेषांचलक्षणम् ॥ एवंपुण्यविशेषेणसविशेषासुजातिषु ॥ १९ ॥ प्रियाप्रियंविजानीयात्पुण्यापुण्यं

गुणागुणम्॥दम्पत्योर्नसुखंकिंचिज्जातिभेदान्नृणांभुवि ॥१२०॥ स्वजातिषुभवेत्प्रीतिर्मुक्तौवानिरयेऽपिवा॥अतिपुण्याल्लभेदायुःशोभनाःपुण्यकारिणः ॥२१॥पापात्मानोलभन्तेऽन्तंयेचदैत्यादयोनराः॥कृतेजाताःसुराभूमौनदैत्याश्चान्यजातयः ॥२२॥ त्रेतायामेकपादंचद्विपदंद्वापरेयुगे॥सन्ध्यायांचकलेरेवसर्वपादंचसङ्कुलम् ॥२३॥ देवादीनांभवेज्जातंभारतंयत्प्रवर्तितम्॥येतेदुर्योधनस्यैवयोधाःसैन्यादयस्तथा॥२४॥ तेचदैत्यादयःसर्वेयेचकर्णादयोभुवि॥गाङ्गेयोवसुमुख्यश्चद्रोणोदेवमुनिःप्रभुः ॥२५॥ अश्वत्थामाहरःसाक्षाद्धरिर्नन्दकुलोद्भवः॥पञ्चेन्द्राःपाण्डवाजाताविदुरोधर्मएवच॥२६॥गान्धारीद्रौपदीकुन्तीचैतादेव्योधरातले ॥ देवदैत्याःकलेर्मध्येदैत्याश्शेषेचमानवाः ॥ २७ ॥ उत्पत्स्यन्तेसदाप्रेताःक्रव्यादाःपशुपक्षिणः ॥ तेषांचकुलटादासीनित्यकष्टायवीयसी ॥२८॥ नित्यंद्वन्द्वेषुसम्प्रीत्यातेषामाचारभाषिणी ॥ किल्बिषेषुचसर्वेषुकलहेऽन्यायकर्मणि ॥ रतादैत्यादयोयेतेसर्वेनिरयगामिनः ॥ २९ ॥ वैशम्पायनउवाच ॥ दैत्यादीनांमृषाभावात्सुरत्वंनसुरालयम् ॥ कथंभोग्यंकथंसौख्यमारोग्यंबलसञ्चयम् ॥१३०॥ राज्यमायुस्तथाकीर्तिरभीष्टंद्वयितंबलम् ॥ नीतिविद्यादिकंभाव्यंजन्मवृद्धंसनातनम् ॥३१ ॥ दानाध्ययनकर्माणियज्ञादिचकथंप्रभो ॥ एतदाप्तायशिष्यायमह्यंभोवक्तुमर्हसि ॥३२॥ व्यासउवाच ॥ दैत्यानांसाहसादेवतापोभवतिनिश्चितम् ॥ व्रतंयज्ञादिकंचैवसम्प्रीतिःस्वजनस्यच ॥३३॥ योदान्तोविगुणैर्मुक्तोनीतिशास्त्रार्थतत्त्वगः ॥ एतैश्चविविधैःपूतःसभवेत्सुरलक्षणः ॥ ३४ ॥ पुराणागमकर्माणिनाकेष्वत्रचवैद्विज ॥ स्वयमाचरतेपुण्यंसधरोद्धरणक्षमः ॥ ३५ ॥ यःशैवोवैष्णवश्चाण्डःसौरोगाणपएवच ॥ तारयित्वापितॄन्सर्वान्सधरोद्धरणक्षमः ॥ ३६ ॥ विशेषाद्वैष्णवंदृष्ट्वाप्रीयतेपूजयेच्चयः ॥ विमुक्तस्सर्वपापेभ्यस्सधरोद्धरणक्षमः ॥ ३७ ॥ षट्कर्मनिरतोविप्रःसर्वयज्ञरतस्सदा ॥ धर्माख्यानप्रियोनित्यंसधरोद्धरणक्षमः ॥ ३८ ॥ विश्वासघातिनोयेचकृतघ्नाव्रतलोपिनः ॥ द्विजदेवेषुविद्विष्टाश्शातयन्तिधरांनराः ॥ ३९ ॥ येचमद्यरताःपापाद्यूतकर्मरतास्तथा ॥ पाषण्डपतितालापाःशातयन्तिधरांनराः ॥ १४० ॥ सुकर्मरहितायेचनित्योद्विग्नाश्चनिर्भयाः ॥ स्मृतिशास्त्रार्थकोद्विग्नाश्शातयन्तिधरांनराः ॥ ४१ ॥ निजवृत्तिंपरित्यज्यकुर्वन्तिचाधर्मांचये ॥ गुरुनिन्दारताद्वेषाच्छातयन्तिधरांनराः ॥ ४२ ॥ दातारंयेरोधयन्तिपातकेप्रेरयन्तिच ॥ दीनानाथान्पीडयन्तिशातयन्तिधरांनराः ॥ ४३ ॥ एतेचान्येचबहवःपापकर्मकृतोनराः ॥ पुरुषान्पातयित्वातुशातयन्तिधरांनराः ॥ ४४ ॥ यइदंशृणुयाद्रम्यंगुह्याद्गुह्यंपरंहितम् ॥ नतस्यदुर्गतिर्दुःखंदौर्भाग्यंदीनताभुवि ॥ ४५ ॥ नदैत्यादौभवेज्जन्मस्वर्लोकेशाश्वतंसुखम् ॥ नाकालेमरणंतस्यनचपापैःप्रलिप्यते ॥ ॥ ४६ ॥ इहसर्वजनाध्यक्षस्त्रिदिवंत्रिदिवेश्वरः ॥ कल्पंकल्पंदिवंभुक्त्वामोक्षमार्गंव्रजत्यसौ ॥ १४७ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेपुण्यव्यक्ति

र्नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ वैशम्पायनउवाच ॥ प्रभवत्ययमाकाशेनित्यंद्विजवरप्रभो ॥ कोऽयंकोवाप्रभावोऽस्यकुत्रजातोघृणीश्वरः॥१॥
किंकरोतिहिकार्यंवैयतोरश्मिमयोभृशम् ॥ देवैर्मुनिवरैस्सिद्धैश्चारणैर्दैत्यराक्षसैः ॥ २ ॥ निखिलैर्मानुषैःपूज्यःसदैवब्राह्मणादिभिः ॥ ३ ॥ व्यास
उवाच ॥ परमंब्रह्मणस्तेजोब्रह्मदेहाद्विनिस्सृतम् ॥ साक्षाद्ब्रह्ममयंविद्धिधर्मकामार्थमोक्षदम् ॥ ४ ॥ मयूखैर्निर्मलैःकूटमतिचण्डंसुदुःसहम् ॥ दृष्ट्वा
प्रदुद्रुवुर्लोकाःकरैश्चण्डैःप्रपीडिताः ॥ ५ ॥ ततश्चसागराःसर्वेवरनद्योनदादयः ॥ शुष्यन्तिजन्तवस्तत्रम्रियन्तेचातुराजनाः ॥ ६ ॥ अथशक्रादयो
देवाब्रह्माणंसमुपागताः ॥ इममर्थंतदाप्रोचुर्देवांश्चविधिरब्रवीत् ॥ ७ ॥ ब्रह्मोवाच ॥ आदिर्ब्रह्मतनोर्देवाःसत्त्वगोजनकःप्रभुः ॥ अयंरजोमयःसाक्षा
त्सुधांशुस्तनुमध्यगः ॥ ८ ॥ एताभ्यांपालितालोकास्त्रैलोक्येसचराचराः ॥ दिव्योपपादकादेवायेवात्रैवजरायुजाः ॥ ९ ॥ अण्डजास्स्वेदजाश्चैव
येवात्रैवोद्भिज्जादयः ॥ सूर्यस्यास्यप्रभावंतुवक्तुमेवनशक्नुमः ॥ १० ॥ अनेनरक्षितालोकाजनितापालिताध्रुवम् ॥ अस्यैवसदृशोनास्तिसर्वेषांपरि
रक्षणात् ॥ ११ ॥ यंचदृष्ट्वाप्युषःकालेपापराशिःप्रलीयते ॥ तमाराध्यजनामोक्षंसाधयन्तिद्विजातयः ॥ १२ ॥ सन्ध्योपासनकालेतुविप्राब्रह्मवि
दःकिल ॥ उद्बाहवोभवन्त्येवतेचदेवप्रपूजिताः ॥ १३ ॥ अस्यैवमण्डलस्थांचदेवींसन्ध्यास्वरूपिणीम्॥समुपास्य द्विजास्सर्वेलभन्तेस्वर्गमोक्षकौ ॥
॥ १४ ॥ धरायांपतितोच्छिष्टाःपूतास्तेचास्यरश्मिभिः ॥ सन्ध्योपासनमात्रेणकल्मषात्पूततांव्रजेत् ॥ १५ ॥ दृष्ट्वाचाण्डालकंगोघ्नंपतितंकुष्ठस
ङ्गतम् ॥ महापातकसङ्कीर्णमुपपातकसंवृतम् ॥ १६ ॥ पश्यन्तियेनरास्सूरंतेपूतागुरुकिल्बिषात् ॥ अस्योपासनमात्रेणसर्वरोगात्प्रमुच्यते ॥१७॥
नान्धत्वंनचदारिद्र्यंनदुःखंनचशोच्यताम् ॥ लभतेचइहामुत्रसमुपास्यविरोचनम् ॥ १८ ॥ प्रदृष्टानैवलोकैश्चदेवाहरिहरादयः ॥ ध्यानरूपप्रगम्या
स्तेदृष्टोदेवोह्ययंस्मृतः ॥ १९ ॥ देवाऊचुः ॥ अस्तुप्रसादनाराध्यश्चास्तूपासनपूजनम् ॥ अस्यैवदर्शनंब्रह्मन्प्रलयानलसंमितम् ॥ २० ॥ सर्वेन
रादयस्सत्त्वामृतावस्थांगताभुवि ॥ अस्यतेजःप्रभावेणप्रनष्टास्सागरादयः ॥ २१ ॥ नसमर्थावयंसोढुंकथमन्येपृथग्जनाः ॥ तस्मात्तवप्रसादाच्चपू
जयामोयथारविम् ॥ यजन्तिचनराभक्त्यातदुपायोविधीयताम् ॥२२॥ व्यासउवाच ॥ देवानांवचनंश्रुत्वागतोब्रह्माखगेश्वरम् ॥ गत्वास्तोतुंसमारे
भेसर्वलोकहितायवै॥२३॥ब्रह्मोवाच॥देवत्वंसर्वलोकस्यचक्षुर्भूतोनिरामयः॥ब्रह्मरूपधरःसाक्षाद्दुष्प्रेक्ष्यःप्रलयानलः॥२४॥ सर्वदेवस्थितस्त्वंहिसदावा
युसखस्तनौ ॥ अन्नादिपाचनंत्वत्तोजीवनंचभवेद्ध्रुवम् ॥ २५ ॥ उत्पत्तिप्रलयौदेवत्वमेकोभुवनेश्वरः ॥ त्वदृतेसर्वलोकानांदिनैकंनास्तिजीवनम् ॥
॥ २६ ॥ प्रभुस्त्वंसर्वलोकानांत्रातागोप्तापिताप्रसूः ॥ चराचराणांसर्वेषांत्वत्प्रसादाद्धृतंजगत् ॥ २७ ॥ देवेषुत्वत्समोनास्तिभगवंस्त्वखिलेषुच ॥

अन्तर्देहेषुबाह्येषुसर्वेषुभुवनेषुच ॥ २८ ॥ सर्वत्रतेऽस्तिसद्भावस्त्वयैतद्धारितंजगत् ॥ रूपगन्धादिकारीत्वंरसानांस्वादुतात्वया ॥ २९ ॥ एवं
विश्वेश्वरःसूरोनिखिलस्थितिकारकः ॥ तीर्थानांपुण्यक्षेत्राणांमखानांजगतःप्रभोः ॥ ३० ॥ त्वमेकःप्रयतोहेतुस्सर्वसाक्षीगुणाकरः ॥ सर्वज्ञःसर्व
कर्ताचहर्तापातासदोत्सुकः ॥ ३१ ॥ ध्वान्तपङ्कामयघ्नश्चदारिद्र्यदुःखनाशनः ॥ प्रेत्येहचपरोबन्धुःसर्वज्ञःसर्वलोचनः ॥ ३२ ॥ त्वदृतेसर्वलो
कानामुपकारीनविद्यते ॥ ३३ ॥ आदित्यउवाच ॥ पितामहमहाप्राज्ञविश्वेन्द्रविश्वभावक ॥ ब्रूहिशीघ्रंपरंयत्तेकरिष्यामिमतंविधे ॥ ३४ ॥ ब्रह्मो
वाच ॥ मयूखस्तेऽतिचण्डश्चलोकानामतिदुःसहः ॥ यथैवमृदुतामेतितथाकुरुसुरेश्वर ॥ ३५ ॥ आदित्यउवाच ॥ किरणाःकोटिकोटिर्मेलोक
नाशकराःपराः ॥ नचाभीष्टकरालोकेप्रयोगाच्छिन्धितान्प्रभो ॥ ३६ ॥ व्यासउवाच ॥ ततोविरिञ्चिनातूर्णंरविवाक्यवशाद्धुवम् ॥ आहूय
विश्वकर्माणंकृत्वावज्रमयींभ्रमिम् ॥ ३७ ॥ चिच्छेदचरवेर्भानून्प्रलयानलसन्निभान् ॥ तैरेवरचितंतत्रविष्णोश्चक्रंसुदर्शनम् ॥ ३८ ॥ अमोघं
यमदण्डंचशूलंपशुपतेस्तथा ॥ कालस्यचपरःखड्गश्शक्तिर्गुरुप्रमोदिनी ॥ ३९ ॥ चण्डिकायाःपरंशस्त्रंविचित्रंशूलकंतथा ॥ चक्रेब्रह्माज्ञयाशीघ्रं
विश्वकर्मातुतेनवे ॥ ४० ॥ सहस्रकिरणंशिष्टमन्यच्चैवप्रशातितम् ॥ अजनोपायभावेनपुनश्चकश्यपान्मुनेः ॥ ४१ ॥ अदितेर्गर्भसञ्जातआदित्यइतिवै
स्मृतः ॥ अयंचरतिविश्रान्तेमेरुशृङ्गंभ्रमत्यपि ॥ ४२ ॥ सदोर्ध्वंदिनरात्रंचधरण्यालक्षयोजने ॥ ग्रहाश्चन्द्रादयस्तत्रचरन्तिविधिनोदिताः ॥ ४३ ॥
सूरःसञ्चरतेमासान्द्वादशद्वादशात्मकः ॥ सङ्क्रमादस्यसङ्क्रान्तिःसर्वैरेवप्रतीयते ॥ ४४ ॥ तासुयद्दाफलंभूमोलोकानांनिखिलंमुने ॥ धनुर्मिथुनमीने
षुकन्यायांषडशीतयः ॥ ४५ ॥ वृषवृश्चिककुम्भेषुसिंहेविष्णुपदीस्मृता ॥ तर्पणंचाक्षयंविद्धिदानंदेवार्चनंतथा ॥ ४६ ॥ षडशीतिसहस्राणिषडशीतौ
फलंभवेत् ॥ विष्णुपद्यांतुलक्षंतुअयनेकोटिकोटिकम् ॥ ४७ ॥ विष्णुपद्यांतुयद्दानमक्षयंपरिकीर्तितम् ॥ दातुर्वदामिसान्निध्यंसदाजन्मनिजन्मनि
॥ ४८ ॥ शीततूलपटीदानान्नदुःखंजायतेतनौ ॥ तुलादानेतल्पदानेद्वयोरेवाक्षयंफलम् ॥ ४९ ॥ सर्वोपकरणांशय्यांयोददातिविमत्सरः ॥ वर्णमु
ख्यायविप्रायसराजपदवींलभेत् ॥ ५० ॥ तथैवाग्निंजलंदत्त्वानदीतीरेपथिप्रगे ॥ दत्त्वाचतैलताम्बूलमुर्व्याअधिपतिर्भवेत् ॥ ५१ ॥ सत्यभावाद्द्विजं
नत्वाधनीचाक्षयतांव्रजेत् ॥ माघेमास्यसितेपक्षेपञ्चदश्यामहर्मुखे ॥ ५२ ॥ पितॄंस्तिलजलैरेवतर्पयित्वाक्षयोदिवि ॥ सुलक्षणांचगांदत्त्वाहेमशृङ्गांमणि
प्रभाम् ॥ ५३ ॥ रौप्यखुरप्रदेशांचतथाकांस्यसुदोहनाम् ॥ एतांदत्त्वाद्विजाग्र्यायसार्वभौमोभवेन्नृपः ॥ ५४ ॥ दत्त्वान्नाभरणंराजामण्डलेशोधने
श्वरः ॥ तिलधेनुंतुयोदद्यात्सर्वोपस्करणान्विताम् ॥ ५५ ॥ सप्तजन्मार्जितात्पापान्मुक्तोनाकेऽक्षयोभवेत् ॥ भोज्यान्नंब्राह्मणेदत्त्वाअक्षयंस्वर्गमश्नुते

॥ ५६ ॥ धान्यंवस्त्रंतथाभृत्यंगृहपीठादिकंचयत् ॥ योददातिद्विजाग्र्याय चलक्ष्मीर्नमुञ्चति ॥ ५७ ॥ यत्किञ्चिद्दीयतेदानंस्वल्पवायदिवाबहु ॥
अक्षयंपरलोकेषुयुगाद्यासुतथैवच॥५८॥ यद्वादेवार्चनंस्तोत्रंधर्माख्यानप्रतिश्रवः ॥ पुनातिसर्वपापेभ्योदिविपूज्योभवत्यसौ ॥५९॥तृतीयामाघमास
स्यसितामन्वन्तरास्मृता ॥ तस्यांयद्दीयतेदानंसर्वमक्षयमुच्यते ॥ ६० ॥ धनंभोग्यंतथाराज्यंनाकंकल्पान्तरस्थितम् ॥ तस्माद्दानंसतांपूजाप्रेत्यान
न्तफलप्रदा ॥ ६१ ॥ मन्वन्तरातुमाघस्यात्सप्तमीयासितेतरा ॥ तिथिःपुण्यतमाप्रोक्तापुराणैरभिरक्षिता ॥ ६२ ॥ माघमासेसितेपक्षेसप्तमीकोटिभा
स्करा ॥ तामुपोष्यनरःपुण्यांमुच्यतेनात्रसंशयः ॥ ६३ ॥ सूर्यग्रहणतुल्याहिशुक्लामाघस्यसप्तमी ॥ अरुणोदयवेलायांतस्यांस्नानंमहाफलम् ॥
॥ ६४ ॥ यच्चतत्रकृतंपापंमयासप्तसुजन्मसु ॥ तन्मेरोगंचशोकंचभास्करीहन्तुसप्तमी ॥ ६५ ॥ जननीसर्वभूतानांसप्तमीसप्तसप्तिके ॥ सप्तम्यामुदितेदे
विनमस्तेरविमण्डले ॥ ६६ ॥ अर्कपत्रंयवाःपुष्पंसुगन्धबदरीफलम् ॥ तत्पत्रेताम्रपात्रेवायुक्तमानीयतण्डुलम् ॥ ६७ ॥ यज्ञसूत्रंससिन्दूरं
दत्त्वाचार्घंसुशोभनम् ॥ सर्वपापंक्षयंयातिसप्तजन्मकृतंचयत् ॥ ६८ ॥ नरकैःपीड्यतेतावद्रोगैःपापैश्चदुःखदैः ॥ हविष्यंभोजयेदन्नंशुद्धमात
पतण्डुलैः ॥ ६९ ॥ वर्जयेच्चशिलाघृष्टंशृङ्गबेरंतुशाककम् ॥ कोरदूषकपत्रंचरम्भाच्छागीघृतंतथा ॥ ७० ॥ केशकीटादिकंवर्ज्यमुष्णोदस्ना
नमेवच ॥ अल्पबीजादिकंसर्वंव्रतेसूरस्यवर्जयेत् ॥ ७१ ॥ अन्यच्चनाचरेत्तत्रधर्मचिन्तांविनाव्रती ॥ सौरव्रतंमहापुण्यंपुराणैरभिनन्दितम्
॥ ७२ ॥ वर्षकोटिसहस्राणिवर्षकोटिशतानिच ॥ आदित्यस्यसमंभोग्यंलभतेदिविशाश्वतम् ॥ ७३ ॥ एवंस्वर्गक्षयादेवराजाभूमौमहाधनी ॥ मर्त्ये
लोकेपुराभ्यासात्करोतिभास्करव्रतम् ॥७४॥ तथास्वयंसुखंभोग्यंलभतेदिविशाश्वतम् ॥ आरोग्यंसम्पदंजन्मीभास्करस्यप्रसादतः ॥ ७५ ॥ रवि
वारेभवेद्याचसप्तमीमाघशुक्लके ॥ महाजयेतिविख्याताअन्यत्रविजयास्मृता ॥ ७६ ॥ विजयाकोटिलक्षंस्यादनन्तंस्यान्महाजया ॥ तत्रैकेनव्रतेनैवे
मुच्यतेजन्मबन्धनात् ॥ ७७ ॥ अश्वरत्नंसुवर्णंचरक्तवस्त्रंचधान्यकम् ॥ ददातिभास्करप्रीत्यास्वर्गमर्त्यपतिःक्रमात् ॥ ७८ ॥ एषांभेदंप्रवक्ष्यामिशृणु
विप्रयथार्थवत् ॥ उत्तमाभरणैर्युक्तंसद्वाहंयोददातिह ॥ ७९ ॥ समुद्रैस्सप्तभिर्जुष्टांभूमिमेत्यरिवर्जिताम्॥लभेद्भवान्तरेमर्त्यमेकेनैकाधिपोभवेत् ॥८०॥
अश्वहीनंचपत्राङ्गंवृषभैर्वाप्यलङ्कृतम्॥ हेममाषंद्विमाषंवादक्षिणाविहिताबुधैः॥ ८१ ॥ रत्नभाण्डंमहार्घंचहैमैरेवकृतंचयत् ॥ स्वर्णंवाकेवलंदत्त्वात्रिवि
ष्टपधनेश्वरः ॥ ८२ ॥ रक्तवस्त्रंचधान्यंचशक्तितोयःप्रयच्छति ॥ स्वर्गोर्व्योरीशतामेतिनतंलक्ष्मीर्विमुञ्चति ॥ ८३ ॥ अरोगीसुप्रसन्नात्मादस्युजेताप्र
तापवान् ॥ यावत्प्रभासतेभानुस्तावत्पूज्यनमोहिमः॥ ८४ ॥ माघादौद्वादशींमायांसप्तमींकारयेत्सतु॥इहाभीष्टफलंभुक्त्वासुरैश्चैवप्रपूज्यते॥ ८५॥

अर्काङ्गसप्तमीव्रतंकृत्वाचविधिवद्बुधः ॥ पापात्पूतइहाभीष्टंसम्प्राप्यमुक्तिमाप्नुयात् ॥ ८६ ॥ लक्षणंचप्रवक्ष्यामिमासिमासिचयोविधिः ॥
व्रतस्यास्यप्रसादाच्चसुराणामर्चितोदिवि॥८७॥शुक्लपक्षेरविदिनेप्रवृत्तेचोत्तरायणे ॥ पुंनामधेयनक्षत्रेगृह्णीयात्सप्तमीव्रतम्॥ ८८॥ हस्तोमैत्रंतथापुष्यः
श्रवोमृगपुनर्वसू ॥ पुंनामधेयनक्षत्राण्येतान्याहुर्मनीषिणः ॥ ८९ ॥ पञ्चम्यामेकभक्तंतुषष्ठ्यांनक्तंप्रकीर्तितम् ॥ सप्तम्यामुपवासंचअष्टम्यांपारणंभ
वेत् ॥९०॥ अर्काग्रंशुचिगोमयंसुमरिचंतोयंफलंचाश्नुतेमूलंनक्तमुपोषणंचविधिवत्कृत्वैकभक्तंतथा ॥ क्षीरंवाप्यशनंघृताक्तमितिचप्रोक्ताःक्रमेणामुना
कृत्वावासरसप्तमींदिनकृतःप्राप्नोत्यभीष्टंफलम् ॥ ९१॥ अर्काग्रंग्रामात्पूर्वोत्तरदिग्गतार्कविटपस्यशाखाग्रस्थितंविशिष्टंसूक्ष्मपत्रद्वयंसतोयंदन्तैरस्पृष्टं
पातव्यम् ॥ शुचिगोमयंभूमावपतितंमध्याङ्गुष्ठाभ्यांपलमात्रंदन्तैरस्पृष्टंसतोयंपातव्यम् ॥ सुमरिचमव्रणमपुरातनंस्थूलमवशुष्कमेकंदन्तैरस्पृष्टंसतोयं
पातव्यम् ॥ तोयंब्रह्मपित्रङ्गुलीमूलप्रसरंपातव्यम् ॥ फलंखर्जूरनारिकेलानामन्यतमंदन्तैरस्पृष्टंपातव्यम्॥ घृताक्तमितिचाहारंमयूरडिम्भपरिमाणम् ॥
घृतमपितत्परिमाणम् ॥ ९२ ॥ आत्मनोद्विगुणांछायांयदाकुर्वीतभास्करः ॥ तदानक्तंविजानीयान्ननक्तंनिशिभोजनम् ॥ ९३ ॥ प्रथमंपूजयेद्देवंफ
लपुष्पादिमन्त्रकैः ॥ अन्नदानंततःकुर्याद्विध्युक्तपरिमाणकम् ॥ ९४ ॥ ततोध्यानम् ॥ सर्वलक्षणम्पूर्णंसर्वाभरणभूषितम् ॥ द्विभुजंरक्तव
र्णंचरक्तपङ्कजधृत्करम् ॥ ९५ ॥ तेजोबिम्बंबहुजलमध्यस्थंस्रपरिच्छदम् ॥ पद्मासनगतंदेवंरक्तगन्धानुलेपनम् ॥ आदित्यंचिन्त
येद्देवंपूजाकालेविशेषतः ॥९६॥ मन्त्रश्चायम्॥ भास्करायविद्महेसहस्ररश्मयेधीमहितन्नःसूर्यःप्रचोदयात् ॥ ९७॥ जप्यएषपरःप्रोक्तःसप्तम्यांविजया
वहः ॥ करवीरैःकरञ्जैश्चरक्तकुङ्कुमसन्निभैः ॥ ९८ ॥ पश्चाच्चपारणाकार्यातथाष्टम्यांविशेषतः ॥ अष्टम्यामेवकर्तव्यंनवम्यांनैवपारणम् ॥ ९९ ॥
व्रतेफलंनचाप्नोतिनवम्यांपारणेकृते ॥ पारणंत्वपराह्णेतुकटुतिक्ताम्लवर्जितम् ॥ १०० ॥ तण्डुलंशोधयेद्यत्नात्तृणबीजादिकंत्यजेत् ॥ मुद्गमाष
तिलादीनिघृतंचपरिवर्जयेत् ॥ १ ॥ ब्राह्मणान्भोजयेद्भक्त्याशक्तःक्षीरादिहव्यकैः ॥ यथाशक्त्यन्नपानैश्चव्यञ्जनैश्चनिरामिषैः ॥ २ ॥ विप्रायदक्षि
णांदद्याद्विभज्यचानुरूपतः ॥ इमामनन्तफलदांयःकुर्यात्सप्तमींनरः ॥ ३ ॥ सर्वपापप्रशमनींधनपुत्रविवर्धनीम् ॥ मासिमासिद्विजश्रेष्ठव्रतंकृ
त्वार्कतुष्टये ॥ ४ ॥ यःकुर्यात्पारणंभक्त्यासूर्यलोकंसगच्छति ॥ कल्पकोटिंवसेत्स्वर्गेततोयातिपरांगतिम् ॥ ५ ॥ इदमेवपरंगुह्यंभाषितंशम्भुना
पुरा ॥ श्रवणात्सततंतस्यव्रतस्यपरिपालनात ॥ श्रावयेद्वापिलोकस्यफलंतुल्यंप्रकीर्तितम् ॥ १०६ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेअर्काङ्ग
सप्तमीव्रतंनामैकोनाशीनितमोऽध्यायः ॥ ७९ ॥ वैशम्पायनउवाच ॥ भगवंस्त्वत्प्रसादाच्चश्रुतंमेपावनंव्रतम् ॥ अपरंश्रोतुमिच्छामिब्रध्नस्यचप्रि

यंचयत् ॥ १ ॥ व्यासउवाच ॥ कैलासशिखरेरम्येसुखासीनंमहेश्वरम् ॥ प्रणम्यशिरसाभूमौस्कन्दोवचनमब्रवीत् ॥ २ ॥ अर्काङ्गाख्यविधिस्त्व
त्तोमयैवंविस्तराच्छ्रुतः ॥ वारादेर्यत्फलंनाथश्रोतुमिच्छामितत्त्वतः ॥ ३ ॥ ईश्वरउवाच ॥ रक्तपुष्पैरवेर्वारेत्वर्घ्यंदद्याद्व्रतीनरः ॥ नक्ताहारंहविष्यान्नं
कृत्वास्वर्गान्नहीयते ॥ ४ ॥ सप्तम्याश्चसदाचारंसर्वमेवार्कवासरे ॥ कुर्वतःप्रीतिमाप्नोतिसमणःपरमेश्वरः ॥ ५ ॥ सूस्यसदृशंयातितिथिवारस्य
पालनात् ॥ एकेनगाणपत्यस्ययावत्सूरोनभस्तले ॥ ६ ॥ सर्वकामप्रदंपुण्यमैश्वर्यंरोगनाशनम् ॥ स्वर्गदंमोक्षदंपुण्यंरवेर्वारेव्रतंहितम् ॥ ७ ॥
रविवारेणसङ्क्रान्त्यासप्तम्यातद्दिनेशिवे ॥ व्रतपूजादिकंजप्यंसर्वंचाक्षयतांव्रजेत् ॥ ८ ॥ आदित्यवासरेशुभ्रेग्रहाधिपप्रपूजनम् ॥ प्राणादहतवक्रे
णनिःसार्यमण्डलेन्यसेत् ॥ ९ ॥ द्विभुजंरक्तपद्मस्थंसुगलंरक्तवाससंसर्वरक्ताभरणंध्यात्वाहस्ताभ्यांपुष्पंविधृतंसङ्घ्रायैशान्यांक्षिपेत् ॥ १० ॥
आदित्यायविद्महेभास्करायधीमहि ॥ तन्नोभानुःप्रचोदयात ॥ ११ ॥ ततोगुरूपदिष्टेनविधिनाचविलेपनम् ॥ विलेपनान्तेसद्धूपंधूपान्तेचप्रदीपक
म् ॥ १२ ॥ प्रदीपान्तेचनैवेद्यंततोवारिनिवेदयेत् ॥ ततोजप्यंस्तुतिमुद्रांनमस्कारंतुकारयेत् ॥ १३ ॥ अञ्जलिःप्रथमामुद्राद्विती
याधेनुकास्मृता ॥ एवंयःपूजयेदर्करविसायुज्यमाव्रजेत् ॥ १४ ॥ ममब्रह्मवधाद्घोरंकपालंकरलग्नकम् ॥ रवेस्तस्यप्रसादात्तुमुक्तंवाराणसीत
टे ॥ १५ ॥ रवेःपरतरंदैवंत्रैलोक्येतुनविद्यते ॥ यस्यप्रसादतोघोरान्मुक्तोऽहंगुरुकिल्विषात् ॥ १६ ॥ स्कन्दउवाच ॥ श्रुत्वात्वत्तोगिरंनाथवि
स्मयोमेऽभवत्प्रभो ॥ त्वदन्योऽस्तिनकोदेवःकथंब्रह्मवधस्त्वयि ॥ १७ ॥ त्वंचज्ञानीश्वरोयोगीलोकेभोक्ताऽक्षरोऽव्ययः ॥ देवानांगुरुरेकस्त्वंव्याप्त
रूपीमहेश्वरः ॥ १८ ॥ सर्वज्ञोवरदोनित्यंसर्वेषांप्राणिनांप्रभुः ॥ दुष्कृतंतेकुतोनाथतथाक्रोधोविशेषतः ॥ १९ ॥ शिवउवाच ॥ लोकानां
चहितार्थायपृथग्भूतायुगेयुगे ॥ सर्वंकुर्मोवयंपुत्रब्रह्मविष्णुमहेश्वराः ॥ २० ॥ नास्माकंबन्धमोक्षौचनाकार्यंकार्यमेववा ॥ तथालोकस्यरक्षार्थंच
रामोविधिपूर्वकम् ॥ २१ ॥ सर्वंचपरमंचैवसर्वविघ्नविनाशनम् ॥ सर्वरोगप्रशमनंसर्वार्थप्रतिसाधकम् ॥ २२ ॥ एकोऽसौबहुधाभूत्वाकालभे
दादनिन्दितः ॥ मासेमासेतुतपतिएकोद्वादशतांव्रजेत् ॥ २३ ॥ मित्रोमार्गशिरेमासिपौषेविष्णुःसनातनः ॥ वरुणोमाघमासेतुसूर्योवैफाल्गुने
तथा ॥ २४ ॥ चैत्रेमासितपेद्भानुर्वैशाखेतापनःस्मृतः ॥ ज्येष्ठमासेतपेदिन्द्रआषाढेतपतेरविः ॥ २५ ॥ गभस्तिःश्रावणेमासियमोभाद्रपदेत
था ॥ हिरण्यरेताश्वयुजिकार्तिकेतुदिवाकरः ॥ २६ ॥ इत्येतेद्वादशादित्यामासिमासिप्रकीर्तिताः ॥ उरुरूपामहातेजायुगान्तानलवर्चसः ॥
॥ २७ ॥ यइदंपठतेनित्यंतस्यपापंनविद्यते ॥ नरोगोनचदारिद्र्यंनावमानोभवेत्क्वचित् ॥ २८ ॥ अक्षयंलभतेस्वर्गंसुखंराज्यंयशःक्रमात् ॥ महा

मन्त्रंप्रवक्ष्यामिसर्वप्रीतिकरंपरम् ॥ २९ ॥ ॐनमःसहस्रबाहवेआदित्यायनमोनमः ॥ नमस्तेपद्महस्तायवरुणायनमोनमः ॥ ३० ॥ नमस्तिमिर
नाशायश्रीसूर्यायनमोनमः ॥ नमःसहस्रजिह्वायभानवेचनमोनमः ॥ ३१ ॥ त्वंचब्रह्मात्वंचविष्णूरुद्रस्त्वंचनमोनमः ॥ त्वमग्निःसर्वभूतेषुवायु
स्त्वंचनमोनमः ॥ ३२ ॥ सर्वगःसर्वभूतेषुनहिकिंचित्त्वयाविना ॥ चराचरेजगत्यस्मिन्सर्वदेहेव्यवस्थितः ॥ ३३ ॥ इतिजस्वालभेत्कामं
स्वर्गभोग्यादिकंक्रमात् ॥ आदित्योभास्करःसूर्योअर्कोभानुर्दिवाकरः ॥ ३४ ॥ सुवर्णरेतामित्रश्चपूषात्वष्टाचतेदश ॥ स्वयम्भूस्तिमिराशश्चद्वा
दशःपरिकीर्तितः ॥ ३५ ॥ नामान्येतानिसूर्यस्यशुचिर्यस्तुपठेन्नरः ॥ सर्वपापाच्चरोगाच्चमुक्तोयातिपरांगतिम् ॥ ३६ ॥ पुनरन्यत्प्र
वक्ष्यामिभास्करस्यमहात्मनः ॥ रक्ताख्यायेरक्तनिभास्सिन्दूरारुणविग्रहाः ॥ ३७ ॥ यानिनामानिमुख्यानितच्छृणुष्वषडानन ॥ तपनस्तापनश्चैव
कर्ताहर्ताग्रहेश्वरः ॥ ३८ ॥ लोकसाक्षीत्रिलोकेषुव्योमाधिपोदिवाकरः ॥ अग्निगर्भोमहाविप्रःस्वर्गःसप्ताश्ववाहनः ॥ ३९ ॥ पद्महस्तस्तमोभेदी
ऋग्वेदोयजुःसामगः ॥ कालप्रियंपुण्डरीकंमूलस्थानंचभावितम् ॥ ४० ॥ यःस्मरेच्चसदाभक्त्यातस्यरोगभयंकुतः ॥ शृणुकार्तिकयत्नेनसर्वपाप
हरंशुभम् ॥ ४१ ॥ नसन्देहोमनाक्कार्यआदित्यस्यमहामते ॥ ॐइन्द्रायनमः ॥ ॐविष्णवेनमः ॥ ४२ ॥ एषजप्यश्चहोमश्चसन्ध्योपासनमेव
च ॥ सर्वशान्तिकरश्चैवसर्वविघ्नविनाशनः ॥ ४३ ॥ नाशयेत्सर्वरोगांश्चलूताविस्फोटकादिकान् ॥ कामलादिकरोगांश्चयेरोगाश्चैवदारुणाः ॥४४॥
ऐकाहिकंत्र्याहिकंचज्वरंचातुर्थिकंतथा ॥ कुष्ठरोगंक्षयरोगंकुक्षिरोगंज्वरंतथा ॥४५॥ अश्मरीमूत्रकृच्छ्रांश्चनानारोगामयांस्तथा ॥ येवातप्रभवारो
गायरोगागर्भसम्भवाः ॥ ४६ ॥ मर्दयन्तोमहारोगामर्दितावेदनात्मकाः ॥ विलयंयान्तितेसर्वआदित्योच्चारणेनतु ॥ ४७ ॥ रक्षमांदेवदेवेशग्र
हरोगभयेषुच ॥ प्रशमंयान्तितेसर्वेकीर्तितेतुदिवाकरे ॥ ४८ ॥ मूलमन्त्रंप्रवक्ष्यामिसर्वकामार्थसाधकम् ॥ भुक्तिमुक्तिप्रदंनित्यंभास्करस्यम
हात्मनः ॥ ४९ ॥ मन्त्रश्चायम् ॥ ॐह्रांह्रींसःसूर्यायनमः ॥ अनेनमन्त्रेणसदासर्वसिद्धिर्भवेद्ध्रुवम् ॥ ५० ॥ व्याधयोवैनबाधन्तेनचा
निष्टभयंभवेत् ॥ सूर्यावर्तोदकंयस्तुगृहीत्वातुक्रमेणतु ॥ ५१ ॥ तस्यप्राशनमात्रेणनरोरोगात्प्रमुच्यते ॥ नदातव्यंनख्यातव्यंजप्तव्यंचप्रय
त्नतः ॥ ५२ ॥ अभक्तेष्वनपत्येषुपाषण्डलौकिकेषुच ॥ कटुतैलसमायुक्तंनस्येपानेचदापयेत् ॥ ५३ ॥ सूर्यावर्तजलंपुत्रसर्वरोगाद्विमुच्य
ते ॥ मूलमन्त्रस्तुजप्तव्यःसन्ध्यायांहोमकर्मसु ॥ ५४ ॥ जप्यमानेतुनश्यन्तिरोगाःक्रूरग्रहास्तथा ॥ किमन्यैर्बहुभिःशास्त्रैर्मन्त्रैर्वाबहुविस्तरैः
॥ ५५ ॥ सर्वशान्तिरियंवत्ससर्वार्थप्रतिसाधिका ॥ नास्तिकायनदातव्यादेवब्राह्मणनिन्दके ॥ ५६ ॥ गुरुभक्तायदातव्यानान्येभ्योऽपिकदा

चन ॥ प्रातरुत्थाययोनित्यंकीर्तयिष्यतिमानवः ॥ ५७ ॥ गोघ्नः कृतघ्नकश्चैवमुच्यतेसर्वपातकैः ॥ शरीरारोग्यकृच्चैवधनवृद्धियशस्करः ॥ ५८ ॥
जायतेनात्रसन्देहोयस्यतुष्येद्दिवाकरः ॥ एककालंद्विकालंवात्रिकालंनित्यमेवच ॥ ५९ ॥ यःपठेद्रविसान्निध्येसोऽभीष्टंफलमाप्नुयात् ॥ पुत्रा
र्थीलभतेपुत्रंकन्यार्थीकन्यकांलभेत् ॥ ६० ॥ विद्यार्थीलभतेविद्यांधनार्थीलभतेधनम् ॥ शृणुयात्संयुतोभक्त्याशुद्धाचारसमन्वितः ॥ ६१ ॥
सर्वपापविनिर्मुक्तस्सूर्यलोकंव्रजत्यपि ॥ भास्करस्यव्रतेयज्ञव्रताचारमखेषुच ॥ ६२ ॥ पुण्यस्थानेषुतीर्थेषुपठेत्कोटिगुणंभवेत् ॥ ग्रहेभोज्येषुपूजा
यांब्रह्मभोज्येद्विजाग्रतः ॥ ६३ ॥ यइदंपठतेविप्रस्तस्यानन्तफलंभवेत् ॥ तपस्विनांचविप्राणांदेवानामग्रतःसुधीः ॥ ६४ ॥ यःपठेत्पाठयेद्वापिसुर
लोकेमहीयते ॥ ६५ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेसूर्यशान्तिर्नामाशीतितमोऽध्यायः॥ ८० ॥ व्यासउवाच ॥ मध्यदेशेस्वराट्सम्राड्भद्रेश्वर
इतिश्रुतः ॥ तपोभिर्बहुभिःपूतोव्रतैर्नानाविधैरपि॥ १ ॥देवांस्तुपूजयेन्नित्यंसुभावेनसदाखलु ॥ तस्यसव्येऽभवत्कुष्ठंकरेश्वेतमजायत ॥ २ ॥ ततोभि
षक्प्रयोगाच्चलक्षणंदृश्यतेपुरा ॥ आहूयद्विजमुख्यांश्चमन्त्रिणःसोऽब्रवीद्वचः ॥ ३ ॥ राजोवाच॥ किल्बिषंमेकरेविप्रादुःसहंलोकगर्हितम् ॥ तस्मात्पु
ण्यंमहाक्षेत्रंयत्रत्यक्ष्यामिविग्रहम् ॥ ४ ॥ आज्ञापयतधर्मज्ञाःपरलोकहितायवै ॥ वंशहीनस्यमेवीराःप्रेत्यामुत्रहितंचयत् ॥ ५ ॥ तद्ब्रूतसुप्रसन्नाम
उद्दिष्टंयत्करोम्यहम् ॥ ६ ॥ द्विजाऊचुः ॥ परित्यक्तेत्वयाराष्ट्रेधर्मशीलेनधीमता ॥ नष्टंजगदिदंराजंस्तस्मान्नोवक्तुमर्हसि ॥ ७ ॥ अयमस्यप्रतीका
रोह्यस्माभिरवगम्यते ॥ सूरंमन्त्रैर्महादेवंयत्नादाराधयप्रभो ॥ ८ ॥ राजोवाच ॥ केनोपायेनविप्रेन्द्रास्तोषयिष्यामिभास्करम् ॥ अमेध्येनाथकु
ष्ठेनलोकानांगर्हितेनच ॥ ९ ॥ अदृश्यःसर्वभूतानांगर्हितोऽस्मिद्विजातयः ॥ किंकरिष्यामिराज्यंचकिंस्यादाराधनेनतु ॥ १० ॥ द्विजाऊचुः ॥
अत्रस्थित्वास्वराज्येतुसमुपास्यविरोचनम् ॥ प्रमुच्यकिल्बिषाद्घोरात्स्वर्गमोक्षंचलप्स्यसे ॥ ११ ॥ व्यासउवाच ॥ एतच्छ्रुत्वातुराजेन्द्रःप्रणिपत्य
द्विजोत्तमान् ॥ अकार्षीत्तस्यसूर्यस्यपरमाराधनंचयत् ॥ १२ ॥ नित्यपूजांतथामन्त्रैरुपहारैर्विलेपनैः ॥ फलैर्नानाविधैर्घैरक्षतातपतण्डुलैः
॥ १३ ॥ जपापुष्पार्कपर्णैश्चकरवीरकरञ्जकैः ॥ रक्तकुङ्कुमसिन्दूरैस्तथावासन्तिकादिभिः ॥ १४ ॥ सुगन्धकदलीपत्रैस्तत्फलैःसुमनोहरैः ॥ अर्घ्य
मौदुम्बरेकृत्वासदासूर्यायपार्थिवः ॥ १५ ॥ आदित्यसंमुखोदत्तेसदामन्त्रिपुरोहितैः ॥ महिषीभिस्तथाचार्घोभोगिनीभिःसमन्ततः ॥ १६ ॥ सर्वैर
न्तःपुरस्थैश्चसपत्नीकैश्चरक्षिभिः॥ चेटवर्गैस्तथाऽन्यैश्चदीयतेऽर्घोदिनेदिने ॥१७॥अर्कशान्तिभिरत्युग्रैःस्तोत्रमन्त्रादिभिःपरैः॥मूलमन्त्रान्यमन्त्रैश्चय
जन्तिस्मदिवाकरम् ॥ १८ ॥ तथार्काङ्गव्रतंचान्यत्कृतंतैःसुसमाहितैः ॥ क्रमात्समांसमासाद्यरोगस्यान्तंगतोनृपः ॥ १९ ॥ बाधितेचामयेघोरेसरा

जानिखिलंजगत् ॥ नियम्यकारयामासकल्येचयाजनव्रतम् ॥ २० ॥ एवमेवजपापुष्पंसुगन्धंकदलीफलम् ॥ बाणैर्जायाभिरालभ्यमर्कपर्णान्य
पुष्पकम् ॥ २१ ॥ एवमेवमहापुण्यंकृत्वासर्वजनप्रियम् ॥ हविष्यान्नोनिराहारोजनोयजतिभास्करम् ॥ २२ ॥ एवमेवत्रिभिर्वर्गैरर्चितस्तैर्विभा
करः ॥ सन्तुष्टोभूपनागम्यकृपयाचब्रवीद्वचः ॥ २३ ॥ सूर्यउवाच ॥ वरंवरयचाभीष्टंयस्तेमनसिवर्तते ॥ सर्वेषांवोहितार्थायसानुगःपुर
वासिनाम् ॥ २४ ॥ राजोवाच ॥ यदीच्छसिवरंदातुंसर्वलोचनमत्प्रियम् ॥ सर्वेषांनःपरंस्वगत्वत्सकाशेभवत्विति ॥ २५ ॥ सूर्यउवाच ॥ अ
मात्यास्तेद्विजाविप्राःसदारास्सपरिच्छदाः ॥ नवीनयौवनाःशुद्धायावदाभूतसम्प्लवम् ॥ २६ ॥ तिष्ठन्तुमत्पुरेरम्येसर्वभोगैर्निरामयाः ॥ सुरद्रुमैः
सुसम्पूर्णैःप्रासादैर्द्रुमकल्पकैः ॥ २७ ॥ प्रमदाभिर्महाभागनृत्यगीतादिभिःपरैः ॥ पञ्चकल्पान्तरेराजामन्वादौत्वंभविष्यसि ॥ २८ ॥ अमीतेमनु
जाभूपपुरस्थाश्चपुरोधसः ॥ तथाजनपदस्थाश्चविद्वांसोधनिनोनराः॥२९॥तत्रमत्तोवरंलब्ध्वासुखंस्वर्गमवाप्स्यथ ॥३०॥व्यासउवाच॥एवमुक्त्वाज
गच्चक्षुस्तत्रैवान्तरधीयत ॥ ततोभद्रेश्वरोराजासपुरोदिविमोदते ॥ ३१ ॥ तत्रकीटादयोयेचतेऽपीताःससुतादयः ॥ स्वर्गेदेवद्रुमेभोग्यंकुर्वन्तिमह
दद्भुतम् ॥ ३२ ॥ एवमेवनृपाविप्रामुनयश्शंसितव्रताः ॥ येचक्षत्रादयोवर्णास्सूरस्वर्गंययुर्द्रुतम् ॥ ३३ ॥ कैश्चिदभ्यर्थितंवित्तंपुत्रदारास्तथापरैः ॥ सु
खंस्वर्गंतथारोग्यंभास्करस्यप्रसादतः ॥ ३४ ॥ पुण्यकूटमिदंभद्रंयःपठेन्मानवःशुचिः ॥ सर्वपापक्षयस्तस्यरुद्रवत्पूजितोभुवि ॥ ३५ ॥ सर्वसाक्षीभ
वेत्स्वर्गेवरदोभास्करप्रियः ॥ शृणोतिसंयतोमर्त्यःसोऽभीष्टंफलमाप्नुयात् ॥ ३६ ॥ पारगःसर्वपापानांभास्करस्यैवसंसदि ॥ वावदूकोभवेन्नित्यंश्र
वणात्पुण्यवान्धनी ॥ ३७ ॥ इदंगुह्यातिगुह्यंचभास्करेणप्रचारितम् ॥ इदंयमायकथितंक्षितौव्यासेनकीर्तितम् ॥ ३८ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टि
खण्डेभद्रेश्वराख्याननामैकाशीतितमोऽध्यायः ॥ ८१ ॥ वैशम्पायनउवाच ॥ श्रुतोग्रहेश्वरस्यैषप्रभावस्त्वत्प्रसादतः ॥ रव्यादीनांग्रहाणांचसाधनं
नोवदद्विज ॥ १॥ केतेरव्यादयस्तेषांकथंतोषःकथंप्रियम्॥कालेदेशेतुसम्प्राप्तेदर्शनंतच्छिवाशिवम् ॥२॥ व्यासउवाच ॥ ग्रहादयोयेलोकेतुभुञ्जन्तिपु
ण्यपातकम्॥शिवाशिवंचकुर्वन्तिविश्वकर्मक्षयायवै ॥ ३ ॥ सूरःकालोऽन्तकोज्ञेयोजनेषुचग्रहेषुच ॥ तिग्मसौम्याचयोगात्सनिग्रहानुग्रहेप्रभुः ॥४॥
ग्रहभावाचतस्यैवसन्तोषंनिगदाम्यहम्॥उदुम्बरपलाशाभ्यांपल्लवाभ्यांजुहोतियः॥५ ॥आकृष्णेनेतिमन्त्रेणमूलकेनाथशान्तये॥जुहुयादाज्ययुक्ताभ्या
मभीष्टफलहेतवे ॥६॥ शान्तयेसर्वरोगाणांवधबन्धविमोचने ॥ एकैकेनतुमन्त्रेणहोतव्यंचशतंशतम्॥७॥शितंचच्छागलंदद्यात्सूरायादित्यवासरे॥भो
जयेद्ब्राह्मणाञ्छक्त्याहव्यकव्यैर्मनोहरैः ॥ ८ ॥ सप्तम्यांचसितेपक्षेपञ्चदश्यांतथैवच ॥ रोगाद्विमुच्यतेरोगीनरोगात्कृच्छ्रमेष्यति॥९॥परमंचामरंसत्त्व

माब्रह्मस्तम्बमात्रके ॥ ब्रह्माण्डेचाणुमात्रेचसूरःसम्भावयिष्यते ॥ १० ॥ संहारान्तंक्रमात्सर्वमुत्पत्तिस्थितिकारणात् ॥ प्राणंसर्गेजनानांसपाताविश्व
चरस्तनौ ॥ ११ ॥ मृत्युकालेतनोर्मध्यात्प्राणेनसहगच्छति ॥ शीर्षान्तस्थःसदाचन्द्रो द्विरष्टकलयायुतः॥१२॥अहर्निशंसुधावृष्टिंदेहेवर्षत्यधोमुखः॥
जन्तवस्तेनजीवन्तिमहासत्त्वानुमात्रकाः ॥१३ ॥ उर्व्यांसस्यानिपुष्णातितथास्थावरजङ्गमान् ॥ एताभ्यांपुष्पवद्भ्यांचधारितंजनितंजगत् ॥ १४ ॥
तयोराराधनात्पुष्टिःसदापुण्यापरार्द्धिका॥साधयेत्सर्वकार्याणिसाधकःसर्वदाशुचिः ॥१५॥ नपूजयतियोमोहात्सुधांशुंमानवाधमः॥आयुस्तस्यक्षयं
यातिनरकंचाधिगच्छति॥१६॥निष्कलङ्ककलाधारगङ्गाधरशिरोमणे॥द्वितीयायांजगन्नाथतुभ्यंचन्द्रनमोऽस्तुते ॥१७॥तिथिमन्यामनुप्राप्यनमस्कारं
विधोर्यपि ॥ प्रकरोतिनरोयस्तुसोऽभीष्टंफलमाप्नुयात् ॥ १८॥ अत्रिनेत्रोद्भवश्रीमन्क्षीरोदमथनोद्भव ॥ महेशमुकुटावासतुभ्यंचन्द्रनमोऽस्तुते॥१९॥
दिव्यरूपनमस्तुभ्यंसुधाकरजगत्पते ॥ शुक्लपक्षेतथाकृष्णेत्रियामायांविदुर्बुधाः ॥ २० ॥ ॐह्रांह्रींसोमायनमःइतिजप्यमन्त्रः ॥ प्रभातेजपनीयः॥
एवंयःपूजयेत्सोमंश्रावयेच्चशृणोतिवा ॥ सपीयूषसमोलोकेभवेज्जन्मनिजन्मनि ॥ २१ ॥ एवंसहस्रनाम्नायःस्तौतिपूजयतेभुवि ॥ सोऽक्षयंलभतेस्व
र्गंपुनरावृत्तिदुर्लभम् ॥ २२ ॥ इतिसोमपूजा ॥ पित्तलेभाजनेकांस्येदधिपूर्णेघृतेशिवे ॥ न्यूनोऽधिकस्तुविभवाच्छत्वाकर्मविमत्सरः ॥ २३ ॥
स्वर्णेवाराजतेवारेसौम्येकृष्णभवेत्तुधम् ॥ संस्थाप्यसर्वसंस्थानेदद्याद्बहुसुतायच ॥ २४ ॥ परंभवतिसौभाग्यंपीयूषादधिकंभृशम् ॥ स्त्रीणांचपुरुषा
णांचनदौर्भाग्यंकदाचन ॥ २५ ॥ रूपसौभाग्यकामोऽहंदधिपूर्णंचभाजनम् ॥ ददामिकांस्यपात्रस्थंदेहिसौभाग्यरूपकम् ॥ २६ ॥ द्विजायवा
क्यपूर्वेणदद्याद्विमत्सरोनरः ॥ शक्तितोदक्षिणादेयातथावस्त्रादिकंनवम् ॥ २७ ॥ भोज्यान्नंसर्वसंपूर्णंताम्बूलंसुमनोहरम् ॥ पुष्पमालादिकंदद्याद्रूप
सौभाग्यहेतवे ॥ २८ ॥ एवंयःकुरुतेदानंसोमोद्दिष्टंद्विजातये ॥ स्वर्लोकेनरलोकेवारूपसौभाग्यभुग्भवेत् ॥ २९ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टि
खण्डेसोमार्चनंनामद्व्यशीतितमोऽध्यायः ॥८२॥ वैशम्पायनउवाच॥उद्भवंलोहिताङ्गस्यसन्तोषंतुजनेषुच ॥ प्रभावंवैभवंतेजःश्रोतुमिच्छामितत्त्वतः
॥ १ ॥ व्यासउवाच ॥ हरांशसम्भवोदेवःकुजातःपृथिवीसुतः ॥ सत्त्वस्थस्सत्त्वसंपूर्णश्शूरःशक्तिधरोभुवि ॥ २ ॥ तीक्ष्णःक्रूरग्रहोदेवोलोहि
ताङ्गःप्रतापवान् ॥ कुमारोरूपसंपन्नोविद्युत्पातमयःप्रभुः ॥ ३ ॥ अनेनभर्जितादैत्याःक्रव्यादायेसुरद्विषः ॥ दशायोगाच्चमनुजाउद्भिज्जाःपशुप
क्षिणः ॥ ४ ॥ वैशम्पायनउवाच ॥ शम्भोरेषकथंजातःकथंजातोमहीसुतः ॥ ग्रहोदेवःकथंक्रूरएतदिच्छामिवेदितुम् ॥ ५ ॥ कथमस्यभवेत्तुष्टिः
सर्वलोकेषुसर्वदा ॥ गुरोमय्याप्तभावेतुवदनिस्संशयंमुखात् ॥ ६ ॥ व्यासउवाच ॥ हिरण्याक्षकुलेधीमानसुराणांचपार्थिवः ॥ अन्धकेतिसमाख्या

तोदैत्यःसर्वसुरान्तकृत् ॥ ७ ॥ जातोविष्णुवरादेवजातोविष्णुपराक्रमः ॥ तेनैवनिर्जितादेवास्सेन्द्राःक्रतुभुजःक्रमात् ॥ ८ ॥ ततोदेवाविधिंग त्वावचनंचेदमब्रुवन् ॥ अन्धकेनैवचास्माकंहृतंराज्यंसुखंमखः ॥ ९ ॥ तस्मात्तस्यवधोपायउच्यतांतद्विधीयताम् ॥ अथधाताब्रवीद्वाक्यंदेवानस्य चनैधनम् ॥ १० ॥ नास्तिविष्णुवरादेवपीयूषस्यचभक्षणात् ॥ किन्तुतस्यासुरत्वस्ययथापरिभवोध्रुवम् ॥ ११ ॥ कुर्वेलोकहितार्थायश्रद्धांकाम समन्विताम् ॥ विचिकित्सातुतत्रैवसर्वास्त्रीरतिगच्छति ॥ १२ ॥ त्यक्त्वैकांपार्वतींदुर्गांनतस्यमानसंस्थिरम् ॥ ततःक्रुद्धोजगत्स्वामीतंचवैरूप्य तांनयेत् ॥ १३ ॥ ततोऽसुरत्वंसन्त्यज्यगणस्तस्यभविष्यति ॥ एवमुक्त्वाप्रजाध्यक्षःश्रद्धांकामसमन्विताम् ॥ १४ ॥ विचिकित्सांस्वमायांच प्रेषयामासतंप्रति ॥ ततोविचेष्टितःकामाद्योषान्वेषणतत्परः ॥ १५ ॥ स्वदारान्परयोषांचनापश्यद्विचिकित्सया ॥ ततोमायाप्रयुक्तोऽसौत्रैलोक्यं विचचारह ॥ १६ ॥ दृष्टंचहिमवत्पृष्ठेस्त्रीरत्नंचातिशोभनम् ॥ दृष्ट्वाचपार्वतींदैत्यःकामस्यवशगोऽभवत् ॥ १७ ॥ ज्ञानलोपात्ततोदुर्गांग्रहीतुंतांसचे च्छति ॥ उमाचकोटवीरूपंकृत्वादेहस्यचात्मनः ॥ १८ ॥ ईश्वरस्यान्तिकस्थाचग्रहीतुंतांससारसः ॥ ततःकामविचेताश्चउन्मत्तीकृतचेतनः ॥ १९ ॥ नजहातिशिवांधात्रींपार्वतींदैत्यपुङ्गवः ॥ ततोध्यानात्समागम्यमिलितःपार्वतींधवः ॥ २० ॥ दृष्ट्वातंचसदैत्येन्द्रःप्रगतस्तुस्वमालयम् ॥ सज्जीकृत्यस्वयोधांश्चशम्भुंजेतुंसमुत्सुकः ॥ २१ ॥ गौरीमेवसमानेतुंकाममोहादचेतनः ॥ एतच्छ्रुत्वातुत्रिदशागत्वातंनन्दिनेरिताः ॥ २२ ॥ अकुर्वंश्चमहद्युद्धंघोरंलोकभयङ्करम् ॥ दैत्यास्त्रणेमृतांस्तत्रदैत्याचार्योह्यजीवयत् ॥ २३ ॥ एतद्वृत्तंतुकैलासेसर्वेचैवन्यवेदयन् ॥ क्रोधाच्छम्भु स्तदावाक्यंनन्दिनंनिजगादह ॥ २४ ॥ शम्भुरुवाच ॥ गच्छदैत्यालयंवीरद्रुतमेवममाज्ञया ॥ पश्यतांसर्वदैत्यानांदैत्येन्द्रस्यचसंसदि ॥ २५ ॥ गृहीत्वाचिकुरेऽत्यर्थंभार्गवंतंदुरात्मकम् ॥ लब्ध्वाचास्मत्सकाशंवैविह्वलंचानयत्क्षणात् ॥ २६ ॥ व्यासउवाच ॥ ततोनन्दीश्वरःश्रीमान्पार्वतीप तिनेरितः ॥ काव्यंतंकुन्तलेधृत्वादैत्यानांपुरतोबलात् ॥ २७ ॥ आनयत्तंचतंदैत्याजघ्नुःप्रहरणैःशरैः ॥ नशेकुस्तेरुजांकर्तुंनन्दिनोबलशालिनः ॥ २८ ॥ देवानामग्रतोनन्दीगृहीत्वातंचकुन्तले ॥ हरस्यपुरतोहृष्टःसहतेनसमाययौ ॥ २९ ॥ गृहीत्वाभार्गवंशम्भुरसुराणांगुरुंरुषा ॥ अगिलद्रौ द्रमूर्तोसौऽकालान्तकसमःप्रभुः ॥ ३० ॥ ततोदैत्यपतिःक्रुद्धःसर्वसैन्यवृतोबली ॥ दुद्रावशङ्करंतत्रघोरैःप्रहरणादिभिः ॥ ३१ ॥ त्रिदशाश्चतथाक्रुद्धा स्ततोविद्याधरादयः ॥ प्रययुःसमरंतत्रदैत्यानांचभृशंरुषा ॥ ३२ ॥ एतस्मिन्नन्तरेघोरंयुद्धंभीष्मंसमुत्थितम् ॥ देवदानवयोरेवंसर्वलोकभयङ्क रम् ॥ ३३ ॥ ततःप्रत्ययितास्त्रैश्चदेवानिघ्नन्तिदानवान् ॥ दनुजानिर्जरांस्तत्रविनिघ्नन्तिमहाहवे ॥ ३४ ॥ शातकुम्भमयाङ्गैस्तेशरैर्वज्रममानकैः ॥

बिभिदूरत्नपुङ्खैश्चपरस्परजयैषिणः ॥ ३५ ॥ दीपयन्तिभृशंकान्तैस्तद्गात्राणिनभांसिच ॥ वीर्यवन्तोमहादैत्यानमोघैरस्त्रसञ्चयैः ॥ ३६ ॥
हत्वाचपातयामासुःकाश्यपाःसुरसत्तमाः ॥ जगद्व्याप्तंमहासैन्यंबलायुधसुसंवृतम् ॥ ३७ ॥ नीतंक्षयंसुरैःसर्वैःशस्त्रैःप्रत्ययितैःक्षणात् ॥ स्वयंच
युध्यमानेनमहादेवेनयत्नतः ॥ ३८ ॥ शूलोद्धृतोऽपिसुचिरमविनष्टोऽथनम्रधीः ॥ अन्धकोगणतांनीत्वाकृतोभृङ्गीरिटिर्द्विज ॥ ३९ ॥ ततोदेवा
न्समाभाष्यशुक्रमुद्गीर्णवाञ्छिवः ॥ भूमौनिपतितोगर्भस्ततोभौमइतिस्मृतः ॥ ४० ॥ शुक्रश्शिवंसमाभाष्यगतोदैत्यान्मुदान्वितः ॥ एवंभौमस्स
मुत्पन्नोहरांशोभूसमुद्भवः ॥ ४१ ॥ तस्यपूजाचतुर्थ्यांतुभौमवारेचसुव्रतैः ॥ दशाद्यरिष्टेचतथागोचरेऽनिष्टराशिगे ॥ ४२ ॥ त्रिकोणेमण्डलेचैवर
क्तपुष्पानुलेपनैः ॥ एवंवैपूजितोभौमःप्रयच्छतिमतिंधनम् ॥ ४३ ॥ पुत्रान्सुखंयशश्चैवकिंभूयःश्रोतुमिच्छसि ॥ एतद्वःकथितंशिष्याधर्माख्यानं
शुभावहम् ॥ ४४ ॥ यच्छ्रुत्वानपुनर्भूयोजायतेम्रियतेऽपिवा ॥ द्विजातीनांपुण्यदंचसंसेव्यंचशुभेप्सुभिः ॥ ४५ ॥ यथासुखंचगच्छध्वंकृतकृत्या
ममाज्ञया ॥ ४६ ॥ ब्रह्मोवाच ॥ एवंविश्राव्यभगवान्व्यासःसत्यवतीसुतः ॥ निर्णीयधर्मंविविधंशम्याप्रासमगात्सुत ॥ ४७ ॥ त्वमपिश्रद्धयावत्स
ज्ञात्वातत्त्वंयथासुखम् ॥ विहरस्वयथाकालंगायमानोहरिंमुदा॥लोकान्धर्मंचोपदिशन्प्रीणयन्जगतांगुरुम् ॥४८ ॥ पुलस्त्यउवाच ॥ इत्युक्तःप्रययौ
भूपनारदोगन्धमादनम्॥नारायणंमुनिवरंद्रष्टुंबदरिकाश्रमे ॥४९॥इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेभौमोत्पत्तिपूजनंनामत्र्यशीतितमोऽध्यायः॥८३॥
भीष्मउवाच ॥ चण्डिकानुग्रहाद्दैत्यागताश्शिशष्टारसातलम् ॥ तद्वदस्वमहाप्राज्ञचण्डिकापूजनेफलम् ॥ १ ॥ यथासम्पूज्यतेदेवीतुष्टायच्छतियत्फ
लम् ॥ श्रोतुंकौतूहलंमेऽद्यतद्वदस्वसविस्तरम् ॥ २ ॥ पुलस्त्यउवाच ॥ शृणुष्वनृपशार्दूलचण्डिकापूजनेफलम्॥यत्कृत्वास्वर्गभुङ्मर्त्यःपश्चान्मोक्षं
लभेद्ध्रुवम् ॥३॥ यत्पूजनेफलंदेव्यानतत्क्रतुशतैरपि ॥ लभ्यतेनितरांतातततीर्थदानव्रतादिभिः ॥ ४ ॥ चण्डिकांपूजयेद्भक्त्यायोनरःप्रत्यहंनृप ॥
नक्षमस्तत्फलंवक्तुंसाक्षाद्देवःपितामहः ॥ ५ ॥ मातुर्देव्याःप्रसादेनसुलभंसर्वमेवहि ॥ अश्वमेधसहस्राणिवाजपेयशतानिच ॥ ६ ॥ चण्डिकाभ्य
र्चनस्यैतेलक्षांशेनापिनोसमाः ॥ सदातासमुनिर्यष्टासतपस्वीसतीर्थगः ॥७॥ यःसदापूजयेद्दुर्गांनानापुष्पानुलेपनैः॥धूपैर्दीपैस्तथाभोज्यैःप्रणमेद्वापि
भाविनीम् ॥ ८ ॥ सयोगीसमुनिःश्रीमांस्तस्यमुक्तिःकरेस्थिता ॥ वर्षमेकंतुयोदुर्गांपूजयेद्विजितेन्द्रियः ॥ ९ ॥ एकाहारोमहाबाहोसोऽग्निष्टोम
फलंलभेत्॥पौर्णमास्यांनवम्यांचक्षीरेणवनराधिप ॥ १० ॥ स्नापयित्वाशुभांदुर्गांवाजपेयफलंलभेत् ॥ शुक्लपक्षेनवम्यांतुअष्टम्यांपरमेश्वरीम्॥११॥
त्रिकालंपूजयेद्यस्तुचतुर्दश्यांनराधिप ॥ सगच्छतिपरंस्थानंयत्रदेवीव्यवस्थिता॥१२॥ क्रीडयित्वाचिरंकालंराजाभवतिभूतले ॥ नवम्यांसोपवासस्तु

यःपूजयतिचण्डिकाम् ॥१३॥दशानामश्वमेधानांफलंप्राप्नोतिमानवः॥जितेन्द्रियोब्रह्मचारीशुचिर्भूत्वातुयोनरः ॥१४॥चण्डिकांपूजयेद्भक्त्यासयाति
परमांगतिम्॥स्नानोपवासनियमैःपूजाजागरमार्जनैः॥१५॥पर्वकालेषुसर्वेषुचण्डिकांयःप्रपूजयेत् ॥विमानंवरमारुह्यध्वजमालाकुलंनृप॥१६॥ब्रह्मलो
केनरोगत्वामोदतेशाश्वतीःसमाः ॥ तस्मात्सर्वप्रयत्नेनयथाविभवविस्तरैः ॥ १७ ॥ पूजयेत्सततंदुर्गांमहापुण्यफलेच्छया ॥ अयनेविषुवेचैव
षडशीतिमुखेनृप ॥ १८ ॥ मासैश्चतुर्भिर्यत्पुण्यंविधिनापूज्यचण्डिकाम् ॥ तत्फलंलभतेवीरनवम्यांकार्तिकस्यतु ॥ १९ ॥ मासिचाश्वयुजेवीरशुक्ले
पक्षेत्रिशूलिनीम् ॥ नवम्यांपूजयेद्यस्तुतस्यपुण्यफलंशृणु ॥ २० ॥ अश्वमेधसहस्रस्यराजसूयशतस्यच ॥ यत्फलंतल्लभेद्वीरदिविदेवगणैर्वृ
तः ॥ २१ ॥ मासिमासिनरोभक्त्यापूजयेद्यस्तुचण्डिकाम् ॥ लभेत्षाण्मासिकंपुण्यंनवम्यांतुनसंशयः ॥ २२ ॥ मेरुपर्वततुल्योऽपिराशिःपाम
स्यकर्मणः ॥ चण्डिकांवैद्यमासाद्यक्षीयतेदुष्टरोगवत्॥ ॥ २३ ॥ दुर्गार्चनेरतोनित्यंमहापातकसम्भवैः॥दोषैर्नलिप्यतेवीरपद्मपत्रमिवाम्भसा ॥२४॥
छित्त्वाभित्त्वाचभूतानिहत्वासर्वमिदंजगत् ॥ प्रणम्यशिरसादेवींनपापैर्भुविलिप्यते ॥ २५ ॥ सर्वावस्थांगतोवाप्रियुक्तोवासर्वपातकैः ॥ दुर्गांदृष्ट्वा
नरःसोऽपिप्रयातिपरमंपदम् ॥ २६ ॥ स्वपंस्तिष्ठन्व्रजन्मार्गेप्रलपन्भोजनेरतः ॥ स्मरतेसततंदुर्गांसचमुच्येतबन्धनात् ॥ २७ ॥ तद्देशेनचदु
र्भिक्षंनचदुःखंप्रवर्तते ॥ नकश्चिन्म्रियतेराजन्पूज्यतेयत्रचण्डिका ॥.२८॥ योदुर्गांपूजयेन्नित्यंश्वपचोवाजितेन्द्रियः ॥ भावेनचसमायुक्तःसोऽपिया
तिपरांगतिम् ॥ २९ ॥ पूजयित्वातुतांभक्त्याश्रद्धयासर्वमङ्गलाम् ॥ प्रयातिपरमंस्थानंयत्रसासर्वमङ्गला ॥ ३० ॥ घृताभिषेकंयःकुर्यादहोरात्रंनरा
धिप॥सूक्ष्मधारेणताम्रेणभगवत्याविचक्षणः ॥ ३१ ॥ मासिचाश्वयुजेवीरसर्वपापैःप्रमुच्यते ॥ कार्तिकेपौर्णमास्यांयःसोमवारेऽर्चयेदुमाम् ॥३२॥
सोऽग्निष्टोमफलंविन्देत्सूर्यलोकंचगच्छति ॥ आषाढेपौर्णमास्यांतुयोऽर्चयेदम्बिकांनरः ॥३३॥ सोपवासोमहाभागसयातिपरमांगतिम्॥पौर्णमास्यां
तुयोमाघेपूजयेद्विधिवच्छिवाम् ॥ ३४ ॥ सोऽश्वमेधमवाप्नोतिविष्णुलोकेमहीयते ॥ अयनेदक्षिणेयस्तुपूजयेदम्बिकांनृप ॥ ३५ ॥ सकृद्गन्धो
दकैःपुण्यैर्गन्धर्वसदनेवसेत् ॥ पञ्चगव्यंततःक्षिप्त्वापञ्चचूडाचलेवसेत् ॥ ३६ ॥ आपःक्षीरंकुशाग्राणितण्डुलाहविरक्षताः ॥ सहासिद्धार्थकादूर्वांःकु
ङ्कुमंरोचनामधु ॥ ३७ ॥ अर्घोऽयंकुरुशार्दूलद्वादशाङ्गउदाहृतः ॥ अनेनपूजयेद्यस्तुसयातिपरमंपदम् ॥ ३८ ॥ दारवेणार्घ्यपात्रेणदत्त्वार्घ्यंविधिव
न्नृप ॥ देव्यैतदामहाराजअग्निष्टोमफलंलभेत् ॥ ३९ ॥ अब्दमेकशतंदिव्यंशक्रलोकेमहीयते ॥ गन्धानुलेपनंकृत्वाज्योतिष्टोमफलंलभेत् ॥ ४० ॥
चन्दनेनावलिप्यार्यामग्निष्टोमफलंलभेत् ॥ विलिप्यकृष्णागरुणावाजपेयफलंलभेत् ॥ ४१ ॥ कुङ्कुमेनविलिप्यार्यांगोसहस्रफलंलभेत् ॥ चन्दना

गरुकस्तूरैःसूक्ष्मपत्रैःसकुङ्कुमैः ॥ ४२ ॥ दुर्गांमालिप्यविधिवत्कल्पकोटिंवसेद्दिवि ॥ अग्निहोत्रपरेविप्रेवेदवेदाङ्गपारगे ॥ ४३ ॥ सुवर्णानांसुवर्णानां
शतेदत्तेतुयत्फलम् ॥ तत्फलंलभतेराजन्पूजयित्वातुचाम्बिकाम् ॥ ४४ ॥ मालयाबिल्वपत्राणांनवम्यांगुग्गुलेनच ॥ मालाद्वयेनसम्पूज्यदुर्गांदेवीं
नराधिपः ॥ ४५ ॥ बिल्ववृक्षस्यपत्रैर्वाराजसूयफलंलभेत् ॥ करवीरस्यचस्रग्भिःपूजयेद्यस्तुचण्डिकाम् ॥ ४६ ॥ वाजपेयस्ययज्ञस्यफलंप्राप्नो
तिमानव ॥द्रोणपुष्पस्यचस्रग्भिःपूजयेद्यस्तुचण्डिकाम् ॥ ४७ ॥ राजसूयफलंप्राप्यस्वर्गलोकेमहीयते ॥ पूजयित्वातुराजेन्द्रश्रद्धयाविधिपूर्वकम् ॥
॥ ४८ ॥ वन्यपुष्पस्यमालाभिःपितृलोकेमहीयते ॥ शमीपुष्पस्यचस्रग्भिरार्यांसम्पूज्यभक्तितः ॥ ४९ ॥ गोसहस्रफलंलब्ध्वाविष्णुलोके
महीयते ॥ सर्वेषामेवपुष्पाणांप्रवरंनीलमुत्पलम् ॥ ५० ॥ नीलोत्पलसहस्रेणयस्तुमालांप्रयच्छति ॥ दुर्गायैविधिवद्वीरतस्यपुण्यफलंशृणु ॥५१॥
वर्षकोटिसहस्राणिवर्षकोटिशतानिच ॥ दिव्यमूर्तिधरोभूत्वारुद्रलोकेमहीयते ॥ ५२ ॥ सर्वासांपुष्पजातीनांयत्फलंपरिकीर्तितम् ॥ तस्माच्छतगुणं
प्राप्यदुर्गालोकेमहीयते ॥ ५३ ॥ नीलोत्पलसहस्रैस्तुपूजयेद्यस्तुचण्डिकाम् ॥ वाजपेयफलंप्राप्यरुद्रलोकेमहीयते ॥५४॥ अलाभेपुष्पजातीनांपत्रा
ण्यपिनिवेदयेत् ॥ पत्राणामप्यलाभेतुओषधीस्तुनिवेदयेत् ॥ ५५ ॥ ओषधीनामभावेतुभक्त्याभगवतीजिता ॥ प्रत्येकमुक्तपुष्पेषुकुशेष्वपिफलं
नृप ॥ ५६ ॥ आङ्गिरसेषुतेष्वेवद्विगुणंकाञ्चनस्यतु ॥ मल्लिकामुत्पलंपत्रंशमीपुन्नागचम्पकम् ॥ ५७ ॥ कर्णिकारमशोकंचद्रोणपुष्पंविशेषतः ॥
चन्दनंचजपापुष्पंनागकेसरमेवच ॥ ५८ ॥ यःप्रयच्छतिपुण्यात्मापुष्पाण्येतानिभावतः ॥ चण्डिकायैनरश्रेष्ठसचप्रोक्तफलंलभेत् ॥ ५९ ॥ सम्प्रा
प्यकालाद्राजत्वंचण्डिकानुचरोभवेत् ॥ अथपुष्पविशेषाणांफलंवक्ष्येऽम्बिकार्चने ॥ ६० ॥ ऋतुकालोद्भवैःपुष्पैर्मल्लिकाजातिकुङ्कुमैः ॥ सितरक्तै
स्तथापुष्पैर्नीलपुष्पैस्तुपाण्डुरैः ॥ ६१ ॥ किंशुकैःकरवीरैश्चविकङ्कतसुचम्पकैः ॥ बकुलैश्चैवमन्दारैःकुन्दपुष्पैःकुरण्टकैः ॥ ६२ ॥ कर्णिकारार्क
पुष्पैश्चनिम्बजैश्चापराजितैः ॥ धत्तूरकातिमुक्तैश्चब्रह्मकागस्तिसम्भवैः ॥ ६३ ॥ दमनैःसिन्दुवारैश्चसुरभीमार्कवैस्तथा ॥ लताभिर्ब्रह्मवृक्षस्यदूर्वा
ङ्कुरैश्चकोमलैः ॥ ६४ ॥ मञ्जरीभिःकुशानांचबिल्वपत्रैःसुशोभनैः ॥ भक्त्यायुक्तस्तथानुक्तैर्जलजैःस्थलसम्भवैः ॥ ६५ ॥ पत्रैःपुष्पैर्यथालाभंस
र्वौषधिमयैःशुभैः ॥ वन्यानांसर्वपत्रैश्चपुष्पैश्चैवप्रपूजयेत् ॥ ६६ ॥ पद्माकृतिचयःकुर्यान्मण्डलंचण्डिकागृहे ॥ सब्रह्मणःपुरंगत्वामोदतेब्रह्मणासह ॥
॥ ६७ ॥ शङ्खवर्णंतुयःकुर्यान्मण्डलंविधिवन्नृप ॥ सदिव्यंयानमारुह्यचन्द्रलोकमवाप्नुयात् ॥ ६८ ॥ नानावर्णेनचूर्णेनकृत्वामण्डलमुत्तमम् ॥
गत्वामाहेश्वरीलोकंमोदतेशाश्वतीःसमाः ॥ ६९ ॥ वज्राकृतिवज्रचूर्णैर्यःकुर्यान्मण्डलंनृप ॥ ऐरावतसमारूढइन्द्राणीलोकमाप्नुयात् ॥ ७० ॥

यःकरोतिनरोभक्त्यादुर्गायाःपुरतोमहत् ॥श्वेतकृष्णैःसितैर्वर्णैःश्रीवत्साङ्कितमुत्तमम् ॥ ७१ ॥ मण्डलंसनरोवीरविमानवरमाश्रितः ॥ सेव्यमानोऽप्सरोव्रातैर्व्रजेच्छ्रीलोकमुत्तमम्॥७२॥यःकरोतिनरोभक्त्यामण्डलंह्यम्बिकागृहे ॥रमतेकिन्नरैःसार्धंयावदाभूतसम्प्लवम्॥७३॥घृतपिष्टप्रदीपाद्यौघृतमिश्रितपल्लवैः॥ओषधीभिश्चमेध्याभिःसर्वबीजैर्यवादिभिः ॥७४॥ नवम्यांसर्वकालेतुयात्राकालेविशेषतः ॥ यःकुर्याच्छ्रद्धयावीरदिव्यंनीराजनंनरः ॥७५॥ शङ्खभेर्यादिभिर्घोषैर्महद्भिर्देववादितैः ॥ नताशेषविनिर्घोषैर्जयशब्दैश्चपुष्कलैः ॥ ७६ ॥ यावन्तोदिवसादेव्याःपूजनेयान्तिवैनृणाम् ॥ तावत्कल्पसहस्राणिस्वर्गलोकेमहीयते॥७७॥यस्तुकुर्यात्प्रदीपेनशिवलोकंसगच्छति ॥ लवणेनाक्षतैःकृत्वादेव्यानीराजनंशुभम् ॥७८॥ तावत्कल्पसहस्राणिविष्णुलोकेमहीयते॥सुवर्णरौप्यवर्णैश्चकृत्वानीराजनंनरः॥७९॥भगवत्यैमहाराजब्रह्मलोकेमहीयते॥ त्रिकालंयोनरःकुर्याद्दुर्गायाःपुरतोनृप॥८०॥नृत्यंगीतंचवादित्रंतस्यपुण्यफलंशृणु॥यावन्त्यब्दानिकुरुतेनृत्यंगीतंचवादितम्॥८१॥तावत्कल्पानिराजेन्द्रदेवीलोकेसुखंवसेत्॥ एकाहमपियोभक्त्यापञ्चगव्येनचण्डिकाम्॥ ८२॥स्नापयेन्नृपशार्दूलसगच्छेत्सुरभीपुरम्॥कपिलापञ्चगव्येनघृतक्षीरयुतेनच॥८३॥ स्नानंशतगुणंप्रोक्तमितरेभ्योनराधिप॥वर्षैश्चषट्सहस्राणांपापानांसमुपार्जनम् ॥८४॥ तत्सर्वंविलयंयातितोयेनलवणंयथा॥घृताभ्यङ्गेनदेव्यास्तुकृतेनविधिवन्नृप॥८५॥तस्मादभ्यञ्जयेद्भक्त्यानित्यंभगवतींनृप ॥ नवम्यांशुक्लपक्षेतुविधिवच्चण्डिकांनप ॥ ८६.॥ घृतेनस्नापयेद्यस्तुतस्यपुण्यफलंशृणु ॥ दशपूर्वान्दशपरानात्मानंचविशेषतः ॥ ८७ ॥ भवार्णवात्समुद्धृत्यदुर्गालोकेमहीयते ॥ क्षीराद्यैःस्नापयेद्यस्तुश्रद्धाभक्तिसमन्वितः ॥ ८८ ॥ चण्डिकांसनरोयातिगोलोकंतमसःपरम् ॥ चण्डिकांस्नापयेद्यस्तुनरश्चेक्षुरसेनच ॥ ८९ ॥ सौपर्णकेनयानेनविष्णुनासहमोदते ॥ योनरःस्नापयेद्दुर्गांश्रद्धयाहेमवारिणा ॥ ९० ॥ सौवर्णयानमारूढोमोदतेपुरुषैर्दिवि॥रत्नोदकेनविधिवत्स्नापयेच्छ्रद्धयान्वितः ॥ ९१ ॥ चण्डिकांसनरैःपूर्वैर्विष्णुलोकेमहीयते ॥ स्नापयेद्यउमांदेवींनरःकर्पूरवारिणा ॥ ९२ ॥ सौवर्णयानमारूढोगच्छतेयन्त्रचण्डिका ॥ चण्डिकांस्नापयित्वातुश्रद्धयागरुवारिणा ॥ ९३ ॥ इन्द्रलोकंसमासाद्यक्रीडतेसहकिन्नरैः॥पितॄनुद्दिश्ययोदुर्गांमधुनापायसेनच ॥ ९४ ॥ स्नापयेद्विधिवद्भक्त्यातस्यपुण्यफलंशृणु ॥ तृप्ताभवन्तिपितरस्तस्यवर्षशतद्वयम् ॥९५॥ यएवंस्नापयेन्नित्यंस्नानद्रव्यैर्नराधिप ॥ युगपद्विधिवद्वीरतस्यपुण्यफलंशृणु ॥ ९६ ॥ अश्वमेधसहस्रस्यराजसूयशतस्यच ॥ अग्निष्टोमस्ययज्ञस्यसफलंविन्दतेनरः ॥ ९७॥ स्नापयित्वानरस्तांश्चवाजपेयफलंलभेत् ॥ सौवर्णैःस्नापयित्वातुचण्डिकांकलशैर्नृप ॥ ९८ ॥ अश्वमेधफलंप्राप्यब्रह्मलोकेमहीयते॥घृतस्नातांतथादुर्गांसमुद्वर्तयतेतुयः ॥९९॥ यवगोधूमजैश्चूर्णैर्घर्षयेच्छार्करेणच ॥ घृतेनपयसादध्नास्नापयेच्चण्डिकांततः ॥१००॥

बिल्वपत्रैःसुगन्धाढ्यैर्वर्षयेद्यत्नतःपुमान्॥गोसहस्रशतेदत्तेयत्फलंपुष्करेस्मृतम्॥१॥तत्फलंलभतेवीरदेव्याउद्वर्तनेकृते॥दत्त्वार्घ्यंविविवद्भक्त्यादुर्गायै
पद्मवारिणा ॥ २ ॥ सम्पूज्यमानोगन्धर्वैरमतेदिविदेववत् ॥ कृत्वोपवासंविधिवत्सुभोगीपुत्रवान्भवेत् ॥ ३ ॥ उत्तरेत्वयनेयस्तुसोपवासोयजे
च्छिवाम्॥बहुपुत्रोबहुधनःसनरःकीर्तिमान्भवेत् ॥ ४ ॥ कृत्वोपवासंविधिवद्विषुवेयोऽर्चयेच्छिवाम् ॥ शक्तिमान्बहुपुत्रश्चसभवेद्बलवान्नरः ॥ ५ ॥
योऽर्चयेद्विधिवद्दुर्गांग्रहणेचन्द्रसूर्ययोः ॥ कृत्वोपवासंविधिवत्सभवेत्पुत्रवान्नरः ॥ ६ ॥ शान्तिकामोनरोयस्तुराहुग्रस्तेदिवाकरे ॥ सोपवासोऽर्च
येद्देवींसगच्छेत्परमंपदम् ॥ ७ ॥ इत्येतेकथितावीरपूजाकालामनीषिभिः ॥ दुर्गायाःकुरुशार्दूलयेषुपूज्यदिवंव्रजेत् ॥ ८ ॥ दुर्गायादर्शनंपुण्यं
दर्शनादभिवन्दनम् ॥ वन्दनात्स्पर्शनंपुण्यंस्पर्शनादभिपूजनम् ॥ ९ ॥ पूजनाल्लेपनंश्रेष्ठंलेपनात्तर्पणंस्मृतम् ॥ तर्पणान्मांसदानंतुमहिषाजनि
घातनम् ॥ १० ॥ अहन्यहनियोदुर्गांपूजयेद्रुधिरादिभिः ॥ कुलानांशतमुद्धृत्यब्रह्मलोकेमहीयते ॥ ११ ॥ वरंप्राणपरित्यागःशिरसःकर्तनंवरम् ॥
नचा ( नाना ) पूज्येहभुञ्जीतचण्डिकांचण्डरूपिणीम्॥ १२॥इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेदेवीपूजाकथनंनामचतुरशीतितमोऽध्यायः ॥ ८४ ॥
पुलस्त्यउवाच ॥ देवैःपुराजगत्कर्तापृष्टोदेवःपितामहः ॥ ब्रूहिदुर्गार्चनंदेवयेनतुष्यतिचण्डिका ॥ १ ॥ ब्रह्मोवाच ॥ शम्भुःपूजयतेदेवींमन्त्रशक्ति
मयींशुभाम् ॥ अक्षमालांकरेन्यस्यतेनासौविभवोद्भवः ॥ २ ॥ दुर्गांरत्नमयींदेवाःपूजयामिसदाह्यहम् ॥ तेनप्राप्तंमयाचैवब्रह्मत्वंचसुदुर्लभम्॥३॥
इन्द्रनीलमयींदेवींविष्णुःपूजयतेसदा ॥ विष्णुत्वंप्राप्तवांस्तेनअद्भुतैकंसनातनम् ॥ ४ ॥ देवींहेममयींदुर्गांधनदोऽर्चयतेसदा ॥ तेनासौधनदोदेवोधने
शत्वमवाप्तवान् ॥ ५ ॥ विश्वेदेवामहात्मानोरौप्यांदेवींमनोरमाम् ॥ यजन्तिविधिवत्तेनविश्वेदेवत्वमागताः ॥ ६ ॥ वायुःपूजयतेभक्त्यादेवीं
पित्तलसम्भवाम् ॥ वायुत्वंतेनसम्प्राप्तंअनौपम्यगुणावहम् ॥ ७ ॥ वसवःकांस्यकांदेवींपूजयन्तिविधानतः ॥ प्राप्तास्ततोमहात्मानोवसुत्वंतन्महोद
यम् ॥ ८ ॥ अश्विनौपार्थिवींदेवींपूजयन्तौविधानतः ॥ तेनतावश्विनौदेवौस्वर्वैद्यौसम्बभूवतुः ॥ ९ ॥ स्फाटिकींशोभनांदेवींवरुणःपूजयेत्सदा ॥
वरुणत्वंचसम्प्राप्तंतेनचद्धर्यासमन्वितम् ॥ १० ॥ देवींरत्नमयींपुण्यामग्निर्यजतिभावितः ॥ अग्नित्वंप्राप्तवांस्तेनतेजोरूपसमन्वितम् ॥ ११ ॥
ताम्रांदेवींसदाकालंभक्त्यादेवोदिवाकरः ॥ अर्चयेत्तेनसम्प्राप्तंसूर्यत्वंशुभमुत्तमम् ॥ १२ ॥ मुक्ताफलमयींदेवींसोमःपूजयतेसदा ॥ तेनसोमेन
सम्प्राप्तंसोमत्वंसततोज्ज्वलम् ॥ १३ ॥ प्रवालकमयींदेवींपूजयन्तिविधानतः ॥ तेनतेग्रहतांप्राप्ताःग्रहाःसूर्यादयोऽनिशम् ॥ १४ ॥ वारिजांशोभनां
देवींपूजयन्त्यसुरोत्तमाः ॥ वारिजाश्चमहात्मानस्तेनतेऽमितविक्रमाः ॥ १५ ॥ त्रपुसीसमयींदेवींयजन्तेपितरःसदा ॥ पितृत्वंप्राप्यतेसर्वेसम्पूज्याश्च

जगत्रयं ॥ १६ ॥ तथालोहमयींदेवींपिशाचाःपूजयन्तिताम् ॥ तेनसिद्धिबलोपेताःप्रयान्तिपरमंपदम् ॥ १७ ॥ त्रिलोहिनींसदादेवींयजन्तेगुह्य
कादयः ॥ तेनभोगबलोपेताःप्रयान्तीश्वरमन्दिरम् ॥ १८ ॥ वज्रलोहमयींदेवींयजन्तेभूतयोनयः ॥ तेनमुक्ताःसुरत्वंचलभन्तेसततंदिवि ॥ १९ ॥
देवास्तथाश्रूयमपियदीच्छथपरांगतिम् ॥ शिवांमणिमयींपूज्यलभध्वंमनसेप्सितम् ॥ २० ॥ यश्चदेव्यागृहंनित्यंसंमार्जयतिभक्तितः ॥ सभवेद्बल
वान्देवाःसर्वसम्पत्तिसंयुतः ॥ २१ ॥ देव्यागृहंतुयोदेवागोमयेनानुलेपयेत् ॥ स्त्रीपुमान्वायथावच्चषण्मासाभ्यन्तरेततः ॥ सलभेदीप्सितान्कामा
न्देवीलोकंचगच्छति॥२२॥पुलस्त्यउवाच॥स्नानकालेमहाराजनानावादित्रमङ्गलैः॥जयशब्दैश्चयोदुर्गांस्नाप्यमानांजलादिभिः॥२३॥ सम्पूजयति
भक्त्याचगन्धपुष्पादिभिस्तथा॥सक्रीडतेदिवंगत्वागन्धर्वाप्सरसांगणैः॥२४॥ चक्रैर्वाशतसङ्ख्यैस्तुक्षीरवृक्षसमुद्भवैः॥हेमजैश्चापिकलशैर्जलक्षीरघृता
न्वितैः॥२५॥अनेकवर्णसंयुक्तैरक्षतैर्नीरतण्डुलैः॥यःकरोतिनरोभक्त्याचक्राकारंतुमण्डलम्॥२६॥चण्डिकायाःपुरोराजंश्चण्डिकायाश्चमन्दिरे॥सदि
व्ययानगोभूत्वारमतेवैष्णवेपुरे ॥२७॥शुभंवाप्यशुभंवापिफलंपुष्पंनिवेदयेत् ॥भक्त्यायुक्तोनरःसवसचदेवत्वमाप्नुयात् ॥२८॥ नानाकुसुममालाभि
र्मण्डपंचण्डिकोपरि॥यःकुर्याद्विधिवद्भक्त्याविष्णुलोकेमहीयते ॥२९॥कुर्यात्पुष्पगृहंभक्त्याविधिवच्चण्डिकोपरि ॥ नवम्यांपर्वकालेवाविचित्रकुसुमो
ज्ज्वलम्॥३०॥विमानंवरमारुह्यपुष्पदामोपशोभितम् ॥ अक्षयंमोदतेकालंचण्डिकालयमाश्रितः ॥ ३१ ॥ पूजाविभक्तविन्यासरचनादिषुसर्वतः॥फ
लमेवंसमासेनज्ञेयंवित्तानुसारतः ॥ ३२ ॥ कृष्णागरुंसकर्पूरंरोचनंचन्दनंतथा ॥ भगवत्यनरोभूयःपङ्कंदत्वानराधिपः ॥ ३३ ॥ इहकामानवाप्याथ
शिवलोकेमहीयते ॥ गुग्गुलुंसघृतंदत्त्वादुर्गायैचनरर्षभ ॥३४॥ वर्षार्धंविधिवद्भक्त्यागोसहस्रफलंलभेत् ॥ अगुरुंधूपमावेद्यसर्वयज्ञफलंलभेत् ॥३५॥
सितागरुंनरोदत्वागोसहस्रफलंलभेत् ॥ सर्वेषामेवधूपानांदुर्गायांगुग्गुलुःप्रियः ॥३६ ॥ घृतयुक्तोविशेषेणसततंप्रीतिवर्धनः ॥ द्वेसहस्रेपलानांतुतथा
पलशतद्वयम् ॥३७॥ दत्त्वाशुक्लनवम्यांतुचण्डिकावल्लभोभवेत् ॥ महिषाक्षंघृताक्तंतुदत्त्वाबिल्वमथापिवा ॥ ३८ ॥ वाजपेयफलंप्राप्यसूर्यलोकेमही
यते ॥ सकृच्चागरुधूपेनप्रीतिदासर्वमङ्गला ॥ ३९ ॥ शोधयेत्पापकलिलंकाञ्चनंदहनोयथा ॥ वस्त्राणिसुविचित्राणिसूक्ष्माणिसुमृदूनिच ॥ ४० ॥
यःप्रयच्छतिदुर्गायैसगच्छतिशिवालयम्॥यावन्तस्तन्तवोवीरतेषुवस्त्रेषुकीर्तिताः ॥४१॥ तावद्वर्षसहस्राणिशोभतेचण्डिकालये॥सुवर्णतिलकेयस्तुभग
वत्यैप्रयच्छति ॥ ४२ ॥ सगच्छतिपरंस्थानंयत्रसापरमाकला ॥ सुवर्णघटितंवस्त्रंयोदुर्गायैप्रयच्छति ॥ ४३ ॥ गोसहस्रफलंप्राप्यसूर्यलोकेमही
यते ॥ वित्तानुसरणेनैवंफलंज्ञेयंसमासतः ॥ ४४ ॥ सन्ध्याकालेनवम्यांयोवलिंकुर्यान्नराधिप ॥ चण्डिकायतनेभक्त्यामहिषाजनिपातनैः ॥

॥ ४५ ॥ सगच्छतिपरंस्थानंयत्रसाचण्डिकास्थिता ॥ गुडखण्डाज्यसम्मिश्रमन्नंदद्यान्नराधिप ॥ ४६ ॥ देव्यैयःसकुलोऽथासौसूर्यलोकेमहीयते ॥ गुडखण्डघृतानांचतथाशर्करयानृप ॥ ४७ ॥ दत्तेचोद्वर्तनंदेव्यैसयातिब्रह्मणःपदम् ॥ शाल्योदनंरसानांचप्रपानंविरजंतथा ॥ ४८॥ यःप्रयच्छति दुर्गायैसचगच्छेच्छिवालयम् ॥ दुर्गामुद्दिश्यपानीयंकेतकीगन्धवासितम् ॥ ४९ ॥ यःप्रयच्छतिराजेन्द्रसगणाधिपतिर्भवेत् ॥ आम्रंचनारिकेलंचख र्जूरंबीजपूरकम् ॥ ५० ॥ यःप्रयच्छतिदुर्गायैसगच्छेत्परमंपदम् ॥ घृतदीपप्रदानेनयोऽर्चयेच्चण्डिकांनरः ॥५१॥ सोऽश्वमेधफलंप्राप्यचण्डिकाऽनुच रोभवेत् ॥ तैलदीपंचयोदद्यात्पूजयित्वातुचण्डिकाम् ॥ ५२ ॥ नागलोकंसमासाद्यक्रीडतेसहकिन्नरैः ॥ आत्मदेहवसादीपंप्रज्वाल्यचण्डिकाग्रतः ॥ ॥ ५३ ॥ निवेदयेन्नरोभक्त्यामोदतेसोऽम्बिकालये ॥ यःकुर्यात्कार्तिकेमासिशोभनांदीपमालिकाम् ॥ ५४ ॥ चण्डिकायतनेभक्त्यासमूर्यालयमाव्र जेत् ॥ घृतेनकुरुशार्दूलअमायांचस्वशक्तितः ॥ ५५ ॥ विशेषतोनवम्यांचभक्तिश्रद्धासमन्वितः ॥ तावद्वर्षसहस्राणिब्रह्मलोकेमहीयते ॥ ५६ ॥ अश्मसारमयंकृत्वानानादीपसमन्वितम् ॥ दीपवृन्दंसमुद्बोध्यदुर्गायाःपुरतोनृप ॥ ५७ ॥ नरःकल्पायुतंसाग्रंदुर्गालोकेमहीयते ॥ चन्द्रांशुनिर्मलंछत्रं मणिमाणिक्यभूषितम् ॥ ५८ ॥ सर्वतःशोभनंकृत्वानानापुष्पानुलेपनैः ॥ दुर्गायाःपुरतोधत्तेसयातिपरमांगतिम् ॥ ५९ ॥ चामरेश्रद्धयादेव्यैदत्त्वा चश्रद्धयान्वितः ॥ राजसूयफलंप्राप्यहंसलोकेमहीयते ॥ ६० ॥ सम्प्रसारितदेहोयोदण्डवत्पतितोभुवि ॥ चण्डिकापुरतोवीरसयातिपरमां गतिम् ॥ ६१ ॥ जपसन्ध्योपवासेषुसर्वतीर्थेषुयत्फलम् ॥ तत्फलंलभतेवीरप्रणम्यशिरसाशिवाम् ॥ ६२ ॥ दुर्गापूजोपकरणंस्वल्पंवायदिवाबहु॥ कृत्वावित्तानुसारेणरुद्रलोकेमहीयते ॥ ६३ ॥ चण्डिकांपूजयित्वातुप्रहृष्टेनान्तरात्मना ॥ कृताञ्जलिपुटोभूत्वाइदंस्तोत्रमुदीरयेत् ॥ ६४ ॥ दुर्गांशिवांशान्तिकरींब्रह्माणींब्रह्मणःप्रियाम् ॥ सर्वलोकप्रणेत्रींचप्रणमामिसदाम्बिकाम् ॥ ६५ ॥ मङ्गलांशोभनांशुद्धांनिष्कलांपरमांकलाम् ॥ विश्वेश्वरींविश्ववन्द्यांचण्डिकांप्रणमाम्यहम् ॥ ६६ ॥ सर्वदेवमयींदेवींसर्वदेवनमस्कृताम् ॥ ब्रह्मेशविष्णुनमितांप्रणमामिसदाप्युमाम् ॥ ६७ ॥ विन्ध्यस्थांविन्ध्यनिलयांदिव्यस्थाननिवासिनीम् ॥ योगिनींयोगविद्यांचचण्डिकांप्रणमाम्यहम् ॥ ६८ ॥ ईशानमातरंदेवीमीश्वरीमी श्वरप्रियाम् ॥ प्रणतोऽस्मिसदादुर्गांसंसारार्णवतारिणीम् ॥ ६९ ॥ इदंयःपठतेनित्यंशृणुयाद्वापिभक्तितः ॥ समुक्तःसर्वपापेभ्योदुर्गा लोकेमहीयते ॥ ७० ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेदुर्गार्चनस्तोत्रकथनंनामपञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ भीष्मउवाच ॥ श्रुतंसूर्यस्यचन्द्रस्यभौमस्यापिप्रपूजनम् ॥ बुधस्यसोमसूनोश्चपूजनंकथयाधुना ॥ १ ॥ पुलस्त्यउवाच ॥ तारागर्भसमुद्भूतोबुध

श्चन्द्रकुमारकः ॥ सौम्यःक्रूरोग्रहोज्ञेयःशुभाशुभप्रदोनृणाम् ॥ २ ॥ शराकारंमण्डलंतुबुधस्यपरिकीर्तितम् ॥ हरिन्मणिसमै
र्वर्णैश्चूर्णैःकुर्यात्तुमण्डलम् ॥ ३ ॥ पूजयेत्तत्रगन्धाद्यैःपुष्पैर्धूपैस्सुशोभनैः ॥ दानंचविधिवत्कुर्याद्दशारिष्टेचगोचरे ॥ ४ ॥ कर्पूराश्चैवमुद्गाश्चहरि
द्वस्त्रंहरिन्मणिः ॥ सुवर्णंचयथाशक्तिदद्याद्बोधनतुष्टये ॥ ५ ॥ सोमपुत्रमहाप्राज्ञवेदवेदाङ्गपारग ॥ नमस्तेग्रहमध्यस्थप्रसन्नोभवमेसदा ॥ ६ ॥
इतिस्तुत्वामहाराजबुधंभक्त्यासमाहितः ॥ प्राप्नुयान्निखिलान्कामान्सोमसूनुप्रसादतः ॥ ७ ॥ गुरोश्चपूजनंप्रोक्तंपट्टसाकारमण्डले ॥ पीतवर्णैःसु
निष्पन्नैश्चूर्णैराजन्सुशोभनैः ॥ ८ ॥ पीतैर्गन्धयुतैःपुष्पैर्वस्त्रैर्हेम्नाचपूजयेत् ॥ दशागोचरयोर्दौष्टेचेदानंदद्याच्चशक्तितः ॥ ९ ॥ चणकद्विदलंचैवपीत
वस्त्रंसुवर्णकम् ॥ पुष्परागंतुविप्रायदद्याच्चारिष्टशान्तये ॥ १० ॥ बृहस्पतेसुराचार्यसर्वशास्त्रविशारद ॥ दानेनानेनसंतुष्टोभवसौम्योममाधुना॥११॥
एवंकृतेतुराजेन्द्रस्वानुकूलोभवेद्गुरुः ॥ सर्वान्कामानवाप्नोतिनरोगुरुसमर्चनात् ॥ १२ ॥ भार्गवस्यापिवक्ष्यामिपूजनंनृपतेऽधुना ॥ यत्कृत्वासर्व
कामाप्तिःसम्यक्पुंसांप्रजायते ॥ १३ ॥ पञ्चकोणंसमुद्दिष्टंमण्डलंभार्गवस्यतु ॥ चूर्णकैःश्वेतवर्णैश्चविधिनासुधियाकृतम् ॥ १४ ॥ श्वेतगन्धैश्चपु
ष्पैश्चवस्त्रैश्चापिसितैस्तथा ॥ पूजयेद्भार्गवंभक्त्यानरःश्रद्धासमन्वितः ॥ १५ ॥ रौप्यंचदक्षिणादानंयथाशक्तिप्रकीर्तितम् ॥ दशाद्यरिष्टेचोत्पन्नेसि
तमश्वंप्रदापयेत् ॥ १६ ॥ तण्डुलाःश्वेतवस्त्रंचरौप्यंचन्दनमेवच ॥ कर्पूरंचसुगन्धाढ्यंदेयंदानंद्विजातये ॥ १७ ॥ भृगुपुत्रमहाभागदानवानांपुरो
हित ॥ दानेनानेनसंतुष्टोभवसर्वासुरार्चित ॥ १८ ॥ इतिमन्त्रंसमुच्चार्यदद्याद्दानंयथोदितम् ॥ तस्यतुष्टोभवत्याशुभार्गवःकुरुनन्दन ॥ १९ ॥ शनै
श्चरस्यपूजार्थंमण्डलंचनराकृति ॥ कृत्वाचूर्णैःकृष्णवर्णैःपूजयेत्तत्रभक्तितः ॥ २० ॥ कृष्णैर्गन्धैश्चपुष्पैश्चवस्त्रैश्चापितथाविधैः ॥ लोहंचदक्षिणादा
नंपिण्याकंचतिलस्यच ॥ २१ ॥ दानंशनैश्चरारिष्टेकृष्णांगांकृष्णवस्त्रकम् ॥ सुवर्णंचयथाशक्तिदद्यान्नीलमणिंतथा ॥ २२ ॥ सूर्यसूनोमहाभाग
छायापुत्रमहाबल ॥ अधोदृष्टेभवशनेप्रसन्नोऽस्मात्प्रदानतः ॥ २३ ॥ एवंस्तुत्वाशनिंभक्त्यायश्चदद्याद्द्विजातये ॥ स्वानुकूलोभवेत्तस्यशनिःपापे
चगोचरे ॥ २४ ॥ राहोर्वर्णादिकंसर्वंशनिवन्मण्डलंतथा ॥ सूर्याकारंसमुद्दिष्टंतत्रपूजार्कसूनुवत् ॥ २५ ॥ गोमेदंसर्षपाश्चैवतिलामाषाश्चकृष्णकाः ॥
महिषीचतथाच्छागोदानंराहोःप्रकीर्तितम् ॥ २६ ॥ सिंहिकासुतदैत्येन्द्रराहोचन्द्रार्कमर्दन ॥ भवतुष्टोमहाभागदानेनानेनसुव्रत ॥ २७ ॥ केतो
र्मण्डलकंकुर्याद्ध्वजाकृतिसुशोभनम् ॥ शनिवत्सकलंज्ञेयंपूजावर्णादिकंनृप ॥ २८ ॥ सप्तधान्यंसमुद्दिष्टंसस्वर्णंकेतुदानकम् ॥ एवंकृतेस्वानुकूलौ
भवेतांचनृणांनृप ॥ २९ ॥ प्रदद्यातांधनंपुत्रान्सुखंसौभाग्यमेवच ॥ आकृष्णेतिरवेर्मन्त्रइमंदेवास्तथाविधोः ॥३० ॥ अग्निर्मूर्द्धेतिभौमस्यमन्त्रोज

प्येऽर्हणंतथा ॥ उद्बुध्यस्वतीन्दुसूनोर्बृहस्पतेगुरोस्तथा ॥ ३१ ॥ अन्नात्परीतिशुक्रस्यशन्नोदेवीरयंशनेः ॥ कयानइतिराहोश्वकेतोःकेतुमितिस्मृतः
॥ ३२ ॥ एतेमन्त्रास्समुद्दिष्टाग्रहाणांपूजनेजपे ॥ एवंकृतेनृपश्रेष्ठानुकूलाअखिलाग्रहाः ॥ ३३ ॥ भवन्तिपुंसांसततंयच्छन्तिचसुसम्पदः ॥ ३४ ॥
एतन्महाराजमयासमस्तंतुभ्यंसमुदिष्टमिहक्रमेण ॥ श्रुत्वानरःसर्वश्रुतार्थसारमेतीश्वरस्यैवचसन्निधानम् ॥ ३५ ॥ इदंपवित्रंयशसोनिधानमिदंपितॄ
णामतिवल्लभंस्यात् ॥ इदंचदेवेष्वमृतायकल्पतेपुण्यानहंपातकिनांचपुंसाम् ॥ ३६ ॥ इतिपठतियशस्यंयःशृणोतीहभक्त्यामधुमुरनरकारेरर्चनंवाथ
पश्येत् ॥ मतिमपिचजनानांयोददातीन्द्रलोकेविधिशिवविबुधेन्द्रैःपूज्यतेकल्पमेकम् ॥ ३७ ॥ यइदंशृणुयान्नित्यमृषीणांचरितंशुभम् ॥ विमुक्त
स्सर्वपापेभ्यःस्वर्गलोकेमहीयते ॥ ३८ ॥ तपःकृतेप्रशंसन्तित्रेतायांज्ञानमेवच ॥ द्वापरेयज्ञमित्याहुर्दानमेकंकलौयुगे ॥ ३९ ॥ सर्वेषामेवदानाना
मिदमेवैकमुत्तमम् ॥ अभयंसर्वभूतानांनास्तिदानमतःपरम् ॥ ४० ॥ दानंप्रधानंशूद्रस्यत्वित्याहभगवान्प्रभुः ॥ दानेनसर्वकामाप्तिस्तस्यसंजाय
तेतपः ॥ ४१ ॥ पुण्यंपवित्रमायुष्यंसर्वपापविनाशनम् ॥ पुराणमेतत्कथितंतीर्थश्राद्धानुवर्णनम् ॥ ४२ ॥ शृणोतियःपठेद्वापिश्रीमान्संजायतेनरः
सर्वपापविनिर्मुक्तःसलक्ष्मीकंहरिंलभेत् ॥ ४३ ॥ इदंमहाराजअगादितुभ्यंपुण्यंमहापातकनाशनंच ॥ ब्रह्मार्करुद्रैश्चसुपूजितंचश्रोतव्यमेतत्प्रवद
न्तितज्ज्ञाः ॥ ४४ ॥ सृष्टिखण्डमिदंराजन्मयातुभ्यंप्रकीर्तितम् ॥ पुराणस्यादिभूतंचनवधासृष्टिपौष्करम् ॥ ४५ ॥ द्विजेभ्यःश्रावयेद्विद्वान्य
श्चवैशृणुयात्पठेत् ॥ कल्पकोटिशतंसाग्रंब्रह्मलोकेसमोदते ॥ ४६ ॥ इतिश्रीपाद्मपुराणेप्रथमेसृष्टिखण्डेपुराणावतारेग्रहार्चनवर्णनंनामषडशीतित
मोऽध्यायः ॥ ८६ ॥ इतिसृष्टिखण्डंसमाप्तम् ॥ शुभंभवतु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



भूमिखंडाचीं चित्रें.
सूत
शौनकादि
ऋ·
शिवशर्मा व त्याचे पुत्र
५
स्त्री
शिवशर्मा·
पुत्र
दिति·
इन्द्र
कश्यप दितीचें सांत्वन करतात
कश्यप
हिरण्य
क०
स्त्री
सोमशर्मा
श्री·
सोमशर्मा
वसिष्ठ
वृत्र
इन्द्र
पिप्पल
पि·
सुकर्मा
मा
ययाति
मातली
पृथु
रंभा
सुकला·
कृकल
सुकला
इंद्र
ययाति
कृकल·
पितर
धर्म
चार हंस
विष्णु·
वेनराजा
ययाति
रंभा
गंधर्व
ययाति
४ पुत्र
ययाति
नहुष
दैत्य
वेनराजा यज्ञ करतो
च्यवन
सरोवर
अश्रुचीं कमळें होतात

ॐश्रीगणेशायनमः ॥ ऋषयऊचुः ॥ शृणुसूतमहाभागसर्वतत्त्वार्थकोविद ॥ सन्देहमागतंविद्धन्दारुणंबुद्धिनाशनम् ॥ १ ॥ केचित्पठन्तिप्रह्ला
दंपुराणेषुद्विजोत्तमाः ॥ पञ्चवर्षान्वितेनापिकेशवःपरितोषितः ॥ २ ॥ देवासुरेकथंप्राप्तेहरिणासहयुध्यति ॥ निहतोवासुदेवेनप्रविष्टोवैष्णवींत
नुम् ॥ ३ ॥ सूतउवाच ॥ कश्यपेनपुराज्ञातंकृतंव्यासेनधीमता ॥ ब्रह्मणाकथितंपूर्वंव्यासस्याग्रेस्वयंप्रभोः ॥ ४ ॥ तमेवंहिप्रवक्ष्यामिभवतामग्रतोद्वि
जाः ॥ सन्देहकारणंजातंछिन्नंदेवेनवेधसा ॥ ५ ॥ व्यासउवाच ॥ शृणुसूतमहाभागब्रह्मणापरिभाषितम् ॥ प्रह्लादस्ययथाजन्मपुराणेऽप्यन्यथा
श्रुतम् ॥ ६ ॥ जातमात्रःसर्वंसुखंवैष्णवंमार्गमाश्रितः ॥ महाभागवतश्रेष्ठःप्रह्लादोदेवपूजितः ॥ ७ ॥ विष्णुनासहयुद्धायसपुत्रःसङ्गरंगतः ॥ नि
हतोवासुदेवेनप्रविष्टोवैष्णवींतनुम् ॥ ८ ॥ सृष्टिभावंशृणुष्वत्वमस्यैवचमहात्मनः ॥ सङ्गरंप्राप्यपुत्राद्यैर्विष्णुनासहवीर्यवान् ॥ ९ ॥ प्रविष्टो
वैष्णवंतेजस्सम्प्राप्यस्वेनतेजसा ॥ महाभागवतश्रेष्ठःप्रह्लादोदेवपूजितः ॥ १० ॥ पुराकल्पेमहाभागयथाजातःसवीर्यवान् ॥ वृत्तान्तंतस्यवीरस्यप्रव
क्ष्यामिसमासतः ॥ ११ ॥ पश्चिमेसागरस्यान्तेद्वारकानामवैपुरी ॥ सर्वऋद्धिसमायुक्तासर्वसिद्धिसमन्विता ॥ १२ ॥ तस्यामास्तेसदादेवोयो
गज्ञोयोगवित्तमः ॥ शिवशर्मेतिविख्यातोवेदशास्त्रार्थकोविदः ॥ १३ ॥ तस्यापिपञ्चपुत्रास्तुबभूवुःशास्त्रकोविदाः ॥ यज्ञशर्मावेदशर्माधर्मशर्मा
तथैवच ॥ १४ ॥ विष्णुशर्मामहाभागोनूनंतत्कर्मकोविदः ॥ पंञ्चमःसोमशर्मेतिपितृभक्तिपरायणः ॥ १५ ॥ पितृभक्तिंविनाचैवधर्ममन्यं
द्विजोत्तमाः ॥ नविदन्तिमहात्मानस्तद्भावेनतुभाविताः ॥ १६ ॥ तेषांतुभक्तिंसंपश्यञ्छिवशर्माद्विजोत्तमः ॥ चिन्तयामासमेधावीनिष्कर्षिष्ये
सुरोत्तमान् ॥ १७ ॥ पितृभक्तेषुयोभावोनैतेषांमनसिस्थितः ॥ यथाजानाम्यहंचाथकरिष्येबुद्धिपूर्वकम् ॥ १८ ॥ विष्णोश्चैवप्रसादात्ससर्वसि
द्धिर्बभूवह ॥ सद्भावंचिन्तयामासअज्ञनार्थंद्विजोत्तमाः ॥ १९ ॥ उपायंब्राह्मणश्रेष्ठस्तपसस्तेजसःकिल ॥ चकारसोऽप्युपायज्ञोमाययाब्रह्मवि
त्तमः ॥ २० ॥ तेषामग्रेततोव्याजंशिवशर्माव्यदर्शयत् ॥ महताज्वररोगेणमृतामाताविदर्शिता ॥ २१ ॥ तैस्तुदृष्टामृतामातापितरंवाक्यमब्रुव
न् ॥ २२ ॥ययावयंमहाभागगर्भोदरेप्रवर्द्धिताः ॥ कलेवरंपरित्यज्यस्वयमेवगताक्षयम् ॥ २३ ॥ अपहायगतासेयंस्वर्गेताततकिमुच्यते ॥ २४ ॥
शिवशर्मोपरिभवंपुत्रंभक्तिपरायणम् ॥ यज्ञशर्माणमाहूयइत्युवाचद्विजोत्तमः ॥ २५ ॥ शिवशर्मोवाच ॥ अनेनापिसुतीक्ष्णेनशस्त्रेणनिशितेन

---

१ 'स्तुवन्ति' इ० पा०। २ 'प्रह्लादस्य च संवादमृषेर्नारायणस्य च' इ० पा०। 'प्रह्लादस्य यथा कर्मपुराणे चान्यथाश्रुतम्' इ० पा०। ३ 'सवसुधौ' इ० पा०। ४ 'भावम्' इ० पा०। ५ 'युयुधे' इ० पा०। ६ 'निष्कार्षिष्ये द्विजोत्तमान्' इ० पा०। ७ 'सर्वसिद्धो' इ० पा०। ८ 'अस्या' इ० पा०।

वै ॥ विच्छिद्याङ्गानिसर्वाणियत्रतत्रक्षिपस्वह ॥ २६ ॥ तत्कृतंतेनपुत्रेणयथादेशःश्रुतःपितुः ॥ समायातःपुनःपश्चात्पितरंवाक्यमब्रवीत् ॥२७॥
यथादिष्टंत्वयाताततत्सर्वंकृतवानहम् ॥ समादिशममान्यच्चकार्यकारणमद्यच ॥ तच्चसर्वंकरिष्यामिदुर्जयंदुर्लभंपितः ॥ २८ ॥ तमाज्ञायमहाभा
गंपितृभक्तंसचद्विजः ॥ निश्चयंपरमंज्ञात्वाद्वितीयस्यविचिन्तयन् ॥ २९ ॥ वेदशर्माणमाहूयगच्छत्वंममशासनात् ॥ स्त्रियाविनानशक्नोमि
स्थातुंकन्दर्पमोहितः ॥ ३० ॥ माययादर्शितानारीसर्वसौभाग्यसम्पदा ॥ एनामानयवत्सत्वंममार्थेकृतनिश्चयः ॥ ३१ ॥ एवमुक्तस्तथाप्रा
हकरिष्येतवसुप्रियम् ॥ पितरंतंनमस्कृत्यतामुवाचगतस्ततः ॥ ३२ ॥ त्वांदेवियाचतेतातःकामबाणप्रपीडितः ॥ अतस्त्वंजरयायुक्तेप्रसादसुमुखीभ
व ॥ ३३ ॥ भजत्वंचारुसर्वाङ्गीपितरंममसुन्दरि ॥ एवमाकर्णितंतस्यमाययावेदशर्मणः ॥ ३४ ॥ स्त्र्युवाच ॥ जरयापीडितस्यापिनैवेच्छामि
कदाचन॥सश्लेष्ममुखरोगस्यव्याधिग्रस्तस्यसाम्प्रतम् ॥ ३५ ॥ शिथिलस्यापिचार्तस्यतस्यवृद्धस्यसङ्गमम् ॥ भवन्तंरन्तुमिच्छामिकरिष्येतवसुप्रि
यम् ॥ ३६ ॥ भवन्तंरूपसौभाग्यैर्गुणरत्नैरलङ्कृतम् ॥ दिव्यलक्षणसम्पन्नंदिव्यरूपंमहौजसम् ॥ ३७ ॥ किंकरिष्यसितातेनवृद्धेनशृणुमान
द ॥ ममाङ्गभोगभावेनसर्वंप्राप्स्यसिदुर्लभम् ॥ ३८ ॥ यद्यत्त्वमिच्छसेविप्रतद्ददामिनसंशयः ॥ एतद्वाक्यंमहच्छ्रुत्वाअप्रियंपापसङ्कुलम् ॥
॥ ३९ ॥ वेदशर्मोवाच ॥ अधर्मयुक्तंतेवाक्यमयुक्तंपापमिश्रितम् ॥ नेदृशंमांवदेर्देविपितृभक्तमनागसम् ॥ ४० ॥ पितुरर्थंसमायातस्त्वा
महंप्रार्थयेशुभे ॥ [1]अन्यदेवंनवक्तव्यंभजत्वंपितरंमम ॥ ४१ ॥ यद्यत्त्वमिच्छसेदेवित्रैलोक्येसचराचरम् ॥ तत्तद्दद्मिनसन्देहोदेवराज्याधिकंशुभे ॥
॥ ४२ ॥ स्त्र्युवाच ॥ एवंसमर्थोदातुंमेपितुरर्थेयदाभवान् ॥ तदामेदर्शयाद्यैवसेन्द्रांस्त्वंसमहेश्वरान् ॥ ४३ ॥ दातुमेवंसमर्थोऽसिदुर्लभंसाम्प्र
तंकिल ॥ किंतेबलंमहाभागदर्शयस्वत्वमात्मनः ॥ ४४ ॥ वेदशर्मोवाच ॥ पश्यपश्यबलंदेविप्रभावंतपसोमम ॥ मयाहूताःसमायाताइन्द्रा
द्याःसुरसत्तमाः ॥ ४५ ॥ वेदशर्माणमूचुस्तेकिंकुर्मोहिद्विजोत्तम ॥ यमेवमिच्छसेविप्रतंददामोनसंशयः ॥ ४६ ॥ वेदशर्मोवाच ॥ य
दिदेवाःप्रसन्नामेप्रसादसुमुखायदि ॥ ददतुविमलांभक्तिपादयोःपितुरेवमे ॥ ४७ ॥ एवमस्तुसुराःसर्वेयथायातास्तथागताः ॥ त
मुवाचतैथादृष्ट्वादृष्टंतेतपसोबलम् ॥ ४८ ॥ देवैस्तुनास्तिमेकार्यंयदिदातुमिहेच्छसि ॥ यन्मांनयसिगुर्वर्थंतत्कुरुष्वममप्रियम् ॥ देहि
त्वंस्वंशिरोविप्रस्वहस्तेननिकृत्यवै ॥ ४९ ॥ वेदशर्मोवाच ॥ धन्योऽहमद्यसञ्जातोमुक्तश्चैवऋणत्रयात् ॥ स्वशिरोदेविदास्यामिगृ

१ 'ततो दृष्ट्वा' इ० पा०। स्त्रीति शेषः।

ह्यतांगृह्यतांशुभे ॥ ५० ॥ शितेनतीक्ष्णधारेणशस्त्रेणद्विजसत्तमः ॥ निकृत्यस्वंशिरश्चाथददौतस्यैप्रहस्यच ॥ रुधिरेणप्लुतंसाच
परिगृह्यगतामुनिम् ॥ ५१ ॥ रत्युवाच ॥ तवार्थेप्रेषितंविप्रपुत्रेणवेदशर्मणा ॥ एतच्छिरःसङ्गृहाणनिकृत्तंचात्मनात्मनः ॥ ५२ ॥ उत्तमाङ्गंप्रद
त्तंमेपितृभक्तेनतेनते ॥ तवार्थेद्विजशार्दूलमामेवंपरिभुङ्क्ष्ववै ॥ ५३ ॥ तस्यतैर्भ्रातृभिर्दृष्टंसाहसंवेदशर्मणः ॥ वेपिनाङ्गत्वमापन्नास्तेबभू
वुःपरस्परम्॥५४॥ मृतानोधर्मसाध्वीसामातासत्यसमाधिना ॥अयमेवमहाभागःपितुरर्थेमृतःशुभः ॥ ५५ ॥ धन्योऽयंधन्यतांप्राप्तःपितुरर्थेकृतंशु
भम् ॥ एवंसम्भाषितंतैस्तुभ्रातृभिःपुण्यचारिभिः ॥ ५६ ॥ समाकर्ण्यद्विजोवाक्यंज्ञात्वाभक्तिपरायणम् ॥ निकृत्तंचशिरस्तेनपुत्रेणवेदशर्म
णा ॥ ५७ ॥ धर्मशर्माणमाहाथशिरएतत्प्रगृह्यताम् ॥ ५८ ॥ इतिश्रीपाद्मपुराणेभूमिखण्डेशिवशर्मचरितेप्रथमोऽध्यायः ॥ १ ॥ सूतउवाच ॥
तदादायमहात्मासौनिर्जगामत्वरान्वितः ॥ पितृभक्त्यातपोभिश्चसत्यार्जवबलेनसः ॥ १ ॥ धर्ममाकृष्टवांश्चैवधर्मशर्माततस्तदा ॥ समाकृष्टस्तुवै
धर्मस्तपसातस्यधीमतः ॥ २ ॥ धर्मशर्माणमागत्यइदंवचनमब्रवीत् ॥ कस्मात्त्वयासमाहूतोधर्मशर्मन्समागतः ॥ तन्मेकथयकार्यंत्वंतत्करोमि
नसंशयः ॥ ३ ॥ धर्मशर्मोवाच ॥ यद्यस्तिगुरुशुश्रूषायदिनिष्ठाऽचलंतपः ॥ तेनसत्येनमेधर्मवेदशर्मासजीवतु ॥ ४ ॥ धर्मउवाच ॥ दमशौ
चेनसत्येनतपसातवसुव्रत ॥ पितृभक्त्यातवभ्रातावेदशर्मामहाभुजः ॥ ५ ॥ पुनरेवमहात्मासौजीवनंचलभिष्यति ॥ ६ ॥ तपसानेनतुष्टोऽस्मि
पितृभक्त्यामहामते ॥ वरंवरयभद्रंतेदुर्लभंधर्मवित्तमैः ॥ ७ ॥ एवमाकर्णितंतेनसुवाक्यंधर्मशर्मणा ॥ वैवस्वतंमहात्मानंतमुवाचमहायशाः ॥ ८ ॥
देहिमेत्वचलांभक्तिंपितुःपादार्हणेपुनः ॥ धर्मेरतिंतथामोक्षंसुप्रसन्नोयदामम ॥ ९ ॥ तमुवाचततोधर्मोमत्प्रसादाद्भविष्यति ॥ एवमुक्तेमहावाक्येवेद
शर्मातदोत्थितः ॥१०॥ प्रसुप्तवन्महाप्राज्ञोधर्मशर्माणमब्रवीत् ॥ क्वसादेवीगताभ्रातःक्वसताततोभवेदिति ॥११॥ समासेनसमाख्यातंयथापित्रानियोजि
तः ॥ समाज्ञायततोहृष्टोधर्मशर्माणमब्रवीत् ॥ १२ ॥ ममाद्यैवमहाभागशिरसाजीवितेनच ॥ संमुखीभववैभ्रातःकोऽन्योमेत्वादृशोभुवि ॥ १३ ॥
भ्रातरंचैवमाभाष्यउत्सुकःपितरंप्रति ॥ गमनायमतिंचक्रेभ्रात्राचधर्मशर्मणा ॥ १४ ॥ द्वावेतौतुगतौतत्रपितरंहृष्टमानसौ ॥ द्वाभ्यांतत्रसमास्थाय
शिवशर्माणमुत्तमम् ॥ १५ ॥ धर्मशर्मातदोवाचपितरंदीप्तिसंयुतम् ॥ ममाद्यवमहाभागतपसाजीवितेनच ॥ १६ ॥ वेदशर्मासमानीतस्तंपुत्रंप्रगृहाण
भोः ॥ शिवशर्माततोहृष्टोभक्तिंविज्ञायतस्यच ॥ १७ ॥ नकिञ्चिदब्रवीत्तंतुपुनश्चिन्तामुपेयिवान् ॥ पुरतोविनयेनापिवर्तमानंमहामतिम् ॥ १८ ॥

१ 'तेजसा तव विप्रेन्द्र गृहादेनं यमस्य च ॥ वेदशर्माणमानीत,स्वं पुत्रं प्रगृहाणभो.' ॥ इ० पा० ।

विष्णुशर्माणमाभाषीद्वत्समेवचनंकुरु ॥ इन्द्रलोकंव्रजस्वाद्यतस्मादानयचामृतम् ॥१९॥ अनयाकान्तयासार्द्धंस्थातुमिच्छामिसाम्प्रतम् ॥ सागरा
द्यत्समुत्पन्नममृतंव्याधिनाशनम् ॥ २० ॥ साधुनेच्छतिमामेषायथनांतुलभाम्यहम् ॥ तथाकुरुष्वशीघ्रंत्वमन्यथान्यंप्रयास्यति ॥ २१॥ वृद्धंज्ञात्वा
वमन्येतइयंबालासुरूपिणी ॥ अद्यदेव्याऽनयासार्द्धंप्रिययाभुवनत्रये ॥ २२ ॥ निर्दोषोव्याधिनिर्मुक्तोयथातातभवाम्यहम् ॥ तथाकुरुष्वमेवत्सम
द्भक्तोऽसियदाभुवि ॥ २३ ॥ एवमाकर्ण्यतद्वाक्यंपितुस्तस्यमहात्मनः ॥ विष्णुशर्मातदोवाचपितरंदीप्ततेजसम् ॥ २४ ॥ सर्वमेतत्करिष्यामिभव
तःसुखमुत्तमम् ॥ एवमाभाष्यधर्मात्माविष्णुशर्मामहामतिः ॥ २५ ॥ पितरंतंनमस्कृत्यपुनःकृत्वाप्रदक्षिणम् ॥ बलेनमहतासोऽपितपसानियमेन
च ॥ २६ ॥ अन्तरिक्षगतश्चासीद्गच्छमानस्यधीमतः ॥ समहावयुवेगेनऐन्द्रंसम्प्रतिगच्छति ॥ २७ ॥ इतिश्रीपाद्मपुराणेभूमिखण्डेशिवशर्मचरि
तेद्वितीयोऽध्यायः ॥ २ ॥ सूतउवाच ॥ प्रस्थितस्तेनमार्गेणप्रविष्टोगगनान्तरे ॥ सदृष्टोदेवदेवेनसहस्राक्षेणधीमता ॥ १ ॥ उद्यमंतस्यवैज्ञात्वाच
क्रेविघ्नंसुराधिराट् ॥ मेनकांतामुवाचेदंगच्छत्वंममशासनात् ॥ २ ॥ समाचरस्वास्यशीघ्रंगत्वाविघ्नंसुमध्यमे ॥ अस्यैवविप्रवर्यस्यपुत्रस्यशिव
शर्मणः ॥ ३ ॥ तथाकुरुष्वभद्रंतेयथानायातिमेगृहम् ॥ एवमाकर्ण्यतद्वाक्यंमेनकाप्रस्थितात्वरात् ॥ ४ ॥ ( ॥ सूतउवाच ॥ ) रूपौदार्यगुणोपेता
सर्वालङ्कारभूषिता ॥ नन्दनस्यवनस्यान्तेदोलायांसमुपस्थिता ॥५॥ सुस्वरेणप्रगायन्तीगीतंवीणास्वरोपमम् ॥ तेनदृष्टाविशालाक्षीचतुराचारुलोच
ना ॥ ६ ॥ व्यवसायंततोज्ञात्वातस्याविभ्रमनुत्तमम् ॥ इन्द्रेणप्रेषिताचैषानचभद्रकराभवेत्॥ ७॥एवंज्ञात्वाजगामाथंसत्वरेणद्विजोत्तमः॥तयादृष्टस्त
थापृष्टःक्वयास्यसिमहामते ॥ ८ ॥ विष्णुशर्मातदोवाचमेनकांकामचारिणीम् ॥ इन्द्रलोकंप्रयास्यामिपितुरर्थेत्वरान्वितः ॥ ९ ॥ मेनकाविष्णुश
र्माणंप्रत्युवाचप्रियंपुनः ॥ कामबाणैःप्रभिन्नाहंत्वामद्यशरणंगता ॥ १० ॥ रक्षस्वद्विजशार्दूलयदिधर्ममिहेच्छसि ॥ यावद्वित्वंमयादृष्टःकामाकुलि
तचेतसा ॥ ११ ॥ कामानलेनसन्दग्धातावदेवनसंशयः ॥ सम्भ्रान्ताकामसंतप्ताप्रसादसुमुखोभव॥ १२ ॥ विष्णुशर्मोवाच ॥ चरित्रंदेवदेवस्यविदि
तंमेवरानने ॥ भवत्याश्चप्रजानामिनाहंचैतादृशःशुभे ॥ १३ ॥ भवत्यास्तेजसारूपैरन्येमुह्यन्तिशोभने ॥ विश्वामित्रादयोदेविपुत्रोऽहंशिव
शर्मणः ॥ १४ ॥ योगसिद्धिंगतस्यापितपःसिद्धस्यचाबले ॥ कामादयोमहादोषाआदावेवविनिर्जिताः ॥ १५ ॥ अन्यंभजविशालाक्षिइन्द्रलोकंव्र

१ 'पातुम्' इ० पा० । २ 'नाशं याति जरा मेऽद्य यथा नीरुग्भव.म्यहम् ।' इ० पा० । ३ 'वायुवेगः' इति शेषः । वायुवेगः नरर गच्छमानस्य धीमतः अन्तरिक्षगत आसीत् । येन महता वायुवेगेनेत्युत्तरत्रसङ्गतिः । ४ इदमधिकं पुस्तकान्तरस्थम् । ५ 'वाणीश्वरोपम्' इ० पा० ।

जाम्यहम् ॥ एवमुक्त्वाजगामाथत्वरितोद्विजसत्तमः ॥ १६ ॥ निष्फलामेनकाजातापृष्ठादेवेनवज्रिणा ॥ विभीषांदर्शयामासनानारूपांपुनःपुनः
॥ १७ ॥ यथाऽनलेनसन्दग्धास्तृणानांसञ्चयाद्विजाः ॥ भस्मीभूताभवन्त्येवतथातास्ताविभीषिकाः ॥ १८ ॥ विप्रस्यतेजसातस्यपितृभक्तस्यसत्त
माः ॥ प्रलयंगतास्तुघोरास्तादारुणाभीषिकाद्विजाः॥१९॥सविघ्नान्दर्शयामाससहस्राक्षःपुनःपुनः॥तेजसाऽनाशयद्विप्रःस्वकीयेनमहायशाः ॥२०॥
एवंविघ्नान्बहूंस्तस्यइन्द्रस्यापिमहात्मनः ॥ नाशयामासमेधावीतपसस्तेजसापिवा ॥ २१ ॥ नष्टेषुतेषुविघ्नेषुदारुणेषुमहत्सुच ॥ ज्ञात्वातस्य
कृतान्विघ्नान्दारुणान्भीषणाकृतीन् ॥ २२ ॥ अथक्रुद्धोमहातेजाविष्णुशर्माद्विजोत्तमः ॥ इन्द्रंप्रतिमहाभागोरागरक्तान्तलोचनः ॥ २३ ॥ इन्द्र
लोकादहंचेन्द्रंपातयिष्यामिनान्यथा ॥ निजधर्मैरतस्याद्ययोविघ्नंतुसमाचरेत् ॥ २४ ॥ तस्यदण्डंप्रदास्यामियोवैहन्यात्सहन्यते ॥ एवमन्यंकरि
ष्यामिदेवानांपालकंपुनः ॥ २५ ॥ एवंसमुद्यतोविप्रइन्द्रनाशायसत्तमः ॥ तावदेवसमायातोदेवेन्द्रःपाकशासनः ॥ २६ ॥ भोभोविप्रमहाप्राज्ञतप
सानियमेनच ॥ दमेनसत्यशौचाभ्यांत्वत्समोनास्तिचापरः ॥ २७ ॥ अनयापितृभक्त्यातेजितोऽहंदैवतैःसह ॥ ममापराधंत्वंसर्वंक्षन्तुमर्हसिस
त्तम ॥ २८ ॥ वरंवरयभद्रंतेदुर्लभंचददाम्यहम् ॥ विष्णुशर्मातदोवाचदेवराजंतथागतम् ॥ २९ ॥ विप्रतेजोमहेन्द्रेन्द्रअसह्यंदेवदैवतैः ॥ पितृभक्तस्य
देवेशदुःसहंसर्वथाविभो ॥ ३० ॥ तेजोभङ्गोनकर्तव्योब्राह्मणानांमहात्मनाम् ॥ पुत्रपौत्रैःसमस्तैस्तुब्रह्मविष्णुहरान्पुनः ॥ ३१ ॥नाशयन्तेन
सन्देहोयदिरुष्टाद्विजोत्तमाः ॥ नागच्छेद्यद्भवानद्यतदाराज्यमनुत्तमम् ॥३२॥आत्मतपःप्रभावेणअन्यस्मैतुमहात्मने ॥ दातुकामस्तुसंजातोरोषपूर्णेन
चक्षुषा ॥ ३३ ॥ भवानद्यसमायातोवरंदातुमिहेच्छसि ॥ अमृतंदेहिदेवेन्द्रपितृभक्तिंतथाचलाम् ॥ ३४ ॥ एवंविधंवरंदेहियदितुष्टोऽसिशत्रुहन् ॥
एवंददामिपुण्यंतेवरंचामृतसंयुतम् ॥ ३५ ॥ एवमाभाष्यतंविप्रममृतंदत्तवान्स्वयम् ॥ सकुम्भंदत्तवांस्तस्मैप्रीयमाणेनचात्मना ॥ ३६ ॥ अचलाते
भवेद्विप्रभक्तिःपितरिसर्वदा ॥ एवमाभाष्यतंविप्रंविसृज्यचसहस्रदृक् ॥ ३७ ॥ प्रसन्नोऽभूच्चतद्दृष्ट्वाविप्रतेजःसुदुःसहम् ॥ विष्णुशर्माततोगत्वा
पितरंवाक्यमब्रवीत् ॥ ३८ ॥ तातइन्द्रात्समानीतममृतंव्याधिनाशनम् ॥ अनेनापिमहाभागनीरुजोभवसर्वदा ॥ ३९ ॥ अमृतेनत्वमद्यैवपरांतृप्तिम
वाप्नुहि ॥ एतद्वाक्यंमहच्छ्रुत्वाशिवशर्मासुतस्यहि ॥४० ॥ सुतान्सर्वान्समाहूयप्रीयमाणेनचेतसा ॥ पितृभक्ताःसुतायूयंमद्वाक्यपरिपालकाः॥४१॥
वरंवृणुध्वंसुप्रीताःपुत्रकादुर्लभंभुवि ॥ एवमाभाषितंतस्यशुश्रुवुःसर्वसम्मताः ॥ ४२ ॥ तेसर्वेतुसमालोच्यपितरंप्रत्यथाब्रुवन् ॥ अस्माकंजीवतान्मा

१ 'नन्दनं वनमाश्रितः '। इ० पा० । उवाचेति शेषः ।

तागतायायममन्दिरम् ॥ ४३ ॥ नीरुजाभवतादेवीप्रसादात्तवसुव्रता ॥ भवान्पिताइयंमाताजन्मजन्मान्तरेपितः ॥ वयंसुताभवेमेतिसर्वेपुण्यकृत
स्तथा ॥ ४४ ॥ शिवशर्मोवाच ॥ अद्यैवापिमृतामाताभवतांपुत्रवत्सला ॥ जीवमानासुहृष्टासाएष्यतेनात्रसंशयः ॥ ४५ ॥ एवमुक्तेशुभेवाक्ये
ऋषिणाशिवशर्मणा ॥ तेषांमातासमायाताप्रहृष्टावाक्यमब्रवीत् ॥ ४६॥ एतदर्थंसमुत्पन्नंसुवीर्यंतनयंसुतम्॥नराःसत्पुत्रमिच्छन्तिकुलवंशप्रभावकम्
॥ ४७ ॥ स्त्रियोलोकेमहाभागाःसपुण्याःपुण्यवत्सलाः॥ सुतमिच्छन्तिसर्वत्रपुण्याङ्गंपुण्यसाधकम् ॥ ४८ ॥ कुक्षिंयस्यागतोगर्भःसुपुण्यःपरिवर्त्त
ते ॥ पुण्यान्पुत्रान्प्रसूयेतसानारीपुण्यभागिनी ॥ ४९ ॥ कुलाचारंकुलाधारंपितृमातृप्रतारकम् ॥ विनापुण्यैःकथंनारीसम्प्राप्नोतिसुतोत्तमम्॥५०॥
नजानेकीदृशैःपुण्यैरेषभर्तासुपुण्यभाक् ॥ सञ्जातोधर्मवीर्योऽपिधर्मात्माधर्मवत्सलः ॥ ५१ ॥ यस्यवीर्यान्मयाप्राप्तायूयंपुत्रास्ततोऽधिकाः ॥ एवं
पुण्यप्रभावोऽयंभवन्तःपुण्यवत्सलाः ॥ ५२ ॥ ममपुत्रास्तुसञ्जाताःपितृभक्तिपरायणाः ॥ अहोलोकेषुपुण्यैश्चसुपुत्रःपरिलभ्यते ॥ ५३ ॥ एकैक
शोऽधिकाःपञ्चमयाप्राप्तामहाशयाः॥ यज्वानःपुण्यशीलाश्चतपस्तेजःपराक्रमाः॥५४॥ एवंसंवर्धितास्तेतुतयामात्रापुनःपुनः ॥ हर्षेणमहताविष्टाःप्रणे
मुर्मातरंसुताः ॥ ५५ ॥ पुत्राऊचुः॥ सुपुण्यैःप्राप्यतेमातासन्मातासुपिताकिल ॥ भवतीपुण्यकृन्मातानोभाग्यैस्तुप्रवर्तिता ॥ ५६ ॥ यस्यागर्भोदरं
प्राप्यसुपुण्यैश्चप्रवर्द्धिताः ॥ जन्मजन्मनित्वंमातापिताचैवभविष्यथः ॥ ५७॥ पितोवाच ॥ शृणुध्वंमामकाःपुत्राःसुवरंपुण्यदायकम् ॥ मयि
तुष्टेसुताभोगाननुभुञ्जन्तुचाक्षयान् ॥ ५८ ॥ पुत्राऊचुः ॥ यदितातप्रसन्नोऽसिवरंदातुमिहेच्छसि ॥ अस्मान्प्रेषयगोलोकंवैष्णवंदाहवर्जितम्॥५९॥
पितोवाच ॥ गच्छध्वंवैष्णवंलोकंयूयंविगतकल्मषाः ॥ मत्प्रसादात्तपोभिश्चपितृभक्त्यानयास्वया॥ ६० ॥ एवमुक्तेतुतेनापिसुवाक्येऋषिणाततः॥
शङ्खचक्रगदापाणिर्गरुडारूढआगतः॥६१॥सपुत्रंशिवशर्माणमित्युवाचपुनःपुनः ॥ सपुत्रेणत्वयाद्यैवजितोभक्त्यास्मिवैद्विज ॥ ६२ ॥ पुत्रैःसार्द्धं
समागच्छचतुर्भिःपुण्यकारिभिः ॥ अनयाभार्ययासार्द्धंपुण्ययापतिकाम्यया ॥ ६३ ॥ शिवशर्मोवाच ॥ अमीगच्छन्तुपुत्रामेवैष्णवंलोकमुत्त
मम् ॥ कञ्चित्कालंतुनेष्यामिभूमौवैभार्ययासह ॥ ६४ ॥ अनेनापिसुपुत्रेणअन्त्येनसोमशर्मणा ॥ एवमुक्तेशुभेवाक्येऋषिणासत्यभाषिणा ॥६५॥
तानुवाचाथदेवेशःसुपुत्राञ्छिवशर्मणः ॥ गच्छन्तुमोक्षदंलोकंदाहप्रलयवर्जितम् ॥ ६६ ॥ एवमुक्तेततोविप्राश्चत्वारःसत्यचेतसः ॥ विष्णुरूप
धराःसर्वेबभूवुस्तत्क्षणादपि ॥ ६७ ॥ इन्द्रनीलसमावर्णैःशङ्खचक्रगदाधराः ॥ सर्वाभरणसौभाग्याविष्णुरूपामहौजसः ॥ ६८ ॥ हारकङ्कणशोभा



१ 'तपोऽधिकाः' ४० पा०।

ढ्यारत्नमालाभिशोभिताः ॥ सूर्यतेजःप्रतीकाशास्तेजोज्वालाभिरावृताः ॥ ६९ ॥ प्रविष्टावैष्णवंकायंपश्यतःशिवशर्मणः ॥ दीपंदीपायथा यान्तितद्वल्लीनामहामते ॥ ७० ॥ गतास्तेवैष्णवंधामपितृभक्त्याद्विजोत्तमाः ॥ प्रभावंतुप्रवक्ष्यामिसुसत्यंसोमशर्मणः ॥ ७१ ॥ इति श्रीपाद्म पुराणेभूमिखण्डेशिवशर्मोपाख्यानेतृतीयोऽध्यायः ॥ ३ ॥ सूतउवाच ॥ गतेषुतेषुगोलोकंवैष्णवंतमसःपरम् ॥ शिवशर्मामहाप्राज्ञःकनिष्ठंवाक्यम ब्रवीत् ॥ १ ॥ ब्राह्मणउवाच ॥ सोमशर्मन्महाप्राज्ञत्वंपितुर्भक्तितत्परः ॥ अमृतस्यमहाकुम्भंरक्षदत्तंमयाधुना ॥ २ ॥ तीर्थयात्रांप्रयास्यां मिअनयाभार्ययासह ॥ एवमस्तुमहाभागकरिष्येरक्षणंशुभम् ॥ ३ ॥ कुम्भंदत्त्वासमेधावीतस्यहस्तेमहात्मनः[1] ॥ दशवर्षप्रमाणंतुतपस्ते पेनिरन्तरम् ॥ ४ ॥ कुम्भंरक्षतिधर्मात्मादिवारात्रमतन्द्रितः ॥ पुनःसहिसमायातःशिवशर्मामहायशाः ॥ ५ ॥ मायांकृत्वामहाप्राज्ञोभार्ययासह तंसुतम् ॥ कुष्ठरोगातुरोभूत्वातस्यभार्याचतादृशी ॥६॥ मांसपिण्डोपमौजातौद्वावेतौमाययाकृतौ ॥ सन्निधिंतस्यघोरस्यविप्रस्यसोमशर्मणः ॥७॥ समागतौहितौदृष्ट्वासर्वतोहिसुदुःखितौ ॥ कृपयापरयाविष्टःसोमशर्मामहायशाः ॥ ८ ॥ तयोःपादौनमस्कृत्यभक्त्यानमितकन्धरः ॥ भवादृशौन पश्यामितपसाभिसमन्वितम् ॥ ९ ॥ गुणव्रातैःसुपुण्यैश्चकिमिदंवर्तितंत्वयि ॥ दासवद्देवताःसर्वावर्तन्तेसर्वदातव ॥ १० ॥ आदेशंप्राप्यविप्रेन्द्रआ कृष्टास्तेजसातव ॥ तवाङ्केकेनपापेनगदोऽयंवेदनान्वितः ॥ ११ ॥ सञ्जातोब्राह्मणश्रेष्ठतन्मेकथयकारणम् ॥ इयंपुण्यवतीमातामहापुण्यापतिव्रता ॥ ॥ १२ ॥ याहिभर्तृप्रसादेनत्रैलोक्यंकर्तुमिच्छति ॥ साकथंदुःखमाप्नोतिकिंनास्तितपसःफलम् ॥ १३ ॥ रागद्वेषौपरित्यज्यविविधेनापिकर्मणा ॥ याचशुश्रूषतेकान्तंदेववद्गुरुवत्सला ॥ १४ ॥ साकथंदुःखमाप्नोतिकुष्ठरोगंसुदुःखदम् ॥ १५ ॥ शिवशर्मोवाच ॥ माशुचस्त्वंमहाभागभुज्यतेक र्मजंफलम् ॥ नरेणकर्मयुक्तेनपापपुण्यमयेनहि ॥ १६ ॥ शोधनंचकुरुष्वत्वमुभयोरोगयुक्तयोः ॥ शुश्रूषणंमहाभागयदिपुण्यमिहेच्छसि ॥ १७ ॥ एवमुक्तेशुभेवाक्येसोमशर्मामहायशाः ॥ शुश्रूषांवाकरिष्यामियुवयोःपुण्ययुक्तयोः ॥ १८ ॥ मयापापेनदुष्टेनकृपणेनद्विजोत्तम ॥ किंकर्तव्यमिहा द्यैवयोर्गुरुंनहिपूजयेत् ॥ १९ ॥ एवमाभाष्यदुःखाद्भ्रातयोर्दुःखेनदुःखितः ॥ श्लेष्ममूत्रपुरीषंचउभयोःपर्यशोधयत् ॥ २० ॥ पादप्रक्षालनंचक्रेअ ङ्गसंवाहनंतथा ॥ स्नानस्थानादिकंसोऽपितयोर्भक्त्यान्वितःस्वयम् ॥ २१ ॥ द्वावेतौहिगुरूविप्रःसोमशर्मामहायशाः ॥ तीर्थंनयतिधर्मात्मास्कन्ध मारोप्यसत्तमः ॥ २२ ॥ द्वावेतौहिस्वहस्तेनस्नापयित्वातुमङ्गलैः ॥ सुमन्त्रैर्वेदविच्चैवस्नानस्यविधिपूर्वकम् ॥ २३ ॥ तर्पणंचपितॄणांतुदेवतानांतु

१'लोकम्' इ० पा०। २ उवाचेति शेषः।

पूजनम् ॥ द्वाभ्यामपिचधर्मात्मासकारयतिनित्यशः ॥ २४ ॥ स्वयंहोमंददात्यग्नौपचत्यन्नमनुत्तमम् ॥ संज्ञापयतिसुप्रीतौद्वावेतौचमहागुरू ॥
॥ २५ ॥ शय्यासनेचतौविप्रःप्रस्वापयतिनित्यशः ॥ वस्त्रपुष्पादिकंसर्वंताभ्यांनित्यंप्रयच्छति ॥ २६ ॥ ताम्बूलंबहुगन्धाढ्यमुभयोरर्पयेत्सतु ॥
मशर्मा महाभागस्ताभ्यामपि चपूरयेत् ॥ २७ ॥ मूलंपयःसुभक्ष्याद्यंनित्यमेवददात्यसौ ॥ तयोस्तुवाञ्छितंनित्यंसोमशर्मामहायशाः ॥ २८ ॥
अनेनक्रमयोगेणनित्यमेवप्रसादयेत् ॥ सोमशर्मासुधर्मात्मापितरौपरिपूजयेत् ॥ २९ ॥ सोमशर्माणमाहूयपिताकुत्सतिनिष्ठुरः ॥ निन्दितौर्नैष्ठुरै
र्वाक्यैस्ताडयेन्मुष्टिभिस्तदा ॥ ३० ॥ कृतकार्येकृतेपुण्येनित्यमेवसुतेपुनः ॥ नकृतंशोभनंमह्यंत्वयैवकुलपांसन ॥ ३१ ॥ एवंनानाविधैर्वाक्यैर्निष्ठु
रैर्दुःखदायकैः ॥ अताडयद्दण्डघातैःशिवशर्मासदातुरः ॥ ३२ ॥ एवंकृतेऽपिधर्मात्मानैवकुप्यतिकर्हिचित् ॥ मनसावचसाचैवकर्मणात्रिविधेन
च ॥ ३३ ॥ सन्तुष्टःसर्वदासोऽपिपितरंपरिपूजयेत् ॥ तद्वत्ससोमशर्मावैमातरंचदिनेदिने ॥३४॥ यज्ज्ञात्वा शिवशर्माचचरितंस्वीयमीक्षते ॥ अमृतं
मत्कृतेचापिआनीतंविष्णुशर्मणा ॥ ३५ ॥ पुण्ययुक्तःसधर्मात्मापितृभक्तिपरःसदा ॥ एवंबहुतिथेकालेशतसङ्ख्येचगतेसति ॥ ३६ ॥ शिवशर्मापित
स्यैवभक्तिंदृष्ट्वाविचिन्त्यवै ॥ मयावैपूर्वमित्युक्तंसुपुत्रंयज्ञसंज्ञकम् ॥ ३७ ॥ मातृखण्डानिमान्पुत्रयत्रतत्रक्षिपस्वहि ॥ मद्वाक्यंपालितंतेनकृतामा
तरिनोकृपा ॥ ३८ ॥ एतत्स्वल्पतरंदुःखंनिर्जीवघातमिच्छतः॥साहसंतुकृतंतेनपुत्रेणवेदशर्मणा ॥ ३९ ॥ अस्याधिकमहंमन्येयतोऽयंचलतेनच ॥
निमेषमात्रमेवापिसाहसंकारयेत्पुनः ॥ ४० ॥ अपरंसत्यसम्पन्नंप्रभावंतपसःपुनः ॥ नित्यंसमाराधनेऽपिअधिकंचास्यदृश्यते ॥ ४१ ॥ तस्माद
स्यपरीक्षाचसमयेतपसःकृता ॥ भक्तिभावात्तथासत्यान्नैवपुत्रःप्रणश्यति ॥ ४२ ॥ माययाचनिजाङ्गेऽपिकुष्ठरोगोनिदर्शितः ॥ श्लेष्ममूत्रमलानां
चघृणांनैवकरोतिच ॥ ४३ ॥ व्रणान्विशोधयेन्नित्यंस्वहस्तेनमहायशाः ॥ पादसंवाहनंदद्याच्छौचंचैवमहामतिः ॥ ४४ ॥ दुःसहंवचनंमह्यंदारुणंस
हतेसदा ॥ भर्त्सनेताडनेचैवसदाभीष्टप्रवाचकः ॥ ४५ ॥ एवंदुःखसमाचारोममपुत्रोमहामतिः ॥ दुःखानांसागरंमन्येबहुक्लेशैस्तुक्लेशितः ॥ ४६ ॥
अपनेष्याम्यहंदुःखंविष्णोश्चैवप्रसादतः ॥ विचार्यमनसाविप्रःशिवशर्मामहामतिः ॥४७॥ पुनर्मायांचकाराथकुम्भादपहृतंपयः ॥ पश्चात्तंचसमाहूय
सोमशर्माणमब्रवीत ॥ ४८ ॥ तवहस्तेमयादत्तममृतंव्याधिनाशनम् ॥ तन्मेशीघ्रंप्रयच्छस्वयथापानंकरोम्यहम् ॥ ४९ ॥ येननीरुग्भवाम्यद्यप्रसादा
द्विष्णुशर्मणः ॥ एवमुक्तेतदावाक्येऋषिणाशिवशर्मणा॥५०॥समुत्थायत्वरायुक्तःसोमशर्माकमण्डलुम्॥तंचरिक्तंततोदृष्ट्वाह्यमृतेनविनाकृतम् ॥ ५१ ॥

१ 'त्रिष्टां' इ० पा०।

कस्यपापस्यवैकर्मकेनमेविप्रियंकृतम् ॥ इतिचिन्तापरोभूत्वासोमशर्मासुदुःखितः ॥ ५२ ॥ पितुरग्रेचवृत्तान्तंकथयिष्याम्यहंयदा ॥ ततःको
पंप्रयास्येतगुरुर्मेव्याधिपीडितः ॥५३॥ सुचिरंचिन्तयित्वातुसोमशर्मामहामतिः ॥ यदिमेसत्यमस्तीतिगुरुशुश्रूषणंयदि ॥५४॥ तपस्ततंमयापूर्वंनि
र्व्यलीकेनचेतसा॥दमशौचादिभिःसत्यंधर्ममेवप्रपालितम् ॥५५॥ तदाघटोऽमृतयुतोभवत्वेषनसंशयः ॥ यावदेवमहाभागश्चिन्तयित्वाविलोकयेत् ॥
॥ ५६ ॥ तावच्चामृतपूर्णस्तुपुनरेवाभवद्धटः ॥ तंदृष्ट्वाहर्षसंयुक्तःसोमशर्मामहायशाः ॥ ५७ ॥ गत्वागुरुंनमस्कृत्यकुम्भमादायसत्वरम् ॥ गृहा
णत्वंपितश्चेमंपयःकुम्भंसमागतम् ॥ ५८ ॥ पानंकुरुमहाभागगदान्मुक्तोभवाचिरम् ॥ एतद्वाक्यंमहापुण्यंसत्यधर्मार्थकंपुनः ॥ ५९ ॥ शिवशर्मा
सुतस्यापिश्रुत्वाचमधुराक्षरम् ॥ हर्षेणमहताविष्टइदंवचनमब्रवीत् ॥ ६० ॥ इतिश्रीपाद्मपुराणेभूमिखण्डेशिवशर्मोपाख्यानेचतुर्थोऽध्यायः ॥ ४ ॥
शिवशर्मोवाच ॥ तपसादमशौचाभ्यांगुरुशुश्रूषयातथा ॥ भक्त्याभावेनतुष्टोऽस्मितवाद्यचसुपुत्रक ॥ १ ॥ त्यंजामिवैकृतंरूपंमत्तःसुखमवाप्नु
हि ॥ एवमुक्त्वासुतंविप्रोदर्शयामासतांतनुम् ॥ २ ॥ यथापूर्वंस्थितौतौतुतथासदृष्टवान्गुरू ॥ दीप्तिमन्तौमहात्मानौसूर्यबिम्बोपमावुभौ ॥३ ॥ नना
मपादौसद्भक्त्याउभयोस्तुमहात्मनोः ॥ ततःसुतंसमामन्त्र्यहर्षेणमहतान्वितः ॥ ४ ॥ विष्णोःप्रसादाद्धर्मात्माभार्ययासहकेशवम् ॥ जगामनिजपु
ण्यैश्चयोगाभ्यासेनसत्तमः ॥ ५ ॥ प्रविष्टोवैष्णवंधामससुनिर्दुर्लभंपदम् ॥ नत्वन्यैःप्राप्यतेपुण्यैस्तपोभिर्मुक्तिदंपदम् ॥ ६ ॥ विष्णोस्तुचिन्तनैर्न्या
सध्यानज्ञानैःस्तवैस्तथा ॥ नदानैस्तीर्थयात्राभिर्दृश्यतेमधुसूदनः ॥ ७ ॥ समाधिज्ञानयोगेनदृश्यतेपरमंपदम् ॥ महायोगैर्यथाविप्रःप्रविष्टोवैष्णवीं
तनुम् ॥ ८ ॥ सूतउवाच ॥ ततस्तत्रतपस्तेपेसोमशर्मामहाद्युतिः ॥ अश्मलोष्टसममेनेकाञ्चनंभूषणंपुनः ॥ ९ ॥ जिताहारःसधर्मात्मानिद्रयापरिव
र्जितः ॥ ससर्वान्विषयांस्त्यक्त्वाएकान्तमपिसेवते ॥ १० ॥ योगासनसमारूढोनिराशोनिष्परिग्रहः ॥ तस्यवेलासुसम्प्राप्तामृत्युकालस्यवैतदा ॥
॥ ११ ॥ आगतादानवाविप्रंसोमशर्माणमन्तिके ॥ मृत्युकालेतुसम्प्राप्तेप्राणयात्राप्रवर्तिनः ॥ १२ ॥ शालग्रामेमहाक्षेत्रेऋषीणांमानवर्द्धने ॥ केचिद्द्र
दन्तिवैदैत्याःकेचिद्द्रदन्तिदानवाः ॥ १३ ॥ एवंविधोमहाशब्दःकर्णरन्ध्रंगतस्तदा ॥ तस्यैवविप्रवर्यस्यसुचिरात्सोमशर्मणः ॥ १४ ॥ ज्ञानध्यानवि
लग्नस्यप्रविष्टंदैत्यजंभयम् ॥ तेनध्यानेनतस्यापिदैत्यभीत्यैववैतदा ॥ १५ ॥ सत्वरंचैवतत्प्राणागतास्तस्यमहात्मनः ॥ दैत्यभयेनसंयुक्तःसहिमृत्यु
वशंगतः ॥ १६ ॥ तस्माद्दैत्यगृहेजातोहिरण्यकशिपोःसुतः ॥ देवासुरेमहायुद्धेनिहतश्चक्रपाणिना ॥ १७ ॥ युद्ध्यमानेनतेनापिप्रह्लादेनमहा

१ 'गृहाणवैऽगवं सुतं' इ० पा० । 'त्यजस्व वैकृतं रूपम्' इति पाठस्त्वनर्थकः । २ 'विक्रियापरिवर्जितः' इ० पा० । ३ 'मानवाः' इ० पा० ।

त्मना ॥ सुदृष्टंवासुदेवत्वंविश्वरूपसमन्वितम् ॥ १८ ॥ योगाभ्यासेनपूर्वेणज्ञानमासीन्महात्मनः ॥ सस्मारपूर्वकंसर्वंचरितंशिवशर्मणः ॥
॥ १९ ॥ प्रागहंसोमशर्माख्यःप्रविष्टोदानवींतनुम् ॥ अस्मात्कायात्कदापुण्यंकेवलंधामउत्तमम् ॥ २० ॥ प्रयास्यामिमहापुण्यैर्ज्ञानाख्यैर्मो
क्षदायकैः ॥ समरेम्रियमाणेनप्रह्लादेनमहात्मना ॥ २१ ॥ एवंचिन्ताकृतापूर्वंश्रूयतांद्विजसत्तमाः ॥ एवंतुचसमाख्यातंसर्वसन्देहनाशनम् ॥
॥ २२ ॥ सूतउवाच ॥ प्रह्लादेनिहतेसङ्ख्येदेवदेवेनचक्रिणा ॥ रुरुदेकमलासातुहतपुत्राचकामिनी ॥ २३ ॥ प्रह्लादस्यतुयामाताहिरण्यकशो
पोःप्रिया ॥ प्रह्लादस्यमहाशोकैर्दिवारात्रौप्रशोचति ॥ २४ ॥ पतिव्रतामहाभागाकमलानामतत्प्रिया ॥ रोदमानांदिवारात्रौनारदस्तामु
वाचह ॥ २५ ॥ माशुचस्त्वंमहाभागेपुत्रार्थंपुण्यभागिनि ॥ निहतोवासुदेवेनतवपुत्रःसमेष्यति ॥ २६ ॥ भूयःस्वलक्षणोपेतस्त्वत्सुत
श्चमहामतिः ॥ प्रह्लादेतिचवैनामपुनरस्यभविष्यति ॥ २७ ॥ विहीनश्चासुरैर्भावैर्देवत्वेनसमन्वितः ॥ इन्द्रत्वेमोदतेभद्रेसर्व
देवैर्नमस्कृतः ॥ २८ ॥ सुखीभवमहाभागेतेनपुत्रेणवैसदा ॥ नप्रकाश्यात्वयादेविसुवार्तेयंचकस्यचित् ॥ २९ ॥ वक्तव्यंज्ञानभावैस्तत्सुगोप्यंकुरुत्वं
सदा ॥ एवमुक्त्वागतोविप्रोनारदोमुनिसत्तमः ॥ ३० ॥ कमलायाश्चोदरेतुजन्मास्यानुत्तमंपुनः ॥ प्रह्लादेतिचवैनामतस्याख्यानंमहात्मनः॥ ३१ ॥
बाल्यंभावंगतोविप्राःकृष्णमेवव्यचिन्तयत् ॥ नरसिंहप्रसादेनदेवराजोऽभवद्दिवि ॥ ३२ ॥देवत्वंलभ्यचैवासावैन्द्रंपदमनुत्तमम् ॥ मोक्षंयास्यतिज्ञा
नात्मावैष्णवंधामंचोत्तमम् ॥ ३३ ॥ असङ्ख्यातामहाभागाःसृष्टेर्भावाह्यनेकशः ॥ मोहएवंनकर्त्तव्योज्ञानवद्भिर्महात्मभिः ॥ ३४ ॥ एतद्वःसर्वमा
ख्यातंयथापृष्टंद्विजोत्तमाः ॥ अन्यंपृच्छतवैप्रश्नंसन्देहंवोभिनद्म्यहम् ॥ ३५ ॥ विजयंदेवतानांतुदानवानांमहत्क्षयम् ॥ कृतंहिदेवदेवेनस्थापितं
भुवनत्रयम् ॥ ३६ ॥ ऋषयऊचुः ॥ इन्द्रत्वंकस्यसञ्जातंदेवानांशब्दधारकम् ॥ केनदत्तंत्वमाचक्ष्वविस्तराद्द्विजसत्तम ॥ ३७ ॥ ॥ सूतउवाच ॥ वि
स्तरेणप्रवक्ष्यामिइन्द्रत्वेयेनसत्तमः ॥प्राप्तएषमहाभागोयथापुण्यतमेनच ॥ ३८ ॥ हतेषुतेषुदैत्येषुसमस्तेषुमहाहवे ॥ अतिनष्टेषुपापेषुगोविन्देनमहा
त्मना ॥ ३९ ॥ ततोदेवाःसगन्धर्वानागाविद्याधरास्तथा ॥ सम्प्रोचुर्माधवंसर्वेबद्धप्राञ्जलयस्ततः ॥ ४० ॥ भगवन्देवदेवेशहृषीकेशनमोऽस्तुते ॥
विज्ञापयामहेत्वांवैतत्सर्वमवधार्यताम् ॥ ४१ ॥ शास्तागोप्ताचपुण्यात्माअस्माकंकुरुकेशव ॥ राजानंपुण्यधर्माणंत्वमिन्द्रंलोकशासनम् ॥ ४२ ॥
त्रैलोक्यस्यप्रजादेवयमाश्रित्यसुखंलभेत् ॥ ४३ ॥ वासुदेवउवाच ॥ ममलोकेमहाभागावैष्णवेनसमन्वितः ॥ तेजसाब्राह्मणश्रेष्ठश्चिरकालंनि

१ च यः तमित्यध्याहृत्य तं राजानं कुर्वेति शब्दार्थसंगतिः ।

वासितः ॥ ४४ ॥ तस्यकालःप्रपूर्णश्चममलोकेमहात्मनः ॥ वसतस्तस्यविप्रस्यमद्भक्तस्यसुरोत्तमाः ॥ ४५ ॥ तेजसावैष्णवेनैवभवतां
पालकोहिसः ॥ भविष्यतिसधर्मात्मासचधमानुरञ्जकः ॥ ४६ ॥ पालकोधारकश्चैवसचब्राह्मणसत्तमः ॥ भविष्यतिसधर्मात्माभवतां
त्राणकारणात् ॥ ४७ ॥ अदित्यास्तनयश्चैवसुव्रताख्योमहामनाः ॥ महाबलोमहावीर्यःसवइन्द्रोभविष्यति ॥ ४८ ॥ सूतउवाच ॥ एवंवरा
न्सदेवेशोदंत्त्वादेवेभ्यउत्तमान् ॥ देवाविजयिनःसर्वेविष्णुनासहसत्तमाः ॥ ४९ ॥ कश्यपंपितरंद्रष्टुंमातरंचततोगताः॥प्रणेमुस्तेमहात्मानावुभावेतौसु
खासनौ ॥ ५० ॥ ऊचुःप्राञ्जलयःसर्वेहर्षेणमहतान्विताः ॥ युवयोश्चप्रसादेनदेवत्वंहिगतावयम् ॥ हर्षेणमहताविष्टोदेवान्वाक्यमुवाचसः ॥ ५१ ॥
कश्यपउवाच ॥ यूयंवैसत्यधर्मेणवर्तमानाःसदैवहि ॥ आवयोश्चप्रसादेनतपसश्चप्रभावतः ॥ ५२ ॥ प्राप्तवन्तोभवन्तस्तुदेवत्वंचाक्षयंपदम् ॥
वरमेवददाम्येषबहुप्रीतिसमन्वितः ॥ ५३ ॥ अमरानिर्जराश्चैवअक्षयाश्चभविष्यथ ॥ सर्वकामसमृद्धार्थाःसर्वसिद्धिसमन्विताः ॥ ५४ ॥
देवानागाश्चगन्धर्वामत्प्रसादान्महासुराः ॥ ५५ ॥ विष्णुरुवाच ॥ वरंवरयभद्रंतेदेवमातर्यशस्विनि ॥ मनसाचेप्सितंसर्वंतत्तेदद्मि
सुनिश्चितम् ॥ ५६ ॥ अदितिरुवाच ॥ पूर्वंपुत्रवतीभूताप्रसादात्तवमाधव ॥ अमरानिर्जराःसर्वअक्षयाःपुण्यवत्सलाः ॥ अमीपु
त्रामयालब्धाःश्रूयतांमधुसूदन ॥ ५७ ॥ सुतरांत्वंचगोविन्दसर्वकामसमृद्धिदः ॥ ममगर्भेवसंश्चैवभवांश्चममनन्दनः ॥५८॥ त्वयापुत्रेणनित्यंचयथा
नन्दामिकेशव ॥ एवंमहोदयंनाथपूरयस्वमनोरथम् ॥ ५९ ॥ वासुदेवउवाच ॥ भवत्यादेवकार्यार्थगन्तव्यंमानुषंवपुः ॥ तदाहंतवगर्भेवैवासं
यास्यामिनिश्चितम् ॥ ६० ॥ युगेद्वादशकेप्राप्तेभूभारहरणायवै ॥ जमदग्निसुतोदेविरामोनामद्विजोत्तमः ॥ ६१ ॥ प्रतापीतेजसायुक्तःसर्वक्षत्रव
धायच ॥ तवपुत्रोभविष्यामिसर्वशस्त्रभृतांवरः ॥ ६२ ॥ सप्तविंशतिकेप्राप्तेत्रेताख्येतुतथायुगे ॥ रामोनामभविष्यामितवपुत्रःपतिव्रते ॥
॥ ६३ ॥ पुनःपुत्रोभविष्यामितवैवशृणुपुण्यधेः ॥ अष्टाविंशतिकेप्राप्तेद्वापरान्तेयुगेतदा ॥ ६४ ॥ सर्वदैत्यविनाशार्थंभूभारहरणायच ॥ वा
सुदेवाख्यस्तेपुत्रोभविष्यामिनसंशयः ॥ ६५ ॥ इदानींकुरुकल्याणिमद्वाक्यंधर्मसंयुतम् ॥ सर्वलक्षणसम्पन्नंसत्यधर्मसमन्वितम् ॥ ६६ ॥ स
र्वज्ञंसर्वदन्देविपुत्रमुत्पाद्यसुन्दरम् ॥ इन्द्रत्वंतस्यदास्यामिइन्द्रःसोऽपिभविष्यति ॥ ६७ ॥ एवंसम्भाषितंश्रुत्वामहाहर्षसमन्विता ॥ देवदेवप्रसा
देनइन्द्रःपुत्रोभविष्यति ॥ ६८ ॥ एवमस्तुमहाभागतववाक्यंकरोम्यहम् ॥ ततस्तादेवताःसर्वाजग्मुःस्वस्थानमेवहि ॥ ६९ ॥ हरिणासहतेसर्वे

१ 'चतुर्विंशतिके' इति पाठः।

निरातङ्कामुदान्विताः ॥ ७० ॥ सूतउवाच ॥ अदितिःकश्यपंप्राहऋतुंप्राप्यमनस्विनी ॥ भगवन्दीयतांपुत्रःसुरेन्द्रपदभोजकः ॥ ७१ ॥ चिन्तयित्वाक्षणंविप्रस्तामुवाचमनस्विनीम् ॥ एवमस्तुमहाभागेतवपुत्रोभविष्यति ॥ ७२ ॥ त्रैलोक्यस्यापिकर्तासयज्ञभोक्तासएवच ॥ तस्याःशिरसिसंन्यस्यस्वहस्तंचद्विजोत्तमः ॥ ७३ ॥ तपश्चचारतेजस्वीसत्यधर्मसमन्वितः ॥ सुव्रतोनामतेजस्वीविष्णुलोकेवसेत्सदा ॥ ७४ ॥ तस्यपुण्यक्षयेजातेविष्णुलोकाद्द्विजोत्तमाः ॥ पतनंकर्मवशतस्ततस्तस्यद्विजोत्तमाः ॥ ७५ ॥ पुण्यगर्भंगतोविप्रअदित्यास्तुमहातपाः ॥ इन्द्रत्वंभोक्तुकामार्थंसत्यपुण्येनकर्मणा ॥ ७६ ॥ गर्भंदधारसादेवीपुण्येनतपसाकिल ॥ तपस्तेपेनिरालस्यावनवासंगतासती ॥ ७७ ॥ दिव्यंवर्षशतंयाततंतपन्त्यांदेवमातारि ॥ तपन्त्यथतपस्तीव्रंदुष्करंदेवतासुरैः ॥ ७८ ॥ ततःसातपसातेनतेजसाचप्रभान्विता ॥ सूर्यतेजःप्रतीकाशाद्वितीयइवभास्करः ॥ ७९ ॥ शुशुभेसायथादीप्तापरमंध्यानमास्थिता ॥ रूपेणाधिकतांयातातपसस्तेजसातदा ॥ ८० ॥ तपोध्यानपरासाचवायुभक्षातपस्विनी ॥ अधिकंशुशुभेदेवीदक्षस्यतनयातदा ॥ ८१ ॥ सिद्धाश्चऋषयःसर्वेदेवाश्चापिमहौजसः ॥ स्तुवन्तितांमहाभागांरक्षन्तिचसुतत्पराः ॥ ॥ ८२ ॥ पूर्णेवर्षशतेतस्याविष्णुस्तत्रसमागतः ॥ तामुवाचमहाभागामदितितपसान्विताम् ॥ ८३॥ देविगर्भःसुसम्पूर्णःसूतिकालःप्रवर्तते ॥ तवैवतपसापुष्टस्तेजसाचप्रवर्द्धितः ॥ ८४ ॥ अद्यैवगर्भमेतंत्वंमुञ्चमुञ्चयशस्विनी॥एवमाभाष्यदेवेशःसजगामस्वकंगृहम् ॥८५॥ असूतपुत्रंसादेवीकालेप्राप्तेमहोदये ॥ सापुत्रंदीप्तिसंयुक्तंद्वितीयमिवभास्करम् ॥ ८६ ॥ सुभगंचारुसर्वाङ्गंसर्वलक्षणसंयुतम् ॥ चतुर्बाहुंमहाकायंलोकपालंसुरेश्वरम्[1] ॥ ८७ ॥ तेजोज्वालासमाकीर्णंचक्रपद्मसुहस्तकम् ॥ चन्द्रबिम्बानुकारेणवदनेनमहामतिः ॥ ८८ ॥ राजमानंमहाप्राज्ञंतेजसावैष्णवेनच ॥ अन्यैश्चलक्षणैर्दिव्यैर्दिव्यभावैरलङ्कृतम् ॥ ८९ ॥ सर्वलक्षणसम्पूर्णंचन्द्रास्यंकमलेक्षणम् ॥ आजग्मुस्तेत्रयोदेवा[2]ऋषयोवेदपारगाः ॥ ९० ॥ गन्धर्वाश्चततोनागाःसिद्धाविद्याधरास्तथा ॥ ऋषयःसप्ततेदिव्याःपूर्वापर[3]महौजसः ॥ ९१ ॥ अन्येचमुनयःपुण्याःपुण्यमङ्गलदायिनः ॥ आजग्मुस्तेमहात्मानोहर्षनिर्भरमानसाः ॥ ९२ ॥ तस्मिञ्जातेमहाभागेभगवन्तोमहौजसि ॥ आजग्मुर्देवताःसर्वेपर्वतास्तुतपस्विनः ॥ ९३ ॥ क्षीराद्याःसागराःसर्वेनद्यश्चैवतथामलाः ॥ प्रीतिमन्तस्ततःसर्वेयेचान्येहिचराचराः ॥९४॥ मङ्गलैस्तुमहोत्साहंचक्रुःसर्वेसुरेश्वराः ॥ ननृतुश्चाप्सरःसङ्घागन्धर्वाललितंजगुः॥९५॥ वेदमन्त्रैस्ततोदेवाब्राह्मणावेदपारगाः ॥ स्तुवन्तितंमहात्मानंसुतंवैकश्यपस्यच ॥ ९६ ॥ ब्रह्माविष्णुश्चरुद्रश्चवेदाश्चैवसमागताः ॥ अङ्गोपाङ्गैश्चसंयु

१ 'नरेश्वरम्' इ० पा० । २ 'तत्र ह्ये देवाः' इ० पा० । ३ 'पूर्वाचार्याः' इ० पा० ।

क्तास्तस्मिञ्जातेमहौजसि ॥ ९७ ॥ त्रैलोक्येयानिसत्त्वानिपुण्ययुक्तानिसत्तम ॥ समागतानितत्रैवतस्मिञ्जातेमहौजसि ॥ ९८ ॥ मङ्गलंचक्रिरेसर्वेगी
तपुण्यैर्महोत्सवैः ॥ हर्षेणनिर्भराःसर्वेपूजयन्तोमहौजसः ॥ ९९ ॥ ब्रह्माद्याश्चत्रयोदेवाःकश्यपोऽथबृहस्पतिः ॥ चक्रिरेनामकर्माणितस्यैवहिमहात्म
नः ॥ १०० ॥ वसुदत्तेतिविख्यातोवसुदेतिपुनस्तव ॥ आखण्डलेतितन्नाममरुत्वान्नामतेपुनः ॥ १ ॥ मघवांश्चबिडौजास्त्वंपाकशासनइत्यपि ॥शक्र
श्चैवहिविख्यातइन्द्रश्चैवेतितेसुतः ॥ २ ॥ इत्येतानिचनामानितस्यैवचमहात्मनः ॥ चक्रुश्चदेवताःसर्वाःसन्तुष्टाहृष्टमानसाः ॥ ३ ॥ स्नानंतुका
रयामासुःसंस्काराणिमहासुरः ॥ विश्वकर्माणमाहूयददुराभरणानिच ॥ ४ ॥ तानिपुण्यानिदिव्यानितस्मैतेतुमहात्मने ॥ जातेतस्मिन्महाभागेदेव
राजेमहात्मनि ॥५॥ एवंमुदंततःप्रापुःसर्वेदेवामहौजसः॥पुण्येतिथौतथाऋक्षेसुमुहूर्तेमहात्मभिः ॥६॥ इन्द्रत्वेस्थापितोदेवैरभिषिक्तःसुमङ्गलैः॥प्राप्तमै
न्द्रंपदंतेनप्रसादात्तस्यचक्रिणः॥७॥तपश्चकारतेजस्वीवसुदत्तःसुरेश्वरः॥ उग्रेणतेजसायुक्तोवज्रपाशाङ्कुशायुधः॥८॥सूतउवाच॥उग्रंसमस्तंतपसःप्रभावं
विलोक्यशुक्रोनिजगादगाथाम्॥लोकेषुचाऽन्योनभविष्यतीतियथाहिचायंचसुदर्शनीयः॥९॥ विष्णोःप्रसादान्नपरोमहात्मासम्प्राप्तमैश्वर्यमिहैवदिव्य
म् ॥ अनेनतुल्योनभविष्यतीतिलोकेषुचान्यस्तपसोग्रवीर्यः ॥११०॥ इतिश्रीपाद्मपुराणेभूमिखण्डेदेवासुरेइन्द्राभिषेकोनामपञ्चमोऽध्यायः॥५॥सूतउ
वाच ॥ कश्यपस्यचभार्यान्यादनुर्नामतपस्विनी ॥ पुत्रशोकेनसन्तप्तासम्प्राप्तादितिमन्दिरम् ॥१॥ रोदमानाप्रणम्यैवपादपद्मयुगंतदा ॥दुःखेनमहता
प्राप्तादितिस्तांप्रत्यबोधयत् ॥२॥ दितिरुवाच ॥ तवैवहिमहाभागेकिमिदंरोदकारणम्॥पुत्रिण्यश्चैकपुत्रेणलोकेनार्योभवन्तिवै॥३॥भवतीशतपुत्राणांगु
णिनामपिभामिनि ॥ मातात्वमसिकल्याणिशुम्भादीनांमहात्मनाम् ॥ ४ ॥ कस्माद्दुःखंत्वयाप्राप्तमेतन्मेकारणंवद ॥ हिरण्यकशिपूराजाहिरण्याक्षो
महाबलः ॥ ५ ॥ यस्याःपुत्रौमहात्मानौमहाबलपराक्रमौ ॥ कस्माद्दुःखंमहज्जातंतस्माच्चैवसखेवद ॥ ६ ॥ आख्याहिकारणंसर्वंयस्माद्रोदिषिसा
म्प्रतम् ॥ एवमाभाष्यतांदेवींविररामममनस्विनी ॥ ७ ॥ दनुरुवाच ॥ पश्यपश्यमहाभागेसपत्न्याश्चमनोरथम् ॥ परिपूर्णंकृतंतेनदेवदेवेनच
क्रिणा ॥ ८ ॥ यथापूर्वंवरोदत्तोह्यदित्यैदेविविष्णुना ॥ तथेदानींचपुत्रायतस्यादत्तोवरोमहान् ॥९॥ कश्यपाद्धिश्रुतोजातस्त्रैलोक्यपालकःसुतः ॥
इन्द्रत्वंतस्यवैदत्तंतवपुत्राद्विहृत्यच ॥ १० ॥ मनोरथैस्तुसम्पूर्णाअदितिःसुखवर्द्धिनी ॥ कनीयान्वसुदत्तश्चतस्याःपुत्रश्चसम्प्रति ॥ ११ ॥ ऐन्द्रं
पदंसुदुष्प्राप्यंदेवैःसार्द्धंभुनक्तिच ॥ १२ ॥ दितिरुवाच ॥ कस्मात्पदात्परिभ्रष्टोममपुत्रोमहामतिः ॥ अन्येचदानवादैत्यास्तेजोभ्रष्टाःकथंसखे

१ 'वसुदत्तवीरः' इ० पा०।

॥ १३ ॥ तस्यत्वंकारणंब्रूहिविस्तरेणयशस्विनि ॥ तामाभाष्यदितिर्वाक्यंविररामसुदुःखिता ॥ १४ ॥ दनुरुवाच ॥ देवाश्चदानवाःसर्वेसक्रोधाः
सङ्गरंगताः ॥ तत्रयुद्धंमहज्जातंदैत्यसंक्षयकारकम् ॥ १५ ॥ देवैश्चविष्णुनायुद्धेममपुत्रानिपातिताः ॥ तथवतवपुत्रास्तेदेवदेवेनचक्रिणा ॥ १६ ॥
वनेगतांन्यथासिंहोद्रावयेत्स्वेनतेजसा॥तथातेमामकाःपुत्रानिहताःशङ्खपाणिना॥१७॥ कालनेमिमुखंसैन्यंदुर्जयंससुरासुरैः॥नाशितंमर्दितंसर्वंद्रावितं
विकलीकृतम्॥१८॥स्वैरार्चिभिर्यथावह्निस्तृणानिज्वालयेद्वने॥तथादैत्यगणान्सर्वान्निर्दहत्स्येवकेशवः॥१९॥ममपुत्रामृतादेविबहुशस्तवनन्दनाः॥वह्निं
प्राप्ययथासर्वेशलभायान्तिसंक्षयम् ॥ २० ॥ तथातेदानवाःसर्वेहरिंप्राप्यक्षयंगताः ॥ एवमेतंहिवृत्तान्तंदितिःशुश्रावदारुणम् ॥२१॥ दितिरुवाच ॥
वज्रपातोपमंभद्रेवदस्येवंकथंमम ॥ एवमाभाष्यतांदेवीमूर्च्छितानिपपातह ॥ २२ ॥ हाहाकष्टमिदंजातंबहुदुःखंप्रतापकम् ॥ रुरोदकरुणंसा
थपुत्रशोकसुपीडिता ॥ २३ ॥ तांदृष्ट्वासमुनिश्रेष्ठउवाचवचनंशुभम् ॥ मारोदिषिचभद्रंतेनैवंशोचन्तित्वद्विधाः ॥ २४ ॥ सत्ववन्तोमहाभा
गेलोभमोहेनवर्जिताः ॥ कस्यपुत्राहिसंसारेकस्यदेवीसुबान्धवाः ॥ २५ ॥ नास्तिकस्येहकेनापितत्सर्वंश्रूयतांप्रिये ॥ दक्षस्यापिसुतायूयंसुन्दर्य
श्चैवमामकाः ॥ २६ ॥ भवतीनामहंभर्ताकामनापूरकःशुभे ॥ योजकःपालकश्चैवरक्षकोऽस्मिवरानने ॥ २७ ॥ कस्माद्वैरंकृतंक्रूरैरसुरैर
जितात्मभिः ॥ तवपुत्रामहाभागेसत्यधर्मविवर्जिताः ॥ २८ ॥ तेनदोषेणतेसर्वेतवदोषेणवैशुभे ॥ निहतावासुदेवेनदेवैस्तुनिपातिताः
॥ २९ ॥ तस्माच्छोकोनकर्तव्यःसत्यमोक्षविनाशनः ॥ शोकोहिनाशयेत्पुण्यंक्षयात्पुण्यस्यनश्यति ॥ ३० ॥ तस्माच्छोकंपरित्यजविप्ररूपंवरान
ने ॥ आत्मदोषप्रभावेनदानवामरणंगताः ॥ ३१ ॥ देवानिमित्तभूताश्चनाशिताःस्वेनकर्मणा ॥ एवंज्ञात्वामहाभागेसमागच्छसुखं
प्रति ॥ ३२ ॥ एवमुक्त्वामहायोगीतांप्रियांदुःखभागिनीम् ॥ विषादाच्चनिवृत्तोऽसौविररामहामतिः ॥ ३३ ॥ इतिश्रीपाद्मपुराणेभूमिखण्डे
देवासुरेदितिविलापोनामषष्ठोऽध्यायः ॥ ६ ॥ दितिरुवाच ॥ सत्यमुक्तंत्वयानाथसर्वमेवनसंशयः ॥ भर्तृस्नेहंपरित्यज्यगतासापत्न्यजंद्विज ॥१॥
अभिमानेनदुःखेनमानभङ्गेनसत्तम ॥ महादुःखेनसन्तप्ताकरिष्येप्राणमोचनम् ॥ २ ॥ ॥ कश्यपउवाच ॥ श्रूयतामभिधास्यामियथाशान्तिर्भ
विष्यति ॥ नकःकस्यभवेत्पुत्रोनमातानपिताशुभे ॥ ३ ॥ नभ्राताबान्धवःकस्यनचस्वजनबान्धवाः ॥ एवंसंसारसम्बन्धोमायामोहमन्वितः ॥ ४ ॥
स्वयमेवपितादेविस्वयंमाताऽथबान्धवाः ॥ स्वयंस्वजनवर्गश्चस्वयंधर्मःसनातनः ॥ ५ ॥ आचारेणनरोदेविसुखित्वमुपजायते ॥ अनाचारेण

१ 'पोषकः' इ० पा० ।

